# VYAKARANA SIDDHANTA KAUMUDI

BY

## BHATTOJI DIKHSHITA

EDITED AND ANNOTATED

BY

Mahamahopadhyaya Pandit Shiva Datta Shastri,

Professor Oriental College, Lahore.



PUBLISHED BY

KHEMRAJ SHRIKRISHNADASS

AND

PRINTED AT HIS SHRI VENKATESHWAR STEAM PRESS,

KHETWADI 7TH LANE, KHAMBATA LANE,

BOMBAY.

1925.

# प्रस्तावना ।

अयि गीर्वाणवाणीविलासासादितहृदयानन्दाः ! इदन्तावन्नाविदित मस्ति सर्वेषां शासितोपलब्धिवतां यद्व्याकरणस्य पदपदार्थविभासकत्वेन सर्वशास्त्रोपकारकत्वमिति । तत्र सत्स्वपि महर्षिशाकटायनादिप्रणीतेषु व्याकरणान्तरेषु, आम्नायमूलकत्वेन झटित्यज्ञानकान्तारसञ्चारसन्तारकत्वेन च पदवाक्यप्रमाणपारावारपारीणानां मस्तकालंकारमणिरिवाभासते पाणिनीयमेव, अत एव "काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम् ।" इति वैचक्षण्यसमानाधिकरणमनर्वाचीनं वचनमनूचाना वदन्ति । तदिदमघटितघटनापटीयसः सुरकुलमुकुटालंकारमन्दारमकरन्दपंकिलपादारविन्दान्महेशानजानेः शब्दार्णवतरणतरणिमिवोदग्रतपःफलमिव मनोरथनिदानमिव चतुर्दशसूत्रात्मकं साम्नायं पटहारावविस्फुरितं स्फुलिङ्गमिव दीप्यन्तं समुपलभ्य भगवान् महर्षिदाक्षीपुत्रः तपःप्रभवविस्फूर्तिशालिन्या प्रतिपत्त्याऽनायासेनाष्टभिरध्यायैरुपनिबबन्ध यदिदानीमपि विद्वत्प्रकाण्डैर्हृदयाधिष्ठितदेवतेव वरिवस्यते । अनन्तरं करालकलिकालमाहात्म्यात्सूत्राक्षरैर्भगवदाशयमाविष्कर्तुमसमर्थानामौदास्यमसहमानेन महर्षिणा पतञ्जलिनाऽष्टभिरेवाध्यायैः सूत्रव्याख्या निर्मायि, या इदानीमपि भूमण्डले महाभाष्याख्यया विख्यातास्ति । तथा सूत्रव्याख्यानभूतो व्याडिविदुषा संग्रहोऽपि संगृहीतः । व्याकरणन्यायामिश्रितपदपदार्थावबोधजनकं वाक्यपदीयमपि भर्तृहरिपादैराविरभावि । परन्तु तावतापि ग्रन्थनिवहेन जनहृदयानन्दमसमीक्षमाणाभ्यां करुणासागरविहितस्नानाभ्यां

वामन-जयादित्याभ्यामशेषविद्वद्वृन्दवन्दितपदपंकजाभ्यां सूत्रार्थत-दुदाहरणप्रकाशिका काशिकापि प्रकाशिता, परन्तस्या अप्यनेकत्रावि-षयालोडनजनितक्लेशकारिणित्वेन झटित्युद्बुद्धज्ञानकरणाकल्पता-मालोच्य लोकोपकृतिबद्धकक्षेण श्रीरामचन्द्रेण व्याकरणार्णवपारग-मनसरणेः प्रक्रियाकौमुदी निर्ममे। अस्या अपि अव्याख्याताशे-षसूत्रत्वाद्ग्रन्थबाहुल्याच्च विषयावभासनाकल्पतामाकलय्य शेष-कृष्णशिष्येण विद्वत्तल्लजेन परमकरुणापूरद्दश्वना भट्टोजिदीक्षि-तेन भाष्यार्णवं प्रमथ्योद्धृतस्यापि शब्दकौस्तुभस्य प्रेक्षाविलक्षण-विचक्षणैकगम्यभावतया साधारणजनतोपकारायार्थप्रकाशने चन्द्र-चन्द्रिकेव चिरप्रभा सिद्धान्तकौमुदी जनमनोमोदिनी प्रकरणोपयो-गितत्तत्सूत्रवृत्त्युदाहरणफक्किकादिभिर्विलासिता निर्मिता। सा च भावविकाशाय कर्तृनिर्मितया मनोरमामनोरमया वयस्ययेव टीकया संस्क्रियमाणाप्यनलंकृता मुग्धभर्तृदारिकेव प्रकाशशोभास्पदा नेति मनसिकृत्य धीमच्चक्रचूडामणिनागेशभट्टेन शब्देन्दुशेखरेण शेखरेण समलंकृततया चिरं शोभमानां तत्त्वबोधिन्यादिभिरहर्दिवं परि-चर्यमाणामपि तां ग्रन्थग्रन्थिसमुद्घाटनावसरप्रापितजनमूर्छामामा-लोच्य सारल्यसम्पादनाय विद्यार्थिमनःप्रसादाय च विषमस्थलप-रिष्करणनिमित्तं लवपुरीयप्राच्यविद्यालयसंस्कृतश्रेणीप्रधानाध्यापका धीमत्कुलावतंसायमानाः महामहोपाध्यायाः पण्डितवरश्रीशिव-दत्तशर्माणः सांजलिबन्धमभ्यर्थिताः। एतैश्च पुनः कृपाविष्टचित्तैर्वि-द्यार्थिजनोपकारबद्धपरिकरैर्भाष्यकारीयसिद्धान्तानुसारेण सूत्रवार्त्ति-कादिसंशोधनपूर्वकं सम्प्रति प्रतिस्थलमेतादृशी सारदर्शिनी टिप्पणी समकारि यत्साहाय्येन विद्यार्थिजनः स्वयमेवास्या दुर्भेद्यग्रन्थिग्रन्थिग्रथितस्थलान्यप्युद्घाटयितुं क्षमो भवेत्। इत्थं

सर्वतः प्रकाशितभावापि साऽभ्याससौकर्याय सूत्रादिमार्गणसुगमाय च शिक्षाष्टाध्यायीसूत्रगणसूत्रधातुलिङ्गानुशासनकौमुद्यन्तर्गतवार्त्तिकपरिभाषोणादिसूत्रफिट्सूत्रपाठैः शिक्षालिङ्गानुशासनवर्जमुक्ताष्टाध्याय्यादिसूचीभिश्च विभूषिता भूषयिष्यति तदर्थिजनमानसानीत्याशास्ते ।



विद्वत्कृपाभिलाषी—

खेमराज श्रीकृष्णदास,

"श्रीवेङ्कटेश्वर" स्टीम-मुद्रणालयाध्यक्षो मुम्बई-स्थः"

तथा

खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश बुकडीपो" बनारस.

# अथ वैयाकरणसिद्धान्तकौमुदीस्थविषयानुक्रमणिका प्रारभ्यते ।

इति वैयाकरणसिद्धान्तकौमुदीस्थविषयानुक्रमणिका समाप्ता

श्रीः।

## व्याकरणागमे प्रस्तावनाविशेषः।

# लघुत्रिमुनिकल्पतरुः।



### पूर्वो भागः।

ॐ परमात्मने नमः।

नत्वा शिवं गुरुं वाणीं वेङ्कटाचलसूरिणा।
शषादिना त्रिमुनिकल्पतरुः क्रियते लघुः॥ १॥

अथ भगवान्परमकारुणिको लोकहितैषी यदृच्छया ब्रह्माणं सृष्ट्वा तस्मै त्रिवर्गस्य सर्वोत्तमस्य मोक्षस्य च, सम्पादकान् ( ऋग्यजुस्सामाथर्वाख्यान् ) साङ्गांश्चतुरो वेदानुपदिदेश। "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्वेताश्वतरोपनिषच्छ्रुतेः। ब्रह्मापि तदुपदेशक्रमेणैव जगत्सृष्ट्वा वेदोक्तान्येव नामानि तत्तज्जात्यनुगुणानि निर्माय, अध्ययनादिरूपाणि च योग्यानि कर्माणि प्रजाभ्य उपदिदेश। तत्रेयं स्मृतिः– "सर्वेषां स तु नामानि कर्माणि च पृथक्पृथक्॥ वेदशब्देभ्य एवासौ पृथक्संस्थाश्च निर्ममे" इति। तत्र यजुर्वेदः शुक्लकृष्णभेदेन द्विविधः। दर्शपूर्णमासादिसर्वयाज्ञिकमन्त्राणां ब्राह्मणासम्मिश्रतया यथोक्तक्रमविन्यासेन शुक्लत्वमेकस्य अन्यस्य तु ब्राह्मणैस्सङ्कीर्णत्वाद्याज्ञिकमन्त्राणां क्रमपाठाभावाच्च क्रमस्य दुर्ज्ञयतया कृष्णत्वमिति वदन्ति। कृष्णयजुर्वेदेष्वेकस्याः तैत्तिरीयशाखेति नामान्तरमपि। सर्वत्र वेदेषु संहिता ब्राह्मणमारण्यकमुपनिषदश्चेत्याद्यवान्तरभेदा बहवो दृश्यन्ते। मन्त्रभाग एकः, ब्राह्मणभाग अन्यः सर्वोऽपीत्यभिप्रायेण मन्त्रब्राह्मणयोर्वेदनामधेयमित्यस्योपपत्तिः। तत्र सर्वेष्वपि वेदेषु कर्मज्ञानकाण्डभेदेन भागद्वयम्। कर्मप्रतिपादको भागः कर्मकाण्डशब्देनोच्यते, ज्ञेयार्थप्रतिपादको भागो ज्ञानकाण्डशब्देन। ज्ञानकाण्डशब्देनोपनिषद उच्यन्ते। कर्मकाण्डशब्देन तद्भिन्ना वेदभागा उच्यन्ते। कर्मशब्देनाष्टाचत्वारिंशत्संस्कारा आग्नेयाद्युक्ता उच्यन्ते। ते च–

**अष्टाचत्वारिंशत्संस्कारा नाममात्रेण निर्दिश्यन्ते–**

( १ ) गर्भाधानम् ( २ ) पुंसवनम् ( ३ ) सीमन्तः ( ४ ) विष्णुबलिः ( ५ ) जातकर्म ( ६ ) नामकरणम् ( ७ ) उपनिष्क्रामणम् ( ८ ) अन्नप्राशनम् ( ९ ) कर्णवेधः ( १० ) चौलम् ( ११ ) अक्षरस्वीकरणम् ( १२ ) उपनयनम् ( १३ ) व्रतम् ( १४ ) समावर्तनम् ( १५ ) विवाहः ( १६ ) उपाकर्म ( १७ ) उत्सर्जनम्॥

अथ सप्त पाकयज्ञाः—

( १८ ) हुतम् ( १९ ) प्रहुतम् ( २० ) आहुतम् ( २१ ) शूलगवः ( २२ ) बलिहरणम् ( २३ ) प्रत्यवरोहणम् ( २४ ) अष्टकाहोमः ॥

इति सप्त पाकयज्ञाः ॥

अथ सप्त हविर्यज्ञसंस्थाः—

( २५ ) अग्न्याधानम् ( २६ ) अग्निहोत्रम् ( २७ ) दर्शपूर्णमासौ ( २८ ) चातुर्मास्यानि ( २९ ) आग्रयणेष्टिः ( ३० ) निरूढपशुबन्धः ( ३१ ) सौत्रामणी ॥

इति सप्त हविर्यज्ञसंस्थाः ॥

अथ सप्त सोमयज्ञसंस्थाः—

( ३२ ) अग्निष्टोमः ( ३३ ) अत्यग्निष्टोमः ( ३४ ) उक्थ्यः ( ३५ ) षोडशी ( ३६ ) वाजपेयः ( ३७ ) अतिरात्रः ( ३८ ) आप्तोर्यामः ॥

इति सप्त सोमयज्ञसंस्थाः ॥

( ३९ ) वानप्रस्थ्यम् ( ४० ) संन्यासः ॥

अथ ऽष्टावात्मगुणाः—

( ४१ ) दया ( ४२ ) अनसूया ( ४३ ) शौचम् ( ४४ ) अनायासः ( ४५ ) मङ्गल्यम् ( ४६ ) अकार्पण्यम् ( ४७ ) अस्पृहा ( ४८ ) अन्त्येष्टिः । तत्र पाकयज्ञेषूक्तानां केषांचिदन्तर्भावाङ्गीकारेण न्यूनतायामिष्टापत्तिरेवेति दिक् ।

अथोत्तरक्रतवः—

( १ ) राजसूयः ( २ ) गवामयनम् ( ३ ) गोसवः ( ४ ) अश्वमेधः ( ५ ) आङ्गिरसक्रतुः ( ६ ) शाकमेधः ( ७ ) पञ्चशारदीयः ( ८ ) विश्वजित् ( ९ ) पौण्डरीकम् ( १० ) भर्तृद्वादशाहम् ( ११ ) संवत्सरसत्रम् ( १२ ) महाव्रतम् ( १३ ) रात्रिसत्रम् ( १४ ) शतरात्रम् ( १५ ) स्तोमः ( १६ ) द्वादशसंवत्सरक्रतुः ( १७ ) सहस्रसंवत्सरक्रतुः । एवमन्येऽपि बोध्याः ॥

| वेदभेदेन— | सूत्रकर्तारः— | |
|---|---|---|
| १ ऋग्वेदस्य | १ साङ्ख्यायनः | |
| | २ शाकलः | |
| | ३ बाष्कलः | |
| | ४ आश्वलायनः | |
| | ५ माण्डूकः | |
| २ यजुर्वेदस्य | ६ आपस्तम्बः | |
| | ७ हिरण्यकेशीयः | षट् सूत्रकारा इत्यन्ये । |
| | ८ मैत्रायणीयः | |
| | ९ सत्याषाढः | |
| | १० बोधायनः | |

| | | | |
|---|---|---|---|
| ३ सामवेदस्य | ११ कौथुमः<br>१२ राणायनः<br>१३ गोभिलः<br>१४ राणायनीयः | दश सूत्रकारा इत्यन्ये । |
| ४ अथर्वणवेदस्य | १५ पिप्पलादः<br>१६ शौनकः | |

एतावत्यश्शाखा उपलभ्यन्ते इति केचित् ।

तत्रैतानि कर्माणि लोकैर्मुमुक्षुभिः सत्त्वशुद्ध्यर्थतया मुक्तैश्च लोकसंग्रहार्थतया कर्तव्यानि भवन्ति । तेषां वेदानां शाखाः बहुधा भवन्ति । तत्र ऋग्वेदस्यैकविंशतिशाखाः, शुक्लयजुर्वेदस्य पञ्चदशभिः शाखाभिः मिलित्वा यजुर्वेदस्य महाभाष्यरीत्यैकशतशाखाः, सीतोपनिषद्रीत्या तु नवोत्तरशतशाखाः, सामवेदस्य सहस्रशाखाः, अथर्वणो नव शाखा इति ज्ञेयम् । तत्रर्ग्वेदे इदानीं पठ्यमाना बाष्कलशाखेति केचिद्वदन्ति । शाकलशाखेति बहवः । तत्र न प्रमाणमुपलभ्यते लोकव्यवहारमन्तराऽन्यदिति केचित् । अथर्ववेदे भागद्वयमस्ति—भैषज्यभागः, मन्त्रभागश्चेति । आद्यः अथर्वणान्यो घोरापरनाम्नाऽऽङ्गिरसेन दृष्टः । ततः मिलित्वाऽथर्वाङ्गिरस इति नामेति केचित् । कालवशेन सर्वा लुप्ताः सत्यः काश्चिदेव पञ्चषाः शाखा अवशिष्यन्ते । लुप्ताश्च नामतोऽपि दुर्ज्ञेयाः प्रायस्संवृत्ताः । अथर्ववेदस्य शाखान्तरं काश्मीरतो लब्धं भूर्जपत्रलिखितममरिकायां प्रतिचित्रितमिति शृणुमः ।

एषां परिज्ञायमानशाखानां श्रीमाधवाचार्यैः विजयनगरसंस्कृतपुस्तकावल्यां ( विजयनगरं संस्कृतसीरीस्—नामकमुद्रितविवरणप्रमेयसंग्रहे ) भूमिकोक्तरीत्या १३१३ शके अथवा १३९२ तमख्रिस्तशके उत्पन्नैर्देवगिरौ राज्यकर्तुः जैत्रपालस्य कृष्णराजानुजस्य स्वयं ११८२ तमे शके राज्यासनमधिरूढस्य रामचन्द्रदेवप्रतिभुवो राज्ञः सर्वाधिपत्यपदे नियुक्तो यः प्रसिद्धो हेमाद्रिः चतुर्वर्गचिन्तामणिग्रन्थकर्ता तस्योत्तरकालिकैः भाष्याणि रचितानीदानीमपि जाग्रति । तथोव्वटभाष्यमपि जागर्ति । अन्यान्यप्येतदपेक्षया प्राचीनकालेषु—स्कन्दस्वामि, भवस्वामि, राहदेव, श्रीनिवास, माधवदेव, इत्यादिभिः कृतानि वेदभाष्याण्यासन् । अहोबलभाष्यमप्यासीदिति चमकव्याख्यायां सायनाचार्यभाष्यादनुमीयते । भट्टभास्करभाष्यं नाम कृष्णयजुर्वेदसंहिताभाष्यमपि मैसूरराज्ये राजकीयमुद्रणालये मुद्रितमुपलभ्यते । तत्रैतत्संहितायाः चतुर्थकाण्डभाष्यमनुपलब्धेर्न मुद्रितम् ।

विक्रमार्कसमयादतीतेषु ८४५ मितवर्षेषु केरलदेशे कलापीग्रामे शिवगुरुशर्मणः पुत्रत्वेन कलेरादितः ३८८९ तमे विभवसंवत्सरे वैशाखमासे शुक्लपक्षे दशम्यामवतीर्णैः श्रीमच्छङ्करभगवत्पादैश्च दशोपनिषदोऽन्याश्च काश्चित्तथा श्रीमद्विद्यारण्यैश्च बहवो व्याख्याताः । एतद्विभागकर्तारो व्यासा बहवः, बहव ऋषयश्चेति तु प्रकृतानुपयोगाद्ग्रन्थबाहुल्याच्च नोक्ताः । तथा तत्प्रकारोऽपि । न चास्मदीयवेदवदन्यान्यग्रन्थराशेरपि वेदशब्देन व्यवहारोऽस्तीति तदङ्ग

त्वमप्येषां स्यादिति वाच्यम् । सकलभाषामूलभूतसंस्कृतभाषाया आदिभाषात्वेन तादृशभाषाव्युत्पादकस्य स्वेतरभाषादिवेदाङ्गत्वे मानाभावात् । किञ्चात्र वेदशब्दस्य योगरूढत्वं, तत्र तु केवलयौगिकत्वमिति विशेषात् । अपि चैतदुत्पत्तिसमयेऽनादेरपौरुषेयस्यार्थतो नित्यस्यास्य सिद्धत्वात् । मूलवेदवत्तदङ्गस्यापि नव्यत्वेन कल्पनीयत्वाच्च ।

वेदप्रतिपाद्यः प्रयोजनवदर्थो **धर्मः** । भोजने प्रयोजने श्येनयागादौ च दोषवारणाय पदत्रयमत्र लक्षणे बोध्यम् । ईश्वरेण वेद्यन्ते ज्ञाप्यन्ते धर्मार्थकाममोक्षा इति **वेदः** । अपौरुषेयं वाक्यं वेद इति यावत् । यद्वेष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः । अलौकिकपदेन प्रत्यक्षानुमाने व्यावर्त्येते । अनुभूयमानस्रक्चन्दनवनितादेरिष्टप्राप्तिहेतुत्वमौषधसेवनादेरनिष्टपरिहारहेतुत्वं च प्रत्यक्षसिद्धम् । स्वेनानुभूयमानस्य पुरुषान्तरगतस्य च तथात्वमनुमानगम्यम् । **नन्वेवं** भाविजन्मगतसुखादिकमप्यनुमानगम्यमिति **चेन्न** । तद्विशेषस्यानवगमात् । नहि कोऽपि ज्योतिष्टोमादिष्टप्राप्तिः कलञ्जभक्षणवर्जनादनिष्टनिवृत्तिरित्यमुमर्थं वेदमन्तरेणानुमानसहस्रेणाप्यवगन्तुं शक्नोति । तस्मादुक्तलक्षणो वेद इति न स वेद इति सिद्धम् । "प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुद्ध्यते । एवं वदन्ति वेदेन तस्माद्वेदस्य वेदता" इत्यन्यत्र विस्तरः ।

ऋग्यजुश्च '**मन्त्रः**' इत्युच्यते । **मन्त्रा** द्विविधाः—वैदिकाः, तान्त्रिकाश्चेति । वैदिकाश्च द्विविधाः—प्रगीताः, अप्रगीताश्चेति । तत्र **प्रगीताः** सामानि । **अप्रगीता** द्विविधाः—छन्दोबद्धास्तद्विलक्षणाश्चेति । तत्र प्रथमा ऋचः । अन्त्या यजूंषि । नियतवर्णपदा **ऋक्** । ऋग्बाहुल्यवानृग्वेद इति यावत् । अनियतवर्णपदं **यजुः** । निगदो यजुर्विशेषः । ऋग्यजुषोरविवक्षया गानप्राधान्यवान् **सामवेदः** । ऋग्यजुषोरविवक्षया शान्तिकपौष्टिकप्राधान्यवानथर्ववेद इति विवेकः ।

विधिरर्थवादोऽनुवादश्च **ब्राह्मणम्** । तच्च " ब्राह्मणम्—अष्टविधम्—इतिहासः—पुराणम्—विद्या—उपनिषदः—श्लोकाः—सूत्राणि—व्याख्यानानि—अनुव्याख्यानानि " इति श्रीविद्यारण्यैः तैत्तिरीयोपनिषट्टीकायां दीपिकायामुक्तम् । तत्र **विधिर्नाम**—अज्ञातार्थबोधकं वाक्यम् । स विधिश्चतुर्धा—उत्पत्तिविधिर्विनियोगविधिरधिकारविधिः प्रयोगविधिश्चेति । कर्मस्वरूपमात्रबोधको विधिः—**उत्पत्तिविधिः** । अङ्गप्रधानबोधको विधिः—**विनियोगविधिः** । कर्मजन्यफलस्वाम्यको विधिः—**अधिकारविधिः** । प्रयोगप्राशुभावबोधको विधिः, अङ्गानां प्रयोगबोधको विधिर्वा—**प्रयोगविधिः** ।

**पुनस्त्रिविधो विधिः**—अपूर्वविधिर्नियमविधिः परिसङ्ख्याविधिश्चेति । प्रमाणान्तरेणाप्राप्तस्य प्रापको विधिः—**अपूर्वविधिः** । पक्षप्राप्तानुवादको विधिः—**नियमविधिः** । इतरव्यावृत्तिफलको विधिः—**परिसङ्ख्याविधिः** । अयं परिसङ्ख्याविधिः द्विधा—श्रौती, लाक्षणिकी चेति ।

**अर्थवादः**—प्राशस्त्यनिन्दान्यतरपरं वाक्यम् । स द्विविधः—**विधिशेषः, निषेधशेषश्चेति** । स त्रिधा—**गुणवादानुवादभूतार्थवादभेदात्** । प्रमाणान्तरविरोधे सत्यर्थवादः—**गुणवादः** ।

प्रमाणान्तरावगतार्थबोधकशब्दः—**अनुवादः**। प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको वादः—**भूतार्थवादः**।

विधिमन्त्रनामधेयनिषेधार्थवादादिमीमांसापूर्वकं वेदार्थनिर्णयः कार्यः। विधीनामनुष्ठानविधायकत्वेन, मन्त्राणामनुष्ठेयार्थस्मारकत्वेन, उद्भिदादिवाक्यानां नाम्ना विधेयार्थपरिच्छेदकत्वेन, निषेधानां विधेयार्थसंकोचकत्वेन, अर्थवादानां विधेयप्राशस्त्यसंपादकत्वेन—अर्थवादत्वमिति दिक्।

**उपवेदाश्च चतुर्धा**—क्रमेणाऽऽयुर्वेदधनुर्वेदगान्धर्ववेदतन्त्रभेदात्।

अस्याः वेदराशेः षडङ्गानि, शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं कल्पश्चेति। "छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्" इति शिक्षावचनात्। अत एव व्याकरणं मुख्यमङ्गम्। "सर्वस्य गात्रस्य शिरः प्रधानम्" इत्यभियुक्तोक्तेः। मुखस्यैव प्रायःपुरुषभेदादिपरिचायकत्वदर्शनाच्च।

तत्र—**शिक्षा** नाम—उदात्तानुदात्तस्वरितप्रचयाख्यस्वरह्रस्वदीर्घप्लुतानुनासिकाननुनासिकादिभेदभिन्नवर्णसमुदायात्मकपदपरिपाटीक्रमेण वेदशिक्षणप्रकारवान् नारदपाणिन्यादिमहर्षिकृतो ग्रन्थः। "अथ शिक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्। साम सन्तानः" इति श्रुतेः। किं च "गीती शीघ्री शिरःकम्पी तथालिखितपाठकः। अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥३२॥ माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः॥ धैर्यं लयसमर्थं च षडेते पाठका गुणाः ॥ ३३ ॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" ॥ ५२॥ "आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया" ॥ ६ ॥ इत्याद्युक्तरीत्योच्चारणादेस्तदेकगम्यत्वात्। उच्चारणमर्थज्ञानपूर्वकमेवावश्यकमिति दिक्। तत्र निर्दुष्टतया शब्दोच्चारणे दोषज्ञानमन्तरा निर्दुष्टत्वज्ञानासंभव इति तादृशसंवृताद्यष्टादशदोषज्ञानं शिक्षाधीनमिति ज्ञेयम्। **ते दोषाश्च**—(१) संवृतः—एकारादीनां संवृतत्वं दोषो, न त्वकारस्य। (२) कलः—स्थानान्तरनिष्पन्नः। (३) ध्मातः—येन श्वासाधिक्याद्ध्रस्वोऽपि दीर्घ इव लक्ष्यते। (४) एणीकृतः—अविशिष्टः किमयमोकारोऽयमौकार इति सन्देहो यत्र। (५) अम्बूकृतः—योऽव्यक्तोऽप्यन्तर्मुखो दृश्यते। (६) अर्द्धकः—दीर्घोऽपि ह्रस्व इव। (७) ग्रस्तः—जिह्वामूले निगृहीतः। (८) निरस्तः—निष्ठुरः। (९) प्रगीतः—सामवदुच्चारितः। (१०) उपगीतः—समीपस्थवर्णान्तरगीत्याऽनुरक्तः। (११) क्ष्विण्णः—कम्पमान इव। (१२) रोमशः—गम्भीरः। (१३) अविलम्बितः-वर्णान्तरासम्भिन्नः। (१४) निर्हतः—रूक्षः। (१५) विकम्पितः—स्पष्टोऽर्थः। (१६) सन्दष्टः—वर्द्धित इव। (१७) द्रुतम्—स्पष्टोऽर्थः। (१८) विकीर्णः—वर्णान्तरप्रसृतः— एकोऽप्यनेकनिभः इति। ताश्च शिक्षाः द्वात्रिंशत्सङ्ख्याका मुद्रिता शिक्षासंग्रहनाम्ना।

छन्दो नाम—लौकिकवैदिकशब्दान् छन्दयति नियमयतीति पादयतिविरामादिव्यवस्थापकः पिङ्गलादिमहर्षिप्रणीतो ग्रन्थः । गायत्र्या यजतीत्यादि विध्यादौ निर्णयायोपयुज्यते । तद्भेदाश्च प्रस्तारादिना नानेत्यादिकं तत एवावधार्यम् ।

ज्योतिषं नाम—लोकवदेव सूर्यचन्द्रादिज्योतिराश्रित्य तत्तद्वेदशास्त्रविहितकर्मानुष्ठानकालनिर्णयायाध्ययनाध्यापनादिविधिनिषेधकालनिर्णयाय गरुडचयनादौ गणितज्ञानायाऽऽपदादिषु होराप्रश्नस्कन्धद्वारा फलादेशादिप्रतिपादनाय कृतो ग्रन्थः।परं तु ऋग्वेदाङ्गज्योतिषं षट्त्रिंशद्ग्रन्थात्मकमिति विशेषः । वेदाङ्गज्योतिषग्रन्थस्य टीका सोमाकरकृतास्ति । तत्र टीकान्त्यभागे " शेषकृतयजुर्वेदाङ्गज्योतिष " इत्युल्लेखाद्वेदभेदेन तदङ्गज्योतिषमपि भिन्नमिति ज्ञायते। तत्र यजुर्वेदाङ्गज्योतिषमृग्वेदाङ्गज्योतिषापेक्षयाऽभिन्नमेव प्रायः । तत्रर्ग्वेदाङ्गज्योतिषस्था एव त्रिंशद्ग्रन्था यजुर्वेदाङ्गज्योतिषे क्वचिद्वृत्तमात्रेण भिन्नाः । अर्थेन त्वभिन्ना एव दृश्यन्ते । तथा त्रयोदश ग्रन्थास्ततोऽधिका दृश्यन्ते।ऋग्यजुर्वेदाङ्गज्योतिषयोस्संहत्य ग्रन्था एकोनपञ्चाशत्स्युः। अथर्ववेदाङ्गज्योतिषं त्वेतदुभयापेक्षया विलक्षणमेव । वेदाङ्गज्योतिषाचार्यश्च " लगधः " इति " पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिम् । दिनर्त्वयनमासाङ्गं प्रणम्य शिरसा शुचिः ॥ १॥ प्रणम्य शिरसा कालमभिवाद्य सरस्वतीम् । कालज्ञानं प्रवक्ष्यामि लगधस्य महात्मनः ॥२ ॥" इति तदादावुक्तेः । मलयाळदेशे " लगडाचार्यः" इत्यपि देशभेदेनोच्चारणभेदो दृश्यते ।

कल्पो नाम—बोधायनापस्तम्बाश्वलायनादिमहर्षिप्रणीत एकशाखायां भिन्नभिन्नप्रकरणोक्तमन्त्राणां न्यायलभ्यशाखान्तरस्थानां च मन्त्राणां प्रयोगक्रमकल्पको ग्रन्थः । ते च बहवः । तथापि कानिचित्प्रदर्श्यन्ते नामभिः—

| तत्र पूर्वसूत्राणि नव— | अपरसूत्राणि नव— |
|---|---|
| १ अग्निवेश्यसूत्रम् । | १ वैखानससूत्रम् । |
| २ बोधायनसूत्रम् । | २ शौनकीयसूत्रम् । |
| ३ आपस्तम्बसूत्रम् । | ३ भारद्वाजसूत्रम् । |
| ४ सत्याषाढसूत्रम् । | ४ अग्निवेश्यसूत्रम् । |
| ५ द्राह्यायणसूत्रम् । | ५ जैमिनीयसूत्रम् । |
| ६ अगस्त्यसूत्रम् । | ६ अमाथुन्यसूत्रम् । |
| ७ शाकल्याश्वलायनसूत्रम् । | ७ माध्यन्दिनसूत्रम् । |
| ८ शाम्भवीयसूत्रम् । | ८ कौण्डिन्यसूत्रम् । |
| ९ कात्यायनीयसूत्रम् । | ९ कौषीतकिसूत्रम् । |

इत्यष्टादश सूत्राणि स्मृतिमुक्ताफले आचारकाण्डे स्मृतिकर्तृनिरूपणप्रकरणे वैद्यनाथदीक्षितैर्यथोक्तानि तथात्र प्रदर्शितानि । एतेषां श्रौतस्मार्तधर्मादिभेदेन बहवोऽवान्तरभेदाः ।

व्याकरणं नाम—अर्थविशेषमाश्रित्य स्वरप्रकृतिप्रत्ययादिविशेषादीन्विदधत्पदखण्डार्थविशेषज्ञापकः विशेषेण संस्कारविशेषेण आसमन्ताद्वैदिकाँल्लौकिकांश्च शब्दान्करोति तथाभूतः

पाणिन्यादिमहर्षिप्रणीतो ग्रन्थराशिः। तच्च नवविधम्—"ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्। सारस्वतं चापिशलं शाकलं पाणिनीयकम्" इति श्रीतत्त्वनिधावुक्तेः "सोऽयं नवव्याकरणार्थवेत्ता" इति श्रीवाल्मीकीयरामायणे उक्तेश्च। न चेदमप्रमाणम्। हनुमतस्समये पाणिन्यादेरनुत्पत्तेरिति वाच्यम्। अतः एव पूर्वपूर्वयुगीयपाणिनीयव्याकरणादीनां सत्त्वानुमानात्। "धाता यथापूर्वमकल्पयद्" इति श्रुतेः।

(१) तत्र ऐन्द्रं व्याकरणं श्रुत्योद्घुष्यते--"वाग्वै पराच्यव्याकृता अवदत्॥ तं देवा इन्द्रमब्रुवन्। इमं नो वाचं व्याकुर्विति। सोऽब्रवीत्। वरं वृणै। मह्यं चैवैष वायवे च सह गृह्यातामिति। तस्मादैन्द्रवायवस्सह गृह्यते। तामिन्द्रो मध्यतोपक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुच्यते" इति। इयं श्रुतिरिन्द्रस्य व्याकरणकर्तृत्वपरत्वेन श्रीविद्यारण्याचार्यैर्व्याख्याता।

(२) चान्द्रमार्षग्रन्थेष्वन्वेषणीयम्। "चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः" इत्यादिना स्पष्टमनुमातुं शक्यते तत्सत्ता।

(३) काशकृत्स्नं व्याकरणं पतञ्जलिना "शेताचै ठन्यता—" इत्यत्र नाम्ना उक्तम्।

(४) कौमारं त्वाग्नेयपुराणेऽन्त्यभागे। एतत्पाणिनिकृतं प्रातिशाख्यसूत्रमेव तदित्यन्ये।

(५–६) सारस्वतं, शाकटायनमुक्तव्याकरणद्वयं चाधुना मुद्रितान्युपलभ्यन्त एव सर्वत्र भरतखण्डादौ।

(७–८) आपिशलं, शाकलं च पाणिनिसूत्रेषु तत्र तत्र तन्नाम्नोरनुवादात्ते बभूवतुरित्यनुमीयेते।

(९) पाणिनीयं व्याकरणं चाधुना मुद्रितं सर्वत्रोपलभ्यत एव।

एवम् "अवङ् स्फोटायनस्य" इत्युक्तेः स्फोटायनव्याकरणं, कात्यायनेन "पौष्करसादेः" इत्युक्तेः पौष्करसादिव्याकरणं, "विन्दतिश्चान्द्रदौर्गादेः" इत्युक्तदौर्गव्याकरणम्, "व्याघ्रभूत्यादयस्त्वेनम्" इत्याद्युक्तेर्व्याघ्रभूतिव्याकरणादिकमप्यासीदित्यनुमीयते। श्रीमत्पण्डितव्याकृसिमलक्रृतं, भोजकृतं, व्याकरणं श्रीभण्डारकरकृतमार्गोपदेशिकादिव्याकरणं च सुलभमेव। एवमाशुबोधव्याकरणं जैनेन्द्रव्याकरणं कातन्त्रव्याकरणं च।

नन्वेवं सत्स्वेतेषु बहुषु व्याकरणेष्वन्यतमस्य यस्य कस्य वा वेदाङ्गत्वमास्तामिति चेन्न। इच्छया नियममन्तरा कस्याप्यर्थनिर्णयस्यायुक्तत्वात्। एकस्यैव शब्दस्य व्याकरणभेदेन साधुत्वासाधुत्वयोरापत्तेश्च। तस्मात्सर्वलौकिकालौकिकशब्दव्युत्पादकस्य पाणिनीयव्याकरणस्यैव वेदाङ्गत्वाभ्युपगमस्स्यात्। व्याकरणान्तरे तु सर्वेषां लौकिकालौकिकशब्दानां न व्युत्पादनम्। "इदमक्षरं छन्दो वर्णशस्समनुक्रान्तं ब्रह्मा बृहस्पतये प्रोवाच। बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः। तं खल्विममक्षरसमाम्नायमित्याचक्षते न भुक्त्वा न नक्तं ब्रूयाद्ब्रह्मराशिः" इति ऋक्तन्त्रव्याकरणोक्तरीत्याक्षररूपस्यास्य चतुर्दशसूत्रकदम्बस्याम्नायत्वमिति तन्मूलकत्वाच्च। अत एवास्य ज्ञाने सर्ववेदपारायणजं पुण्यमित्युक्तम्। छान्दो

येऽपि व्याकरणं ( चतुर्दशसूत्ररूपम् ) उपक्रम्य वेदानां वेद इत्युक्तम् । किंच " कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः । द्वापरे शङ्खलिखिताः कलौ पाराशरास्स्मृताः " इति वचनेनाऽऽचारव्यवस्थावच्छब्दसाधुत्वासाधुत्वव्यवस्थाया अपि पाणिनिकृताया एवाभ्युपेयत्वात्। अत एव पराशरोपपुराणे—"पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् । सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किंचन" इत्युक्तं संगच्छते । अत एव "शताच्च ठन्यतावशते" इति सूत्रे शाकलकाशकृत्स्नव्याकरणान्तरस्थं " शताच्च ठन्यतावग्रंथे " इति सूत्रमुपन्यस्य तन्मते शत्यश्शतिको वा गोसङ्घ इति साधुः । पाणिनिमते तु शतको गोसङ्घ इत्येव साधुरिति व्याकरणयोर्विरोधमुपन्यस्य नियतकालाश्च स्मृतयो व्यवस्थाहेतवो भवन्ति ।"कलौ पाराशरास्स्मृताः"इतिवन्मुनित्रयमतेनैवाऽऽद्यत्वे साध्वसाधुप्रविभाग इत्युक्तं भाष्यकैयटयोः । यथोत्तरं मुनीनां प्रामाण्याच्च। अत एव "न बहुव्रीहौ" इत्यत्र महाभाष्ये त्वकत्पितृक इत्यस्यैव साधुत्वं, न त्वत्कपितृक इत्यस्येति स्पष्टम् ।एतद्व्याकरणमूलभूतचतुर्दश सूत्राणि भगवता परमकारुणिकेन महेश्वरेण पाणिनये उपदिष्टानि। अत एव "नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् (१४) । उद्धर्तुकामस्सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् "इति नन्दिकेश्वरकृतकाशिकायामुक्तं, "येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तम् " इत्युक्तं च संगच्छत इति दिक् । ननु पदपदार्थनिर्णायकत्वेन व्याकरणस्योक्तं वेदाङ्गत्वम् । तत्र व्याकरणस्थपदपदार्थनिर्णायकं किमिति चेत्तत्रान्यत्तत्रान्यदित्यनवस्थेति चेन्न । वेदार्थनिर्णायकं मुख्यमङ्गमिदमेव । व्याकरणे तन्निर्णायकं तु काव्यकोशादिकम् । तत्र चोपदेशपरम्परेत्यदोषादिति दिक् ।

**निरुक्तं** नाम—व्याकरणस्यैव परिशिष्टमिति वक्तुं युक्तम् । वैदिकाश्शब्दा निश्शेषेणोच्यन्तेऽर्थादिनिर्णयेनेति तथाभूतः यास्कप्रणीतो ग्रन्थः। स चाष्टादशाध्यायात्मकः।तत्रान्तिमौ द्वावध्यायौ परिशिष्टशब्देनोच्येते । चतुर्दशाध्यायानां खण्डानि ( ४८० ) एकेषां मते । अन्यमते ( ४४८ ), ततः परस्य मते ( ४४३ ) इति ज्ञेयानि । नैघण्टुककाण्डस्य पञ्चाध्यायाः, नैगमकाण्डस्य षडध्यायाः, दैवतकाण्डस्य षडध्यायाः, परिशिष्टस्यकोऽध्यायः इत्यष्टादशाध्याया अत्र ज्ञेयाः । उदाहरणरूपं वेदवाक्यं **निगमः** । एतद्भाष्यं स्कन्दस्वामिना कृतम् । नैघण्टुककाण्डे षष्ठाध्यायादि जम्बूमार्गाश्रमवासिदुर्गाचार्यकृतमृज्वर्थाख्यव्याख्यानं मुद्रितमेव । अत्रिगोत्र'देवराजयज्वकृतनैघण्टुककाण्डस्य निर्वचनाख्यव्याख्यानमादौ पञ्चमाध्यायान्तमस्ति । क्षीरस्वाम्यनन्ताचार्येण निघण्टुव्याख्या कृतेत्युल्लेखः क्वचिद्दृश्यते । निघण्टुपदेनायमन्यो वा लौकिक इति विचार्यम् । प्राय इदमेव भवेत् । यतोऽस्य नाम बहवो ग्रन्थकारास्स्वग्रन्थेषूट्टङ्कयन्ति ।

तस्यास्य व्याकरणस्य को विषयः, किं प्रयोजनम्, अधिकारी कः, सम्बन्धश्च कः इति चेत्तत्राहुः—वैदिका लौकिकाश्च शब्दाः विषयाः । तज्ज्ञानं प्रयोजनम् । तज्जिज्ञासुरधीतकाव्यकोशादिरधिकारीति ज्ञेयम् । तान्यष्टादशप्रकाराणि— १ वेदरक्षा, २ ऊहः, ३ आगमः, ४ लाघवम्, ५ असन्देहः, ६ म्लेच्छताऽसम्पत्तिः, ७ स्वरवर्णदोषराहित्यम्, ८ सार्थकवेदज्ञानम्, ९ सुशब्दापशब्दज्ञानयोर्धर्माधर्मज्ञानम्, १० प्रत्यभिवादे नाम्नि प्लुतज्ञानम्, ११

विध्यादिवाक्यघटकविभक्तिपदार्थादिज्ञानम्, १२ पदाक्षरादिविभागज्ञानम्, १३ चतुर्विधपदजात-कालव्यङ्ग्यव्यञ्जकविभक्तिस्थानभेदज्ञानम्, यद्वा सकलपदजातज्ञानम्, १४ वाग्विस्तारसम्पत्तिः, १५ असाधुशब्देभ्यो विविच्य सुशब्दज्ञानम्, १६ अपशब्दप्रयोगजन्यप्रत्यवायपरिहारकप्रायश्चित्ताभावः, १७ नामकरणेषु विहितनामस्वरूपज्ञानम्, १८ सर्वविभक्त्ययन्तानां सम्यगुच्चारणमिति। एतद्व्याख्यानं महाभाष्ये विस्तृतम्। तथापि किञ्चिन्निरूप्यते। तद्यथा-

(१)—भद्रं कर्णेभिरित्यादौ लोकविलक्षणस्य कर्णेभिरित्यस्य "बहुलं छन्दसि" इति व्याकरणेन साधुत्वम्।

(२)—अग्नये त्वा जुष्टं निर्वपामीत्यादौ सूर्योद्देश्यताकत्वविवक्षायां सूर्याय त्वा जुष्टं निर्वपामीत्याद्यूहो व्याकरणेन सिध्यति

(३)—विश्वेदेवासः इत्यादौ "आज्जसेरसुक्" इत्यसुगागम इत्यादिकं व्याकरणेन सिध्यति।

(४) ब्राह्मणस्याध्यापनं धर्मः। तच्चाध्यापनं वैदुष्यायत्तम्। तच्च शब्दार्थादिषु साध्वसाधुत्वप्रतियोगिकभेदज्ञानाधीनम्। तच्च शब्दादीनां प्रतिपदपाठादिना दुश्शकम्। शब्दादीनामानन्त्यात्। तस्मादुत्सर्गापवादाद्यनुगमकलक्षणेनैव तज्ज्ञानं साध्यम्। तेन लाघवमपि। अत एव महाभाष्ये" बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच। नान्तं जगाम। इन्द्रश्चाध्येता। बृहस्पतिर्वक्ता। दिव्यं वर्षसहस्रमध्ययनस्य कालः। न चान्तं जगाम" इत्युक्तम्। शब्दपारायणम्—योगरूढ्या तदाख्यशास्त्रविशेष इति कैयटः। एवं च प्रतिपदपाठस्य दुश्शकत्वप्रतिपादकोऽयमर्थवादः।

(५)—"स्थूलपृषतीमनड्वाहीमालभेत" "इन्द्रशत्रुर्वर्धस्व" इत्यादौ बहुव्रीहिस्तत्पुरुषो वेति सन्देहे पूर्वपदप्रकृतिस्वरेण बहुव्रीहिरिति तु व्याकरणेन सिध्यति। अत्रेयमाख्यायिका-पुरा किल त्वष्टुर्ब्रह्मणः पुत्रे इन्द्रेण निहते विश्वरूपवधात्कुपितेन त्वष्ट्राऽऽरब्धे वीन्द्रे सोमेऽनपहूतेनैवेन्द्रेण पीतस्य सोमस्यावशेषं दृष्ट्वा क्रुद्धस्त्वष्टेन्द्रहन्तृवृत्राख्यपुत्रोत्पादनायाऽभिचारिकं यियक्षमाणः आहवनीयमुपप्रावर्तयत्स्वाहेन्द्रशत्रुर्वर्धस्वेति। ततो वृत्र उदभूदिति। श्रूयते तैत्तिरीयसंहितायाम्। तदेतच्छ्रुत्वा भीत इन्द्रः ब्रह्मलोकं गत्वा सरस्वतीं तुष्टाव। ततोऽनुकम्पया सरस्वती त्वष्टुर्मुखादन्तोदात्ते इन्द्रशब्दे प्रयोक्तव्ये तद्वैपरीत्येन पूर्वपदप्रकृतिस्वरवदिन्द्रः शातयिता यस्येत्यर्थकमिन्द्रशत्रुपदमेवोच्चारयामास। ततश्चोत्पन्नो वृत्र इन्द्रेण हत इति।

(६)—"नानृतं वदेत्" इति श्रुत्या "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" इति स्मृत्या चापशब्दोच्चारणे शास्त्रातिक्रमात्प्रत्यवायात्। ततः सुशब्दोच्चारणेन प्रत्यवायाविषयतासंपत्तिर्व्याकरणेन सिध्यति। अत्र विनिगमनाविरहादर्थानृतमिव शब्दानृतमप्यनृतपदेन गृह्यते। अत एव यद्वानस्तद्वान इति हेरयो हेरय इति च प्रयोक्तव्ये यर्वाणस्तर्वाण इति हेलयो हेलय इति हे३इति प्लुतं विहाय केवलं रेफं

विहाय लकारमेव वा कुर्वन्तः पराबभूवुः। तस्मात् "न म्लेच्छितवै नापभाषितवै । म्लेच्छो ह वा एष यदपशब्दः" इत्युक्तं भाष्ये ।

( ७ )—"शब्दो हीनस्स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ॥ स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुस्स्वरतोऽपराधात्"इत्युक्तरीत्यैहिकदुःखपरिहारोऽपि फलमित्यनेन ज्ञायते ।

( ८ )—"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थवित्स-कलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा" इति "यदधीतमविज्ञातं निगदेनैव शब्द्यते ॥ अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" "अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः" इति च भाष्यादावुक्तरीत्यार्थज्ञानमन्तरा वेदानुपूर्वीज्ञानस्य निरर्थकत्वोक्तेरर्थज्ञानमावश्यकम् । तच्च व्याकरणाध्येतुः प्रकृतिप्रत्ययार्थज्ञानेन सुसाध्यं, नान्यस्य । अत एव "वेदार्थज्ञो जपं जप्त्वा तथैवाध्ययनं द्विजः । कुर्वन्स्स्वर्गमवाप्नोति नरकं तु विपर्यये" इति व्यासेनोक्तम् ।

( ९ )—एकस्यापशब्दस्य भूयांसोऽपशब्दाः । संस्कृततदतिरिक्तभाषाशब्दादयः इति यावत् तत्प्रयोगेण दुष्यति । एकस्य सुशब्दस्य प्रयोगे तु न तथा दुष्यैति । अनन्तफलमप्या-प्नोति, तद्दोषप्राप्तिपरिहारो व्याकरणेनैव सिध्यत्यनन्तफलप्राप्तिश्च । तदेतदुच्यते " यस्तु प्रयु-ङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति फलं परत्र वाग्योगविद्दुष्यति चापशब्दैः" इति ।

( १० )—प्रत्यभिवादे गुर्वादिभिः स्त्रीभिन्नैः प्लुतः कार्य इति विधिरस्ति । तच्च व्याकरण-ज्ञानाधीनम् ॥

( ११ )—"प्रयाजाः सविभक्तिकाः कार्याः" इति विधिवाक्यानुसारेण तत्र वाक्येषु तत्त-द्विभक्त्यन्तघटिततयोच्चारणं व्याकरणेनैव सिध्यति ।

( १२ ) साच्कव्यञ्जनरूपाक्षरज्ञानं पदज्ञानं वाक्यज्ञानं च व्याकरणज्ञानाधीनम् ।

( १३ ) यत्र नामाख्यातोपसर्गनिपातरूपचतुर्विधपदज्ञानं, भूतभविष्यद्वर्तमानतदवान्तराद्य-तनानद्यतनकालज्ञानं,व्यङ्ग्यव्यञ्जकशब्दज्ञानं सप्तविभक्तिज्ञानं तत्तद्वर्णिनामुरःकण्ठशिरोरूपस्था-नत्रयज्ञानं तत्र मनुष्ये शब्दः प्रविश्य तथा प्रकाशमापेदे इति ज्ञानं व्याकरणज्ञानाधीनम् । तत्रेयं श्रुतिः-"चत्वारि वाग्--" इत्यादि । अथवा "परा पश्यन्ती मध्यमा वैखरी" इति चतस्रो वाचः । तत्र तिस्रो गुहायां मूलाधारस्वाधिष्ठानमणिपूरकाख्येषु स्थानेषु क्रमेण सन्ति । तुरीयां वैखर्याख्यां वाचं मनुष्या मुखेनोच्चारयन्तीत्यर्थः । एवं च वर्णानामुत्पत्तिवृद्ध्यादिक्रमो व्याकरणाधीनः ।

( १४ )--बहूनामपि समानपृष्ठोदरपाणिपादानां वेदवेदाङ्गादिकमधीयमानानां स्वभ्यस्ता-ध्ययनोऽपि सूक्ष्मबुद्धिरपि कश्चित्तादृशः प्रकृतिप्रत्ययविभागेन विगृह्यार्थेनैनां न पश्यति न जानाति वाचम् । अर्थपरिज्ञानमेव हि वाचां फलम् । एकः शृण्वन्नपि न शृणोत्येनाम् य एव हि सम्यगर्थं जानाति स एवेनां वाचं जानाति शृणोति च । तत्रेयं श्रुतिः-" उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् । उतो त्वस्मै तन्वं ३

उशती सुवासाः'' इति । अर्थो हि वाचश्शरीरम् । प्रातिपदिकाद् धातोश्चार्थादौ प्रत्ययानां विधानात् । तच्च ज्ञानं व्याकरणज्ञानाधीनम् ।

( १५ )—सुशब्दापशब्दसमूहात्परिशोध्यापशब्दान्विहायैव सुशब्दसंपत्सम्पादनं व्याकरणज्ञानाधीनम् । तदाह श्रुतिः—''सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत । अत्रा सखायस्सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि'' इति ।

( १६ )—आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्ती स्यात् । तदनिष्टपरिहारश्च व्याकरणज्ञानाधीनः ।

( १७ )—दशम्युत्तरकालं जातस्य पुत्रस्य नाम विदध्याद्घोषवदाद्यन्तरन्तःस्थमवृद्धं तत्संबन्धित्रिपुरुषान्यतमाभिधायि शत्रोर्मनुष्यस्य वा यन्नाम न भवति, किन्तु देवतादेः तथाभूतं द्व्यक्षरं चतुरक्षरं वा कृदन्तं नाम कार्यम् । न तद्धितान्तमिति विधिविहितरीत्या नामकरणज्ञानं व्याकरणज्ञानाधीनम् ।

( १८ )—यो व्याकरणज्ञः स शब्दान् यथेच्छं विनियोक्तुं शक्नोति, नान्य इति तदेतदपि व्याकरणज्ञानाधीनमिति च महाभाष्ये स्पष्टमिति दिक् ।

तज्जिज्ञासुरधिकारी । प्रतिपाद्यप्रतिपादकभावादिस्संबन्ध इति ज्ञेयम् ।

**वेदोपाङ्गानि** तु—''पुराणं न्यायो मीमांसा धर्मशास्त्रम्''इति। **तत्र पुराणं** द्विविधम्··महापुराणमुपपुराणं चेति । एकैकं पुनरष्टादशधा भवति । तच्चोभयं व्यासकृतम् । व्यासाः—बहव इत्युक्तमित्यन्यत् । **न्यायः**—पदार्थानां सर्वेषामनुगमरूपेण प्रकाशकः काणादादिमहर्षिप्रणीतो ग्रन्थः । **मीमांसा**—वेदार्थकर्मनिर्णायको ग्रन्थः । स च प्रकारः किञ्चित्प्राक् संक्षेपेण निरूपितः । **धर्मशास्त्रम्**—मन्वादिमहर्षिप्रणीतः स्मृत्यादिरूपो ग्रन्थ इत्यलम् ।

### अथ वेदवेदाङ्गयोरध्ययनादिकालो निरूप्यते—

''श्रावण्यां प्रौष्ठपद्यां वा ह्युपाकृत्य यथाविधि । युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्द्धपञ्चमान्'' ।। ४ । ९५ ।। ''ततः परन्तु छन्दांसि शुक्लेषु नियतः पठेत् । वेदाङ्गानि रहस्यं च कृष्णपक्षेषु संपठेत्'' ।। ४ । ९८ ।। इति मनूक्तेः । स्मृत्यन्तरं च ''इत ऊर्ध्वमनध्यायेष्वङ्गान्यधीयीत'' इति स्मृत्यन्तराद्युक्तेश्च श्रावण्यामुपाकर्मपक्षे तत आरभ्य, प्रौष्ठपद्यामुपाकर्मपक्षे तत आरभ्य सार्द्धचतुर्मासपर्यन्तं वेदाध्ययनं कार्यम्।'' पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः । माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ।। ४ । ९६ ।। यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः । विरमेत्पक्षिणीं रात्रिं तदेवैकमहर्निशम्'' ।। ४ । ९७ ।। इति मनूक्तेः सार्द्धचतुर्मासान्तर्गतान्तिमपक्षान्तगतदिनेषु यत्र पुष्यः तत्रोत्सर्गः कार्यः, माघशुक्लस्य प्रथमेऽहनि प्रौष्ठपद्यां येनोपाकर्म कृतं तेनोत्सर्गः कार्य इत्यर्थः । एवमुत्सर्गादित्रिदिनानध्यायानन्तरं शुक्लपक्षेषु वेदान्,कृष्णपक्षेषु तत्रानध्यायेष्वपि वेदाङ्गानि चाधीयीत । पठेदित्युक्ते वेदाङ्गानामुक्तकालेष्वप्यध्ययनं सिद्धमिति दिक् ।

( अङ्गाध्ययनादिषु नानध्यायदोषो भवति )—

''अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः । न धर्मशास्त्रेष्वन्येषु पर्वण्येतानि वर्जयेद् ''

इति "नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च । नानध्यायोऽस्ति वेदानां ग्रहणे ग्राहणे स्मृतः" इति च क्रमेण कौर्मशौनकीययोर्वचनात् ।

## अथ वेदतदङ्गोपाङ्गाध्ययनाध्यापनविध्यादयः ।

नन्वस्तु वेदाङ्गत्वं व्याकरणस्य । तदध्ययने वेदाध्ययने वा प्रवृत्तिः कुतः स्यादिति चेद् । अत्रोच्यते । "ब्राह्मणेन निष्कारणेन षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति श्रुत्या, "द्वे विद्ये वेदितव्ये परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम्" इति मुण्डकश्रुत्या, "स्वाध्यायोऽध्येतव्यः" "स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्" इति श्रुतिभ्यां "छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते । शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते" इति शिक्षावाक्येन, "द्वे च विद्ये वेदितव्ये इति चाथर्वणीश्रुतिः। परया त्वक्षरप्राप्तिर्ऋग्वेदादिमयी परा" इति विष्णुपुराणोक्त्या, "द्वे च विद्ये वेदितव्ये परा चैवापरा द्विज । ऋग्यजुस्सामाथर्वाख्या वेदा अङ्गानि षट् द्विजाः । शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा । छन्दश्शास्त्रं च मीमांसा धर्मशास्त्रं पुराणकम् । न्यायो वैद्यकगांधर्वधनुर्वेदार्थशास्त्रकम् । अपरेयं परा विद्या तया ब्रह्म निगद्यते" इत्याग्नेयोक्त्या च, यथा "अहरहस्सन्ध्यामुपासीत" इत्यादिश्रुत्या सन्ध्यावन्दनादिकं दृष्टफलाश्रवणेऽपि कारणमनपेक्ष्यैव कर्त्तव्यत्वेन विधीयते, तथा वेदवेदाङ्गतदुपाङ्गाध्ययनमपि कारणमनपेक्ष्यैव ब्राह्मणस्य कर्तव्यत्वेन विधीयते । "किंच सत्यान्मा प्रमदः" "सत्यं वद" "नानृतं वदेद्" इति श्रुतिभ्यः "न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः" इति भाष्याद् याज्ञे कर्मण्यपशब्दोच्चारणे 'सारस्वतीयामिष्टिं निर्वपेद्' इति श्रुतेः "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" इति स्मृतेश्च कर्त्तव्येन विहितस्य वेदाङ्गाध्ययनस्याकरणेऽविहितस्यापशब्दस्योच्चारणेसुशब्दस्यानुच्चारणे वा सत्यप्रमादादिजन्यप्रत्यवायजन्यापूर्वद्वारकानिष्टभयोत्पत्त्यापत्तेस्तन्निवृत्तये तदध्ययनं विहितम् । किञ्च "यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् । स वै दुर्ब्राह्मणो ज्ञेयः सर्वकर्मबहिष्कृतः" इति स्मृतेः, "योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः "इति स्मृतेः, "द्विजातीनामध्ययनमिज्या दानमिति ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः पूर्वेषु नियमः" इति गौतमोक्तेः, "तपो दमो दया दानं सत्यं धर्मश्श्रुतं घृणा । विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम्" इति स्मृतेः, "वेदः कृत्स्नोऽधिगन्तव्यस्सरहस्यो द्विजन्मना । कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च । कुलान्याशु विनश्यन्ति" इति मनुस्मृतेश्च द्विजानां श्रुतविद्याद्यध्ययनाध्यापनाग्निहोत्राचरणदानतपोदमदयासत्यविज्ञानसंपादनास्तिकत्वान्यावश्यकानि भवन्ति ।किंच " शास्त्रं सुनिश्चितमपि प्रतिचिन्तनीयमाराधितोऽपि नृपतिः परिशङ्कनीयः । अङ्के स्थितापि युवतिः परिपालनीया शास्त्रे नृपे च युवतौ च कुतो वशित्वम्" इति नीतिकृदुक्तेरावर्तनादिकं चात्यावश्य-

कम् । "विद्याविहीनः पशुः" इत्युक्तिरप्युक्ताशयेनैव । एवं चैतदध्ययनं ब्राह्मणस्य नित्यमिति सिद्धम् ॥ तथा काम्यत्वमपि—"एकश्शब्दस्सम्यग्ज्ञातः सुष्ठु प्रयुक्तश्शास्त्रान्वितस्स्वर्गे लोके कामधुग्भवति" इति श्रुत्या मतान्तरे स्मृत्या "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्राणि विद्या ह्येताश्चतुर्दश" "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" इति च स्मृतिभ्यां धर्मादिकाम्यफलसम्पादकत्वोक्तेः । अत एव "यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् । तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ" इति, "यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति फलं परत्र वाग्योगविद्दुष्यति चापशब्दैः—" इति, "नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः । अथ पत्काषिणो यान्ति येचीकमतभाषिणः" इति च महाभाष्यं "पातं जले विष्णुपदापगायाः पातञ्जले चापि न येऽवगाहम् । आ च क्षतेश्शुद्धिदमा प्रसूतेराचक्षते रागमधोक्षजे च" इत्यभियुक्तोक्तं च संगच्छते । अत एव "आपः पवित्रं परमं पृथिव्यामपां पवित्रं परमं च मन्त्राः । महर्षयो व्याकरणं निराहुः" इति स्कान्दोक्तं संगच्छते ॥

"अष्टवर्षं ब्राह्मणमुपनयीत । तमध्यापयीत" इति ब्राह्मणस्याध्यापनविषयेऽपि विधिजागर्ति, तथा द्विजानामध्यापनाधिकारेऽपि विधिर्भवति, "वेदाभ्यासं ततः कुर्यात्प्रयत्नाच्छक्तितो द्विजः। वेदमध्यापयेच्छिष्यान्धारयेच्च विचारयेत्" इति व्यासेन "मन्त्रार्थज्ञो जपञ्जुह्वंस्तथैवाध्यापयन्द्विजः । स्वर्गलोकमवाप्नोति नरकं तु विपर्यये" इति हारीतेन चोक्तेः ।

अध्यापनं त्रिविधं—धर्मार्थमर्थार्थं शुश्रूषार्थं चेति । "अध्यापनं च त्रिविधं धर्मार्थं चार्थकारणात् । शुश्रूषाकरणं चेति ऋषिभिः परिकीर्तितम् । एषामन्यतमाभावे मृषाचारो भवेद्द्विजः" इति हारीतोक्तेः ।

अन्येभ्यो नीचेभ्योऽपि क्वचिदध्ययनादीनि कार्याणि । अत एव "अब्राह्मणादध्ययनमापदि शुश्रूषानुव्रज्या च यावदध्ययनम्" इति बोधायनेन "अब्राह्मणादध्ययनमापत्काले विधीयते । अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः" इति मनुना चोक्तम् ।

शुभा विद्या उत्तमान्नीचाद्वा वर्णादपि संग्राह्या एव । तदाह मनुः "श्रद्दधानश्शुभां विद्यामाददीतावरादपि । अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि । विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् । अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम् । स्त्रियो रत्नान्यथो विद्याधर्मश्शौचं सुभाषितम् । विविधानि च शिल्पानि समादेयानि सर्वतः" इति । न चावरादित्यस्य गुणरहितादित्यर्थ इति वाच्यम् । एवं सति याज्ञवल्क्यादीन्प्रति जनकेनौपनिषदानामर्थानामुपदेशासङ्गत्यापत्तेः॥ वस्तुतस्तु तत्र यथा जनकेन निवेदितमेव नतूपदिष्टं तद्वदेवावरादपि ग्राह्यमिति केचित् ॥ अन्ये तु नीचादपि प्रागुक्तरीत्योपदेशो भवत्येवान्येभ्य इवेत्याहुः ।

## स्त्रियोऽपि विद्याध्ययनाध्यापनयोरधिकारिण्यो भवन्ति—

"ब्राह्मणेन षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इत्युक्तेः । "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" इत्युक्तेश्च । अत्र ब्राह्मणपदं जातिपरम् । तेन ब्राह्मणजातीयानां पुंसामिव स्त्रीणामपि

तज्जातीयानां तदध्ययनमध्यापनं च भवति अत एव " अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै " इति बृहदारण्यकश्रुतौ, तथा गार्गीमैत्रेयीभ्यां श्रुत्यध्ययनस्य तदर्थावगमस्य च तत्रैव, "तथा गार्गी च मैत्रेयी तत्र तीर्थे महत्तरे । वेदतीर्थाभिधे स्नानं कृत्वा पर्वणि केशव" इति स्कान्दे सूतसंहितायाम्, " अतीतकाललिखितं न स्यात्तत्साधनक्षमम् । स्त्रिया चैवाप्रगल्भेन बलात्कारेण यत्कृतम्" इति शुक्रनीतौ, "कन्या सती देवमर्कमाजुहाव यशस्विनी" इति महाभारते आदिपर्वणि सप्तषष्टितमे ( ६७ ) अध्याये, " स्त्रीणां प्रव्रजितानां तु करशुल्कैर्विवर्जयेद् " इत्याग्नेये, "विद्वज्जनवन्दिता सीता प्राह—" इति "विपुलहृदयैकवेद्ये खिद्यति शास्त्रे जडो न मौर्ख्ये स्वे । निन्दति कञ्चुकिकारं प्रायश्शुष्कस्तनी नारी " इत्यादेर्भोजप्रबन्धादौ, "शतपथिकी" "काशकृत्स्ना " " उपाध्याया " "आचार्याणी " इत्यादीनां महाभाष्यादौ चोक्तिः संगच्छते प्रागुक्तरीत्या " नानृतं वदेद् " इति निषेधस्य सर्वसाधारणत्वाच्च । आचार्यशुश्रूषणादिनियम एव स्त्रीणां नेत्यभिप्रायेण निषेधविध्यादयः प्रवृत्ताः । अत एव "द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे भिक्षाचर्येति । सद्योवधूनामुपस्थिते विवाहे कथंचिदुपनयनमात्रं कृत्वा विवाहः कार्यः " इति हारीतेनोक्तं संगच्छते इति दिक् । शूद्रास्तु—नाधिकारिणः वेदतदङ्गाध्ययनादौ विना विशेषविधिं भवन्ति । यथा—निषादस्थपत्यादयः ॥

परे तु " पुरा कल्पे तु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवाचनं तथा ॥ वर्जयेदजिनं चीरं जटावल्कलमेव च " इति यमोक्तेः, "अश्मारोहणमारभ्य स्त्रीणां गौर्यर्चनं परम् । पुराणपठनं श्रेयो न वेदाध्ययनादिकम् " इत्यादि स्मृतेश्च स्त्रीणां वेदतदङ्गाध्ययनादिकं नेत्याहुः ॥

अथाध्ययनाध्यापनप्रकारः किञ्चिद्विचार्यते

" अभ्यासार्थे द्रुता वृत्तिः प्रयोगार्थे तु मध्यमा । शिष्याणामुपदेशार्थे वृत्तिरिष्टा विलम्बिता " इति " गीती शीघ्री शिरःकम्पी तथालिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः" इति च शिक्षायाम्, "सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदास्साङ्गाः सरहस्याः" इति " अनधीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचिद् " इति च महाभाष्ये," वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा " इति " पारायणं वर्तयेद्ब्रह्मचारी गुरुः शिष्येभ्यः समनुव्रतेभ्यः । अध्यासीनो दिशमेकां प्रशस्तां प्राचीमुदीचीमपराजितां वा ॥ एकः श्रोता दक्षिणतो निषीदेद्द्वौ वा भूयांसस्तु यथावकाशम् " इति च शौनकीये, नानारूपेण लोकहितायोपदिष्टानप्यर्थान्प्रायः स्वयमपरीक्ष्यैव साहसेन शिक्षाद्युक्तानर्थाननुपदिश्यैव काव्यं शास्त्रं वेदान्वाध्यापयन्त्यधीयते चास्मत्पाठकाः । व्याकरणेनैव लोकवेदशास्त्रपुराणागममन्त्रतन्त्रकाव्यनाटकालङ्कारादियावद्विद्यागतानां कलागतानां त्रैकालिकमन्वादिगतानां सुशब्दानां

विभक्त्यादेः व्याकरणपित्रैव संस्कार्यतया तदर्थज्ञानमन्तरा संस्कारस्याशक्यत्वमित्यादित आरभ्य सूत्रतदुदाहरणप्रत्युदाहरणलिङ्गानुशासनगणपाठादिस्थपदानां संस्करणादिसमये लोकवद्धेतुसाध्यपक्षादिकानां तत्तद्यज्ञपदार्थतत्संस्काराणां साङ्ख्ययोगादिस्थप्रधानपुरुषेश्वर-तत्त्वादिकानामर्थानां ज्ञानस्य तद्वाचकसुशब्दज्ञानस्य च शिक्षणावश्यकत्वेऽपि तद्रहिता-स्स्मः । तदिदं दौर्भाग्यमल्पज्ञानामध्यापकत्वेन प्रायः परिकल्पनामूलम् । तस्माद्भारत-वासिनस्सर्वे वयं तैर्वञ्चिताः । अन्यथा व्याकरणस्य प्रयोजनत्वेन सप्तद्वीपा वसुमती त्रयो लोका इति महाभाष्यकृतामुक्तिः कथं संगच्छतामिति सुधियो विभावयन्तु । किं च "आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया" इत्युक्तेरर्थज्ञानानन्तरं शब्दप्रयोग इति सिद्धेऽपि तदुभयोस्सम्बन्धज्ञानमन्तरा तदसम्भव इति स्पष्टमेव । किञ्च शिक्षामेव स्वतोऽविचारयन्तोऽपि शिक्षयन्तीति विचित्रमेतत् । तस्मादस्मदीयमेतादृशं पल्लवपाण्डित्यं ज्ञात्वाऽस्मांस्तृणायान्ये न मन्यन्त इति तथैवाग्रेऽप्यन्धपरम्पराप्रचारे ब्राह्मणानामस्माकं कान्या गतिर्भवितेति च विचार्य त्रिमुनिगुणगभीरं पाण्डित्यं संपाद्यमिति पर्यालोच्य चैकस्यैव सूत्रस्य दिनत्रयेण दिनपञ्चकेन वा यावज्ज्ञानं यथा स्यात्तथा सर्वैर्यतितव्यम् । तच्च ज्ञानमुपदेशा-धीनं लोकानुभवाधीनं चेति तदुभयं परित्यज्योत्पथगामिनामस्माकं हानिः का वा न भवेत् । शब्दशास्त्रमहारत्नापणात्कानि कानिचिदल्पाल्पानि रत्नानि संगृह्य नैयायिकादयो महापणिकास्संवृत्ताः, कुतो वा शाब्दिका महामहापणिका अप्यधमर्णिन इव संवृत्ता इति मात्सर्यं दूरत उत्सार्य विचिन्तनीयमविस्मरणीयं चेति अस्मन्महामान्यान्पण्डितानहमभ्यर्थये न तु दूषय इति दिक् ।

**प्रकृतमनुसरामः ननु** सिद्धान्तकौमुद्याः किं प्रयोजनम् । यतो महाभाष्यादिबहुग्रन्थानां सत्त्वात्तैः सिद्धान्तकौमुद्या गतार्थत्वादेतत्प्रयासो व्यर्थ इति चेदत्राहुः महाभाष्यादिग्रन्थानां गम्भीरत्वेन ततः सिद्धान्तज्ञानस्य दुर्ज्ञेयत्वेनान्येषां काशिकादिग्रन्थानां प्रक्रियाकौमुद्यादीनां च प्रायः महाभाष्यविरुद्धार्थबोधकत्वेनास्याश्चानायासेन बालानामपि महाभाष्याद्यविरुद्धतदुक्तस-फलसिद्धान्तार्थबोधकत्वेन सार्थक्यमिति दिक् ।

॥ इति पूर्वो भागः समाप्तः ॥

# अथोत्तरो भाग आरभ्यते ।

अस्ति किल प्रसिद्धमनन्तशयनाख्यं नगरं श्रीरामेश्वरक्षेत्रान्नातिदूरे वेलातटे । यत्र नगरे श्रीभगवाँल्लक्ष्मीपतिरागमान्तकान्तारसंचारवशाच्छ्रान्त इवानन्तशयनमधिशेते । तत्र कदाचिन्निद्रां यौगिकीमास्थितस्य भगवतो वपुर्गौरवमात्र । तस्याऽऽकस्मिकस्याऽसहिष्णुं बहुधा क्लिश्यन्तं शेषं वैनतेयोऽद्राक्षीदप्राक्षीच्च—किमभूतपूर्वस्त्वं दृश्यसे इति । इत्थं वदत्येव यदासीत्,तदैव ततोऽप्यतिप्रवृद्धं भगवच्छरीरं तेनैव गौरवेणातिडोलायितशिरोवृन्दं शेषं चाभि

वीक्ष्य तद्भङ्गभिया द्रुतमागत्य विशालाभ्यां स्वबाहुभ्यां तं जग्राह,लक्ष्मीश्च तद्भयेनैव सरसीरुहाक्षस्य करे स्वकराम्बुजमाकलयांचकार । तेन सोऽपि महान्तमानन्दमवाप्य चक्षुषी उन्मीलयामास। ततस्तदैवासीदतिलघु तद्वपुः । तदतिमोदेनानन्तेन बिभरांबभूवे । अत्याश्चर्येण तदुभयं वीक्ष्य लक्ष्मीवैनतेयश्च तदीयकृपापूर्णकटाक्षवीक्षणेनातीव हर्षमापतुः । शेषोऽपि तं प्रणिपत्य प्राञ्जलिस्तद्वपुषो गौरवहेतुं पप्रच्छ। सोऽत्रवादीच्च तम् । योगनिद्रामाश्रितेन मया नटराजराजस्य महनीयं विचित्रतरं नृत्तं ददृशे । तदीयविचित्रतराश्रुतदृष्टपूर्वनृत्तदर्शनजनितपरमानन्दाम्बुधिनिमज्जनान्निरुद्धनिःश्वासतया मच्छरीरेण गौरवमासादितम् । येन त्वमतीव क्लेशितोऽसि । किं च नर्त्तनावसाने मन्मुखेन त्वां कात्यायनकृतस्य पाणिनेर्वार्तिकग्रन्थस्य महाभाष्यं कर्तुं स आज्ञापयति स्मेति । ततस्तद्भगवन्नृत्तदर्शनकुतूहलेन पुनःपुनः प्रणिपत्य तद्याचमानं प्राञ्जलिमनन्तं तद्दर्शनाय गन्तुमाज्ञापयामास ।

ते पाणिन्यादयः के ? तेषां ग्रन्थाः के ? कुत्रत्याश्चेति चेद्यथाप्राप्तं तन्निरूप्यते--तथाहि पणिनामा कश्चिन्महर्षिरवाप पाणिनिं नाम कुमारम् । स पणिनामा दाक्षीमुदूह्य तस्यां पाणिनिनामानं तनूजमजनयत् । अतिक्रान्तबाल्यः पाणिनिर्विद्याग्रहणयोग्यं बयः प्राप्य नन्दराजराज्यकाले तद्राज्ये निवसन्तमुपवर्षनामानं पण्डितवरिष्ठमुपजगाम विद्यासम्पत्तिलाभाय । तत्रास्य सब्रह्मचारिणौ वररुचिव्याडिनामानावास्ताम् । स कदाचिद्वादे पराजितो निर्वेदमवाप्य व्याकरणविद्यासाम्राज्यलाभाय सर्वविद्याधिपमीशानं तपसाराद्धुं निश्चित्य प्रयागक्षेत्रं गत्वाऽक्षयवटस्याधोभागेऽतितीव्रं तपश्चक्रे । यत्र स्वस्वेष्टार्थसिद्धये सनकादयोऽपि सिद्धाः परमेश्वरं तपसोपासांचक्रिरे । चिरात्कदाचित्कठोरतत्तत्तपश्चर्यापरितुष्टस्तत्तदभीष्टवरान्प्रदित्सुर्भगवान्नाटयरङ्गतलमधिष्ठाय नृत्यन्नादयामास चतुर्दशकृत्वो ढक्काम् । स नादो यथान्यैः श्रवणपथेन स्वस्वाभीष्टसाम्राज्यप्रापकवरदानवाक्यामृतत्वेन पीतस्तथा पाणिनिनापि स्वेन करिष्यमाणं यद् "अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः " इत्युक्तलक्षणलक्षितसूत्रसमूहरूपो सधातुपाठगणपाठयुक्ताष्टाध्याय्यात्मको ग्रन्थः लिङ्गानुशासनं चेत्येतन्मूलभूतचतुर्दशसूत्रात्मकव्याकरणाम्नायाङ्गविद्यासाम्राज्यप्रापकवरदानवाक्यामृततयापीयत । तदुक्तं नन्दिकेश्वरकृतकाशिकायाम्--"नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् । उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् " इति । ततोऽनेन स्वलब्धव्याकरणमूलभूतोक्तसाम्राज्यतेजोबलेन पाणिनिः--" वृद्धिरादैच् " इत्यादिकानि "अ अ " इत्यन्तानि सूत्राण्यष्टाध्याय्यात्मना, लिङ्गानुशासनसूत्राणि षडधिकारात्मना, तत्तत्सूत्रेषु गणशब्दपाठांस्तत्रैव गणपाठेऽर्थानर्थविचित्रचित्रचित्रितं कण्ड्वादिना सहैकादशगणं धातुपाठं यजुर्वेदस्य प्रातिशाख्याख्यं सूत्रग्रन्थं तथा शब्दोच्चारणक्रमनिर्णायिकां दशखण्डात्मिकां शिक्षां तथा जाम्बवतीपरिणयाख्यं पातालविजयापरनामकं काव्यग्रन्थं च चकार । यत एव "वरतनु सम्प्रवदन्ति कुक्कुटाः"इति व्यक्तवाचामित्यत्र महाभाष्ये कस्यचित् श्लोकस्य भागः प्रत्युदाहरणत्वेन गृहीतः ।

अन्ये त्वियं पाणिनीयशिक्षा न पाणिनिकृता । यतः " अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा" इत्यादावन्तेऽपि—"येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः". ॥ ५७ ॥ "अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः" ॥ ५८॥ "त्रिनयनमुखनिस्सृतामिमां य इह पठेत्प्रयतश्च सदा द्विजः । स भवति धनधान्यपशुपुत्रकीर्तिमानतुलं च सुखं समश्नुते दिवीति दिवीति" ॥५९॥ ( ? ) इति शिक्षायां "प्रवक्ष्यामि पाणिनीयं मतं यथा" इति "तस्मै पाणिनये नमः" "त्रिनयनमुखनिस्सृतामिमाम्" इति चोक्तेः । पाणिनिकर्तृकत्वे तदनुपपत्तेश्च । एवं च पाणिनिकृतां नष्टां दुर्लभां वा पर्यालोच्य तदुपदेशपरम्परागतेन तदीयशिष्येण तदुक्तार्थप्रतिपादिकेयं पाणिनितोऽन्येन त्रिनयनाख्येन केनचिद्विदुषा कृतेत्याहुः । अन्ये तु पुराणादिषु "व्यास उवाच" इति "व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् । पराशरात्मज वन्दे" इतिवच्चार्षग्रंथानामेष स्वभाव इत्यदोषः । एतेन याज्ञवल्क्यस्मृतिर्न तेनोक्तेति मिताक्षरोक्तिः परास्तेत्याहु ॥ अस्याः शिक्षाया राघवाचार्यकृतं भाष्यं जागर्तीति दिक् । एवं सगणांश्चतुर्ग्रन्थान्विरचय्याध्यापनादिना प्रचारयन्कालक्रमेण सर्वत्र प्रथयामास । अयं कुत्रत्य इति न ज्ञायते ।

तत आगत्य स्वकृतं व्याकरणशास्त्रं स्वगुरूपवर्षादिभ्यः श्रावयामास । तत्र कौशाम्बीनगरवासिनः सोमदेवशर्मणो वसुदत्तायामुत्पन्नोऽभ्यस्तसकलशास्त्रः कात्यायनस्तदुपश्रुत्य चित्रितहृदयोऽसूयामाश्रित्येशानानुग्रहेण तादृशविचित्रग्रन्थरचनापर्युत्सुकस्स्वयमप्याश्रमं कंचिद्गत्वा तपसा परमेश्वरमाराधयामास । ततस्तदनुग्रहेण वार्तिकाख्यं ( वाक्यात्मकं ) पाणिन्यनुक्तार्थपरिपूरकं दुरुक्तपुनरुक्ताद्यर्थनिरासकं च ग्रन्थमकरोत् ।

एवमन्यानपि कात्यायन त्ववररुचिप्रयोगलक्षश्लोकात्मकबृहत्कथादीन् ग्रन्थान्निर्माय काणभूत्यादिभ्यः श्रावयित्वाऽऽरुरोह नन्दराजराज्यसाचिव्यपदम् । यस्य बृहत्कथाग्रन्थस्य सारं संगृह्य सोमदेवभट्टेन कथासरित्सागराख्यो ग्रन्थो व्यरचि । तामुपश्रुत्य पाणिनिः स्वव्याकरणन्यूनताप्रदर्शकवार्तिक ( वाक्य ) ग्रन्थनिर्मितिममृष्यन्कात्यायनमहर्षेराश्रममाजगाम । आगत्य च तमर्घ्यपात्रेण प्रत्युद्गच्छन्तमप्यविगणय्य यतो महेश्वरानुग्रहपात्रभूतेन मया कृते शास्त्रेऽनुक्तदुरुक्तपुनरुक्तादिदुश्चिन्ताकुलेन त्वया वाक्यग्रन्थः कृतस्तेनापराधेन त्वमचिरात्पतिष्यसीति शशाप । सोऽपि तं यतो वाक्यग्रन्थं शंकरप्रसादपरिणामरूपमजानंस्त्वं मह्यमशपस्ततस्त्वच्छिरोऽप्यचिरात्पतत्विति शशाप । ततस्तत्रैवारण्ये तस्यामेव त्रयोदश्यां तिथौ पाणिनिर्गच्छन्केनचिद्व्याघ्रेण व्यापादितः कैलासं जगाम । तदुक्तं विष्णुगुप्तेन "सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान्पाणिनेर्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम् । छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलं ह्यज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः" इति पञ्चतन्त्रे मित्रप्राप्तिनामकद्वितीयभागे । यः पञ्चतन्त्रग्रन्थ आङ्ग्लपञ्चशतकात्परं नोत्पन्न इत्याङ्ग्लपण्डितानां सिद्धान्तविषयः । एवं कात्यायनोऽपि तस्यामेव तिथौ कैलासगमनाय देहं तत्याज । तं कालमारभ्य वैयाकरणास्त्रयोदश्यां व्याकरणशास्त्राध्ययनाध्यापनव्यवहारमत्याक्षुः । यत्कृतस्य वार्तिकग्रन्थस्य दुर्बोधस्य महाभाष्यं कार्यमिति श्रीशंकरः श्रीविष्णुमुखेन पतञ्जलिमाज्ञापया-

मासेत्यनुपदमेवोक्तम् । ततो भगवदनुज्ञामवाप्य तस्माच्छ्रीनटेश्वरनृत्तदर्शनाय चिदम्बरं गच्छेति शेषांशेन त्वमवतरेति चाज्ञप्तस्तं प्रणम्य निर्जगाम । ततस्स्ववार्तिकं पाणिनिव्याकरणं पाणिनिशिष्येण व्याघ्रभूतिना कात्यायनशिष्येण श्वोभूतिना चाऽध्यापनद्वारेण प्रकटितं जगद्विख्यातं च बभूव ।

एवं वेतसपुरनिवासिनः करम्भशर्म्मणस्तनूजो व्याडिरपि पाणिनिव्याकरणे संग्रहाख्यमतिविस्तृतं ग्रन्थमन्यान्बहून्ग्रन्थांश्चकार ।

ततो लोकानां राजाद्याश्रयमदमत्ततया, सांसारिकापारक्लेशबहुलतया, द्यूतादिदुर्व्यसनमग्नतया, राजचोराद्युपद्रवबाधाबाधिततया वेदवेदाङ्गाद्यध्ययनाध्यापनप्रचारेषु रविवदस्तमुपगतेषु पाणिनिकात्यायनव्याडिकृतेषु व्याकरणग्रन्थेषु नाममात्रावशिष्टेषु " हठादाकृष्टानां कतिपयपदानां रचयिता कविस्स्पर्द्धालुश्चेदहह कविना वश्यवचसा । भवेदद्य श्वो वा प्रकृतिकुटिले पापिनि कलौ घटानां निर्मातुस्त्रिपुरविजयिनश्च कलहः" इत्यभियुक्तोक्तरीत्या पामरचक्षुषां मोहभ्रमवदाचरमाणेषु सकलमहग्रन्थविप्लवनपटुतरकौटिल्यविषप्रोल्लसन्नवकलरावयक्षुरन्धरप्रबलपण्डितम्मन्यमुकुटकृतेषु व्याकरणाभासादिग्रन्थेषु खद्योतवदितस्ततो विजृम्भमाणेषु महाभाष्यरचनाय भगवदाज्ञप्तो भगवान्छेषः स्वावतरणयोग्यं स्थानमन्विष्यन्कंचिदुत्तमं तापसाश्रममद्राक्षीत् । ततः प्रविश्य तं गोनर्दंदेशा ( तीरा ) न्तर्गतमाश्रमं तत्र प्राज्ञपुत्रार्थं चिरात्तपस्यन्तीं गोणिकां सौशील्यादिगुणैः स्वमातरं विचिन्त्य समयमन्विष्यंस्तस्थौ । सा चार्घ्यदानाय तत्परिगृह्य यावत्तमभिदध्यौ सहस्रांशुं तावत्तेन प्रेरितोऽयमनन्तस्तद्धस्तधृतेऽर्घ्यजले प्राविशत् ।

ततस्सा तस्मै अर्घ्यमुपनिन्ये । तत्क्षणमेव तेनार्घ्यजलेन सह तापसाकृतिरहिर्बुबमाजगाम । दृष्ट्वा च तं नवार्कमिव शक्तिणं भयात्कोऽभवानिति पप्रच्छ । सोऽपि चातुर्येण सर्पोऽहमिति प्रत्युवाच । तथा तेन वाक्येन चित्रनहृदया सर्पोऽहमिति वाच्ये रेफं विहाय तथोक्तेः कारणं किमित्याशयेन रेफः क गत इति पृष्टः त्वयापहृत इति प्रत्यब्रवीदिति कंचित् ।

अन्ये तु पाणिनिनाऽन्येन केनचिन्मुनिना वाक्यं दत्तम् । तदेदं सर्वं वृत्तं समजनीति प्राहुः ।

ततस्तमर्कदत्तं पुत्रं मन्वाना मूर्ध्न्युपाघ्राय परमानन्दमवाप्य सर्वेषामपि तपःक्लेशानां विसस्मार । सोऽपि मातरं तां पतञ्जलिनाम्ना प्रणनाम । ततो महेश्वराराधनाय तपसे जिगमिषुर्मातरं मनसा यदा चिन्तयसि तदाऽऽगन्तेति बहुधा समाश्वास्य गत्वा च दक्षिणोदधितटं तीव्रं तपश्चचार । तेन तुष्टं सोमं वृषमारुह्य दर्शनपथमवतीर्णं प्रणम्य प्राञ्जलिः बहुधा स्तुत्वा कमलासनोक्तं सर्वं सविनयं विज्ञाप्य वाक्यग्रन्थस्य भाष्यनिर्माणे पाटवं, भगवन्नाट्यदर्शने योग्यतां च स्वयमभ्यर्थयते स्म । ततस्स चिदम्बरक्षेत्रे नटेशदर्शनं कुरु पाणिनिवाक्यभाष्यरचने सामर्थ्यं च ते भवत्विति वरं दत्त्वान्तरधात् । अथ स मुनिर्वेलातटारण्यपथेन चिदम्बरं चिदम्बरमिव स्थितं नटेशनृत्तदिदृक्षुभिस्संकीर्णं प्रविशन्नेव समाधिनैवैतत्प्रभावमभिजानता माध्यन्दिनकुलतिलकेन व्याघ्रपान्मुनिना दृष्टोऽर्घ्यपाद्यादिभिरुपस्कृतः तत्तपःकुशलं पप्रच्छ अज्ञानाच्च तदुक्त्या तत्कुशलम् । ततः पतञ्जलिर्व्याघ्रपदा गिरिशताण्डवसभामतिविचित्रां प्रविश्य यावदास्थितः तावत्कैलासाच्छ्रीमान्नटेशो वृषमुमया सहाधिरुह्याजगाम भक्तानु-

जिनृक्षया। आगतं च तं सर्वे प्रणिपत्य तन्नृत्यदिदृक्षां सविनयं व्यजिज्ञपन्। ततस्तत्तेऽवतीर्य सभामागच्छतानेन भगवता व्याघ्रपदा सह स्तवोन्मुखः पतञ्जलिर्दृष्टः स्वनृत्तं पश्येत्याज्ञप्तोऽन्यैस्सह तद्दर्शनयोग्यदिव्यदृष्टिदानेन संमानितश्च तैस्सहायमवाप्य दिव्यदृष्टिः तत्कटाक्षपातक्षणमात्रपरिगृहीतमर्द्दलादिकैस्सरस्वत्यादिभिश्शोभितं परमानन्देन नटेशस्य नाट्यमदृष्टपूर्वमपश्यत्। ततस्संस्तुतो नटेशः फणिपतिं पाणिनिवाक्यग्रन्थस्य महाभाष्यं निर्माय दिवं व्रजेत्याज्ञाप्यान्तरधात्। अथ तौ व्याघ्रपात्पतञ्जली यत्र स ननृते तत्र तत्प्रतिकृतिं लिलिखतुः। तदादि तच्चिदम्बरेशप्रतिकृतिदर्शनेनेदानीमपि कुटिले कलौ लोका निष्कल्मषा भूत्वाऽनुत्तमं पुरुषार्थमनायासेनो[illegible]न्ते। नटेशनृत्तं स्मारंस्मारमतीवचित्रीयमाणहृदयः पतञ्जलिर्लोकहितैषी प्रागुक्त[illegible] व्याकरणशास्त्रस्या[illegible]नवस्थानसहमानः "यद्विस्मृतमदृष्टं वा सूत्रकारेण [illegible]। [illegible]कारो ब्रवीत्येव तेन[illegible] च भाष्यकृत्" इत्युक्तलक्षणलक्षितं महाभाष्यं चकार। [illegible] अन्यथात्वेन [illegible] इति केचित्। तदा तत्पिपठिषुभिर[illegible] प्रणिपत्य प्राञ्जलि[illegible] पतञ्जलिना मया जवनिकाभ्यन्तरस्थेन यूयं [illegible]। तदा जवनिकाभ्यन्तरस्थोऽहं केनापि कदापि न द्रष्टव्यः। यदि यः कोऽपि [illegible] भवतीति [illegible]। अथ तेऽस्य समयमतिसुकरमित्यङ्गीकृत्य तिरस्करिणीं [illegible]न्तरे उपविष्टात्सहस्र[illegible]तादादिशेषात्तस्माद्बहिरुपविष्टैश्शिष्यै[illegible] [illegible]शद्दिनान्यथ च द्वात्रिंशदाह्निकान्यधिजगिरे। स्वीयदौर्भाग्यात्त्रयस्त्रिंशत्तमे दिवसे [illegible]न्तस्थस्य "वामरूपो स्वयाम्" ( ३–१–९४ ) इति सूत्राद्व्यवहितस्य "कृ[illegible]" इति सूत्रस्याध्ययनदिवसे वा "कृदतिङ्" इत्येतत्सूत्रमहाभाष्यमधीत्यान्ते कथमेतावत्[illegible]ष्वस्मासु प्रतिपुरुषमयं बहुभिराननैः युगपत्पाठयति। कति वा मुखान्यस्य सन्ति। [illegible]त्याश्चर्यवद्रूपं द्रष्टव्यमेवेति निश्चित्य तिरस्करिणीमपनिन्युः प्रदेशान्तरम्। तामपनीय [illegible]फणासहस्रमण्डलमण्डितमुग्रदंष्ट्रं द्रष्टुमयतंत ते, तावदेवास्यप्रविषज्वालया भस्मीबभूवुः। पतञ्जलिरपि धृतजटिलमनुष्यमूर्तिः कथमेतदिति यावदचिन्तयत्तावद्बाह्यप्रदेशादागच्छन्तं कञ्चन शिष्यं ददर्श। सोऽपि शिष्यः दृष्ट्वा तांस्तादृशान्सब्रह्मचारिणो भीत्या साष्टाङ्गं प्रणम्य [illegible] जलोत्सर्जनाय गतं तावदेतैरपराद्धं तत्फलं चानुभूतम्। तदिदं तेषां दौर्भाग्यम्। [illegible]हमपराधी तथापि क्षन्तव्योऽहं प्रसीद मह्यमिति बहुधा प्रार्थयामास। श्रुत्वा च [illegible] पतञ्जलिः पाठारम्भे शान्तिपाठमकृथाः। अन्ते तु शान्तिपाठमकुर्वाण एव यतो बहिर्गतस्ततस्त्वं राक्षसस्स्या इति तं शशाप। तेनैवमतिप्रबलशापशतेन स फणिपतिर्बहुधा स्तुतिभिः स्तूयमानः प्रसन्नो भूत्वा शापेनानेन विषादं मा भजतु। यत्र त्वयोष्यते तत्र यः कोऽप्यागच्छेत् स सर्वोऽपि पचेर्निष्ठायां किं रूपमिति त्वया प्रष्टव्यः। यः पक्वमिति प्रत्युत्तरयति तेन त्वया मदीयमहाभाष्यकृतिरध्याप्या। एवं तदध्यापनेन त्वं शापान्मुच्यसे। किं च मदनुग्रहान्मदीयं महाभाष्यं सर्वं ते स्फुरत्विति शापमुक्तिकालसूचनवरप्रदानाभ्यां पतञ्जलिस्तं प्रसाद्यान्तरधात्।

ततः फणिपतिना योगशास्त्रे सूत्रात्मकः पादचतुष्टयैः वैद्यशास्त्रे वार्तिकात्मकः ग्रन्थश्चेत्युभयमपि कृतम् । वैद्यशास्त्रे चरकग्रन्थोऽनेन रचित इति तु लोकप्रवादः इति केचित् । एवं—लोकानां मनोवाक्कायदोषनिरासाय ग्रन्थत्रयं कृत्वा महाभाष्यं विनान्यौ स्वयमेवाध्यापनेन प्रचारयामास । तदेतदुक्तं कैयटेन महाभाष्यव्याख्याने प्रदीपे मङ्गलश्लोके "योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन ।योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि" इति ॥ ततः गोनर्ददेशं ( गोनर्दतीरं ) प्राप्य गोणिकां स्वजननीं नमस्कृत्य किञ्चित्कालाभ्यन्तरे तस्यां सुरलोकपथमवतीर्णायां ततोऽभितष्ठौ ।

अथ पतञ्जलिशिष्यो ब्रह्मराक्षसोऽपि ततो निर्गत्य मार्गे वटमेकमारुह्य गुरूपदिष्टरीत्या पचेःक्ते किं रूपमिति पथिकान्पृच्छन्पक्तमिति प्रतिवदतस्सर्वानप्यभक्षयत् । एवं बहुतिथे काले व्यतिक्रान्तेऽन्यं कञ्चन पथिकमागतं दृष्ट्वा यथापूर्वमपृच्छत् । स चैनं राक्षसं पक्वमिति प्रत्युत्तरेणाभ्यनन्दयत् । सोऽपि राक्षसश्शापमोक्षकालं सन्निहितं मन्वानस्तस्माद्वृक्षादवतीर्य—कस्त्वं, कस्मादागतः, किमागमनप्रयोजनम् । अधीतपाणिनिव्याकरणशास्त्र इव दृश्यसे । महाभाष्यं त्वामध्यापये यदीच्छसि, तद्वदेति पप्रच्छ ।सोऽपि--अहं चन्द्रगुप्तो नाम द्विजः । उज्जयिन्यास्त्वत्तो महाभाष्यमध्येतुमेवाऽऽगममिति प्रत्यवोचत् । ततो ब्रह्मराक्षसो मासद्वयमनश्नन्संविशन्छुचिर्भूत्वा संपूर्णं महाभाष्यं तमध्यापयति स्म । चन्द्रगुप्तोऽपि ततोऽधीतं सर्वमपि तन्महाभाष्यं कोमलवटपत्रेषु नखाग्रेण यथावद्व्यलिखत् । तदा सोऽपि विकृतं स्वराक्षसरूपमपहाय दिव्यरूपमासाद्य भुव्येतद्ग्रन्थप्रचारं कुर्विति तमाज्ञाप्य दिवमगमत् । स शिष्योऽपि वस्त्रेण बद्धं वटदललिखितं तत्पुस्तकं गृहीत्वोज्जयिनीं प्रतस्थे । पथि गच्छन्नध्ववर्त्मेनातपोष्मणा तृषया चातीव श्रान्तः कस्मिंश्चित्सरित्तटे वृक्षमूले पुस्तकभारमवतीर्य नित्यकर्माणि निर्वर्त्य जलं निपीय तं पुस्तकभारमेवोपधानीकृत्य निदद्रौ । तत्र यावत्कश्चिद्वत्स आगत्य जिघ्रसिषया तत्पुस्तकवटपत्राणि कानिचिन्मुखेन चकर्ष, तावदयं प्रबुध्य हाहाकारपुरस्सरं तन्मुखात्तानि यथालाभमाचकर्ष । अजोऽग्रसीदिति तु क्वचित्प्रसिद्धिः। ततस्सिन्धुतटे प्रतिष्ठितं तद्भक्षणेन खिन्नं बुभुक्षितं तं तुरीयवर्णा कुमारी काचिद्वीक्ष्य 'दण्डवद्भूमौ प्रणम्येदं नवनीतं भक्षय श्रान्तोऽसीत्युक्त्वा स्वहस्तधृतं नवनवनीतभाजनं तस्मै समर्प्य सविनयं साञ्जलिबन्धं जगाद । हे २ महानुभाव विद्वन्मुकुटमणे तपःप्रसन्न व्यतीतेषु दिवसेष्वत्र तदातदा समागतास्तपोवना मया यथाशक्ति यथामति फलपर्णाम्बुदानाद्युपचारैरुपचरिताः प्रसन्नमनसः हे २ कुमारि कश्चिद्युवा पतञ्जलिशिष्याद्ब्रह्मराक्षसादधीतनिखिलमहाभाष्यो लोकेषु स्वीयमहाभाष्यप्रचाराय गृहीतद्विजशरीरोऽपरः पतञ्जलिरिवागच्छति । तं युवानं प्रणम्य पूजयस्वार्घ्यपाद्याद्युपचारैः । ततस्स प्रसन्नस्त्वां परिणेष्यतीति मां प्रसादयांचक्रुः । ततस्तमेव ध्यायन्ती तदागमनमेव सदा प्रतीक्षमाणा त्वाममिततेजसं तमेवागतं मन्ये इत्युक्त्वा विरराम । ततस्स समाधिदृष्ट्या सर्वं तद्विज्ञाय प्रसन्नस्तात्कालिकं नित्यं कर्म निर्वर्त्य तन्नवनीतमुपभुज्य तदिङ्गितज्ञो वर्णक्रमेण तिस्रो भार्या उद्वह्य त्वामुद्वक्ष्येयमित्यवदत् । ततस्स तद्गृहं गत्वा स्वयमेव तन्मात्रा दत्तया तया सह स्वपुरीमुज्जयिनीं गत्वा वर्णक्रमेणानया सह

चतस्रो भार्या उदूह्य गृहस्थधर्मे स्थितो वटपत्रलिखिते महाभाष्यपुस्तके वत्स ( अज ) भक्षितेन वियोजितान् ग्रन्थान्पर्यालोच्य गुरूपदिष्टमर्थं स्मृत्वा स्मृत्वा च प्रायः यथामति समीचकार। यत्र त्रपाटवमासीत्तत्र ग्रन्थपातसूचिकां कुण्डलनां ( ० ) समकरुपयच्च । तदुक्तं महाराजाधिराजेन श्रीहर्षेण महाकविना नैषधकाव्ये—"फणिभाषितभाष्यफक्किका विषमा कुण्डलनामवापिता" ( सर्गे २ श्लो. ९५ ) इति कुण्डलनां विलिख्य तदभ्यन्तरेऽजभक्ष इति व्यलिखदिति केचित्। एवं स तद्यथाबुद्धिबलं समीकृत्य नियमेन तन्महाभाष्यस्य पाठप्रवचनाभ्यां तिसृभिर्द्विजदारैर्यज्ञान्निर्वर्तयन्कालं यापयामास। ततः कदाचिद्वसन्तसमये चतस्रोऽपि भार्या रममाणस्यास्य गर्भमादधुः । ततस्स यथाकालं यथायोग्यं पुंसवनादीनि कर्माणि निर्वर्तयांचकार । ततस्ता उचितेषु समयेषु चतस्रोऽपि दीप्ततेजसः एकैकक्रमेण चतुरः पुत्रानसोषत। यथाकालं स द्विजवरस्ताञ्जातकर्मणा संस्कृत्य वर्णक्रमेण वररुचिर्विक्रमार्को भट्टिर्भर्तृहरिरिति नामभिराहूयोपनीय त्रीन्साङ्गोपाङ्गांश्चतुरो वेदानध्याप्य महाभाष्यमध्यजीगपत्।

ततो भर्तृहरिस्तुरीयासूनुर्महाभाष्यं पिपठिषुस्तच्छिष्यैः स्वभ्रातृभिरनधिकारीति निवारितो रहः पितुरन्तिकमुपेत्य प्रणिपत्य सविनयं भुवोऽन्तरे किंचित्कुहरमकुतोभयं विरचय्य तत्र भवता महाभाष्यमध्येष्यमाणो कैरप्यविज्ञातः पूर्णमनोरथस्स्यामिति स्वाशयं प्रकाशयांचकार। ततश्चन्द्रगुप्तद्विजोऽपि स्वतुरीयभार्यासुतगिरममृतोपमामाकर्ण्य तुरीयासुतस्य वेदवेदाङ्गाध्ययनाध्यापनयोर्निमित्तविशेषमन्तरा नाधिकारो भवितेति तमादिदेश । सोऽपि तदर्थं वैराग्यमङ्गीकृत्य तथाभूतं तं महाभाष्यमध्याप्य तेषां पुत्राणां विवाहमपि कारयामास। ततस्स चन्द्रगुप्तो विरक्तो भूत्वा ततो निर्गत्य शुकशिष्यस्य गौडपादाचार्यस्यानुग्रहेण तुरीयं गृहनीयं पारमहंस्यमाश्रममङ्गीकृत्य गङ्गातीरेण काशीक्षेत्रे प्राप्य तत्र कांश्चिदनेहसो नीत्वा गङ्गाविश्वेशौ सेवमानोऽन्यैः सह योगिवरिष्ठैर्बदरिकाश्रमं प्राप्य चिरमद्वैतामृतमहाम्बुधिक्रीडाविहरणविस्मृतसर्वलोकचरितः श्रीगोविन्दभगवत्पादनाम्ना प्रतीतोऽधितष्ठौ।

अथ पितरि तुरीयमाश्रममाश्रित्य गतवत्यपि वेदशास्त्राभ्यासजन्यविवेकवत्तया, कालकर्मस्वभावज्ञतया, तद्विरहदुःखं सेहे तत्पुत्रैः । ततः प्रथमो वररुचिर्गणितेष्वेव बहून् ग्रन्थानिकार्षीत् । अनेनायं न पूर्वोक्तकात्यायनापरपर्यायो वररुचिरिति ज्ञायते। तेन तु कल्पसूत्राणि, गृह्यकारिकाः, स वार्तिकग्रन्थः, वाक्यकरणाख्यो यो वाक्यपञ्चाङ्गनाम्ना मद्रासुराज्ये प्रसिद्धस्य पञ्चाङ्गस्य मूलभूतः तथान्येऽपि कथासरित्सागरादयो बहवो ग्रन्थाः कृता इति प्रागुक्तं न विस्मर्तव्यम्। द्वितीयो विक्रमार्कः नाट्यविद्याविशारदः इन्द्रेण कदाचिन्नाट्यविवादे निर्णेतृपदमधिष्ठितस्तत एवैकमुपलभ्य मणिखचितमासनम् ( सिंहासनम् ) अध्यास्य ( तदीयाशिषोपायान्तरेण च षण्मासोत्तरैकाधिकद्विसहस्राब्दान् ) तृतीयेनानुजेन स्वसाचिव्यपदमधितिष्ठता भट्टिना सह राज्यं परिपालयामास। अथ राज्यकार्याद्विश्रम्यारण्ये ( षण्मासाधिकद्विसहस्राब्द ) कालं यापयित्वा दिवं जगाम। यदा राज्यकोशादिषु विरक्तोऽयमरण्याश्रममविक्षत्तदा भट्टिस्तदनुजस्तदग्रजविक्रमादित्यराजनाम्ना राज्यं

परिपालयामास । यदा भट्टिस्स्वाग्रजराज्यपरिरक्षणोन्मुखस्तदा भर्तृहरिः स्वतृतीयाग्रजनाम्ना सुशोभितं व्याकरणशास्त्रलक्षणलक्षितसुपदगुम्फैरलंकृतं भट्टिकाव्यं नाम ग्रन्थमाततान, श्रीमद्दाशरथिचरितसुमनोहरम् ।

तथा स एव शतकत्रयाख्यं ( नीतिशतकं, शृङ्गारशतकं, वैराग्यशतकं चेति ) ग्रन्थमकरोत् । योऽयमिदानीं भर्तृहरिशतकत्रयनाम्ना जागर्ति ।

यदा कालवशेन प्राप्तैर्विघ्नविशेषैरध्ययनाध्यापनादिप्रचारः समूलमुन्मूलितो दाक्षिणात्येष्वेव क्वचित्पुस्तकमात्र एव पाणिनिव्याकरणकात्यायनवार्तिकमहाभाष्यादिग्रन्था विशश्रमुश्च । किं च चित्रकूटमधिवसता केनचिन्नारायणनाम्ना विदुषा तन्महाभाष्यं ततो विलिख्य रक्षितमासीत् । तदा कश्चित् ( ब्रह्मराक्षसः ) तन्महाभाष्यपुस्तकमानीय वसुरातादिभ्यो ददौ । यैर्विक्रमादित्यज्येष्ठभ्रातरं भर्तृहरिमन्यांश्च बहूनि शास्त्राण्यध्यापयद्भिर्जीर्णं तच्छास्त्रमुद्धृतम–भूदिति केचित्।

ततो भर्तृहरिः स्वपितृचन्द्रगुप्तद्विजलिखितवत्स( अज ) भक्षितावशिष्टवटपत्रस्थमहाभाष्यग्रन्थे पौर्वापर्यपर्यालोचनया वत्स ( अज ) भक्षितग्रन्थांशमवगत्य पत्रान्तरेषु तान्विलिख्य समीकृत्य जीर्णं तन्महाभाष्यं समुद्धृत्य सपादलक्षकारिकाभिर्महाभाष्यकारतात्पर्यार्थावबोधकं ब्रह्मवाक्यपदभेदेन काण्डत्रयात्मकं वाक्यपदीयाभिध महाभाष्यव्याख्यानं चकार । यद्धेलाराजपुञ्जराजपण्डितकृतटीकाभ्यां संशोभते स्म । काश्यामिदानीं मुद्रितं तदिति तु भ्रमः। लघुत्वात्।

ततो भर्तृहरिर्वाक्यपदीयमेवं संग्रथ्य "अहो भाष्यमहो भाष्यमहो वयमहो वयम् । मामदृष्ट्वा गतस्स्वर्गमकृतार्थः पतञ्जलिः "इति गुर्वधिक्षेपकगर्वदुर्भरेण स्वीयदुर्भाषणदुष्परिपाकेन स्वीयमेनं महानिबन्धमप्रतिष्ठापदमारोहयामास। एतदीयगुर्वधिक्षेपकदुरुक्तिमसहमानैस्तात्कालिकैर्विद्वद्भिरयं ग्रन्थोऽध्ययनाध्यापनपथमनापादित इति यावत् । अत एवेदानीं प्रायः स ग्रन्थो दौर्लभ्यपदवीमवापेत्यस्मदीयं दौर्भा ( सौभा )ग्यम् । एवमेतैश्चतुर्भिश्चन्द्रगुप्तद्विजपुत्रैरुज्जयिन्यां कलियुगं कृतयुगायितमिति वदन्ति ।

( अत्र केचित् )–विक्रमार्कसमयात् ८४५ पञ्चचत्वारिंशदुत्तराष्टशतीमितेषु, अथवा कले–३८८८ रष्टाशीत्युत्तराष्टशत्यधिकत्रिसहस्रेषु,–वर्षेषु व्यतीतेषु तदुत्तरे विभववर्षे वैशाखमासे शुक्लपक्षे दशम्यां केरलदेशे कलापीग्रामे शिवगुरुशर्मणो भार्यायां सतीनाम्न्यां श्रीशङ्कराचार्यः पुत्र उदियाय । तदाहुर्वृद्धाः–"विधिनागेशवह्न्यब्दे ३८८८ विभवे मासि माधवे । शुक्लपक्षे दशम्यां तु शङ्करार्योदयस्स्मृतः" इति । कलेरिति शेषः । तथैव लोकप्रवादादित्याहुः । अन्ये शङ्करमन्दारसौरभे नीलकण्ठभट्टात्तु–"प्रासूत तिष्यशरदामतियातवत्यामेकादशाधिकशतोनचतुस्सहस्र्याम् ३९११ " इति । तिष्यशरदां कलिवर्षाणामित्यर्थ इत्याहुः । अपरे तु विक्रमार्कसमयात्परस्मिन् ११९० सार्द्धशताधिकसहस्रतमे वर्षे गुर्जरनृपो जयसिंहनामासीत् । तदानीं श्रीपत्तनवासिनो देवसूरिनाम्नो जैनाचार्यस्य शिष्यो माणिक्याभिधः पण्डितो बभूवेति मेरुतुङ्गाचार्यकृतप्रबन्धचिन्तामणिग्रन्थतो ज्ञायते । स माणिक्यपण्डितः स्वकृतकाव्यप्रकाशटीकायां सङ्केताभिधायां द्वितीयोल्लासे कुमारिलभट्टाचार्य

स्वोक्तार्थे प्रमाणयाञ्चकार । कुमारिलभट्टाचार्यशङ्कराचार्ययोः प्रयागक्षेत्रे समागमः संमजनीति शङ्करदिग्विजये स्पष्टम् । तस्माच्छ्रीशङ्कराचार्यदेशिकचरणानामपि स एव समय इत्याहुः॥ आङ्ग्लदेशीयाङ्ग्लपण्डितास्तु आङ्ग्लाष्टमशके ( सन् ८०० ) तेषां स्थितिं न्यरूपयन् । आङ्ग्लविद्यानिपुणास्तैलिङ्गोपपदा मोहमय्यां प्राड्विवाकपदमधिष्ठिताः काशीनाथपन्तास्तु आङ्ग्ले षष्ठे शके ( सन् ६०० ) श्रीशङ्कराचार्याणां स्थितिं वर्णयाञ्चक्रुः मुद्राराक्षसनाटकप्रस्तावनायाम् । यदा श्रीशङ्कराचार्यः उपनयनोत्तरं जन्मतोऽष्टमे सप्तमे वा वयसि कदाचित्स्नातुं पूर्णानदीमवतीर्य नक्रगृहीतपादोऽभूत्, तदा स्वस्य जन्मान्तरप्राप्तिसमयमुपस्थितं मन्वानः संन्यासपरिग्रहं जन्मान्तरं निश्चित्य तत्र जले स्थितस्सन्नेव तत्र स्थितायै स्वमात्रे संन्यासेनैव स्वस्य ग्राहविनिर्मोकं विनिवेद्य तदनुमत्या संन्यासं परिगृह्य ग्राहग्रहान्मुक्तः । उपर्यागत्य तत्रातीव खिन्नां तां प्रणम्य सम्मान्य तदनुज्ञामवाप्य च गुर्वनुग्रहं कामयमानः तदातिप्रसिद्धतरं श्रीगोविन्दभगवत्पादमेव योग्यं देशिकं मत्वा तद्दर्शनाय बदरिकाश्रमं प्रतस्थे॥

प्रस्थाय च क्रमेण बहून्देशानतिलङ्घ्यास्तमयं गतवति भगवति भास्वति वाराणसीं प्रविवेश । तत्र रात्र्यां विश्वेशमद्वितीयं ब्रह्म ध्यायन्विचित्रैर्बहुभिः स्तवैः तुष्टाव । तेन प्रसन्नो भगवांस्तस्मै ब्रह्मसूत्रभाष्यनिर्माणशक्तिं वरमादिदेश । एवं वरमुपलभ्य प्रातरेव ततो निर्गत्यास्ताचलं प्रविशति निशापतावुदयाचलमधिरूढे च चित्रभानावादित्ये तत्र हिरण्मयं पुरुषमभिध्यायन्पथिकैः सह गच्छंस्तत्र तत्र पथि यथाकालं फलादीन्यभ्यवहरन्पयांसि पिबन्नुपविशन्नुत्तिष्ठंश्च क्रमेण बदरिकाश्रममाससाद । यत्र प्रादेशमात्रविवरद्वारां तत्रत्यैः महर्षिभिः कथितां श्रीगोविन्दभगवत्पाददेशिकवरिष्ठस्यावासस्थानगुहामतिकौतूहलेन ददर्श । ततस्तां त्रिः प्रदक्षिणीकृत्य द्वारमागत्य प्रणिपत्य देशिकवरिष्ठमनन्यसाधारणैरभाकृतैस्स्तवैस्तुष्टाव । ततस्तेन समाधेरुपरम्य कस्त्वमिति पृष्टः "स्वामिन्नहं न पृथिवी न जलं न तेजो न स्पर्शनो न गगनं न च तद्गुणा वा । नापीन्द्रियाण्यपि तु विद्धि ततो विशिष्टो यः केवलोऽस्ति परमः स शिवोऽहमस्मि" इति स्वीयं परमाद्वैतस्वरूपं विज्ञापयामास ॥

तदिदमाकर्ण्य ज्ञात्वा च तदवतारकारणादिकं परमानन्दतुन्दिलः स त्वां समाधिनावतीर्णं शंकरं जानामीत्युक्त्वा स्वचरणाम्बुजे प्रदर्श्य तेन पूजितो गुरुरौपनिषदं तत्त्वमस्मै आचर इत्युपदिदेश । ततः श्रीशङ्कराचार्यदेशिकवरिष्ठःश्रीगोविन्दभगवत्पाददेशिकवरिष्ठं चिरायोपचरंस्तत्रैव तस्थौ । ततः कस्मिंश्चित्समये श्रीगोविन्दभगवत्पाददेशिकवर्यो विदेहमुक्त्या निजमहिमाभेदमुपजगाम । ततः श्रीशंकराचार्यदेशिकवर्योऽद्वैतब्रह्मसूत्रभाष्यं विरचय्य ततः प्रस्थाय तत्र तत्र प्रतिद्वन्द्विनः पाषण्डादीन्वादैर्विजित्य तन्मार्गप्राबल्येन नष्टप्रायान्वैदिकमार्गान् षण्मतानि च यथावदतिप्रयासेन संस्थाप्य सर्वत्र सर्वैर्जगद्गुर्वादिबिरुदावलिभिस्स्तूयमानो काञ्चीपुरीमधिवसति स्म। अनेनाचार्यवर्येण स्वकृते "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" (३–२–३) इति ब्रह्मसूत्रभाष्ये–"कालविसंवादोऽपि च स्वप्ने भवति–रजन्यां सुप्तो वासरं भारते वर्षे मन्यते" इत्युक्तम् । "अत्र रात्रिसमयेऽपि केतुमालादिवर्षान्तरे वासरो भवति " इत्येतद्भा-

व्यव्याख्यायां रत्नप्रभायां श्रीगोविन्दानन्दैरुक्तम् । एवं चाचार्याणाममरिकादिदेशान्तरादिज्ञानमासीदित्यनुमीयते इत्यन्यदेतत् ।

ततस्तदातन्न स बहून्महतो लघूंश्च निबन्धान्निबबन्ध । एवमाचार्यः पीठाधिपोऽपि भूत्वा अन्मत आयुषा द्वात्रिंशत्तमे वयसि विदेहमुक्तोऽभूदित्यलं पल्लवितेन ।

तेऽपि वररुच्यादयश्चत्वारो भ्रातरः स्वगुरुश्रीगोविन्दभगवत्पाददेशिकानां सिद्धिमाकर्ण्य तदा स्वकर्तव्यं सर्वं कर्म निवर्त्य विद्याकीर्तिविनयादिभिः सम्पन्ना उज्जयिन्यां विरेजिरे इत्याहुः ॥

परे त्विदमुत्सन्नं महाभाष्यं श्रीमच्छङ्कराचार्यदेशिकभगवत्पादाः पातालं प्रविश्य तत्रादिशेषमुखात्तन्महाभाष्यमधीत्य भूमण्डलमागत्य भर्तृहर्यादिभ्यः सयोगशास्त्रं महाभाष्यमुपदिदिशुः । तदुक्तं शङ्करविजये—"उरगपतिमुखादधीत्य साक्षात्स्वयमवनेर्विवरं प्रविश्य येन । प्रकटितमचलातले सयोगं जगदुपकारपरेण शब्दभाष्यम्" इति । किं चायं भर्तृहरिर्न शूद्रापुत्र इत्यनेन ज्ञायत इत्याहुः ॥ केचित्त्वयं पतञ्जलिर्योगसूत्रकृतोऽन्य एव । यत एकस्मिन्नेव विषये "एतेन योगः प्रत्युक्तः" ( व्या. सू. । २ । १ । ३) इति दूषणं, पुनस्तत्रैव विषये तदानुकूल्येन भाष्यकरणं च सर्वज्ञस्य व्यासस्य न युज्यते ॥ किं च योगभाष्यकारो व्यासः पतञ्जलितोऽर्वाचीनः । "पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः" इति ब्रह्मसूत्राणां चतुरध्याय्यात्मकानां व्यासकृतानां भिक्षुसूत्रपदेन व्यपदेशात् । पाणिनिना " वासुदेवार्जुनाभ्यां–" "एजेः खश्" "नखमुखात्संज्ञायाम् " "शरद्वच्छुन–" "कलापिवैशम्पायनान्तेवासिभ्यश्च" "कलापिनोऽण्" इत्यादिसूत्रेषु पाणिनितोऽपि प्राचीनानां भारतरामायणादावुक्तानां नाम्नां साक्षात्क्वचिद्गणेषु वानुवादेन पाणिनेः व्यासतत्कृतमहाभारताद्यपेक्षयोत्तरकालिकत्वस्य निर्णेतुं शक्यत्वात् । अन्यच्च पाणिन्यपेक्षया पूर्वकालिकेन व्यासेन योगभाष्यकरणात्तदानीं पतञ्जलिसत्त्वे प्रमाणाभावाद्राजसूये ( सभाराजे ) त्यत्र चन्द्रगुप्तसभेत्युदाहरणेन पतञ्जलेर्महाभाष्यकारस्य चन्द्रगुप्तोत्तरकालिकत्वमिति तदा व्याससत्त्वे मानाभावात्पतञ्जलिभेद एव युक्त इति दिगित्याहुः ।

अन्ये तु "योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन ।योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि" इति पतञ्जलेर्महाभाष्ययोगसूत्रचरक (वैद्यवार्तिक) ग्रन्थकर्तृकत्वस्य कैयटेन महाभाष्यव्याख्यानप्रदीपारम्भे मङ्गलश्लोके उल्लेखादुभयोरेक एव कर्तेति प्रतीयते । न च क्वचिन्मुद्रितपुस्तकेष्वयं श्लोकस्तत्र ग्रन्थे नोपलभ्यत इति तन्त्रितयकर्तृकत्वं निर्मूलमिति वाच्यम्। दाक्षिणात्यपुस्तकेषु सर्वत्र काशीस्थेष्वपि केषुचित्पुस्तकेषु लिखितेषु तदुपलम्भात्साहसेन तदपलापस्य कर्तुमशक्यत्वात् । किं च पतञ्जलिचरिते तथैवोक्तम् । योगसूत्रभाष्यकर्त्ता व्यासोऽन्यः, ब्रह्मसूत्रकर्त्ता व्यासोऽन्यः, पुराणभारतादिकर्त्ता व्यासोऽन्यः, इति व्यासभेदाङ्गीकारस्यैव युक्तत्वाच्च। अतएव स्वस्य ब्रह्मसूत्रयोगसूत्रभाष्यकर्तृत्वमष्टादशपुराणभारतकर्तृत्वेनोट्टङ्कनमिव कुत्रापि पुराणेषु नोट्टङ्कितम् । न च भागवते " जन्माद्यस्य यतः " इत्युल्लेखोऽस्तीति वाच्यम् । अन्यकृतस्यानुवादमात्रेणापि तदुपपत्तेः । अतीता व्यासास्त्वष्टाविंशतिरिति चतुर्दशेति च पुराणेषु बहुशउल्लेखाच्च । पुराणभेदेन व्यासपदाधिकृतानां परस्परं वैजात्येन क्वचित्साजात्येन च भेदोक्तेरष्टाविंशत्यपेक्षयाऽऽधिक्यमिति त्वन्यदेतत् । न च विभीषणद्रोणवासुदेवार्जुना-

दिशब्दप्रयोगाद्धारतोत्तरकालिकत्वं पाणिनेरेति ततोऽप्यर्वाचीनत्वं पतञ्जलेरिति वाच्यम् । "जातस्य पुत्रस्य दशमेऽहनि पिता नाम कुर्याद्घोषवदाद्यन्तरन्तस्थं त्रिपुरुषानूकम् " इति कल्पसूत्रकारोक्तेस्तत्तत्कुलेषु त्रिपुरुषानुवचनस्यैव नाम्नः कर्त्तव्यतोक्त्या तत्तत्पूर्वद्रोणाद्यभिप्रायेणापि तदुपपत्तेः । एतेन "माणवेचरकाभ्यां खञ्" इत्युक्तेश्चरकस्य पाणिनिपूर्वकालिकत्वेन पतञ्जलिकर्तृकत्वे प्रमाणाभाव इत्यपास्तम् । सूत्रे चरकशब्दस्य ग्रन्थवाचकत्वे प्रमाणाभावाच्च। न च वासुदेवार्जुनाभ्यामित्यादौ वासुदेवशब्दस्यार्जुनशब्दस्य च वसुदेवापत्यादिभिन्नवाचकस्यापि ग्रहणान्न दोष इति वाच्यम् । "वासुदेवार्जुनाभ्याम्" "पाण्डोर्ड्यण्" "गवियुधिभ्यां स्थिरः" इत्यादौ रामलक्ष्मणावित्यत्रेव साहचर्येण पार्थ एवार्जुनस्तत्सारथिरेव वासुदेव इत्यादिरीत्या पाण्डवोत्तरकालिकत्वं पाणिनेस्सिध्यतीत्यर्थस्य वक्तुं शक्यत्वात् । अत एव "विपराभ्यां जेः" इत्यत्र पक्षिवाचकविशब्दस्य परा सेना जयतीत्यादिप्रयोगस्थश्रेष्ठार्थकपराशब्दस्य च न ग्रहणम् । किं तूपसर्गेषु दृष्टसाहचर्ययोरेवोपसर्गयोर्ग्रहणमित्यादि तत्रतत्रोक्तं संगच्छते । किंच त्वदुक्तरीत्या पाणिनिसमये वासुदेवार्जुनयोरभावेन तत्साहचर्यं वक्तुमशक्यमेव । नाम्नो नियामकस्य कल्पसूत्रस्य पाणिन्युत्तरकालिकत्वाच्च । यतः सूत्रेषु पाणिनिसंकेतितकृत्तद्धितघोषान्तस्थादिशब्दा दृश्यन्ते । न च लौकिकेषु वैदिकेषु सर्वेषु तदङ्गोपाङ्गादिषु च प्रयोगेषु विद्यमानानां सिद्धानां शब्दानामिदमन्वाख्यानमिति महाभाष्योक्तरीत्या व्याकरणेनानुशासनात्पाणिनेस्तदुत्तरकालित्वमिति वाच्यम् । "कृदन्तेभ्यः" "घिन्निकृण्व्योरच" इत्यादौ पररूपकरणादचेत्युक्तेश्च पाणिनेः कात्यायनपतञ्जलिकालोत्तरकालिकात्वापत्तेः । कृतकरिष्यमाणयावद्ग्रन्थोत्तरकालिकत्वस्याप्यापत्तेश्च । तस्मात्पाश्चिमात्य ( पाश्चात्य ) पण्डितवर्येण (म्याक्सिमोलर),इत्यनेनाङ्ग्लशकारम्भात्प्राग् ( ८०० ) अष्टशततमस्य वर्षस्य तच्छकारम्भात्प्राक्( ६०० ) षट्शततमवर्षस्य चाभ्यन्तरकालेषु कल्पसूत्राणामुत्पत्तिः । एवं च कल्पसूत्राणामिदानीन्तनाङ्ग्लैकोनविंशतिशतकान्तिमवर्षात्पूर्वमितः पञ्चशतोत्तरद्विसहस्रवर्षाणामितः सप्तशत्युत्तरद्विसहस्रवर्षाणाञ्चाभ्यन्तरे काले प्रणीतत्वात्पाणिनेः प्रागुक्तरीत्या नन्दराजराज्यकालिकोपवर्षपण्डितशिष्यत्वेन निरूपणात्कलेः सप्तत्युत्तरषट्शताधिकसहस्रवर्षोत्तरं शतवर्षेषु नन्दानां राज्यकाल इत्यर्थस्य च वक्ष्यमाणत्वात्स एव कल्पसूत्रप्राक्कालिकत्वसमयः पाणिनेरित्येव युक्तम् । "वासुदेवार्जुनाभ्याम्–"इत्यादावतिप्रसङ्गव्यावृत्तिस्तु तत्तद्देशकालेषु ये ये यथा यथा प्रसिद्धास्त एव तत्तच्छब्देन ग्राह्याः नान्य इत्यभिप्रायेण महाभाष्यकृता "गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः" इति न्यायः स्वीकृत इत्याहुः ।

## एवं भर्तृहरिविषयेऽपि किंचिद्विचारयामः ।

यत्तु विक्रमादित्यः चन्द्रगुप्तद्विजपुत्रो राज्यमवापेति तदयुक्तम् । कुतः । चन्द्रगुप्तस्य महाभाष्याध्ययनाय गमनसमये राज्यमासीन्न वा ( आद्य ) राज्ञोऽस्य बहुभृत्यस्य भाष्याध्ययनोत्तरमागमनसमये स्वशिरसि पुस्तकभारवहनं मार्गे आहाराद्यभावेन श्रमः,शूद्रासकाशान्नवनवनीतस्य ग्रहणं, निद्रया सुप्तस्य वत्सैः ( अजैः ) पुस्तकभक्षणं चेत्यादिकं हास्यास्पदमेव स्यात् । ( अन्त्ये ) तस्य राज्याभावेन पुत्रेण विक्रमादित्येनापि राज्यं कुतोऽपि न कथमप्युपलब्धमिति तस्य राज्यपरिपालनवर्णनमयुक्तं स्यात् । केवलं सिंहासनमेवेन्द्रेण दत्तं,नतु राज्य.

मपि तस्मै दत्तमित्यस्य प्रसिद्धत्वाच्च। तस्मादयं विक्रमादित्यः शककर्ता प्रसिद्धः चन्द्रगुप्तपुत्र इति वर्णनं भ्रान्तानामेव। **अत्रेदं बोध्यम्**—अयं विक्रमादित्यः चन्द्रगुप्तद्विजपुत्रादन्य एव—**तथा हि**—गन्धर्वसेनस्य द्वे धर्मपत्न्यावास्ताम्। क्रमेण भर्तृहरिविक्रमादित्यनामानौ पुत्रौ तयोः गन्धर्वसेनो जनयामास। तत्र द्वितीयपत्नीपिता धारानगराधिपतिः स्वस्य सन्तत्यभावाद्दौहित्रौ भर्तृहरिविक्रमादित्यावेव स्वपुत्रौ मन्वानस्तौ बहुविद्यानिपुणौ कारयामास। ततो विक्रमादित्यस्योक्तिमनुसृत्य साक्षाद्दौहित्राय विक्रमादित्याय देयमिति निश्चितमपि राज्यं भर्तृहरये धारापतिः प्रादात्। ततः तदमात्यपदमङ्गीचकार विक्रमादित्यः। ततः किंचित्कालानन्तरममात्योऽयं धारां विहायोज्जयिन्यां राज्यभाराय भ्रातरं भर्तृहरिं राजानं प्रबोध्य तत्र राज्यमकरोत्। तदभ्यन्तरे कदाचिद्राज्ञा स्त्रीकामुकेन भर्तृहरिणा विरोधमुपलभ्यामात्यपदं विहाय विन्ध्यस्योत्तरदिशि सञ्चरन् ढक्कानगं प्राप्य तत्र स्वशौर्येण तद्राज्यं लब्ध्वा तत्परिपालयन्विक्रमनगराभिधया तदाह्वास्त। एवं च पितुश्चन्द्रगुप्तस्य राज्याभावः पुत्रस्य विक्रमादित्यस्य तु राज्यं युज्यत एवेति **केचित्**। **तत्रेदं वक्तव्यम्**—अस्तूक्तरीत्या पुत्रस्य राज्यम्। विक्रमादित्यभर्तृहरी न चन्द्रगुप्तद्विजपुत्रौ स्तः। किन्तु गन्धर्वसेनस्येत्युक्तमनुपदमेव। अयं गन्धर्वसेनः विप्रः क्षत्रियः वैश्यो वेति तु न प्रकृत**मित्याहुः**।

**अन्ये तु** भर्तृहरिः वाक्यपदीयं शतत्रयं च चकार। भट्टिकाव्यं तु भट्टिकविनाम्नैव कृतम्। भर्तृहरिकृतमिति व्याख्याकृदुक्तिः प्रमाणानुक्तेरश्रद्धेयैवेति, तथा श्रीधरस्वामिपुत्रो महावैयाकरणः भर्तृहरिपण्डितो नाम प्राचीनाङ्गलहरेभिन्नः कश्चिदर्वाचीनः आसीत्। ततो नामैक्यादेवं सर्वे भ्रान्ता इति, तथा भर्तृहरिपुत्रो भट्टिरिति, एवं भर्तृहरिर्भट्टिश्च भिन्नावेव न तयोः कोऽपि संबन्ध इति स्वस्वमतानुसारिण्य इदानीन्तनाङ्गलपण्डितोक्तय आङ्गलपुस्तकेषूपलभ्यन्ते **इत्याहुः**॥

**परे तु** भर्तृहरिविक्रमादित्यौ भ्रातरौ। तयोराद्यश्चतुर्दशवर्षाणि राज्यं पर्यपालयत्। स्वनाम्ना शकं निरवर्तयच्च। ततो द्वितीयः कनिष्ठो भ्राता विक्रमादित्यो राज्यं शशासेति, तथा भर्तृहरिर्विक्रमादित्यस्य न भ्राता। यतः—स्वकृते वैराग्यशतके "उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो निस्तीर्णस्सरितां पतिर्नृपतयो यत्नेन सन्तोषिताः। मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम्॥ ९४॥ भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलं त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला। भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकवत्तृष्णे दुर्मतिपापकर्मनिरते नाद्यापि सन्तुष्यसि"॥ ९५॥ इति स्वीयमहादरिद्रावस्था प्रदर्शितेति, **तथा** वाक्यपदीयकर्ता नायं, किन्तु केवलहरिनामा कश्चित्पण्डितः। भर्तृहरिरित्युल्लेखः क्वचिद्यो दृश्यते स भ्रान्त्या। केवलं हरिनाम्न उल्लेखाधिक्याच्च। शतकत्रय कर्ता तु भर्तृहरिरिति, तथा शतकत्रयं निर्मायान्यः पण्डित एतन्नाम निबबन्धेति स्वस्वमतानि प्रकाशयांचक्रु**रित्याहुः**॥

**अपरे तु** वाक्यपदीयकर्ता भर्तृहरिराङ्गलशकस्य सप्तमे शतके ( सन् ७०० ) बभूव। तथाङ्गलषष्ठशतकात् ( ६०० ) पूर्वमासीच्छतकत्रयकर्तापि। यतः पञ्चतन्त्रे एतच्छतकत्रयस्यपद्येष्वेकविंशतिपद्यान्युपलभ्यन्ते। पञ्चतन्त्रं चाङ्गलपञ्चमशतकानन्तरं ( सन् ५०० )

नोदभूत् । किन्तु ततः प्रागेवेत्यन्यत्र स्पष्टम् । तस्मादाङ्ग्लपञ्चमशतके प्रायः ( ५० ) पञ्चाशद्वर्षात्पूर्वमासीदिति ज्ञायते इति, तथा वाक्यपदीयकर्त्ता न विक्रमादित्यभ्राता । यतः चन्द्रगुप्ताचार्यस्तत्सहायिनश्च महाभाष्यव्याख्यानरूपमेतद्वाक्यपदीयग्रन्थं भर्तृहरिसकाशादुपलभ्याध्ययनाध्यापनाभ्यां प्रसिद्धमकुर्वन् । काश्यां मुद्रितं तु वाक्यपदीयसारभूतमेव स्यात् तत्कृतम् । तस्य लक्षग्रन्थात्मकत्वात् । अस्यात्यल्पत्वाच्चेत्युक्तम् । एतेषां राजतरङ्गिण्युक्तरीत्याङ्ग्लशकस्य पञ्चचत्वारिंशत्तमवर्षमारभ्य पञ्चषष्टितमवर्षमध्यकालिकाभिमन्युनाम्नोराज्ञ आश्रितकोटिप्रविष्टत्वेन तात्कालिकत्वमित्याहुः ।

प्रकृतमनुसरामः— युधिष्ठिरनप्तुः परी ( रि ) क्षितो जन्मोत्तरं पञ्चदशोत्तरसहस्रवर्षेषु ( १०१५ ) व्यतीतेषु शतं समाः ( १०० ) नन्दा राज्यं पर्यपालयन् । तदुक्तं श्रीभागवते द्वादशस्कन्धे द्वितीयाध्याये "यावत्परीक्षितो जन्म यावन्नन्दाभिषेचनम् । एतद्वर्षसहस्रं तु ज्ञेयं पञ्चदशोत्तरम्" इति । तथा तत्रैव "महानन्दिसुतो राजञ्छूद्रागर्भसमुद्भवः । महापद्मपतिः कश्चिन्नन्दः क्षत्रविनाशकृत् । तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखास्सुताः । य इमां भोक्ष्यन्ति महीं राजानश्च शतं समाः" इति । विष्णुपुराणे चतुर्थांशे चतुर्विंशाध्याये तु ज्ञेयमित्यस्य स्थाने शतमिति व्यत्यासेन पाठोऽस्ति—"महानन्दिसुतश्शूद्रागर्भोद्भवोऽतिलुब्धो महानन्दः परशुराम इवापरोऽखिलक्षत्रियान्तकारी भविता ॥ ४ ॥ तस्याप्यष्टौ सुताः सुमाल्याद्या भवितारस्तस्य च महापद्मस्यानु पृथ्वीं भोक्ष्यन्ति ॥ ५॥ महापद्मस्तत्पुत्राश्चैकं शतमवनीपतयो भवन्ति। नवैतान्नन्दान्कौटिल्यो ( विष्णुगुप्तस्तत्पुत्रो वा ) ब्राह्मणस्समुद्धरिष्यति ॥ ६ ॥ तेषामभावे मौर्याश्च पृथ्वीं भोक्ष्यन्ति । कौटिल्य एव चन्द्रगुप्तं राज्येऽभिषेक्ष्यति"॥७॥इत्यारभ्य—"यावत्परीक्षितो जन्म यावन्नन्दाभिषेचनम् । एतद्वर्षसहस्रं तु शतं पञ्चदशोत्तरम्" ॥ ३२ ॥ इति ॥ "आरभ्य भवतो जन्म" इत्यपि श्रीभागवते पाठान्तरम्।एवं च परीक्षिज्जन्मारभ्य नन्दराज्यारम्भान्ताः कालाः विष्णुपुराणरीत्या पञ्चदशोत्तरशताधिकसहस्रवर्षाणि ( १११५ ) श्रीभागवतरीत्या तु पञ्चदशोत्तरसहस्रवर्षाणि ( १०१५ ) भवन्ति ।

परीक्षितो जन्मकालश्च कलेः प्रथमशतके इति सिध्यति । यतः—ते "त्वदीया द्विजा काले अधुना चाश्रिता मघाम्" इति श्रीभागवते द्वादशस्कन्धे उक्तेः, "तेन वै ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम्"इति, "यावद्देवर्षयस्सप्त मघासु विचरन्ति हि। तदा प्रवृत्तस्तु कलिः" इति च तत्रैवोक्तेः,सप्तर्षिमण्डलस्यैकैकास्मिन्नक्षत्रे शतवर्षेषु स्थितिरिति तेन सिद्धान्तानुसारेण मघानक्षत्रे तेषां स्थितिसमये परीक्षितो जन्मेति तदैव कलिप्रवृत्तिश्चेति च ज्ञायते । "अधुना"इति परीक्षितं प्रति शुकेन भागवतार्थवर्णनसमये मघानक्षत्रे सप्तर्षिस्थित्याश्रयस्य कालस्य वर्तमानत्वेन निरूपणात् ॥तथा—"आसन्मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ"इति बृहत्संहितायां शालिवाहनशकस्य(४२७)सप्तविंशत्युत्तरचतुश्शततमे वर्षे उत्पन्नेन वराहमिहिरेणोक्तेर्युधिष्ठिर परिक्षितोरुभयोरपि मघानक्षत्रे सप्तर्षिस्थितिसमये स्थितिप्रतीतेर्युधिष्ठिरपरिक्षितोरन्तरकालः प्रायः ( ८० ) अशीतिवर्षाणि भवेयुः । एवं चाशीतिवर्षाणि ( ८० ) युधिष्ठिरस्थितिकालादारभ्य परीक्षिज्जन्मावधिः कालः । तथा नन्दानां राज्यकालश्च शतं वर्षाणि ( १०० ) । तथा परीक्षित्कालमारभ्य नन्दराज्यारम्भान्तः कालः ( १०१५ ) अथवा ( १११५ ) वर्षाणि

एतेषां संकलने कृते ( ८०×१०१५ वा १११५*१००=१०९५ वा ३२१९ ) युधिष्ठिरस्थितिकालादारभ्य नन्दराज्यान्तःकालः संपन्नः ।

कल्पादिमारभ्य युधिष्ठिरस्थित्यन्तरकालस्तु ( ४९५ वा ३९५ ) वर्षाणि । तदुक्तं स्कान्दे- " ततोऽपि द्विसहस्रेषु दशाधिकशतत्रये । भविष्यं नन्दराज्यं च चाणक्यो यान्हनिष्यति " इति । तत्र द्विसहस्रेष्विति निर्द्धारणे सप्तमी । दशाधिकशतत्रये इति सति सप्तमी । तथा च कलेर्द्वि सहस्रवर्षमध्ये दशाधिकशतत्रये सति नन्दराज्यमित्यर्थः। (२०००-३१०=१६९० )। एवं च कलेर्दशाधिकशतत्रयन्यूनेषु द्विसहस्रवर्षेषु व्यतीतेषु नन्दा राज्यपरिपालनमारभन्तेति यावत् । नन्दराजराज्यकालश्च शतं समाः इत्युक्तम् ( १६९०×१००=१७९० ) इदानीन्त नैकोत्तरपञ्चसहस्रात्मककलिवर्षसंख्यासु ( ५००१ ) उक्तसंख्यायाः ( १७९० ) वियोजने एकादशोत्तरद्विशताधिकत्रिसहस्रवर्षाणि ( ३२११ ) शिष्टानि भवन्ति ।

इतः प्राक् ( ३२११ )—चन्द्रगुप्तो राज्यधुरमुदवहत् । ततश्च— तदा तदुत्तरं वा, महाभाष्यं पतञ्जलिना निर्मितमिति वक्तव्यम् । स एव पतञ्जलिकालः । ततः प्राक् पाणिनिकात्यायनयोः नन्दराज्यकाल एवेति चोक्तम् । अन्ये तु स्कान्दवचने " द्विसहस्रेषु " इत्यस्य स्थाने "त्रिसहस्रेषु " इति पाठान्तरम् । तत्पक्षेऽस्य कलेरेकोत्तरपञ्चसहस्रात्मसंख्याकवर्षेष्वादावेकादशोत्तरद्विशताधिकत्रिसहस्रवर्षेष्वतीतेषु तदुत्तरस्मिन्वर्षे ( २२११ ) चन्द्रगुप्तराज्यारम्भ आसीदिति ज्ञेयम् । एवं च तदानीं तदुत्तरं वा महाभाष्यं पतञ्जलिना कृतमित्यादि प्राग्वदिति दिगित्याहुः ।

**नवीना आङ्ग्लपण्डितास्तु**—आङ्ग्लदेशादाङ्ग्लशकात्पूर्वं षोडशोत्तरत्रिशतीतमवर्षे ( सन् ३१६ ) आङ्ग्लप्रभुवर्योऽलेग्जाण्डर्नामा भरतखण्डमाजगाम । तस्मिन्नेव वर्षेऽत्र भरतखण्डे पाटलीपुत्रराज्ये ( पाटणापत्तने ) चन्द्रगुप्तो राजा राज्यासनमारुरोह । ततः किञ्चित्कालोत्तरं तत एवाङ्ग्लदेशाद्भरतखण्डं प्रति सेल्यूकनाम्नो महामहिम्नः आङ्ग्लप्रभुवर्यस्यागमनसमयेऽत्र खण्डेऽतिप्रबलो राजायमेवासीत् । नान्यः कोऽपि तादृश इति वदन्ति । अनेन च तदनन्तरकालिकस्स इति वक्तव्यमिति बोध्यमिति दिक् ।

## श्रीभट्टोजिदीक्षितस्य कालादिनिर्णयः ।

अयं भट्टोजिदीक्षितः कः किंजातीयः कदा कुत्र वासीदित्यादिकं किञ्चिद्विचारयामः—भट्टशब्दस्य शब्दकौस्तुभव्याख्यायुक्तरीत्या चतुश्शास्त्रज्ञे प्रवृत्तेः, पूर्वकालेषु तथैव व्यवहाराच्चायं व्याकरणवेदान्तधर्मशास्त्रपूर्वमीमांसाशास्त्रज्ञः, कौमुद्यां स्वरवैदिकप्रक्रिययोः शाकलशाखास्थोदाहरणाच्छाकलर्क्शाखाध्यायी । लोकव्यवहारानुसारेण काशिकाकृतशिष्य इति च ज्ञायते । तथा शाङ्करमतानुयायी।अत एव मध्वमतखण्डनायाद्वैततत्त्वकौस्तुभाख्यो ग्रन्थोऽनेन रचितः। अत एव न रामानुजादिमतानुयाय्यपि । यतः—श्रीशाङ्करब्रह्मसूत्रभाष्यानुसारेणैवाधिकरणानां रचना सूत्रपाठादिक्रमश्च तत्र तत्त्वकौस्तुभे दृश्यते। एवं वृद्धयाह्निके पस्पशाह्निके च शुद्धाद्वैतमेव स्वाभिमतं प्रकाशयति स्म शब्दकौस्तुभे "श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम्" इत्यादिना।

भट्टोजीत्यादेः जीत्यादिशब्दघटितत्वादसंस्कृते रामजी कृष्णजीत्यादिवज्जीत्यन्तस्य बहुवचनान्तनामवाचकत्वेन नर्मदोत्तरदेश एव व्यवहारादयमपि तद्देशीय इति सामान्यतो ज्ञायते। न तु तद्देशीय इति निर्णेतुं शक्यते।

अस्य पिता लक्ष्मीधरः। एतत्पुत्रो भानुजिद्दीक्षितः। येनामरसिंहकृतामरकोशस्य सुधानाम्नी व्याख्या वघेलवंशोद्भवश्रीमहोधरवंशाधिपकीर्तिसिंहदेवाज्ञया कृतेति वदन्ति। परन्तु स्वयं तेन नायं कृतो ग्रन्थः। किन्तु तन्नामाङ्कितत्वेन रामाश्रमनाम्ना विरचित इति ज्ञायते इत्यन्ये। युक्तं चैतत् "वल्लवीवल्लभं नत्वा गुरुं भट्टोजिदीक्षितम्। अमरे विदधे व्याख्यां मुनित्रयमतानुगाम्" इति ग्रन्थस्यादावेव तत्कृत्वा मध्येऽन्ते च मङ्गलस्य भट्टोजिदीक्षितवदकरणाद्रामाश्रमिनाम्नास्य टीकाग्रन्थस्य कृतत्वेन प्रसिद्धेः तन्नाम्नोऽत्रानुक्तेश्च भानुजिद्दीक्षितकर्तृकत्वमस्येति न निश्चेतुं शक्यते। गुरुं भट्टोजिदीक्षितमित्युक्त्या तदीयविद्यार्थिषु भानुजिद्दीक्षितः स्यादेको न तु तत्पुत्रः। यत्तु भानुजिद्दीक्षित एव सन्न्यासोत्तरं रामाश्रमनाम्नाऽऽसीत्। ततस्तत्कृतोऽयं ग्रन्थ इति युक्तिं कथयन्ति॥ तन्न॥ गुरुं भट्टोजिदीक्षितमिति मङ्गलश्लोकोक्तरीत्या स्वयं संन्यस्य भट्टोजिदीक्षितस्य स्वपूर्वपितुर्नमस्कारकरणायोगात्। एतद्भानुजिद्दीक्षितपुत्रेण हरिदीक्षितेन मनोरमाव्याख्यानरूपं शब्दरत्नग्रन्थद्वयं कृतम्। भट्टोजिदीक्षितपुत्रो वीरेश्वरदीक्षित इति रसगङ्गाधरप्रस्तावनायां लेखो दृश्यते इति पुत्रद्वयं वा सहानेनास्य, तस्यैव नामान्तरं वेति तु चिन्त्यम्। यदि वीरेश्वरस्तस्यात्तर्ह्ययं भट्टोजिदीक्षितः काश्यामुवासेति निश्चीयते। वीरेश्वर इति नाम्नः तत्रैव प्रसिद्धेः। भट्टोजिदीक्षितेन विरचिता ग्रन्थाः—लिखितपुस्तकसंग्राहकलैब्रेरिस्थानादुपलब्धपुस्तकसूच्यनुसारेणान्यतश्चोपलब्धसूच्यनुसारेणापि प्रदर्श्यन्ते (१) आशौचप्रकरणम्। (२) कालनिर्णयः—(हेमाद्रिसारभूतः)। (३) चतुर्विंशतिमतव्याख्या। (१) आचारकाण्डः। (२) संस्कारकाण्डः। (३) प्रायश्चित्तकाण्डः। (४) श्राद्धकाण्डः। (४) तिथिनिर्णयः। (५) (शाब्दिक)—सिद्धान्तकौमुदी। (६) शब्दकौस्तुभः—लक्षप्रयनात्मकः एकः तत्सारभूतश्चान्यः विनादौ नवाह्निकम् (७) प्रवरनिर्णयः। (८) तत्त्वकौस्तुभः। (९) मनोरमा सिद्धान्तकौमुदीव्याख्या। (१०) दायभागः। (११) तन्त्रसिद्धान्तदीपिका। (१२) त्रिस्थलीसेतुः। (१३) तैत्तिरीयसन्ध्याभाष्यं चेति। तत्र शब्दकौस्तुभसाराख्यो ग्रंथः सपूर्ण न रचितः। अनुपलब्धेः। परन्त्वध्यायचतुष्टयं बहुषु स्थलेषु लभ्यते इति केचित्। ततः तदन्त एव ग्रन्थो रचित इति वक्तुमशक्यम्। अष्टमे वक्ष्यते इति शब्दकौस्तुभे एओङिति सूत्रे उक्तेरित्यन्ये।

रसगङ्गाधरटीकाप्रणेत्रा शिवभट्टसतीदेव्योः सूनुना नागेशभट्टेन काश्यां कस्मिन्समये स्थितमिति विचारावसरे मनोरमाकुचमर्दनलघुमञ्जूषादिबहुग्रन्थविलोकनेनेत्थं पुरुषपरम्परां निश्चिनुमः—

**शेषश्रीकृष्णः ।**

| | |
|---|---|
| भट्टोजिदीक्षितः ( शिष्यः ) | शेषवीरेश्वरः ( पुत्रः ) |
| वीरेश्वरदीक्षितः ( पुत्रः ) | पण्डितराजजगन्नाथः ( शिष्यः ) |
| हरिदीक्षितः ( पुत्रः ) | ० |
| नागेश(गोजी)भट्टः ( शिष्यः ) | ० |

एवं च नागेशभट्टात्पूर्वः तृतीयः पुरुषः भट्टोजिदीक्षित इति पण्डितराजाद्द्वितीयः पुरुषो नागेश ( गोजी ) भट्ट इत्यपि ज्ञायते । जगन्नाथपण्डितराजसमयः ( १६६६ ) तमः आङ्ग्लाब्दः । तेन पुरुषद्वयपर्याप्तानां सामान्यतः चत्वारिंशद्वर्षाणां ( ४० ) योजने ( सन् १७०६ ) तम खिस्ताब्दोऽस्य नागेश ( गोजी ) भट्टस्य समयः । ( २० ) संख्यया तत्पूर्वकाले वियोजिते भट्टोजिदीक्षितस्य ( सन् १६४६ ) तमाङ्ग्लाब्दो भवति समयः ।

अत्र च जयमहाराजाः श्रीसवाईजयसिंहवर्मणोऽश्वमेधप्रसङ्गे श्रीनागेशभट्टायामन्त्रणपत्रं प्राहिण्वन् । तदा नागेशभट्टेनाहं क्षेत्रसन्न्यासं गृहीत्वा काश्यामस्मि । अतस्तां परित्यज्यान्यत्र गन्तुं न शक्नोमीत्युत्तरं प्रहितम् । एषा किंवदन्ती जयपुरेऽधुनापि प्रसिद्धा । श्रीजयसिंहमहाराजाश्च (सन् १७१४) तमाङ्ग्लाब्देऽश्वमेधं कृतवन्त इति प्रसिद्धमेव ।—अश्वमेधयज्ञसंवत्सरोऽपि पूर्वोक्तरीत्या ( १७०६ ) तमाङ्ग्लसंवत्सरारम्भसमय एवेति खिस्ताब्दीयाष्टादशशतकप्रथमतुरीयांशे नागेशभट्ट आसीदिति व्यक्तमेव । केचित्तु खिस्ताब्दीयाष्टादशशतकपूर्वार्द्धानन्तरं नागेश ( गोजी ) भट्टस्थितिं कथयन्ति ॥

हरिदीक्षितशिष्योऽयं नागेशभट्टः स्वशिष्याच्छृङ्गवेरपुराधीशबिसेनवंशसमुद्भूतरामनृपाल्लब्धजीवनो बहून् ग्रन्थान्प्रणिनाय । तत्रेदानीमुपलभ्या ग्रन्थास्त्वेते-

| | | |
|---|---|---|
| १ काव्यप्रकाशोद्योतः । | १ बृहच्छब्देन्दुशेखरः । | १ रसमञ्जरीटीका । |
| १ परमलघुमञ्जूषा । | १ अन्यो बृहच्छब्देन्दुशेखरः । | १ लघुमञ्जूषा । |
| १ परमार्थसारविवरणम् । | १ प्रायश्चित्तेन्दुशेखरः । | १ वृत्तिसंग्रहः । |
| १ परिभाषेन्दुशेखरः । | १ बृहन्मञ्जूषा । | १ वेदान्तसूत्रवृत्तिः । |
| १ लघुशब्देन्दुशेखरः । | १ भाष्यप्रदीपोद्योतः । | १ सप्तशतीटीका । |
| १ रसतरङ्गिणीटीका । | १ योगसूत्रवृत्तिः । | १ साङ्ख्यसूत्रवृत्तिः । |
| १ रसगङ्गाधरमर्मप्रकाशः । | १ सापिण्ड्यनिर्णयः । | १ लघुशब्दरत्नम् (स्वगुरु) |
| १ त्रिंशच्छ्लोकी(अशौचनिर्णयः)। | १ बृहच्छब्दरत्नम् । | नाम्नानेन कृते शब्दरत्ने |

इमे इति लोके प्रसिद्धिः । प्रकृतमनुसरामः ।

रात्रौ यवन्या विहृत्य काश्यां गङ्गातटे शयानः पण्डितजगन्नाथः भट्टोजिदीक्षितेन सारस्वतब्राह्मणेन श्लिष्टपदप्रायभाषणेन तदहङ्कारनिरसनद्वारा हितमुपदिष्टः तां यवनीं परिगृहीतां तत्याजेत्युदन्तोऽपि भट्टोजिदीक्षितसमयनिर्णायको जागर्ति—

**अत्रेदं बोध्यम्**—भट्टोजिदीक्षितः सारस्वतब्राह्मणः शालिवाहनशकस्य पञ्चदशे (१५) शतके आसीत्। एतद्वंश्या महाराष्ट्रे देवालये देवपूजनोपजीविनो दीक्षिताभिधा आसन्। स्वयं तदन्तर्गतोऽपि शास्त्राद्यभ्यासेन प्रतिष्ठा सम्पादनीयेति पर्यालोच्य काशीं गत्वा तत्र शास्त्राण्यधीते स्म। ततोऽचिरादयं महाचार्यो बभूव। ततः पाणिनिव्याकरणशास्त्रे सिद्धान्तकौमुदीप्रभृतीनन्यशास्त्रेष्वपि बहून्ग्रन्थानलिखत्। तेषां प्रचारार्थं तान्विलेख्य विलिख्य स बहुभ्यः पण्डितेभ्यः प्रेषयामास। स तेषु शा० शके (१६३७) तने स्थितेन श्रीनाप्यय्यदीक्षितेनादौ तद्ग्रन्थदर्शनजनितानन्दोल्लासवता सम्मानितः। तदानीमितरग्रन्थेभ्यः सिद्धान्तज्ञानेऽप्यायासबाहुल्याभावेनाभिमन्त्र इति सर्वत्राध्ययनाध्यापनयोः स्वयमेव सिद्धान्तकौमुदी निर्विरोधेन विचचार। तथाऽतिविस्तृतं वैयाकरणभूषणं, शब्दकौस्तुभग्रन्थात्मकं न प्रचचार च। ततस्तदात्वैरिदानीन्तनैरिव कैश्चित्परगुणासहिष्णुभिर्बृहच्छब्दकौस्तुभग्रन्थः नाशमापादितः। तत्र नवाह्निकं प्रथमाध्यायप्रथमपादव्याख्यानं सर्वत्र पठ्यते च। अयं स्वतोऽपि तद्वंश्यैस्तदीक्षितजीवद्दशायामेव। ततस्स्वयं पर्यालोच्यावशिष्टनवाह्निकव्याख्या शब्दकौस्तुभग्रन्थो लिखितः संक्षेपेण। तस्य पूर्तिरासीन्न वा न ज्ञायते। यतः प्राचीननवाह्निकेन सह चतुर्थाध्यायान्तं इदानीमुपलभ्यते शब्दकौस्तुभग्रन्थ इत्युक्तम्। वेदान्ते धर्मशास्त्रादौ च बहून्ग्रन्थांल्लिखन्नेवायुषः पञ्चाशत्तमे वयसि शरीरं तत्याजेति॥

**अत्र केचित्**—अस्मिन् लोके इतिहासान्तरमेतद्विषये वदन्ति हि—अन्त्ये वयसि व्याकरणाध्येतुः कस्यचित्स्वमनोऽनुरूपस्य शिक्षकस्यालाभेन दुःखमनुभवन्नेव मृत्वा ब्रह्मराक्षसोऽभूत्। ततश्चिरात्तादृशः कश्चिद्ब्राह्मण आगत्य प्रौढपण्डितेषु स्वस्याध्ययनयोग्यतालाभाय किञ्चित्क्रममप्यल्पं ग्रन्थमध्येतुमध्यापकमन्विष्यन्नितस्ततो विचार्य परिहासेन केनचित्खलेनोक्तं सत्यं मत्वा ब्रह्मराक्षसगृहं कैरप्यप्रविष्टपूर्वमतिभयङ्करमपि प्रविश्य सन्ध्यामनुतिष्ठन्तं तं नत्वा व्याकरणमध्येतुं श्रीमदीयचरणाम्बुजे आससादेति विज्ञापयामास। ततस्तेन राक्षसरूपेण भट्टोजिदीक्षितेन यावदध्ययनं कस्यापि समीपे शास्त्राध्ययनाध्यापनविषयकं किञ्चिदपि संलापादिकं न कार्यम्। तुभ्यमन्नवस्त्रादिकं सर्वमहं दास्ये इत्युक्तम्। ततस्स सर्वमभ्युपगम्य तथैवेति तिष्ठन्व्याकरणशास्त्रं प्रत्यहमधीयाय। अष्टवर्षाभ्यन्तरे स तत्र पण्डितो बभूव, ततो भट्टोजिदीक्षितः स्वशिष्यमाहूय कस्मिंश्चिद्दिने स्वीयं यावद्वृत्तं कथयित्वा तस्मै बहुधनहिरण्यादिकं दत्त्वा तद्ब्राह्मणानुज्ञया ततो मुक्तो बभूवेतीतिहासान्तरं वर्णयन्तीति शिवम्॥

शेषवेङ्कटसुब्रह्मण्याख्ये विद्वच्छिखामणेः।
जातेन पार्वतीदेव्या अर्पितश्शिवयोरयम्॥ १॥

**इत्युत्तरभागस्समाप्तः।**

इति श्रीकाशीशेषवेङ्कटाचलशास्त्रिकृतत्रिमुनिकल्पतरुस्समाप्तः।

प्रसिद्धमेव खलु पदवाक्यप्रमाणपारावारीणमहामहोपाध्यायश्रीमद्भट्टोजी ( जि ) दीक्षितविरचिताया वैयाकरणसिद्धान्तकौमुद्याः सौलभ्येनाध्यापकशक्त्यनुसारेण सकलशास्त्रसिद्धान्तज्ञानसंपादिकाया बहुधा तत्रतत्रानेकवारं सम्मुद्रिताया अपि मुद्रयितॄणां मुद्रणाब्धिपारमपारयन्त्या मुद्रितपुस्तकानां विक्रयणादिना संग्रहणमभिलक्ष्यैतद्व्याकरणशास्त्रेऽध्येत्रध्यापकानां प्रवृत्तिर्भरतखण्डवासिनामन्येषां च सम्मोदं समेधमानैवास्त इति। ततो वयमपि वैयाकरणसकलमहामहानिबन्धसारभूतसिद्धान्तमधुमत्या अस्याः—"अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः। सर्वतस्सारमादद्यात्पुष्पेभ्य इव षट्पदः" इति भगवतोक्तिमनुसन्धाय पृथग्गणपाठधातुपाठलिङ्गानुशासनसूत्राष्टाध्यायीसहिताया"उणादयो बहुलम्"इति शाकटायनप्रणीतोणादिसूत्रवृत्तिशान्तनवाचार्यप्रणीतफिट्सूत्रवृत्तिसविलासाया महोपकारकारकपाणिनीयशिक्षापाठरञ्जितायास्तथा मैसूर्महाराजश्रीकृष्णसार्वभौममहास्थानपण्डितकाशीशेषवेङ्कटाचलशास्त्रिकृतत्रिमुनिकल्पतरूपशोभिताया अकारादिवर्णक्रमवदष्टाध्यायीधातुपाठमनोहरायाः तृतीयवारं सीसकाक्षरैरुत्तमपत्रेषु सम्मुद्रणेन सर्वेषां द्विजानां विद्वत्त्वाख्यात्यादृशशक्तिविनयादिसुगुणवदध्ययनसम्पत्त्यादिमत्तमहोत्सवे कामुकास्स्मः। भो महान्तो महाशयाः पण्डितवर्याः "अपि पौरुषमादेयं शास्त्रं चेद्युक्तिबोधकम्। अन्यत्त्वार्षमपि त्याज्यं भाव्यं न्याय्यैकसेविना॥ युक्तियुक्तमुपादेयं वचनं बालकादपि। अन्यत्तृणमिव त्याज्यमप्युक्तं परमेष्ठिना॥ यो हास्तातकूपोयमिति कौपं पिबेत्पयः। त्यक्त्वा गाङ्गं पुरःस्थं तं को नु शास्त्यतिरागिणम्"इति योगवासिष्ठोक्तार्थवादोक्तिमालक्ष्य शास्त्रमर्यादिविचारेण तत्तत्सुफलनिष्पादकशक्तिमत्तया सन्न्यायविधियुक्तिमदेव बोधनीयमिति तु पौरुषमेवेति श्रीमन्तो जानन्त्येवेति तदध्यापने न मया किञ्चिद्विज्ञापनीयाः। तत्सहायकृते कृतं व्ययमात्रपरिमितमूल्यं परिगृह्णन्त इदं पुस्तकं मम श्रमं सफलयन्तु शिष्याणामेतदध्ययनप्रचारसंवर्द्धनेन। भो भो अस्मदार्यकुलतिलकाङ्कुराः द्विजकुलालङ्काराः "व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः। प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः" इति। तथा "अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति। नायं लोकोऽस्ति न परो न सुखं संशयात्मनः" इति च नीत्युक्तिं पर्यालोच्य विद्यावत्सु तच्छून्येषु च मायाविषु मायोत्सारकविद्यालयनव्यशस्त्रलाभाय तत्तत्फलेषु संशयानुत्पादाय च सर्वसिद्धान्तसारभूतामेनां वैयाकरणसिद्धान्तकौमुदीं पठितुमयतिष्यध्वं तदा मदीयाभ्यर्थना साफल्यमगमिष्यतेति विज्ञापनाद्वारा मदीयैतत्पुस्तकमुद्रणश्रमसाफल्यं कर्त्तुमभ्यर्थये इत्यलं पल्लवितेन॥ "श्रीवेङ्कटेश्वरपदाब्जयुगं प्रणम्य श्रीकृष्णदासतनुजस्तव खेमराजः। याचे वरद्वयमहं बुधमण्डले च प्रीतिं क्रिया मम कुले सहजां त्वदीयाम्" इति।

विद्वज्जनकृपाकाङ्क्षी—

**क्षेमराज श्रीकृष्णदास "श्रीवेङ्कटेश्वर" मुद्रणयंत्रालयाध्यक्षः**

**मुंबई.**

। श्रीगणेशाय नमः ।

अथ

# वैयाकरणसिद्धान्तकौमुदी ।

## अथ संज्ञाप्रकरणम् ।

मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च ।
वैयाकरणसिद्धान्तकौमुदीयं विरच्यते ॥ १ ॥

**अइउण् । १ । ऋऌक् । २ । एओङ् । ३ । ऐऔच् । ४ । हयवरट् । ५ । लण् । ६ । ञमङणनम् । ७ । झभञ् । ८ । घढधष् । ९ । जबगडदश् । १० । खफछठथचटतव् । ११ । कपय् । १२ । शषसर् । १३ । हल् । १४ ।** इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि ॥ एषामन्त्या इतः ॥ लण्सूत्रेऽकारश्च ॥ हकारादिष्वकार उच्चारणार्थः ॥ **हलन्त्यम् । १ । ३ । ३ ॥** हलिति सूत्रेऽन्त्यमित्स्यात् ॥ **आदिरन्त्येन सहेता । १।१।७१ ॥** अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् । इति हल्संज्ञा-

---

श्रीदधिमथी जयति ।

प्रणम्य श्रीदधिमथीं क्षेमराजेन प्रार्थितः । शिवदत्तो दाधिमथष्टिप्पणीं कर्तुमुद्यतः ॥ १ ॥
दधिभक्तजनान् धात्री मथ्नी तदरिमायिनो । देवी दधिमथी नाम धन्वदेशे विराजते ॥ २ ॥

१ 'सुपां सुलुक्' इति विभक्तेर्लुक् । अत एव संहिताया अविवक्षणान्न संहिताकार्यम् ॥ 'वर्णात् कारः' इति कारप्रत्ययोऽपि न, तत्र 'बहुलम्' इत्यनुवृत्तेः ॥ २ 'अर्हेण' इत्यत्राट्प्रत्याहारान्तर्गतत्वेन हकारव्यवायेऽपि णत्वसिद्ध्यर्थमत्र हकारोपादानम् ॥ ३ पुनः कृतो णकारोऽनुबन्धः 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्' इति परिभाषां ज्ञापयति ॥ ४ 'अलिक्षत्' इत्यत्र 'शल इगुपधात्'-इति च्लेः क्ससिद्ध्यर्थं शल्प्रत्याहारे हकारग्रहणायेदं सूत्रम् ॥ ५ महेश्वरेण उपज्ञाता माहेश्वरा अनुबन्धास्ते सन्ति यत्रेति माहेश्वराणि महेश्वरोपज्ञातानुबन्धयुतानि सूत्राणीति सूत्रेष्वनुबन्धयोगो महेश्वरकृतः । सूत्राणि तु वेदवदनादिसिद्धानीति भावः ॥ ६ एषामिति चतुर्दशसूत्राणामित्यर्थः ॥ ७ अनन्त्यत्वात्पृथगुक्तिः ॥ ८ 'न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि संभवति' इति भाष्योक्तेः ॥ ९ 'न विभक्तौ तुस्माः' इति सूत्रसार्थक्याय 'हलन्त्यम्' इत्यत्र हल्प्रत्याहारपरमेव हल्पदं ग्राह्यमिति वाक्यार्थबोधे पदार्थज्ञानस्य कारणत्वेन हल्पदार्थज्ञानमावश्यकमिति हल्पदार्थज्ञानसाधकस्य 'आदिरन्त्येन सहेता' इत्यस्य वाक्यार्थबोधः प्रागावश्यकः । 'आदिरन्त्येन सहेता' इत्येतद्वाक्यार्थबोधे तु इत्पदार्थज्ञानमावश्यकमिति तत्साधकस्य 'हलन्त्यम्' इत्येतद्वाक्यार्थबोधस्य प्रागावश्यकत्वमिति 'हलन्त्यम्' इति सूत्रवाक्यार्थबोधं विना 'आदिरन्त्येन सहेता' इत्येतद्वाक्यार्थबोधोऽसंभवी, 'आदिरन्त्येन सहेता' इत्येतद्वाक्यार्थबोधमन्तरा 'हलन्त्यम्' इत्येतद्वाक्यार्थबोधोऽसंभवीति परस्परापेक्षत्वरूपान्योन्याश्रयदूषणस्यापत्तिरिति तां परिहर्तुं दीक्षितैः 'हलन्त्यम्' इति सूत्रस्यावृत्तिं कृत्वा यत्रार्थेऽन्योन्याश्रयदोषो नैवागच्छति तादृगर्थमाह-हलिति सूत्र इति ॥ 'सुप् सुपा' इति समास इति भावः ॥

याम् ॥ **हलन्त्यम् १।३। ३** ॥ उपदेशेऽन्त्यं हल् इत्स्यात् । उपदेश[1] आद्योच्चारणम् ॥ ततोऽण-जित्यादिसंज्ञासिद्धौ ॥ **उपदेशेऽजनुनासिक इत् । १ । ३ । २** ॥ उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात् ॥ प्रतिज्ञानुनासिक्याः पाणिनीयाः॥ लण्सूत्रस्थावर्णेन[2] सहोच्चार्यमाणो रेफो रलयोः संज्ञा । प्रत्याहारेष्वितां न ग्रहणम् । अनुनासिक इत्यादिनिर्देशात् । नह्यत्र ककारे परेऽच्कार्यं दृश्यते । आदिरन्त्येनेत्येतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्ते ॥ **ऊकालोऽज्झ्रस्वदीर्घप्लुतः। १ । २ । २७** ॥ उश्च ऊश्च उ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमाद् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् । स[3] प्रत्येकमुदात्तादिभेदेन त्रिधा ॥ **उच्चैरुदात्तः । १ । २। २९** ॥ ताल्वादिषु[4] सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् । आँ[5] ये ॥ **नीचैरनुदात्तः ।१।२।३०** ॥ स्पष्टम् । अर्वाङ्[6] ॥ **समाहारः स्वरितः । १ । २ । ३१** ॥ उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन्सोऽच् स्वरितसंज्ञः स्यात् ॥ **तस्यादित उदात्तमर्धह्रस्वम् । १।२।३२** ॥ ह्रस्वग्रहणमतन्त्रम् । स्वरितस्यादितोऽर्धमुदात्तं बोध्यम् । उत्तरार्धं तु परिशेषादनुदात्तम् । तस्य चोदात्तस्वरितपरत्वे श्रवणं स्पष्टम् । अन्यत्र तूदात्तश्रुतिः प्रातिशाख्ये प्रसिद्धा । 'क्वँ[7] वोऽश्वाः' 'रथानां न येऽ[8]राः' 'शतचक्रं योऽ[9]ह्यः' इत्यादिष्वनुदात्तः । 'अग्निमीळे[10]' इत्यादावुदात्तश्रुतिः । स[11] नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ॥ मुखना-

---

१ उपदिश्यतेऽनेनेति "कृत्यल्युटो वहुलम्" इति करणे घञ् इति भाष्यसिद्धान्तः । तथाचोपदेशपदेन शास्त्रं व्यवसितपदार्थत्वेन भाष्यकृता दर्शितं **शिवसूत्रधातुप्रातिपदिकप्रत्ययनिपातागमादेश** परमेव ग्राह्यमिति मनसि निहितं भाष्यसिद्धान्तम् आद्यम् अज्ञातस्वरूपज्ञापकम् उच्चारण यत्रेति वहुव्रीहिणा ध्वनयन् वादिबुद्धिपरीक्षणाय ह्यर्थमाह–**उपदेश आद्योच्चारणमिति** ॥ कर्मधारयेणं भावघञपि प्रतीयत इति भावः ॥ २ **'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न'** इत्याशङ्कायाः **'आचारात्' 'अप्रधानत्वात्' 'लोपश्च बलवत्तरः'** इति त्रिषु समाधानेषु प्रथमं समाधानम् 'आचारात्' इति व्याचष्टे–**अनुनासिक इत्यादिनिर्देशादिति** ॥ ३ प्राप्तह्रस्वादिसंज्ञक इत्यर्थः ॥ ४ तालु आदिर्येषां तानि ताल्वादीनि तालुन आदिः प्रथमः कण्ठस्ताल्वादिः ताल्वादीनि च ताल्वादिश्च ताल्वादीनि 'नपुंसकमनपुंसकेनेत्येकशेषः । तेन कण्ठस्थानस्यापि संग्रहः ॥ ५ ॥'निपाता आद्युदात्ताः' इति आकार उदात्तः ॥ 'फिषोऽन्त उदात्तः' इति यच्छब्दाकार उदात्तः, 'सुप्पिनावनुदात्तौ' इति जस् अनुदात्तः तत्स्थाने स्यादेशे 'आद्गुणः' इत्यनेन जातो गुणैकादेशः 'एकादेश उदात्तेनोदात्तः' इत्यनेनोदात्तः संवृत्तः ॥ ६ 'फिषोऽन्त उदात्तः' इत्याकार उदात्ते जाते 'अनुदात्तं पदमेकवर्जम्' इत्याद्यकारोऽनुदात्तः ॥ ७ 'किमोऽत्' इति जातस्य अत्प्रत्ययस्याकारः 'तित्स्वरितम्' इति स्वरितः ॥ 'वो' इत्यनुदात्तस्य आद्युदात्तेनाश्वशब्देन पूर्वरूपैकादेश उदात्त एवेति स्वरितस्योदात्तपरत्वेनानुदात्तश्रवणं भवति ॥ ८ 'ये' इत्यनेन उदात्तेन पदादिभूतस्य 'अराः' इत्यस्यादिनाऽकारेण जात एकादेशः पूर्वरूपः 'स्वरितो वाऽनुदात्ते पदादौ' इति स्वरितः 'राः' इति तूदात्तपरत्वेनानुदात्तश्रवणं भवति ॥ ९ 'यो' इत्यस्योदात्तस्य 'अह्यः' इति स्वरितान्तानुदात्तादेरनुदात्तेनाकारेण सह पूर्वरूपैकादेशः । 'स्वरितो वाऽनुदात्ते पदादौ' इति स्वरितो जातः स्वरितपर इत्यनुदात्तभागस्य श्रवणं भवति ॥ १० अन्तोदात्ताग्निशब्दस्यानुदात्तेनामा जायमानः पूर्वरूपैकादेशोऽप्युदात्त एव । 'ईळे' इति तु 'तिङतिङः' इत्यनुदात्तः । ततः 'उदात्तादनुदात्तस्य स्वरितः' इत्यनेन धात्वीकारः स्वरितः । 'ळे' इति तु 'स्वरितात्संहितायामनुदात्तानाम्' इति प्रचयपर्यायैकश्रुतिः ॥ ११ प्राप्तह्रस्वोदात्तादिसंज्ञक इत्यर्थः ॥

**सिकावचनोऽनुनासिकः ।१।१।८ ॥** मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्। तदित्थम्—अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः ॥ लृवर्णस्य द्वादश। तस्य[1] दीर्घाभावात् ॥ एचामपि द्वादश । तेषां[2] ह्रस्वाभावात् ॥ **तुल्यास्यप्रयत्नं सवर्णम्। १।१।९ ॥** ताल्वादि[3]स्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात्॥ अकुहविसर्जनीया[4]नां कण्ठः[5]। इचुयशानां तालु। ऋटुरषाणां मूर्धा। लृतुलसानां दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः[6] कण्ठतालु। ओदौतोः[7] कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्[8]। जिह्वामूलीयस्य जिह्वामूलम्। नासिकाऽनुस्वारस्य[9]॥ इति स्थानानि[10]॥ यत्नो द्विधा। आभ्यन्तरो बाह्यश्च ॥ आद्यश्चतुर्धा। स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात्॥ तत्र 'स्पृष्टं प्रयतनं स्पर्शानाम्'। 'ईषत्स्पृष्टमन्तस्थानाम्'। 'विवृतमूष्मणाम्' 'स्वराणां च'। ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्। प्रक्रियादशायां तु विवृतमेव। एतच्च सूत्रकारेण[11] ज्ञापितम्। तथा हि—

A **अ अइति ।८।४।६८ ॥** विवृतमनूद्य संवृतोऽनेन विधीयते ॥ अस्य[12] चाष्टाध्यायीं संपूर्णं प्रत्यसिद्धत्वाच्छास्त्रदृष्ट्या विवृतत्वमस्त्येव[13]। तथा च सूत्रम्॥ **पूर्वत्रासिद्धम्। ८ । २ । १ ॥**

---

१ विवृतलृवर्णस्येत्यर्थः ॥ २ **तेषाम्** एचाम् ॥ ३ तालुन आदिस्ताल्वादिः कण्ठः । तालु आदिर्येषां तानि ताल्वादीनि ताल्वादिश्च ताल्वादीनि च ताल्वादि 'नपुंसकमनपुंसकेन' इत्येकशेषः। तेन कण्ठसंग्रहः ॥ ४ अत्र विसर्जनीयपदेन अकारात्परो विसर्जनीयो विवक्षितः । इकारादिभ्यः परस्तु पूर्वावृस्थानभाक्। "अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" इति पाणिनीयशिक्षावाक्यात्। यथा इकारात्परस्य तालुस्थानमुकारात्परस्यौष्ठावित्यादि ॥ ५ ॥ कण्ठसमीपदेशश्चेत्यर्थः। तेन '×कौ जिह्वामूले' इति प्रातिशाख्येन '**जिह्वामूलीयकवर्गौ जिह्वामूलीयस्थानकौ**' इत्यर्थकेन '**जिह्वामूले तु कुः प्रोक्तः**' इति पाणिनीयत्वेन प्रसिद्धया शिक्षया न विरोधः ॥ ६ एकारस्य ताल्वेव स्थानम् '**इचशेयास्तालौ**' इति प्रातिशाख्यसंमतात् '**सिद्धमेङः सस्थानत्वात**' इति वार्तिकात् ॥ ७ ओकारस्य ओष्ठावेव स्थानम् '**उवोपोपध्मा ओष्ठे**' इति प्रातिशाख्यात् 'सिद्धमेङः सस्थानत्वात्' इति वार्तिकाच्च ॥ ८ वकारस्य दन्ता नैव स्थानम्। '**उवोपोपध्मा ओष्ठे**' इति प्रातिशाख्येन ओष्ठयोरेव स्थानप्रकरणे उक्तत्वात् '**वो दन्ताग्रैः**' इति करणप्रकरणे प्रातिशाख्याच्च । यदि करणप्रकरणोक्तानामपि स्थानत्वमिष्येत तर्हि इचशेयानां जिह्वास्थानत्वापत्तिः। वकारस्य संप्रसारणे लृकारापत्तिर्दुर्वारा स्यात्।'**दन्तोष्ठ्यो वः**'इति शिक्षा तु 'दन्तसंनिकृष्टे ओष्ठे भव इत्यर्थेन न प्रतिकूला। शिवो भगवान् भक्तिरस्येति विग्रहे शिवभागवत इत्यत्रेव तद्धितसामञ्जस्यं स्यात् ॥ एवं च 'दन्तसंनिहितावोष्ठौ' इत्यर्थकः 'दन्तोष्ठौ इत्येव पाठः प्रातिशाख्यानुसारी 'न पदान्तसूत्रभाष्यानुसारी निर्दोष आसीत्। ततश्च केनचिद्विद्वद्वरेण 'कण्ठोष्ठम्' इत्यत्र दृष्टमेव 'दन्तोष्ठम्' इति शोधितः स्यादिति तत्त्वम् ॥ ९ "अनुस्वारयमानां च नासिकास्थानमुच्यते" इति पाणिनीयाशिक्षावाक्यात् ॥ १० इमानि शौनकप्रातिशाख्यसूत्राणि ॥ ११ सूत्रशब्देन वार्तिकस्यापि ग्रहणम्। वार्तिकमुद्दिश्यैव '**आचार्याः सूत्राणि कृत्वा न निवर्तयन्ति**' इति पस्पशायां भाष्यात्। तथाच सूत्रवार्तिककारेण मुनिद्वयेनेत्यर्थः ॥ भाष्यकारेणापि तद्व्याख्यायां तदनुमोदितमेवेति मुनित्रयेणैव बोधितमित्यर्थः ॥ **अकारस्य विवृतोपदेश आकारग्रहणार्थः**' इति वार्तिकेन '**धात्वादिस्थश्च विवृतः**' इति भाष्यकारोक्त्या प्रक्रियानिर्वाहाय विवृत एवाङ्गीकृतः। तस्य स्थाने '**अ अ**' इति सूत्रेण संवृतः कृत इति बोध्यम् ॥ यद्वा यथाप्रसिद्ध एव सूत्रशब्दः ॥ '**ज्ञापितम्**' इत्यस्य '**व्यञ्जितम्**'इत्यर्थः। तथाच सूत्रकारेण व्यञ्जनया सूचितम्। वार्तिकभाष्यकाराभ्यां तु स्फुटमेवाभिहितमित्यर्थः॥ **A** विवृतस्यैव वर्णसमाम्नाये पाठात् संवृतस्याच्त्वाभावान्नैव गुणदीर्घौ ॥ १२ **अस्य** 'अ अ' इति सूत्रस्येत्यर्थः ॥ १३ **अस्त्येवेति** । तेन 'दण्ड*आढकम्' इत्यत्र ह्रस्वाकारदीर्घाकारयोरपि विवृतप्रयत्नस्वीकारेण सवर्णसंज्ञा सिध्यतीति भावः ॥

अधिकारोऽयम्, तेन[1] 'सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात्' ॥ बाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति ॥

खयां यमाः खयः ᳲकᳲपौ विसर्गः शर एव च । एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥
कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः । अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः ॥

वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः । पलिक्क्नीः । चख्ख्नतुः । अग्ग्निः । घ्घ्नन्तीत्यत्र क्रमेण कखगघेभ्यः परे तत्सदृशा एव यमाः । तत्र 'वर्गाणां प्रथमद्वितीयाः खयस्तथा तेषामेव यमाः जिह्वामूलीयोपध्मानीयौ विसर्गः शषसाश्चेत्येतेषां विवारः श्वासोऽघोषश्च । अन्येषां[3] तु संवारो नादो घोषश्च ॥ वर्गाणां प्रथमतृतीयपञ्चमाः प्रथमतृतीययमौ यरलवाश्चाल्पप्राणाः । अन्ये महाप्राणाः' इत्यर्थः । बाह्यप्रयत्नाश्च यद्यपि सवर्णसंज्ञायामनुपयुक्तास्तथाप्यान्तरतम्यपरीक्षायामुपयोक्ष्यन्त इति बोध्यम् । कादयो मावसानाः स्पर्शाः । यरलवा अन्तस्थाः । शषसहा ऊष्माणः । अचः[4] स्वराः । ᳲक ᳲप इति कपाभ्यां प्रागर्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयौ । अं अः इत्यचः परावनुस्वारविसर्गौ । **इति स्थानप्रयत्नविवेकः ॥ ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्** * ॥ अकारहकारयोरिकारशकारयोर्ऋकारषकारयोर्लृकारसकारयोश्च मिथः सावर्ण्ये प्राप्ते ॥ **नाज्झलौ** ।१।१।१० ॥ आकारसहितोऽच्[6] आच् स च हल् चेत्येतौ मिथः सवर्णौ न स्तः । तेन[7] दधीत्यस्य हरति शीतलं षष्ठं सान्द्रमित्येतेषु परेषु यणादिकं न । अन्यथा[8] दीर्घादीनामिव हकारादीनामपि ग्रहणकशास्त्रबलादच्त्वं स्यात् । तथा हि ॥ **अणुदित्सवर्णस्य चाप्रत्ययः** । १।१।६९॥ प्रतीयते विधीयत इति प्रत्ययः । अविधीयमानोऽण् उदिच्च सवर्णस्य संज्ञा स्यात् । अत्राण्[10] परेण णकारेण ॥ कु चु टु तु पु एते उदितः ॥ तदेवम्[11] अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशतः । एवं लृकारोऽपि । एचो द्वादशानाम् ॥ एदैतोरोदौतोश्च न

---

१ तेन अधिकारत्वाङ्गीकरणेनेत्यर्थः ॥ २ 'सूर्यआतक्ला' 'पतृक्न्याः' इत्यादावित्यन्वेष्याः ॥ ३ अन्येषामित्यनेन स्वराणामपि संग्रहः ॥ ४ चकारेण स्वराणामपि संग्रहः ॥ ५ 'उत्थानम्' 'वाग्घरिः' इत्यादौ ॥ ६ 'कालसमयवेलासु' 'हे यियाऽ३सो' इति सूत्रभाष्यप्रयोगाभ्यां दीर्घप्लुतावाकारौ बोध्यौ ॥ ७ तेन सवर्णसंज्ञानिषेधेनेत्यर्थः ॥ ८ अन्यथा सवर्णसंज्ञानिषेधानङ्गीकारे ॥ ९ तथा च यणुदाद्या यथायथं स्याताम् ॥ १० तदुक्तम्— 'परोऽप्येतेऽण्ग्रहः सर्वः पूर्वेणैवाण्ग्रहो मतः । ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु' इति ॥ ११ तत् तस्मात् कारणात् एवम् सवर्णग्रहणे व्यक्तिपक्षेऽपि इति शेषः । आकृतिपक्षे तु सवर्णसंज्ञां सवर्णग्रहणं विनापि सर्वेषां ग्रहणसिद्धौ प्रकृतसूत्रेऽण्ग्रहणमदृष्टार्थमेव । तथाचोक्तं वार्तिककृता—'सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्' इति । अयमाकृतिपक्ष एव सिद्धान्तभूतः 'अवात्ताम्' इत्येतदर्थमत्यावश्यकः । व्यक्तिपक्षे तु नैतत् सिध्येदिति बोध्यम् ॥ १२ तथा अष्टादशानां संज्ञेत्यर्थः ॥ १३ त्रिंशत इति । 'ऋलृवर्णयोर्मिथः सावर्ण्यम्' इति सवर्णसंज्ञाया व्यक्तिपक्षे प्रकृतसूत्रेऽण्ग्रहणसत्त्वेन सवर्णस्य ग्रहणे अष्टादशानाम् ऋवर्णसंबन्धिनां द्वादशानां लृवर्णसंबन्धिनां ग्रहणे इति बोध्यम् । सिद्धान्तभूताकृतिपक्षे तु सूत्रेऽण्ग्रहणाभावेन सवर्णग्रहणेऽष्टादशानामेव संज्ञेति तत्त्वम् ॥ १४ इदं च संभवमात्रेणोक्तम् ॥ न त्वस्य क्वापि प्रयोजनम् । लृकारेण ऋकारग्रहणस्य कुत्राप्यदृष्टत्वादिति बोध्यम् ॥

मिथः सावर्ण्यम्। ऐऔजिति सूत्रारम्भसामर्थ्यात्। तेनैचश्चतुर्विंशतेः संज्ञाः स्युरिति नोपादनीयम्॥ नाज्झलाविति निषेधो यद्यप्याक्षरसमाम्नायिकानामेव तथापि हकारस्याऽऽकारो न सवर्णः। तत्राऽऽकारस्यापि प्रश्लिष्टत्वात्। तेन विश्वपाभिरित्यत्र होढ इति ढत्वं न भवति॥ अनुनासिकाननुनासिकभेदेन यवला द्विधा। तेनाननुनासिकास्ते द्वयोर्द्वयोः संज्ञा॥ **तपरस्तत्कालस्य। १। १। ७०॥** तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव संज्ञा स्यात्। तेन अत् इत् उत् इत्यादयः षण्णां षण्णां संज्ञा। ऋदिति द्वादशानाम्॥ **वृद्धिरादैच् १। १। १॥** आत् ऐच्च वृद्धिसंज्ञः स्यात्॥ **अदेङ् गुणः। १। १। २॥** अत् एङ् च गुणसंज्ञः स्यात्॥ **भूवादयो धातवः। १। ३। १॥** क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः॥ **प्राग्रीश्वरान्निपाताः। १। ४। ५६॥** इत्यधिकृत्य॥ **चादयोऽसत्त्वे। १। ४। ५७॥** अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः॥ **प्रादयः। १। ४। ५८॥** अद्रव्यार्थाः प्रादयस्तथा॥ **उपसर्गाः क्रियायोगे। १। ४। ५९॥ गतिश्च। १। ४। ६०॥** प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः॥ प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप। एते प्रादयः॥ **न वेति विभाषा। १। १। ४४॥** निषेधविकल्पयोर्विभाषा संज्ञा स्यात्॥ **स्वं रूपं शब्दस्याशब्दसंज्ञा। १। १। ६८॥** शब्दस्य

---

१ सामर्थ्यादिति। "वर्गाणामुभ्यणां चैव विवृतं करणं स्मृतम्। तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च॥" इति एदोतोर्विवृततरत्वम् ऐदौतोर्विवृततमत्वमिति प्रयत्नभेदादिति तु तत्त्वम्॥ २ आकारसहित इति यदुक्तम्, तस्य फलं दर्शयितुं शङ्कते–नाज्झलाविती'त॥ **आक्षरसमाम्नायिकानामेवेति।** वर्णसमाम्नायपठितानामेवेत्यर्थः। " **वर्णानामुपदेशस्तावत्, उपदेशोत्तरकालेत्संज्ञा, इत्संज्ञोत्तरकालः प्रत्याहारः, प्रत्याहारोत्तरकाला सवर्णसंज्ञा, सवर्णसंज्ञोत्तरकालं सवर्णग्रहणम्।** एतेन समुदितेनान्यत्र सवर्णग्रहणं भवति न स्वस्मिन् नापि स्वाङ्गे" इति वाक्यापरिसमाप्तिन्यायेन 'नाज्झलौ' इत्येतद्धटकाच्पदेन व्यक्तिपक्षे सवर्णग्रहणाभावादिति शङ्काशयः॥ जातिपक्षे तु नैव शङ्कावकाशः। 'नाज्झलौ' इत्यत्रत्याच्पदेनापि दीर्घप्लुतानां ग्रहणस्यावारणीयत्वादिति तत्त्वम्॥ ३ 'अतो गुणे' इत्यत्र तपरकरणाद् बहुव्रीहिसमासम् 'ओदवर्णस्य' इत्यत्र वर्णग्रहणेन पञ्चमं तत्पुरुषं चाभिप्रेत्याह–**तः परो यस्मादित्यादि॥** जातिपक्षेण गुणाभेदकत्वेन व्यक्तिपक्षे सवर्णग्रहणेन चैव सिद्धौ नियमार्थमिदमित्याह–**समकालस्यैवेति॥** तेन भिन्नकालव्यावृत्त्यर्थमिदमिति भावः॥ ४ आकृतिपक्षे सवर्णग्रहणे अण्ग्रहणाभावे ऋकारेण ऌकारग्रहणं नैव संभवतीति विध्यर्थमपीति दर्शयति–**ऋदितीति॥** ऋति तपरकरणसामर्थ्येन ऌकारग्रहणमिति भावः॥ ५ 'आदैच्' इति तपरकरणेन त्रिमात्रचतुर्मात्राणामैचां न वृद्धिसंज्ञा॥ ६ 'अदेङ्' इति तपरकरणेन त्रिमात्रचतुर्मात्राणामेङां न गुणसंज्ञा॥ ७ भुवं भावं क्रियां वदन्ति ते भूवादयः क्रियावाचिन इति यावत्। भू आदिर्येषां ते भूवादयः 'भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते' इति वकारं मंगलार्थमेव मध्ये योजितवान् पाणिनिः। ततो भूवादयश्च भूवादयश्चेत्येकशेष इत्येवं भाष्यसंमतमर्थमाह–**क्रियावाचिन इत्यादि॥** ८ भ्वादयस्तिङन्ते वक्ष्यमाणाः॥ ९ 'ईश्वरे तोसुनकसुनौ' इत्येतद्व्यावृत्तये 'अधिरीश्वरे' इत्येतत्संग्रहाय रेफविशिष्टोपादानम्॥ १० चादयोऽव्ययप्रकरणे वक्ष्यन्ते॥ ११ व्याकरणे शब्दपरयोरपि न वा शब्दयोः 'इति' शब्दबलेनार्थपरतामाश्रित्याह–**निषेधविकल्पयोरिति॥** १२ स्वं च स्वा च स्वम् 'नपुंसकमनपुंसकेन' इत्येकशेषः। एवं च रूप्यते बोध्यते रूपोऽर्थः, रूप्यतेऽनेनेति रूपम् आनुपूर्वी। रूपं च रूपश्च रूपम् इत्येकशेषः॥ एवं च स्वीयार्थविशिष्टा स्वीयानुपूर्वीसंज्ञिनीति '**अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्**' इति परिभाषा निष्पन्ना भवति॥

स्वं रूपं संज्ञि शब्दशास्त्रे या संज्ञा तां विना॥ **येन विधिस्तदन्तस्य । १ । १ । ७२ ॥** विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य च रूपस्य ॥ **समासप्रत्ययविधौ प्रतिषेधः * ॥ उगिद्वर्णग्रहणवर्जम् * ॥ विरामोऽवसानम् । १ । ४ । ११०** वर्णानामभावोऽवसानसंज्ञः स्यात् ॥ **परः संनिकर्षः संहिता । १ । ४ । १०९ ॥** वर्णानामतिशयितः संनिधिः संहितासंज्ञः स्यात्॥ **सुप्तिङन्तं पदम् । १ । ४ । १४ ॥** सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ॥ **हलोऽनन्तराः संयोगः । १ । १ । ७ ॥** अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ॥**ह्रस्वं लघु । १ । ४ । १० ॥ संयोगे गुरु । १ । ४ । ११ ॥** संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात् ॥ **दीर्घं च । १ । ४ । १२ ॥**

इति *संज्ञाप्रकरणम् ॥

## अथ परिभाषाप्रकरणम् ।

**इको गुणवृद्धी । १ । १ । १३ ॥** गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठते ॥ **अचश्च । १ । २ । २८ ॥** ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयते तत्राच इति षष्ठ्यन्तं पदमुपतिष्ठते ॥ **आद्यन्तौ टकितौ । १ । १ । ४६ ॥** टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः ॥ **मिदचोऽन्त्यात्परः । १ । १ । ४७ ॥** अच इति निर्धारणे षष्ठी ॥ अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् ॥**षष्ठी स्थानेयोगा । १ । १ । ४९ ॥** अनिर्धारितसंबन्धविशेषा षष्ठी स्थानेयोगा बोध्या । स्थानं च प्रसङ्गः ॥ **स्थानेऽन्तरतमः । १ । १ । ५० ॥** प्रसङ्गे सति सदृशतम आदेशः स्यात् ॥ **यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥ तस्मिन्निति निर्दिष्टे पूर्वस्य । १ । १ । ६६ ॥** सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् ॥ **तस्मादित्युत्तरस्य । १ । १ । ६७ ॥** पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ॥ **अलोऽन्त्यस्य ।**

---

१ 'येन इति करणे तृतीया करणं च अप्रधानं भवति । तथाचाप्रधानता विशेषणविशेष्ययोः समवधाने विशेषण एव भवतीत्याशयेनाह–**विशेषणमिति** ॥२–३ शब्दे वर्णात्मके संभवादाह–**वर्णानामिति** ॥ ४ व्यवधानं च विजातीयैरेवाभिप्रेतमित्याह– **अज्भिरिति** ॥ 'ऐऔच्' इतिसूत्रस्थचकारस्य कुत्वं नैव भवति 'जश्त्वं तु भवति' इति 'अल्पाच्तरम्' सिद्धमनच्त्वात्' 'कथमनच्त्वम्' 'हलश्चेजुपधात्' 'यजन्तानाम्' इति सूत्रवार्तिकभाष्यप्रयोगैरवसीयते ॥ सप्तमीबहुवचने सुपि 'अक्षु' 'एक्षु' इति भाष्ये दृश्यते । तद्भाष्यकृत्कृतमेवेति प्राञ्चो यथाश्रुतप्रमाणवादिनः । शोधकशोधितमिति नव्याः ॥ * संज्ञावाक्येषु द्विविधा गतिः–संज्ञासंज्ञिनोरुभयोरेकविभक्त्यैव निर्देशः यथा–'ओमित्येकाक्षरं ब्रह्म' 'वृद्धिरादैच्' इत्यादिषु । क्वचिच्च संज्ञिनि षष्ठ्यपीति । यथा 'तपरस्तत्कालस्य' इत्येवमुभयविधोऽपि व्यवहारः शास्त्रसंमत एवेति दर्शयितुमिदं दिक्प्रदर्शनम् ॥ 'प्रथमाध्यायस्थानां स्वरसंध्युपयुक्तानां संज्ञानां प्रकरणं समाप्तम्' इति नागेशोक्तिस्तु न समीचीना । टि–प्रगृह्यसंज्ञयोः स्वरसंध्युपयुक्तयोरपि अत्रानुक्तत्वादिति ॥ ५–६ षष्ठ्यन्तानुकरणं प्रथमान्तमिति प्रथमायाः 'सुपां सुलुक्' इति लुकि 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात् 'अत्वसन्तस्य' इति दीर्घो न भवति ॥ ७ तेन 'चेता स्तोता' इत्यादौ प्रमाणकृतान्तर्यात्प्राप्तोऽप्यकारो गुणो न भवति, किंतु स्थानकृतान्तर्याद् एकार ओकार एव वा भवति ॥ ८. तेन 'सुद्ध्युपास्यः' इत्यत्र धकारोत्तरवर्तिन ईकारस्यैव यण् जायते न तकारयोः ॥

१।१।५२ ॥ षष्ठीनिर्दिष्टस्यान्त्यस्याल आदेशः स्यात् ॥ **ङिच्च** ।१।१।५३ ॥ अयमप्यन्त्यस्यैव स्यात् । सर्वस्येत्यस्यापवादः ॥ **आदेः परस्य** ।१।१।५४ ॥ परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । अलोऽन्त्यस्येत्यस्यापवादः ॥ **अनेकाल् शित्सर्वस्य** ।१।१।५५ ॥स्पष्टम् । अलोऽन्त्यसूत्रापवादः । अष्टाभ्य औशित्यादावादेः परस्येत्येतदपि परत्वादनेन बाध्यते ॥ **स्वरितेनाधिकारः** ।१।३।११ ॥ स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम् ॥ *परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥ **असिद्धं बहिरङ्गमन्तरङ्गे** ॥अकृतव्यूहाः पाणिनीयाः ॥ निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीत्यर्थः ॥

इति परिभाषाप्रकरणम् ।

## अथाच्संधिप्रकरणम् ।

**इको यणचि** ।६।१।७७ ॥ इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते । स्थानत आन्तर्यादीकारस्य यकारः । सुध्य् उपास्य इति जाते ॥ **अनचि च** ।८।४।४७ ॥अचः परस्य यरो द्वे वा स्तो न त्वचि ॥ इति धकारस्य द्वित्वम् ॥ **स्थानिवदादेशोऽनल्विधौ** ।१।१।५६ ॥ आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ । अनेनेह यकारस्य स्थानिवद्भावेनाच्त्वमाश्रित्यानचीति द्वित्वनिषेधो न शङ्क्योऽनल्विधाविति तन्निषेधात् ॥ **अचः परस्मिन्पूर्वविधौ** ।१।१।५७ ॥ अल्विध्यर्थमिदम् । परनिमित्तोऽजादेशः स्थानिवत्स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये ॥ इति स्थानिवद्भावे प्राप्ते ॥ **न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु** ।१।१।५८ ॥ पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् । इति स्थानिवद्भावनिषेधः ॥ **झलां जश् झशि** ।८।४।५३ ॥ स्पष्टम् । इति धकारस्य दकारः ॥**अदर्शनं लोपः** ।१।१।६० ॥ प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् ॥ **संयोगान्तस्य लोपः** ।८।२।२३ ॥ संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात् ॥ इति यलोपे प्राप्ते ॥ यणः प्रतिषेधो वाच्यः * ॥ यणो मयो द्वे वाच्ये * ॥ मय इति पञ्चमी यण इति षष्ठीति पक्षे यकारस्यापि

---

१ अनन्यार्थङित्करणादिति अन्यार्थङित्करणे नानङि तु सर्वादेशतैवेति व्यक्तीभविष्यति ॥ २ आदिना 'अतो भिस ऐस्' इत्यादीनां संग्रहः ॥ - परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसंनिपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वम्, इति ( प्रत्ययोत्तरपदयोश्च ) इत्यत्र कैयटः ॥ ३ 'अन्तरङ्गे कार्ये कर्तव्ये जातं समकालप्राप्तं च बहिरङ्गमसिद्धम्' इत्यर्थः ॥ जातं 'पचावेदम्' इत्यादौ । समकालप्राप्तम् ''अव आ इहि' इत्यत्र 'अकः सवर्णे दीर्घः' इत्यसिद्धम् 'आद्गुणः' इति गुणे कर्तव्ये ॥ ४ निमित्तविनाशे व्यूहः निमित्तविनाशव्यूहः 'विनाऽपि प्रत्ययं पूर्वोत्तरपदलोपो वक्तव्यः' इति लोपेन 'न कृतो निमित्तविनाशे व्यूहो यत्नविन्यासो यैः' इत्येतत्फलितमाह–**निमित्तमिति** ॥ ५ इत्थं लिङ्गवत्यः परिभाषा भवन्तीति दिक्प्रदर्शनार्थैवेदं प्रकरणमिति यथासंख्यपरिभाषादीनामत्राकथनेऽपि न प्रतिज्ञाहानिः ॥ ६ 'अजुपश्लिष्टस्य इकः स्थाने यण् स्यात्' इत्यर्थः ॥ 'अजव्यवहितपूर्वस्येकः' इति परमार्थः ॥ ७ 'व्यक्त्युपदेशपक्षेऽपि' इत्यादिः ॥ ८ अनेन स्थानिवत्सूत्रेण ॥ इह सुध्य् उपास्य इत्यत्र ॥ अच्त्वं यकारस्येति भावः ॥ द्वित्वनिषेधो धकारस्येति भावः ॥ ९ स्थानिवद्भावे द्वित्वनिषेधप्रयोजके इत्यादौ शेषः ॥ १० असंदेहायादेशो न कृतः ॥ ११ धकारस्य पूर्वस्येत्यादौ शेषः ॥

द्वित्वम् । तदिह धकारयकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि एकधमेकयम् । द्विधं द्वियम् । द्विधमेकयम् । एकधं द्वियम् । सुद्ध्युपास्यः । मद्‌ध्वरिः धात्रंशः । लाकृतिः ॥ **नादिन्याक्रोशे पुत्रस्य ।८।४।४८ ॥** पुत्रशब्दस्य न द्वे स्त आदिनीशब्दे परे आक्रोशे गम्यमाने । पुत्रादिनी त्वमसि पापे । आक्रोशे किम्? तत्त्वकथने द्विर्वचनं भवत्येव पुत्त्रादिनी सर्पिणी ॥ **तत्परे च*॥** पुत्रपुत्रादिनी त्वमसि पापे ॥ **वा हतजग्धयोः* ॥** पुत्रहती । पुत्त्रहती । पुत्रजग्धी । पुत्त्रजग्धी ॥ **त्रिप्रभृतिषु शाकटायनस्य । ८ । ४ । ५० ॥** त्र्यादिषु वर्णेषु संयुक्तेषु वा द्वित्वम् । इन्न्द्रः । इन्द्रः । राष्ट्ष्ट्रम् । राष्ट्रम् ॥ **सर्वत्र शाकल्यस्य । ८ । ४ । ५१ ॥** द्वित्वं न । अर्कः । ब्रह्मा ॥ **दीर्घादाचार्याणाम् । ८ । ४ । ५२ ॥** द्वित्वं न । दात्रम् । पात्रम् ॥ **अचो रहाभ्यां द्वे । ८ । ४ । ४६ ॥** अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । हर्य्यनुभवः। हर्यनुभवः । नह्य्यस्ति । नह्यस्ति । **हलो यमां यमि लोपः ।८।४।६४॥** हलः परस्य यमो लोपः स्याद्वा यमि । इति लोपपक्षे द्वित्वाभावपक्षे चैकयं रूपं तुल्यम् । लोपारम्भफलम् आदित्यो देवताऽस्येत्यादित्यं हविरित्यादौ । यमां यमीति यथासंख्यविज्ञानान्नेह माहात्म्यम् ॥ **एचोऽयवायावः ।६।१।७८॥** एचः क्रमादय् अव् आय् आव् एते स्युरचि ॥ **तस्य लोपः । १।३।९ ॥** तस्येतो लोपः स्यात् । इति यवयोर्लोपो न । उच्चारणसामर्थ्यात् । एवं चेत्संज्ञापीह न भवति[10] । हरये । विष्णवे । नायकः । पावकः ॥ **वान्तो यि प्रत्यये । ६।१।७९ ॥** यकारादौ प्रत्यये परे ओकारौकारयोरवावौ एतौ स्तः । गोर्विकारो गव्यम् । गोपयसोर्यदिति यत् । नावा तार्यं नाव्यम् । नौवयोधर्मेत्यादिना यत् ॥ **गोर्यूतौ छन्दस्युपसंख्यानम्*॥अध्वपरिमाणे च* ॥** गव्यूतिः । ऊतियूतीत्यादिना यूतिशब्दो निपातितः॥ वान्ते इत्यत्र वकाराद्गोर्यू-

---

१ सूत्रे 'आदिनी' इति लुप्तसप्तम्यन्तमिति भावः ॥ आदिनीशब्दाव्यवहितपूर्वस्य पुत्रशब्दस्य यजव्यवहितपरो यो यर् तस्य द्वित्वं नेत्यर्थः । 'पूर्वत्रासिद्धीयमद्विर्वचने' इति परिभाषया द्वित्वप्रकरणस्यासिद्धत्वाभावबोधनेन, एकादेशस्य स्थानिवत्त्वेन एकदेशविकृतस्यानन्यत्वेन वा सर्वेष्टसिद्धिरिति बोध्यम् ॥ २ तस्मात् पुत्रशब्दात् परः तत्पर इति समासेन पुत्रशब्दात्परे आदिनीशब्दे परे पुत्रशब्दसम्बन्धियजव्यवहितपरस्य यरो न द्वित्वमित्येवार्थः ॥ 'आदिनी शब्दपरके' इत्यर्थे तु 'पुत्रपौत्रादिनी' 'पुत्रमांसादिनी' इत्यत्रापि निषेधापत्तिः स्यात् ॥ ३ 'न पुत्रस्य द्वित्वम्' इति वर्तते ॥ ४ 'द्वित्वं न' इति वर्तते । विधिविकल्पनिषेधविकल्पयोः फले भेदाभावात् 'न इति त्यक्तम् ॥ ५ 'न न्द्राः संयोगादयः' इति द्वित्वनिषेधस्तु **अनन्तरस्य विधिर्वा प्रतिषेधो वा** ' इति पाष्ठद्वित्वस्यैवेति भावः ॥ ६ 'यरोऽनुनासिके' इत्यतः 'यरः' इति 'वा' इति वर्तते । 'तस्मादिति' इति परिभाषया पञ्चमीश्रुतिभ्यां 'पदस्य' इति द्विरुपतिष्ठते ॥ ७ काशिकासंमतपाठे 'झयो हः' इत्यतः 'अन्यतरस्याम्' इति भाष्यसंमतसूत्रपाठे 'वाऽवसाने' इत्यतः 'वा' इत्यनुवर्तते ॥ ८ 'शत्रुं मित्रं कलत्रं च जय रञ्जय भञ्जय' इत्यादौ लोकेऽपि क्रमेणैवान्वयदर्शनादत्रापि तथैवोचितमित्याह-**क्रमादिति** ॥९ 'तद्' शब्दार्थमेवाह-**इत इति** ॥ १० **न भवतीति**॥ 'फलाभावात्' इति शेषः ॥ ११ 'यस्मिन्विधिस्तदादावल्ग्रहणे' ॥ अल्ग्रहणे सप्तम्यन्ते विशेषणीभूते यो विधिर्विधीयते स तदादौ ज्ञेयः । तदन्तविधेरपवाद एवायम् ॥ १२ भाषायामपि ॥ १३ 'वान्तो यि प्रत्यये' इत्यनेन गतार्थताशङ्कामपनयति **यूतिशब्द इति** ॥ १४ 'गव्यं नाव्यम्' इत्यत्र भसंज्ञया पदसंज्ञाया बाधाल्लोपस्याप्राप्तावपि 'गव्यूतिः' इत्यत्र 'लोपः शाकल्यस्य' इति 'हलि सर्वेषाम्' इति वा प्राप्तं लोपं वारयितुमाह-**वान्त इत्यत्रेति** ॥

तावित्यत्र छकारात्पूर्वभागे लोपो व्योर्वलीति लोपेन वकारः प्रश्लिष्यते। तेन श्रूयमाणवकारान्त आदेशः स्यात्। वकारो न लुप्येत इति यावत्॥ **धातोस्तन्निमित्तस्यैव। ६। १। ८०॥** यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि तन्निमित्तस्यैव नान्यस्य। लव्यम्। अवश्यलाव्यम्। तन्निमित्तस्यैवेति किम्? ओयते। औयत॥ **क्षय्यजय्यौ शक्यार्थे। ६।१। ८१॥** यान्तादेशनिपातनार्थमिदम्॥ क्षेतुं शक्यं क्षय्यम्। जेतुं शक्यं जय्यम्। शक्यार्थे किम्। क्षेतुं जेतुं योग्यं क्षेयं पापं जेयं मनः॥ **क्रय्यस्तदर्थे। ६।१।८२॥** तस्मै प्रकृत्यर्थायेदं तदर्थम्। क्रेतारः क्रीणीयुरिति बुद्ध्या आपणे प्रसारितं क्रय्यम्। क्रेयमन्यत्। क्रयणार्हमित्यर्थः॥ **लोपः शाकल्यस्य। ८। ३।१९॥** अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि परे॥ पूर्वत्रासिद्धमिति लोपशास्त्रस्यासिद्धत्वान्न स्वरसंधिः। हर एहि। हरयेहि। विष्ण इह। विष्णविह। श्रिया उद्यतः। श्रियायुद्यतः। गुरा उत्कः। गुरावुत्कः॥ कानि सन्ति कौ स्त इत्यत्रास्तेरल्लोपस्य स्थानिवत्त्वेन यणावादेशौ प्राप्तौ न पदान्तेतिसूत्रेण पदान्तविधौ तन्निषेधान्न स्तः॥ **एकः पूर्वपरयोः। ६।१।८४॥** इत्यधिकृत्य॥ **आद्गुणः। ६। १। ८७॥** अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात्संहितायाम्। उपेन्द्रः। रमेशः। गङ्गोदकम्॥ **उरण् रपरः। १।१।५१॥** ऋ इति त्रिंशतः संज्ञेत्युक्तम्। तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते। तत्रान्तरतम्यात्कृष्णर्द्धिरित्यत्रार्। तवल्कार इत्यत्राल्। अचो रहाभ्यामिति पक्षे द्वित्वम्॥ **झरो झरि सवर्णे। ८।४।६५॥** हलः परस्य झरो लोपो वा स्यात्सवर्णे झरि। द्वित्वाभावे लोपे सत्येकधम्। असति लोपे द्वित्वलोपयोर्वा द्विधम्। सति द्वित्वे लोपे चासति त्रिधम्।

---

१ वार्तिकेन लोपाभावोऽपि निपात्यते। 'बाधकान्येव निपातनानि' इति सर्वनामसंज्ञासूत्रे भाष्ये स्पष्टम्॥ २ यदि प्रत्ययनिमित्तस्य चेद्धातोरेव इति नियमे 'शङ्कव्यं दारु' इत्यादौ वान्तादेशो नैव स्याद् अत इतो ऽवधारणार्थे एवकारे 'वान्तो यि प्रत्यये' इत्यनेन वान्तादेशसिद्धौ एतत्सूत्रविधेयमाह-**नान्यस्यति**॥ ३ एतत्सूत्रफलं पृच्छति-**तन्निमित्तस्यैवेति किमिति**॥ ४ फलं दर्शयति- **ओयत इति** अयं गुणो न यादिप्रत्ययनिमित्तः किंतु एकादेश इति भावः॥ ५ आङ्पसर्गधात्वोरेकादेशो बहिरङ्गत्वेनासिद्ध इति नैवात्रापत्तिरत इतरत्र दूषणं ददाति-**औयतेति**। अत्राडागममाश्रित्य वृद्धिः न पदद्वयसवन्धिवर्णनिमित्तिकेति भावः॥ ६ **अयं** भावः-वाक्यसंस्कारपक्षे येन क्रमेण पदानां प्रयुयुक्षा तेनैव क्रमेण पदानां संस्कार इति 'किम् + जस् अस्+झि' इति स्थिते पूर्वं 'कानि' इत्येतत् संसाध्य पश्चात् 'सन्ति' इत्यस्य साधने 'कौ' इत्यस्य साधनोत्तरं 'स्तः' इत्यस्य साधने 'श्नसोरल्लोपः' इत्यनेन क्रियमाणस्य सार्वधातुकनिमित्तकस्य अकारलोपस्य स्थानिभूतादकाररूपादचः पूर्वत्वेन लोपात्प्रागदृष्टस्य नकारोत्तरवर्तिन इकारस्य ककारोत्तरवर्तिन औकारस्य च यणि आवादेशे च कर्तव्येऽकारलोपस्य स्थानिवत्त्वेनाच्परत्वमाश्रित्य यणावादेशौ प्राप्तौ पदे सन्ति स्त इत्येतस्मिन् परे चरमावयवे यणि आवि च कर्तव्ये परपदस्थाजादेशो न स्थानिवत् इति स्थानिवत्त्वनिषेधेनाच्परत्वाभावान्नैव भवत इति भावः। **'नेह प्रयोगनियम आरभ्यते संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते'** इति पदसंस्कारपक्षे पूर्वं 'सन्ति स्तः' इत्यनयोः साधने तु नैव यणावोः प्राप्तिः॥ ७ रपर इत्यत्र 'र' इत्यत्राकारः प्रत्याहारायेत्संज्ञक इति वदतः कैयटस्य मते सूत्रेणैव लृकारस्थानिक णि लपरत्वं सिद्ध्यति॥ 'रदाभ्याम्' 'रषाभ्याम्' 'धनो र च' इत्यादावुच्चारणार्थ एव 'रपरः' इत्यत्राप्यकार इति वदतां सिद्धान्तिनां मते 'ऌकारस्याण् लपरः' इत्यपूर्वमेव वचनं करणीयमिति बोध्यम्॥

कृष्णर्धिः । कृष्णर्द्धिः । कृष्णर्द्द्धिः ॥ यण इति पञ्चमी मय इति षष्ठीति पक्षे ककारस्य द्वित्वम् । लस्य त्वनचि चेति । तेन तवल्कार इत्यत्र रूपचतुष्टयम् ॥

द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि । तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम् ॥

**वृद्धिरेचि** ।६।१।८८॥ आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ॥ **एत्येधत्यूठ्सु**।६।१। ८९ ॥ अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । पररूपगुणापवादः । उपैति । उपैधते । प्रष्ठौहः । एजाद्योः किम् । उपेतः । मा भवान्प्रेदिधत् ॥ पुरस्तादपवादन्यायेनेयं वृद्धिरेङि पररूपमित्यस्यैव बाधिका न त्वोमाङोश्चेत्यस्य । तेनावैहीति वृद्धिरसाधुरेव ॥ **आक्षादूहिन्यामुपसंख्यानम्** * ॥ अक्षौहिणी सेना ॥ **स्वादीरेरिणोः** * ॥ स्वैरः । स्वेनेरितुं शीलमस्येति स्वैरी । स्वैरिणी । **प्रादूहोढोढ्येषैष्येषु** * ॥ प्रौहः प्रौढः ॥ **अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्** ॥ ( "श्वयुवमघोनामतद्धिते" इतिसूत्रे राजेः पृथग् भ्राजिग्रहणाज्ज्ञापकात्" । ) तेन उढग्रहणेन क्तान्तमेव गृह्यते, न तु क्तवत्वन्तस्यैकदेशः । प्रोढवान् । प्रौढिः । इष इच्छायां तुदादिः । इष गतौ दिवादिः । इष आभीक्ष्ण्ये क्र्यादिः । एषां घञि ण्यति च—एषः एष्य इति रूपे तत्र पररूपे प्राप्तेऽनेन वृद्धिः । प्रैषः ॥ यस्तु ईष उञ्छे । यश्च ईष गतिहिंसादर्शनेषु । तयोर्दीर्घोपधत्वात् ईषः । ईष्यः । तत्राद्गुणेन । प्रेषः । प्रेष्यः ॥ **ऋते च तृतीयासमासे** * सुखेन ऋतः सुखार्तः । तृतीयेति किम् ? परमर्तः ॥ **प्रवत्सतरकम्बलवसनार्णदशानामृणे** * ॥ प्रार्णम् । वत्सतरार्णमित्यादि ॥ ऋणस्यापनयनाय यदन्यदृणं क्रियते तदृणार्णम् । दशार्णो देशः । नदी च दशार्णा । ऋणशब्दो दुर्गभूमौ जले च ॥ **उपसर्गादृति धातौ** ।६।१। ९१ ॥ अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरे-

---

१ गुणस्य अप्राप्तियोग्ये वृद्धिनैव चरितार्थेति वृद्धिर्गुणं बाधते । वृद्धेरप्राप्तियोग्ये उपेन्द्र इत्यादौ गुणस्य चरितार्थत्वाद् गुणो वृद्धिं नैव बाधत इति भावः ॥ २ 'आद् गुणः' इत्यतो गुणपदं नैवानुवर्तते वृद्धेर्विधेयान्तरस्योपादानात् । किंतु 'आत्' इत्येवानुवर्तते 'वृद्धिरेचि' इति च तत्र 'एचि' इति न ऊठो विशेषणम् । असंभवात् किंत्वेत्येधत्योरेवेत्याह—**एजाद्योरिति** ॥ ३ 'वृद्धिरेचि' इत्यनेनैव सिद्धौ 'एत्येधति' ग्रहणं वृद्धिबाधकपररूपबाधनार्थमेवेत्याह—**पररूपेति**॥ ४ 'इणीकारादौ प्रतिषेधः' इति वार्तिकालोचनेन ण्यन्तस्यैधधातोर्लुङ्यनभिधानमिति नव्याः ॥ ५ **'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्'** इति न्यायशरीरम् । प्राक्पठिता अपवादा अनन्तरान् बाध्येषु प्राक्पठितान् बाध्यानेव बाधन्ते न तु प्रथमबाध्यव्यवहितान्' इति तदर्थः ॥ एवं च 'एङि पररूपम्' इत्यस्य बाधनेन श्रान्तः 'ओमाङोश्च' इत्येतं बाधितुं नैवोत्सहते इति भावः ॥ ६ 'अवर्णान्तादक्षशब्दात् अजादावूहिन्यां परतः पूर्वान्त्यपराद्योर्वृद्धिरेकादेश इत्यर्थः ॥ ७ अवर्णान्तात् स्वशब्दात् अजाद्योरीरेरिणोः परतः पूर्वान्त्यपराद्योर्वृद्धिरेकादेश इत्यर्थः ॥ ८ 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इत्यनेन वृद्धिः सिध्यतीति भावः ॥ ९ 'स्वं रूपम्' इत्यस्यैवार्थभूतेयं परिभाषेत्युक्तमेव प्राक् ॥ १० "अयं पाठो मनोरमास्थः ॥ ११ पूर्वान्त्यपराद्योः इति शेषः ॥ तेन अवर्णऋकारयोरेव स्थानित्वमिति भावः ॥

कादेशः स्यात् । प्राच्छीति । उपाच्छीति ॥ **अन्तादिवच्च ।६।१।८५ ॥** योऽयमेकादेशः स-पूर्वस्यान्तवत्परस्यादिवत्स्यात् ॥ इति रेफस्य पदान्तत्वे ॥ **खरवसानयोर्विसर्जनीयः । ८।३।१५ ॥** खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात्पदान्ते । इति विसर्गे प्राप्ते—अन्तवद्भावेन पदान्तरेफस्य न विसर्गः, उभयथर्क्षु कर्तरि चर्षिदेवतयोरित्यादिनिर्देशात् ॥ उप-सर्गेणैव धातोराक्षेपे सिद्धे धाताविति योगविभागेन पुनर्वृद्धिविधानार्थम् ॥ तेन ऋत्यक इति पाक्षिकोऽपि प्रकृतिभावोऽत्र न भवति ॥ **वा सुप्यापिशलेः । ६ । १ । ९२ ॥** अवर्णान्तादु-पसर्गादृकारादौ सुब्धातौ परे वृद्धिर्वा स्यात् । आपिशलिग्रहणं पूजार्थम् । प्रार्षभीयति । प्रर्ष-भीयति । सावर्ण्यात् लृवर्णस्य ग्रहणम् ॥ प्राल्कारीयति । प्रल्कारीयति । तपरत्वाद्दीर्घे न । उपऋृकारीयति । उपर्कारीयति। **एङि ।पररूपम् ।६।१।९४॥** आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् । प्रेजते । उपोषति ॥ इह वा सुपीत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् ॥ तेन एङादौ सुब्धातौ वा—उपेडकीयति । उपैडकीयति । प्रोघीयति । प्रौघीयति ॥ **एवे चा-नियोगे** * ॥ नियोगोऽवधारणम् । क्वेव भोक्ष्यसे । अनवक्लृप्तावेवशब्दः ॥ अनियोगे किम् ? तवैव ॥ **अचोऽन्त्यादि टि । १ । १ । ६४ ॥** अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् ॥ **शकन्ध्वादिषु पररूपं वाच्यम्** * ॥ तच्च टेः । शकन्धुः । कर्कन्धुः । कुलटा । सी-मन्तः केशवेशे । सीमान्तोऽन्यः । मनीषा । हलीषा । लाङ्गलीषा । पतञ्जलिः॥ सारङ्गः पशु-पक्षिणोः । साराङ्गोऽन्यः ॥ आकृतिगणोऽयम् ॥ मार्तण्डः । **ओत्वोष्ठयोः समासे वा** * ॥ स्थूलोतुः । स्थूलौतुः । बिम्बोष्ठः । बिम्बौष्ठः । समासे किम् ? तवौष्ठः ॥ **ओमाङोश्च । ६ । १ । ९५ ॥** ओमि आङि चात्परे पररूपमेकादेशः स्यात् । शिवायोंनमः ॥ शिव एहि । शिवेहि ॥ **अव्यक्तानुकरणस्यात इतौ । ६।१।९८ ॥** ध्वनेरनुकरणस्य योऽच्छब्दस्तस्मादितौ परे पर-रूपमेकादेशः स्यात् । पटत् इति पटिति ॥ **एकाचो न** *॥ श्रदिति ॥ **नाम्रेडितस्यान्त्यस्य तु वा ।६।१।९९ ॥** आम्रेडितस्य * प्रागुक्तं न स्यादन्त्यस्य तु तकारमात्रस्य वा स्यात् ॥ **डाचि बहुलं द्वे भवतः** *॥ इति बहुलवचनाद् द्वित्वम् ॥ **तस्य परमाम्रेडितम् ।८।१।२॥** द्विरुक्तस्य

---

१ 'एकः पूर्वपरयोः' इत्यधिक्रियते । 'एकादेशशास्त्रप्रवृतेः प्राक् अन्तघटितपूर्वे आदिघटितपरे वा ये ये धातुत्वप्रादिपदिकत्वनिपातत्वोपसर्गत्वादिविशिष्टधर्मा दृष्टाः ते कृतैकादेशेऽप्यतिदिश्यन्ते' इति निर्गलितोऽर्थः ॥ २ 'प्र×ऋच्छति' इत्यस्यामवस्थायां 'प्र' इत्यत्र यत् पदत्वमासीत् तत् 'प्रार्' इति कृतैकादेशेऽप्यतिदिष्टमिति रेफस्य पदान्तत्वे समवगते इत्यर्थः ॥ ३ पदान्ते किम् ? अर्कः । वर्षः ॥ ४ ' उपसर्गाः क्रियायोगे' इति क्रियायोग एव विधीयमानोपसर्गसंज्ञा धातुप्रयोगमन्तराऽसंभवन्ती धातोराक्षेपं करिष्यतीति धातावेवास्य प्रवृत्तिर्भविष्यतीति धातुग्रहणं व्यर्थमेवेति भावः ॥ ५ 'उपसर्गादृति' इति सूत्रेण धातावेव वृद्धिर्विहिता । पुनः 'धातौ' इत्यत्रापि 'उपसर्गादृति' इत्यनुवर्त्योक्तेनैवार्थेन पुनर्वृद्धिर्विधीयते । तेन बाधकबाधनमेव क्रियते पुनर्विधानेनेति भावः ॥ ६ ' पूर्वान्तपराद्योः' इत्यादिः ॥ ७ निश्चय इत्यर्थः ॥ ८ अच इति निर्धारणे षष्ठी ॥ ९ तदिति समुदितरूपमित्यर्थः ॥ १० भाष्ये तु नैतद् दृश्यते, मनीषा-पतञ्जलि-प्रभृतीनां पृषोदरादिगणे पाठस्य कल्पनेनेष्टसिद्धेः कैयटेन प्रदर्शितत्वात् ॥ * पररूपमित्यर्थः ॥

परं रूपमाम्रेडितसंज्ञं स्यात् ॥ पटत्पटेति ॥ **झलां जशोऽन्ते ।८।२।३९ ॥** पदान्ते झलां जशः स्युः । पटत्पटदिति ॥ **अकः सवर्णे दीर्घः ।६।१।१०१ ॥** अकः सवर्णेऽचि परे दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । अचि किम् ? कुमारी शेते । नाज्झलाविति सावर्ण्यनिषेधस्तु न दीर्घशकारयोः । ग्रहणकशास्त्रस्य सावर्ण्यविधिनिषेधाभ्यां प्रागनिष्पत्तेः । अकः किम् ? हरये ॥ ("अकोऽकि दीर्घ इत्येव सुवचम्") **ऋति सवर्णे ऋ वा * ॥** होतृकारः । होतॄकारः ॥ **ऌति सवर्णे ऌ वा * ॥** होतॢकारः । पक्षे ऋकारः सावर्ण्यात् । होतॄकारः । ऋति ऋ वा ऌति ऌ वेत्युभयत्रापि विधेयं वर्णद्वयं द्विमात्रम् । आद्यस्य मध्ये द्वौ रेफौ तयोरेका मात्रा, अभितोऽज्भक्तेरपरा । द्वितीयस्य तु मध्य द्वौ लकारौ । शेषं प्राग्वत् । इहोभयत्रापि ऋत्यक इति पाक्षिकः प्रकृतिभावो वक्ष्यते॥**एङः पदान्तादति ।६।१।१०९ ॥** पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव ॥ **सर्वत्र विभाषा गोः ।६।१। १२२॥** लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात्पदान्ते । गोअग्रम् । गोऽग्रम्। एङन्तस्य किम् ? चित्रग्वग्रम् । पदान्ते किम् ? गोः ॥ **अवङ् स्फोटायनस्य ।६।१।१२३॥** अतीति निवृत्तम् । अचि परे पदान्ते गोरवङ् वा स्यात् । गवाग्रम् । पदान्ते किम् ? गवि। व्यवस्थितविभाषया गवाक्षः ॥ **इन्द्रे च ।६।१।१२४ ॥**गोरवङ् स्यादिन्द्रे । गवेन्द्रः । **अथ प्रकृतिभावः॥ प्लुतप्रगृह्या अचि नित्यम् । ६ ।१। १२५॥** प्लुताः प्रगृह्याश्च वक्ष्यन्ते तेऽचि नित्यं प्रकृत्या स्युः । एहि कृष्ण ३ अत्र गौश्चरति । हरी एतौ ॥ नित्यमिति किम् ?

---

१–'नाज्झलौ' इति निषेधेन ईकारशकारयोः सावर्ण्यपरिहारेण 'कुमारी शेते' इत्यत्र दीर्घापत्ति-वारणे किम् 'अचि' इत्यस्यानुवृत्त्या इति शङ्कां परिहरति–**नाज्झलाविति निषेधस्त्विति** ॥ अस्याभिप्रायः 'नाज्झलौ, इति निषेधो यथान्याक्षरसमाम्नायिकानामेवेत्यत्र प्रकटीकृतः ॥ २"अयं पाठो मनोरमास्थः" ३ 'अमि पूर्वः' इत्यतः 'पूर्वः' इति 'एकः पूर्वपरयोः' इति चानुवर्तेतेऽत आह-**पूर्वरूपमिति** ॥ ४ 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वस्यामन्त्रितस्याविद्यमानवत्त्वं परस्यैव कार्ये कर्तव्ये भवति । पूर्वशब्दस्य परसापेक्षत्वादिति 'हरे' 'विष्णो' इत्यनयोर्नाविद्यमानवत्त्वमिति भावः ॥ ५ कृतह्रस्वेऽपि 'एकदेशविकृतमनन्यवत्' इति परिभाषया गोत्वमतिदिश्यत एवेति प्रकृतिभावापत्तिः । एङ्ग्रहणे कृते तु 'विकृतावयवनिबन्धनकार्ये नायं न्यायः' इति एङन्तत्वं नैवागच्छतीति भावः ॥ ६ अत्रास्वरितत्वसूचिका व्याख्यैव प्रमाणम् ॥ ७ 'देवत्रातो गलो ग्राह इतियोगे च सद्विधिः । मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥' इति निर्णयात् ॥ ८ विभाषापदानुवृत्तेः 'इन्द्रे च' इत्यत्रैव निवृत्तत्वात् । विनापि नित्यपदम् 'आद्गुणः' इत्यादिविधीनां वैकल्पिकत्वाभावस्य व्याख्यानेनैव निर्णयाच्च नित्यपदं 'नित्यप्रहसितो नित्यप्रजल्पित इत्यत्रेव प्रायः समानार्थकमेवेति भावः ॥ T 'इको यणचि' इत्यतः 'अचि' इत्यनुवर्तमाने पुनरज्ग्रहणम् अज्पूर्ववर्तिन एव प्लुतप्रगृह्याः प्रकृत्या स्युः' न परस्थिता अपीति बोधयत् 'जानु उ अस्य रुजति' इत्यत्र उञः प्रगृह्यत्वे 'अकः सवर्णे' इति दीर्घे 'मय उञः' इति वत्वे 'जान्वस्य रुजति' इति साधयति ॥ ९ 'प्रकृत्याऽन्तःपादमव्यपरे' इत्यतः 'प्रकृत्या' इत्यनुवर्तते इति भावः ॥

हरी एतावित्यादावयमेव प्रकृतिभावो यथा स्यादिकोऽसवर्णे इति ह्रस्वसमुच्चितो मा भूत् ॥ **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च** ।६।१।१२७॥ पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या स्युर्ह्रस्वश्च वा । अत्र ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कर्तव्य इति भाष्ये स्थितम् ॥ चक्रि अत्र । चक्र्यत्र ॥ पदान्ता इति किम् ? गौर्यौ ॥ **न समासे** * ॥ वाप्यश्वः । **सिति च** * ॥ पार्श्वम् ॥ **ऋत्यकः** ।६।१।१२८॥ ऋति परेऽकः प्राग्वत् । ब्रह्म ऋषिः । ब्रह्मर्षिः ॥ पदान्ता इत्येव । आर्च्छत् । समासेऽप्ययं प्रकृतिभावः । सप्तऋषीणाम् । सप्तर्षीणाम् ॥ **वाक्यस्य टेः प्लुत उदात्तः** ।८।२।८२॥ इत्यधिकृत्य ॥ **प्रत्यभिवादेऽशूद्रे** ।८।२।८३॥ अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः स्यात् स चोदात्तः । अभिवादये देवदत्तोऽहं भोः । आयुष्मानेधि देवदत्त ३ ॥ **स्त्रियां न** *॥ अभिवादये गार्ग्यहं भोः । आयुष्मती भव गार्गि ॥ नाम गोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते । नेह । आयुष्मानेधि ॥ **भोराजन्यविशां वेति वाच्यम्** *॥ आयुष्मानेधि भोः ३ आयुष्मानेधीन्द्रवर्म३न् । आयुष्मानेधीन्द्रपालित ३ ॥ **दूराद्धूते च** ।८।२।८४॥ दूरात्संबोधने यद्वाक्यं तस्य टेः प्लुतः स्यात् । सक्तून्पिब देवदत्त ३ ॥ **हैहेप्रयोगे हैहयोः** ।८।२।८५॥ एतयोः प्रयोगे दूराद्धूते यद्वाक्यं तत्र हैहयोरेव प्लुतः स्यात् । है ३ राम । राम है ३ ॥ **गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्** ।८।२।८६। दूराद्धूते यद्वाक्यं तस्य ऋद्भिन्नस्यानन्त्यस्यापि गुरोर्वा प्लुतः स्यात् । दे ३ वदत्त । देव ३ दत्त । देवदत्त ३ । गुरोः किम् । वकारात्परस्याकारस्य मा भूत् ॥ अनृतः किम् । कृष्ण ३ । एकैकग्रहणं पर्यायार्थम् । इह प्राचामिति योगो विभज्यते । तेन सर्वः प्लुतो विकल्प्यते ॥ **अप्लुतवदुपस्थिते** ।६।१।१२९॥ उपस्थितोऽनार्ष इतिशब्दस्तस्मिन्परे प्लुतोऽप्लुतवद्भवति । अप्लुतकार्यं यणादिकं करोतीत्यर्थः । सुश्लोक ३ इति

---

१ **अयमेव** प्रायिक एव ॥ २ **यथा स्यादिति** । 'नतु वैकल्पिकः' इति शेषः ॥ ३ किं ह्रस्वविधिर्ह्रस्वश्रवणार्थ उत यणादिसाधनार्थः । तत्र यणादिसाधनार्थत्वे ह्रस्वविधानमेव व्यर्थं स्याद् दीर्घस्यापि स्थाने यणादिदर्शनात् । तस्माद् ह्रस्वश्रवणार्थमेव ह्रस्वविधानं वक्तव्यम् । ह्रस्वश्रवणं च यणादिकार्याभाव एव संभवतीति प्रकृतिभावः स्वतः सिद्ध एवेति भावः ॥ '**एवं सर्वे चकाराः प्रत्याख्यायन्ते**' इति 'लुटि च क्लृपः' इत्यत्र भाष्ये ॥ ४ पर्शूनां समूहः पार्श्वम् 'पर्श्वा णस् वक्तव्यः' इति णसि 'सिति च' इत्यनेन पदसंज्ञाया ह्रस्वापत्तिरनेन वार्यते ॥ ५ अत्राडागमो धात्ववयव एवेति न पदान्तत्वम् ॥ ६ **अयम्** 'ऋत्यकः' इति विहितः ॥ ७ केवलपदस्यैव टेः प्लुतो मा भून्न वाक्यपदयोरेव प्लुतो यथा स्यादिति वाक्यग्रहणम् ॥ ८ हलन्तस्याप्यचो यथा स्यादिति टिग्रहणम् ॥ ९ 'भोः शब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने । नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः ॥' इति मनुवाक्योपदर्शितरीत्या भोःशब्दोऽभिवादनवाक्यस्यान्ते योजनीयः न प्रत्यभिवादवाक्यादौ ॥ १० 'यत्र प्राकृताद् यत्नाद् विशेषेऽनुपादीयमाने संदेहो जायते 'श्रोष्यति न वा' इति तद् दूरम्' 'इहावगम्यते' इति भाष्यम् ॥ ११ संबोधनमत्र ह्वेञः शब्दार्थत्वात् सम्यक् कथनमात्रमेव नतु संबोधनप्रथमाविभक्तिनियामकमभिमुखीकृत्य बोधनमेव । 'आगच्छतु भवान् देवदत्तः' इत्येवमाह्वानस्यापि संभवात् ॥ १२ ऋऌवर्णयोः सावर्ण्यस्यानित्यत्वात् 'हे क्लृ३प्तशिख' इत्यत्र प्लुतो भवत्येव ॥ १३ तथाचोक्तं भाष्यकृता 'सर्व एव प्लुतः साहसमनिच्छता विभाषा कर्तव्यः' इति ॥

सुश्लोकेति । वत्किम् ? अप्लुत इत्युक्तेऽप्लुत एव विधीयेत, प्लुतश्च निषिध्येत । तथा च प्रगृह्या श्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात् । अग्नी ३ इति । **इ*३ चाक्रवर्मणस्य । ६ । १ । १३० ॥** इ ३ प्लुतोऽचि परेऽप्लुतवद्वा स्यात् । चिनु हि ३ इति । चिनु हीति । चिनु हि ३ इदम् । चिनु हीदम् । उभयत्र विभाषेयम् ॥ **ईदूदेद्द्विवचनं प्रगृह्यम् ।१।१। ११ ।** ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू । पचेते इमौ । मणीवोष्ट्रस्येति तु इवार्थे वशब्दो वाशब्दो वा बोध्यः ॥ **अदसो मात् ।१।१। १२ ॥** अस्मात्परावीदूतौ प्रगृह्यौ स्तः ॥ अमी ईशाः । रामकृष्णावमू आसाते । मात्किम् । अमुकेऽत्र । असति माद्ग्रहणे एकारोऽप्यनुवर्तेत ॥ **शे । १ । १ । १३ ।** अयं प्रगृह्यः स्यात् । अस्मे इन्द्राबृहस्पती ॥ **निपात एकाजनाङ् । १ । १ । १४ ॥** एकोऽज्निपात आङ्वर्जः प्रगृह्यः स्यात् । इ विस्मये । इ इन्द्रः । उ वितर्के । उ उमेशः । अनाङित्युक्तेरङिदाकारः प्रगृह्य एव । आ एवं नु मन्यसे । आ एवं किल तत् । ङित्तु न प्रगृह्यः । **ईषदुष्णम्** ओष्णम् । 'वाक्यस्मरणयोरङित्' अन्यत्र 'ङित्' इति विवेकः ॥ **ओत् ।१।१।१५॥** ओदन्तो निपातः प्रगृह्यः स्यात् । अहो ईशाः । **॥ संबुद्धौ शाकल्यस्येतावनार्षे ।१।१।१६ ॥** संबुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति । ( विष्ण इति ) । विष्णविति । अनार्ष इति किम् ? ब्रह्मबन्धवित्यब्रवीत् ॥ **उञः । १ । १ । १७ ॥** उञ इतौ वा प्रागुक्तम् । उ इति विति ॥ **ऊँ । १ । १ । १८ ॥** उञ इतौ दीर्घोऽनुनासिकः प्रगृह्यश्च ऊँ इत्ययमादेशो वा स्यात् । ऊँ इति ॥ **मय उञो वो वा । ८ । ३ । ३३ ॥** मयः परस्य उञो वो वा स्यादचि । किमु उक्तम् । किम्वुक्तम् । वत्वस्यासिद्धत्वान्नानुस्वारः[६] ॥ **ईदूतौ च सप्तम्यर्थे । १ । १ । १९ ॥** सप्तम्यर्थे पर्यवसन्नमीदूदन्तं प्रगृह्यं स्यात् । सोमो गौरी अधिश्रितः । मामकी तनू इति । सुपां सुलुगिति सप्तम्या

---

१ एवमेव 'पुत्रेति' इति भागवतप्रयोगोऽपि व्याख्यातः ॥ नित्यग्रहणेनानयोः सूत्रयोर्वैयर्थ्यं तु न '**नासूया कर्त्तव्या यत्रानुगम आचार्येण क्रियते**' इति पंक्तिविंशति--सूत्रे भाष्योक्तेः ॥ * 'वशा ३ इयम् वशेयम्' इत्यत्राप्लुतवद्भावसिद्धये 'इ ३' कारग्रहणं भाष्ये प्रत्याख्यातम् ॥ २ 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इत्यादौ ॥ यदि च विभाव्यते-- "**दम्पतीव क्रतुविदा जनेषु**" इति (२ मं, ३९ सू०, २ ) मन्त्रस्य पदपाठे '**दम्पती इवेति दम्पतीव**' इतीवेनैव पदविभागस्य दर्शनात्तद्विरोधापत्त्या चिन्त्योऽयं समाधिः--इति । तदा प्रकृतिभावस्य नित्यपदेन प्रायिकत्वबोधनात्तदप्रवृत्तौ न कोऽपि दोष इति ध्येयम् ॥ ३ 'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति न्यायात् ॥ माद्ग्रहणे सति तु 'तस्मादित्युत्तरस्य' इति परिभाषाबलेन मकारादव्यवहितपरत्वस्य एकारेऽसंभवान्नानुवृत्तिरिति भावः ॥ ४**अन्यत्रेति** ईषदर्थादिष्वित्यर्थः ॥ तथाचोक्तं भाष्ये-- '**ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥**' इति ॥ ५ अयं लोपघटितः प्रयोगो सांप्रदायिकः । शाकल्यस्य मते प्रगृह्यत्वेन प्रकृतिभावस्य नियतत्वेन संधिकार्यस्य अवादेशस्याप्रवृत्तौ शाकल्योपज्ञातलोपस्यासंभवादिति प्राञ्चः ॥ प्रकृतिभावस्य प्रायिकत्वेन शाकल्यमतेऽपि अवादेशसंभवेन लोपस्य संभवदुक्तिकत्वात् 'सांप्रदायिक एव लोपघटितः प्रयोग इति तु नव्या दाधिमथाः ॥ ६ **नानुस्वार इति** । नापि प्रकृतिभावेन वारणशङ्का । अत एव 'ङमो ह्रस्वादचि' इत्युत्तरम् 'इको यण्' 'मय उञो वा' इति नैव कृतमिति भावः ॥

लुक् । अर्थग्रहणं किम् ? वृत्तावर्थान्तरोपसंक्रान्ते मा भूत् । वाप्यामश्वो वाप्यश्वः[२] ॥ अणोऽप्रगृह्यस्यानुनासिकः । ८।४।५७ ॥ अप्रगृह्यस्याणोऽवसानेऽनुनासिको वा स्यात् । दधिँ । दधि । अप्रगृह्यस्य किम् ? अग्नी ॥

## इत्यच्सन्धिप्रकरणम् ।

## अथ हल्सन्धिप्रकरणम् ।

**स्तोः[४] श्चुना श्चुः । ८ । ४ । ४० ॥** सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । हरिश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ॥ **शात् ।८।४।४४॥** शात्परस्य तवर्गस्य श्चुत्वं न स्यात् । विश्नः । प्रश्नः ॥ **ष्टुना ष्टुः । ८।४। ४१ ॥** स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ॥ **न पदान्ताट्टोरनाम् ।८।४।४२॥** अनामिति लुप्तषष्ठीकं पदम् । पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात् । षट् सन्तः । षट् ते । पदान्तात्किम् । ईट्टे । टोः किम् । सर्पिष्टमम् ॥ **अनाम्नवतिनगरीणामिति वाच्यम्** * ॥ षण्णाम् । षण्णवतिः । षण्णगर्यः ॥ **तोः षि । ८ । ४ । ४३ ॥** तवर्गस्य षकारे परे न ष्टुत्वम् ॥ सन्षष्ठः ॥ **झलां जशोऽन्ते ।८।२। ३९ ॥** वागीशः । चिद्रूपम् ॥ **यरोऽनुनासिकेऽनुनासिको वा । ८ । ४ । ४५ ॥** यरः पदान्तस्याऽनुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः । एतद्मुरारिः । स्थानँप्रयत्नाभ्यमन्तरतमे स्पर्शे चारितार्थो

---

१ 'ईदूतौ सप्तमी' इत्येवं सूत्रे कृतेऽपि 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति परिभाषया यद्यपि 'ईकारोकाररूपा सप्तमी' इत्येवार्थो लभ्यते तथापि ऊकारांशेऽसंभवात् 'ईदूतौ सप्तमी प्रगृह्यम्' 'अदसः' 'एच्च द्विवचनम्' इति लघुन्यासेनैव सिद्धौ गुरुन्याससामर्थ्याच्च तदन्तविधौ 'सप्तम्यन्तं यदीदूदन्तम्' इत्यर्थेन सकलेष्टसिद्धौ व्यर्थमेवार्थग्रहणमिति पृच्छति-**अर्थग्रहणं किमिति ॥** २ अर्थग्रहणसामर्थ्याद् समभिव्याहृतोत्तरपदार्थानन्वयित्वेनोपस्थितार्थिवपयसप्तम्यर्थपर्यवसन्नस्यैत्र सप्तम्यन्तस्य ग्रहणं भवति इति वृत्तौ पूर्वपदार्थस्योत्तरपदार्थान्वयित्वस्यैव नियततवेनानन्वयित्वस्यासंभवान्नैव दोष इत्याह-**वाप्यश्व इति ।** 'वाप्यधिकरणकोऽश्वः' इत्यर्थस्यैव नियमेनोपस्थितत्वादिति भावः ॥ ३ 'अवत्सा धेनुः' इत्यत्र वत्ससंबन्धयोग्याया गोरेव ग्रहणवत् 'अप्रगृह्यस्य' इत्यस्य सामर्थ्यात् प्रगृह्यत्वयोग्यस्यैवात्र ग्रहणसिद्धौ 'अण्' पूर्वणकारप्रत्याहारबोधकमिति बोध्यम् ॥ ४ स्तोरिति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । अत्र स्थान्यादेशयोर्यथासंख्यम् निमित्तकार्यिणोस्तु न । तथा सति शकारयोगे सकारस्य, चवर्गयोगे तवर्गस्य इत्यर्थे शादिति निषेधस्य वैयर्थ्यं स्यात् ॥ ५ 'तोः षि' इत्यारम्भसामर्थ्यात् स्थान्यादेशयोरेव यथासंख्यम्, न तु निमित्तकार्यिणोः, नापि निमित्तादेशयोरिति बोध्यम् ॥ ६ पदान्ते षकारस्य जश्त्वेन टवर्गस्यैव लाभे 'टोः' ग्रहणं व्यर्थमिति शङ्कायाम् यस्य षकारस्य जश्त्वं प्रत्यसिद्धत्वं तत्र पदान्ते षकारलाभ इत्यभिप्रायेण 'ह्रस्वात्तादौ तद्धिते' इति षकारस्य जश्त्वं न भवतीति भावः ॥ ७ चतुर्*मुख इत्यादौ पदान्तस्य यरो रेफस्य अनुनासिके मकारे परतः अनुनासिको णकारो मूर्धस्थानसाम्येन प्राप्नोति इति शङ्कायाम् '**स्थानेऽन्तरतम उरण्रपरः**, इत्येवं संहितापाठे अन्तरतमे' इति सप्तम्यन्तपाठे 'अन्तरतमे सदृशतमे स्थानिनि आदेशः' इत्यर्थसंगतये प्रत्यादेशं लक्षणोपप्लवाङ्गीकारे 'णकार आदेशः स्वसदृशतमे स्थानिनि स्यात्' इत्येवमेकवाक्यतयाङ्गीकारे णकारः स्वस्य मूर्धस्थानस्पृष्टप्रयत्नाभ्यामन्तरतमे स्पर्शे टवर्गे चरितार्थ इति केवलमूर्धस्थानेन सदृशे रेफे न प्रवर्तते इति चतुर्मुख इत्यादौ णत्वं न भवतीति भावः ॥ यदि चोक्तरीत्या 'यण् स्वसदृशतमे इकि स्यात्' इत्येवमर्थाङ्गीकारे यकारस्यार्धमात्रस्य सूत्रारम्भसामर्थ्याद् यथाकथंचित् 'स्वल्पान्तरं न दोषाय' इत्याश्रित्य एकमात्रस्य ह्रस्वस्य स्थाने संभवेऽपि ह्रस्वे चरितार्थत्वाद् अध्यर्धमात्रान्तरे दीर्घे अर्धतृतीयमात्रान्तरे प्लुते च नैव-

विधिरयं रेफे न प्रवर्तते। चतुर्मुखः ॥ **प्रत्यये भाषायां नित्यम्** * ॥ तन्मात्रम् । चिन्मयम् । कथं तर्हि मदोदग्राः ककुद्मन्त इति । यवादिगणे दकारनिपातनात् ॥ **तोर्लि** ।८।४।६०॥ तवर्गस्य लकारे परे परसवर्णः स्यात् । तल्लयः । विद्वाँल्लिखति । नकारस्याऽनुनासिको लकारः। **उदः स्थास्तम्भोः पूर्वस्य** ।८।४।६१॥ उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात् । आदेः परस्य । उत्थानम् । उत्तम्भनम् । अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थकारः। तस्य झरो झरीति पाक्षिको लोपः। लोपाभावपक्षे तु थकारस्यैव श्रवणं न तु खरि चेति चर्त्वम् । चर्त्वं प्रति थकारस्याऽसिद्धत्वात् ॥ **झयो होऽन्यतरस्याम्** ।८।४।६२ ॥ झयः परस्य हस्य पूर्वसवर्णो वा स्यात् । घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृशो वर्गचतुर्थ एवादेशः। वाग्घरिः। वाग्हरिः ॥ **शश्छोऽटि** ।८।४।६३ ॥ पदान्तात् झयः परस्य शस्य छो वा स्यादटि। दस्यै श्चुत्वेन जकारे कृते ॥ **खरि च** ।८।४।५५॥ खरि परे झलां चरः स्युः। इति जकारस्य चकारः। तच्छिवः। तच्शिवः ॥ **छत्वममीति वाच्यम्** * ॥ तच्छ्लोकेन । तच्श्लोकेन । अमि किम् ? वाक् श्च्योतति ॥ **मोऽनुस्वारः** । ८ । ३ । २३ ॥ मान्तस्य पदस्यानुस्वारः स्याद्धलि। अलोऽन्त्यस्य । हरिं वन्दे । पदस्येति किम् ? गम्यते ॥ **नश्चापदान्तस्य झलि** ।८।३।२४॥ नस्य मस्य चापदान्तस्य झल्यनुस्वारः स्यात् । यशांसि । आक्रंस्यते । झलि किम् ? मन्यते ॥ **अनुस्वारस्य ययि परसवर्णः** । ८ ।४ ।५८॥ स्पष्टम् । अङ्कितः। अञ्चितः। कुण्ठितः। शान्तः। गुम्फितः। कुर्वन्तीत्यत्र णत्वे प्राप्ते तस्यासि-

---

भविष्यतीति सप्तम्यन्तपाठो नाङ्गीक्रियते, किंतु प्रथमान्तपाठ एवाङ्गीक्रियते। तथा च प्रतिस्थानिलक्षणोपप्लवाङ्गीकारेण 'ह्रस्व इक् यणं लभते' 'दीर्घस्य इको यण्' 'प्लुतस्य इको यण्' इत्येवं लक्षणोपप्लवे आरम्भसामर्थ्याद् दीर्घप्लुतयोरपि यण् सिद्धः ॥ "यरोऽनुनासिकेऽनुनासिको वा" इत्यत्र तु 'अनुस्वारस्य ययि परसवर्णः' इत्यतः सवर्णपदमपकृष्य यस्य परः सवर्णोऽनुनासिकोऽस्ति तद्विषय एव लक्षणोपप्लवः करणीय इति। 'रेफोष्मणां सवर्णा न सन्ति' इति भाष्यतो रेफसवर्णानुनासिकाभावात् तद्विषयो लक्षणोपप्लव एव नाङ्गीक्रियते इति नैव दोषलेश इति तत्त्वम् ॥

१ 'ससौ मत्वर्थे' इति सूत्रे दकारप्रश्लेषेण मत्वे तु नैवानुनासिकापत्तिरिति तत्त्वम् ॥ २ अत्र वार्तिके— 'उदः पूर्वत्वे स्कन्देश्छन्दसि' * ॥ अध्ये दूरमुत्कन्दे ॥ रोगे च* उत्कन्दो रोगः ॥ ३ काशिकासंमताष्टाध्यायीपाठमभिप्रेत्येदम् ॥ 'दीर्घादाचार्याणाम् । अनुस्वारस्य ययि परसवर्णः । वा पदान्तस्य । तोर्लि । उदः स्थास्तम्भोः पूर्वस्य । झयो होऽन्यतरस्याम् । शश्छोऽटि । झलां जश् झशि । अभ्यासे चर्च । खरि च । वावसाने । अणोऽप्रगृह्यस्यानुनासिकः'। इत्येवं भाष्यसंमताष्टाध्यायीपाठे तु नैव चर्त्वं प्रति थकारस्यासिद्धत्वमिति थकारस्य चर्त्वं भवत्येवेति बोध्यम् ॥ ४ दस्य श्चुत्वेन जकारे कृते इति । तद् × शिवः इत्यत्रेत्यादिशेषः। शस्य छत्वमिति अन्ते पूरणीयम् । यथाश्रुते तु श्चुत्वम्, प्रति छत्वस्यासिद्धत्वात्पूर्वं छत्वस्याप्राप्तिरेवेति बोध्यम् भाष्यसंमतसूत्रपाठे। काशिकासंमतसूत्रपाठे तु श्चुत्वं चर्त्वम् । छत्वमिति क्रमो बोध्यः ॥ ५ 'मो राजि–' इत्युत्तरं 'हे मपरे वा' इत्यारम्भसामर्थ्याद् 'झलि चेद् अपदान्तस्यैव' इति नियमाभावेन 'अपदान्तस्य चेत् झल्येव' इति नियमेनापदान्ते दोषाभावेन पदस्येति उत्तरार्थमिति प्राञ्चः । 'प्रशाम्ह्मलयति' इत्यत्र नकारवारणाय 'हेमपरे वा' इति चारितार्थमिति तु न सम्यक् । 'मो नो धातोः' इत्येतत् प्रति 'हे मपरे' इत्यस्यासिद्धत्वेन नत्वस्य पूर्वं प्रवृत्तेरव्याघातात् ॥ इति तु 'न राजि' इत्येव सिद्धे मकारविधानम् 'मो नो धातोः' इत्येतद्वारणायेति सिद्धान्ताज्ञानमूलकमेव ॥

द्धत्वादनुस्वारे परसवर्णे च कृते तस्यासिद्धत्वान्न णत्वम् ॥ **वा पदान्तस्य । ८ । ४ । ५९॥** पदान्तस्यानुस्वारस्य ययि परे परसवर्णो वा स्यात् । त्वङ्करोषि । त्वं करोषि । सँय्यन्ता । संयन्ता । सँव्वत्सरः । संवत्सरः ॥ यँल्लोकम् । यंलोकम् ॥ अत्रानुस्वारस्य पक्षेऽनुनासिका यवलाः॥ **मो राजि समः क्वौ ।८।३।२५ ॥** क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट्॥ **हे मपरे वा ।८।३।२६ ॥** मपरे हकारे परे मस्य म एव स्याद्वा । ह्मल ह्मल चलने । किम्ह्मलयति । किं ह्मलयति ॥ **यवलपरे यवला वेति वक्तव्यम् * ॥ यथासंख्यमनुदेशः समानाम् ।१।३।१०॥** समसंबन्धी विधिर्यथासंख्यं स्यात् । कियँह्यः । किं ह्यः । किवँह्वलयति । किं ह्वलयति । किलँह्लादयति । किं ह्लादयति ॥ **नपरे नः ।८।३।२७ ॥** नपरे हकारे मस्य नः स्याद्वा । किन्ह्नुते । किं ह्नुते ॥ **ङ्णोः कुक् टुक् शरि ८।३।२८ ॥** ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि । कुक्टुकोरसिद्धत्वाज्जश्त्वं न ॥ **चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम् * ॥** प्राङ्ख्षष्ठः । प्राङ्क्षष्ठः । प्राङ्षष्ठः । सुगण्ठ्षष्ठः । सुगण्ट्षष्ठः । सुगण्षष्ठः॥ **डः सि धुट् ।८।३।२९ ॥** डात्परस्य सस्य धुड्वा स्यात् । षट्त्सन्तः। षट्सन्तः ॥ **नश्च ।८।३।३० ॥** नकारान्तात्सस्य धुड्वा । सन्त्सः । सन्सः ॥ **शि तुक् ।८।३।३१ ॥** नस्य पदान्तस्य शे परे तुग्वा स्यात् । शश्छोऽटीति छत्वविकल्पः । पक्षे झरो झरीति चलोपः । सञ्छंभुः । सञ्च्छंभुः । सञ्चशंभुः । सञ्शंभुः ॥

अच्छौ अचछा अचशा अशाविति चतुष्टयम् । रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् ॥ **ङमो ह्रस्वादचि ङमुण्नित्यम् । ८।३।३२ ॥** ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडागमः स्यात् । प्रत्यङ्ङात्मा। सुगण्णीशः । सन्नच्युतः॥**समः सुटि।८।३। ५ ॥** समो रुः स्यात् सुटि। अलोऽन्त्यस्य॥ **अत्रानुनासिकः पूर्वस्य तु वा ।८।३। २॥**

---

१ साम्यं च संख्याकृतमेव ' यथासंख्यम् ' इत्युक्तेः । तच्च शब्दकृतमेव शब्दानुशासनत्वात् ' स्वं रूपम् ' इत्यस्य बाधायोगात् शब्दप्राधान्यात् ॥ अत एव ' स्यतासी लृलुटोः ' इत्यादिषु न दोषः ॥ शब्दसंज्ञायां 'स्वं रूपम् ' इत्यस्याप्रवृत्त्यां संज्ञिरूपार्थसंख्यासाम्येनैव निर्वाहः ॥ अत एव ' लुटः प्रथमस्य डारौरसः' 'एचोऽयवायावः ' इत्यादौ प्रथमैजादिसंज्ञासंज्ञिसंख्यामादायैव निर्वाहः ॥ '**संवृतावर्णस्य संवृतावर्णः**' इति भाष्यं तु ' अइउण् ' सूत्रभाष्यविरोधादेकदेश्येवेति तत्त्वम् ॥ २ अत्र विधीयमानेष्वनुनासिकचिह्नदानं '**भाव्यमानेन सवर्णानां ग्रहणं न** ' इति परिभाषां विस्मृत्यैवेति तत्त्वम् ॥ ३ ' नित्यप्रहसितो नित्यस्वाध्यायीत्यादाविव ' नित्यवीप्सयोः ' इत्यत्र भाष्ये नित्यपदस्याभीक्ष्ण्यवाचित्वेन प्रायःपर्यायत्वं व्यवस्थापितम् । अत एव ' तस्मिन्निति ' ' तस्मिन्नणि–' इत्यादौ ङमुट् कृतः ' तनादि–' इत्यत्र न कृतः, ' सन्नन्तान्न सनिष्यते ' इत्यत्र ङमुटो भावाभावौ कृताविति बोध्यम् ॥ ४ दृष्टानुविधेश्छन्दोविषयत्वाद्विचो लोकेऽनभिधानमेवेति ह्रस्वात्परस्य पदान्तणकारस्यानभिधानमेव । वेदेऽपि तादृशणकारो नैवास्ति । अत एव प्रातिशाख्येषु '**पदान्तीयो ह्रस्वपूर्वो ङकारो नकारश्च क्रामत उत्तरे स्वरे** ' '**ङनौ चेद् ह्रस्वपूर्वौ स्वरे पदान्तौ**' इति णकारो नोपदिष्टः ॥ एतदेव ध्वनयितुं पाणिनिनापि ' इको यणचि ' ' अणिनुणः ' ' अणिञोः ' इत्यत्र क्वापि ङमुट् नैव कृत इति तत्त्वम् ॥ ५ '**समस्ससुटि** '**इति द्विसकारको निर्देशः**' इति भाष्यम् । तत्र विभक्तिसकारस्य ' अनचि च ' इति द्वित्वं जानानः ' मतुवसो रुः ' इत्यतो ' रुः ' इत्यनुवर्त्य व्याचष्टे--**समो रुरिति** ॥

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यात् ॥ **अनुनासिकात्परोऽनुस्वारः ।८।३।४॥** अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः स्यात् । खरवसानयोर्विसर्जनीयः॥ **विसर्जनीयस्य सः ।८।३।३४ ॥** खरि विसर्जनीयस्य सः स्यात् । एतदपवादे वा शरीति पाक्षिके विसर्गे प्राप्ते ॥ **संपुंकानां सो वक्तव्यः** * सँस्स्कर्ता । संस्कर्ता । **समो वा लोपमेके** इति भाष्यम्* ॥ लोपस्यापि रुप्रकरणस्थत्वादनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयम् । द्विसकारं तूक्तमेव । तत्रानचि चेति सकारस्य द्वित्वपक्षे त्रिसकारमपि रूपद्वयम् । अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसंख्यातत्वेनानुस्वारस्याप्यच्त्वात् । अनुनासिकवतां त्रयाणां **शरः खयः** * इति कद्वित्वे षट् । अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश । एषामष्टादशानां तकारस्य द्वित्वे वचनान्तरेण पुनर्द्वित्वे च एकतं द्वितं त्रितमिति चतुष्पञ्चाशत् । अणोऽनुनासिकत्वेऽष्टोत्तरशतम् ॥ **पुमः खय्यम्परे । ८ । ३ । ६॥** अम्परे खयि पुम्शब्दस्य रुः स्यात् । व्युत्पत्तिपक्षेऽप्रत्ययस्येति षत्वपर्युदासात् ≍ क ≍ पयोः प्राप्तौ। अव्युत्पत्तिपक्षे तु षत्वप्राप्तौ संपुंकानामिति सः । पुँस्कोकिलः । पुंस्कोकिलः । पुँस्पुत्रः। पुंस्पुत्रः। अम्परे किम् ? पुंक्षीरम् । खयि किम् । पुंदासः । ख्याञादेशे न । पुंख्यानम्॥ **नश्छव्यप्रशान् । ८। ३ । ७ ॥** अम्परे छवि नकारान्तस्य पदस्य रुः स्यात् न तु प्रशान्शब्दस्य । विसर्गः । सत्वम्। श्चुत्वम्। शार्ङ्गिँश्छिन्धि । शार्ङ्गिंश्छिन्धि । चक्रिँस्त्रायस्व । चक्रिंस्त्रायस्व । पदस्य किम् हन्ति । अम्परे किम्? सन्[६]त्सरुः। खड्गमुष्टिः । अप्रशान् किम् ? प्रशान्तनोति ॥ **नॄन्पे । ८ । ३ । १० ॥** नॄनित्यस्य रुः स्याद्वा पकारे परे॥ **कुप्वोः ≍ क ≍ पौ च । ८ । ३ । ३७ ॥** कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपध्मानीयौ स्तः चाद्विसर्गः । येन नाप्राप्त इति न्यायेन विसर्जनीयस्य स इत्यस्यापवादोऽयम् न तु शर्परे विसर्जनीय इत्यस्य । तेन वासः क्षौममित्यादौ विसर्ग एव । नॄँ ≍ पाहि । नॄं ≍ पाहि । नॄँः पाहि । नॄंः पाहि। नॄन्पाहि ॥ **कानाम्रेडिते । ८ । ३ । १२ ॥** कान्नकारस्य रुः स्यादाम्रेडिते परे । संपुंकानामिति सः ।यद्वा॥ **कस्कादिषु च । ८ । ३ । ४८ ॥** एष्विण उत्तरस्य विसर्गस्य षः स्यादन्यत्र तु सः। ≍ क ≍ पयोरपवादः । इति

---

१ 'अनुनासिकात्' इति अर्शआद्यजन्तादनुनासिकशब्दात् 'ल्यब्लोपे कर्मणि' इति पञ्चमीत्याह- **अनुँनासिकमिति** । अनुनासिकघटितप्रयोगमित्यर्थः ॥ २ '**समस्स्सुटि**' इत्यत्र विभक्तिसकारस्य न द्वित्वम् अपि तु विधेयः सकार एव निर्दिष्ट इतीदं वार्तिकं नापूर्वम् ॥ ३ 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति मते 'अतः कृकमि---' इति सूत्रे कमेः पृथक् कंसग्रहणमपि ज्ञापकम् ॥ व्युत्पत्तिपक्षे च 'अयामन्ताल्वाय्येत्न्विष्णुषु' इति सूत्रम् 'अर्थवदधातुरप्रत्ययः–' इति सूत्रं च प्रमाणम् ॥ ४ 'चक्षिङः ख्याञ्' इत्यनेन 'ख्याञ्' आदेशे 'शस्य यो वा' इति णत्वप्रकरणोत्तरं त्रिपाद्यां पठितेन वार्तिकेन कृतस्य यकारादेशस्यासिद्धत्वेन शकारस्यैव सत्त्वमाश्रित्याम्परत्वाभावबुद्ध्या रुत्वं न प्राप्नोतीत्यर्थः ॥ ५ 'समस्सुटि' इत्यतः सकारानुवृत्तौ 'महाँ इन्द्रः' इत्यत्र 'दीर्घादटि' –इत्यनेन सत्वविधौ तस्यासिद्धत्वात् 'ससजुषोः' इति रुत्वं न स्यादतो रुरेवानुवृत्तः ॥ ६ 'सन्*त्सरुः' इत्यत्र तकाराच्छवः परः सकारोऽम् नेति भावः ॥ ७ 'खरि' इति शेषः । तेन 'कवर्गे पवर्गे खरि' इत्यर्थेन 'देवो गन्ता' 'रामो बलवान्' इत्यादौ नैव जिह्वामूलीयोपध्मानीयौ ॥ ८ 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' । नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वम् ॥

सः । कांस्कान् । कांस्कान् । कस्कः । कौतस्कुतः । सर्पिष्कुण्डिका । धनुष्कपालम् । आकृतिगणोऽयम् ॥ **संहितायाम्** । ६ । १ । ७२ ॥ इत्यधिकृत्य ॥ **छे च** । ६ । १ । ७३ ॥ ह्रस्वस्य छे परे तुगागमः स्यात्संहितायाम् । श्चुत्वस्यासिद्धत्वाज्जश्त्वेन दः । ततश्चर्त्वस्यासिद्धत्वात्पूर्वं श्चुत्वेन जः । तस्य चर्त्वेन चः । श्चुत्वस्यासिद्धत्वाचोः कुरिति कुत्वं न । स्वच्छाया । शिवच्छाया ॥ **आङ्माङोश्च** । ६ । १ । ७४ ॥ एतयोश्छे परे तुक् स्यात् । पदान्ताद्वेति विकल्पापवादः । आच्छादयति । माच्छिदत् ॥ **दीर्घात्** । ६ । १ । ७५ ॥ दीर्घाच्छे परे तुक् स्यात् । दीर्घस्यायं तुक् न तु छस्य । सेनासुराच्छायेति ज्ञापकात् । चेच्छिद्यते ॥ **पदान्ताद्वा** । ६ । १ । ७६ ॥ दीर्घात्पदान्ताच्छे परे तुग्वा स्यात् । लक्ष्मीच्छाया । लक्ष्मीछाया ॥

इति हल्संधिप्रकरणम् ।

---

## अथ विसर्गसन्धिप्रकरणम् ।

**विसर्जनीयस्य सः** । ८ । ३ । ३४ ॥ विष्णुस्त्राता ॥ **शर्परे विसर्जनीयः** । ८ । ३ । ३५ ॥ शर्परे खरि विसर्जनीयस्य विसर्जनीयो न त्वन्यत् । कः त्सरुः । घनाघनः क्षोभणः । इह यथायथं सत्वं जिह्वामूलीयश्च न ॥ **वा शरि** । ८ । ३ । ३६ ॥ शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात् । हरिः शेते । हरिश्शेते ॥ **खर्परे शरि वा विसर्गलोपो वक्तव्यः** * ॥ राम स्थाता । हरि स्फुरति । पक्षे विसर्गे सत्वे च त्रैरूप्यम् । कुप्वोः ≍क≍पौ च ॥ क≍ करोति । कः करोति । क≍ खनति । कः खनति । क≍ पचति । कः पचति । क≍ फलति । कः फलति ॥ **सोऽपदादौ** । ८ । ३ । ३८ ॥ विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः ॥ **पाशकल्पककाम्येष्विति वाच्यम्** * ॥ पयस्पाशम् । यशस्कल्पम् । यशस्कम् । यशस्काम्यति ॥ **अनव्ययस्येति वाच्यम्** * ॥ प्रातःकल्पम् ॥ **काम्ये रोरेवेति वाच्यम्** * ॥ नेह गीः काम्यति ॥ **इणः षः** । ८ । ३ । ३९ ॥ इणः परस्य विसर्गस्य षकारः स्यात्पूर्वविषये । सर्पिष्पा-

---

१ 'परश्च' इत्येतच्छास्त्रबलेन 'प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या, प्रकृतिपर एव प्रत्ययः' इति नियमेन धातुप्रत्यययोरत्यन्ताव्यवधानेनैव प्रयोगस्येष्टत्वात् 'लिटि धातोः' इत्यादिषु प्रयोजनाभावात्तदग्रे 'छे च' इत्यादौ 'तिष्ठतु दधि च्छत्रमुपानय' इत्यादावर्धमात्रोच्चारणकालाधिककालव्यवाये तुग्वारणाय कृतमपि 'संहितायाम्' इति सूत्रम् 'छे' इत्यादिसप्तमीनामौपश्लेषिकाधिकरण एव कृतत्वात् तस्य चात्यावश्यकव्यवधानाधिककालेऽसंभवादेवापत्तेर्वारणाद् व्यर्थमेवेदं सूत्रमिति ध्वननायैव 'इको यणचि' इत्यतः प्रागव्याख्याय व्याख्येयत्वमात्रज्ञापनायात्र व्याख्यातम् ॥ २ यदि छस्य तुक् स्यात्, तर्हि छस्य चर्त्वेन चद्वयं स्यात् । सन्निपातपरिभाषया चर्त्वाभावे तु छकारोपरि चकारः श्रूयेत ॥ ३ **यथायथमिति** । 'कः त्सरुः' इत्यत्र सत्वम्, 'घनाघनः क्षोभणः' इत्यत्र जिह्वामूलीयो नेत्यर्थः ॥ ४ सूत्रोक्तस्य 'अपदादौ' इत्यस्य विवरणमिदमिति न परिगणनमिति भावः ॥ ५ अव्ययीभावस्य तु न निषेधः किंतु सत्वं भवत्येवेति उपपयस्काम्यतीत्यत्र सत्वं भवत्येवेति 'अव्ययीभावश्च' इत्यत्र भाष्ये स्पष्टम् ॥ ६ 'सोऽपदादाविणः षः' इति समुदितस्योत्तरत्र 'कस्कादिषु' इत्यादिषु यथासंभवमनुवृत्तिसूचनार्थमेव भाष्यकृतैव 'सोऽपदादौ' इत्यत्र पठित्वा 'गीःकाम्यति' इत्युदाहरणं दत्तम् ॥ अत्राप्युदाहरणमार्गणे 'द्वाःकाम्यति' इत्युदाहार्यम् ॥

शम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति ॥ **नमस्पुरसोर्गत्योः** ।८।३।४० ॥ गति-संज्ञयोरनयोर्विसर्गस्य सः कुप्वोः परयोः । नमस्करोति । साक्षात्प्रभृतित्वात् कृञो योगे विभाषा गतिसंज्ञा । तदभावे नमः करोति ॥ पुरोऽव्ययमिति नित्यं गतिसंज्ञा । पुरस्करोति । अगति-त्वान्नेह । [ पूः पुरौ ] पुरः प्रवेष्टव्याः ॥ **इदुदुपधस्य चाप्रत्ययस्य** । ८ । ३ । ४१ ॥ इकारोकारोपधस्याप्रत्ययस्य विसर्गस्य षःस्यात्कुप्वोः । निष्प्रत्यूहम् । आविष्कृतम् । दुष्कृतम् । अप्रत्ययस्य किम् ? अग्निः करोति । वायुः करोति । एकादेशशास्त्रनिमित्तकस्य न षत्वम् ॥ कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठात् । तेनेह न । मातुः कृपा ॥ **मुहुसः प्रतिषेधः** *मुहुःकामा॥ **तिरसोऽन्यतरस्याम्** ।८।३।४२ ॥ तिरसः सो वा स्यात् कुप्वोः । तिरस्कर्ता । तिरःकर्ता ॥ **द्विस्त्रिश्चतुरिति कृत्वोर्थे** ।८।३।४३ ॥ कृत्वोर्थे वर्तमानानामेषां विसर्गस्य षकारो वा स्यात् कुप्वोः । द्विष्करोति । द्विः करोतीत्यादि । कृत्वोर्थे किम् । चतुष्कपालः ॥ **इसुसोः सामर्थ्ये** ।८।३।४४ ॥ एतयोर्विसर्गस्य षः स्याद्वा कुप्वोः । सर्पिष्करोति । सर्पिः करोति । धनुष्करोति । धनुः करोति । सामर्थ्यमिह व्यपेक्षा । सामर्थ्ये किम् ? तिष्ठतु सर्पिः पिब त्वमुदकम् ॥ **नित्यं समासेऽनुत्तरपदस्थस्य** । ८।३।४५ ॥ इसुसोर्विसर्गस्यानुत्तरपद-स्थस्य नित्यं षः स्यात् कुप्वोः परयोः । सर्पिष्कुण्डिका । धनुष्कपालम् । अनुत्तरपदस्यस्येति किम् ? परमसर्पिःकुण्डिका ॥ कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थः। व्यपेक्षायां नित्यार्थश्च ॥ **अतःकृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य** । ८।३।४६ ॥ अकारादुत्तरस्यानव्ययस्य विसर्गस्य समासे नित्यं सकारादेशः स्यात्करोत्यादिषु परेषु न तूत्तरपदस्यस्य । अयस्कारः । अयस्कामः । अयस्कंसः । अयस्कुम्भः । अयस्पात्रम् । अयःसहिता कुशा अयस्कुशा । अयस्कर्णी ॥ अतः किम् ? गीःकारः । अनव्ययस्य किम ? स्वःकामः । समासे किम् ? यशः करोति । अनुत्तरपदस्यस्य किम् ? परमयशःकारः ॥ **अधःशिरसी पदे** ।८।३।४७ ॥ एतयोर्विसर्गस्य सादेशः स्या-

---

१ अनन्यथासिद्धमुदाहरणं 'गीष्कल्पम्' 'दोष्पाशम्' इति ॥ 'अनव्ययस्य' इत्युक्तवार्तिकाद् 'उच्चैःकल्पम्' इत्यादौ नापत्तिरिति बोध्यम् ॥ २ '**पुरः प्रवेष्टव्याः**' इत्येव प्रत्युदाहरणम् । अत्र 'पुरः' इत्यस्य प्रथमा-बहुवचनान्तत्वं दर्शयितुमेव '**पूः पुरौ**' इति प्रथमैकवचनद्विवचने दर्शिते । नान्यदेतयोः प्रयोजनमिति भावः॥ ३ तद्धितनिमित्तकवृद्धेर्बहिरंगत्वेनासिद्धत्वाद् इदुदुपधत्वमाश्रित्य 'नैष्पुरुष्यम्' 'दौष्कुल्यम्' इत्यादावपि षत्वं भवत्येवेति भाष्ये स्पष्टम् ॥ ४ **एकादेशेति** । 'एकादेशशास्त्रं निमित्तं यस्य' इति समासः। मातुरित्यादौ 'ऋत् उत्' इत्येकादेशशास्त्रमेव 'उरण् रपरः' इति रेफस्य निमित्तमस्तीति परम्परया विसर्जनीय-स्याप्येकादेशशास्त्रमेव निमित्तमस्तीति न भवति षत्वमिति भावः ॥ ५ 'सुचः' इति सूत्रं कृत्वा 'सुजन्तस्य पदस्य यो विसर्गः तस्य षत्वम्' इत्यर्थेन सुवचत्वमिति ध्येयम् । तथापि '**सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्**' इति परिभाषाया अनित्यत्वज्ञापनायैव न्याय्य एव पाणिनीयो गुरुभूतन्यासः ॥ ६ 'इदुदुपधस्य' इति नित्यमेव षत्वमिति भावः ॥ एवमेव 'चतुष्पाद्' 'चतुष्पञ्चाशत्' इत्यादावपि ॥ ७ उत्तरसूत्रे समासग्रहणाज्ज्ञापकात् ॥ पृथगर्थानां पदानामाकाङ्क्षादिवशाद् यः संबन्धः सा **व्यपेक्षा** ॥ ८ 'तिष्ठतु सर्पिष्कुण्डिकामानय' इत्यादावित्यर्थः ९ **नित्यार्थ इति** । 'इसुसोः सामर्थ्ये' इति विकल्पं बाधित्वेति शेषः ॥ १० कमेः पृथक् कंसग्रहणेन 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति ज्ञाप्यते ॥

स्पदशब्दे परे । अधस्पदम् । शिरस्पदम् । समास इत्येव । अधः पदम् । शिरः पदम् ॥ अनुत्तरपदस्थस्येत्येव । परमशिरःपदम् ॥ कस्कादिषु च ॥ भास्करः ॥

इति विसर्गसंधिप्रकरणम् ।

---

## अथ स्वादिसंधिप्रकरणम् ।

स्वौजसमौडिति सुप्रत्यये शिवस् अर्च्य इति स्थिते ॥ **ससजुषो रुः** ।८।२।६६ ॥ पदान्तस्य सस्य सजुष्शब्दस्य च रुः स्यात् । जश्त्वापवादः ॥ **अतो रोरप्लुतादप्लुते** ।६।१।११३ ॥ अप्लुतादतः परस्य रो रुँः स्यादप्लुतेऽति । भोभगोअघो इति प्राप्तस्य यत्वस्यापवादः ॥ उत्वं प्रति रुत्वस्यासिद्धत्वं तु न भवति । रुत्वमनूद्य उत्वविधेः सामर्थ्यात् ॥ **प्रथमयोः पूर्वसवर्णः** । ६ १।१०२ ॥ अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात् ॥ इति प्राप्ते ॥ **नादिचि** । ६।१।१०४ ॥ अवर्णादिचि परे न पूर्वसवर्णदीर्घः ॥ आद्गुणः । एङः पदान्तादति । शिवोऽर्च्यः ॥ अत इति तपरः किम् ? देवा अत्र ॥ अतीति तपरः किम् ? श्व आगन्ता ॥ अप्लुतात्किम् ? एहि सुस्रोत ३ अत्र स्नाहि ॥ प्लुतस्यासिद्धत्वादतः परोऽयम् । अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम् । तपरकरणस्य तु न सामर्थ्यम् । दीर्घनिवृत्त्या चरितार्थत्वात् ॥ अप्लुते इति किम् ? तिष्ठतु पय अ ३ ग्निदत्त । गुरोरनृत इति प्लुतः ॥ **हशि च** । ६।१।११४ ॥ अप्लुतादतः परस्य रोरुः स्याद्धशि । शिवो वन्द्यः । रो रित्युकारानुबन्धग्रहणान्नेह । प्रातरत्र । प्रातर्गच्छ ॥ देवास् इह इति स्थिते । रुत्वम् ॥

---

१ प्रक्रियालाघवाय 'वौजसमौट्–' इत्येव कृत्वा '–रुतिस्यपृक्तम्' 'रौ च' इत्येवं रुघटितान्येव सूत्राणि करणीयानि इति शङ्कमानं प्रति 'शिवोऽर्च्यः' 'शिवो वन्द्यः' इत्यादौ 'अतो रोः' हशि च' इत्यनयोश्चरितार्थत्वेन 'वेधोभ्याम्' इत्यादावुत्वं न स्यात् । 'स्वोजस्–' इति पाठे तु रुत्वस्याश्रयात् सिद्धत्वमुत्वं प्रति कल्पयित्वा सर्वेष्टसिद्धिरिति सूचयन्नाह–**स्वौजसमौडितीति** ॥ २ 'पदस्य' इत्येतद्विशेषणत्वेन 'ससजुषोः' इत्यत्र तदन्तविधौ 'सकारान्तस्य सजूःशब्दान्तस्य पदस्य' इत्यर्थे 'अलोऽन्त्यस्य' इत्येकवाक्यतासिद्धमर्थमाह-**पदान्तस्य सस्येति** ॥ सजूःशब्दान्त्यस्य चेति उचितम् ।। ३ 'एङः पदान्ताद्' इत्यतः 'अति' इति 'ऋत उत्' इत्यतः–'उत्' इति चानुवर्ततेऽत आह–**उः स्यादित्यादि** ॥ ४ 'ससजुषो रुः' इत्यत्र 'पूर्वत्रासिद्धम्' इत्यधिकारेण 'पूर्वत्र कर्तव्येऽसिद्धम्' इति शेषपूरणेन पूर्वम् उत्वं प्रति रोरसिद्धत्वं कथं नेति शङ्कामपहरति–**उत्वं प्रतीति** ॥ ५ 'अकः सवर्णे दीर्घः' इत्यतः 'अकः' 'दीर्घः' इत्यनुवर्तते । प्रथमापदं च द्विवचनसामर्थ्यात् 'तस्माच्छसः' इत्येतत्सामर्थ्याच्च प्रथमाद्वितीयाविभक्तिपरमित्याह–**अकः प्रथमाद्वितीययोरिति** ॥ ६ 'आद् गुणः' इत्येतन्मारणायोद्यतस्यैव पूर्वसवर्णदीर्घस्य 'नादिचि' इत्यनेन मारणे 'आद् गुणः' इति जीवन् यथेच्छं प्रवर्तते इति भावः ॥ ७ तपरकरणेनैव दीर्घस्येव प्लुतस्यापि व्यावृत्तिर्भविष्यत्येवेति 'अप्लुतात्' इति व्यर्थमेवेति शङ्कामपहरति–**प्लुतस्येति** ॥ ८ उपदेश एवोकारस्येत्संज्ञायां प्रयोगे रेफस्यैवोकारादेशविधानाद् व्यर्थमेव 'रोः' इत्युकारोपादानम् 'रोऽप्लुतात्' इत्यतो गुरुभूतं चेति शङ्कामपहरति **रोरिति** ॥

**भोभगोअघोअपूर्वस्य योऽशि । ८ । ३।१७ ॥** असन्धिः सौत्रः । एतत्पूर्वस्य रोर्यादेशः स्यादशि परे ॥ लोपः शाकल्यस्य । देवा इह । देवायिह ॥ अशि किम् ? देवाः सन्ति ॥ यद्यपीह यत्वस्यासिद्धत्वाद्विसर्गो लभ्यते, तथापि विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यात् । नह्ययमल्विधिः । रोरिति समुदायरूपाश्रयणात् ॥ भोस् भगोस् अघोस् इति सकारान्ता निपाताः । तेषां रोर्यत्वे कृते ॥ **व्योर्लघुप्रयत्नतरः शाकटायनस्य ।८।३। १८ ॥** पदान्तयोर्वकारयकारयोर्लघूच्चारणौ वयौ वा स्तोऽशि परे ॥ यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं जायते स लघूच्चारणः ॥ **ओतो गार्ग्यस्य । ८।३।२० ॥** ओकारात्परस्य पदान्तस्यालघुप्रयत्नस्य यकारस्य नित्यं लोपः स्यात् ॥ गार्ग्यग्रहणं पूजार्थम् । भो अच्युत । लघुप्रयत्नपक्षे भोयच्युत ॥ पदान्तस्य किम् ? तोयम् ॥ **उञि च पदे । ८ । ३ । २१ ॥** अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोप उञि पदे । स उ एकाग्निः।पदे किम् ? तन्त्रयुतम् । वेञः संप्रसारणे रूपम् । यदि तु प्रतिपदोक्तो निपात उञिति ग्रहीष्यते तर्ह्युत्तरार्थं पदग्रहणम् ॥ **हलि सर्वेषाम् । ८।३।२२ ॥** भोभगोअघोअपूर्वस्य लघ्वलघूच्चारणस्य यकारस्य लोपः स्या-

---

१ 'ओकारान्तमात्रानुकरणत्वमाश्रित्येदम् ॥ सान्तरान्तानुकरणत्वे तु यलोपस्यासिद्धत्वान्न्याय्य एवासंधिरिति बोध्यम् ॥ २ 'रोः सुपि' इत्यतोऽनुवर्त्याह-**रोरिति** ॥ ३ तथा च 'अशि' इति व्यर्थम् इति शेषः ॥ ४ रोरुकारस्योपदेश एवेत्संज्ञालोपयोर्जातयोरवशिष्टस्य रेफमात्रस्य' विसर्गादेशस्थानित्वे स्थानिवत्त्वेनानेयस्य रेफत्वस्याल्धर्मत्वमिति 'अनल्विधौ' इति प्रतिषेधेन नैव स्थानिवद्भावप्राप्तिरिति शङ्कां वारयति-**नह्ययमिति**॥**अयम्** यादेशविधिः । तत्र हेतुमाह-**रोरितीति** ॥ ५ अयं भावः 'यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते तस्य निमित्तस्य स्थान्यलसाधारणधर्मत्व एव स्थानिवत्त्वनिषेध-इति प्रकृते रुत्वधर्मवैकल्यप्रयुक्तायां यत्वविधेरप्रवृत्तौ स्थानिवत्त्वं मृग्यते तस्य रुत्वस्य विसर्गस्थानिरेफमात्रावृत्तित्वेनासाधारणधर्मत्वाभावान्न स्थानिवत्त्वनिषेधः । न च इत्संज्ञकोकारविशिष्टरेफत्वमेव रुत्वमिति रेफत्वसमनियतमेव रुत्वमिति अलाश्रयत्वादल्विधिरेवेति वाच्यम् । अतिदिश्यमानापेक्षितधर्ममुद्दिश्यैव विचारस्य करणीयत्वेन "विशिष्टं ह्येषोऽनलमाश्रयते इटं नाम" इति भाष्येण अपेक्षितधर्म एव विचारस्य करणीयतादर्शनेन स्थानिवृत्तिधर्मविचारस्याकिंचित्करत्वसूचनात् ॥ ६ उपदिश्यमानत्वेन शीघ्रोपस्थितिकत्वं प्रतिपदोक्तत्वम् अनेकलक्षणसाध्यज्ञानत्वेन विलम्बोपस्थितिकत्वं लाक्षणिकत्वमिति शीघ्रोपस्थितिकविलम्बोपस्थितिकयोः शीघ्रोपस्थितिकस्यैव ग्रहणं न्याय्यमिति भावः ॥ ७ यदि तु यविधौ 'रो रि' इति सूत्रतः 'रः' इत्यस्यानुवृत्त्या रेफस्यैव यत्वस्थानित्वं ज्ञात्वा रेफत्वस्य विसर्गस्थान्यल्रेफासाधारणधर्मत्वेनाल्विधित्वान्नैव स्थानिवत्त्वम् इति यविधौ 'अश्' ग्रहणं व्यर्थम् इत्युपपाद्य भाष्यकृता-**उत्तरार्थं तर्हि अश्ग्रहणं कर्तव्यम् "हलि सर्वेषाम्" हलि अशि यथा स्यात्--इह मा भूत्-वृक्षवयतेरप्रत्ययः' वृक्षव् करोति** ' इति प्रयोजनमुक्तम्, इति विभाव्यते तर्हि प्रकृतसूत्रेऽपि 'व्योः' इति समुदितस्यैवानुवृत्तिः करणीया 'अशि' इत्यस्य च ॥ यत्तु 'लोपः शाकल्यस्य' इति सूत्रशब्देन्दौ नागेशभट्टः-परे तु ' **नहि पदान्ता हलोऽणः सन्ति** ' इति लण्सूत्रभाष्याद् वृक्षवादेरनभिधानमेव-इति, तन्न सम्यक् । तादृशभाष्यपाठस्य कस्मिन्नपि पुस्तकेऽलाभात् । ' **नहि पदान्ताः परेऽणः**' इति तूपलभ्यते यद्यपि तथापि तस्य भाष्यस्यैवैकदेशित्वमवश्यं कल्पनीयम् ' **ननु चायमस्ति कर्तुं हर्तुं**' इति भाष्येण दूषितत्वेनाप्रामाणिकत्वसूचनाच्च 'वृद्धिरेचि' 'वृद्धिरादच्' इति निर्देशेन 'न य्वाभ्यां पदान्ताभ्याम्' इति सूत्रेण पदान्ते हलणां सत्त्वबोधनाच्च ॥ अशि परतस्तु वृक्षव् इति वलोपस्येष्टत्वमेव ' **हलि अशि यथा स्यात्**' इत्युक्तभाष्यात् किं न कल्पयेत । व्योः' इत्यत्र तु 'झलां जश्' इत्यत्रेवापदत्वादेव लोपो न कृतः ॥

द्धलि सर्वेषां मतेन ॥ भो देवाः । भो लक्ष्मि । भो विद्वद्वृन्द । भगो नमस्ते। अघो याहि । देवा नम्याः । देवा यान्ति॥ हलि किम्? दवायिह ॥ **रोऽसुपि** ।८।२।६९॥ अह्नो[1] रेफादेशः स्यान्न तु सुपि । रोरपवादः । अहरहः । अहर्गणः ॥ असुपि किम्? अहोभ्याम्। अत्र 'अहन्' इति रुत्वम् ॥ **रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्*** ॥ अहोरूपम् । गतमहो रात्रिरेषा । एकदेशविकृतस्यानन्यत्वादहोरात्रः । अहोरथन्तरम् । **अहरादीनां पत्यादिषु वा रेफः*[2]** ॥ विसर्गापवादः । अहर्पतिः । गीर्पतिः । धूर्पतिः । पक्षे विसर्गोपध्मानीयौ ॥ **रो रि** ।८।३।१४ ॥ रेफस्य रेफे परे लोपः[3] स्यात्॥ **ढ्रलोपे पूर्वस्य दीर्घोऽणः** ।६।३।१११ ॥ ढरेफौ लोपयतीति तथा[4] तस्मिन्वर्णेऽर्थाद् ढकाररेफात्मके परे पूर्वस्याणो[5] दीर्घः स्यात् । पुना रमते । हरी रम्यः । शंभू राजते ॥ अगः किम्? तृढः । वृढः । तृहू हिंसायाम् । वृहू उद्यमने ॥ पूर्व[6]ग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् । लीढः । अजर्घाः ॥ मनस् रथ इत्यत्र रुत्व कृते हशि चेत्युत्वे रो रीति लोपे च प्राप्ते ॥ **विप्रतिषेधे परं कार्यम्** ।१।४।२। ॥ तुल्यबलविरोधे[7] परं[8] कार्यं स्यात् ॥ इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रो रीत्यस्यासिद्धत्वादुत्वमेव । मनोरथः ॥ **एतत्तदोः सुलोपोऽकोरनञ्समासे हलि** ।६।१।१३२ ॥ अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्याद्धलि[9] न तु नञ्समासे ॥ एष विष्णुः । स शम्भुः । अकोः किम्? एषको रुद्रः ॥ अनञ्समासे किम्? असः[10] शिवः ॥ हलि किम्? एषोऽत्र ॥ **सोऽचि लोपे चेत्पादपूरणम्** ।६।१।१३४ ॥ सस् इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत । सेमामविड्ढि प्रभृतिं य ईशिषे । इह ऋक्पाद[11] एव गृह्यत इति वामनः ॥ अविशेषाच्छ्लोकपादोऽपीत्यपरे[12] ।

---

१ 'अहन्' इति सूत्रमनुवर्ततेऽत आह–**अह्न इति** ॥ २ भाष्ये वार्तिक एव '**अह्नः**' इत्युपलभ्यते ॥ ३ 'ढो ढे लोपः' इत्यतोऽनुवर्त्याह–**लोप इति** ॥ ४ **तथा** ढ्रलोपम्। 'कर्मण्यण्' ॥ ५ दीर्घपदश्रुत्या 'अचः' इत्युपस्थित्यैव सिद्धौ अण्ग्रहणसामर्थ्याद् अण् पूर्वेण णकारेणैवेति बोध्यम् ॥ ६ 'ढ्रलोपे' इति सप्तमीलिङ्गेन 'तस्मिन्निति' इति परिभाषाबलेनैव 'पूर्वस्य' इत्युपस्थितौ सिद्धायां पूर्वग्रहणम् " अलुगुत्तरपदे " इत्यतोऽनुवर्तमानस्य 'उत्तरपदे' इत्यस्य निवृत्त्या समासविषयपूर्वपदत्वमन्तराऽपि समासाभावेऽपि पूर्वमात्रस्य दीर्घार्थम् ॥ अन्यथा 'चतूरसी' इत्यादावेव स्यात्। इति पदद्वयाभावस्थलमुदाहरति–**लीढ इति** ॥ ७ '**द्वौ प्रसङ्गावन्यार्थावेकस्मिन्स विप्रतिषेधः**" इति वार्तिकानुसारेण 'परस्परलब्धावकाशयोरेकत्र समावेशस्तुल्यबलविरोधः ॥ एवं च 'हशि च' इत्यस्याप्राप्तिस्थले 'पुनारमते' इत्यादौ 'रो रि' इत्यनेनावकाशो लब्धः । 'रो रि' इत्यस्याप्राप्तिस्थले 'रामो याति' इत्यत्र 'हशि च' इत्यनेनावकाशो लब्धः । 'मनोरथः' इत्यत्र 'रो रि 'हशि च' इत्यनयोः प्राप्तिसत्त्वेन तुल्यबलविरोधः ॥ ८ **परम्** अष्टाध्यायीपाठे पश्चात् पठितम् ॥ इष्टं वा । तेन प्राक्पठितमपि क्वचिद्भवति ॥ ९ 'स्वं रूपम्' इत्यनेन सूत्रनिर्दिष्टानुपूर्व्याः ग्रहणे बोधिते 'एनकद्' इत्यानुपूर्व्याः सूत्रनिर्दिष्टत्वाभावे कथं सुलोपापत्तिरिति चेत् '**तन्मध्यपतितस्तद्ग्रहणेन गृह्यते**' इति लोकन्यायस्य शास्त्रेऽप्याश्रयणस्यैव ज्ञापनार्थम् 'अकोः' ग्रहणस्य सत्त्वात् ॥ १० नञर्थस्य प्राधान्ये त्यदादीनामुपसर्जनत्वेन त्यदाद्यत्वानुपपत्तौ हल्ङ्यादिलोपेनैव सोर्निवृत्तिसिद्धौ व्यर्थम् '**अनञ्समासे**' इति नञर्थस्योत्तरपदार्थविशेषणतामेव ज्ञापयति 'आरोपितः सः' इति बोधः ॥ ११ 'स्यश्छन्दसि' इति सूत्राच्छन्दोग्रहणेऽनुवृत्ते, '**यत्र पादव्यवस्था सर्क्**' इति जैमिनिना ऋक्ष्वेव पादव्यवस्थाकथनादिति भावः ॥ १२ 'स्यश्छन्दसि' इत्यतश्छन्दोग्रहणानुवृत्तौ प्रमाणाभावादित्यादौ पूरणीयमिति भावः ॥

सैषे दाशरथी रामः ॥ लोपे चोदति किम् ? स इत् क्षेति । स एवमुक्त्वा ॥ सत्येवेत्यवधारणं तु 'स्यश्छन्दसि बहुलम्' इति पूर्वसूत्राद्बहुलग्रहणानुवृत्त्या लभ्यते। तेनेह न—सोऽहमाजन्मशुद्धानाम्।

इति स्वादिसंधिप्रकरणम् ।

---

## अथाजन्तपुंलिङ्गप्रकरणम् ।

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। १।२।४५॥** धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ॥ **कृत्तद्धितसमासाश्च ।१।२।४६॥** कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः । पूर्वसूत्रेण सिद्धे समासग्रहणं नियमार्थम् । यत्र संघाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैव । तेन वाक्यस्य न ॥ **प्रत्ययः ।३।१।१॥** आपञ्चमपरिसमाप्तेरधिकारोऽयम् ॥ **परश्च । ३।१।२॥** अयमपि तथा ॥ **ङ्याप्प्रातिपदिकात्**

---

१ सैष दाशरथी रामः सैष भीमो महाबलः । सैष कर्णो महात्यागी सैष राजा युधिष्ठिरः ॥ २ तेन 'अहन्' इत्यत्र न प्रातिपदिकत्वेन नलोपापत्तिः ॥ ३ तेन 'हरिषु, करोषि' इत्यत्र सुप्सिपोः प्रातिपदिकत्वेनौत्सर्गिकैकवचने पदत्वेन 'सात्पदाद्योः' इति निषेधो न ॥ इदं सातिग्रहणमेव प्रत्ययपर्युदासे लिङ्गमिति भावः ॥ ४ तेन 'हरिषु' इति समुदायस्य प्रातिपदिकत्वेन 'सुपो धातु–' इति सुपो लुगापत्तिः 'पचेरन्' इत्यादौ प्रातिपदिकत्वेन नलोपापत्तिश्च नेति बोध्यम् ॥ ५ तेन 'धनं वनम्' इत्यादौ प्रतिवर्णं प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तौ 'सुबन्तं पदम्' इति पदसंज्ञायां नलोपादि न भवति ॥ **'धातोश्चेत् कृदन्तस्यैव'** इति नियमेन 'अहन्' इत्यादिव्यावृत्तौ 'अधातु' ग्रहणं **'प्रत्ययान्तस्य चेत् तद्धितान्तस्यैव'** इति नियमेन 'हरिषु' इत्यादिव्यावृत्तौ **'प्रत्ययान्तं वर्जयित्वा'** इति अत्र सूत्रे उत्तरसूत्रे चार्थवत्त्वस्य "**कृत्तद्धितान्तं चैवार्थवत्। न केवलाः कृतस्तद्धिता वा**" इति पदसंज्ञासूत्रभाष्यम् "**शास्त्रीयार्थग्रहणेऽर्थवद्ग्रहणानुवृत्तिवैयर्थ्येन तदनुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयते**" इति तत्रत्यप्रदीपम् "**धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते । कृत्तद्धितानामर्थश्च केवलानामलौकिकः ॥ प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते ॥**" इति वाक्यपदीयम् "**नहि लोके केवलेन प्रत्ययेनार्थो गम्यते केन तर्हि सप्रकृतिकेन**" इति 'संख्याया अतिशदन्तायाः' इति सूत्रभाष्यं चानुकूलयितुम् '**पदत्वसंज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वरूपस्यैव** ग्राह्यत्वेन 'प्रत्ययं वर्जयित्वा' इति च स्पष्टार्थमेव ॥ तथाच "**अर्थवत् प्रातिपदिकम्**" इत्येव सूत्रमावश्यकम् । निरर्थकपदसमुदायव्यावृत्तिरेवार्थवत्पदफलम् ॥ संख्याकर्मादेरभावाच्च नैव प्रतिवर्णं विभक्त्युत्पत्तिः ॥ ६ शशशृङ्गादिपदानामपि बौद्धेऽर्थे शक्तिरिति पूर्वसूत्रेणैव सिद्धमिति भावः ॥ ७ नियमाकारश्च '**यत्रार्थवति संघाते पूर्वो भागस्तथोत्तरः । स्वातन्त्र्येण प्रयोगार्हः समासस्यैव तस्य चेत्**' इति ॥ ८ **वाक्यस्येति** । व्यपेक्षायां सामर्थ्ये 'राजन् ङस् पुरुष सु' इत्यादेरित्यर्थः ॥ ९ स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकत्वमेव प्रत्ययत्वं महासंज्ञाकरणसामर्थ्यादवगन्तव्यमिति नागमानां प्रत्ययत्वापत्तिः । आदेशानां तु स्थानिवत्त्वेनेष्टमेवेत्यधिकारत्वेऽपि न क्षतिः ॥ १० षष्ठ्यंशविकल्प "'तस्मादित्युत्तरः" इति परिभाषया प्रत्ययानां परत्वे सिद्धे "परश्च" इत्ययमधिकारः '**प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या प्रकृतेः पर एव प्रत्ययः प्रयोक्तव्यः**' इति नियमार्थः । अंकज्बहुज्विषये तु 'प्राक् टेः' 'पुरस्तात्' इति विशेषकनेन नैव दोषः ॥

४ । १ । १ ॥ ङ्यन्तादाबन्तात्प्रातिपदिकाच्चेत्यापञ्चमपरिसमाप्तेरधिकारः । **प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्**[1] इत्येव सिद्धे* ङ्याब्ग्रहणं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यात् ङ्याब्भ्यां प्राङ् मा भूदित्येवमर्थम् ॥ **स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् । ४ । १ । २** ॥ ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः । सुङस्योरुकारेकारौ जशटङपाश्चेतः ॥ **विभक्तिश्च ।१।४।१०४** ॥ सुप्तिङौ विभक्तिसंज्ञौ स्तः । तत्र सु औ जस् इत्यादीनां सप्तानां त्रिकाणां प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञाः । ताभिरिहापि व्यवहारः ॥ **सुपः ।१।४।१०३** ॥ सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः[2] ॥ **द्व्येकयोर्द्विवचनैकवचने ।१।४।२२** ॥ द्वित्वैकत्वयोरेते स्तः[3] ॥ **बहुषु बहुवचनम् ।१।४।२१** ॥ बहुत्वे एतत्स्यात् । रुत्वविसर्गौ । रामः ॥ **सरूपाणामेकशेष एकविभक्तौ ।१।२।६४** ॥ एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक[4] एव शिष्यते[5] ॥ प्रथमयोः पूर्वसवर्णः ॥ नादिचि ॥ वृद्धिरेचि ॥ रामौ[6] ॥ **चुटू । १।३।७** ॥ प्रत्ययाद्यौ चुटू इतौ स्तः ॥ इति जस्येत्संज्ञायाम् ॥ **न विभक्तौ तुस्माः । १ । ३ । ४** ॥ विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः ॥ इति सकारस्य नेत्त्वम्[7] ॥ **अतो गुणे । ६ । १ । ९७** ॥ अपदान्तादकाराद्गुणे परतः पररूपमेकादेशः स्यात्[8] ॥ इति प्राप्ते । परत्वात्पूर्वसवर्णदीर्घः । 'अतो गुणे' इति हि **पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्**[9] इति न्यायेन 'अकः सवर्णे' इत्यस्यैवायमपवादो न तु 'प्रथमयोः' इत्यस्यापि । रामाः ॥ **एकवचनं संबुद्धिः[10] । २ । ३ । ४९** ॥ संबोधने प्रथमाया एकवचनं

---

१ समानाधिकरणाधिकारे '**युवा खलतिपलितवलिनजरतीभिः**' इति जरतीशब्देन समासविधायकसूत्रमनुपपन्नं सत् परिभाषायामस्यां ज्ञापकमिति भावः ॥ त्यूङन्तेभ्यो ङ्याब्ग्रहणेऽप्यप्राप्तेरावश्यकैवेति भावः ॥ * तथा च आर्याशब्दात् के कृते 'उदीचामातः स्थाने' इति विकल्पे 'आर्यिका आर्यका' इति लोहिनीशब्दात् कप्रत्यये 'लोहिनिका' इति सिध्यति ॥ २ 'एतर्हि' इत्यत्र 'सुपि च' इत्येतद्वारणाय प्राग्दिशीयानां सुप्संज्ञा न कृता तदाद्यत्वोपपत्तये विभक्तिसंज्ञैव कृतेति भावः ॥ ३ सूत्रे 'द्व्येकयोः' इति धर्मपरो निर्देश इति भावः ॥ ४ एकग्रहणं स्पष्टार्थमेव । विभक्तेः सारूप्य उपलक्षणत्वेन परिच्छेत्तृवाचकमातृशब्दस्य 'मातारौ' इति रूपसंभवेन जननीवाचिमातृशब्दस्य 'मातरौ' इति रूपसंभवेन सारूप्याभावादेकशेषो न भवति । हरिणस्त्रीहरितवर्णस्त्रीवाचिनोर्हरिणीशब्दस्यैकशेषो भवत्येवेति बोध्यम् ॥ ५ अन्ये लुप्यन्ते । यः शिष्यते स लुप्यमानार्थाभिधायी ॥ ६ 'तौ सत्' इति निर्देशेन भ्रष्टावसरन्यायो न प्रवर्तते । हननोद्यतव्याधस्यैव हनने पशुजीवनमव्याहतमेवेति प्रागुक्तमेव ॥ ७ **इत्त्वम्** इत्संज्ञा 'हलन्त्यम्' इति प्राप्ता ॥ ८ 'एकः पूर्वपरयोः' 'एङि पररूपम्' 'उस्यपदान्तात्' इत्यतोऽनुवर्त्याह-**अपदान्तादित्यादि** ॥ 'सः' इत्यत्र चरितार्थस्य 'अतो गुणे' इत्यस्य 'हरो' इत्यत्र चरितार्थस्य पूर्वसवर्णदीर्घस्य च 'राम-अस्' इत्यत्र प्राप्तौ परत्वात् 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घ एव भवतीति भावः ॥ ९ अयं भावः-'अतो गुणे' इति पररूपविधिर्वृद्धिदीर्घयोरपवादभूतो दीर्घमात्रं नैव बाधते प्रागुपस्थितस्य 'अकः सवर्णे' इत्यस्य बाधेन श्रान्तत्वात्कृतकृत्यत्वाच्चेति 'प्रथमयोः' इति दीर्घं बाधितुं नोत्सहत इति भावः ॥ १० 'संबोधने च' 'प्रातिपदिकार्थ-' इत्यतः 'संबोधने' इति 'प्रथमा' इति चानुवर्तेते इति भावः ॥

संबुद्धिसंज्ञं स्यात्॥ **एङ्ह्रस्वात्संबुद्धेः । ६ । १ । ६९ ॥** एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते संबुद्धेश्चेत्॥ संबुद्ध्याक्षिप्तस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणान्नेह—हे कतरत्कुलेति।हे राम। हे रामौ। हे रामाः। एङ्ग्रहणं किम्? हे हरे। हे विष्णो। अत्र 'हि परत्वान्नित्यत्वाच्च संबुद्धिगुणे कृते ह्रस्वात्परत्वं नास्ति॥ **अमि पूर्वः । ६ । १ । १०७ ॥** अकोऽम्यचि परतः पूर्वरूपमेकादेशः स्यात्॥ रामम्। रामौ ॥ **लशक्वतद्धिते । १ । ३ । ८ ॥** तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः॥ इति शसः शस्येत्संज्ञा॥ **तस्माच्छसो नः पुंसि । ६। १ ।१०३॥** पूर्वसवर्णदीर्घात्परो यः शसः सकारस्तस्य नः स्यात्पुंसि ॥ **अट्कुप्वाङ्नुम्व्यवायेऽपि । ८ । ४ । २ ॥** अट् कवर्गः पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात्समानपदे ॥ पदव्यवायेऽपीति निषेधं बाधितुमाङ्ग्रहणम्। नुम्ग्रहणमनुस्वारोपलक्षणार्थम्। तच्चाकर्तुं शक्यम्। अयोगवाहानामट्सूपदेशस्योक्तत्वात् ॥ इति णत्वे प्राप्ते ॥ **पदान्तस्य । ८ । ४ । ३७ ॥** पदान्तस्य नस्य णत्वं न स्यात् ॥रामान्॥ **यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । १ । ४ । १३ ॥** यः प्रत्ययो यस्मात्क्रियते तदादि शब्दस्वरूपं तस्मिन्प्रत्यये परेऽङ्गसंज्ञं स्यात्॥ भवामि भविष्यामीत्यादौ विकरणविशिष्टस्याङ्गसंज्ञार्थं तदादिग्रहणम् ॥ विधिरिति किम्?

---

१ संबुद्धिसंज्ञायाः प्रत्ययमन्तराऽसंभवात् 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेर्ग्रहणम्' इति परिभाषयोपस्थितस्य तदादीत्यन्तांशस्याङ्गत्वसमनियतत्वेनाङ्गपदलाभे तद्विशेषणतया तदन्तविधिः 'हल्ङ्याब्भ्यः' इत्यतो 'हल' इति 'लोपो व्योः' इत्यतः 'लोपः' इति चानुवर्तत इत्याह—**एङन्तादिति**॥ २अयं भावः—सम्बुद्ध्योपस्थितस्य तदादिपर्यायाङ्गपदार्थस्य प्रत्यासत्त्या संबुद्धिपदार्थ एवान्वयस्य न्याय्यत्वे 'अङ्गात्परा या संबुद्धिस्तदवयवो हल् लुप्यते स च हल् एङ्ह्रस्वात् परीभूतश्चेत्' इत्यर्थे 'हे कतरत्' इत्यत्र तकारलोपापत्तिः स्यात्। तद्वारणाय'—तद्रूपो हल्— 'इत्यर्थाङ्गीकारे 'हे कुल' इत्यत्र मकारलोपानुपपत्तिरतोऽन्येनोपस्थितस्यान्यत्रान्वयाङ्गीकारेण व्याख्याने तु सर्वेष्टसिद्धिः 'हे कतरत्' इत्यत्राङ्गस्य हलन्तत्वात् हे कुलेत्यत्र तु पूर्वरूपैकादेशे पूर्वान्तवत्त्वेनाङ्गत्वातिदेशात् इति ॥ ३ 'अजादावमि' इति व्याख्यानेऽपि 'आदेः परस्य' इति परिभाषया 'आदेः' इत्युपस्थितौ 'पूर्वान्त्यपराद्योः' इत्येवमेव फलिते वर्णयोरेव स्थानित्वमिति भावः ॥ ४ 'प्रथमयोः पूर्वसवर्णः' इत्यतः 'पूर्वसवर्णदीर्घः' परामृश्यते इत्याह—**पूर्वेति** ॥ ५ 'रषाभ्यां नो णः समानपदे' इति सूत्रस्यैव शेषोऽयमिति भावः ॥ ६ निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वं समानपदत्वम् ॥ ७ 'पर्याणद्धम्' इत्यादौ इति शेषः ॥ ८ 'अपदान्तस्य मूर्धन्यः' इत्यधिकारयोजने तु व्यर्थमिदं सूत्रमिति बोध्यम् ॥ ९ 'तदादि' इत्येतद्घटकतच्छब्देन परामृश्यमाणस्य निर्देशाय '**यस्मात्**' इति ॥ १० अयं भावः—तदादिग्रहणाभावे 'यस्मात्प्रत्ययविधिस्तत्प्रत्ययेऽङ्गम्' इति सूत्रन्यासे भूधातोरेव प्रत्ययस्य मिपो विधानेन भूधातोरेवाङ्गसंज्ञा स्यात् न शप् स्यादिविकरणविशिष्टस्येति 'अतो दीर्घो यञि' इति दीर्घो न स्यात्। तदादिग्रहणे कृते तु तदादिसमुदायस्य 'भव' 'भविस्य' इति समुदायस्याङ्गसंज्ञायां दीर्घो भवति इति ॥ ११—'यस्मात्प्रत्ययस्तदादि प्रत्ययेऽङ्गम्' इति सूत्रन्यासे '**प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या**' '**प्रकृतिपर एव प्रत्ययः**' इति नियमेन प्रत्यये परतः प्रकृतेरेव सत्त्वेन तस्या अङ्गत्वमिष्टमेवेति व्यर्थमेव विधिग्रहणम्—इति शङ्कते—**विधिरिति किमिति** ॥ कुत्रचित् प्रकृतेर्लोपेन कुत्रचित्प्रत्ययलोपेन प्रत्ययरहितप्रकृति—प्रकृतिरहितप्रत्ययमात्रसंनिकर्षेऽङ्गसंज्ञा मा भूत् इत्याशयेन समाधत्ते—**स्त्री इयतीति** ॥ स्त्रीशब्दाज्जातस्य सुप्रत्ययस्य 'हल्ङ्याब्भ्यः' इत्यनेन लोपे 'स्त्री' इति प्रकृतिमात्रं श्रूयते। इदम्शब्दात् 'किमिदंभ्यां वो घः' इति वतुपो वकारस्य 'घ' आदेशे तस्य 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' इति इयादेशे 'इदंकिमोरीश्की' इति ईशादेशे 'ई इयत्'—

स्त्री इयती ॥ प्रत्यये किम् ? प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा मा भूत् ॥ **अङ्गस्य** ॥ ६।४।१ ॥ इत्यधिकृत्य ॥ **टाङसिङसामिनात्स्याः** । ७ । १।१२ ॥ अकारान्तादङ्गाट्टादीनां क्रमादिनादय आदेशाः स्युः । णत्वम् । रामेण ॥ **सुपि च** । ७ । ३ । १०२ ॥ यञादौ सुपि परे अतोऽङ्गस्य दीर्घः स्यात् ॥ रामाभ्याम् ॥ **अतो भिस ऐस्** । ७ । १ । ९ ॥ अकारान्तादङ्गाद्भिस ऐस् स्यात् ॥ अनेकाल्त्वात्सर्वादेशः । रामैः ॥ **ङेर्यः** । ७ । १ । १३॥ अतोऽङ्गात्परस्य ङे इत्यस्य यादेशः स्यात् ॥ रामाय । इह स्थानिवद्भावेन यादेशस्य सुप्त्वात् सुपि चेति दीर्घः । '**संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य**' **इति** परिभाषा तु नेह प्रवर्तते । 'कष्टाय क्रमणे' इत्यादिनिर्देशेन तस्या अनित्यत्वज्ञापनात् ॥ रामाभ्याम् ॥ **बहुवचने झल्येत्** ।७।१।१०३ ॥ झलादौ बहुवचने सुपि परे अतोऽङ्गस्यैकारः स्यात् । रामेभ्यः ॥ बहुवचने किम् ? **रामः** । रामस्य ॥ झलि किम् ? रामाणाम् ॥ सुपि किम् ? पचध्वम् ॥ जश्त्वम् ॥ **वावसाने** ।८ । ४।५६ ॥ अवसाने झलां चरो वा स्युः ॥ रामात्, रामाद् । द्वित्वे रूपचतु-

---

-इति स्थिते 'यस्येति च' इति ईकारलोपे 'उगितश्च' इति ङीपि 'इयती' इति प्रकृतिरहितं प्रत्ययमात्रम् अवशिष्यते । एवं च 'स्त्री इयती' इति प्रयोगे स्त्रीशब्दात् यः सुप्रत्ययः कृत आसीत् स न श्रूयते किन्तु इदम्-शब्दाद् कृत 'इयती' इति प्रत्यय एव श्रूयते । अत्र 'स्त्री' शब्दस्याजादि 'इयत्' इति प्रत्ययनिरूपिताङ्गत्वे 'स्त्रियाः' इति सूत्रेण इयङादेशापत्तिः स्यादतो विधिग्रहणम् । कृते तु तस्मिन् इयत्प्रत्ययस्य स्त्रीशब्दाद्विहितत्वाभावेन इदम्शब्दादेव विहितत्वेन न स्त्रीशब्दस्यांगसंज्ञा किंतु इदम्शब्दस्यैवाजादिप्रत्ययनिरूपितांगसंज्ञा । स्त्रीशब्दस्य तु सुप्रत्ययनिरूपितैवाङ्गसंज्ञेति न इयङादेशापत्तिरिति भावः ॥

१ 'सुपि च' इत्यादिसूत्रैः सुबादिप्रत्ययाव्यवहितपूर्वस्यैवाङ्गस्य कार्यविधानेन प्रत्ययस्य नैव भविष्यत्यङ्गसंज्ञेति व्यर्थमेव 'प्रत्यये' इति सप्तम्यन्तग्रहणमिति शंकते-**प्रत्यये किमिति** ॥ यत्र क्वचित् सप्तम्यन्तं निमित्तपदं नैव श्रूयते तत्र 'तस्मिन्निति-' इति परिभाषाया अनुपस्थित्या 'पूर्वस्य' इत्यस्यानुपस्थित्या प्रत्ययविशिष्टस्यैवाङ्गसंज्ञायां तद्विहितकार्यस्य परनिमित्तकत्वं न स्याद् अतः 'प्रत्यये' इति कार्यमेव । अत्र सूत्रे 'प्रत्यये' इति कृते सर्वत्राङ्गाधिकारे 'प्रत्यये' इति सप्तम्यन्तस्यागत्योपस्थितिर्भवत्येवेति 'उरत्' इत्यत्र 'प्रत्यये' इत्यस्याधिकाराभावेऽपि अङ्गसंज्ञायाः प्रत्ययपरत्वमन्तराऽसंभवेन 'प्रत्यये' इति सप्तम्यन्तमाक्षिप्यत एवेति तद्विहितस्य अभ्यासऋवर्णस्थानिकाकारस्य परनिमित्तत्वेन स्थानिवत्त्वात् 'न संप्रसारणे संप्रसारणम्' इति निषेधेन पुनः संप्रसारणं 'वव्रश्च' इत्यत्र न भवति । किं च 'देवदत्त ओदनमपाक्षीत्' इत्यत्र देवदत्तशब्दात् सुप्रत्ययो विहित इति देवदत्तादिकसमुदायस्याङ्गसंज्ञायां देवदत्तशब्दात् प्रागडागमापत्तिः स्यात् 'प्रत्यये' ग्रहणाभावे, 'प्रत्यये' ग्रहणे कृते तु 'यः प्रत्ययो विहितः तत्प्रत्ययपूर्वभागस्यैव प्रत्यासत्त्या लभ्यते', इति सुप्रत्यये परतो देवदत्तस्यैवाङ्गसंज्ञा लुङ्निरूपिताङ्गसंज्ञा तु 'पच्' धातोरेवेति न देवदत्तात् प्रागडागमापत्तिरिति भावः ॥ २ अङ्गाधिकारसामर्थ्याद् भिस् प्रत्यय एव गृह्यते तेन 'ब्राह्मणभिस्सा' इत्यादौ नैव ऐसादेशापत्तिः ॥ ३ भ्यामादिष्वपि सुप्त्वस्य सत्त्वात् स्थान्यलसाधारणधर्मत्वाभावेन 'अनल्विधौ' इति प्रतिषेधाप्रवृत्तेरिति भावः॥ ४ **संनिपातेति** ॥ उपजीव्यविरोधमूलिकैषेति सन्निपातो द्वयोः सम्बन्धः । ययोर्द्वयोः संबन्धं निमित्तीकृत्य जायमानो विधिस्तयोर्द्वयोः संबन्धविघातकस्य निमित्तं न भवतीत्यर्थः । एवं च ह्रस्वाकारान्ताङ्ग-ङे संनिपातलक्षणो यादेशो ह्रस्वाकारान्तत्वविघातकस्य दीर्घस्य निमित्तं न भवतीति दीर्घाप्राप्तिरिति भावः ॥ ५ 'प्रत्ययः' 'सर्वस्य' 'ताभ्याम्' 'आचार्याणाम्' इत्यादिनिर्देशैरनिष्टवारणे सिद्धे 'नासूया कर्तव्या यत्रानुगम आचार्येण क्रियते' इति भाष्येण सौत्रनिर्देशेष्वपि सौत्रत्वकल्पनावारणाय शास्त्रान्वितत्वसंपादनाय तत्तदुपादानमिति तत्त्वम् ॥

ष्टयम् । रामाभ्याम् । रामेभ्यः । रामस्य । सस्य द्वित्वपक्षे 'खरि च'इति चर्त्वे॑ऽप्यान्तरतम्या-त्सस्य स एव न तु तकारः । अल्पप्राणतया प्रयत्नभेदात् । अत एव 'सः सि' इति तादेश आरभ्यते ॥ **ओसि च ।७।३।१०४** ॥ ओसि परे अतोऽङ्गस्य एकारः स्यात् ॥ रामयोः ॥ **ह्रस्वनद्यापो नुट् ।७।१।५४** ॥ ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात् ॥ **नामि ।६।४।३** ॥ नामि परेऽजन्ताङ्गस्य दीर्घः स्यात् ॥ रामाणाम् । सुपि चेति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते संनिपातपरिभाषाविरोधात् । 'नामि इत्यनेन त्वारम्भसामर्थ्यात्परिभाषा बाध्यते । रामे । रामयोः ॥ सुपि एत्वे कृते ॥ **अपदान्तस्य मूर्धन्यः । ८ ।३ । ५५** ॥ आपादपरिसमाप्तेरधिकारोऽयम् ॥ **इण्कोः । ८ । ३ । ५७** ॥ इत्यधिकृत्य ॥ **आदेशप्रत्ययोः । ८ । ३ । ५९** ॥ 'सहेः साडः स' इति सूत्रात्स इति षष्ठ्यन्तं पदमनुवर्तते । इण्कवर्गाभ्यां परस्यापदान्तस्यादेशः प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेशः स्यात् ॥ विवृताघोषस्य सस्य तादृश एव षः । रामेषु ॥ इण्कोः किम् ? रामस्य ॥ आदेशप्रत्यययोः किम् ? सुपीः सुपिसौ सुपिसः ॥ अपदान्तस्य किम् ? हरिस्तत्र ॥ एवं कृष्णमुकुन्दादयः ॥ **सर्वादीनि सर्वनामानि । १ । १ । २७** ॥ सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः ॥ तदन्तस्यापीयं संज्ञा । द्वन्द्वे चेति ज्ञापकात् । तेन परमसर्वत्रेति त्रल् । परमभवकानित्यत्राकच्च सिद्ध्यति ॥ **जसः शी । ७ । १ । १७** ॥ अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात् ॥ अनेकाल्त्वात्सर्वादेशः । नच अर्वणस्तृ'--इत्यादाविव नानुबन्धकृतमनेकाल्त्वमिति वाच्यम् । सर्वादेशत्वात्प्रागित्संज्ञाया एवाभावात् । सर्वे ॥ **सर्वनाम्नः स्मै । ७ । १ । १४** ॥ अतः सर्वनाम्नो ङे इत्यस्य स्मै

---

१ सकारस्य महाप्राणत्वात् तकारस्याल्पप्राणत्वादिति भावः ॥ २ अयं भावः–यदि चर्त्वेन सकारस्य तकारः स्यात् तर्हि 'सः सि' इति सूत्रं व्यर्थमेव स्यात् । पंचाशतो विंशतिरन्तर्गता, षष्टिर्बहिर्गता, इति व्यवहारस्य सर्वाङ्गीकृतत्वेन 'अल्पापेक्षमन्तरङ्गम्, बह्वपेक्षं बहिरङ्गम्' इत्यत्रापि लक्षणे बाधकाभावेन केवलशरपक्षे 'चयो द्वितीयाः' इति द्वितीयादेशे कर्तव्ये आर्धधातुकसकारापेक्षस्य तादेशस्यासिद्धत्वेन 'चर्त्वे द्वितीयादेशो न तकारे तु द्वितीयादेशः' इति फलभेदाभावादिति ॥ ३ इगागमे तु 'ज्ञान इ ओस्' इत्यवस्थायां परत्वादाङ्गत्वाच्च नुमि गुणे 'ज्ञानेनोः' इत्यापत्तिः स्यात्, इडागमे 'गङ्ग' इत्यत्र संबुद्धिश्रवणापत्तिः पञ्चमीसमासेन स्थानिवत्त्वाद् इकारव्यवधानेन हल्ङ्याादिलोपाप्राप्तेः 'एङ्ह्रस्वात्' इत्यस्याप्राप्तेश्चेत्यभिप्रेत्याह–**एकार इति** ॥ ४ 'आमि' इत्येवं न्यासे 'नोपधायाः' इत्यत्रापि 'आमि' इत्यनुवृत्तौ 'चर्मणाम्' इत्यत्र दीर्घापत्तिरतः सनकारनिर्देश इति भावः ॥ ५ यदि तु 'एङ्ह्रस्वात्' इति सूत्रभाष्ये 'हे कुण्ड' इत्यादौ 'आदेः परस्य' इति अकारलोपे 'सुपि च' इति दीर्घे 'हे कुण्डाम्' इति दीर्घापत्तिदानेन 'सुपि च' इति सूत्रविधेयदीर्घमात्रे संनिपातपरिभाषाया अप्रवृत्तिः सूच्यते इति विभाव्यते, तदा हरीणामित्याद्यर्थमावश्यकं सूत्रमिहापि न्याय्यत्वादुपन्यस्तमिति ध्येयम् ॥ ६ कतीनामित्यत्र 'षट्चतुर्भ्यश्च' इति नुटि दीर्घस्य चारितार्थ्यमिति तु '**नैकमुदाहरणं योगारम्भं प्रयोजयति**' इति भाष्येण दूषितमेवेति भावः ॥ ७ '**बाधकान्येव निपातनानि**' इति लोकेऽपि णत्वं नैव भवतीति भावः ॥ ८ 'अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्य' इत्यर्थः । तेन ये ते इत्यत्र नाव्याप्तिः, मासपूर्वा इत्यादौ च नातिव्याप्तिरिति भावः ॥ ९ अयं भावः--प्रत्ययत्वमन्तरा इत्संज्ञा न स्थानिवत्त्वमन्तरा प्रत्ययत्वमेव न, आदेशतामन्तरा स्थानिवत्त्वमपि न । अत औपदेशिकमनेकाल्त्वमादाय सर्वादेशत्वम् । सर्वादेशत्वे स्थानिवत्त्वम् । स्थानिवत्त्वेन प्रत्ययत्वम् । प्रत्ययत्वे च 'लशकु' इति शकारस्येत्सं ॥ । इत्संज्ञायां च लोपः । लोपे च एकाल् भवतु इति नास्माकं सर्वादेशत्वव्याघात इति भावः ॥ १० 'अदन्तादङ्गात् परस्य सर्वनाम्नो विहितस्य' इत्यर्थः ॥

स्यात् ॥ सर्वस्मै ॥ **ङसिङ्योः स्मात्स्मिनौ** ।७।१।१५ ॥ अतः सर्वनाम्नो ङसिङ्योरेतौ स्तः ॥ सर्वस्मात् ॥ **आमि सर्वनाम्नः सुट्** ।७।१।५२ ॥ अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात् ॥ एत्वषत्वे सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् ॥ एवं विश्वादयोऽप्यदन्ताः ॥ सर्वादयश्च पञ्चत्रिंशत् । सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद्, तद्, यद्, एतद्, इदम्, अदस् एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्, इति ॥ उभशब्दो द्वित्वविशिष्टस्य वाचकः । अत एव नित्यं द्विवचनान्तः । तस्येह पाठस्तु उभकावित्यकजर्थः । न च कप्रत्ययेनेष्टसिद्धिः । द्विवचनपरत्वाभावेनोभयत उभयत्रेत्यादावयच्प्रसङ्गात् । तदुक्तम्—उभयोऽन्यत्रेति ॥ अन्यत्रेति द्विवचनपरत्वाभावे ॥ उभयशब्दस्य द्विवचनं नास्तीति कैयटः । अस्तीति हरदत्तः । तस्माज्जस्ययजादेशस्य स्थानिवद्भावेन तयप्प्रत्ययान्ततया प्रथमचरमेति विकल्पे प्राप्ते विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वान्नित्यव संज्ञा भवति । उभये । डतरडतमौ प्रत्ययौ । 'प्रत्ययग्रहणे तदन्तग्रहणम्' इति तदन्ता ग्राह्याः । यद्यपि **'संज्ञाविधौ प्रत्ययग्रहणे तदन्त-**

---

१ 'अदन्तादङ्गात् परयोः सर्वनाम्नो विहितयोः' इत्यर्थः ॥ २ अवर्णान्तादङ्गादित्यर्थः ॥ तेन तेषामित्यादौ नानुपपत्तिः । वर्णाश्रमेतराणाम् इत्यादौ नापत्तिरिति भावः ॥ ३ अवर्णान्तमङ्गमाश्रित्य जायमानः सुट् कथमवर्णान्ताङ्गविघातकस्य एत्वस्य निमित्तमिति चेत् 'हलि सर्वेषाम्' इत्यत्र 'सर्वेषाम्' इति निर्देशेन एत्वविषये संनिपातपरिभाषाया अप्रवृत्तिसूचनादिति बोध्यम् ॥ ४ **अकजर्थ इति** ॥ 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति सर्वनामसंज्ञामन्तराऽकजनुपपत्तेरिति भावः ॥ ५ 'उभकौ' इति प्रयोगे ककारश्रवणमेवाकच्प्रयोजनं चेत् तत् कप्रत्ययेनैव सेत्स्यतीति शङ्कामपनयति—**नच कप्रत्ययेनेति** ॥ तत्र हेतुमाह—**उभयत इति** ॥ अयं भावः—'उभादुदात्तो नित्यम्' इत्यनेन 'उभयो मणिः' 'उभौ साभ्यासस्य' 'उभे अभ्यस्तम्' 'लिटयभ्यासस्योभयेषाम्' 'उभयपक्षविनीतनिद्रः' इत्यादिप्रयोगदर्शनेन द्विवचनाश्रवणसंभावनायामेवायचो विधानात् त्रलूतसिलादिसंभावनायां द्विवचनाश्रवणसंभावनयाऽयच् सिध्यति । 'उभकौ' इत्यत्राकचि तु तस्य मध्यपतितत्वेन उभशब्दाद् द्विवचनसंभावनयाऽयज् नैव भवतीति भावः ॥ ६ **नास्तीति** । उक्तनिर्देशैः 'उभयोऽन्यत्र' इति वार्तिकेन भाष्योदाहरणाभ्यां च तथा प्रतीतेरिति भावः ॥ ७ **अस्तीति** । 'कृत्तद्धितानां ग्रहणं च पाठे' इति पाठस्य सामर्थ्यात् द्विवचनाभावः कैयटेन कल्पितः । तस्य पाठस्य 'पचतिरूपम्' इत्यादिव्यावर्तनेन चरितार्थत्वात् तद्बलेन द्विवचनाभावकल्पनमुभयशब्दे कैयटस्यानुचितमिति हरदत्तस्याभिमानः ॥ ८ **अयजादेशस्येति** । 'उभादुदात्तः' इत्यत्र 'द्वित्रिभ्यां तयस्यायच्' इति सूत्रतः 'तयस्यायच्' इत्यनुवर्तते इति स्थानिवत्सूत्रवार्तिकमतम् ॥ ९ **विभक्तिनिरपेक्षत्वेनेति** । यथा द्व्यपेक्षादेकापेक्षमन्तरङ्गम्, तथा एकापेक्षाद् निरपेक्षमन्तरङ्गमिति 'प्रथमचरम—' इति सूत्रे 'विभाषा जसि' इत्यनुवृत्तेर्विभक्तिसापेक्षत्वम्, 'सर्वादीनि' इत्यत्र कस्यापि सप्तम्यन्तपदस्य निमित्तस्यानुपादानाद् विभक्तिनिरपेक्षत्वमिति यथोद्देशपक्षे विभक्त्युत्पत्तिप्राक्कालप्राप्तत्वेनान्तरङ्गत्वान्नित्यैव संज्ञा भवतीति भावः ॥ यदि तु 'न वेति विभाषा' इति सूत्रस्थस्य **"अप्राप्ते त्रिसंज्ञयाः"** इति प्रकरणस्थस्य **'द्वन्द्वे च' 'विभाषा जसि'** इति वार्तिकस्य 'उभादुदात्तः' इत्यत्र 'तयस्य' इति नानुवर्तते केवलम् 'अयच्' इत्येवानुवर्तते इति 'प्रत्ययान्तरमेवायच्' इति मतमाद्रियते । विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वं नेमशब्देऽपि प्रतिपदविधित्वेन विशेषविधित्वमुभयशब्देऽपि समानमिति न तदिष्टसाधकमिति विभाव्यते तदा उभयशब्दे तयप्प्रत्ययान्तत्वाभावान्नैव विकल्पप्राप्तिरिति सर्वं चोपेक्ष्यमेव ॥

**ग्रहणं नास्ति**' सुप्तिङन्तमिति ज्ञापकात्, तथापीह तदन्तग्रहणम्, केवलयोः संज्ञायाः प्रयोजनाभावात् ॥ अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद्द्विबहुविषये निर्धारणे वर्तेते । तत्रान्यतमशब्दस्य गणे पाठाभावान्न संज्ञा । त्व त्व इति द्वावप्यदन्तावन्यपर्यायौ, एक उदात्तोऽपरोऽनुदात्त इत्येके । एकस्तान्त इत्यपरे ॥ नेम इत्यर्धे । समः सर्वपर्यायः । तुल्यपर्यायस्तु नेह गृह्यते । 'यथासंख्यमनुदेशः समानाम्' इति ज्ञापकात् । अन्तरं बहिर्योगेति गणसूत्रेऽपुरीति **वक्तव्यम्** * ॥ अन्तरायां पुरि ॥ **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्** ।१।१।३४ ॥ एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि[A] वा स्यात् ॥ पूर्वे, पूर्वाः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् ? दक्षिणा गाथकाः । कुशला इत्यर्थः ॥ असंज्ञायां किम् ? उत्तराः कुरवः ॥ **स्वमज्ञातिधनाख्यायाम्** ।१।१।३५ ॥ ज्ञातिधनान्यवाचिनः स्वशब्दस्य या प्राप्ता संज्ञा सा जसि[B] वा स्यात् ॥ स्वे । स्वाः । आत्मीया इत्यर्थः । आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञातयोऽर्था वा ॥ **अन्तरं बहिर्योगोपसंव्यानयोः** ।१।१।३६ ॥ बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता संज्ञा सा जसि[C] वा स्यात् ॥ अन्तरे अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥ **पूर्वादिभ्यो नवभ्यो वा** ।७।१।१६ ॥ एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः ॥ पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । एवं परादीनामपि । शेषं सर्ववत् ॥ एकशब्दः संख्यायां नित्यैकवचनान्तः ॥ **न बहुव्रीहौ** ।१।१।२९ ॥ बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न स्यात् । त्वकं पिता यस्य स त्वत्कपितृकः । अहकं पिता यस्य स मत्कपितृकः । इह समासात्प्रागेव प्रक्रियावाक्ये सर्वनामसंज्ञा निषिध्यते ।

---

१ 'सुप्तिङ् पदम्' इति न्यासेऽपि 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषय तदन्तग्रहणे सिद्धे व्यर्थं सद् अन्तग्रहणम् '**संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति**' इति परिभाषां ज्ञापयति॥ २ **प्रयोजनाभावादिति** ।'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः' इत्युक्तेरिति भावः॥ ३ 'निर्देशरूपाद्' इति भावः । सर्वनामसंज्ञायां हि ' समेषाम्' इति निर्देशेन भाव्यमिति भावः ॥ ४ स्वस्य पूर्वादिशब्दस्याभिधेयेन अर्थेनापेक्ष्यमाणस्यावधेर्नियमः । नियमेन अवधिसापेक्षेऽर्थे वर्तमानतेत्यर्थः ॥ व्यवस्थाऽसंज्ञात्वाङ्गीकारे च शिष्टप्रयोगा एव प्रमाणमिति तत्त्वम् ॥ ५ ' स्वमज्ञातिधनयोः ' 'स्वमात्मात्मीययोः' इत्युक्तौ तु आत्मीयस्यापि ज्ञातित्वेन धनत्वेन वा विवक्षायां सर्वनामता स्यात् ज्ञातेर्धनस्य चात्मीयत्वेन विवक्षायां न स्यादिति अज्ञातिधनाख्यायाम्' इति कृतम् । कृते तु तस्मिन् ज्ञातेर्धनस्य वात्मीयत्वेन विवक्षायां भवत्येव सर्वनामता, ज्ञातित्वेन विवक्षायां नैव भवतीति भावः ॥ A B C 'जसि' इत्यस्य '**जसः कार्यं प्रति विभाषा**' इति भाष्यदर्शित एवार्थः प्रकरणैक्यादिति भावः ॥ ६ बहिर्योगस्य गृहेष्वेव प्रसिद्धिरिति उपसंव्यानग्रहणमावश्यकमिति भावः ॥ ७ 'पूर्वादिभ्यो नवभ्यो वा' 'जसः शी' इत्यत्रापि वाक्यभेदेन संबन्धेन 'पूर्वे पूर्वाः' इत्यादिषु शीविकल्पसिद्धावपि सर्वनामसंज्ञाया गणसूत्रप्राप्ताया अबाधात् 'सर्वके विश्वके' इत्यादावकच्न स्यादिति त्रिसूत्र्यनिर्माणलाघवं परिहाय सर्वनामसंज्ञाया एव विकल्पो निर्मितः । 'विभाषा जसि' इत्यत्र **जसः कार्यं प्रति विभाषा । अकज्झि न भवति** इति भाष्यादकज् न भवतीति बोध्यम् ॥ ८ 'अयं खल्वपि बहुव्रीहिरस्त्येव प्राथमकल्पिकः यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तिकत्वं च । अस्ति तादर्थ्यात्ताच्छब्द्यम् बहुव्रीह्यर्थानि पदानि बहुव्रीहिरिति ' इति भाष्यलब्धस्य ' चिकीर्षिते ' इत्यस्य फलमाह—**इहेत्यादिना** ।

अन्यथा लौकिके विग्रहवाक्य इव तत्राप्यकच् प्रवर्तेत । स च समासेऽपि श्रूयेत । अतिक्रान्तो भवकन्तमतिभवकानितिवत् । भाष्यकारस्तु त्वकत्पितृको मकत्पितृक इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रं प्रत्याचख्यौ ॥ यथोत्तरं मुनीनां प्रामाण्यम् ॥ संज्ञोपसर्जनीभूतास्तु न सर्वादयः । महासंज्ञाकरणेन तदनुगुणानामेव गणे संनिवेशात् । अतः संज्ञाकार्यमन्तर्गणकार्यं च तेषां न भवति । सर्वो नाम कश्चित्तस्मै सर्वाय देहि । अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वाय देहि । अतिकतरं कुलम् । अतितत् ॥ **तृतीयासमासे । १ । १ । ३० ॥** अत्र सर्वनामता न स्यात् ॥ मासपूर्वाय । तृतीयासमासार्थवाक्येऽपि न । मासेन पूर्वाय ॥ **द्वन्द्वे च । १ । १ । ३१ ॥** द्वन्द्वे उक्ता संज्ञा न ॥ वर्णाश्रमेतराणाम् ॥ समुदायस्यायं निषेधो न त्[6]ववयवानाम् T । नचैवं *तदन्तविधिना सुट्प्रसङ्गः । सर्वनाम्नो विहितस्यामः सुडिति व्याख्यातत्वात् ॥ **विभाषा जसि । १ । १ । ३२ ॥** जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्तव्ये द्वन्द्वे उक्ता संज्ञा वा स्यात् ॥ वर्णाश्रमेतरे । वर्णाश्रमेतराः । शीभावं प्रत्येव विभाषेत्युक्तमतो नाकच् । किंतु कप्रत्यय एव । वर्णाश्रमेतरकाः ॥ **प्रथमचरमतयाल्पार्धकतिपयनेमाश्च । १ । १ । ३३ ॥** एते जसः कार्यं प्रत्युक्तसंज्ञा वा स्युः ॥ प्रथमे । प्रथमाः । शेषं रामवत् ॥ तयः प्रत्ययः । ततस्तदन्ता ग्राह्याः । द्वितये । द्वितयाः । शेषं रामवत् ॥ नेमे नेमाः । शेषं सर्ववत् ॥ **विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम् * ॥** द्वितीयस्मै । द्वितीयायेत्यादि । एवं तृतीयः ॥ अर्थवद्ग्रहणान्नेह पटुजातीयाय ॥ निर्जरः ॥ **जराया जरसन्यतरस्याम् । ७ । २ । १०१ ॥** जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ ॥ **पदाङ्गाधिकारे तस्य च तदन्तस्य च *** । अनेकाल्त्वात्सर्वादेशे प्राप्ते—**निर्दिश्यमानस्या[11]देशा भवन्ति** । [12]एकदेशविकृतस्यानन्यत्वात् जरशब्दस्य जरस् । निर्जरसौ । निर्जरसः ॥ इनादीन् बाधित्वा परत्वाज्जरस् । निर्जरसा । निर्जरसे । निर्जरसः । प[13]क्षे हला[14]दौ च रामवत् ॥

---

१ जातसंस्कारबाधायोगादिति भावः ॥ २ तदुक्तं भाष्यकृता—'**अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयम्**' इति ॥ ३ 'धिन्विकृण्व्योर च' इति सूत्रे लोपपदमकृत्वा अकारविधानं लोपस्य स्थानिवद्भावेन गुणवारकं विदधता पाणिनिनापि ध्वनितमेतदिति भावः ॥ ४ सर्वनामसंज्ञानुगुणानां संज्ञोपसर्जनभिन्नानामित्यर्थः ॥ ५ संज्ञोपसर्जनीभूतानाम् ॥ सर्वनामसंज्ञाकार्यम् डतरादित्यदादिगणकार्यं चेत्यर्थः ॥ ६ 'न बहुव्रीहौ' इत्यादिप्रकरणविहित इत्यर्थः ॥ T प्रथमार्थे सप्तमीस्वीकारादिति शेषः ॥ '**पदाङ्गाधिकारे तस्य तदन्तस्य च**' इति वक्ष्यमाणत्वादित्यर्थः ॥ ७ 'जसि' इति सप्तमी षष्ठ्यर्थे इत्यभिप्रेत्य '**जसः कार्यं प्रति विभाषा अकज्झि न भवति**' इति भाष्यसूचितमर्थं श्रुतसप्तम्यापि साधयति--**जसाधारमिति** ॥ ८ अत्र जातीयर्प्रत्ययोऽर्थवान् न तु तदेकदेशभूतः--'तीय' इति ॥ ९--'अष्टन आ' इत्यतोऽनुवर्तते । तत्फलम्--जराया इदं जारमित्यादौ न जरस् ॥ १० ॥ 'येन विधिस्तदन्तस्य' 'व्यपदेशिवदेकस्मिन्' इत्येतत्फलितमिदमिति भावः ॥ ११ सूत्रे स्थानषष्ठीप्रकृतित्वेनोच्चार्यमाणत्वमेव निर्दिश्यमानत्वम् । 'षष्ठी स्थानेयोगा' इत्यस्यैवार्थभूतेयमिति भावः ॥ १२ 'प्राग्दीव्यतोऽण्' इत्यत्र दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणनिर्देशेन "एकदेशविकृतमनन्यवत्' इति लौकिकन्यायाश्रयणेन स्थानिवत्सूत्रभाष्यस्थ 'एकदेशविकृतेषूपसंख्यानम्' इति वार्तिकस्य गतार्थताया भाष्यकृतोक्तत्वेन लौकिकवार्तिकयोर्विशेषाभाव इति भावः ॥ १३ **पक्षे इति** जरसादेशाभावपक्षे इत्यर्थः ॥ १४ 'अचि र ऋतः' इत्यतोऽनुवर्तमानस्य 'अचि' इत्यस्य फलमिदमिति भावः ॥

वृत्तिकृता तु— 'पूर्वविप्रतिषेधेन इनातोः कृतयोः संनिपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन निर्जरसादिति रूपे न तु निर्जरसा निर्जरस इति केचिद् ' इत्युक्तम् । तथा शिसि निर्जरसैरिति रूपान्तरमुक्तम् ॥ तदनुसारिभिश्च षष्ठ्येकवचने निर्जरस्येत्येव रूपं स्वीकृतम् ॥ एतच्च भाष्यविरुद्धम् ॥ **पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु** । ६ । १ । ६३ ॥ पाद, दन्त, नासिका, मास, हृदय, निशा, असृज्, यूष, दोष्, यकृत्, शकृत्, उदक, आस्य एषां पदादय आदेशाः स्युः शसादौ वा ॥ यत्तु आसनशब्दस्य आसन्नादेश इति काशिकायामुक्तं तत्प्रामादिकम् । पादः । पादौ । पादाः । पादम् । पादौ । पदः । पादान् । पदा । पादेन इत्यादि ॥ **सुडनपुंसकस्य** । १ । १ । ४३ ॥ सुट् प्रत्याहारः । स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥ **स्वादिष्वसर्वनामस्थाने** । १ । ४ । १७ ॥ कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात् ॥ **यचि भम्** । १ । ४ । १८ ॥ यकारादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यात् ॥ **आकडारादेका संज्ञा** । १ । ४ । १ ॥ इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया । या पराऽनवकाशा च । तेन शसादावचि भसंज्ञैव न पदत्वम् । अतो जश्त्वं न । दतः । दता । जश्त्वम्—दद्भ्यामित्यादि ॥ मासः । मासा । भ्यामि रुत्वे यत्वे च यलोपः । माभ्याम् । माभिरित्यादि ॥ **भस्य** । ६ । ४ । १२९ ॥ अधिकारोऽयम् ॥ **अल्लोपोऽनः** । ६ । ४ ।

---

१ **पूर्वविप्रतिषेधेनेति** ॥ अयं भावः--'टाङसिङसाम्--'इति सूत्रे टास्थाने 'न' इत्यादेशे 'आङि च' इति योगं विभज्य टादेशे नकारे परतोऽपि अकारान्ताङ्गस्यैत्वविधानेन 'अनाप्यकः' इत्यनेन नकारे परतो विशेषविहितेन अनादेशेन हलिलोपबाधेन चेष्टसिद्धाविकारोच्चारणं श्रवणार्थं सत् पूर्वविप्रतिषेधेन विभक्त्यादेशं संनिपातपरिभाषाया अनित्यत्वं च कल्पयति ॥ एवम् आत् आदेशे पररूपसाध्यप्रयोगस्य तकारमात्रविधानेनैव सिद्धावकारोच्चारणेन सवर्णदीर्घसिद्धौ दीर्घोच्चारणम् ऐसादेशे पररूपसाध्यप्रयोगस्य 'इस्' इत्यादेशे गुणेनैव सिद्धावेकारोच्चारणेऽपि वृद्धाविष्टसिद्धावैकरणं चोक्तार्थे ज्ञापकं कल्पयति । इति बोध्यम् ॥ २ भाष्येति ॥ अयं भावः- इनादेशे इकारम् आदादेशे दीर्घविधानं च भाष्यकृता प्रत्याख्यातमेव । ऐसादेशे ऐकारोच्चारणं च बहुलं छन्दसि इत्यनेन नद्यैः मत्यैरित्यादौ विहिते श्रवणार्थमिति न ज्ञापकमिति भावः ॥ अत्रेदं बोध्यम्--केवलसंनिपातपरिभाषाया अप्रवृत्तिरेव भाष्यविरुद्धा । अत एवोक्तं भाष्यकृता--**गोनर्दीयस्त्वाह--इष्टमेवैतत्संगृहीतं भवति 'अतिजरम्' अतिजरैः' इति । सत्यामेव तस्यां परिभाषायाम् 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति** इति ॥ पूर्वविप्रतिषेधश्च भाष्यकृत्संमत एव । तथा च जरसादेशाद् विभक्तिसंबन्धिकार्यं पूर्वविप्रतिषेधेन अत एव '**भाष्यकारस्तु संनिपातपरिभाषामाश्रित्य जरसादेशमनभ्युपयन् 'अतिजरेण अतिजरात्' इति भाष्यमिति मत्वा गौरवमुद्भावितवान्**' इति ' टाङसिङसाम् ' इति सूत्रे कैयटेन स्पष्टमेव विभक्त्यादेशौ दर्शितौ ॥ 'जराया जरस्' इति सूत्रे 'अतिजरांसि ब्राह्मणकुलानि' इत्यत्र पूर्वं जरसादेशात् विभक्त्यादेशे कृते एव संभवन् नुम्जरसोर्विप्रतिषेध उक्तः । पूर्वं जरसादेशे पश्चात् शिभावे संभवता नुमा विप्रतिषेधः कथं संगच्छेत । यदा च पूर्वं विभक्त्यादेशः शिर्जातस्तदा नुम्जरसोर्युगपत्प्राप्तौ विप्रतिषेधः संगच्छते ॥ एवं च 'निर्जरेण निर्जरैः निर्जरात्' 'निर्जरस्य निर्जराणाम् ' इति रूपाण्येव भाष्यसंमतानि इति बोध्यम् ॥ ३ **आस्नो वृकस्येत्यत्र** वेदभाष्ये मुखपरत्वेन व्याख्यानात् । **हृद्या जुह्वान आसनि** इत्यादावपि आस्यशब्दस्यैव आसन्नादेशाच्च ॥ ४ **यलोप इति** ' हलि सर्वेषाम्' इत्यनेनेति शेष आदौ ॥

१३४ ॥ अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः स्यात् ॥ **रषाभ्यां नो णः समानपदे** ।८।४।१॥ एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात् । यूष्णः। यूष्णा । पूर्वस्मादपि विधौ स्थानिवद्भाव इति पक्षे तु अड्व्यवाय इत्येवात्र णत्वम्। पूर्वत्रासिद्धीये न स्थानिवद् इति* तु इह नास्ति, **तस्य दोषः संयोगादिलोपलत्वणत्वेषु***॥ इति निषेधात् ॥ **न लोपः प्रातिपदिकान्तस्य** । ८ । २ । ७ ॥ नेति प्रातिपदिकेति च लुप्तषष्ठीके पदे । प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नकारस्य लोपः स्यात् ॥ नलोपस्यासिद्धत्वाद्दीर्घत्वमेत्वमैस्त्वं च न । यूषभ्याम् । यूषभिः । यूषभ्य इत्यादि ॥ **विभाषा ङिश्योः** । ६ । ४ । १३६ ॥ अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः ॥ यूष्णि । यूषणि । पक्षे रामवत् । पद्दन्न इतिसूत्रे प्रभृतिग्रहणं प्रकारार्थम् [१]। तथा च—औङः श्यामपि दोषन्नादेशो भाष्ये 'ककुद्दोषणी' इत्युदाहृतः । तेन 'पदङ्घ्रिश्चरणोऽस्त्रियाम्, स्वान्तं हृन्मानसं मनः' इति च संगच्छते । 'आसन्यं प्राणमूचुरिति च' । आस्ये भवः आसन्यः । दोष्शब्दस्य नपुंसकत्वमप्यत एव भाष्यात् । तेन 'दक्षिणं दोर्निशाचरः' इति संगच्छते । भुजबाहू प्रवेष्टो दोरिति साहचर्यात्पुंस्त्वमपि 'दोषं तस्य तथाविधस्य भजतः' इति । द्वयोरह्नोर्भवो द्व्यह्नः ॥ **संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ** । ६ । ३ । ११० ॥ संख्यादिपूर्वस्याह्नस्याहन्नादेशो वा स्यात् ङौ ॥ द्व्यह्नि । द्व्यहनि । द्व्यह्ने । विगतमहर्व्यह्नः [२]। व्यह्नि । व्यहनि । व्यह्ने । अह्नः सायः सायाह्नः । सायाह्नि । सायाहनि सायाह्ने ॥

॥ **इत्यदन्ताः** ॥ ॥ विश्वपाः ॥ **दीर्घाज्जसि च** । ६ । १ । १०५ ॥दीर्घाज्जसि इचि च परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यात् ॥ वृद्धिः । विश्वपौ । सवर्णदीर्घः । विश्वपाः । यद्यपीह औङि नादिचीत्येव सिद्धं, जसि तु सत्यपि पूर्वसवर्णदीर्घे क्षतिर्नास्ति, तथापि गौर्यौ गौर्य इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम् ॥ **आतो धातोः** । ६ । ४ । १४० ॥ आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात् ॥ अलोऽन्त्यस्य । विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् ? हाहान् । टा सवर्णदीर्घः—हाहा । ङे वृद्धिः—हाहै । ङसिङसोर्दीर्घः—हाहाः । ओसि वृद्धिः—हाहौः । ङौ आद्गुणः—हाहे । शेषं विश्वपावत् ॥ आत इति योगविभागादधातोरप्याकारलोपः क्वचित् [३]। 'क्त्वः' 'श्नः' ॥ **इत्यादन्ताः** ॥ ॥ हरिः॥ प्रथमयोः पूर्वसवर्णः—हरी ॥ **जसि च** । ७ । ३ । १०९॥ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे ॥ हरयः ॥ **ह्रस्वस्य गुणः** । ७ । ३ । १०८ ॥ ह्रस्वस्य गुणः स्यात्संबुद्धौ[४]॥ एङ्ह्रस्वादिति संबुद्धिलोपः । हे हरे । हरिम् । हरी । हरीन् ॥ **शेषो घ्यसखि** । १ । ४ । ७॥

---

१ प्रकारः सादृश्यम् । तच्च सुप्त्वेनैवेति 'नासिकाया नस्' इत्यादेर्न वैयर्थ्यम् । आसन्यम् इत्यादौ तु 'न लुमता—' इति निषेधस्यानित्यत्वात् प्रत्ययलक्षणेन सुप्परत्वमस्त्येव ॥ २ इदमेव सायग्रहणम् '**सर्वोऽप्येकदेशः कालवाचिनाऽव्ययविना समस्यते**' इत्यत्रार्थे ज्ञापकमिति बोध्यम् ॥ ३ तेन 'जहातेश्च क्त्वि' इत्यत्र तु भवति । "टायामादेश' इत्यत्र न भवति ॥ ४ 'ह्रस्वस्य गुणः' इत्यनुवर्तते ॥

अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञं स्यात् ॥ शेषः किम् ? मत्यै[1] । एकसंज्ञाधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थम् ॥ ह्रस्वौ किम् ? वातप्रम्ये । इदुतौ किम् ? मात्रे ॥ **आङो नाऽस्त्रियाम् । ७ । ३ । १२० ॥** घेः परस्याङो ना स्यादस्त्रियाम् ॥ आङिति टासंज्ञा प्राचाम् । हरिणा । अस्त्रियां किम् ? मत्या । **घेर्ङिति । ७ । ३ । १११ ॥** घिसंज्ञकस्य ङिति सुपि गुणः स्यात् ॥ हरये । घेः किम् ? सख्ये । ङिति किम् ? हरिभ्याम् । सुपि किम् ? पट्वी । घेर्ङितीति गुणे कृते ॥ **ङसिङसोश्च । ६ । १ । ११० ॥** एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात् ॥ हरेः । हर्योः । हरीणाम् ॥ **अच्च घेः । ७ । ३ । ११९ ॥** इदुद्भ्यामुत्तरस्य ङेरौत्स्याद् घेरन्तादेशश्चाकारः । हरौ । हर्योः । हरिषु ॥ एवं श्रीपत्यग्निरविकव्यादयः ॥ **अनङ् सौ । ७ । १ । ९३॥** सख्युरङ्गस्यानङादेशः स्यादसंबुद्धौ सौ परे ॥ ङिच्चेत्यन्त्यादेशः ॥ **अलोऽन्त्यात्पूर्व उपधा । १ । १ । ६५ ॥** अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् ॥ **सर्वनामस्थाने चासंबुद्धौ । ६ । ४ ।८॥** नान्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे । **अपृक्त एकाल्प्रत्ययः । १ । २ । ४१ ॥** एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ॥ **हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् । ६ । १ । ६८ ॥** हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यते ॥ हल्ङ्याब्भ्यः किम् ? ग्रामणीः । [ दीर्घात्किम् ? निष्कौशाम्बिः । अतिखट्वः ॥ सुतिसीति किम् ? अभैत्सीत् । तिपा सहचरितस्य सिपो ग्रहणात्सिचो ग्रहणं नास्ति ॥ अपृक्तमिति किम् ? बिभर्ति ॥ हल् किम् ? बिभेद ॥ प्रथमहल् किम् ? राजा । नलोपो न स्यात् संयोगाA न्तलोपस्यासिद्धत्वात् ॥ ] सखा । हे सखे ॥ **सख्युरसंबुद्धौ । ७ । १ । ९२ ॥** सख्युरंगात्परं संबुद्धिवर्जं सर्वनामस्थानं णित्कार्यकृत् स्यात् ॥ **अचो ञ्णिति । ७ । २ । ११५ ॥** ञिति णिति च परेऽजन्ताङ्गस्य वृद्धिः स्यात् ॥ सखायौ । सखायः । सखायम् । सखायौ । घिसंज्ञाऽभावान्न तत्कार्यम्—सख्या । सख्ये ॥ **ख्यत्यात्परस्य । ६ । १ । ११२ ॥** खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य

---

१ घिसंज्ञायां 'मतये' इति गुणेन स्यात् ॥ २ नदीसंज्ञाया वैकल्पिकत्वात्पक्षे चरितार्थाया घिसंज्ञाया अनवकाशया नदीसंज्ञया बाधेन 'मत्यै' इत्यादौ नैव दोष इति भावः । शीघ्रतया विशेष्यस्य ज्ञानार्थमेव कृतमिति तत्त्वम् ॥ ३ '**नञ्घटितमनित्यम्**' इति परिभाषया 'संबुद्धौ' इत्यादिनिर्देशसिद्धया 'न विभक्तौ' इति निषेधाप्रवृत्त्या तकारस्येत्संज्ञायां लोपो भवत्येवेति तत्त्वम् ॥ ४ '**वर्णग्रहणं जातिग्रहणम्**' इति ज्ञापयितुम् एकग्रहणम् ॥ ५ **परमिति** । तेन 'सखा' इत्यादौ हलन्ताद्विधानाभावेऽपि लोपः सिध्यति ॥ ६ 'या सा' इत्यादावावन्ताद्विहितत्वाभावेऽपि लोपः सिध्यति ॥ ७ अयं कोष्ठकान्तर्गतः पाठोऽपपाठः, मनोरमायां दर्शनात् इति शेखरकृत ॥ ८ दीर्घत्वस्य स्थान्यलसाधारणधर्मत्वेन नैव स्थानिवत्त्वेनातिदेशः ॥ **A संयोगान्तलोपस्यासिद्धत्वादिति** । 'न ङिसंबुद्ध्योः' इति संबुद्धिग्रहणेन 'नलोपे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति' इति ज्ञापने तु 'अनड्वान्' इत्यादावपि नलोपापत्तिः स्यादिति बोध्यम् ॥ ९ यद्यपि 'सख्युरसंबुद्धौ' णित्वे परत्वाद् 'अत उपधायाः' इति वृद्धावपि रूपं सिध्यति, तथापि पर्जन्यवल्लक्षणप्रवृत्त्या नित्येन नान्तलक्षणोपधादीर्घेणैव सिद्धिरङ्गीकृतेति भावः ॥ १० 'गोतो णित्' इत्यादावविवक्षितेन गकारेणेवात्रापि अकारेणाविवक्षितेन निर्देशं मत्वा यकारान्तरूपसंभवमाश्रित्याह-**खितिशब्दाभ्यामित्यादि** । 'एङः पदान्तात्' 'ङसिङसोश्च' 'ऋत उत्' इत्यतः 'अति' 'ङसिङसोः' 'उत्' इत्यनुवर्तते । 'परस्य' इत्येतत्सामर्थ्यात् 'एकः पूर्वपरयोः' इति निवृत्तमित्यभिप्रेत्याह-**परस्येत्यादि** ॥

ङसिङसोरत उत्स्यात् ॥ सख्युः ॥ **औत् । ७ । ३ । ११८ ॥** इदुद्भ्यां परस्य ङेरौत्स्यात् ॥ उकारानुवृत्तिरुत्तरार्था । सख्यौ । शेषं हरिवत् ॥ शोभनः सखा—सुसखा । सुसखायौ । सुसखायः । अनङ्णिद्वद्भावयोराङ्गत्वात्तदन्तेऽपि प्रवृत्तिः । समुदायस्य सखिरूपत्वाभावादसखीति निषेधाप्रवृत्तेर्घिसंज्ञा । सुसखिना । सुसखये । ङसिङसोर्गुणे कृते कृतयणादेशत्वाभावात् ख्यत्यादित्युत्वं न । सुसखेः सुसखौ इत्यादि । एवमतिशयितः सखा-अतिसखा । परमः सखा यस्येति विग्रहे— परमसखा । परमसखायावित्यादि ॥ गौणत्वेऽप्यनङ्णित्त्वे प्रवर्तेते ॥ सखीमतिक्रान्तोऽतिसखिः । लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्न टच् । हरिवत् । इहानङ्णित्त्वे न भवतः । 'गोस्त्रियोः' इति ह्रस्वेन सखिशब्दस्य लाक्षणिकत्वात् । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् ॥ **पतिः समास एव । १ । ४ । ८ ॥** पतिशब्दः समास एव घिसंज्ञः स्यात् ॥ पत्या । पत्ये । पत्युः । पत्यौ । शेषं हरिवत् । समासे तु—भूपतिना । भूपतये ।

---

१ घिनदीसंज्ञारहितस्योकारस्यागमभावादाह—**उकारानुवृत्तिरिति उत्तरार्थेति** । 'अच्च घेः' इत्येतदर्थेति भावः ॥ २ 'न पूजनात्' इति निषेधात् 'राजाहःसखिभ्यः' इति समासान्तो नेति बोध्यम् ॥ ३ 'स्वं रूपम्' इत्युक्तेः सूत्रनिर्दिष्टानुपूर्वीमात्रस्यैव ग्रहणप्राप्त्या वर्णसंज्ञापक्षे 'सखिभिन्नावयवौ ह्रस्वाविवर्णोवर्णौ' इत्यर्थः तदन्तसंज्ञापक्षे सिद्धान्तभूतेऽपि । सखिभिन्नौ ह्रस्वेवर्णोवर्णान्तौ घिसंज्ञौ इत्यर्थेऽपि समुदायस्य सूत्रनिर्दिष्टानुपूर्वीभिन्नत्वाद् 'असखि' इति निषेधविषयत्वाभावाद् भवत्येव घिसंज्ञेति भावो हरदत्तानुयायिनाम् । 'यस्येति च' इति सूत्रभाष्यसंमते 'सख्यवयवभिन्नौ' इत्यर्थे तु नैवात्र घिसंज्ञेति बोध्यम् ॥ ४ 'यस्येति च' 'ख्यत्यात्परस्य' इति सूत्रभाष्यप्रयुक्तस्य 'घिसंज्ञाविशिष्टस्य 'अतिसखे' इति रूपस्य साधनायोपक्रमते—**सखीमतीक्रान्त इत्यादि** । अयं भावः—सखिशब्दात् 'सख्यशिश्वीति' इति ङीषि 'यस्येति च' इतीकारलोपे सखीशब्दे 'गोस्त्रियोः' इति ह्रस्वेऽपि अभिव्यक्तसखिशब्दावयवेकारस्य लुप्तत्वादत्राभिव्यक्तसख्यवयवभिन्नत्वाद् भवत्येव घिसंज्ञेति तत्त्वम् ॥ ५ 'शक्तिलाङ्गल-' इति वार्तिके घटग्रहणेनैव घटीग्रहणेऽपि सिद्धे घटीग्रहणमेतत्परिभाषाया अनित्यत्वे ज्ञापकमिति तत्त्वम् ॥ ६ 'समासे पतिरेव घिसंज्ञः' इत्यनिष्टनियमशङ्कावारणाय इष्टतोऽवधारणायैवकारः ॥ 'यस्येति' इति सूत्रभाष्यसंमतायाः पत्यवयवे घिसंज्ञायाः सख्यवयवे तदप्राप्तेश्च सिद्धये 'शेषो घ्यसखिपती' इति 'सखिपती समास एव' इति वा सूत्रं न व्यरचि । इति तत्त्वम् ॥ ७ 'सीतायाः पतये नमः' इत्यत्र तु "**छन्दोवत्सूत्राणि भवन्ति**" इतीष्ट्या सूत्रेषु वेदतुल्यत्वातिदेशवत् "**छन्दोवत् कवयः कुर्वन्ति**" इति भाष्येष्ट्या स्मृतीतिहासपुराणेषु वेदतुल्यत्वातिदेशेन 'षष्ठीयुक्तश्छन्दसि वा' इति वैकल्पिकी घिसंज्ञा निर्बाधा भवतीति न दोषः ॥ यद्यपि "**नह्येषा इष्टिः**" इत्युत्तरभाष्यस्य यथाश्रुतव्याख्यानेनात्रेष्टित्वाभावकल्पनेन तादृशामसाधुत्वमेव यद्यपि तथापि तेषां महर्षीणां **कवीनां** तपोबलेन नासाधुभाषणप्रत्यवायः नापि तद्भाषितभाषणेऽस्माकमपीति कैयटनागेशादिभिरङ्गीकृतम् । तथापि **'संध्यावधूं गृह्य करेण भानुः' 'अपश्यती वत्समिवेन्दुबिम्बम्'** इति पाणिनीयकाव्यस्थानामप्यसाधुत्वदर्शकव्याकरणमर्मानभिज्ञनमिसाधुवदल्पज्ञशिरोमणिकृतेन **'यान्युज्जहार माहेन्द्राद् व्यासो व्याकरणार्णवात् । तानि किं शब्दरत्नानि सन्ति पाणिनिगोष्पदे ॥'** इति पद्येन दर्शितायाः पाणिनीयव्याकरणे न्यूनतायाः सत्यत्वे **'कृत्स्नं व्याकरणं प्रोक्तम्'** इति पाणिनिप्रशंसाया अपलापापत्तिः । सर्वेषां व्यासादिमहर्षीणां श्रुतिस्मृतिपुराणादिप्रदर्शकानां विदितवेदितव्यानामधिगतयाथातथ्यानामपि शास्त्रान्वितप्रयोगाशक्तिशास्त्राज्ञानकल्पनापत्तिश्च । तस्मात् **'न ह्येषा इष्टिः'** इति भाष्ये **'छन्दोवत् कवयः कुर्वन्ति किम् नह्येषा इष्टिः 'छन्दोवत् सूत्राणि भवन्ति' इतिवत'** इत्येवम् इष्टित्वसाधककाकुग्रन्थत्वमङ्गीकृत्याग्रिमभाष्यग्रन्थे उक्तकाकुग्रन्थत्वाज्ञानवद्वादिप्रतिवादिग्रन्थत्वमेवाङ्गीकरणीयमिति न व्याकरणान्तरानुसारि-

कतिशब्दो नित्यं बहुवचनान्तः ॥ **बहुगणवतुडति संख्या । १ । १ । २३ ॥** एते संख्यासंज्ञाः स्युः ॥ **डति च । १ । १ । २५ ॥** डत्यन्ता संख्या षट्संज्ञा स्यात् ॥ **प्रत्ययस्य लुक्श्लुलुपः १ । १ । ६१ ॥** लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात्॥ **षड्भ्यो लुक् ।७। १ २२॥** षड्भ्यः परयोर्जश्शसोर्लुक् स्यात् ॥ **प्रत्ययलोपे प्रत्ययलक्षणम् ।१।१।६२॥** प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात् । इति जसि चेति गुणे प्राप्ते ॥ **न लुमताङ्गस्य । १ ।१।६३ ॥** लुक् श्लु लुप् एते लुमन्तः ॥ लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कति । कति । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु । अस्मद्युष्मत्षट्संज्ञकास्त्रिषु सरूपाः । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः त्रिभ्यः ॥ **त्रेस्त्रयः ।७।१। ५३ ॥** त्रिशब्दस्य त्रयादेशः स्यादामि ॥ त्रयाणाम् । परमत्रयाणाम् । गौणत्वे तु नेति केचित्। प्रियत्रीणाम् । वस्तुतस्तु–प्रियत्रयाणाम् । त्रिषु ॥ द्विशब्दो नित्यं द्विवचनान्तः ॥ **त्यदादीनामः । ७ । २ । १०२ ॥** एषामकारोऽन्तादेशः स्याद्विभक्तौ॥ **द्विपर्यन्तानामेवेष्टिः * ॥** द्वौ २ । द्वाभ्याम् ३ । द्वयोः २ । द्विपर्यन्तानां किम् ? भवान् । भवन्तौ ॥ संज्ञायामुपसर्जनत्वे च नात्वम् । सर्वाद्यन्तर्गणकार्यत्वात् । द्विर्नाम कश्चित् । द्विः । द्वी । द्वावतिक्रान्तोऽतिद्विः । हरिवत् ॥ प्राधान्ये तु परमद्वौ इत्यादि। औडुलोमिः । औडुलोमी । बहुवचने तु उडुलोमाः॥ **लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः *** ॥ बाह्वादीञोऽपवादः ॥ औडुलोमिम् । औडुलोमी । उडुलोमान्॥ **इतीदन्ताः** ॥ वातप्रमीरित्युणादिसूत्रेण माङ ईप्रत्ययः स च कित्। वातं प्रमिमीते वातप्रमीः ।

---

–व्यासादिमहर्षिप्रयोगासाधकत्वरूपा पाणिनीयव्याकरणे न्यूनता नापि 'पृषोदरादीनि' इति सूत्रभाष्यहर्यादिसंमत-शब्दप्रयोगप्रमाणभूतत्वव्यासादीनां '**शास्त्रान्वितः**' इति श्रुतिविरुद्धकर्मकारित्वापत्तिरिति दाधिमथानां महर्षिनिन्दामसहमानानां सिद्धान्तः । एवं च '**सर्वे विधयश्छन्दसि विकल्प्यन्ते**' इति 'अनङ् सौ' इत्यनङो वैकल्पिकत्वेन '**कृष्णस्य सखिरर्जुनः**' इति भारतम् 'असखि' इति प्रतिषेधस्य वैकल्पिकत्वेन '**सखिना वानरेन्द्रेण**' इति रामायणं च व्याख्यातम् । '**क्लीबे च पतिते पतौ**' इत्यत्र तु सकलस्मृतिविरोधानुत्थानाय 'अकृतचतुर्थीकर्म' इति पूर्वपदस्य '**विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वक्तव्यः**' इत्यनेन लोपे अकृतचतुर्थीकर्मेति पूर्वपदान्तर्गतकृतचतुर्थीकर्मेत्युत्तरपदस्य 'शाकपार्थिवादेराकृतिगणत्वेन लोपे 'अपतौ' इति वा समास एवेति न घिसंज्ञानुपपत्तिः ॥

१ 'निजां त्रयाणाम्' इति निर्देशेन नायं सकारान्तः षाष्ठवदित्याह–**त्रयादेश इति** ॥ २ **गौणत्वेनेति** 'आमि सर्वनाम्नः' इतिवदिति भावः ॥ ३ सूत्रान्तरसाहचर्याश्रयणे मानाभाव इत्याह–**वस्तुतस्त्विति** ॥ ४ सर्वाद्यन्तर्गणस्त्यदादिः ॥ ५ युष्मदस्मदोरात्वयत्वटिलोपैः किमः कादेशेनास्य बाधात् भवतस्त्यदादिभ्यः प्राक् पाठेन सकलेष्टसिद्धौ वृथैवेयमिष्टिरिति प्रश्नाशयः ॥ ६ त्यदादितः प्राक्पाठेनेष्टसिद्धिर्न, स च भवांश्च भवन्तौ इत्यत्र भवत एकशेषोपपत्तये परपाठे करणीयेऽत्त्वापत्तिवारणायेष्टेरावश्यकत्वादिति भवतः शतृप्रत्ययान्तत्वभ्रमवारणायैकवचनप्रयोगसहकृतमुदाहरति–**भवान् भवन्ताविति** ॥ 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इति वार्तिकमनुसृत्येदम् । 'पूर्वशेषदर्शनाच्च' इति वार्तिकेन पूर्वपाठेऽपि एकशेषे दोषाभावेन त्विष्टिर्व्यर्थैवेति तत्त्वम् ॥

दीर्घाज्जसि च—वातप्रम्यौ । वातप्रम्यः । हे वातप्रमीः॥ अमिपूर्वः—वातप्रमीम् । वातप्रम्यौ । वातप्रमीन् । वातप्रम्या । वातप्रमीभ्याम् ३ । वातप्रम्ये वातप्रम्यः २ । वातप्रम्योः २ । वातप्रम्याम् । दीर्घत्वान्न नुट् ॥ ङौ तु सवर्णदीर्घः—वातप्रमी । वातप्रमीषु ॥ एवं ययीपप्यादयः । यान्त्यनेनेति ययीर्मार्गः । पाति लोकमिति पपीः सूर्यः । **'यापोः किद्द्वे च' इति** ईप्रत्ययः । क्विबन्तवातप्रमीशब्दस्य तु अमि शसि ङौ च विशेषः—वातप्रम्यम् । वातप्रम्यः । वातप्रम्यि॥ 'एरनेकाचः' इति वक्ष्यमाणो यण् । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी । दीर्घङ्यन्तत्वाद्धल् 'हल्ङ्याप्' इति सुलोपः॥ **यू स्त्र्याख्यौ नदी** ।१।४।३॥ ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः॥ **प्रथमलिङ्गग्रहणं च** *॥ पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः॥ **अम्बार्थनद्योर्ह्रस्वः** ।७।३।१०७॥ अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् संबुद्धौ ॥ हे बहुश्रेयसि ॥ शसि—बहुश्रेयसीन् ॥ **आण् नद्याः** ।७।३।११२ ॥ नद्यन्तात्परेषां ङिताम् आडागमः स्यात् ॥ **आटश्च** ।६।१।९० ॥ आटोऽचि परे वृद्धिरेकादेशः स्यात् ॥ बहुश्रेयस्यै । बहुश्रेयस्याः ॥ नद्यन्तात्परत्वान्नुट्—बहुश्रेयसीनाम् ॥ **ङेराम् नद्याम्नीभ्यः** ।७।३।११६ ॥ नद्यन्तादाबन्तान्नीशब्दाच्च ङेराम् स्यात् ॥ इह परत्वादाटा नुड् बाध्यते-बहुश्रेयस्याम् । शेषमीप्रत्ययान्तवातप्रमीवत् ॥ अङ्यन्तत्वान्न सुलोपः—अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् ॥ कुमारीमिच्छन् कुमारीवाचरन्वा ब्राह्मणः कुमारी । क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप् । हल्ङ्याबिति सुलोपः ॥ **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** ।६।४।७७ ॥ श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तधातोर्भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे ॥ ङिच्चेत्यन्त्यादेशः । आन्तरतम्यादेरियङ्, ओरुवङ् । इतीयङि प्राप्ते—॥ **एरनेकाचोऽसंयोगपूर्वस्य** ।६।४।८२ ॥ धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे ॥ इति यण्—कुमार्यौ । कुमार्यः । हे कुमारि । अमि शसि च—कुमार्यम् । कुमार्यः । कुमार्यै । कुमार्याः २ । कुमारीणाम् । कुमार्याम् ॥ प्रधीः । प्रध्यौ । प्रध्यः । प्रध्यम् । प्रध्यः ॥ उन्नयतीत्युन्नीः । धातुना संयोगस्य विशेषणादिह स्यादेव यण्—उन्न्यौ । उन्न्यः । हे उन्नीः । उन्न्यम् । ङेराम्—उन्न्याम् । एवं ग्रामणीः ॥ अनेकाचः किम् ? नीः नियौ । नियः । अमि शसि च परत्वादियङ्—नियम् । नियः । ङेराम्—नियाम् ॥ असंयोगपूर्वस्य किम् ? सुश्रियौ । यवक्रियौ ॥ **गतिकारकेतरपूर्वपदस्य यण नेष्यते** *॥

---

१-**पूर्वमिति** । 'अर्थान्तरसंक्रमात्' इत्यादिः ॥ ३ **उपसर्जनत्वेऽपीति** । 'अर्थान्तरसंक्रमणे' इत्यादिः ॥ ३ 'अम्बार्थानां ह्रस्वः' 'ह्रस्वनद्योर्गुणः' इत्येवमेव प्रक्रियालाघवाय वक्तव्ये ह्रस्वविधानं 'ह्रस्वस्य गुणः' इत्येतद्बाधनार्थमेवेति ह्रस्वोत्तरं गुणो न भवति ॥ ४ 'गुणात्संबुद्धेः' इत्येव सिद्धे 'एङ्ह्रस्वात्' इतिकरणेन संबुद्धिलोपे संनिपातपरिभाषा न प्रवर्तते इति भावः ॥ ५ **परत्वादिति** । 'इको यणचि' इत्यपेक्षयेति शेषः । आङ्गत्वाच्चेत्यपि बोध्यम् ॥ ६ **परत्वादिति** । अनेन 'सकृद्गतौ विप्रतिषेधेन यद् बाधितं तद् बाधितमेव' इति परत्वादाटि कृते पुनर्नुट् न प्रवर्तते इति बोधितम् ॥ ७ **इत्यस्येति** । इत्यन्तस्येत्यर्थः । तेन 'सुभ्रुवौ' इति सिद्ध्यति । 'भ्रुवौ' इति तु व्यपदेशिवद्भावेनैव सिध्यति ॥

शुद्धधियौ। परमधियौ। कथं तर्हि दुर्धियो वृश्चिकभियेत्यादि?[1] उच्यते[2]–दुःस्थिता धीर्येषामिति विग्रहे दुरित्यस्य धीशब्दं प्रति गतित्वमेव नास्ति। यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः॥ वृश्चिकशब्दस्य बुद्धिकृतमपादानत्वं नेह विवक्षितम्[3]। वृश्चिकसंबन्धिनी भीर्वृश्चिकभीरित्युत्तरपदलोपो वा॥ **न भूसुधियोः** ।६।४।८५॥ एतयोर्यण् न स्यादचि सुपि॥ सुधियौ। सुधिय इत्यादि॥ सखायमिच्छति सखीयति। ततः क्विप्। अल्लोपयलोपौ। अल्लोपस्य स्थानिवत्त्वाद्यणि प्राप्ते--'क्वौ लुप्तं न स्थानिवत्'*।एकदेशविकृतस्यानन्यतयाऽनङ्णित्त्वे-सखा। सखायौ। सखायः। हे सखीः। अमि पूर्वरूपात्परत्वाद्यणिT प्राप्ते ततोऽपि परत्वात्सख्युरसंबुद्धाविति प्रवर्तते–सखायम्। सखायौ। शसि यण्--सख्यः॥ सह खेन वर्तत इति सखः। तमिच्छतीति सखीः॥ सुखमिच्छतीति सुखीः॥ सुतमिच्छतीति सुतीः॥ सख्यौ। सुख्यौ। सुत्यौ। 'ख्यत्यात्' इति दीर्घस्यापि ग्रहणादुकारः--सख्युः, सुख्युः, सुत्युः॥ लूनमिच्छतीति लूनीः॥ क्षाममिच्छतीति क्षामीः॥ प्रस्तीममिच्छतीति प्रस्तीमीः एषां ङसिङसोर्यण्। नत्वमत्वयोरसिद्धत्वात् ख्यत्यादित्युत्त्वम्--लून्युः, क्षाम्युः, प्रस्तीम्युः॥ शुष्कीयतेः क्विप्-शुष्कीः। इयङ्--शुष्कियौ। शुष्कियः ङसिङसोः--शुष्किय इत्यादि॥ **इति ईदन्ताः॥** ॥ शंभुर्हरिवत्। एवं विष्णुवायुभान्वादयः॥ **तृज्वत्क्रोष्टुः** ।७।१।९५॥ क्रोष्टृशब्दस्तृजन्तेन तुल्यं वर्तते असंबुद्धौ सर्वनामस्थाने परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः॥ **ऋतो ङि सर्वनामस्थानयोः** ।७।३।११०॥ ङौ सर्वनामस्थाने च परे ऋदन्ताङ्गस्य गुणः स्यात्। इति प्राप्ते--॥ **ऋदुशनस्पुरुदंसोऽनेहसां च** ।७।१।९४॥ ऋदन्तानामुशनसादीनां चानङ् स्यादसंबुद्धौ सौ परे॥ **अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्** ।६।४।११॥ अबादीनामुपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे। नप्त्रादिग्रहणं व्युत्प-

---

१ 'दुर' इत्यस्य प्रादिषु पाठाद् गतित्वम् वृश्चिकस्य भीतिक्रियाजनकत्वात् कारकत्वमित्यभिप्रेत्य शङ्कते–**कथं तर्हीति॥** २–समाधत्ते–**उच्यत इति॥** अयं भावः–न केवलं प्रादिषु पाठमात्रेणैव गतिसंज्ञा भवति। किंतु क्रियायोगसत्त्व एव। स क्रियायोगश्च प्रत्यासत्तया स्वान्वयित्वेन विवक्षया प्रयुक्तक्रिययैव योगो गृह्यते। एवं च दुःस्थिता धीर्येषामिति विग्रहे 'दुर्' इत्यस्य स्थाधात्वर्थक्रियायामेवान्वयविवक्षा न ध्याधात्वर्थक्रियायामिति ध्याधात्वर्थान्वयित्वाभावेन ध्याधात्वर्थयोगजन्यगतित्वाभावान्न धीशब्दस्य गतिपूर्वकत्वमिति भावः॥ ३ 'विवक्षाधीनानि कारकाणि भवन्ति' इति भावः। 'भीत्रार्थानां भयहेतुः' इति सूत्रसत्त्वे त्वाह–**वृश्चिकसंबन्धिनीति॥** T **यणि** 'एरनेकाचः' इत्यनेनेति शेषः॥ ४ अत एव 'खितिभ्याम्' 'खीतीभ्याम्' इत्यपहाय विकृतनिर्देश इति भाष्ये स्पष्टम्॥ ५ 'पूर्वत्रासिद्धम्' इति नत्वमत्वयोस्त्रैपादिकत्वाद् अस्य षाष्ठत्वादिति भावः॥ ६ 'इको यणचि' इति यणं बाधित्वेति भावः॥ ७ 'स्थानेऽन्तरमः' इत्यर्थकृतान्तर्येण स्थान्यर्थाभिधानसमर्थस्यैवादेशस्याङ्गीकारात्॥ ८ 'अयामन्ताल्वाय्येत्न्विष्णुषु' इतिसूत्रारम्भाच्छाकटायनसंमते औणादिकेषु व्युत्पत्तिपक्षे तृन्तृजन्तत्वादेव सिद्धौ नप्त्रादिग्रहणं व्यर्थमित्याह–**नियमार्थमिति**। नियमाकारश्च **'उणादिनिष्पन्नानां तृन्तृच्प्रत्ययान्तानां संज्ञाशब्दानामुपधादीर्घश्चेत् नप्त्रादीनामेव'** इति इति भावः। 'ण्वुल्तृचौ' इति सूत्रभाष्ये तु **'स्वसृनप्तृग्रहणं नियमार्थं भविष्यति–एतयोरेव योनिसंबन्धयोः नान्येषां योनिसंबन्धानाम्'** इति नियमाकारो दर्शित इति बोध्यम्॥

त्तिपक्षे नियमार्थम्। तेन पितृभ्रातृप्रभृतीनां न। उद्गातृशब्दस्य तु भवत्येव। समर्थसूत्रे उद्गातार इति भाष्यप्रयोगात्॥ क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टारम्। क्रोष्टारौ। क्रोष्टून्॥ **विभाषा तृतीयादिष्वचि** ।७।१।९७॥ अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा। क्रोष्ट्रे॥ **ऋत उत्** ।६।१।१११॥ ऋदन्तात् ङसिङसोरति परे उकार एकादेशः स्यात्। रपरत्वम्॥ **रात्सस्य** ।८।२।२४॥ रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य। रेफस्य विसर्गः। क्रोष्टुः। आमि परत्वात्तृज्वद्भावे प्राप्ते--**नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन** * क्रोष्टूनाम्। क्रोष्टरि। क्रोष्ट्रोः। पक्षे हलादौ च शंभुवत्॥ **इत्युदन्ताः**॥ ॥ हूहूः। हूह्वौ। हूह्वः। हूहूम्। हूह्वौ। हूहूनित्यादि॥ अतिचमूशब्दे तु नदीकार्यं विशेषः। हे अतिचमु। अतिचम्वै। अतिचम्वाः २। अतिचमूनाम्। अतिचम्वाम्॥ खलपूः। **ओः सुपि** ।६।४।८३॥ धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ सुपि। गतिकारकेतरपूर्वपदस्य यण् नेष्यते। खलप्वौ। खलप्व इत्यादि। एवं सुल्वादयः॥ अनेकाचः किम्? लूः। लुवौ। लुवः॥ धात्ववयवेति किम्? उल्लूः। उल्ल्वौ। उल्ल्वः॥ असंयोगपूर्वस्य किम्? कटप्रुवौ। कटप्रुवः॥ गतीत्यादि किम्? परमलुवौ॥ सुपि किम्? लुलुवतुः॥ स्वभूः॥ न भूसुधियोः॥ स्वभुवौ। स्वभुवः॥ **वर्षाभ्वश्च** ।६।४।८४॥ अस्योवर्णस्य यण् स्यादचि सुपि॥ वर्षाभ्वौ। वर्षाभ्वः॥ दृम्भतीति दृम्भूः। '**अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषू**' इत्युणादिसूत्रेण निपातितः। दृम्भ्वौ। दृम्भ्वः। दृम्भूम्। दृम्भ्वौ। दृम्भून्। शेषं हूहूवत्॥ दन्निति नान्ते हिंसार्थेऽव्यये भुवः क्विप्। दन्भूः। **दन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः** *॥ दन्भ्वौ। दन्भ्व इत्यादि खलपूवत्॥ करभ्वौ। करभ्वः। दीर्घपाठे तु कर एव कारः। स्वार्थिकः प्रज्ञाद्यण्। कारभ्वौ। कारभ्वः॥ पुनर्भूर्यौगिकः पुंसि। पुनर्भ्वावित्यादि॥ दृग्भूकाराभूशब्दौ स्वयम्भूवत्॥ **इत्युदन्ताः**॥ ॥ धाता। हे धातः। धातारौ। धातारः॥ **ऋवर्णान्नस्य णत्वं वाच्यम्** *॥ धातॄणामित्यादि। एवं नप्त्रादयः॥ उद्गातारौ। पिता। व्युत्पत्तिपक्षे नप्त्रादिग्रहणस्य नियमार्थत्वान्न दीर्घः। पितरौ। पितरः। पितरम्। पितरौ। शेषं धातृवत्॥ एवं जामातृभ्रात्रादयः॥ ना। नरौ। नरः। हे नः॥ **नृ च**। ६। ४। ६॥ नृ इत्येतस्य नामि वा दीर्घः स्यात्। नॄणाम्। नृणाम्॥ **इति ऋदन्ताः**॥ [कॄ तॄ अनयोरनुकरणे 'प्रकृतिवदनुकरणम्' इति वैकल्पिकातिदेशाद्] इत्वे

---

१ **क्रोष्टेति**॥ प्रतिपदविधित्वात् 'सर्वनामस्थाने च' इति बाधित्वा 'अप्तृन्' इत्येव दीर्घो भवति इति बोध्यम्॥ २ 'पुमान् स्त्रिया' इति निर्देशेन 'सस्य चेद् रेफादेव' इति विपरीतनियमो नाङ्गीक्रियते॥ ३ **पक्षे इति**। तृज्वद्भावाभावपक्षे इत्यर्थः॥ ४ **वैकल्पिकेति**॥ 'क्षियो दीर्घात्' इत्यत्र 'क्षियः' इति सुब्विभक्तिप्रयोजकप्रातिपदिकत्वं धातुत्वाभाव एव संभवत् प्रकृतिवत्त्वाभावं ज्ञापयति। इयङादेशो धातुत्व एव संभवन् प्रकृतिवत्त्वं ज्ञापयति इति भावः॥ ५ अयं कोष्ठकान्तर्गतपाठो हलन्तेषु यद्यप्युचितः तथापि समानप्रकृतित्वेन स्मृतिपथागतत्वाल्लिखितः॥ **इत्वे इति**। अत एव 'किरश्च पञ्चभ्यः' इति निर्देशः संगच्छते॥

रपरत्वम् । कीः । किरौ । किरः । तीः । तिरौ । तिर इत्यादि गीर्वत् । ] इत्त्वाभावपक्षे तु ऋदुशन इति ऋतो ङीति च तपरकरणादनङ्गुणौ न । कॄः । क्रौ । क्रः । कॄम् । क्रौ । कॄन् । क्रा । क्रे इत्यादि ॥ **इति ॠदन्ताः ॥** ॥ गम्लृ शक्लृ अनयोरनुकरणेऽनङ् । गमा । शका । गुणविषये तु लपरत्वम् । गमलौ । गमलः । गमलम् । गमलौ । गम्लॄन् । गम्ला । गम्ले । ङसिङसोस्तु ऋत उदित्युत्त्वे संयोगान्तस्य लोपः--गमुल् । शकुल् । इत्यादि ॥ **इति लृदन्ताः ॥** ॥ सेः । सयौ । सयः । स्मृतेः । स्मृतयौ । स्मृतयः ॥ **इत्येदन्ताः ॥** ॥ **गोतो णित् । ७ । १ । ९० ॥** गोशब्दात्परं सर्वनामस्थानं णिद्वत् स्यात् ॥ गौः । गावौ । गावः ॥ **औतोऽम्शसोः ।६।१।९३ ॥** आ ओत इति छेदः । ओकारादम्शसोरचि परे आकार एकादेशः स्यात् ॥ शसा साहचर्यात्सुबेव अम् गृह्यते । नेह—अचिनवम् । असुनवम् । गाम् । गावौ । गाः । गवा । गवे । गोः । इत्यादि ॥ **ओतो णिदिति वाच्यम् *** ॥ **विहितविशेषणं च *** ॥ तेन सुद्यौः । सुद्यावौ । सुद्यावः । ओकारान्ताद्विहितं सर्वनामस्थानमिति व्याख्यानान्नेह--हे भानो । हे भानवः ॥ उः शंभुः स्मृतो येन सः स्मृतोः । स्मृतावौ । स्मृतावः । स्मृताम् । स्मृतावौ । स्मृता इत्यादि ॥ **इत्योदन्ताः ॥** ॥ **रायो हलि ।७।२।८७।** रैशब्दस्याकारोऽन्तादेशः स्याद्धलि विभक्तौ ॥ अचि आयादेशः–राः । रायौ । रायः । रायम् । रायौ । रायः । राया । राभ्यामित्यादि ॥ **इत्यैदन्ताः ॥** ॥ ग्लौः । ग्लावौ । ग्लावः । ग्लावम् । ग्लावौ । ग्लावः । इत्यादि ॥ 'औतोऽम्शसोः' इतीह न प्रवर्तते । 'ऐऔच्' इति सूत्रेण ओदौतोः सावर्ण्याभावज्ञापनात् ॥

इत्यजन्तपुँल्लिङ्गप्रकरणम् ।

---

## अथाजन्तस्त्रीलिङ्गप्रकरणम् ।

रमा ॥ **औङ आपः ।७।१।१८ ॥** आबन्तादङ्गात्परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा ॥ रमे । रमाः ॥ **सम्बुद्धौ च । ७।३।१०६ ॥** आप एकारः स्यात्संबुद्धौ । एङ्-

---

१ **तपरेति** । अत एव 'ऋत उत्' इति उत्वमपि नेति 'ग्रो यङि' इति निर्देशः संगच्छते ॥ २ **अनङिति** 'ऋदुशनस्' इति तपरकरणेन लृकारस्य ग्रहणात् ॥ ३ **गुणेति** । 'ऋतो ङि' इत्यत्र तपकरणेन लृकारग्रहणमिति भावः ॥ ४ लृवर्णस्य दीर्घस्याभावात् सवर्ण ॠकार एव दीर्घः कृत इति भावः ॥ ५ **गम्ला गमूले इति** ॥ ऋवर्णस्य यणि रेफे रपरेऽपि 'रो रि' इति लोपेनेष्टसिद्धावपि लृवर्णस्य यणि लकारे लपरत्वसंपादनाय अण्ग्रहणस्य चरितार्थत्वाद् 'अच्' इत्येव सिद्धे अण् ग्रहणसामर्थ्याद् 'उरण्' इत्यत्राण् 'पूर्वेणैव' इति भाष्यमसंगतं स्याद् अत ईदृशानामनभिधानमेव श्रुतिस्मृतिपुराणादिष्वीदृशलक्ष्यादर्शनादिति भावः ॥ ६ **'न चैङः पदान्तात्परो रुरस्ति'** इति 'प्रकृत्याऽन्तः पाद'इति सूत्रे भाष्योक्तेः सार्वादृशामनभिधानमेव ॥ ७ अजादौ सर्वनामस्थानेऽपि अन्तर्वर्तिविभक्तिमादाय प्राप्तापि पदसंज्ञा न भवतीति भाष्ये स्पष्टमिति पदान्तत्वाभावाद् 'लोपः शाकल्यस्य' इति न प्रवर्तते ॥ ८ संज्ञाप्रकरणोक्तमेव 'एदैतोरोदौतोश्च सावर्ण्याभावं स्मारयितुमेवायं ग्रन्थः ॥ ९ परत्वाद् आङ्गत्वात् प्रतिपदविधित्वाच्च प्राग् एत्वे कृते आकाररूपाभावाद् 'हल्ङ्याब्–' इत्यस्याप्राप्तिरिति भावः ॥

ह्रस्वात्' इति संबुद्धिलोपः—हे रमे । हे रमे । हे रमाः । रमाम्। रमे। रमाः—स्त्रीत्वान्नत्वाभावः। **आङि चापः । ७ । ३ । १०५ ॥** आङि ओसि च परे आबन्तस्याङ्गस्य एकारः स्यात् ॥ रमया । रमाभ्याम् । रमाभिः ॥ **याडापः ७।३।११३ ॥** आपः परस्य ङिद्वचनस्य याडागमः स्यात् ॥ वृद्धिरेचि—रमायै । सवर्णदीर्घः—रमायाः । रमयोः । रमाणाम् । रमायाम् । रमयोः । रमासु ॥ एवं दुर्गादयः ॥ **सर्वनाम्नः स्याड्ढ्रस्वश्च ७ । ३ । ११४ ॥** आबन्तात्सर्वनाम्नः परस्य[1] ङितः स्याट् स्यादापश्च ह्रस्वः ॥ याटोऽपवादः॥ सर्वस्यै । सर्वस्याः २ । एकादेशस्य पूर्वान्तत्वेन ग्रहणादामि सर्वनाम्न इति सुट्[2]—सर्वासाम् । सर्वस्याम् । सर्वयोः । सर्वासु ॥ एवं विश्वादय आबन्ताः ॥ **विभाषा दिक्समासे बहुव्रीहौ । १ ।१। २८ ॥** अत्र सर्वनामता वा स्यात् । उत्तरपूर्वस्यै । उत्तरपूर्वायै । 'दिङ्नामान्यन्तराले' इति प्रतिपदोक्तस्य[3] दिक्समासस्य ग्रहणान्नेह—योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्वायै । बहुव्रीहिग्रहणं स्पष्टार्थम्[4] । अन्तरस्यै शालायै । बाह्यायै इत्यर्थः । अपुरीत्युक्तेर्नेह—अन्तरायै नगर्यै । **विभाषा द्वितीयातृतीयाभ्याम् ।७।३।११५ ॥** आभ्यां ङितः स्याट् वा स्यादापश्च ह्रस्वः ॥ इदं सूत्रं त्यक्तुं शक्यम्। तीयस्य ङित्सूपसंख्यानात्[5] । द्वितीयस्यै । द्वितीयायै । द्वितीयस्याः । द्वितीयायाः । द्वितीयस्याम् । द्वितीयायाम् । शेषं रमावत् ॥ एवं तृतीया ॥ अम्बार्थनद्योर्ह्रस्वः ॥ हे अम्ब । हे अक्क । हे अल्ल ॥ **असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न*** ॥ हे अम्बाडे[6] । हे अम्बाले । हे अम्बिके ॥ जरा । जरसौ । शीभावात्परत्वाज्जरस् । आमि नुटः परत्वाज्जरस्—जरसामित्यादि । पक्षे[7] हलादौ च रमावत् ॥ इह पूर्वविप्रतिषेधेन शीभावं कृत्वा संनिपातपरिभाषाया अनित्यतां चाश्रित्य जरसी इति केचिदाहुस्तन्निर्मूलम्[8][9] । यद्यपि[10] जरसादेशस्य स्थानिवद्भावेनाबन्ततामाश्रित्य—' औङ आपः ' आङि चापः ' ' याडापः ' 'ह्रस्वनद्यापः ' ' ङेराम् ' इति पञ्चापि विधयः प्राप्ताः । एवं नस्[11]निशपृत्सु । तथाप्यनल्विधावित्युक्तेर्न

---

१ ' विहितस्य ' इत्युक्तौ तु ' तस्यै ' इत्यादौ नैव स्यात् ' परस्य ' इत्युक्तौ 'मासपूर्वायै' इत्यादौ स्यात् । अतः ' आबन्तात्परस्य सर्वनाम्नो विहितस्य ' इत्येव बोध्यम्॥ २ **सुडिति** । स्याटोऽप्युपलक्षणम् ॥ ३ दिक्समासघटितदिक्पदेन साक्षात् स्वघटितस्य ' दिङ्नामान्यन्तराले ' इत्यस्यैव शीघ्रोपस्थितिरिति भावः ॥ ४ ' दिङ्नामानि–' इतिसूत्रस्य बहुव्रीहिभिन्नाधिकारेऽवर्तमानत्वात् ॥ ५ उपसंख्यानस्य पुंक्लीबलिङ्गार्थमत्यावश्यकत्वादिति भावः ६ **'डलकवतीनां प्रतिषेधः'** इति वार्तिकोदाहरणेषु भाष्यदर्शितेषु डलकानामसंयुक्तानां दार्शितत्वाद् 'असंयुक्ताः' इति तान्येवोदाहरणानि दर्शयति–**अम्बाड इति** ॥ ७ जरसादेशाभावपक्षे इत्यर्थः ॥ ८ ' शी ' इति दीर्घोच्चारणस्य श्रवणार्थस्य सामर्थ्यादित्यभिमानः ॥ ९ **तन्निर्मूलमिति** । दीर्घोच्चारणस्य ' मधुनी वारिणी ' इत्यादौ नपुंसके श्रवणार्थं चरितार्थत्वादिति भावः ॥ इदं तु बोध्यम्–केवलं संनिपातपरिभाषाया अनित्यतैव भाष्यविरुद्धा जरसादेशाद्विभक्तिसंबन्धिकार्याणां तु प्राबल्यं पूर्वविप्रतिषेधेन भाष्यवार्तिकसंमतमेवेति औङि जरे, आङि जरया, ङयि जरायै, ङसिङसोः जरायाः, ओसि जरयोः, आमि जराणाम्, ङौ जरायाम्, इत्येव रूपाणि भवन्ति न तु जरसादेशविशिष्टानि रूपाणीति बोध्यम् ॥ १० पूर्वविप्रतिषेधोऽपि न भाष्यसंमत इत्यभिमानेन शङ्कते–**यद्यपीति** ॥ आत्वं च नाल्धर्मः **विशिष्टं ह्येषोऽनल्रमाश्रयते इटं नामेति** इति भाष्यसिद्धान्तादिति भावः ॥ ११ ' नस् ' नासिकायाः, 'निश्' ' निशायाः ' ' पृत् ' पृतनाया आदेश इति भावः ॥

भवन्ति 'आ आब्' इति प्रश्लिष्य आकाररूपस्यैवाऽऽपः सर्वत्र ग्रहणात्। एवं हल्ङ्यादि-सूत्रेऽपि 'आ आप्' 'ङी ई' इति प्रश्लेषादतिखट्वः निष्कौशाम्बिरित्यादिसिद्धेर्दीर्घग्रहणं प्रत्याख्येयम्। न चैवमप्यतिखट्वायेत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वं चाश्रित्य याट् स्यादिति वाच्यम्। आबन्तं यदङ्गं ततः परस्य याड्विधानात्। उपसर्जनस्त्रीप्रत्यये तदादिनियमात्। 'पद्दन्' इति नासिकाया नस्। नसः। नसा। नोभ्यामित्यादि। पक्षे सुटि च रमावत्। निशाया निश्। निशः। निशा॥ **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः। ८।२।३६॥** व्रश्चादीनां सप्तानां छशोरन्तयोश्च षकारोऽन्तादेशः स्याज्झलि पदान्ते च। षस्य जश्त्वेन डकारः। निड्भ्याम्। निड्भिः॥ सुपि डः सीति पक्षे धुट्। चर्त्वम्। तस्यासिद्धत्वात् 'चयो द्वितीया' इति टतयोष्ठथौ न। 'न पदान्ताट्टोः' इति ष्टुत्वं न। निट्त्सु। निट्सु॥ **षढोः कः सि। ८।२।४१॥** षस्य ढस्य च कः स्यात्सकारे परे॥ इति तु न भवति। जश्त्वं प्रत्यसिद्धत्वात्॥ केचित्तु–व्रश्चादिसूत्रे 'दादेर्धातोः' इति सूत्राद्धातोरित्यनुवर्तयन्ति। तन्मते जश्त्वेन जकारे–निज्भ्याम्। निज्भिः॥ जश्त्वम्, श्चुत्वम्, चर्त्वम्, निच्शु। छत्वम्, निच्छु। 'चोः कुः' इति कुत्वं तु न भवति, जश्त्वस्यासिद्धत्वात्॥ **मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः शसादौ वा *॥** पृतः। पृता। पृद्भ्याम्। पक्षे सुटि च रमावत्॥ गोपा विश्वपावत्॥ मतिः। प्रायेण हरिवत्। स्त्रीत्वान्नत्वाभावः–मतीः। नात्वं न–मत्या॥ **ङिति ह्रस्वश्च। १।४।६॥** इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति परे॥ आण् नद्याः–मत्यै। मतये। मत्याः। मते[12]॥ नदीत्वपक्षे 'औत्' इति ङेरौत्त्वे प्राप्ते–॥ **इदुद्भ्याम्। ७।३।११७॥** नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात्॥ पक्षे–अच्च घेः। मत्याम्। मतौ॥ एवं श्रुतिस्मृत्यादयः॥ **त्रिचतुरोः स्त्रियां तिसृचतसृ। ७।२।९९॥** स्त्रीलिङ्गयोरेतयोरेतावादेशौ स्तो विभक्तौ परतः॥ **अचि र ऋतः। ७।२।१००॥** तिसृचतसृ एतयोरृकारस्य रेफादेशः स्यादचि। गुणदीर्घोत्वानामप-

---

१ एवं च आत्वस्याल्धर्मत्वेन सर्वेषामेषां विधीनामल्विधित्वमिति न स्थानिवत्त्वप्राप्तिरिति भावः॥ २ स्पष्टं चेदं स्थानिवत्सूत्रे भाष्ये॥ ३ आकारत्वस्यातिदिश्यमानत्वाभावाद् आप्त्वस्यानल्धर्मत्वादिति भावः॥ ४ '**प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्**' इति परिभाषया 'यस्मात्प्रत्ययविधिस्तदादि प्रत्यये' इतिसूत्रार्थभूतया आप्प्रत्ययस्य खट्वशब्दाद् विहितत्वेन तदादितदन्तः 'खट्वा' शब्द एव स च नाङ्गम्। यच्चाङ्गम्–अतिखट्व इति तच्च नाबन्तम्, इति आबन्तादङ्गाद्विहितत्वाभावेन नैव ततः परस्य याडापत्तिरिति भावः॥ ५ 'सतुक्कच्छ–' इति पाठो बोध्यः॥ '**निमित्तापाये नैमित्तिकस्याप्यपायः**' इति तु नैवास्ति॥ ६ तस्य चर्त्वस्य॥ 'नादिन्याक्रोशे–' इति सूत्रे 'चयो द्वितीयाः' इत्यस्य पाठात्॥ ७ एतन्मते भाष्यानुग्रहो विचार्य इति शेखरकृत्॥ ८ **जश्त्वेनेति**। 'झलां जशोऽन्ते' इत्यनेनेत्यादिः॥ ९ **स्त्रीत्वादिति**। पुंस्त्वाभावेनेति शेषः॥ १० **नात्वं नेति**। टाया इत्यादिः॥ स्त्रीत्वादिति भावः॥ ११ पक्षे 'घेर्ङिति'॥ १२ पक्षे घेर्ङिति' 'ङसिङसोश्च'॥ १३ तेन त्रिप्रिय इत्यत्र न तिसृभावः॥ 'तिसृका ग्रामः' इत्यत्र तु '**संज्ञायां कन्युपसंख्यानम्**' इति वार्तिकेन तिसृभावः॥ १४ रेफादेशे तिसृचतस्रोर्बाधकत्वं मा भूत् इति षष्ठीविपरिणततिसृ–चतसृपदानुवृत्तौ तात्पर्यग्राहकम्–'ऋतः' इतीत्यभिप्रेत्य व्याचष्टे–**एतयोरृकारस्येति**॥ १५ सर्वनामस्थाने गुणस्य शसि दीर्घस्य गौणे ङसिङसोरुत्वस्येति बोध्यम्॥

वादः ॥ तिस्रः २ । आमि—'नुमचिर'इति नुट् ॥ **न तिसृचतसृ । ६ । ४ । ४ ॥** एतयोर्नामि दीर्घो न स्यात् ॥ तिसृणाम् । तिसृषु ॥ स्त्रियामिति त्रिचतुरोर्विशेषणान्नेह—प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिः मतिवत् । आमि तु प्रियत्रयाणामिति विशेषः ॥ प्रियास्तिस्रो यस्य स इति विग्रहे तु प्रियतिसा । प्रियतिस्रौ । प्रियतिस्रः । प्रियतिस्रामित्यादि ॥ प्रियास्तिस्रो यस्य तत्कुलं प्रियत्रि । स्वमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेशः । न लुमतेति निषेध-स्यानित्यत्वात्पक्षे प्रियतिसृ । रादेशात्पूर्वविप्रतिषेधेन नुम् । प्रियतिसृणी । प्रियतिसॄणि । तृतीयादिषु वक्ष्यमाणपुंवद्भावविकल्पात्पर्यायेण नुम्रभावौ—प्रियतिस्रा । प्रियतिसृणा । इत्यादि ॥ ह्रस्वे सत्याप् । द्वे २ । द्वाभ्याम् ३ । द्वयोः २ ॥ गौरी । गौर्यौ । गौर्यः । नदी-कार्यम् । हे गौरि । गौर्यै इत्यादि ॥ एवं वाणीनद्यादयः ॥ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणादनङि णिद्वद्भावे च प्राप्ते ॥ **विभक्तौ लिङ्गविशिष्टाग्रहणम्** * ॥ सखी । सख्यौ । सख्यः । इत्यादि गौरीवत् ॥ अङ्यन्तत्वान्न सुलोपः । लक्ष्मीः । शेषं गौरीवत् ॥ एवं तरी-तन्त्र्यादयः ॥ स्त्री । हे स्त्रि ॥ **स्त्रियाः । ६ । ४ । ७९ ॥** स्त्रीशब्दस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ । स्त्रियः ॥ **वाम्शसोः । ६ । ४ । ८० ॥** अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम् । स्त्रीम् । स्त्रियौ । स्त्रियः । स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः २ । स्त्रियोः । परत्वान्नुट् । स्त्रीणाम् । स्त्रियाम् । स्त्रियोः । स्त्रीषु । स्त्रियमतिक्रान्तः अतिस्त्रिः । अतिस्त्रियौ ॥

गुणनाभावौत्वनुड्भिः परत्वात्पुंसि बाध्यते । क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम् ॥

---

१ 'अङ्गस्य' इत्यधिकारविशेषणत्वेन तदन्तविधावपि 'स्त्रियाम्' इत्येतद्गृह्यमाणविशेषणमेव न तदन्ताङ्गस्य "**त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणम्**" इति वार्तिकोक्तेरित्याह—**स्त्रियामितीति** ॥ २ **नेहेति** ।आदेशापत्तिरिति शेषः ॥ ३ **विग्रहे त्विति** । नैवादेशानुपपत्तिरिति शेषः ॥ समासयोग्यालौकिकप्रक्रियावाक्ये 'प्रियाजस् त्रिजस्' इत्यत्रोत्तरपदऋकारान्तत्वाभावान्न कबापत्तिः ॥ समासोत्तरं स्त्रीत्वविशिष्टार्थवाचकत्रिचतुरन्ताङ्गस्येत्यर्थेन भवत्येवादेश इति भावः ॥ ४ **स्वमोरिति** । 'समासात्प्राक् जसः समासोत्तरम्' इतिप्राक्शेषः ॥ **लुकेति** । '**अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते**' इति परिभाषया लुकः प्राग् नैव तिस्रादेशापत्तिरित्येतद् ध्वन्यते ॥ ५ **प्रत्ययलक्षणाभावादिति** । 'न लुमताङ्गस्य' इति निषेधादिति भावः ॥ ६ 'इकोऽचि विभक्तौ' इत्यत्र 'अचि' ग्रहणाभावेऽपि हलादौ जातस्य नुमः 'न लोपः' इत्यनेन 'न लुमता' इति निषेधात्संबुद्धिलुकः प्रत्ययलक्षणाभावेन संबुद्धिपरत्वासंभवात् 'न ङिसंबुद्ध्योः' इति निषेधाप्रवृत्त्या संबुद्धावपि नलोपे दोषाभावात् व्यर्थं सद् 'अचि' इति 'न लुमता' इति निषेधस्यानित्यतां ज्ञापयेत् 'न लुमता' इत्यस्य प्रवृत्तिपक्षे प्रत्ययलक्षेणन संबुद्धिपरत्वमादाय नलोपानुपपत्तौ नैकारश्रवणवारणाय 'अचि' इति स्वांशे चरितार्थमिति भावः ॥ ७ '**विप्रतिषेधे परम्—इष्टं कार्यम्**' इति सिद्धान्तार्थे 'रादेशात् नुम् इष्ट' इत्येतज्ज्ञापके भाष्योदाहरण एव दर्शयति— **प्रियतिसृणी प्रियतिसॄणी इति** । ८ '**त्यदाद्यकारष्टाब्विधेः**' इति वार्तिकेन टापि करणीये संनिपातपरिभाषाविरोध उद्भावितः तथापि 'द्वास्वा' इति निर्देशेन तदप्रवृत्तिर्ज्ञाप्यते इति भावः ॥ अत एव बहिरङ्गासिद्धत्वमपि नेति बोध्यम् ॥ ९ 'अवीतन्त्रीतरीलक्ष्मीधीह्रीश्रीणामुणादिषु । सप्तस्त्रीलिङ्गशब्दानां न सुलोपः कदाचन ॥' १० गुणः 'जसि च' 'घेर्ङिति' इति विहितः । नाभावः 'आङो ना' इति । औत्वम् 'अच्च घेः' इति ॥ नुट् 'ह्रस्वनद्यापः' इति ॥

जसि च-अतिस्त्रयः । हे अतिस्त्रे । हे अतिस्त्रियौ । हे अतिस्त्रयः ॥ वाम्शसोः-अतिस्त्रियम् । अतिस्त्रिम् । अतिस्त्रियौ । अतिस्त्रियः । अतिस्त्रीन् । अतिस्त्रिणा ॥ घेर्ङिति-अतिस्त्रये । अतिस्त्रेः २ । अतिस्त्रियोः २ । अतिस्त्रीणाम् ॥ अच्च घेः-अतिस्त्रौ ।

ओस्यौकारे च नित्यं स्यादम्शसोस्तु विभाषया । इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने ॥ क्लीबे तु नुम् । अतिस्त्रि । अतिस्त्रिणी । अतिस्त्रीणि । अतिस्त्रिणा । अतिस्त्रिणे । ङेप्रभृतावजादौ वक्ष्यमाणपुंवद्भावात्पक्षे प्राग्वद्रूपम्[1][2] । अतिस्त्रये । अतिस्त्रिणः २ । अतिस्त्रेः २ । अतिस्त्रिणोः २ । अतिस्त्रियोरित्यादि ॥ स्त्रियां[3] तु प्रायेण पुंवत् । शसि-अतिस्त्रीः । अतिस्त्रिया ॥ 'ङिति ह्रस्वश्च' इति ह्रस्वान्तत्वप्रयुक्तो विकल्पः । अस्त्रीति तु इयङुवङ्स्थानावित्यस्यैव पर्युदासः तत्संबद्धस्यैवानुवृत्तेः[4] । दीर्घस्यैवायं[5] निषेधो न तु ह्रस्वस्य ॥ अतिस्त्रिय । अतिस्त्रये । अतिस्त्रियाः २ । अतिस्त्रेः २ । अतिस्त्रीणाम् । अतिस्त्रियाम् । अतिस्त्रौ ॥ श्रीः[6] । श्रियौ । श्रियः ॥ **नेयङुवङ्स्थानावस्त्री । १ । ४ । ४ ॥** * इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री ॥ हे श्रीः । श्रियै । श्रिये । श्रियाः । श्रियः ॥ **वामि । १ । ४ । ५ ॥** इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री ॥ श्रीणाम् । श्रियाम् । श्रियि । श्रियाम् । प्रधीशब्दस्य[7] तु वृत्तिकारादीनां मते लक्ष्मीवद्रूपम् । पदान्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति स्वीकारात् । लिङ्गान्तरानभिधायकत्वं तदिति कैयटमते तु पुंवद्रूपम्[8] । प्रकृष्टा धीरिति विग्रहे तु[9] लक्ष्मीवत् । अमि शसि च प्रध्यम् प्रध्य इति विशेषः[10] ॥ सुष्ठु धीर्यस्याः सुष्ठु ध्यायति वेति विग्रहे तु वृत्तिमते सुधीः श्रीवत् । मतान्तरे पुंवत् ॥ सुष्ठु धीरिति विग्रहे तु श्रीवदेव[11] ॥ ग्रामणीः पुंवत् । ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदान्तरं विना स्त्रियामप्रवृत्तेः ॥ एवं खलपवनादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् ॥ धेनुर्मतिवत् ॥ **स्त्रियां च । ७ । १ । ९६ ॥** स्त्रीवाची क्रोष्टुशब्द-

---

१ अयं श्लोको यदि 'गुणनाभावौरत्र-' इति श्लोकतः प्रागेव पठ्येत तर्हि वरतरं स्यात् ॥ २ **प्राग्वत्** पुंवत् ॥ ३ **स्त्रियां** 'प्रधानायाम्' स्त्रियम् अतिक्रान्ता स्त्री इति विग्रहे इति भावः ॥ ४ **तत्संबद्धस्येति** ॥ 'इयङुवङ्स्थानौ' इत्येतत्संबद्धस्येत्यर्थः ॥ 'सहचरितासहचरितयोः' इति 'एकयोग' इति वा परिभाषयेति केचित् ॥ ५ **दीर्घस्येति** ॥ अयं भावः-'ङिति ह्रस्वश्च' इत्यत्र 'ङिति' इति योगं विभज्य तत्र 'इयङुवङ्स्थानौ' 'अस्त्री' 'वा' इति अनुवर्तते । तथा च-तत्र 'यू स्त्र्याख्यौ नदी' इति 'यू' इत्यनेन दीर्घयोरेव ग्रहणस्य भाष्ये निश्चितत्वात् इयङुवङ्स्थानौ स्त्र्याख्यौ दीर्घेकारोकारौ वा नदीसंज्ञौ स्तो ङिति' इत्यर्थेन अस्त्री' इत्यत्रैतावत्पर्यन्तं ह्रस्वस्याग्रहणात् ॥ 'ह्रस्वश्च' इत्यत्र तु 'अस्त्री' इत्येतन्नैव विशेषणतया व्यावर्तकम्' ह्रस्वस्य सदैव स्त्रीशब्दभिन्नत्वात् । अस्त्री इत्यत्र '**अस्त्री ई**' इति प्रश्लिष्य दीर्घेकारान्तस्त्रीशब्दस्यैव पर्युदासकोटौ ग्रहणादिति तत्त्वम् ॥ 'दीर्घस्यैवायम्' इति पाठफलितमाह-**नातिव्र्वात** ॥ ६ 'कृदिकारादक्तिनः' इति ङीषि तु नदीवत् 'श्री श्र्यौ श्र्यः श्रीम्' इत्येव रूपाणि भवन्ति । अत एव **तां दृष्ट्वा श्रीमिवायतीम्**' इति मुकुटेन प्रयोगो दर्शितः । '**कथानिव श्रीमपि कुत्सयन्तः**' इति शंकरभगवत्पादैश्च प्रयुक्तमिति बोध्यम् ॥ * 'बाधकाबाधिता' इत्यादिः ॥ तेन 'श्र्यै पुनर्भ्वै' इत्यादौ नदीसंज्ञा भवत्येवेति सारम् ॥ ७ **प्रधीशब्दस्येति** । 'प्रकृष्टं ध्यायति' इति प्रकृष्टा धीर्यस्येति वा विग्रहे इत्यादिः ॥ ८ **पुंवदिति** । ध्यानकर्तृत्वस्य प्रकृष्टधीसंबन्धित्वस्य च स्त्रियां पुंसि च संभवादिति भावः ॥ ९ मतद्वयेऽपीति शेषः ॥ १० त्रिष्वपि विग्रहेष्विति बोध्यम् ॥ ११ उभयमतेऽपीति भावः ॥

स्तृजन्तवद्रूपं लभते ॥ **ऋन्नेभ्यो ङीप् । ४ । १ । ५ ॥** ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात्[1] ॥ क्रोष्ट्री । क्रोष्ट्र्यौ । क्रोष्ट्र्यः ॥ वधूर्गौरीवत् । भ्रूः श्रीवत् । हे सुभ्रूः । कथं तर्हि—'हापितः क्वासि हे सुभ्रु' इति भट्टिः ? प्रमाद[2] एवायमिति बहवः ॥ खलपूः पुंवत् । पुनर्भूः ॥ 'दृन्कर' इति यणा उवङो बाधनात्'नेयङुवङ्' इति निषेधो न । हे पुनर्भु । पुनर्भ्वम् । पुनर्भ्वौ । पुनर्भ्वः ॥ **एकाजुत्तरपदे णः । ८।४।१२ ॥** एकाजुत्तरपदं यस्य तस्मिन् समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्यात् ॥ आरम्भ[3]सामर्थ्यान्नित्यत्वे सिद्धे पुनर्णग्रहणं स्पष्टार्थम् । यणं[4] बाधित्वा परत्वान्नुट् । पुनर्भूणाम् ॥ वर्षाभूः । भेकजातौ नित्यस्त्रीत्वाभावात्—हे वर्षाभूः कैयटमते । मतान्तरे तु हे वर्षाभु ॥ पुनर्नवायां[5] तु हे वर्षाभु । भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्, इति यादवः । वर्षाभ्वौ । वर्षाभ्वः । स्वयंभूः पुंवत् ॥ **न षट्स्वस्रादिभ्यः ।४।१।१०।** षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ[6] न स्तः ॥

स्वसा तिस्रश्चतस्रश्च[7] ननान्दा दुहिता तथा । याता मातेति[8] सप्तैते स्वस्रादय उदाहृताः ॥

'अप्तृन्' इति दीर्घः । स्वसा । स्वसारौ । स्वसारः ॥ माता पितृवत् । शसि मातॄः ॥ द्यौर्गोवत् ॥ राः पुंवत् ॥ नौर्ग्लौवत् ॥

इत्यजन्तस्त्रीलिङ्गप्रकरणम् ।

---

## अथाजन्तनपुंसकलिङ्गप्रकरणम् ।

**अतोऽम् ।७।१।२४ ॥** अतोऽङ्गात् क्लीबात्स्वमोरम् स्यात् ॥ अमि[9] पूर्वः ॥ ज्ञानम् । 'एङ्ह्रस्वात्' इति हल्[10]मात्रलोपः । हे ज्ञान ॥ **नपुंसकाच्च ।७।१।१९॥** क्लीबात्परस्यौङः शी स्यात् ॥ भसंज्ञायाम् ॥ **यस्येति च ।६।४।१४८ ॥** भस्येवर्णा[11]वर्णयोर्लोपः स्यादीकारे तद्धिते च परे ॥ इत्यकारलोपे प्राप्ते ॥ औङः ईयां[12] प्रतिषेधो वाच्यः * ॥ ज्ञाने ॥ **जश्शसोः शि[13]ः ।७।१।२० ॥** क्लीबादनयोः शिः स्यात् ॥ **शि[14] सर्वनामस्थानम् १।१।४२ ॥** शि इत्येतदुक्त-

---

१ उवङ्स्थानित्वेन नदीसंज्ञाप्रतिषेधाद् ह्रस्वाप्राप्तेरिति भावः ॥ २ विरहपीडितत्वेनानवधानलक्षणोऽत्र प्रमादः । स च विरहपोषकत्वात्काव्ये गुण इति बोध्यम् ॥ ३ ' प्रातिपतिकान्तनुम्—इत्यनेन विकल्पे सिद्धे इत्यादिः ॥ ४ **यणमिति** । द्वयोरप्याङ्गत्वेन तुल्यबलत्वेन चेति भावः ॥ ५ **पुनर्नवायां त्विति** । मतद्वयेऽपीति शेषः ॥ ६ स्त्रियां यत् प्राप्तं तन्नेति व्याख्यानफलितमाह—**ङीप्टापौ नेति** ॥ ७ तिसृचतसृग्रहणं गणेऽनार्षमिति 'कृन्मेजन्त' इति सूत्रभाष्यस्वरसः ॥ ८ **मातेति** जननीवाचिन एव ग्रहणं दुहित्रादिसाहचर्यात् । न परिच्छेत्तृवाचिन इति बोध्यम् । ९ 'म्' इति च्छेदे 'सुपि च' इति दीर्घापत्तिरतः 'अम्' इत्येव च्छेद इति ध्वनयितुमाह—**अमि पूर्व इति** ॥ १० पूर्वरूपे कृते एकादेशस्य पूर्वान्तवत्त्वेनाङ्गत्वात् ततः परस्य हल्मात्रस्य लोप इति भावः ॥ ११ 'इश्च अश्च यं तस्य' इत्यर्थो व्याख्यानादित्याह—**इवर्णावर्णयोरिति** ॥ १२ अत एव निर्देशान्नित्यस्त्रीत्वेन नदीत्वमिति भावः ॥ भाष्ये तु ' औङः ' इति नोपलभ्यते ॥ १३ 'ज्ञानानि' इत्यादौ ह्रस्वश्रवणाय 'शी' इति नानुवृत्तम् । 'वारिणी' इत्यादौ दीर्घश्रवणाय ' जसः शी ' इति दीर्घनिर्देशः ॥ सविसर्गपाठफलं चिन्त्यम् । 'शि सर्वनामस्थानम्' इत्यत्रैवाविभक्तिकपाठेनापीष्टसिद्धेः ॥ शस् सुबेवात्र गृह्यते न तद्धितः जस्साहचर्यात् ॥ १४ औङः श्या अपि नपुंसकनिर्देशे 'पयसी' इत्यादावपि नुम्दीर्घापत्तिः ॥

संज्ञं स्यात् ॥ **नपुंसकस्य झलचः ७।१।७२** ॥ झलन्तस्याजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने परे । उपधादीर्घः । ज्ञानानि । पुनस्तद्वत् शेषं । रामवत् ॥ एवं धनवनफलादयः ॥ **अद्ड्डतरादिभ्यः पञ्चभ्यः ।७।१।२५** ॥ एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात् ॥ **टेः ।६।४।१४३** ॥ डिति परे भस्य टेर्लोपः स्यात् ॥ वावसाने ॥ कतरत् । कतरद् । कतरे । कतराणि ॥ भस्येति किम् ? पञ्चमः ॥ टेर्लुप्तत्वात्प्रथमयोरिति पूर्वसवर्णदीर्घः एङ्ह्रस्वादिति संबुद्धिलोपश्च न भवति—हे कतरत् । पुनस्तद्वत् । शेषं पुंवत् ॥ कतमत् । अन्यत् । अन्यतरत् । इतरत् ॥ अन्यतमशब्दस्य तु अन्यतममित्येव ॥ **एकतरात्प्रतिषेधो वक्तव्यः** * ॥ एकतरम् ॥ सोरमादेशे कृते संनिपातपरिभाषया न जरस् । अजरम् । अजरसी । अजरे । परत्वाज्जरसि कृते झलन्तत्वान्नुम् ॥ **सान्त महतः संयोगस्य ।६।४।१०** ॥ सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे ॥ अजरांसि । अजराणि ॥ अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस् । ततः संनिपातपरिभाषया न लुक् । अजरसम् । अजरम् । अजरसी । अजरे । अजरांसि । अजराणि । शेषं पुंवत् ॥ 'पद्दन्' इति हृदयोदकास्यानां हृद् उदन् आसन् । हृन्दि । हृदा । हृद्भ्यामित्यादि ॥ उदानि । उद्ना । उदभ्यामित्यादि ॥ आसानि । आस्ना । आसभ्यामित्यादि ॥ मांसि । मांसा । मान्भ्यामित्यादि ॥ वस्तुतस्तु प्रभृतिग्रहणं प्रकारार्थमित्युक्तम् ॥ अत एव भाष्ये मांस्पचन्या उखाया इत्युदाहृतम् । अयस्मयादित्वेन भत्वात्संयोगान्तलोपो न॥ पद्दन्न इत्यत्र हि छन्दसीत्यनुवर्तितं वृत्तौ तथापि 'अपो भि' इत्यत्र 'मासश्छन्दसि इति वार्तिके छन्दोग्रहणसामर्थ्याल्लोकेऽपि क्वचित् इति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः प्रयोक्तव्य इति बोध्यम् ॥ **ह्रस्वो नपुंसके प्रातिपादिकस्य ।१।२।४७** ॥ क्लीबे प्रातिपदिकस्याजन्तस्य ह्रस्वः स्यात् ॥ श्रीपं ज्ञानवत् । श्रीपाय । अत्र संनिपातपरिभाषया आतो धातोरि-

---

१ 'सर्वनामस्थाने चासंबुद्धौ' इत्यनेन ॥ २–दस्य ष्टुत्वम् डस्य संयोगान्तलोपश्चादेशस्वरूपज्ञानाय न कृत-इति कैयटः ॥ ३ डतरादिः सर्वाद्यन्तर्गणः ॥ अत एवाधिकग्रहणव्यवच्छेदाय 'पञ्चभ्यः' इति सार्थकम् ॥ **डतरादिभ्यो विहितयोरङ्गसंज्ञानिमित्तयोः स्वमोरित्यर्थः** ॥ तेन 'अतिकतरम्' इत्यादौ न दोषः ॥ परमकतरदित्यत्राद्डादेशे न भाष्यान्तरं मानमस्ति इति नागेशः ॥ ४ अकोऽभावात् पूर्वसवर्णदीर्घः, अङ्गस्य हलन्तत्वेन ह्रस्वान्तत्वाभावात्संबुद्धिलोपो नेति भावः ॥ ५ डतमप्रत्ययान्तत्वाभावादित्यादिः ॥ ६ 'एकाच्च प्राचाम्' इति डतरान्तत्वात् प्राप्तिरिति भावः ॥ ७ 'जसः शि' आदेशे कृते 'अजर इ' इति स्थिते नुमपेक्षया इत्यादिः । तदुक्तं वार्तिककृता '**नुमोऽनङ्जरसौ विप्रतिषेधेन**' इति ॥ ८ 'सान्त' इति लुप्तषष्ठीकं पृथक्पदं 'संयोगस्य' इत्येतद्विशेषणम् । 'नोपधायाः' इत्यतोऽनुवृत्तस्य 'न' इति लुप्तषष्ठीकस्यैवोपधानिरूपकत्वं सर्वनामस्थानपूर्वत्वं च '**येन नाव्यवधानं तेन व्यवहितेऽपि**' इति वचनप्रामाण्याद् ग्राह्यमित्यभिप्रेत्याह–**सान्तसंयोगस्येति** ॥ ९ 'अजर + अम्' इत्यवस्थायां जरसि लुकि च प्राप्ते 'सर्वविधिभ्यो लुग् बलीयान्' इति जरसादेशं बाधित्वा लुकि प्राप्ते 'अतोऽम्' इत्यमादेशे लुग्बाधके कृते संनिपातपरिभाषया नैव जरसादेश इति स्पष्टमभिहितम्–' **गोनर्दीय आह–इष्टमेवैतत्संगृहीतं भवति–अतिजरम् अतिजरैरिति भवितव्यम् सत्यामेतस्यां परिभाषायाम् 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य**' इति' इति भाष्यकृत् ॥ १० '**मांसस्य पच्युडघञोः**' इत्यपि एतत्सिद्धार्थानुवादएव ॥'

त्याकारलोपो न ॥ **स्वमोर्नपुंसकात्** ।७।१।२३ ॥ क्लीबादङ्गात्स्वमोर्लुक् स्यात् ॥ वारि ॥ **इकोऽचि विभक्तौ** ।७।१।७३ ॥ इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ ॥ वारिणी । वारीणि । न लुमतेति निषेधस्यानित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः--हे वारे, हे वारि । आङो ना--वारिणा । घेर्ङितीति गुणे प्राप्ते ॥ **वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन** *॥ वारिणे । वारिणः । वारिणोः । नुमचिरेति नुट् । नामीति दीर्घः । वारीणाम् । वारिणि । वारिणोः । हलादौ हरिवत् । **तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य** ।७।१।७४ ॥ प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा स्याट्टादावचि ॥ अनादये । अनादिने इत्यादि ॥ शेषं वारिवत् ॥ पीलुर्वृक्षस्तत्फलं पीलु तस्मै पीलुने ॥ अत्र न पुंवत् प्रवृत्तिनिमित्तभेदात् ॥ **अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः** ।७।१।७५ ॥ एषामनङ् स्याट्टादावचि स चोदात्तः ॥ अल्लोपोऽनः ॥ दध्ना । दध्ने । दध्नः । दध्नोः २ । दध्नि । दधनि । शेषं वारिवत् ॥ एवमस्थिसक्थ्यक्षीणि । तदन्तस्याप्यनङ् । अतिदध्ना । सुधि । सुधिनी । सुधीनि । हे सुधे । हे सुधि । सुधिया । सुधिना ॥ प्रध्या । प्रधिना ॥ मधु । मधुनी । मधूनि । हे मधो । हे मधु । एवमम्ब्वादयः ॥ सानुशब्दस्य स्नुर्वा स्नूनि । सानूनि ॥ प्रियक्रोष्टु । प्रियक्रोष्टुनी ॥ तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम्--प्रियक्रोष्टूनि ॥ टादौ पुंवत्पक्षे प्रियक्रोष्ट्रा । प्रियक्रोष्टुना । प्रियक्रोष्ट्रे । प्रियक्रोष्टवे । अन्यत्र तृज्वद्भावात्पूर्वविप्रतिषेधेन नुमेव । प्रियक्रोष्टुना । प्रियक्रोष्टुने । नुमचिरेति नुट्--प्रियक्रोष्टूनाम् ॥ सुलु । सुलुनी । सुलूनि । पुनस्तद्वत् । सुल्वा । सुलुना ॥ धातृ । धातृणी । धातॄणि । हे धातः । हे धातृ । धात्रा । धातृणा । एवं ज्ञातृकर्त्रादयः ॥ **एच इग्घ्रस्वादेशे** ।१।१।४८ ॥ आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात् ॥ प्रद्यु । प्रद्युनी । प्रद्यूनि । प्रद्युनेत्यादि । इह न पुंवत् । यदिगन्तं प्रद्यु इति तस्य भाषितपुंस्कत्वाभावात् ॥ एवमग्रेऽपि । प्ररि । प्ररिणी । प्ररीणि । प्ररिणा ॥ एकदेशविकृतस्यानन्यत्वात् 'रायो हलि' इत्यात्वम्--प्राराभ्याम् । प्राराभिः ॥ नुमचिरेति नुट्यात्वे प्राराणामिति माधवः। वस्तुतस्तु संनिपातपरिभाषया नुट्यात्वं न । नामीति

---

१ 'इकोचि' इति सूत्रे '**इह किंचित् त्रपो इति**' इति वार्तिकप्रयोगः '**हे त्रपु**' इति एङ्ह्रस्वात् सूत्रे भाष्यप्रयोगश्चात्रानुकूलः ॥ २ भाषितः पुमान् यस्मिन्नर्थे स भाषितपुंस्कः । सोऽस्ति यस्य तद्भाषितपुंस्कमित्यभिप्रत्याह--**प्रवृत्तिनिमित्तैक्य इति**॥तथा चोक्तम्--'**यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते। क्लीबवृत्ति तदेव स्यादुक्तपुंस्कं तदुच्यते**' ॥ इति॥ ३ पुंसि वृक्षत्वं प्रवृत्तिनिमित्तम् । क्लीबे फलत्वमिति प्रवृत्तिनिमित्तभेदादित्यर्थः ॥ ४ 'एतदन्तस्याङ्गस्य' इत्यर्थः । तेन 'प्रियसक्थ्ना ब्राह्मणेन' इत्यादावुपसर्जनोऽपि अनङ् भवत्येव ॥ ५ '**अन्यत्र**' पुंवद्भावविरहपक्षे ॥ ६ टायां नुमं बाधित्वा 'ना' आमि 'नुट्' इति तु विशेषः ॥ ७ '**इचशयास्तालौ**' '**उवोपोपध्मा ओष्ठे**' इति प्रातिशाख्यानुसारेण एकारस्य तालव्यत्वम् ओकारस्य ओष्ठ्यत्वमङ्गीकृत्य '**सिद्धमेङः सस्थानत्वात्**' इति वार्तिकैकदेशे स्थानकृतान्तर्येण इक एव प्राप्तौ '**अकारार्धमैकारौकारयोरादिः इकारोऽध्यर्धः पूर्वस्य शेष उकारस्तूत्तरस्य**' इति प्रातिशाख्यमनुसृत्य '**एचोश्चोत्तरभूयस्त्वात्**' इति वार्तिकजशेऽपि प्रमाणकृतान्तर्येण इक एव सिद्धौ व्यर्थमेवेदं सूत्रमिति भाष्ये स्पष्टम्। समविभागपक्षे तु सूत्रमंशेऽकारव्यावृत्यर्थमावश्यकमेवेत्यपि '**प्लुतावैच इदुतौ**' इत्यत्र भाष्ये ध्वनितम् ॥

दीर्घस्त्वारम्भसामर्थ्यात्परिभाषां बाधत इत्युक्तम् ॥ प्ररीणाम् । सुनु । सुनुनी । सुनूनि । सुनुना । सुनुने । इत्यादि ॥ ॥

इत्यजन्तनपुंसकलिङ्गप्रकरणम् ।

---

## अथ हलन्तपुँल्लिङ्गप्रकरणम् ।

**हो ढः ।८।२।३१ ॥** हस्य ढः स्याज्झलि पदान्ते च । हल्ङ्याबिति सुलोपः । पदान्तत्वाद्धस्य ढः । जश्त्वचर्त्वे । लिट् । लिड् लिहौ । लिहः । लिहम् । लिहौ । लिहः । लिहा । लिड्भ्याम् । लिट्त्सु । लिट्सु ॥ **दादेर्धातोर्घः ।८।२।३२ ॥** उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च ॥ उपदेशे किम् ? अधोगित्यत्र यथा स्यात् । दामलिहमात्मन इच्छति दामलिह्यति । ततः क्विपि दामलिट् । अत्र मा भूत् ॥ **एकाचो बशो भष् झषन्तस्य स्ध्वोः । ८।२।३७ ॥** धातोरवयवो य एकाच् झषन्तस्तदवयवस्य बशः स्थाने भष् स्यात्सकारे ध्वशब्दे पदान्ते च ॥ एकाचो धातोरिति सामानाधिकरण्येनान्वये तु इह न स्यात् गर्दभमाचष्टे गर्दभयति । ततः क्विप् । णिलोपः । गर्धप् ॥ झलीति निवृत्तम् । स्ध्वोर्ग्रहणसामर्थ्यात् । तेनेह न—दुग्धम् । दोग्धा । व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः । जश्त्वचर्त्वे धुक् । धुग् । दुहौ । दुहः । षत्वचर्त्वे धुक्षु ॥ **वा द्रुहमुहष्णुहष्णिहाम् । ८।२।३३ ॥** एषां हस्य वा घः स्याज्झलि पदान्ते च ॥ पक्षे ढः । ध्रुक् । ध्रुग् । ध्रुट् । ध्रुड् । द्रुहौ । द्रुहः । ध्रुग्भ्याम् ध्रुड्भ्याम् । ध्रुक्षु ध्रुट्त्सु ध्रुट्सु । एवं मुहष्णुहष्णिहाम् ॥ विश्ववाट् । विश्ववाड् । विश्ववाहौ । विश्ववाहः । विश्ववाहम् । विश्ववाहौ ॥ **इग्यणः संप्रसारणम् । १ । १ । ८ ॥** यँणः स्थाने प्रयुज्यमानो य इक् स संप्रसारणसंज्ञः स्यात् ॥ **वाह ऊठ् । ६ । ४ । १३२ ॥** भस्य वाहः संप्रसारणमूठ् स्यात् ॥ **संप्रसारणाच्च । ६ । १ । १०८ ॥** संप्रसारणादचि परे पूर्वरूपमेकादेशः स्यात् ॥ एत्येधत्यूठ्सु ॥ विश्वौहः । विश्वौहेत्यादि ।

---

१ 'भन्त्स्यति' 'अभान्त्सीत्' इत्याद्यर्थम् 'एकाचो बशो भष् झषन्तस्य' इति सूत्रे 'झषन्तपदोपादानं तेन धुडित्यादौ भष्भावाय ढ एव विहितः । लीढ इत्यादिसिद्धये चेत्यभिप्रायेण डो न विहित इति सूचयन्नाह--**जश्त्वेति** ॥ 'झलां जशोऽन्ते' इत्यनेन ॥ २ अव्याप्त्यतिव्याप्तिपरिहाराय दादिपदमेवौपदेशिकदादित्वपरमित्यभिप्रेत्याह--**उपदेश इति** ॥ धुगित्यादौ भष्भावाय घ एव कृतो न प्रक्रियालाघवाय 'ग' इति ॥ ३ अडागमे कृतेऽपि औपदेशिकदादित्वमाश्रित्य घत्वं सिध्यतीति भावः ॥ ४ धातुपाठे प्रत्यक्षमाख्यानं लिह एव न दामलिह इति औपदेशिकदादित्वाभावाद् घत्वं न भवति किंतु ढत्वमेव भवतीति भावः ॥ ५ वैयधिकरण्येनान्वयसाधकं सामानाधिकरण्येनान्वयबाधकं दूषणं दर्शयति--**एकाच इत्यादि** ॥ ६ **'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्'** इति परिभाषायास्तु पदान्तविषये नैव प्रवृत्तिः किंतु प्रत्ययनिमित्तककार्ये एवेति भावः ॥ ७ 'संप्रसारणशब्देनेति' पूर्वशेषः । तेन 'अदुहि' 'धुग्भ्याम्' इत्यादौ संप्रसारणसंज्ञाभावेन 'हल' इति दीर्घो नेति भावः ॥ ८ यदा यणः स्थाने स्यात् तदा संप्रसारणसंज्ञा यदा संप्रसारणसंज्ञा तदा यणः स्थाने भवेदित्यन्योन्याश्रयदोषपरिहारस्तु भाविसंज्ञामाश्रित्य यथा--'अस्य सूत्रस्य शाटकं वय' इत्यत्र 'यदि वातव्यो न शाटकः अथ शाटको न वातव्यः' इति विरोधपरिहारो भाविसंज्ञाश्रयणेनैव 'स मन्ये वातव्यो यस्मिन्नुते 'शाटक' इत्येषा संज्ञा भविष्यति' इति भाष्ये स्पष्टम् ॥

'छन्दस्येव ण्विः'इति पक्षे णिजन्ताद्विच् ॥ **चतुरनडुहोरामुदात्तः। ७। १। ९८॥** अनयोराम् स्यात्सर्वनामस्थाने स चोदात्तः ॥ **सावनडुहः। ७। १। ८२॥** अस्य नुम् स्यात्सौ परे ॥ आदित्यधिकारादवर्णात्परोऽयं नुम्। अतो विशेषविहितेनापि नुमा आम् न बाध्यते। अमा च नुम् न बाध्यते॥ सोर्लोपः। नुम्विधिसामर्थ्याद्वसुस्रंस्विति दत्वं न। संयोगान्तलोपस्यासिद्धत्वान्नलोपो न। अनड्वान्॥ **अम् संबुद्धौ। ७। १। ९९॥** चतुरनडुहोरम् स्यात्संबुद्धौ। आमोऽपवादः। हे अनड्वन्। अनड्वाहौ। अनड्वाहः। अनडुहा॥ **वसुस्रंसुध्वंस्वनडुहां दः। ८। २। ७२॥** सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते॥अनडुद्भ्यामित्यादि॥ सान्तेति किम्? विद्वान्॥ पदान्ते इति किम्? स्रस्तम्। ध्वस्तम्॥ **सहेः साडः सः। ८। ३। ५६॥** साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात्॥ तुराषाट्। तुराषाड् तुरासाहौ। तुरासाहः। तुराषाड्भ्यामित्यादि। तुरं सहत इत्यर्थे 'छन्दसि सह' इति ण्विः। लोके तु साहयतेः क्विप्। 'अन्येषामपि'इति पूर्वपदस्य दीर्घः॥ **दिव औत्। ७। १। ८४॥** दिविति प्रातिपदिकस्य औत्स्यात्सौ परे॥ अल्विधित्वेन स्थानिवत्त्वाभावाद्धल्ङ्याबिति सुलोपो न। सुद्यौः। सुदिवौ। सुदिवः। सुदिवम्। सुदिवौ॥ **दिव उत्। ६। १। १३१॥** दिवोऽन्तादेश उकारः स्यात्पदान्ते॥ सुद्युभ्याम्। सुद्युभिः॥ चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः २॥ **षट्चतुर्भ्यश्च। ७। १। ५५॥** षट्संज्ञकेभ्यश्चतुरश्च परस्यामो नुडागमः स्यात्॥ * णत्वम्, द्वित्वम्—चतुर्ण्णाम्॥ **रोः सुपि। ८। ३। १६॥** सप्तमीबहुवचने परे रोरेव विसर्जनीयो नान्यरेफस्य॥ पत्वम्। षस्य

---

१ विचोऽपि लोकेऽनभिधानमेव '**मैतेभ्यो विच् दृश्यते**' इति तत्रतत्र वदता कैयटादिना विचो दृष्टानुविधिच्छन्दोविषयत्वस्यैव सूचितत्वेन नात्र विच्कल्पने दृढतरं मानमिति चेत् क्विप उपलक्षणं विच्पदमिति भावः॥ परे तु '**प्रष्ठवाट् च मे प्रष्ठौही च मे**' इति वेदे दृष्टस्यैव 'प्रष्ठवाह्' शब्दस्य '**प्रष्ठौह आगतम्**' इति विग्रहे कथनेन विश्ववाह्भारवाह्शब्दादीनामपि प्रयोगे प्रमाणभूतत्वं छान्दसं प्रयोगमन्विष्य दर्शयित्वा प्रयोगं कुर्वन्तु भाष्यानुसारिणो धीमन्तः॥ २ अयं भावः—'आच्छीनद्योर्नुम्' इत्यतः 'आत्' इत्यप्यनुवर्तते। तथा च 'मिदचोऽन्त्यात्परः' इत्येकवाक्यतया 'अनडुह्शब्दसंबन्धिनामचामन्त्याद् अवर्णरूपाद् अचः परो मित् नुम्' इत्यर्थेन विहिते नुमि आम् अम् निमित्तमेवेति न बाध्यबाधकभाव इति॥ ३ संयोगान्तलोपश्च॥ ४ संयोगान्तलोपोत्तरं नकारस्य दत्वे जाते नकारः क श्रूयेत यदर्थो नुम् सावकाशः स्यात्। नकारस्य दत्वाभाव एव श्रवणं भवतीति दत्वाभावोऽनुमन्यते॥ अनड्वांस्तत्रेत्यत्र रुत्वे तु नुम् साधक एवेति रुर्भवत्येवेति भावः॥ ५ हकारस्थानिकस्येति भावः॥ ६ 'उ' इति करणे उकारस्येत्संज्ञायामुगित्त्वेनैव 'अनड्वान् अनड्वन्' इत्यत्र नुमि सिद्धे'सावनडुहः'इति व्यर्थमिति तु न शङ्क्यम्। अस्य द्वादेशस्य त्रैपादिकत्वेनासिद्धत्वादेतद्विषये नुमोऽप्राप्तेः॥ ७ हल्त्वनिमित्तवैकल्यप्रयुक्तायां सुलोपाप्राप्तावतिदेशेनानिनीष्यमाणहल्त्वस्य स्थानिभूतवकारमात्रवृत्तित्वेन तदाश्रयात् अलः परस्य सोर्लोपस्य चिकीर्षितत्वाद् 'अनल्विधौ'इति स्थानिवत्त्वनिषेधादिति भावः॥ ८ अत्रत्यदकारः 'तपरस्तत्कालस्य' इत्यत्र दकारस्यापि प्रश्लेषेण'**भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति**' इति परिभाषां ज्ञापयतीति 'तित्स्वरितम्' इति सूत्रे भाष्ये स्पष्टम्॥ ९ वत्वस्य स्थानिभूतवकारमात्रवृत्तित्वेन अलः स्थाने विधिरिति षष्ठीसमासस्वीकारेण 'अनल्विधौ' इति निषेधेन स्थानिवद्भावाभावाद् 'लोपो व्योः' इत्युकारलोपो नेति भावः॥ ***पूर्वत्रासिद्धीयमद्विर्वचने**' इत्यस्य 'द्वित्वे कर्तव्येऽन्यदसिद्धं न' इत्येवार्थो 'न तु द्वित्वस्याप्यसिद्धत्वं नेति' इति भावः॥

द्वित्वे[1] प्राप्ते-॥ **शरोऽचि । ८ । ४ । ४९ ॥** अचि परे शरो न द्वे स्तः । चतुर्षु ॥ प्रियचत्वाः । हे प्रियचत्वः । प्रियचत्वारौ । प्रियचत्वारः । गौणत्वे तु नुट् नेष्यते-प्रियचतुराम्[2] ॥ प्राधान्ये तु स्यादेव-परमचतुर्णाम् ॥ कमलं कमलां वा आचक्षाणः-कमल्[3] । कमलौ । कमलः । षत्वम्-कमल्षु ॥ **मो नो धातोः । ८ । २ । ६४ ॥** धातोर्मस्य नः स्यात्पदान्ते । नत्वस्यासिद्धत्वान्नलोपो न । प्रशाम्यतीति-प्रशान् । प्रशामौ । प्रशामः । प्रशान्भ्यामित्यादि ॥ **किमः कः । ७ । २ । १०३ ॥** किमः कः स्याद्विभक्तौ ॥ अकच्सहितस्याप्ययमादेशः॥ कः। कौ। के। कम्। कौ । कान् । इत्यादि सर्ववत् ॥ **इदमो मः । ७ । २ । १०८ ॥** इदमो मः स्यात्सौ परे ॥ त्यदाद्यत्वापवादः[4] ॥ **इदोऽय् पुंसि । ७ । २ । १११ ॥** इदम् इदोऽय् स्यात्सौ पुंसि ॥ सोर्लोपः । अयम् ॥ त्यदाद्यत्वं पररूपत्वं च॥ **दश्च । ७ । २ । १०९ ॥** इदमो दस्य मः स्याद्विभक्तौ ॥ इमौ । इमे ॥ त्यदादेः संबोधनं नास्तीत्युत्सर्गः ॥ **अनाप्यकः । ७ । २ । ११२ ॥** अककारस्येदम इदोऽन् स्यादापि विभक्तौ ॥ आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः॥ अनेन[5] ॥ **हलि लोपः । ७ । २ । ११३ ॥** अककारस्येदम इदो लोपः स्यादापि हलादौ॥ नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे[6] ॥ **आद्यन्तवदेकस्मिन् । १ । १ । २१ ॥** एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव स्यात् ॥ आभ्याम् ॥ **नेदमदसोरकोः । ७ । १ । ११ ॥** अककारयोरिदमदसोर्भिस ऐस् न स्यात् ॥ एत्त्वम् । एभिः ॥ अत्वम् । नित्यत्वात्[7] ङेः स्मै पश्चाद्धलि लोपः। अस्मै। आभ्याम्। एभ्यः । अस्मात्। आभ्याम्। एभ्यः । अस्य । अनयोः। एषाम् । अस्मिन् । अनयोः । एषु ॥ ककारयोगे तु अयकम् । इमकौ । इमके । इमकम् । इमकौ । इमकान् । इमकेन। इमकाभ्याम् । इमकैः ॥ **इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ । २ । ४।३२॥** अन्वादेशविषयस्येदमोऽनुदात्तोऽश् आदेशः स्यात्तृतीयादौ ॥ अश्वचनं साकच्-

---

१ 'अचो रहाभ्याम्' इति सूत्रेणेति भावः॥ २ 'षट्चतुर्भ्यश्च' इत्यत्र बहुवचनसामर्थ्येन 'षट्संज्ञकचतुरर्थगतसंख्याभिधायिनश्च मः' इत्यर्थाङ्गीकारेण गौणे आमश्चतुरर्थगतसंख्याभिधायित्वाभावादिति भावः ॥ परे तु 'नामि' इतिसूत्रभाष्यध्वनितरीत्या तु प्रियचतसृणामित्यत्रेव प्रियचतुर्णामित्यत्रापि नुड् भवत्येवेति तत्त्वम् ॥ ३ '**नहि पदान्ताः परेऽणः सन्ति**' इति भाष्यं तु '**ननु चायमस्ति-कर्तृ हर्तृ**' इति भाष्येण 'लोपः शाकल्यस्य' 'नय्वाभ्यां पदान्ताभ्याम्' इत्यादिसूत्रेण च बाधितत्वादेकदेशिन एवेति तत्त्वम् ॥ ४ त्यदाद्यत्वाप्राप्तियोगेऽस्य मादेशस्याचरितार्थत्वादिति भावः ॥ ५ 'टाङसिङसामिना-'इत्यत्रादेशेऽकारप्रत्याख्याने तु 'अ'इति नान्तनपुंसकस्य निर्देशः, नकार आप् च निमित्तमिति बोध्यम् ॥ ६ लोपस्तु न विकारः '**लोपागमविकारज्ञो हि**' इति भाष्ये लोपविकारयोः पृथङ्निर्देशात् । तेन 'पिपर्ति' इत्यादौ 'अलोन्त्यस्य' इति प्रवर्तते,'देहि दित्सति' इत्यादौ नेति बोध्यम्॥यदि तु 'हलि लोपः'इत्यत्र'अन्'इत्यनुवर्त्यान एव लोपं विदध्यात् तर्हि नात्रैतत्परिभाषाप्रयोजनम् ॥ ७ 'हलि लोपः' इत्यत्र 'अन्' इत्यस्यानुवर्तने इयं परिपाटी । तत्र तदनुवर्तने तु 'नित्यत्वादन् । ङेः स्मै, इत्यादि बोध्यम् ॥ ८ टौसोरेनादेशस्यैवेष्टत्वेन शेषविभक्तीनां हलादित्वाल्लोपेनैवेष्टसिद्धौ वृथैवेदमश्विधानमत आह-**अश्वचनमिति** । लोपविधौ 'अकः'इत्युक्तत्वात्साकच्कस्य लोपो न प्राप्नोतीति साकच्कार्थमश्वचनमिति भावः । यदि तु तद्धितवृत्तीनां विचित्रत्वादन्वादेशेऽकज् नैवोत्पद्यते तर्हि व्यर्थमेवाश्वचनमिति तत्त्वम् ॥

कार्यम् ॥ **द्वितीयाटौस्स्वेनः । २ । ४ । ३४ ॥** द्वितीयायां टौसोश्च परत इदमेतदोरेनादेशः[1] स्यादन्वादेशे ॥ किंचित्कार्यं विधातुमुपात्तस्य[2] कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथा-ऽनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति । अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वमिति । एनम् । एनौ । एनान् । एनेन । एनयोः ॥ गणयतेर्[3]विच्—सुगण् । सुगणौ । सुगणः । सुगण्ठ्सु । सुगण्ट्सु । सुगण्सु ॥ क्विप् । अनुनासिकस्य क्विझलोरिति दीर्घः—सुगाण् । सुगाणौ । सुगाणः । सुगाण्ठ्सु । सुगाण्ट्सु । सुगाण्सु ॥ परत्वा[4]दुपधादीर्घः । हल्ङ्यादि-लोपः । ततो नलोपः । राजा ॥ **न ङिसम्बुद्ध्योः । ८ । २ । ८ ॥** नस्य लोपो न स्यात् ङौ संबुद्धौ च ॥ हे राजन् ॥ ङौ तु छन्दस्युदाहरणम् । सुपां सुलुगिति ङेर्लुक् । निषेध[5]सामर्थ्या-त्प्रत्ययलक्षणम् । परमे व्योमन् ॥ **ङावुत्तरपदेऽ[6]प्रतिषेधो वक्तव्यः * ॥** चर्मणि तिला अस्य चर्मतिलः । ब्रह्मणि निष्ठा अस्य ब्रह्मनिष्ठः ॥ राजानौ । राजानः । राजानम् । राजानौ ॥ अल्लो-पोऽनः । श्चुत्वम् । न चाल्लोपः स्था[7]निवत् । पूर्वत्रासिद्धे तन्नि[8]षेधात् । नापि बहिरङ्ग[9]तयाऽसिद्धः

---

१ मूर्धन्यद्वयवान् विसर्गमूर्धन्यवानेव वा पाठः । 'नुम्विसर्जनीय–' इति षत्वस्य निर्बाधत्वात् । '**सर्वे विधयश्छन्दसि विकल्प्यन्ते**' इत्यस्य प्रथमाध्यायस्थत्वेन तदृष्ट्या षत्वस्यासिद्धत्वेन वैकल्पिकीकर-णायोग्यत्वात् ॥ प्राचां मते कार्यकालपक्षे इष्टसिद्धावपि नव्यमते दोषानुद्धारात् ॥ 'द्वितीयाटौस्स्वेनः' इत्येवं सप्तम्येकवचनरूपे तु समुपलभ्यमानप्रचरितपाठविरोधमन्तरा न कोऽपि दोष इति तत्त्वम् ॥ २ **विधातुम्** अज्ञातं ज्ञापयितुम् ॥ 'एतमातं ङितम्' इत्यत्र ईषदर्थादयो नाज्ञाता ज्ञाप्यन्ते किंत्वनूद्यन्त एवेति नान्वादे-शत्वमिति नैनादेश इति तत्त्वम् ॥ एवमेव 'नक्तं भीरुरयम्' इत्यत्रापि भीरुत्वमनुवाद्यमेवेति बोध्यम् ॥ ३ सकलऋष्यसंमतमपि ङम्प्रत्याहारोपादानसामर्थ्यकल्पितं यदुदाहृतम् तस्य संभवप्रकारमाह–**गणयते-र्विजिति** ॥ स्वरूपनिर्देशे गौरवं प्रत्याहारनिर्देशे लाघवमिति 'स्मि' इत्यपहाय 'झलि' इति करणेन ज्ञाप्यते इति सिद्धान्ते तु ह्रस्वात्परणकारासंभवेऽपि न प्रत्याहारनिर्देशवैयर्थ्यमिति न च्छन्दोविषयविच्कल्पनं साधु । संख्यानकर्तृरूपार्थस्तु अन्यादृशशब्देनैव प्रतिपाद्य इति सिद्धान्तिमतेनाह–**क्विबिति** ॥ 'ङ्णोः' इति स्वरूपनि-र्देशस्तु दीर्घपूर्वकेऽपि चरितार्थ एवेति भावः ॥ ४ 'राजन्+स्' इत्यवस्थायाम् उपधादीर्घ राजानावित्यत्र चरितार्थे, भिदित्यादौ चरितार्थे हल्ङ्याबिति सुलोपे च प्राप्ते परत्वाद् बहिरङ्गपरिभाषाया अनित्यत्वेनाप्रवृत्त्या वा 'षत्वतुकोरसिद्धः' इति ज्ञापकेन उपधादीर्घ एव भवतीत्याह–**परत्वादिति** । उत्कृष्टत्वादित्यर्थः । तेन उपधादीर्घस्य परत्वेऽपि सुलोपस्याल्पापेक्षत्वेनान्तरङ्गत्वमिति परत्वहेतुरकिंचित्कर इत्यपास्तम् ॥ ५ लुमता लुप्त-त्वात्प्रत्ययलक्षणस्य 'न लुमताऽङ्गस्य' इति निषेधे ङिरूपपदान्तनकारस्यामेलनाद् ङौ प्रतिषेधो व्यर्थ एवे-त्याशङ्कामपहरति–**निषेधसामर्थ्यादिति** । 'न लुमता' इत्यस्यानित्यत्वे तात्पर्यग्राहकमिदमपीति भावः ॥ ६ **अप्रतिषेध इति** 'न ङिसंबुद्ध्योः' इति प्रतिषेधस्याभाव इत्यर्थः ॥ यदि च 'व्योमन्' इत्यादौ '**उभयसंज्ञान्यपि छन्दांसि**' इति वार्त्तिकेन पदसंज्ञया 'अल्लोपोऽनः' इति, भसंज्ञया 'नलोपः' इति नैव भविष्यति–इति विभाव्यते तर्हि ङिप्रतिषेधोऽपि व्यर्थ इति उत्तरपदे प्रतिषेधाभावोऽपि व्यर्थ एवेति भाष्ये स्पष्टम् ॥ ७ **स्थानिवदिति** । परं शसं निमित्तीकृत्य जायमानः 'अल्लोपोऽनः' इत्यकारलोपः स्थानिभू-ताद् अकारात् पूर्वत्वेन दृष्टो जकारस्तस्मात् परस्य नकारस्य श्चुत्वे कर्तव्ये स्थानिवत् प्राप्त इत्याशयः ॥ ८ **तन्निषेधादिति** । "**पूर्वत्रासिद्धे च (न स्थानिवत्)**" इति वार्त्तिकेन त्रैपादिके कार्ये कर्तव्ये स्थानिवद्भावनिषेधादित्यर्थः ॥ ९ कार्यिणो नकारस्य प्रकृतिभागान्तर्गतत्वेन प्रकृतिभागान्तर्गतजकारनि-मित्तत्वात् श्चुत्वम् अनन्तरङ्गम् प्रकृतिभागगताकारस्य लोपे निमित्तम् 'भस्य' इत्यधिकारेण भसंज्ञाक्षिप्तशसा-दिप्रत्ययः प्रकृतिभागबहिर्भूत इत्यल्लोपो बहिरङ्गः इति '**असिद्धं बहिरङ्गमन्तरङ्गे**' इति परिभाषया 'अन्तरङ्गे श्चुत्वे कर्तव्ये जातो बहिरङ्गोऽल्लोपोऽसिद्ध इति' अल्लोपेऽजातत्वारोपेण तेन व्यवधानमाश्रित्य 'अव्यधाने प्रवर्तमानं श्चुत्वं नैव प्रवर्तते इति भावः ॥

यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धतयाऽन्तरङ्गभावेन परिभाषाया अप्रवृत्तेः ॥ जज्ञोर्ज्ञः । राज्ञः । राज्ञा ॥ **न लोपः सुप्स्वरसंज्ञातुग्विधिषु कृति । ८ । २ । २ ॥** सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र राजाश्व इत्यादौ॥ इत्यसिद्धत्वादात्वमेत्त्वमैस्त्वं च न । राजभ्याम् । राजभिः । राज्ञे । राजभ्यः । राज्ञः । राज्ञोः । राज्ञाम् । राज्ञि । राजनि ॥ प्रतिदीव्यतीति—प्रतिदिवा । प्रतिदिवानौ । प्रतिदिवानः । अस्य भविषयेऽल्लोपे कृते—**॥ हलि च । ८ । २ । ७७॥** रेफवान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि ॥

---

१ 'असिद्धं बहिरङ्गमन्तरङ्गे' इति लोकन्यायसिद्धेति 'अचः परस्मिन्' इत्यत्र भाष्ये स्पष्टमभिहितम् । लौकिकन्यायस्यास्मिन् शास्त्रे आश्रयणं भवति न वा इति विचारे **"न यथा लोके तथा व्याकरणे"** इत्येका रीतिरुपलभ्यते, द्वितीया च—**"नहीदं लोकाद्भिद्यते । यदीदं लोकाद् भिद्येत ततो यत्नार्हं स्यात्"** इति भाष्यकृतोभयथा प्रतिपादनात् उभयथापीष्टत्वे विनिगमनाविरहवारणायात्यावश्याश्रयणीया न्यायाः सर्वे यद्यपि प्राचीनवैयाकरणतन्त्रेषु वचनरूपेणैव पठितास्तथापि पाणिनीयेऽस्मिन्व्याकरणे भगवता केचिदल्पा एव शक्यार्थप्रतिपादका निर्दिष्टाः, बहवस्तु व्यङ्ग्यविधया निर्दिष्टाः तेषां ज्ञापकसिद्धत्वेन व्यवहारः । यथा ' दीव्यत् ' इति विकृतनिर्देशोऽसंभवन् **' एकदेशविकृतमनन्यवत् '** इति लौकिकन्यायार्थं व्यञ्जनया बोधयति । तथा ' वाह ऊठ् ' इति सूत्रे ' ऊठ् ' इति निर्देशः शक्त्या ऊकारं विदधानो व्यञ्जनया **' असिद्धं बहिरङ्गमन्तरङ्गे '** इति लौकिकन्यायार्थं बोधयति । यथा ' गङ्गायां घोषः ' इत्यत्र प्रवाहेऽसंभवतो घोषाधिकरणत्वस्य प्रतिपादनेन गङ्गापदस्य तीरतात्पर्यकत्वे ' तीरे घोषः ' इत्येव लाघवेन वक्तव्ये गङ्गापदं घोषे शैत्यपावनत्वादि व्यञ्जनया प्रतिपादयति । एवमत्र ' वाह ऊठ् ' इत्यत्र ' ऊठ् ' पदस्य ऊकारविधानमात्रतात्पर्यकत्वे ' वसोः संप्रसारणम् ' इति सूत्रतः संप्रसारणपदानुवृत्तौ ' वाहः संप्रसारणं स्याद्' इत्यर्थेऽपि ' विश्ववाह् ( ण्वि ) अस् ' इत्यत्र वाहो वकारस्यौष्ठ्यतान्तर्येण उकारे जाते ' विश्व उ आह ' इत्यत्र ' संप्रसारणाच्च ' इत्यनेन पूर्वरूपे ' विश्व उह् अस् ' इत्यत्र लुप्तण्विनिमित्तके ' पुगन्तलघूपधस्य च ' इत्यनेन लब्ध्या उपधाया उकारस्य गुणे ' विश्व + ओह' इत्यत्र ' वृद्धिरेचि ' इति वृद्धौ जातायां ' विश्वौहः' इत्यादिप्रयोगसिद्धौ व्यर्थमेव सद् ऊठ उपादानम् **' असिद्धं बहिरङ्गमन्तरङ्गे '** इति लौकिकन्यायार्थं व्यञ्जनया प्रतिपादयति इति । तस्य शास्त्रेऽप्याश्रयणे तु बहिरङ्गसंप्रसारणनिमित्तशसोऽन्तर्भूतण्विनिमित्तत्वेनान्तरङ्गे लघूपधगुणे कर्तव्ये अन्तरङ्गशास्त्रस्य लघूपधगुणस्य निमित्तात् बहिर्भूतशस्निमित्तकत्वेन बहिरङ्गस्य संप्रसारणस्यासिद्धत्वेन लघूपधत्वाभावाद् गुणस्याप्राप्तौ नत्र वृद्धेरपि प्राप्तिरिति ऊठ्ग्रहणं कर्तव्यमेवेति स्वांशे चारितार्थ्यम् इति **' असिद्धं बहिरङ्गमन्तरङ्गे '** इति परिभाषाया अस्मिञ्छास्त्रे ' वाह ऊठ् ' सूत्रस्थस्योठ्पदस्यैव व्यङ्ग्यार्थभूतत्वेन ' वाह ऊठ् ' सूत्रस्थत्वमेवेति षष्ठाध्यायस्थत्वेन सपादसप्ताध्यायीस्थत्वदेतदृष्ट्या ' पूर्वत्रासिद्धम् ' इत्यसिद्धत्वात् स्त्वोपस्थापकलिङ्गभूतान्तरङ्गश्चुत्वस्यादर्शनाद् एतत्परिभाषाया अनुपस्थितौ कथं बहिरङ्गस्याल्लोपस्यासिद्धत्वमारोप्यते येन अकारव्यवधानमाश्रित्याव्यवधाने प्रवर्तमानं श्चुत्वं नैव प्रवर्तेत इति असिद्धत्वाभावेनाव्यवधानस्यैव सत्त्वात् श्चुत्वं प्रवर्तत एवेति व्यवस्थितयोर्यथोद्देशकार्यकालपक्षयोरेकतरेण ' संज्ञापरिभाषयोः स्वोपदेशस्थानं विहाय विधिदेशे गमनं न भवति किन्तु स्वोपदेशदेशमनतिक्रम्यैव शाब्दबोधो जायते' इत्यभिप्रायकेण यथोद्देशपक्षेणैव ' राज्ञः क च ' इति निर्देशज्ञाना श्चुत्वघटितप्रयोगस्येष्टता सिध्यतीति न कार्यकालपक्षस्याश्रयणमिष्टसाधकमिति मनसि निधायाह—**यथोद्देशपक्ष इति** ॥ २ सुब्विधिशब्दे च ' सुपः स्थाने विधिः ' सुब् विधिः' 'सुपि विधिः सुब्विधिः' इत्युभयविधोऽपि समासो गृह्यते॥ ३ 'पूर्वत्रासिद्धम्' इत्यनेनैवासिद्धत्वे सिद्धे सूत्रमिदम् 'एष्वेवासिद्धः' इति 'तत्र चान्यत्र च प्राप्तौ परिसंख्या' इति लक्षितपरिसंख्यार्थमेव । तत्रेषु सिद्धत्वात्सूत्रमन्यत्र निषेधार्थमेवेति सूत्रविधेयमाह—**नान्यत्रेति** । 'सुब्विध्यादिभिन्ने नलोपोऽसिद्धो न' इति फलितोऽर्थ इति भावः ॥ ४ सुप्सामान्य-सुब्विशेषस्थानिनिमित्तकविधावित्यर्थ इति मनसि निधायाह—**इत्यसिद्धत्वादिति** ॥ परिसंख्यातातिरिक्तत्वाभावेनैतत्सूत्रविधेयनिषेधाप्राप्त्या ' पूर्वत्रासिद्धम् ' इति सूत्रेणैवासिद्धत्वादित्यर्थः ॥

न चाल्लोपस्य स्थानिवत्त्वम् । दीर्घविधौ[1] तन्निषेधात् । बहिरङ्गपरिभाषा तूक्तन्यायेन न प्रवर्तते। प्रतिदीव्नः । प्रतिदीव्नेत्यादि ॥ यज्वा । यज्वानौ । यज्वानः ॥ **न संयोगाद्वमन्तात्** ।६।४।१३७ ॥ वकारमकारान्तसंयोगात्परस्यानोऽकारस्य लोपो न स्यात् ॥ यज्वनः । यज्वना । यज्वभ्यामित्यादि ॥ ब्रह्मणः । ब्रह्मणा । ब्रह्मभ्यामित्यादि ॥ **इन्हन्पूषार्यम्णां शौ** ।६।४।१२ ॥ एषां शावेवोपधाया दीर्घो, नान्यत्र ॥ इति निषेधे[4] प्राप्ते ॥ **सौ च** ।६।४।१३ ॥ इन्नादीनामुपधाया दीर्घः स्यादसंबुद्धौ सौ परे ॥ वृत्रहा । हे वृत्रहन् । 'एकाजुत्तरपदे णः इति णत्वम् । वृत्रहणौ । वृत्रहणः । वृत्रहणम् । वृत्रहणौ ॥ **हो हन्तेर्ञ्णिन्नेषु** ।७।३।५४ ॥ ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वं स्यात् ॥ **हन्तेः** ।८।४।२२ ॥ उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णत्वं स्यात् ॥ प्रहण्यात् ॥ **अत्पूर्वस्य** ।८।४।२२ ॥ हन्तेरत्पूर्वस्यैव नस्य णत्वम्, नान्यस्य ॥ प्रघ्नन्ति ॥ योगविभागसामर्थ्यात् **'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा'** इति न्यायं बाधित्वा 'एकाजुत्तरपदे' इति णत्वमपि निवर्त्यते ॥ नकारे परे कुत्वविधिसामर्थ्यादल्लोपो न स्थानिवत् ॥ वृत्रघ्नः । वृत्रघ्ना। इत्यादि । यत्तु वृत्रघ्न इत्यादौ वैकल्पिकं णत्वं माधवेनोक्तं तद्भाष्यवार्तिकविरुद्धम् ॥ एवं शार्ङ्गिन्यशस्विन्नर्यमन्पूषन् ॥ यशस्विन्निति विन्प्रत्यये इनोऽनर्थकत्वेऽपि 'इन्हन्'इत्यत्र ग्रहणं भवत्येव । **'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति'** इति वचनात् । अर्यम्णि । अर्यमणि ॥ पूष्णि । पूषणि ॥ **मघवा बहुलम्** ।६।४। १२८ ॥ मघवन्शब्दस्य

---

१–'न पदान्तद्विर्वचन–' इति सूत्रेणेति शेषः ॥ २ 'प्रतिदिवन् अस्' इत्यत्र शसं निमित्तीकृत्य जातोऽल्लोपः प्रकृतिभागप्रतिदिवञ्छब्दतो बहिर्भूतशस्प्रत्ययनिमित्तकत्वेन बहिरङ्गः, 'हलि च' इति दीर्घस्तु प्रकृतिभागगतवकारनिमित्तक इत्यन्तरङ्ग इति भावः ॥ 'पूर्वत्रासिद्धम्' इति अन्तरङ्गस्य दीर्घस्य स्वलिङ्गस्यासिद्धत्वेनादर्शनात्तत्र नोपतिष्ठते इत्यनुपदमेव निर्णीतमिति भावः ॥ ३ अत्र 'सर्वनामस्थाने' इत्यस्यासंबन्धेन 'सर्वनामस्थाने चासंबुद्धौ' इत्यनन्तरस्यैव न निवृत्तिः । किंतु उपधादीर्घमात्रस्येति 'वृत्रहणौ' इत्यत्र क्विनिमित्तकः 'अनुनासिकस्य क्वि–'इति दीर्घोऽपि निवर्तते इत्याह–**उपधाया इति** ॥ ४ **निषेध इति** । परिसंख्यायां निषेध एव 'पञ्च पञ्चनखा भक्ष्याः' इत्यत्रेव तात्पर्यादिति भावः ॥ ५ हन्तेरत्पूर्वस्येति सूत्रस्य योगविभागेन व्याख्यानेऽपि सूत्रपाठे एकस्यैव पठितत्वात् तत्पाठानुसारेणात्र तयोः सूत्राङ्क एक एव लिखितो वेदितव्य; ॥ एवमेव ' 'उञ ऊँ' 'प्रादय उपसर्गाः क्रियायोगे' इत्यादावप्युचित इति बोध्यम् ॥ ६ 'हन्तेः 'इति सूत्रस्योपन्यासस्तु प्रकृतेऽनुवृत्त्यर्थं एव नान्यत् प्रकृते प्रयोजनमिति भावः ॥ ७ अपिना 'प्रातिपदिकान्तनुम्'–'कुमति च' इति च संगृह्यते ॥ ८ अव्यवहितांशोपस्थितिबाधे तु 'हननन्' इत्यादावप्यापत्तिः स्यादिति भावः ॥ ९ प्रातिपदिकान्तनुम्विभक्तिषु चेति सूत्रविधीयमानमित्यर्थः॥ १० **'कुत्वव्यवाये हादेशेषु प्रतिषेधः'** इति वार्तिकेन "**वृत्रघ्नः' 'स्रुघ्नः' 'घाघानि'** । **'हन्तेरपूर्वस्येत्यत्पूर्वग्रहणं न कर्तव्यं भवति**" इति तद्भाष्येण च विरुद्धमिति बोध्यम् ॥ ११ अनः–राज्ञा साम्ना । इनः–दण्डी वाग्ग्मी । असः–सुपयाः सुस्रोताः । मनः–सुशर्मा सुप्रथिमा । इत्युदाहरणानि ॥ एतेनोणादीनां व्युत्पन्नत्वमेव सूचितम् ॥

वा तृ इत्यन्तादेशः स्यात् ॥ ऋ[1] इत् ॥ **उगिदचां सर्वनामस्थानेऽधातोः ।७।१।७०॥** अधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यात्सर्वनामस्थाने परे ॥ उपधादीर्घः । मघवान्[2] । इह[3] दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति, बहुलग्रहणात् ॥ तथा[4] च **श्वन्नुक्षन्निति** निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमाश्रित्यैतत् सूत्रं प्रत्याख्यातमाकरे ॥ 'हविर्जक्षिति निःशङ्को मखेषु मघवानसौ[5]' इति भट्टिः । मघवन्तौ । मघवन्तः । हे मघवन् । मघवन्तम् । मघवन्तौ । मघवतः । मघवता । मघवद्भ्यामित्यादि ॥ तृत्वाभावे–मघवा । '**छन्दसीवनिपौ च**' इति वनिबन्तं मध्योदात्तं छन्दस्येव, अन्तोदात्तं तु लोकेऽपीति विशेषः । मघवानौ । मघवानः । सुटि राजवत् ॥ **श्वयुवमघोनामतद्धिते ।६।४।१३३ ॥** अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे संप्रसारणं स्यात् ॥ संप्रसारणाच्च । आद्गुणः । मघोनः । अन्नन्तानां किम् ? मघवतः । मघवता । स्त्रियां मघवती ॥ अतद्धिते किम् ? माघवनम् । मघोना । मघवभ्यामित्यादि ॥ शुनः । शुना । श्वभ्यामित्यादि ॥ युवन्शब्दे वस्योत्वे कृते ॥ **न संप्रसारणे संप्रसारणम्[6] ।६।१।३७ ॥** संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् ॥ इति यकारस्य नेत्त्वम् । अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम् ॥ यूनः[7] । यूना । युवभ्यामित्यादि ॥ अर्वा । हे अर्वन् ॥ **अर्वणस्त्रसावनञः ।६।४।१२७ ॥** नञा रहितस्यार्वन्नन्तस्याङ्गस्य तृ इत्यन्तादेशः स्यान्न तु सौ ॥ उगित्त्वान्नुम् । अर्वन्तौ । अर्वन्तः । अर्वन्तम् ।

---

१ 'नानुबन्धकृतमनेकाल्त्वम्' इति परिभाषां स्मारयन्नाह–ऋ **इदिति** ॥ २ अयं भावः 'मघवन्त्सु' इत्यवस्थायां 'हल्ङ्याप्' इति सुलोपे संयोगान्तलोपे च प्रत्ययलक्षणेन सर्वनामस्थानपरत्वात् 'सर्वनामस्थाने चासंबुद्धौ' इति नान्तलक्षण उपधादीर्घ इति ॥ ३ यथा नलोपे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं भवति तथैव नान्तलक्षणे दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं कुतो न भवतीत्याशङ्कायामाह–**इहेति** ॥ ४ बहुलग्रहणेन दीर्घे संयोगान्तलोपस्यासिद्धत्वाभावकल्पनवत् नलोपेऽपि कुतो न कल्प्यत इत्याशङ्कायामाह–**तथाचेति** ॥ अयं भावः–'श्वन्नुक्षन्' इति निपातने यादृग्रूपं–'मघवा' इति तादृग्रूपं तृत्वाभावे साध्यम् । मतुप्पक्षे यादृग्रूपम् 'मघवान्' इति तादृगेव रूपं तृत्वपक्षे साधनीयम् । येन फलेऽभेदः स्यात् फलाभेदे च प्रत्याख्यानमपि संगतं स्यात् तृत्वपक्षे 'मघवान्' इति रूपं तु नलोपाभावे दीर्घे च सत्येव स्यादिति बहुलग्रहणेन दीर्घे कर्तव्य एव संयोगान्तलोपस्यासिद्धत्वं कल्पनीयम् न नलोपे कर्तव्य इति भावः ॥ नचेदं प्रत्याख्यानं न भाष्यसंमतमिति शङ्क्यम्, "**अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् । मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्** ॥" इति श्लोकवार्तिकदर्शनादिति भावः ॥ ५ लोकेऽपि मघवा मघवान् इति रूपद्वयं भवतीत्यत्र भट्टिकाव्यप्रयोगं दर्शयति–**मघवानसाविति** । 'मघवान् असौ' इति च्छेदे दीर्घनलोपाभावौ तृत्वमतुप्पक्षे । 'मघवा अनसौ' इति च्छेदे तृत्वाभावोणादिनिष्पन्नपक्षे दीर्घनलोपौ संभवत इति प्रत्याख्यानाय फलाभेदः साधनीय इति भावः ॥ ६ संप्रसारणपदानुवृत्त्यैव सिद्धौ पुनः संप्रसारणपदं प्रकरणान्तरस्यापि संप्रसारणस्य प्रतिषेधार्थम्' तेन '**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा**' इति न्यायं बाधित्वा विदेशस्थस्यापि प्रतिषेध इति बोध्यम् ॥ ७ **यून इति** । 'यु उन् अस्' इति स्थिते सवर्णदीर्घे 'यून्' इत्यत्र 'अन्तादिवच्च' इति परादिवद्भावेन संप्रसारणत्वमाश्रित्य 'यूनस्तिः' इति निर्देशेनात्रैकादेशस्य स्थानिवद्भावेन व्यवधानं नाश्रीयते किंतु श्रुतिकृतमव्यवधानमेवाश्रीयत इति यकारस्य संप्रसारणप्रतिषेधो भवतीति भावः ॥

अर्वन्तौ । अर्वतः । अर्वता । अर्वद्भ्यामित्यादि ॥ अनञः किम्? [1] अनर्वा यज्ववत् [2] ॥ **पथि-मथ्यृभुक्षामात्** ।७।१।८५ ॥ एषामाकारोऽन्तादेशः स्यात्सौ परे ॥ आँ आदिति प्रश्लेषेण [3] शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः ॥ **इतोऽत्सर्वनामस्थाने** ।७।१।८६ ॥ पथ्यादे-रिकारस्याकारः स्यात्सर्वनामस्थाने परे ॥ **थो न्थः** ।७।१।८७ ॥ पथिमथोस्थस्य न्थादेशः स्यात्सर्वनामस्थाने परे ॥ पन्थाः । पन्थानौ । पन्थानः । पन्थानम् । पन्थानौ ॥ **भस्य टेर्लोपः** ।७।१।८८ ॥ भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात् ॥ पथः । पथा । पथिभ्यामित्यादि । एवं मन्थाः । ऋभुक्षाः । स्त्रियां नान्तलक्षणे ङीपि भत्वाट्टिलोपः । सुपथी । सुमथी । नगरी । अनृभुक्षी सेना ॥ आत्वं नपुंसके न भवति, 'न लुमता' इति प्रत्ययलक्षणनिषेधात् । सुपथि वनम् ॥ **सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः** * ॥ हे सुपथिन्, हे सुपथि । 'नलोपः सुप्स्वर' इति नलोपस्यासिद्धत्वाद्ध्रस्वस्य गुणो न॥द्विवचने भत्वाट्टिलोपः । सुपथी । शौ सर्वनामस्थानत्वात्—सुपन्थानि ॥ पुनरपि—सुपथि । सुपथी । सुपन्थानि । सुपथा । सुपथे । सुपथिभ्यामित्यादि ॥ **ष्णान्ता षट्** ।१।१।२४ ॥ षान्ता नान्ता च संख्या षट्संज्ञा स्यात् ॥ षड्भ्यो लुक् । पञ्च २ । संख्या किम्? विप्रुषः । पामानः । शतानि सहस्राणीत्यत्र [5] संनिपातपरिभाषया न लुक्, सर्वनामस्थानसंनिपातेन कृतस्य नुमस्तदविघातकत्वात् ॥ पञ्चभिः । पञ्चभ्यः २ । 'षट्चतुर्भ्यश्च' इति नुट् ॥ **नोपधायाः** ।६।४।७ ॥ नान्तस्यो-पधाया दीर्घः स्यान्नामि परे ॥ नलोपः—पञ्चानाम् । पञ्चसु ॥ परमपञ्च । परमपञ्चानाम् ॥ गौणत्वे तु न [6] लुग्नुटौ । प्रियपञ्चा । प्रियपञ्चानौ । प्रियपञ्चानः । प्रियपञ्ञ्चाम् [7] ॥ एवं सप्तन्

---

१ 'किं व्यावर्त्यम्' इति सामान्ये नपुंसकमिति भावः ॥ २ उत्तरे न सामान्यनिर्देशः किंतु शब्दविशेष एवेति मनसि निधायाह—**अनर्वेति** । **यज्ववद**भीष्टोऽर्वशब्दो व्यावर्त्य इति शेषः ॥ ३ **'आकारस्य तप-रकरणं सवर्णम्'** इति वृद्धिसंज्ञासूत्रस्थवार्तिकस्य **'सवर्णानां ग्रहणं यथा स्यात्'** इति भाष्यं यथाश्रुतं दृष्ट्वा नकारस्यान्तर्येणानुनासिको मा कारि—इत्याह—**आ अदिति** ॥ **'भाव्यमानेन सवर्णानां ग्रहणं न' इति** परिभाषासमालोचने तु नैव प्रश्लेषावश्यकता । 'वृद्धिरादैच्' इत्यत्र त्वाकारो न भाव्यमान इति बोध्यम् ॥ ४ अत्रैव दीर्घाकारविधानेन पूर्वसूत्रस्थमाकारविधानं व्यर्थमिति तु न सम्यक् । 'वा षपूर्वस्य' इति दीर्घा-भावपक्षे ऋभुक्षणमित्यत्र ह्रस्वाकारश्रवणाय सर्वनामस्थाने नैव दीर्घाकारो विहितः किंतु सावेवेति बोध्यम् ॥ ५ 'शत×जस्' 'सहस्र+जस्' इत्यत्र 'जश्शसोः शिः' इत्यनेन जातस्य शेः 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायाम् 'नपुंसकस्य झलचः' इति नुमागमे 'सर्वनामस्थाने चासंबुद्धौ' इत्युपधादीर्घे 'शतान्+इ' 'सहस्रान्+इ' इति स्थिते 'ष्णान्ता षट्' इति नकारान्तसंख्यात्वप्रयुक्तायां षट्संज्ञायां शेर्लुक् स्याद्—अतो वार्ति-ककृता 'स्वप्रकृतिकप्रत्ययोपदेशकाले षकारान्तनकारान्ता' इत्यर्थक **'षट्संज्ञायामुपदेशवचनम्'** इत्यपूर्ववचनकरणेन समाधाने कृते 'पाणिनिग्रन्थे न्यूनता मा प्रतिगायि' इत्याशयेन भाष्यकृता कृतं समाधानमाह—**शतानीति** ॥ ६—वृत्त्याद्यनुसारेणाह—**न लुग्नुटाविति** ॥ 'षड्भ्यो लुक्' इत्यत्र 'षट्चतुर्भ्यश्च' इत्यत्र बहुवचननिर्देशसामर्थ्येन 'एतदर्थगतसंख्याभिधायित्वस्य उभयत्र प्रत्ययविशेषणत्वादिति भावः । ' 'षट्' इति बहुवचनान्तस्यैव संज्ञात्वेन बहुवचनचारितार्थ्ये लुग्नुटौ गौणत्वेऽपि भवत एवेति नवीनानामाशयः ॥ 'धातवः' 'सर्वनामानि' इति बहुवचनान्तसंज्ञां विधायापि 'धातोः' 'सर्वनाम्नः' इति निर्देशेन **"सूत्रे लिङ्गवचनमतन्त्रम्"** इत्याश्रयणेऽपि औत्सर्गिकैकवचने प्रयोक्तव्ये. संख्याविशेषनियतबहुवचनेन निर्देशो विवक्षाविशेषार्थ एवेति दाधिमथानां राद्धान्तः ॥ ७ ञकारद्वयमध्ये चकारः ॥

नवन् दर्शन् ॥ **अष्टन आ विभक्तौ । ७ । २ । ८४ ॥** अष्टन आत्वं स्याद्धलादौ विभक्तौ[1] ॥ **अष्टाभ्य औश् ।७ । १।२१ ॥** कृताकारादष्टनः परयोर्जश्शसोरौश् स्यात् ॥ अष्टभ्य इति[2] वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति[3] । वैकल्पिकं चेदमष्टन आत्वम्, अष्टनो[4] दीर्घादिति सूत्रे दीर्घग्रहणाज्ज्ञापकात् ॥ अष्टौ २ । परमाष्टौ । अष्टाभिः । अष्टाभ्यः २ । अष्टानाम् । अष्टासु ॥ आत्वाभावे—अष्ट । अष्ट इत्यादि पञ्चवत् ॥ गौणत्वे त्वात्वाभावे राजवत् । शसि प्रियाष्ट्णः । इह पूर्वस्मादपि विधावल्लोपस्य स्थानिवद्भावान्न ष्टुत्वम्[5] । कार्यकालपक्षे[6] बहिरङ्गस्याल्लोपस्यासिद्धत्वाद्वा[7] ॥ प्रियाष्ट्णा । इत्यादि । जश्शसोरनुमीयमानमात्वं प्राधान्य एव, न तु गौणतायाम् । तेन प्रियाष्टौ हलादावेव वैकल्पिकमात्वम्[8] । प्रियाष्टाभ्याम् । प्रियाष्टाभिः । प्रियाष्टाभ्यः २ । प्रियाष्टासु ॥ प्रियाष्टौ राजत्सर्वं हाहावच्चापरं हलि[9] ॥ भष्भावः । जश्त्वचर्त्वे । भुत् । भुद् । बुधौ । बुधः । बुधा । भुद्भ्याम् । भुत्सु ॥ **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ।३।२।५९ ॥** एभ्यः क्विन् । स्यात् । अलाक्षणिकमपि किंचित्कार्यं निपातनाल्लभ्यते । निरुपपदाद्युजेः क्विन् । कनावितौ ॥ **कृदतिङ् । ३ । १ । ९३ ॥** संनिहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ॥ **वेरपृक्तस्य**

---

१ 'अष्टन आ विभक्तौ । ततो 'रायः' रायश्च विभक्तावाकारादेशो भवति । 'हलि' इत्युभयोः शेषः' इति भाष्यमनुसृत्याह--**हलादाविति** ॥ २ षट्संज्ञासूत्रप्रदीपपाठमाह-**अष्टभ्य इतीति** ॥ प्रकृतसूत्रभाष्यप्रदीपयोस्तु '**अष्टनः**' इत्येवमेव पाठो दृश्यते 'अष्टनो दीर्घात्' 'अष्टन आ' इत्यत्र दृष्टः ॥ ३ इदम् अनुमीयमानम् 'अष्टन आ' इति सूत्रविहितं च ॥ ४ दीर्घात् अष्टन्शब्दात् असर्वनामस्थानविभक्तिरुदात्तेति अष्टनो दीर्घादिति सूत्रार्थः । तत्रात्ववैकल्पिकत्व एव ह्रस्वव्यावृत्त्यर्थदीर्घपदं चरितार्थं भवतीति भावः ॥ ५ '**तस्य दोषः संयोगादिलोपलत्वणत्वेषु**' इत्यत्र णत्वपदेन मूर्धन्यष्टु--णं--पदेविहितमेव ग्राह्यम् । 'रषाभ्यां नो णः' इत्यत्र णग्रहणप्रत्याख्यानपरभाष्यप्रामाण्यात् । तथा च '**पूर्वत्रासिद्धे न स्थानिवत्**' इत्यस्य प्रतिषेधो न प्रवर्तत इति भावः ॥ ६ कार्येण काल्यते स्वसंनिधिं नीयते संज्ञापरिभाषं यत्रेति कार्यकालम् ॥ कार्येण विधिसूत्रेण स्वसंस्काराय स्ववृत्तिलिङ्गचिह्नितपरिभाषाः स्वदेशं नीयन्त इति त्रैपादिकैरपि विधिसूत्रैः सपादसप्ताध्यायीस्था अपि स्वदेशं नीयन्ते चक्षुष्मताऽन्ध इव ॥ अत एव-'पूर्वत्रासिद्धम्' इत्यत्र भाष्ये 'यद्यपि त्रैपादिकं सपादसप्ताध्यायीस्थे असिद्धम् सपादसप्ताध्यायीस्थं तु त्रैपादिके सिद्धमेव' इत्यर्थकं पठितम् ॥ तथा च यद्यपि बहिरङ्गपरिभाषादृष्ट्या अन्तरङ्गं ष्टुत्वमसिद्धम् । तथापि अन्तरङ्गं ष्टुत्वं तु बहिरङ्गपरिभाषां स्वदेशं नेष्यत्येवान्धां पत्नीं चक्षुष्मान् पतिरिव ॥ यद्यपि विसर्जनीयसूत्रे भाष्ये '**अयुक्तोऽयं परिहारो--न वा बहिरङ्गलक्षणत्वात्**' इत्युक्तम् । तथापि समानविषये तत्तद्वार्तायाः पुनः पुनः कथनस्य भाष्यशैलीसिद्धस्य '**नवा बहिरङ्गलक्षणत्वात**' इत्येतत्कथनोत्तरं सर्वत्र प्रथमोपस्थिते '**बहिरंगा वृद्धिः, अन्तरङ्गं णत्वम्**' '**असिद्धं बहिरङ्गमन्तरङ्गे**' इति 'एओङ्' सूत्रभाष्याङ्गीकृते एव वा '**अयुक्तोऽयम्**'--इत्यादेरकथनेन भाष्यशैलीविरुद्धस्यैकदेशित्वस्यैव कल्पनीयत्वादिति भावः ॥ ७ ष्टुत्वनिमित्तस्य टकारस्य, ष्टुत्वस्थानिनो नकारस्य च प्रकृतिभागान्तर्गतत्वेन ष्टुत्वमन्तरङ्गम् प्रकृतिभागस्थस्याकारस्य लोपे निमित्तम् प्रकृतिभागबहिर्भूतशस्प्रत्यय इत्यल्लोपस्य बहिरङ्गत्वमिति भावः ॥ ८ अपरम् आत्वपक्षीयमित्यर्थः ॥ ९ हरदत्तस्तु 'हलि' इत्यस्यात्वविधावननुवर्तनेन जश्शसोर्लुकम् आमि नुटं विहाय सर्वत्रव हाहावदिच्छति ॥ भविषयेऽपि आलोपं च । तत्रालोपस्य प्राप्तिः सूत्रमते नेति तत्त्वम् ॥

।६।१।६७॥ अपृक्तस्य वस्य लोपः स्यात् । 'कृत्तद्धित' इति प्रातिपदिकत्वात्स्वादयः ॥ **युजेरसमासे। ७ । १ । ७१** ॥ युजेः सर्वनामस्थाने नुम् स्यादसमासे ॥ सुलोपः । संयोगान्तस्य लोपः ॥ **क्विन्प्रत्ययस्य कुः । ८ ।२।६२** ॥ क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात्पदान्ते ॥ नस्य कुत्वेनानुनासिको ङकारः—युङ् ॥ 'नश्चापदान्तस्य' इति नुमोऽनुस्वारः, परसवर्णः, तस्यासिद्धत्वात् 'चोः कुः' इति कुत्वं न—युञ्जौ । युञ्जः । युञ्जम् । युञ्जौ । युजः । युजा । युग्भ्यामित्यादि । असमासे किम् ? ॥ **चोः कुः ।८।२।३०** ॥ चवर्गस्य कवर्गः स्याज्झलि पदान्ते च ॥ इति कुत्वम् । 'क्विन्प्रत्यस्य' इति कुत्वस्यासिद्धत्वात् । सुयुक् । सुयुग् । सुयुजौ । सुयुजः ॥ युजेरिति धातुपाठपठितेकारविशिष्टस्यानुकरणम्, न श्तिपा निर्देशः । तेनेह न—युज्यते समाधत्ते इति युक् । युज समाधौ दैवादिक आत्मनेपदी ॥ संयोगान्तलोपः । खन् । खञ्जौ । खञ्जः । इत्यादि ॥ 'व्रश्च' इति षत्वम् । जश्त्वचर्त्वे । राट् । राड् । राजौ । राजः । राट्सु । राट्त्सु॥एवं विभ्राट् ॥ देवेट् । देवेजौ । देवेजः ॥ विश्वसृट् । विश्वसृड् । विश्वसृजौ । विश्वसृजः । इह मृजियज्योः कुत्वं नेति क्लीबे वक्ष्यते ॥ परिमृट् ॥ षत्वविधौ राजिसाहचर्यात् टुभ्राजृ दीप्ताविति फणादिरेव गृह्यते॥ यस्तु एजृ भेजृ भ्राजृ दीप्ताविति, तस्य कुत्वमेव । विभ्राक् । विभ्राग् । विभ्राग्भ्यामित्यादि ॥ **परौ व्रजेः षः पदान्ते** * ॥ परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च,पदान्तविषये षत्वं च ॥ परित्यज्य सर्वं व्रजतीति—परिव्राट् । परिव्राजौ । परिव्राजः ॥ **विश्वस्य वसुराटोः ।६।३।१२८** ॥ विश्वशब्दस्य दीर्घः स्याद्वसौ राट्शब्दे च परे ॥[ विश्वं[6] वसु यस्य स विश्वावसुः ] राडिति पदान्तोपलक्षणार्थम् । चर्त्वमविवक्षितम् । विश्वाराट् । विश्वाराड् । विश्वराजौ । विश्वराजः । विश्वाराड्भ्यामित्यादि ॥ **स्कोः संयोगाद्योरन्ते च ।८।२।२९** ॥ पदान्ते झलि च परे यः संयोगस्तदाद्योः सकारयकारयोर्लोपः स्यात् । भृट् । भृड्॥सस्य श्चुत्वेन

---

१ **असिद्धत्वादिति** । 'पूर्वत्रासिद्धम्' इत्यनेनेत्यादिः ॥ २ सुलोपेऽनुस्वारपरसवर्णयोः 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वादित्यादिः ॥ ३ 'सुलोपोत्तरम्' इत्यादिः ॥ ४ 'झलां जशोऽन्ते' इति जश्त्वम् । ततः 'वाऽवसाने' इति चर्त्वम् । एवमेव 'रामात्' इत्यत्रापि बोध्यम् । न च पदान्तजश्त्वस्यावसानचर्त्वबाध्यत्वेन तत्र 'जश्त्वं बाधित्वा' इति व्याख्यातं नागेशादिभिरिति वाच्यम्, यत्तथैवात्रापि करणेन षकारस्य चर्त्वेन षकार एव जाते पुनर्जश्त्वेन डकारेऽपि पक्षे टकारश्रवणानुपपत्तिः स्यात् 'उदवोढाम्' इत्यत्रेव विकारभेदेऽपि '**लक्ष्ये लक्षणम्**' इति न्यायेन पुनश्चर्त्वाप्राप्तेः ॥ तस्मात् चर्त्वमात्रस्यासिद्धत्वेन पूर्वं जश्त्वम् । ततोऽवसानचर्त्वमपि इत्येव पद्धतिः समीचीना । अत एव '**घत्वस्यासिद्धत्वाड्ढत्वं प्राप्नोति**' इति शङ्काया येन नाप्राप्तन्यायस्मृत्या '**अपवादो वचनप्रामाण्यात्**' इत्युक्ते ढत्वदृष्टौ घत्वस्यासिद्धत्वेनापवादविषयज्ञानेन '**अपवादविषयं परित्यज्य**' इत्यस्याप्रवृत्तौ पूर्वं ढत्वमेव स्यादिति मनसि निधायैव '**अथवैवं वक्ष्यामि—हो ढो दादेः**' इति गौरवग्रस्तपक्षस्यैवादरो भाष्यकृता 'दादेर्धातोः' इत्यत्र कृतः 'षट्' 'राटः' इति निर्देशेन 'पूर्वत्रासिद्धम्' 'स्थानेऽन्तरतमः' इति शास्त्रबाधकल्पनापेक्षया लौकिकतक्रकौण्डिन्यन्यायबोधसूचनस्यैव न्याय्यत्वादिति भावः ॥ ५ '**धातोः स्वरूपग्रहणेन कार्यमुच्यमानं धातुविहितप्रत्यय एव भवति**' इति परिभाषयाऽत्र 'मृजेर्वृद्धिः' इति न प्रवर्तते इति भाष्ये स्पष्टम् ॥ ६ समासप्रकरणपठनीयोऽप्यत्र सूत्रोदाहरणत्वेनैव पठितः ॥

शः¹। तस्य जश्त्वेन जः। भृज्जौ। भृज्जः॥ 'ऋत्विक्' इत्यादिना ऋतावुपपदे यजेः क्विन्। क्विन्नन्तत्वात्कुत्वम्। ऋत्विक्। ऋत्विग्। ऋत्विजौ। ऋत्विजः॥ 'रात्सस्य' इति नियमान्न संयोगान्तलोपः। ऊर्क्। ऊर्ग्। ऊर्जौ। ऊर्जः॥ त्यदाद्यत्वं पररूपत्वं च॥ **तदोः सः सावनन्त्ययोः** ७। २। १०६॥ त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ परे॥ स्यः। त्यौ। त्ये। त्यम्। त्यौ। त्यान्॥ सः। तौ। ते। परमसः। परमतौ। परमते॥ द्विपर्यन्तानामित्येव। नेह–त्वम्। नच तकारोच्चारणसामर्थ्यान्नेति वाच्यम्. अतित्वमिति गौणे चरितार्थत्वात्²॥ संज्ञायां³ गौणत्वे चात्वसत्वे न। त्यद्। त्यदौ। त्यदः। अतित्यद्। अतित्यदौ। अतित्यदः॥ यः। यौ। ये॥ एषः। एतौ। एते। अन्वादेशे तु–एनम्। एनौ। एनान्। एनेन। एनयोः २॥ **ङे प्रथमयोरम्** ।७।१।२८।२८॥ युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमा-द्वितीययोश्चामादेशः⁴ स्यात्॥ **मपर्यन्तस्य** ।७।२।९१॥ इत्यधिकृत्य॥ **त्वाहौ सौ** ।७।२।९४॥ युष्मदस्मदोर्मपर्यन्तस्य⁵ त्व अह इत्येतावादेशौ स्तः सौ परे॥ **शेषे लोपः** ।७।२।९०॥ आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मस्मदोरन्त्यस्य लोपः स्यात्॥ अतो गुणे॥ अमि पूर्वः॥ त्वम्। अहम्॥ ननु त्वं स्त्री अहं स्त्री इत्यत्र त्व अम् अह अम् इति स्थिते अमि पूर्वरूपं परमपि बाधित्वाऽन्तरङ्गत्वा⁶ट्टाप् प्राप्नोति। सत्यम्। अलिङ्गे युष्मदस्मदी⁷। तेन स्त्रीत्वाभावान्न टाप्॥ यद्वा⁸ शेष इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षया। तेन मपर्यन्ताच्छेषस्य अद् इत्यस्य लोपः। स च परोऽप्यन्तरङ्गे अतो गुणे कृते प्रवर्तते। अदन्तत्वाभावान्न टाप्॥ परमत्वम्। परमाहम्। अतित्वम्। अत्यहम्॥ **युवावौ द्विवचने** ।७।२।९२॥ द्वयोरुक्तौ युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ॥ **प्रथमायाश्च द्विवचने भाषायाम्** ।७।२।

---

१ 'झलां जश् झशि' इत्यनेनेत्यादिः॥ २ 'त्वाहौ सौ' इति सूत्रकरणे गौणे 'अतित्वम्' इत्यनिष्टरूपवारणाय तकारोच्चारणस्य चरितार्थत्वादिति भावः॥ ३ 'तदोः सः सौ' इति सकारस्तु गौणे न भवति यथा तथाह–**संज्ञायामिति**॥ ४ 'ङे' इति लुप्तषष्ठ्यन्तं पृथक् पदम् 'प्रथमयोः' इत्यनेनानादेशत्वादेव सिद्धौ 'द्वितीयायां च' इत्यारम्भसामर्थ्यात् विभक्त्योरेव ग्रहणमित्याह–**प्रथमाद्वितीययोरिति**॥ ५ **मपर्यन्तस्येति**। अद्भागात्पूर्वस्येत्यर्थः। परिग्रहणाभावे तु 'मान्तस्य युष्मदोऽस्मदश्च' इत्यर्थे युष्मयतेरस्मयतेश्चाप्रत्यये एव स्यादिति भाष्ये स्पष्टम्॥ ६ 'स्वार्थद्रव्यलिङ्गसंख्याकारकनिमित्तकार्येषु अर्थोपस्थितिक्रमेणैव प्रत्ययोत्पत्तेरपि 'अचः परस्मिन्' इति सूत्रभाष्ये सिद्धान्तितत्वेन लिङ्गबोधकप्रत्ययस्य कारकापेक्षविभक्त्यम्-सापेक्षपूर्वरूपतोऽन्तरङ्गत्वम् परनिमित्तानपेक्षत्वाच्चेति भावः॥ ७ 'साम आकम्' इति सूत्रे भाष्यकृतैव '**लिङ्गाभावाट्टिलोपवचनानर्थक्यम्**' इति वार्तिकव्याख्यायामेतत्स्पष्टमभिहितमेवेति बोध्यम्॥ ८ '**नपुंसकादेशेभ्यो युष्मदोर्विभक्त्यादेशा विप्रतिषेधेन**' इति 'नेतराच्छन्दसि' इति सूत्रभाष्ये वार्तिकेन युष्मदस्मदोः सलिङ्गत्वमपि प्रतीयते। तदप्याह–**यद्वेति**॥ आदेशोत्तरं मकाराभावेऽप्युपलक्षणतया शेषपदं व्याचष्टे–**अदित्यस्येति**॥ **अन्तरङ्ग इति**। शेषलोपस्य 'त्वदीयः त्वत्पुत्र' इत्यादौ वारणाय विभक्तिनिमित्तकत्वेन विभक्तेश्च पररूपनिमित्तगुणाद्बहिर्भूतत्वेन बहिरङ्गत्वम्, विभक्त्यपेक्षयाऽन्तर्भूतगुणनिमित्तकत्वेन पररूपस्यान्तरङ्गत्वमिति भावः॥ '**वार्णादाङ्गं बलीयः**' इति त्वनित्यत्वान्नात्र प्रवर्तते स्थानिभेदाद्वेति बोध्यम्॥ इदं च सर्वमादेशानामदन्तत्वे समाधानकल्पनम्। आदेशानां हलन्तत्वेऽकारस्याविवक्षितत्वेन तु न कोऽपि क्लेशः॥

८८ ॥ इह युष्मदस्मदोराकारोऽन्त्यादेशः स्यात् ॥ औङीत्येव सुवचम् ॥ भाषायां किम् ? युवं वस्त्राणि ॥ युवाम् । आवाम् । मपर्यन्तस्य किम् ? साकच्कस्य मा भूत्–युवकाम् । आवकाम् । त्वया मयेत्यत्र त्वया म्येति मा भूत् । युवकाभ्यामावकाभ्यामिति च न सिध्येत् ॥ **यूयवयौ जसि** ।७।२।९३ ॥ स्पष्टम् ॥ यूयम् । वयम् । परमयूयम् । परमवयम् । अतियूयम् । अतिवयम् ॥ इह 'शेषे लोपोऽन्त्यलोपः' इति पक्षे जसः शी प्राप्तः । अङ्गकार्ये कृते पुनर्नाङ्गकार्यमिति न भवति । 'ङेप्रथमयोः'–इत्यत्र मकारान्तरं प्रश्लिष्य अम् मान्त एवावशिष्यते नतु विक्रियते इति व्याख्यानाद्वा ॥ **त्वमावेकवचने** ।७।२।९७ ॥ एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ॥ **द्वितीयायां च** ।७।२।८७ ॥ युष्मदस्मदोराकारः स्यात् ॥ त्वाम् । माम् । युवाम् । आवाम् ॥ **शसो न** ।७।१।२९ ॥ नेत्यविभक्तिकम् । युष्मदस्मद्भ्यां परस्य शसो नकारः स्यात् ॥ अमोऽपवादः । आदेः परस्य । संयोगान्तस्य लोपः । युष्मान् । अस्मान् ॥ **योऽचि** ।७।२।८९ ॥ अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः ॥ त्वया । मया ॥ **युष्मदस्मदोरनादेशे** ।७।२।८६ ॥ अनयोराकारः स्यादनादेशे हलादौ विभक्तौ ॥ युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ॥ **तुभ्यमह्यौ ङयि** ।७।२।९५॥ अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि ॥ अमादेशः । शेषे लोपः । तुभ्यम् । मह्यम् । परमतुभ्यम् । परममह्यम् । अतितुभ्यम् । अतिमह्यम् । युवाभ्याम् । आवाभ्याम् ॥ **भ्यसोभ्यम्** ।७।१।३० ॥ भ्यसो भ्यम् अभ्यम् वा आदेशः स्यात् ॥ आद्यः शेषे लोपस्यान्त्यलोपत्व एवं । तत्राङ्गवृत्तपरिभाषया एत्वं न । अभ्यम् तु पक्षद्वयेऽपि साधुः । युष्मभ्यम् । अस्मभ्यम् ॥ **एकवचनस्य च** ।७।१।३२ ॥ आभ्यां पञ्चम्येकवचनस्य अत्स्यात् ॥ त्वत् । मत् । ङसेश्चेति सुवचम् । युवाभ्याम् । आवाभ्याम् ॥ **पञ्चम्या अत्** ।७।१।३१ ॥ आभ्यां पञ्चम्या भ्यसोऽत्स्यात् ॥ युष्मत् । अस्मत् ॥ **तवममौ ङसि** ।७।२।९६ ॥ अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि ॥ **युष्मदस्मद्भ्यां ङसोऽश्** ।७।१।२७ ॥ स्पष्टम् ॥ तव । मम । युवयोः । आवयोः ॥

---

१ '**तन्मध्यपतितस्तद्ग्रहणेन गृह्यते**'इति न्यायेनाकच्सहितस्यादेशेऽकचः श्रवणं न स्यादिति भावः ॥ २ '**ओकारसकारभकारादौ सुपि परतः सर्वनाम्नष्टेः प्रागकच्** । **अन्यत्र तु सुबन्तस्य टेः प्रागकच्**' इति सिद्धान्तितत्वेन युवकाम् आवकामित्यत्र दोषाभावात् मपर्यन्तस्येत्यधिकारस्य प्रयोजनान्तरमाह–**त्वया मयेति** ॥ योऽचीत्यत्र '**अच्ये**' इति न्यासेन त्वया मयेति सिद्धौ दोषान्तरमाह–**युवकाभ्यामिति** ॥ ३ '**अङ्गवृत्ते पुनर्वृत्तावविधिः**' इति परिभाषया ' ज्ञाजनोर्जा' इत्यादेशे दीर्घोच्चारणज्ञापितयेति पूर्वशेषः ॥ ४ पिबेरदन्तत्वनिपातनसिद्धगुणाभावमात्रस्यैवैतत्प्रयोजनकथनेन 'द्वयोः' इति निर्देशेन चैतत्परिभाषाया व्यर्थत्वसूचने समाधानान्तरमाह–**ङेप्रथमयोरिति** ॥ **मकारान्तरमिति** ॥ ' अमो मश् ' इति भाष्यसूचितसंयोगान्तलोपेनेत्यादिः ॥ ५ **आद्यः** 'भ्यम्' इत्यादेशः ॥ ६ **एवकारेण** टिलोपपक्षव्यावृत्तिः ॥ ७ '**अङ्गवृत्ते पुनर्वृत्तावविधिः**'–अङ्गाधिकारे वृत्तं निष्पन्नं कार्यं तस्मिन्सति पुनरन्यस्याङ्गकार्यस्य प्रवृत्तौ प्राप्तायामविधिरित्यर्थः ॥ ८ **पक्षद्वये** अन्त्यलोपपक्षे टिलोपपक्षे चेत्यर्थः ॥ ९ '**अनादेशग्रहणं शक्यमकर्तुम्**।' कथम्? '**हलि**' इत्यनुवर्तते । '**नचादेशो हलादिरस्ति**' इति भाष्यसंमतश्च ॥

**साम आकम्** ।७।१।३३ ॥ आभ्यां परस्य साम आकं स्यात् ॥ भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देशः । युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ॥

समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी । समासार्थोऽन्यसंख्यश्चेत्स्तो युवावौ त्वमावपि ॥१॥[1]
सुजस्ङेङस्सु परत आदेशाः स्युः सदैव ते । त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥२॥
एते परत्वाद्बाधन्ते युवावौ विषये स्वके । त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ॥ ३ ॥
द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी । तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ च न ॥४॥

**त्वां मां वा अतिक्रान्त** इति विग्रहे—अतित्वम् । अत्यहम् । अतित्वाम् । अतिमाम् । अतियूयम् । अतिवयम् । अतित्वाम् २ । अतिमाम् २ । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । अतित्वाभ्याम् अतिमाभ्याम् । अतित्वभ्यम् । अतिमभ्यम् । ङसिभ्यसोः । अतित्वत् २ । अतिमत् २ । भ्यामि प्राग्वत् । अतितव । अतिमम । अतित्वयोः । अतिमयोः । अतित्वाकम् । अतिमाकम् । अतित्वयि । अतिमयि । अतित्वयोः । अतिमयोः । अतित्वासु । अतिमासु ॥ **युवाम् आवां वा अतिक्रान्त** इति विग्रहे सुजस्ङेङस्सु प्राग्वत् । औअम्औट्सु । अतियुवाम् ३ । अत्यावाम् ३ । अतियुवान् । अत्यावान् । अतियुवया । अत्यावया । अतियुवाभ्याम् ३ । अत्यावाभ्याम्३ । अतियुवाभिः । अत्यावाभिः । भ्यसि । अतियुवभ्यम् । अत्यावभ्यम् । ङसिभ्यसोः । अतियुवत् २ । अत्यावत् २ । ओसि । अतियुवयोः २ । अत्यावयोः २ । अतियुवाकम् । अत्यावाकम् । अतियुवयि । अत्यावयि । अतियुवासु । अत्यावासु । **युष्मानस्मान्वेति** विग्रहे सुजस्ङेङस्सु प्राग्वत् । औअम्औट्सु । अतियुष्माम् ३ । अत्यास्माम् ३ । अतियुष्मान् अत्यस्मान् । अतियुष्मया । अत्यस्मया । अतियुष्माभ्याम् ३ । अत्यस्माभ्याम् ३ । अतियुष्माभिः । अत्यस्माभिः । भ्यसि । अतियुष्मभ्यम् । अत्यस्मभ्यम् । ङसिभ्यसोः । अतियुस्मत् । अत्यस्मत् । ओसि । अतियुष्मयोः२ । अत्यस्मयोः २ । अतियुष्माकम् । अत्यस्माकम् । अतियुष्मयि । अत्यस्मयि । अतियुष्मासु । अत्यस्मासु ॥ **पदस्य** ।७।१।१६। **पदात्** ।८।१।१७। **अनुदात्तं सर्वमपादादौ** ।८।१।१८। इत्यधिकृत्य ॥ **युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ** । ८ । १ । २० ॥ पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वांनावित्यादेशौ स्तस्तौ चानुदात्तौ ॥

---

१ इदं चान्त्यलोपपक्ष एव । टिलोपपक्षे तु 'गोतो णित्' इत्यत्र गकारोच्चारणमिवात्रापि सकारोच्चारणमविवक्षितमेवेति बोध्यम् ॥ २ 'त्वमावेकवचने' 'युवावौ द्विवचने' इत्यत्रैकवचनद्विवचनशब्दौ न विभक्तिसंज्ञकप्रत्ययपरौ किंतु 'एकत्ववाचि-द्वित्ववाचिपरौ विभक्तिविपरिणामेन युष्मदस्मदोरेव विशेषणे इति मनसि निधायैव 'एकार्थवाचिनोः' 'द्वित्वार्थवाचिनोर्युष्मदस्मदोः' इत्यर्थसूचनायैव 'एकस्योक्तौ' 'द्वयोरुक्तौ' इति व्याख्यातम् । तत्फलं 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्यदर्शितमेव दर्शयति-**समस्यमान इत्यादिना** ॥ ३ 'पदस्य' इत्ययं त्वधिकारः 'अपदान्तस्य मूर्धन्यः' इत्येतत्पर्यन्तम्' तेन 'लिहौ दुहौ' इत्यादौ न ढत्वघत्वादि ॥ 'पदात्' इति तु 'कुत्सने च सुप्यगोत्रात्' इत्यतः प्रागेव ॥ ४ अपादादिशब्देन पादमध्य-पादान्तस्थवत् छन्दोहीनगद्यस्थमपि गृह्यते ॥ पादशब्देन ऋक्पादश्लोकपादावविशेषेण गृह्येते ॥

**बहुवचनस्य वस्नसौ** ।८।१।२१ ॥ उक्तविधयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः । वान्नावोरपवादः ॥ **तेमयावेकवचनस्य** । ८ । १ । २२ ॥ उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ॥ **त्वामौ द्वितीयायाः** । ८।१।२३ ॥ द्वितीयैकवचनान्तयोस्त्वा मा एतौ स्तः ॥

श्रीशस्त्वाऽवतु मापीह दत्तात्ते मेऽपि शर्म सः ।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥ १ ॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ।
सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥ २ ॥

पदात्परयोः किम् ? वाक्यादौ मा भूत् । त्वां पातु । मां पातु । अपादादौ किम् ? 'वेदैरशेषैः संवेद्योऽस्मान्कृष्णः सर्वदाऽवतु'[1] । स्थग्रहणाच्छ्रूयमाणविभक्तिकयोरेव । नेह—इति[T]युष्मत्पुत्रो ब्रवीति इत्यस्मत्पुत्रो ब्रवीति ॥ **समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः** * ॥ **एकतिङ् वाक्यम्** * ॥ तेनेह न—ओदनं पच, तव भविष्यति । इह तु स्यादेव—शालीनां ते ओदनं दास्यामीति ॥ **एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्याः** * ॥ अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति । धाता तव भक्तोऽस्तीति वा । तस्मै ते नम इत्येव ॥ **न चवाहाऽहैवयुक्ते** ।८।१।२४ ॥ चादिपञ्चकयोगे नैते आदेशाः स्युः ॥ हरिस्त्वां मां च[3] रक्षतु । कथं त्वां मां वा[4] न रक्षेदित्यादि । युक्तग्रहणात्साक्षाद्योगेऽयं निषेधः । परम्परासंबन्धे तु आदेशः

---

१ नवाक्षरच्छन्दसि प्रवृत्तौ व्याघाताभावाद् ' एङः पदान्तादति ' इत्यतः परत्वाद् आदेशः स्यादिति भावः ॥ ' मां कृष्णः ' इति पाठे तु न काप्यनुपपत्तिरिति बोध्यम् ॥ T समासत्वेन विभक्तेर्लुका लुप्तत्वात् न विभक्तेः श्रवणं नापि प्रत्ययलक्षणम् ' न लुमता ' इति निषेधात् ॥ २ ' **आख्यातं साव्ययकारकविशेषणं वाक्यम् । सक्रियाविशेषणं च** ॥ ' इति वाक्यलक्षणे ' आख्यातम्' इति एकत्वं विवक्षितम् । अत एव '**न च समानवाक्ये द्वे तिङन्ते स्तः** ' इति 'तिङ्ङतिङः ' इति सूत्रस्थं भाष्यं संगच्छते ॥ अत्रैकत्वं न विवक्षितमिति भ्रमवारणाय एकत्वविवक्षाया स्फुटत्वप्रतीतये स्पष्टमेवाभिहितम्—**एकतिङ्वाक्यमिति** ॥ बहुव्रीहिः । तिङ्पदं च तिङन्तार्थपरम् । तथाच एकतिङन्तार्थमुख्यविशेष्यकबोधजनकपदसमुदायो वाक्यमित्यर्थः ॥ एवं च यत्र क्रियापदं न श्रूयते तत्र ' **अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति**' इति भाष्येण तिङन्तपदमध्याहार्यमेव । '**पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति** ' इति भाष्यतः ' पचति भवति ' इत्यादावपि न वाक्यत्वव्याघातः । ' ओदनं पच ' तव भविष्यतीति वाक्ये तु 'त्वत्कर्तृकमोदनकर्मकं प्रेरणाविषयः पचनम् ' इति 'त्वत्स्वामिकमोदनकर्तृकं भवनम् ' इति भिन्न एवार्थं इत्येकतिङन्तार्थमुख्यविशेष्यकबोधजनकत्वाभावान्नैकवाक्यत्वमिति कैयटाशयः ॥ शालीनामित्यस्य तु ' शालिसंबन्ध्योदनकर्मकं त्वत्संप्रदानकं मत्कर्तृकं दानम् ' इत्येवमेकतिङन्तार्थमुख्यविशेष्यकबोधजनकपदसमुदायत्वादेकवाक्यत्वमभ्याहृतमिति भावः ॥ ३ ' हरिकर्तृकं समुच्चितत्वन्मत्कर्मकं रक्षणं प्रार्थनाविषय ' इति बोधे चार्थसमुच्चययोगस्य युष्मदस्मदोरेव साक्षात्सत्वेन निषेधः सिद्ध इति भावः ॥ ४ ' किंकारणकः त्वन्मदन्यतरकर्मकहरिकर्तृकरक्षणाभावः ' इति बोधे अन्यतररूपवाशब्दार्थस्य युष्मदस्मदर्थेन साक्षादन्वयान्निषेधः सिद्ध इति भावः ॥

त्यादेव । हरो हरिश्च मे स्वामी ॥ **पश्यार्थैश्चानालोचने ।८।१।२५॥** अचाक्षुषज्ञानार्थैर्धातुभिर्योगे एते आदेशा न स्युः । चेतसा त्वां समीक्षते । परम्परासंबन्धेऽप्ययं निषेधः—भक्तस्त्वां रूपं ध्यायति । आलोचने तु भक्तस्त्वा पश्यति चक्षुषा ॥ **सपूर्वायाः प्रथमाया विभाषा ।८।१।२६॥** विद्यमानपूर्वात्प्रथमान्तात्परयोरनयोरन्वादेशेऽप्येते आदेशा वा स्युः ॥ भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम् । त्वा मेति वा ॥ **सामन्त्रितम् । २ । ३ । ४८ ॥** संबोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात् ॥ **आमन्त्रितं पूर्वमविद्यमानवत् ।८।१।७२ ॥** स्पष्टम् ॥ अग्ने तव । देवास्मान्पाहि । अग्ने नय । अग्न इन्द्र वरुण । इह युष्मदस्मदोरादेशस्तिङन्तनिघात आमन्त्रितनिघातश्च न । सर्वदा रक्ष देव न इत्यत्र तु देवेत्यस्याविद्यमानवद्भावेऽपि ततः प्राचीनं रक्षेत्येतदाश्रित्यादेशः । एवम् 'इमं मे गङ्गे यमुने' इति मन्त्रे यमुने इत्यादिभ्यः प्राचीनामन्त्रिताविद्यमानवद्भावेऽपि मेशब्दमेवाश्रित्य सर्वेषां निघातः ॥ **नामन्त्रिते समानाधिकरणे सामान्यवचनम् ।८ । १ । ७३ ॥** विशेष्यं समानाधिकरणे आमन्त्रिते परे नाविद्यमानवत्स्यात् ॥ हरे दयालो नः पाहि । अग्ने तेजस्विन् ॥ **विभाषितं विशेषवचने ।८।१।७४ ॥** अत्र भाष्यम्-**'बहुवचनमिति वक्ष्यामि'** इति । बहुवचनान्तं विशेष्यं समानाधिकरणे आमन्त्रिते विशेषणे परे अविद्यमानवद्वा ॥ यूयं प्रभवो देवाः शरण्याः । युष्मान् भजे, वो भजे इति वा । इहान्वादेशेऽपि वैकल्पिका आदेशाः ॥ सुपात् । सुपाद् । सुपादौ । सुपादः । सुपादम् । सुपादौ ॥ **पादः पत् । ६ । ४ । १३० ॥** पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः स्यात् ॥ सुपदः । सुपदा । सुपाद्भ्यामित्यादि ॥ अग्निं मन्थतीत्यग्निमत् । अग्निमद् । अग्निमथौ । अग्निमथः । अग्निमद्भ्यामित्यादि ॥ 'ऋत्विक्'इत्यादिसूत्रेणाञ्चेः सुप्युपपदे क्विन् ॥ **अनिदितां हल उपधायाः क्ङिति ।६।४।२४ ॥** हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात्किति ङिति च ॥ उगिदचामिति नुम् । संयोगान्तस्य लोपः । नुमो नकारस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन ङकारः । प्राङ् । अनुस्वापरसवर्णौ—प्राञ्चौ । प्राञ्चः । प्राञ्चम् । प्राञ्चौ ॥ **अचः ।६।४। १३८ ॥** लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात् । **चौ ।६।३।१३८ ॥** लुप्ताकारनकारे-

---

१ समुच्चितहरिहराभिन्नो मत्संबन्धिस्वामी इति बोधे चार्थसमुच्चयस्य हरिहरार्थ एवान्वयो न तु अस्मच्छब्दार्थ इति साक्षात्संबन्धाभावान्न निषेध इति भवत्येवादेश इति भावः ॥ २ चेतःकरणकं समीक्षणं ध्यानमेवेति तत्र चाक्षुषज्ञानाभावाद् ध्याने कर्मतया साक्षादन्विताथकस्य युष्मदो नैवादेश इति भावः ॥ ३ ध्याने साक्षात्कर्मतयाऽन्विते रूपे संबन्धितया युष्मदर्थस्यान्वये ध्याने साक्षादन्वयाभावेऽपि निषेधो भवत्येवेति भावः ॥ ४ हरिरिति प्रथमान्तात् पूर्वं 'तेन' इत्यस्य सत्त्वेन आदेशविकल्पसिद्धिः ॥ ५-'अग्ने' 'देव' इति संबोधनप्रथमान्तस्याविद्यमानवद्भावेन 'तव' 'अस्मान्' इत्यनयोः पदात्परत्वव्याघातेन नवादेशप्राप्तिरिति भावः ॥ ६ 'अग्ने नय' इत्यत्र तिङन्तनिघातः 'अग्न इन्द्र वरुण' इत्यत्रामन्त्रितनिघातश्च न ॥ ७ सर्वेषाम् आमन्त्रितानाम् ॥ ८ अविद्यमानवत्त्वनिषेधेन पदात्परत्वेन निघातः सिद्धः ॥ ९ युष्मानिति ॥ 'अतः' इत्यादिः ॥ तेन पदात्परत्वसत्त्वेनादेशप्राप्तिरव्याहतैवेति भावः ॥ १० तदवयवस्य पाच्छब्दस्येति । 'षष्ठीस्थाने योगा' इति सूत्रार्थभूतया 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषयैकवाक्यतया फलितोऽयमर्थ इति भावः ॥ ११ लुप्तनकारेति । तादृशी एवेदमनुकरणमिति व्याख्यानाल्लभ्यते ॥

ऽञ्चतौ परे पूर्वस्याणो दीर्घः स्यात्। प्राचः। प्राचा। प्राग्भ्यामित्यादि। प्रत्यङ्। प्रत्यञ्चौ। प्रत्यञ्चः। प्रत्यञ्चम्। प्रत्यञ्चौ॥'अचः'इति लोपस्य विषयेऽन्तरङ्गोऽपि यण् न प्रवर्तते। 'अकृतव्यूहाः'–इति परिभाषया॥ प्रतीचः। प्रतीचा। अमुमञ्चतीति विग्रहे–अदस् अन्च् इति स्थिते॥ **विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये।६।३।९२॥** अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्याद्वप्रत्ययान्तेऽञ्चतौ परे॥ अदद्रि अन्च् इति स्थिते। यण्॥ **अदसोऽसेर्दादु दो मः।८।२।८०॥** अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य च मः॥(उँ इति ह्रस्वदीर्घयोः समाहारद्वन्द्वः) आन्तरतम्याद्ध्रस्वव्यञ्जनयोर्ह्रस्वो दीर्घस्य दीर्घः। अमुमुयङ्। अमुमुयञ्चौ। अमुमुयञ्चः। अमुमुयञ्चम्। अमुमुयञ्चौ। अमुमुईचः। अमुमुईचा। अमुमुयग्भ्यामित्यादि। मुत्वस्यासिद्धत्वान्न यण्। '**अन्त्यबाधेऽन्त्यसदेशस्य**' इति परिभाषामाश्रित्य परस्यैव मुत्वं वदतां मते–अदमुयङ्। अः सेः–'सकारस्य स्थाने यस्य सः असिरिति व्याख्यानात् त्यदाद्यत्वविषय एव मुत्वं नान्यत्रेति पक्षे--अदद्र्यङ्। उक्तं च--

**अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत्॥**
**केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते॥** * इति॥

विष्वग्देवयोः किम्? अश्वाची॥ अञ्चतौ किम्? विष्वग्युक्॥ वप्रत्यये किम्? विष्वगञ्चनम्॥ वप्रत्ययग्रहणं ज्ञापयति, '**अन्यत्र धातुग्रहणे तदादिविधिः**' इति। तेनायस्कारः।

---

१ **अन्तरङ्गोपीऽति**। 'प्रति अच् अस्' इति स्थिते अन्तरङ्गयणशास्त्रीयनिमित्तभूतचकारप्राग्वर्तिनोऽकाराद्बहिर्भूतशसूनिमित्तकत्वेन लोपस्य बहिरङ्गत्वम्। बहिरङ्गलोपशास्त्रीयनिमित्तभूतात् शसोऽन्तर्भूतचकारप्राग्वर्त्यकारनिमित्तकत्वेन यणोऽन्तरङ्गत्वमिति भावः॥ २ **अकृतेति**। एतत्परिभाषाया भाष्यादृष्टत्वेनाप्रामाणिकत्वे तु 'चौ' इत्येतत्सूत्रारम्भसामर्थ्यादेवात्रान्तरङ्गपरिभाषाया अप्रवृत्तिज्ञापनस्य भाष्योक्तस्य समाश्रयणेन '**परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते। एषां मिथः प्रसङ्गे परबलीयस्त्वम्**'.इत्यनेन प्रतिपदविधेः 'अचः' इति सूत्रस्यैव बलीयस्त्वेन पदविभज्यान्वाख्याने यणोऽप्राप्त्या वा सकलेष्टसिद्धिरिति बोध्यम्॥ ३ कोष्ठकान्तर्गतः पाठः **यदि 'भाव्यमानेन सवर्णानां ग्रहणं न' इत्युच्यते 'अदसोऽसेर्दादु दो मः' अमूभ्यामित्यत्र न प्राप्नोति। एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति 'भवत्युकारेण भाव्यमानेन सवर्णानां ग्रहणम्' इति। यदयं 'दिव उत्' 'इति उकारं तपरं करोति'** इति 'तित्स्वरितम्' इति सूत्रभाष्यविरुद्धः॥ ४ 'अन्त्यस्य विकाराप्राप्तावन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्कार्याप्राप्तावन्त्यसदेशस्यैव' इत्यर्थिकायाः 'ष्यङः संप्रसारणम्' इति सूत्रभाष्ये पठितायाः '**अनन्त्यविकारेऽन्त्यसदेशस्य**' इति परिभाषाया अर्थमाह–**अन्त्यबाध इति**॥ एवं च 'नौति नमति' इत्युभयत्रापि 'णो नः' इति प्रवर्तते। अनन्त्यसदेशस्य 'नौति' इत्यत्र अन्त्यसदेशस्य 'नमति' इत्यत्र कार्याप्राप्त्या एतत्परिभाषाविषयत्वाभावात्॥ अन्यथा 'नौति' इत्यत्रैवान्त्यसदेशस्य णत्वं स्यात् नतु 'नमति' इत्यत्रानन्त्यसदेशस्येति भावः॥ ५–'सुद्रतिथोः' इत्यत्रेवेकार उच्चारणार्थं इति भावः॥ ६ 'इक्श्तिपौ धातुनिर्देशे' इति 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इत्येतत्सूत्रद्वयबलाद् अञ्चधातोरेव ग्रहणसिद्धौ 'वप्रत्ययग्रहणं प्रत्ययान्तरान्तप्रतिषेधार्थं व्यर्थमेव सत् '**धातुग्रहणेन तदादिविधिः**' इति परिभाषां ज्ञापयति। तथा च प्रकृतेऽपि तदादिग्रहणव्यावृत्त्यर्थं वप्रत्ययग्रहणमिति स्वांशे चारितार्थ्यमिति प्रदर्शनायैव '**अन्यत्र**' इत्युपात्तमिति भावः॥

अतः कुकमि'—इति सः ॥ उदङ् । उदञ्चौ । उदञ्चः । शसादावचि ॥ **उद ईत्** ।६।४।१३९॥ उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत्स्यात् ॥ उदीचः । उदीचा । उदग्भ्यामित्यादि ॥ **समः समि** ।६।३।९३ ॥ वप्रत्ययान्तेऽञ्चतौ परे ॥ सम्यङ् । सम्यञ्चौ । सम्यञ्चः ॥ समीचः । समीचा ॥ **सहस्य सध्रिः** ।६।३।९५ ॥ वप्रत्ययान्तेऽञ्चतौ परे ॥ सध्र्यङ् ॥ **तिरसस्तिर्यलोपे** ।६।३।९४ ॥ अलुप्ताकारेऽञ्चतौ वप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात् ॥ तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । तिर्यञ्चम् । तिर्यञ्चौ । तिरश्चः । तिरश्चा । तिर्यग्भ्यामित्यादि ॥ **नाञ्चेः पूजायाम्** ।६।४।३० ॥ पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात् ॥ अलुप्तनकारत्वान्न नुम्—प्राङ् । प्राञ्चौ । प्राञ्चः । नलोपाभावादकारलोपो न । प्राञ्चः । प्राञ्चा । प्राङ्भ्याम् । प्राङ्क्षु । प्राङ्षु । एवं पूजार्थे प्रत्यङ्ङादयः ॥ क्रुञ्च कौटिल्याल्पीभावयोः । अस्य ऋत्विगादिना नलोपाभावोऽपि निपात्यते । क्रुङ् । क्रुञ्चौ । क्रुञ्चः । क्रुङ्भ्यामित्यादि ॥ चोः कुः ॥ पयोमुक् । पयोमुग् । पयोमुचौ । पयोमुचः ॥ 'व्रश्च'—इति षत्वम् । 'स्कोः'—इति सलोपः । जश्त्वचर्त्वे । सुवृट् । सुवृड् । सुवृश्चौ । सुवृश्चः । सुवृट्त्सु । सुवृट्सु ॥ **वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च** * ॥ एते निपात्यन्ते । शतृवच्चैषां कार्यं स्यात् ॥ उगित्त्वान्नुम् । 'सान्तमहत' इति दीर्घः । मह्यते पूज्यते इति महान् । महान्तौ । महान्तः । हे महन् । महतः । महता । महद्भ्यामित्यादि ॥ **अत्वसन्तस्य चाधातोः** ।६।४।१४ ॥ अत्वन्तस्योपधाया दीर्घः स्याद्धातुभिन्नासन्तस्य चासंबुद्धौ सौ परे ॥ परं नित्यं च नुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घः ततो नुम्—धीमान् । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ महद्वत् ॥ धातोरप्यत्वन्तस्य दीर्घः । गोमन्तमिच्छति गोमानिवाचरतीति वा क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप् । 'उगिदचाम्'—इति सूत्रेऽजग्रहणं नियमार्थम्—धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति । तेन स्रत् ध्वत् इत्यादौ न । अधातोरिति तु अधातुभूतपूर्वस्यापि

---

१ कुग्रहणे कुधात्वादिप्रकृतिप्रत्ययसमुदायग्रहणमिति भावः ॥ २ लोपोऽस्त्यस्मिन् लोपः 'अर्शआदिभ्योऽच्' लोपश्चासावश्च लोपः शकन्ध्वादिः । अविद्यमानो लोपो यत्रेति अलोपः । तस्मिन्नलोपे इति वृत्तिफलितमर्थमाह—**अलुप्तेति** ॥ 'अभे' इत्युक्तौ तु पूजायामपि भसंज्ञायां न स्यादादेश इति बोध्यम् ॥ ३ **नलोपाभावोऽपीति** ॥ नकारस्य ञकारादेशनिपातनद्वारा नोपधत्वाभावबोधनेनेति शेषः आदौ । अपिना चकाररूपझल्संनिधाने 'चोः कुः' इति कुत्वाभावोऽपि निपात्यते । 'बाधकान्येव निपातनानि' इति परस्याङ्गस्यापि लोपस्य बाध एवेति भावः ॥ 'क्विन्प्रत्ययस्य' इति कुत्वं तु भवत्येव तस्य झल्संनिधाननिमित्तकत्वाभावादिति बोध्यम् ॥ ४ **षत्वमिति** । 'असिद्धं मत्वा प्राक्' इति शेषः ॥ **सलोप इति** ॥ '**नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्चेष्टुवर्गस्तवर्गजः**' ॥ इत्यभियुक्तोक्तेः श्चुत्वस्यासिद्धत्वात् सलोपः ततः षत्वम् इति भावः ॥ ५ अयं भावः—'अतु' इति पृथक्पदम् । तत्र 'उपधायाः' इत्यनुवृत्तौ नुमि सत्यच्युपधात्वव्याघातेऽनुवृत्तिरेव वृथा स्यादिति ॥ ६ 'अधातोः' इति 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायेन 'असन्तस्य' इत्यत्रैवान्वेति न तु 'अतु' इति लुप्तषष्ठीके पदे इति भावः ॥ ७ अञ्चुधातोरपि उगित्त्वादेव नुमः सिद्धौ व्यर्थं सद् अज्ग्रहणम् 'धातोश्चेदुगित्कार्यं तर्हि नलोपिनोऽञ्चतेरेव' इति नियमार्थमिति भावः ॥ ८ उक्तनियमेनैव धातुव्यावृत्तौ सिद्धायाम् 'अधातु' ग्रहणं व्यर्थमित्याशङ्कायामाह—**अधातोरिति** ॥

नुमर्थम् । गोमान् । गोमन्तौ । गोमन्तः । इत्यादि ॥ भातेर्डवतुः । भवान् । भवन्तौ । भवन्तः ॥ शत्रन्तस्य त्वत्वन्तत्वाभावान्न दीर्घः—भवतीति भवन् ॥ **उभे अभ्यस्तम्** । ६ । १ । ५ ॥ षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः ॥ **नाभ्यस्ताच्छतुः** । ७ । १ । ७८ ॥ अभ्यस्तात्परस्य शतुर्नुम् न स्यात् ॥ ददत् । ददद् । ददतौ । ददतः ॥ **जक्षित्यादयः षट्** । ६ । १ । ६ ॥ षड् धातवोऽन्ये जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः स्युः ॥ जक्षत् । जक्षद् । जक्षतौ । जक्षतः ॥ एवं जाग्रत् । दरिद्रत् । शासत् । चकासत् । दीधीवेव्योर्ङित्त्वेऽपि छान्दसत्वाद्व्यत्ययेन परस्मैपदम् । दीध्यत् । वेव्यत् । गुप् । गुब् । गुपौ । गुपः । गुब्भ्यामित्यादि ॥ **त्यदादिषु दृशोऽनालोचने कञ्च** । ३ । २ । ६० ॥ त्यदादिषूपपदेष्वज्ञानार्थाद्दृशेर्धातोः कञ् स्याच्चात् क्विन् ॥ **आ सर्वनाम्नः** । ६ । ३ । ९१ ॥ सर्वनाम्न आकारोऽन्तादेशः स्याद्दृग्दृशवतुषु ॥ कुत्वस्यासिद्धत्वाद्[1]व्रश्चेति षः । तस्य जश्त्वेन डः । तस्य कुत्वेन गः । तस्य चर्त्वेन पक्षे कः ॥ तादृक् । तादृग् । तादृशौ । तादृशः । 'षत्वापवादत्वात्कुत्वेन खकारः'[2] इति कैयट—हरदत्तादिमते तु चर्त्वाभावपक्षे ख एव श्रूयेत, न तु गः । जश्त्वं प्रति कुत्वस्यासिद्धत्वात् । 'दिगादिभ्यो यत्' इति निर्देशान्नासिद्धत्वमिति वा बोध्यम् ॥ व्रश्चेति षत्वम् । जश्त्वचर्त्वे । विट् । विड् । विशौ । विशः । विशम् । **नशेर्वा** । ८ । २ । ६३ ॥ नशेः । कवर्गोऽन्तादेशो वा स्यात्पदान्ते ॥ नक् नग् । नट् । नड् । नशौ । नशः । नग्भ्याम् । नड्भ्यामित्यादि ॥ **स्पृशोऽनुदके क्विन्** । ३ । २ । ५८ ॥ अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात् ॥ घृतस्पृक् । घृतस्पृग् । घृतस्पृशौ । घृतस्पृशः । क्विन्[3] प्रत्ययो यस्मादिति बहुव्रीह्याश्रयणात् क्विप्यपि कुत्वम् । स्पृक् । षडगकाः प्राग्वत् ॥ ञिधृषा प्रागल्भ्ये । अस्मादृत्विगादिना क्विन् द्वित्वमन्तोदात्तत्वं च निपात्यते । कुत्वात्पूर्वं जश्त्वेन डः, गः, कः । धृष्णोतीति—दधृक् । दधृग् । दधृषौ । दधृषः । दधृग्भ्यामित्यादि ॥ रत्नानि मुष्णातीति । रत्नमुट् । रत्नमुड् । रत्नमुषौ । रत्नमुषः ॥ षड्भ्यो लुक् ॥ षट् । षड् । षड्भिः । षड्भ्यः २। 'षट्चतुर्भ्यश्च' इति नुट् । अनामिति पर्युदासान्न ष्टुत्वनिषेधः । 'यरोऽनुनासिके' इति विकल्पं बाधित्वा 'प्रत्यये भाषायां नित्यम्' इति वचनान्नित्यमनुनासिकः । षण्णाम् । षट्त्सु । षट्सु ॥ तदन्तविधिः । परमषट् । परमषण्णाम् ।

---

१ **असिद्धत्वादिति** ॥ सिद्धासिद्धयोर्विरोधस्यैवायोग्यत्वे अपवादविषयाज्ञाने '**अपवादविषयं परिहृत्य**' 'इति कथं प्रवर्तेति भावः ॥ २ '**अपवादो वचनप्रामाण्यात्**' इति भाष्यं यथाश्रुतमनुसृत्याह—**षत्वापवादेति** । **खकार इति** । अघोषमहाप्राणप्रयत्नान्तर्येणेत्यादिः ॥ तुना सूचितामरुचिं प्रकाशयति—**न तु ग इति** । एवं च सूत्रवार्तिकभाष्यादिस्थगकारश्रवणानुपपत्तिरिति भावः ॥ गकारश्रवणं साधयति—**निर्देशान्नासिद्धत्वमिति** ॥ इति भवता समर्थनमाश्रयणीयम् । तन्न सम्यक् । निर्देशेन लौकिकतक्रकौण्डिन्यन्यायबाधकल्पनापेक्षया शास्त्रबोधितासिद्धत्वस्य बाधकल्पनानौचित्यात् । अत एव, '**अपवादो वचनप्रामाण्यात्**' इति समाधानेऽनास्थयैव '**अथवैवं वक्ष्यामि 'हो ढोऽदादेः'**' 'इत्यादि भाष्यकृतोक्तम्' इति शेषः ॥ **इति देति** । वाशब्दोऽवधारणे इति बोध्यम् ॥ ३ '**क्विनः कुः**' इति सूत्रेण '**क्विन्नन्तस्य कुत्वं स्यात्**' इत्यर्थकेन कुत्वसिद्धौ प्रत्ययग्रहणं व्यर्थमिति शङ्कायां प्रयोजनमाह—**क्विन् प्रत्ययो यस्मादित्यादिना** । प्रत्ययग्रहणसामर्थ्याद् '**दृष्टः**' इत्येवाध्याहारो न तु '**विहितः**' इतीति भावः ॥

गौणत्वे तु प्रियषषः । प्रियषषाम् । रुत्वं प्रति[1] षत्वस्यासिद्धत्वात् ससजुषोरुरिति रुत्वम् ॥ **र्वोरुपधाया दीर्घ इकः । ८ । २ । ७६ ॥** रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात्पदान्ते ॥ पिपठीः । पिपठिषौ । पिपठिषः । पिपठीर्भ्याम् ॥ 'वा शरि' इति वा विसर्जनीयः ॥ **नुम्विसर्जनीयशर्व्यवायेऽपि । ८ । ३ । ५८ ॥** एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात् ॥ ष्टुत्वेन पूर्वस्य षत्वम् । पिपठीष्षु । पिपठीःषु ॥ प्रत्येकमिति व्याख्यानादनेकव्यवधाने षत्वं न । निंस्स्व । निंस्से ॥ नुम्ग्रहणं नुम्स्थानिकानुस्वारोपलक्षणार्थं व्याख्यानात् । तेनेह न–सुहिन्सु । पुंसु । अत एव न शर्ग्रहणेन गतार्थता ॥ 'रात्सस्य' इति सलोपे विसर्गः[2]–चिकीः । चिकीर्षौ । चिकीर्षः । 'रोः सुपि' इति नियमान्न विसर्गः–चिकीर्षु ॥ दमेर्डोस् । डित्त्वसामर्थ्याट्टिलोपः । षत्वस्यासिद्धत्वाद्रुत्वविसर्गौ[3] । दोः । दोषौ । दोषः । 'पद्दन्' इति वा दोषन् । दोष्णः । दोष्णा । दोषः । दोषा ॥ विश प्रवेशने । सन्नन्तात् क्विप् । षत्वस्यासिद्धत्वात्[4] संयोगान्तलोपः । 'व्रश्च'इति षः । जश्त्वचर्त्वे । विविट् । विविड् । विविक्षौ । विविक्षः ॥ स्कोरिति कलोपः । तट् । तड् । तक्षौ । तक्षः ॥ गोरट् । गोरड् । गोरक्षौ । गोरक्षः ॥ तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तु स्कोरिति न प्रवर्तते । णिलोपस्य स्थानिवद्भावात् । 'पूर्वत्रासिद्धीये न स्थानिवत्'इति तु इह नास्ति । 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु'इति निषेधात् । तस्मात्संयोगान्तलोप एव । तक् । तग् । गोरग् । गोरग् ॥ स्कोरिति कलोपं प्रति कुत्वस्यासिद्धत्वात्[6] संयोगान्तलोपः । पिपक् । पिपग् । एवं विवक्[7] दिधक्[8] ॥ पिस गतौ । सुष्ठु पेसतीति सुपीः । सुपिसौ । सुपिसः । सुपिसा । सुपीर्भ्याम् । सुपीःषु । सुपीष्षु ॥ एवं सुतूः । तुस खण्डने ॥ विद्वान् । विद्वांसौ । विद्वांसः । हे विद्वन् । विद्वांसम् । विद्वांसौ ॥ **वसोः संप्रारणम् । ६ । ४ । १३१ ॥**

---

१ **रुत्वं प्रतीति** ॥ पठ धातोः सनि इडागमे जाते षत्वे कृते धातुसंज्ञायां क्विबादि इति क्रमिकान्वाख्यानपक्षमभिप्रेत्येदमिति भावः ॥ वस्तुतस्तु पदविभज्यान्वाख्यानपक्षे षत्वस्य त्रैपादिकत्वेन धातुसंज्ञा क्विब्लोपप्रातिपदिकस्वादिविधिसुलोपपसंज्ञाः प्रति असिद्धत्वेन प्रागप्राप्त्या पदसंज्ञोत्तरं पदान्तत्वेनापदान्तत्वाभावात्षत्वस्य प्राप्तिरेव नेति व्यर्थ एवायं षत्वस्यासिद्धत्वप्रदर्शको ग्रन्थ इति बोध्यम् ॥ न चान्तरङ्गत्वात्पूर्वमिडागमोत्तरमेव प्राप्तं षत्वं कथं पदसंज्ञां प्रतीक्षेतेति वाच्यम् । तथा सेदुष इत्यत्रापि अन्तरङ्ग इडागमो बहिरङ्गं संप्रसारणं नैव प्रतीक्षेतेति प्राचां मते, अकृतव्यूहपरिभाषया नवीनानां मते '**उपजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते**' इति परिभाषया षत्वस्य प्रागजायमानत्वादिति दिक् ॥ तस्माद् '**रुत्वं प्रति** रुत्वभागे रुत्वप्राप्तियोग्ये पदान्ततायां षत्वस्य **असिद्धत्वात्** अगतत्वात् अप्राप्तत्वात्' इत्यर्थे तु न काप्यनुपपत्तिरिति दाधिमथाः ॥ २ **विसर्ग इति** । रेफस्येत्यादिः ॥ ३ **षत्वस्यासिद्धत्वादिति** । पदान्ते षत्वस्याप्राप्त्या प्रमादपतितोऽयं पाठ इति 'रुत्वविसर्गौ' इत्येतावानेव पाठ इति बोध्यम् ॥ असिद्धत्वादित्यस्याप्राप्तत्वादित्यर्थो वा ॥ ४ **षत्वस्यासिद्धत्वादिति** । '**उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गम्**' इति न्यायेन सपादसप्ताध्यायीस्थकार्यप्रवृत्तिसंभावनायां त्रिपादीस्थकार्यस्याप्रवृत्तिकल्पनस्यावश्यकत्वेन क्विब्लोपसुलोपेभ्यः प्राक् षत्वस्य प्रवृत्त्यनङ्गीकारादिति भावः ॥ ५ '**संयोगादिलोपः संयोगान्तलोपे ( सिद्धः )**' इति वार्तिकेन सिद्धत्वात् परत्वादिति भावः ॥ ६ '**कुत्वस्यासिद्धत्वादिति**' 'संयोगादिलोपाप्राप्त्या' इति शेषः ॥ ७ 'वच्' धातोरित्यादिः ॥ वह धातोस्तु–'विविट् विविड्' इत्येवं रूपाणि बोध्यानि ॥ ८ 'दह धातोः' इत्यादिः ॥

वस्वन्तस्य भस्य संप्रसारणं स्यात् ॥ पूर्वरूपत्वम् । षत्वम् । विदुषः । विदुषा । वसुस्रंस्विति दत्वम् । विद्वद्भ्यामित्यादि ॥ सेदिवान् । सेदिवांसौ । सेदिवांसः । सेदिवांसम् । अन्तरङ्गोऽपी-[1]डागमः संप्रसारणविषये न प्रवर्तते, 'अकृतव्यूहाः'[2] इति परिभाषया । सेदुषः । सेदुषा । सेदिवद्भ्यामित्यादि ॥ 'सान्तमहतः'[3] इत्यत्र सान्तसंयोगोऽपि प्रातिपदिकस्यैव गृह्यते, न तु धातोः। महच्छब्दसाहचर्यात् । सुष्ठु हिनस्तीति सुहिन्[4] । सुहिंसौ । सुहिंसः । सुहिन्भ्याम् । सुहिन्सु ॥ ध्वत् । ध्वद् । ध्वसौ । ध्वसः । ध्वद्भ्याम् । एवं स्नत् ॥ **पुंसोऽसुङ् । ७ । १।८९ ॥** सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात् ॥ उकार उच्चारणार्थः । बहुपुंसी इत्यत्र 'उगितश्च' इति ङीबर्थं कृतेन पूञो ड्डुम्सुन्निति प्रत्ययस्योगित्त्वेनैव नुम्सिद्धेः । पुमान् । हे पुमन् । पुमांसौ । पुमांसः । पुंसः । पुंसा । पुंभ्याम्[5] । पुंभिः । पुंसु ॥ ऋदुशनेत्यनङ् । उशना । उशनसौ । उशनसः । [ अस्य[6] संबुद्धौ वाऽनङ् नलोपश्च वा वाच्यः * ॥ हे उशनन् । हे उशन । ] हे उशनः । उशनोभ्यामित्यादि ॥ अनेहा । अनेहसौ । अनेहसः । हे अनेहः । अनेहोभ्यामित्यादि ॥ वेधाः । वेधसौ । वेधसः । हे वेधः । वेधोभ्यामित्यादि । अधातोरित्युक्तेर्न दीर्घः । सुष्ठु वस्ते—सुवः । सुवसौ । सुवसः ॥ पिण्डं ग्रसते—पिण्डग्रः । पिण्डग्लः । ग्रसु ग्लसु अदने ॥ **अदस औ सुलोपश्च ।७।२।१०७ ॥** अदस औकारोऽन्तादेशः स्यात्सौ परे सुलोपश्च ॥ तदोः सः साविति दस्य सः । असौ ॥ **औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः सादुत्वं च*॥** प्रतिषेधसन्नियोगशिष्टमुत्वं तदभावे[9] न प्रवर्तते । असकौ । अमुकः[10] । त्यदाद्यत्व पररूपत्वम् ।

---

१ **अन्तरङ्गोऽपीति** ॥ बहिरङ्गशास्त्रीयनिमित्तसमुदायस्य 'शसः' अपेक्षया अन्तर्भूतवस्निमित्तकत्वेन इडागमोऽन्तरङ्गः । अन्तरङ्गस्येडागमस्य यन्निमित्तं 'वस्' इति, तदपेक्षया बहिर्भूतशस्निमित्तकत्वेन संप्रसारणस्य बहिरङ्गत्वमिति भावः ॥ २ इयं च परिभाषा लोकन्यायसिद्धापि 'समर्थानां प्रथमाद्वा' इत्यत्रत्येन समर्थग्रहणेन ज्ञाप्यते । तत्र च सामर्थ्यं परिनिष्ठितत्वं कृतसंधिकार्यत्वमेव ग्राह्यम् । 'सु उत्थित इञ्' इति स्थितेऽन्तरङ्गत्वात् पूर्वं सवर्णदीर्घे तत आदिवृद्धौ सौत्थितिरित्यादिसिद्धौ व्यर्थं समर्थग्रहणमेतत्परिभाषाज्ञापकमिति ज्ञापितायां त्वस्यां पूर्वं सवर्णदीर्घाप्रवृत्तौ वृद्धौ जातायामनिष्टं 'सौत्थितिः' इति मा भूद् इति समर्थग्रहणमिति स्वांशे चारितार्थ्यमिति प्राञ्चः ॥ नवीनास्तु 'वार्णादाङ्गं बलीयः' इति परिभाषया पूर्वं वृद्धिवारणाय समर्थग्रहणमिति न वैयर्थ्यमिति न ज्ञापकत्वमिति वदन्ति ॥ तेषां मते संप्रसारणस्य प्रतिपदविधित्वेनान्तरङ्गापेक्षयापि बलीयस्त्वात्पदसंस्कारपक्षे नैव कोऽपि दोषः इति बोध्यम् ॥ 'उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते' इति न्यायेन प्रातिपदिकार्थसूत्रभाष्यव्यञ्जितेनैव सर्वेष्टसिद्धिरिति दिक् ॥ ३ नवीनास्तु—'सर्वनामस्थाने' इत्यनुवर्तनेन 'सर्वनामस्थाननिमित्तको यो नकारस्तस्योपधायाः' इति व्याचक्षते । तेषां मते 'राजा राजानौ पञ्चानाम्' इत्यादिसिद्ध्ये तत्र तथा नार्थः 'अत्र त्वेवम्' इत्यत्र विनिगमकमन्वेष्यम् ॥ ४ सयोगान्तलोपस्यासिद्धत्वाद् नस्य लोपो नेति भावः ॥ ५ पदान्तत्वान्नस्य नानुस्वार इति भावः ॥ ६ पदान्तत्वान्मस्यानुस्वार इति भावः ॥ ७ वृत्तिगाधवानुसारेणेदम् ॥ भाष्याद्यनुक्तत्वादप्रमाणमिति प्रामाणिकाः ॥ ८ अदसः परस्य सोरेव त्वौत्वकरणे स्त्रीलिङ्गे 'असौ ब्राह्मणी' इत्यत्र त्यदाद्यत्वे टापि 'औङ आपः' इति शीभावापत्तिरतस्त्यदाद्यत्वापवाद एवौकारः स्वीकृत इति भाष्ये स्पष्टम् ॥ ९ **तदभावे.** औत्वप्रतिषेधाभावे औत्वपक्षे । '**संनियोगशिष्टानामन्यतरापाये उभयोरप्यपायः**' इति लौकिकन्यायस्य 'बिल्वकादिभ्यश्छस्य लुक्' इत्यत्र छग्रहणेनात्राप्याश्रयणस्य ध्वननात् ॥ १० अमुकशब्दस्त्वव्युत्पन्नोऽपीति तस्यामुक इति प्रथमैकवचने साधनीयः ॥ अमुकस्मै इति तु साकच्कस्यास्यैवेति बोध्यम् ॥

वृद्धिः । अदसोऽसेरिति मत्वोत्वे । अमू । जसः शी । आद्गुणः ॥ **एत ईद्बहुवचने।८।२।८१** ॥ अदसो दात्परस्यैत ईत्स्याद्दस्य च मो बह्वर्थोक्तौ ॥ अमी ॥ पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक्, पश्चादुत्वमत्वे । अमुम् । अमू । अमून् । मुत्वे कृते घिसंज्ञायां नाभावः ॥ **न मु ने ८।२।३** ॥ नाभावे कर्तव्ये[1] कृते[2] च मुभावो नासिद्धः स्यात् । अमुना । अमूभ्याम् ३ ॥ अमीभिः । अमुष्मै । अमीभ्यः २ । अमुष्मात् । अमुष्य । अमुयोः । । अमीषाम् । अमुष्मिन् । अमुयोः अमीषु ॥ ॥

इति हलन्तपुँल्लिङ्गप्रकरणम् ।

---

## अथ हलन्तस्त्रीलिङ्गप्रकरणम् ।

**नहो धः ।८।२।३४॥** नहो हस्य धः स्याज्झलि पदान्ते च । उपानत् । उपानद् । उपानहौ । उपानहः । उपानद्भ्याम् । उपानत्सु । उत्पूर्वात् ष्णिह प्रीतावित्यस्मादृत्विगादिना क्विन्। निपातनाद्दलोपषत्वे । क्विन्नन्तत्वात्कुत्वेन हस्य घः । जश्त्वचर्त्वे । उष्णिक् । उष्णिग् । उष्णिहौ । उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु ॥ द्यौः । दिवौ । दिवः । द्युषु ॥ गीः । गिरौ । गिरः । एवं पूः ॥ चतुरश्चतस्रादेशः । चतस्रः २ । चतसृणाम् ॥ किमः कादेशे टाप् । का के । काः । सर्वावत् ॥ **यः सौ ।७।२।११०** ॥ इदमो दस्य यः स्यात्सौ ॥ इदमो मः ॥ इयम् । त्यदाद्यत्वं टाप् । दश्चेति मः । इमे । इमाः । इमाम् । इमे । इमाः । अनया ॥ हलि लोपः ॥ आभ्याम् ३ । आभिः । अस्यै । अस्याः । अनयोः २ । आसाम् । अस्याम् । आसु ॥ अन्वादेशे तु । एनाम् । एने । एनाः । एनया । एनयोः २ । ऋत्विगादिना सृजेः क्विन् अमागमश्च निपातितः । स्रक् । स्रग् । स्रजौ । स्रजः । स्रग्भ्याम् । स्रक्षु ॥ त्यदाद्यत्वम् । टाप् । स्या । त्ये । स्याः ॥ एवं तद् यद् एतद् ॥ वाक् । वाग् । वाचौ । वाचः । वाग्भ्याम् । वाक्षु ॥ अप्शब्दो नित्यं बहुवचनान्तः । 'अप्तृन्'इति दीर्घः । आपः । अपः ॥ **अपो भि ।७।४।४८** ॥ अपस्तकारः स्याद्भादौ प्रत्यये परे ॥ अद्भिः । अद्भ्यः २ । अपाम् । अप्सु ॥ दिक् । दिग् । दिशौ । दिशः । दिग्भ्याम् । दिक्षु ॥ 'त्यदादिषु' इति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक्।दृग् । दृशौ । दृशः॥त्विट् । त्विड् । त्विषौ । त्विषः । त्विड्भ्याम् । त्विट्त्सु । त्विट्सु सह जुषते इति–सजूः । सजुषौ । सजुषः । सजूर्भ्याम् । सजूष्षु । सजूःषु ॥ षत्वस्या-

१ कर्तव्ये इत्युक्त्या 'अद आ' इत्यवस्थायां 'टाङसिङ' इत्येतस्मात्परत्वेन 'अदसोऽसेः' इति प्रवर्तते 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधः' इत्यस्याप्रवृत्तेरिति भावः ॥ २ कृते चेत्युक्त्या 'सुपि च' इति दीर्घो न प्रवर्तत इति भावः ॥ ३ कैयटमतेनेदमिति बोध्यम्। दीक्षितसिद्धान्ते तु 'ढडगकाः' इत्येवं क्रमो बोध्यः ॥ 'उष्णिगञ्चु' इति निर्देशेन लौकिकतक्रकौण्डिन्यन्यायबाधस्यैवौचित्यात् ॥ ४ 'उभादुदात्तो नित्यम्' इत्यत्रेव शब्दपरत्वान्न सर्वनामकार्यं पुंवद्भाव इति बोध्यम् ॥

सिद्धत्वात्[1] रुत्वम् । आशीः । आशिषौ । आशिषः । आशीर्भ्याम् ॥ असौ । त्यदाद्यत्वम् । टाप् । औङः शी । उत्वमत्वे । अमू । अमूः । अमूम् । अमू । अमूः । अमुया । अमूभ्याम् । अमूभिः । अमुष्यै । अमूभ्याम् । अमूभ्यः । अमुष्याः २ । अमुयोः २ । अमूषाम् । अमुष्याम् । अमूषु ॥

इति हलन्तस्त्रीलिङ्गप्रकरणम् ॥

---

## अथ हलन्तनपुंसकलिङ्गप्रकरणम् ।

स्वमोर्लुक् । दत्वम्[2] । स्वनडुत् । स्वनडुद् । स्वनडुही । चतुरनडुहोरित्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् ॥ दिव उत् ॥ अहर्विमलद्यु । अन्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्येवोत्तरखण्डस्यापि पदसंज्ञायां[3] प्राप्तायाम् **'उत्तरपदत्वे[4] चापदादिविधौ प्रतिषेधः'**, * इति प्रत्ययलक्षणं न । विमलदिवी । विमलदिवि ॥ अपदादिविधौ[5] किम् ? दधिसेचौ । इह षत्वनिषेधे कर्तव्ये पदत्वमस्त्येव । कुत्वे[6] तु न ॥ वाः । वारी । अझलन्तत्वान्न नुम् । वारि ॥ चत्वारि ॥ न लुमतेति कादेशो न । किम् । के । कानि ॥ इदम् । इमे । इमानि ॥ **अन्वादेशे नपुंसके एनद्वक्तव्यः** * ॥ एनत्[7] । एने । एनानि । एनेन एनयोः २ ॥ ब्रह्म । ब्रह्मणी । ब्रह्माणि । हे ब्रह्मन् । हे ब्रह्म ॥ रोऽसुपि[8]—अहर्भाति । विभाषा ङिश्योः । अह्नी । अहनी । अहानि ॥ **अहन् ।८।२।६८ ॥** अहन्नित्यस्य रुः स्यात् पदान्ते ॥ अहोभ्याम् । अहोभिः । इह अहः अहोभ्यामित्यादौ रत्वरुत्वयोरसिद्धत्वान्नलोपे प्राप्ते—'अहन्' इत्यावर्त्य नलोपाभावं निपात्य द्वितीयेन रुर्विधेयः । तदन्तस्यापि रुत्वरत्वे । दीर्घाण्यहानि

---

१ **असिद्धत्वादिति** । गतेरपि प्राप्त्यपरपर्यायत्वात् गतौ प्राप्तेरपि गणनाद् अप्राप्तत्वादित्यर्थः ॥ प्राप्त्यभावश्चापदान्तत्वाभावादिति बोध्यम् ॥ २ **दत्वमिति** । 'पदाङ्गाधिकारे तस्य तदन्तस्य च ' इति परिभाषया पदाधिकारे तदन्तविधिना ' अनडुच्छब्दान्तस्य पदस्य दत्वम् ' इत्यर्थाङ्गीकारेण ' न लुमताङ्गस्य ' इत्यस्य ' न लुमता तस्मिन् ' इति न्याससमानप्रयोजनकतासाधनाय ' लुमल्लुप्तप्रत्ययाव्यवहितपूर्वत्वनिमित्तककार्यस्यैव कर्तव्यत्वे प्रत्ययलक्षणं न ' इत्यर्थाङ्गीकारेण 'सुप्तिङन्तम्' इति पदत्वनिमित्तककार्यस्य निषेधाभावादिति भावः ॥ ३ **पदसंज्ञायामिति** । ' दिव उत् ' ' इत्येतन्निमित्तभूतायाम् ' इत्यादिः ॥ ४ ' **वृत्तिचरमखण्डस्य** पदत्वप्रयुक्ते पदादिविधिभिन्ने कार्ये कर्तव्ये प्रत्ययलक्षणं न ' इत्यर्थकेन समासचरमावयव ' दिव् ' इत्यस्य पदत्वप्रयुक्ते ' दिव उत् ' इति कार्ये कर्तव्ये प्रत्ययलक्षणनिषेधेन पदत्वाप्राप्त्यैव नोत्त्वप्राप्तिरिति भावः ॥ 'परमदण्डिप्रियः ' इत्यत्र दण्डिशब्दस्य नोत्तरपदत्वमिति नलोपे प्रत्ययलक्षणं भवत्येवेति ॥ ५ ' **पदादिविधि**'-शब्देन प्रतिपदोक्तः ' सात्पदाद्योः ' इति षत्वनिषेध एव गृह्यते इति तस्मिन् कर्तव्ये प्रत्ययलक्षणं भवत्येवेति पदत्वमस्त्येवेति षत्वनिषेधो भवत्येवेति तात्पर्यम् ॥ ६ **कुत्वे त्विति** । कुत्वस्य पदादिविधित्वाभावात्प्रत्ययलक्षणं न भवतीति पदत्वाभावात् कुत्वं नैव भवतीति भावः ॥ एवमेव ' बहुसेचौ ' इत्यादौ बोध्यम् ॥ ७ ' न लुमताऽङ्गस्य ' इत्यस्यानित्यत्वात् एनदादेशविधानसामर्थ्याद्वा प्रत्ययलक्षणेन द्वितीयैकवचनेऽपि एनदादेशो भवत्येवेति ॥ अयं चादेशो द्वितीयैकवचन एव भवति ' एनदिति नपुंसकैकवचने ' इति वार्तिकात् ॥ एवं चान्यत्र त्वेनादेश एवेति बोध्यम् ॥ ८ ' असुपि ' इत्यस्य प्रसज्यप्रतिषेधत्वेन ' सुपि न ' इति प्रतिषेधस्य करणीयत्वे ' न लुमता ' इत्यनेन प्रत्ययलक्षणप्रतिषेधात् सुप्परत्वाभावेन नैव रेफस्य प्रतिषेधः ॥

यस्मिन् स दीर्घाहा निदाघः । इह हल्ङ्यादिलोपे प्रत्ययलक्षणेनासुपीति निषेधाद्रुत्वभावे रुः । तस्यासिद्धत्वान्नान्तलक्षण उपधादीर्घः । संबुद्धौ तु हे दीर्घाहो निदाघ । दीर्घाहानौ । दीर्घाहानः । दीर्घाह्ना । दीर्घाहोभ्याम् ॥ दण्डि । दण्डिनी । दण्डीनि ॥ स्रग्वि । स्रग्विणी । स्रग्वीणि ॥ वाग्ग्मि । वाग्ग्मिनी । वाग्ग्मीनि ॥ बहुवृत्रहाणि ॥ बहुपूषाणि ॥ बह्वर्यमाणि ॥ असृजः पदान्ते कुत्वम् । सृजेः क्विनो विधानात् ॥ विश्वसृडादौ तु न । सृजिदृशोरिति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगात् ॥ यद्वा व्रश्चादिसूत्रे सृजियज्योः पदान्ते षत्वं कुत्वापवादः । स्रगृत्विक्शब्दयोस्तु निपातनादेव कुत्वम् ॥ असृक्शब्दस्तु अस्यतेरौणादिके ऋच्प्रत्यये बोध्यः । असृक् । असृग् । असृजी । असृञ्जि । 'पद्दन्न' इति वा असन् । असानि । असृजा । अस्ना । असृग्भ्याम् । असभ्यामित्यादि ॥ ऊर्क् । ऊर्ग् । ऊर्जि । ऊर्न्जि नरजानां संयोगः ॥ **बहूर्जि नुम्प्रतिषेधः * ॥ अन्त्यात्पूर्वो वा नुम् *** ॥ बहूर्जि । बहूर्ञ्जि वा कुलानि । त्यत् । त्यद् । त्ये । त्यानि ॥ तत् । तद् । ते । तानि ॥ यत् । यद् । ये । यानि ॥ एतत् । एतद् । एते । एतानि ॥ अन्वादेशे तु—एनत् ॥ बेभिद्यतेः क्विप् । बेभित् । बेभिद् । बेभिदी । शावल्लोपस्य स्थानिवत्त्वादझलन्तत्वान्न नुम् । अजन्तलक्षणस्तु नुम् न । सर्वविधौ स्थानिवत्त्वाभावात् । बेभिदि ब्राह्मणकुलानि । चेच्छिदि ॥

---

१ 'दीर्घाहाः' इत्यस्य साधनक्रमं दर्शयति-**इहेत्यादिना** । 'दीर्घाहन् सु' इत्यवस्थायां नान्तलक्षण उपधादीर्घे प्राप्ते 'हल्ङ्याब्' इति सुलोपे च प्राप्ते परत्वान्नित्यत्वाच्चोपधादीर्घे प्राप्तेऽपि दीर्घस्य उपधाया अङ्गस्य सर्वनामस्थानस्य संबुद्धेश्चापेक्षणात्पञ्चापेक्षत्वेन सुलोपस्य हल्संज्ञाया अपृक्तसंज्ञायाः सोश्चाश्रयणात् त्र्यपेक्षत्वेन त्रित्वसंख्यायाः पञ्चान्तर्भूतत्वेन त्र्यपेक्षलोपस्यान्तरङ्गत्वात् पञ्चसंख्यायास्त्रित्वसंख्याबहिर्भूतत्वेन पञ्चापेक्षदीर्घस्य बहिरङ्गत्वात् 'असिद्धं बहिरङ्गमन्तरङ्गे' इति समकालप्राप्तबहिरङ्गस्यासिद्धत्वेन सुलोपे जाते 'दीर्घाहन्' इत्यवस्थायां रुत्वे दीर्घे च प्राप्ते 'पूर्वत्रासिद्धम्' इति रुत्वस्यासिद्धत्वात्पूर्वं दीर्घे ततो रुत्वमिति मनसि निधायाह—**रुरिति** । 'यद्यपि प्राप्तः, तथापि' इति शेषः ॥ **दीर्घ इति** । 'ततो रुः' इति शेषः ॥ न च 'राजा' इत्येतत्साधनपरस्वग्रन्थविरोध इति वाच्यम्, तद्ग्रन्थस्य 'असिद्धपरिभाषाया अनित्यत्वेनाश्रयणेन साधनपरत्वात् । अत्रत्यग्रन्थस्य तदाश्रयणेन साधनपरत्वात् । अनित्यत्वे फलाभेददर्शने एव तात्पर्यस्य दर्शनीयत्वादिति दिक् ॥ २ **निपातनादेवेति** । 'पदान्ते' इति शेषः ॥ अत एव—'स्रजा त्विनिः' इति सूत्रनिर्देशः 'यज्ञर्त्विग्भ्यां घखञौ' इति सूत्रभाष्ये '**आर्त्विजीनं ब्राम्हणकुलम्**' इति, पस्पशायाम् '**आर्त्विजीनाः स्याम**' इति प्रयोगः संगच्छते ॥ एतेन 'बाधकान्येव निपातनानि' इति औजसादावपि कुत्वापत्तिरिति परास्तम् ॥ स्रज्-ऋत्विज् इत्यानुपूर्वीकशब्द एव निपातनम्, नतु सृज्यज्धातुविषयकं निपातनम् । '**रज्जुसृड्भ्याम्**' '**उपयड्क्ष्यति**' इति भाष्यप्रयोगे षत्वदर्शनादिति तत्त्वम् ॥ ३ 'नपुंसकस्य झलचः' इत्यत्र 'अचः परा झल्जातिः' इत्याश्रयणेनेदं वार्तिकं भाष्यकृता प्रत्याख्यातम् ॥ ४ बहूर्ज्शब्दविषयक एवायं नुम्विकल्प इति बोध्यम् ॥ ५ **स्थानिवत्त्वादिति** । परं क्विपं निमित्तीकृत्य जायमानोऽल्लोपरूपोऽजादेशः स्थानिभूताद् अचः अकारात् पूर्वत्वेन दृष्टस्य 'बेभिद्' इति झलन्तस्य झलन्तत्वप्रयुक्ते नुमि कर्तव्ये स्थानिवत् इति अङ्गस्य झलन्तत्वापगमे नैव नुमः प्राप्तिरिति भावः ॥ ६ एवं स्थानिवत्त्वेनाङ्गस्याजन्तत्वे जातेऽजन्तत्वलक्षणो नुम् स्यात् इति शङ्कामपहरति-**अजन्तलक्षणस्त्विति** ॥ स्थानिभूताद् अकारात् प्राग्भागस्य अजन्तत्वाभावात् अजन्तस्य स्थानिभूतादचः पूर्वत्वेन दर्शनाभावान्नैव स्थानिवत्त्वमिति नैवाजन्तलक्षणो नुमिति भावः ॥

गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः । असंध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥ १ ॥
स्वमुसुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः । चत्वारि शेषे दशके रूपाणीति विभावय ॥२॥
तथाहि । गामञ्चतीति विग्रहे ऋत्विगादिनाक्विन् । गतौ नलोपः । 'अवङ् स्फोटायनस्य' इत्यवङ्--गवाक्, गवाग् । 'सर्वत्र विभाषा' इति प्रकृतिभावे--गोअक्, गोअग् । पूर्वरूपे--गोक्, गोग् । पूजायां नस्य कुत्वेन ङः--गवाङ्, गोअङ्, गोङ्, ॥ अम्यपि एतान्येव नव ॥ औङः शी, भत्वात् 'अचः' इत्यलोपः । गोची ॥ पूजायां तु । गवाञ्ची । गोअञ्ची । गोञ्ची । जश्शसोः शिः । शेः सर्वनामस्थानत्वान्नुम् । गवाञ्चि । गोअञ्चि गोञ्चि । गतिपूजनयोस्त्रीण्येव ॥ गोचा । गवाञ्चा । गोअञ्चा । गोञ्चा । गवाग्भ्याम् । गोअग्भ्याम् । गोग्भ्याम् । गवाङ्भ्याम् । गोअङ्भ्याम् । गोङ्भ्याम् । इत्यादि ॥ सुपि तु । ङान्तानां पक्षे ङ्णोः कुगिति कुक्, गवाङ्क्षु, गोअङ्क्षु, गोङ्क्षु । गवाङ्षु, गोअङ्षु, गोङ्षु । गवाक्षु, गोअक्षु, गोक्षु । न चेह 'चयो द्वितीयाः' इति पक्षे ककारस्य खकारेण षण्णामाधिक्यं शङ्क्यम् । चर्त्वस्यासिद्धत्वात् । कुक्पक्षे तु तस्यासिद्धत्वाज्जश्त्वाभावे पक्षे द्वितीयादेशात्त्रीणि रूपाणि वर्धन्त एव ॥
ऊनमेषां द्विर्वचनानुनासिकविकल्पनात् । रूपाण्यश्वाक्षिभूतानि ५२७ भवन्तीति मनीषिभिः ॥१॥
तिर्यक् । तिरश्ची । तिर्यञ्चि । पूजायां तु । तिर्यङ् । तिर्यञ्ची । तिर्यञ्चि ॥ यकृत् । यकृती । यकृन्ति । 'पद्दन्' इति वा यकन् । यकानि । यक्ना । यकृता ॥ शकृत् । शकृती शकृन्ति । शकानि । शक्ना । शकृता । ददत् । ददती ॥ **वा नपुंसकस्य** ।७।१।७९ ॥ अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य नुम् वा स्यात्सर्वनामस्थाने परे ॥ ददन्ति । ददति ॥ तुदत् ॥ **आच्छीनद्योर्नुम्** ।७।१।८० ॥ अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्याङ्गस्य नुम् वा स्याच्छीनद्योः परतः ॥ तुदन्ती । तुदती । तुदन्ति ॥ भात् । भान्ती । भाती । भान्ति ॥ पचत् ॥ **शप्श्यनोर्नित्यम्** ।७।१।८१ ॥ शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्याच्छीनद्योः परतः ॥ पचन्ती । पचन्ति ॥ दीव्यत् । दीव्यन्ती । दीव्यन्ति ॥ स्वप् । स्वब् । स्वपी ॥ नित्यात्परादपि नुमः प्राक् 'अप्तृन्' इति दीर्घः, प्रतिपदोक्तत्वात् । स्वाम्पि । 'निरवकाशत्वं प्रतिपदोक्तत्वम्' इति पक्षे तु प्रकृते तद्विरहान्नुमेव--स्वम्पि । स्वपा । अपो भि ॥ स्वद्भ्याम् । स्वद्भिः ॥ 'आर्तपूर्वपि'--इत्यादिना धनेरुस् । रुत्वम् । धनुः । धनुषी । 'सान्त' इति दीर्घः । 'नुम्विसर्जनीय' इति षत्वम् । धनूंषि । धनुषा । धनुर्भ्याम् ॥ एवं चक्षुर्हविरादयः ॥ पिपठिषतेः क्विप् । वोंरिति दीर्घः । पिपठीः । पिपठिषी । अल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम् न । स्वविधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि नुम् न । पिपठिषि । पिपठीर्भ्यामित्यादि ॥ पयः ।

---

१ 'जायन्ते नव सौ, तथाभि च नव, भ्यांभिस्भ्यसां संगमे षट्संख्यानि, नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि । चत्वार्यन्यवचःसु कस्य विबुधाः शब्दस्य रूपाणि तज्जानन्तु प्रतिभास्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥' इति प्रश्नस्योत्तरमाह--गवाक्शब्दस्येति ॥ २ तुनाऽरुचिः सूचिता । सा च 'शीघ्रोपस्थितिकतया प्रतिपदविधेः सर्वतो बलीयस्त्वेन पूर्वं दीर्घ एव ततो नुम् इति भावः ॥

पयसी। पयांसि। पयसा । पयोभ्यामित्यादि॥ सुपुम्। सुपुंसी । सुपुमांसि॥ अदः । विभक्तिकार्यम् । उत्वमत्वे । अमू । अमूनि । शेषं पुंवत् ।

इति हलन्तनपुंसकलिङ्गप्रकरणम् ।

---

## अथाव्ययप्रकरणम् ।

**स्वरादिनिपातमव्ययम्** ।१।१।३७॥ स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः ॥ स्वर्, अन्तर्, प्रातर्, पुनर्, सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, ऋते, युगपत्, आरात्, पृथक्, ह्यस्, श्वस्, दिवा, रात्रौ, सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, बहिस्, अवस्, समया, निकषा, स्वयम्, वृथा, नक्तम्, नञ्, हेतौ, इद्धा, अद्धा, सामि, "वत्" ( ब्राह्मणवत्, क्षत्रियवत्, ) सना, सनत्, सनात्, उपधा, तिरस्, अन्तरा, अन्तरेण, ज्योक्, कम्, शम्, सहसा, विना, नाना, स्वस्ति, अलम्, वषट्, श्रौषट्, वौषट्, अन्यत्, ( अस्ति ) उपांशु, क्षमा, विहायसा, दोषा, मृषा, मिथ्या, मुधा, पुरा, मिथो, मिथस्, प्रायस्, मुहुस्, प्रवाहुकम्, प्रवाहिका, आर्यहलम्, अभीक्ष्णम्, साकम्, सार्धम्, नमस्, हिरुक्, धिक्, अम्, आम्, प्रताम्, प्रशाम्, प्रतान्, मा, माङ् । आकृतिगणोऽयम् ॥ च, वा, ह, अह, एव, एवम्, नूनम्, शश्वत्, युगपत्, भूयस्, कूपत्, सूपत्, कुवित्, नेत, चेत्, चण्, कच्चित्, किंचित्, यत्र, नह, हन्त, माकिः, माकीम्, नकिः, आकिम्, माङ्, नञ्, यावत्, तावत्, त्वै, द्वै, न्वै, रै, श्रौषट्, वौषट्, स्वाहा, स्वधा, तुम्, तथाहि, खलु, किल, अथो, अथ, सुष्ठु, स्म, आदह । "**उपसर्गविभक्तिस्वरप्रतिरूपकाश्च ।**" ' ( अवदत्तम् । अहंयुः, अस्तिक्षीरा । अ, आ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ, ' पशु, शुकम्, यथाकथाच, पाट्, प्याट्, अङ्ग, है, हे,

---

१ '**वत्**' इति गणसूत्रस्योदाहरणे ॥ २ अप्रामाणिकोऽस्य पाठ इति शेखरे ॥ ३ '**प्रशान्**' इति नान्तपाठोऽसांप्रदायिक इति शेखरे ॥ ४ 'आङ्माङोश्च' इति सूत्रभाष्ये निरनुबन्धकमाशब्दस्य नैव प्रतिषेधार्थत्वमिति यद्यपि ध्वनितम् तथापि '**मा ते सङ्गोऽस्त्वकर्मणि**' इत्यादिभारतादिप्रयोगैः सूच्यत एव निरनुबन्धकमाशब्दस्य सत्तेति नव्याः । दाधिमथास्तु माङ्प्रयोगेऽपि '**छन्दोवत् कवयः कुर्वन्ति**' इति '**सर्वे विधयश्छन्दसि विकल्प्यन्ते**' इत्यनेन लुङो वैकल्पिकत्वेन लोटः साधुत्वे निरनुबन्धकमाशब्दाङ्गीकारो वृथैवेति कल्पनां क्षाम्यन्तु क्षमाशीला इति वदन्ति ॥ ५ कामम्, प्रकामम्, भूयस्, सांप्रतम्, परमम्, साक्षात्, साचि, सत्यम्, मङ्क्षु, आशु, संवत्, अवश्यम्, सपदि, बलवत्, प्रादुस्, आविस्, अनिशम्, नित्यम्, नित्यदा, सदा, अजस्रम्, उषा, रोदसी, ओम्, भूः, भुवः, झटिति, झगिति, तरसा, सुष्ठु, दुष्ठु, सु, अट्, कु, अञ्जसा, मिथु, भाजक्, चिराय, चिररात्राय, चिरस्य, चिरम्, चिरेण, चिरात्, अस्तम्, आनुषक्, अम्नस्, स्थाने, वरम्, सुदि, वदि, यत्, तत्, आहोस्वित्, सीम्, कम्, शुकम्, अनुकाम्, शम्बट्, व, दिष्ट्या, चटु, चाटु, हुम्, इव, अद्यत्वे । इत्यादि ॥ ६ 'उञ्' 'सुञ्' इति निपातावप्यत्र बोध्यौ॥ ७ '**अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि । सुदत्तमनुदत्तं च निदत्तमिति चेष्यते** ॥' इत्यत्रोपसर्गसमाकारोपसर्गभिन्नत्वादेव 'अच उपसर्गात्' इति तादेशो नेति भावः ॥ ८ 'अहंशुभमोर्युस्' इति युस्प्रत्यये तद्धितान्तत्वात्प्रातिपदिकत्वेऽपि सुबन्तास्मत्सदृशशब्दान्तरत्वेन 'सुपो धातु' इति न सोर्लुक् इति भावः ॥ एवमेव 'अस्ति' इत्यस्य तिङन्तसदृशशब्दान्तरत्वेन मतुप् सिद्ध इति भावः ॥

भोः अये, घ, विषु, एकपदे, युत्, आतः । चादिरप्याकृतिगणः ॥ **तद्धितश्चासर्वविभक्तिः १।१।३८** ॥ यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात् ॥ परिगणनं कर्तव्यम् । तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । अम् । आम् । कृत्वोर्थाः ॥ तसिवती । नानाञाविति ॥ तेनेह न—पचतिकल्पम् । पचतिरूपम् ॥ **कृन्मेजन्तः ।१।१।३९॥** कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् ॥ स्मारंस्मारम् । जीवसे । पिबध्यै ॥ **क्त्वातोसुन्कसुनः । १ । १ । ४०** ॥ एतदन्तमव्ययं स्यात् । कृत्वा । उदेतोः । विसृपः ॥ **अव्ययीभावश्च । १ । १। ४१** ॥ अधिहरि ॥ **अव्ययादाप्सुपः । २ । ४ । ८२** ॥ अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् ॥ तत्र शालायाम् । विहितविशेषणान्नेह । अत्युच्चैसौ । अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति तथापि न गौणे । **आब्ग्रहणं व्यर्थमलिङ्गत्वात्** *॥

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥**

इति श्रुतिर्लिङ्गकारकसंख्याऽभावपरा ।

**वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपं चैव हलन्तानां यथा वाचा निशा दिशा॥**

वगाहः । अवगाहः । पिधानम् । अपिधानम् ॥

इत्यव्ययप्रकरणम् ।

## अथ स्त्रीप्रत्ययप्रकरणम् ।

**स्त्रियाम् ।४।१।३** ॥ अधिकारोऽयम् । समर्थानामिति यावत् ॥ **अजाद्यतष्टाप् । ४ । १ । ४** ॥ अजादीनामकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् ॥ अजाद्युक्तिर्ङीषो ङीपश्च बाधनाय । अजा । अतः,—खट्वा ॥ अजादिभिः स्त्रीत्वस्य विशेषणान्नेह ।

---

१ 'नाव्ययीभावादतः' इति निषेधसामर्थ्येन अव्ययीभावात् परस्या विभक्तेर्लुग्ज्ञापनस्य 'अनुत्तरपदस्थस्य' इत्यनुवर्तनेन 'उपपयःकारः' इत्याद्यव्ययीभावे सत्त्वाभावस्य सिद्धत्वेन मुखस्वरस्य 'नाव्ययाव्ययीभावात्' इति न्यासेन सिद्धौ 'अव्ययीभावश्च' इति सूत्रं न करणीयमिति भाष्ये स्पष्टम् ॥ २ **'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्'** इति तदन्तविधौ वार्तिकात् ॥ ३ 'अव्ययम्' इति महासंज्ञाकरणात् ॥ ४ **'इहान्ये वैयाकरणा आरभन्ते तदिहापि साध्यम्'** इति बहुत्र भाष्योपलम्भात् 'सर्वेषां व्याकरणानां पूर्वपूर्वव्याकरणमूलत्वेनैव प्रामाण्यम्' इति व्याकरणाधिकरणसिद्धान्तेन भागुर्युक्तलोपस्य पृषोदरादित्वम् आप्प्रकृतिहलन्तानामजादित्वं कल्पनीयमाकृतिगणत्वादिति बोध्यम् । अत एव **'आबपि अकारान्ताद्विधीयते'** इत्युक्तेः **'यस्तर्ह्यनकारान्तात क्रुञ्चा-देवविशा'** इति इत्युक्तं भाष्ये ॥ **'अकारान्तात्-'** इत्याद्यग्रिमभाष्यं तु स्वकीयप्रौढिदर्शनायैवेति भाष्यविदां स्पष्टं प्रतीयते इति दाधिमथाः ॥ ५ अज, एडक, अश्व, चटक, मूषक, बाल, वत्स, होड, पाक, मन्द, विलात, पूर्वापहाण, उत्तरापहाण, क्रुञ्चा, उष्णिहा, देवविशा, ज्येष्ठा, कनिष्ठा, मध्यमेति पुंयोगेऽपि, कोकिला जातौ, दंष्ट्रा, एतेऽजादयः ॥ आकृतिगणोऽयम् ॥ ६ स्त्रीप्रत्ययेषु तदन्तविधावपि 'स्त्रियाम्' इत्येतद्गृह्यमाणविशेषणमेव, न तदन्तविशेषणमित्यभिप्रेत्याह—**अजादीनामिति** । अत एव प्रत्ययविधावपि षष्ठी कृता न पञ्चमीति भावः ॥ ७ अदन्तत्वादेव सिद्धौ व्यर्थोऽजादिगणाट्टाब्विधिरिति शङ्कमानं प्रत्याह—**अजाद्युक्तिरिति** ॥ अनुपदमेव व्यक्तीकरिष्यत इति भावः ॥ ८ **अत इति** । अकारान्तादित्यर्थः ॥ ९ 'स्त्रियाम्' इत्यस्य गृह्यमाणविशेषणताफलं दर्शयति—**अजादिभिरिति** ॥ **स्त्रीत्वमिति** । 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इत्यनेन स्त्रीत्वस्य द्विगवर्थताया एव विधानान्न गृह्यमाणविशेषणत्वमिति भावः॥

पञ्चाजी। अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम् ॥ अजा. एडका. अश्वा. चटका. मूषिका. एषु जातिलक्षणो ङीष् प्राप्तः। बाला. वत्सा. होडा. मन्दा. बिलाता. एषु 'वयसि प्रथमे' इति ङीप् प्राप्तः ॥ **संभस्त्राजिनशणपिण्डेभ्यः फलात्** * ॥ संफला। भस्त्रफला। ङ्यापोरिति ह्रस्वः ॥ **सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्** * ॥ सत्पुष्पा। प्राक्पुष्पा। प्रत्यक्पुष्पा। **शूद्रा चामहत्पूर्वा जातिः** * ॥ पुंयोगे तु शूद्री। अमहत्पूर्वा किम्? महाशूद्री ॥ क्रुञ्चा. उष्णिहा. देवविशा. ज्येष्ठा. कनिष्ठा, मध्यमेति पुंयोगेऽपि ॥ कोकिला जातावपि ॥ **मूलान्नञः** * ॥ अमूला ॥ ऋन्नेभ्यो ङीप् ॥ कर्त्री। दण्डिनी ॥ **उगितश्च। ४। १। ६ ॥** उगिदन्तात्प्रातिपदिकात् स्त्रियां ङीप् स्यात्। भवती। पचन्ती। दीव्यन्ती। शप्श्यनोरिति नुम्। उगिदचामिति सूत्रेऽज्ग्रहणेन 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति' नियम्यते। तेनेह न—उखास्रत्। क्विप्। अनिदितामिति नलोपः। पर्णध्वत्। अञ्चतेस्तु स्यादेव—प्राची, प्रतीची ॥ **वनो र च। ४।१।७ ॥** वन्नन्तात्तदन्ताच्च प्रातिपदिकात् स्त्रियां ङीप् स्यात् रश्चान्तादेशः ॥ वन्निति ङ्वनिप्क्वनिब्वनिपां सामान्यग्रहणम् ॥ **प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्।** तेन[A] प्रातिपदिकविशेषणात्तदन्तान्तमपि लभ्यते। सुत्वानमतिक्रान्ता अतिसुत्वरी। अतिधीवरी। शर्वरी। **वनो न हश इति वक्तव्यम्** * ॥ हशन्ताद्धातोर्विहितो यो वन् तदन्तात्तदन्तान्ताच्च प्रातिपदिकात् ङीप् रश्च नेत्यर्थः ॥ ओणृ अपनयने। वनिप्। विड्वनोरित्यात्वम्। अवावा ब्राह्मणी। राजयुध्वा ॥ **बहुव्रीहौ वा** * ॥ बहुधीवरी। बहुधीवा। पक्षे डाब् वक्ष्यते ॥ **पादोऽन्यतरस्याम्। ४।१।८ ॥** पाच्छब्दः

---

१ कुत्र ङीप् बाध्यते, कुत्र ङीष् इति दर्शयति-**अजा इत्यादिना ङीष् प्राप्त इत्यन्तेन** ॥ २ **संभस्त्रा, सदच, मूलादिति** वार्तिकत्रयं ङीष्प्रतिषेधार्थं पाककर्णेति सूत्रे पठितमपि फले विशेषाभावादत्रैव निर्दिष्टमतो गणसूत्राणीमानीति न भ्रमितव्यम्। एवमेव **श्वेताच्च, त्रेश्चे**त्यपि वार्तिकद्वयमत्र ज्ञेयम्। तेन श्वेतफला त्रिफलेत्यपि सिध्यतीति बोध्यम्। ३ शूद्रशब्दष्टापं लभते जातिश्चेद्वाच्या। महत्पूर्वस्तु शूद्रशब्दष्टापं न लभते जातिश्चेद्वाच्येति वार्तिकार्थः ॥ शूद्रत्वजातिविशिष्टा विप्रक्षत्रियविट्शूद्रभार्या शूद्रा भवति ॥ ४ शूद्रस्य भार्या तु शूद्री न तु शूद्रेति भावः ॥ ५ '**ग्रहणवता प्रातिपादिकेन तदन्तविधिर्नास्ति**' इति महत्पूर्वात् शूद्रशब्दाट्टापोऽप्राप्तौ व्यर्थमेव 'अमहत्पूर्वग्रहणमिति शङ्कते। **अमहत्पूर्वा किमिति** ॥ अयमेव प्रतिषेधः 'अनुपसर्जनात्' इत्यधिकारसूत्रं च स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति शूद्रशब्दान्तत्वान्महाशूद्रशब्दादपि टाप् प्राप्नोतीति प्रतिषेधः सार्थक इति भावः ॥ ६ सर्वनाम्नो भवच्छब्दस्योकारानुबन्धकत्वादुगित्त्वमिति भावः ॥ ७ **नुमिति** । नित्यप्रहसित इत्यत्रैव प्रायःपर्यायनित्यपदोपादानात्प्रायिकः क्वचिन्नापि भवतीति '**अपश्यती वत्समिवेन्दुबिम्बं तच्छ्वरी गौरिव हुं करोति**' इति व्याकरणोपज्ञातृपाणिनिनैव स्वोपज्ञजाम्बवतीविजयकाव्ये नुम् न कृतः। एतदज्ञानानेन नमिसाधुना तु प्रयोगस्यास्याऽसाधुत्वमेव **रुद्रटालंकार**व्याख्यायां प्रकटितमिति स विकृतबुद्धिरेव व्याकरणमर्मानभिज्ञत्वादिति बोध्यम् ॥ ८ **सामान्येति** । विशेषग्राहकस्यानुबन्धाद्युच्चारणयत्नस्याकरणादिति भावः ॥ A तेनेति वन्नन्तेन ॥ ९ '**अनो बहुव्रीहेः प्रतिषेधे वोपधालोपिनो वा वचनम्**' इति वार्तिकमर्थतोऽनुवदति-**बहुव्रीहौ वेति** ॥ बहुयज्वा सुपर्वा इत्यादावनुपधालोपिनो न भवति ॥ १० 'पादः' इति पञ्चमीलभ्यव्याख्यानमाश्रित्याह-पाच्छब्दः **कृतसमासान्त इति**।

कृतसमासान्तस्तदन्तात्प्रातिपदिकात् ङीब्वा स्यात् ॥ द्विपदी । द्विपात् ॥ **टाबृचि ।४।१।९ ॥** ऋचि वाच्यायां पादन्ताट्टाप् स्यात् ॥ द्विपदा ऋक् । एकपदा ॥ न षट्स्वस्रादिभ्यः ॥ पञ्च । चतस्रः[2] ॥ पञ्चेत्यत्र[3] नलोपे कृतेऽपि ष्णान्ता षडिति षट्संज्ञां प्रति नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वान्न षट्स्वस्रादिभ्य इति न टाप् ॥ **मनः ।४।१।११ ॥** मन्नन्तान्न ङीप् ॥ सीमा । सीमानौ ॥ **अनो बहुव्रीहेः । ४ । १ । १२ ॥** अन्नन्ताद्बहुव्रीहेर्न ङीप् ॥ बहुयज्वा । बहुयज्वानौ ॥ **डाबुभाभ्यामन्यतरस्याम् । ४ । १ । १३ ॥** सूत्रद्वयोपात्ताभ्यां डाब् वा स्यात् ॥ सीमा । सीमे । सीमानौ । दामा । दामे । दामानौ । न पुंसि दामेत्यमरः ॥ बहुयज्वा । बहुयज्वे । बहुयज्वानौ ॥ **अन उपधालोपिनोऽन्यतरस्याम् । ४।१ । २८ ॥** अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप् स्यात् ॥ पक्षे डाब्निषेधौ । बहुराज्ञी । बहुराज्ञ्यौ । बहुराजा । बहुराजे । बहुराजानौ ॥ **प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः । ७ । ३ । ४४ ॥** प्रत्ययस्थात्ककारात्पूर्वस्याकारस्येकारः स्यादापि परे, स आप् सुपः परो न चेत् ॥ सर्विका[4] । कारिका । अतः किम् ? नौका । प्रत्ययस्थात्किम् ? शक्नोतीति शका । असुपः किम् ? बहुपरिव्राजका[5] नगरी । कात्किम् ? नन्दना । पूर्वस्य किम् ? परस्य मा भूत् । कटुका[6] ॥ तपरः किम् ? राका । आपि किम् ? कारकः ॥ **मामकनरकयोरुपसंख्यानम्** * ॥ मामिका[7] ।

---

१ 'ङ्याप्प्रातिपदिकात्' इति सूत्रे 'इदं तर्हि **'पादोऽन्यतरस्याम् टाबृचि' इति**' इति हलन्ताट्टापो र्शितस्यापि खण्डनाग्रहेणैव '**एतदपि नास्ति प्रयोजनम् । पदशब्दः पादशब्दसमानार्थोऽकारान्तश्छन्दसि दृश्यते 'तस्याः सप्ताक्षरमेकं पदम्' 'एकः पादः' इत्यर्थः** ॥' इति भाष्यन्तु प्रकारान्तरपरमेव सूत्रस्य वैयर्थ्यसूचनादिति बोध्यम् ॥ २ स्वस्रादिगणे 'तिसृचतसृ' पाठाभावस्य 'कृन्मेजन्तः' इति सूत्रे संनिपातपरिभाषाप्रकरणे भाष्यकृता ध्वनितत्वेन '**चतस्रः**' इत्यस्य स्थानेऽन्यदेवोदाहार्यम् ॥ ३. 'न षट्स्वस्रादिभ्यः' इत्येतद्वृत्तौ '**ङीप्टापौ न स्तः**' इति यद् व्याख्यातम् । तत्र टापः कुत्र प्राप्तस्य निषेधः इति दर्शयति–**पञ्चेत्यत्रेति** ॥ अयमाशयः–'न षट्स्वस्रादिभ्यः' इत्यत्र 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायेन ङीप एवानुवृत्त्या ङीप एव प्रतिषेधे नान्तस्य ङीपि प्रतिषिद्धे नकारलोपे बहुचर्मिकेत्यादावपि नलोपस्यासिद्धत्वेनेत्त्वानुपपत्तिभिया 'नलोपः सुप्' इत्यत्र सुप्पदेन प्रथमैकवचनमारभ्य चापः पकारपर्यन्तं प्रत्याहाराश्रयणस्य कर्तुमशक्यत्वेन परिगणितेषु टापोऽनन्तर्भावाद् नलोपस्यासिद्धत्वाभावेन अकारान्तत्वाट्टाप् प्राप्तोऽपि 'स्त्रियाम्' इत्यनुवर्त्य '**स्त्रियां यत्प्राप्तम्, तन्न**' इत्यर्थाङ्गीकारेण टापोऽपि प्रतिषेधाङ्गीकारेण तत्प्रतिषेधोपपत्तयेऽपेक्षितां षट्संज्ञां प्रति नलोपोऽसिद्ध एवेति प्रतिषिध्यत इति ॥ नव्यास्तु षट्संज्ञायां नलोपासिद्धत्वप्रयोजनानां भाष्यकृता प्रत्याख्यातत्वात् 'स्त्रियां यत् प्राप्तम्, तन्न' इत्यर्थाङ्गीकारसामर्थ्यात् भूतपूर्वषट्त्वाश्रयो निषेध इति वदन्ति ॥ ४ सर्वशब्दस्य टेः प्रागकचि सर्वकशब्दादेव टापि जाते टाप् सुपः परो नैवास्तीति भावः ॥ एवमेव कारकशब्दादेव सुपः प्रागेव टाप् जात इति सुपःपरो नेति भावः ॥ ५ बहवः परिव्राजकाः यस्यां नगर्यामिति बहुव्रीहौ पूर्वपदोत्तरपदयोः सुबन्तत्वेन समासो जात इति पश्चान्नगर्यामभिधेयायां टापि अन्तर्वर्तिविभक्तेः प्रत्ययलक्षणेन परत्वमेवास्तीति सुपः परत्वान्नैव भवति कात्पूर्वस्येत्वमिति भावः ॥ ६ कटुक आ इत्यवस्थायां परत्वाद् 'वार्णादाङ्गं बलीयः' इति न्यायाच्च दसवर्णदीर्घात्प्राग् इत्वमेव भवेदिति भावः ॥ ७ 'तवकममकावेकवचने' इति ममकादेशस्य जातत्वेन नायं प्रत्ययस्थककारः । किं त्वादेशककार इति नैव सूत्रेण प्राप्तिरिति भावः ॥

नरान् कायतीति नरिका ॥ **त्यकृत्यपोश्च** * ॥ दाक्षिणात्यिका । इहत्यिका॥ **न यासयोः** । ७।३।४५ ॥ यत्तदोरस्येन्न स्यात् ॥ यका । सका । यकाम् । तकाम् । **त्यकनश्च निषेधः** *॥ अधित्यका । उपत्यका । **आशिषि वुनश्च न** *॥ जीवका । भवका ॥ **उत्तरपदलोपे न** * ॥ देवदत्तिका । देवका ॥ **क्षिपकादीनां च** * ॥ क्षिपका । ध्रुवका । कन्यका । चटका ॥ **तारका ज्योतिषि** * ॥ अन्यत्र तारिका ॥ **वर्णका तान्तवे** * ॥ अन्यत्र वर्णिका ॥ **वर्तका शकुनौ प्राचाम्** * ॥ उदीचां तु वर्तिका ॥ **अष्टका पितृदेवत्ये** * ॥ अष्टिकान्या ॥ **सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम्** * ॥ इह वा अ इति च्छेदः । कात्पूर्वस्याकारादेशो वेत्यर्थः॥ तेन पुत्रिकाशब्दे ङीन ईवर्णस्य पक्षेऽकारः । अन्यत्रेत्त्वबाधनार्थमकारस्यैव पक्षेऽकारः । सूतका । सूतिकेत्यादि ॥ **उदीचामातः स्थाने यकपूर्वायाः** । ७ । ३ । ४६ ॥ यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्येद्वा स्यादापि परे ॥ 'केऽण' इति ह्रस्वः। आर्यका आर्यिका ॥ चटकका । चटकिका ॥ आतः किम् ? सांकाश्ये भवा सांकाश्यिका । यकेति किम्? अश्विका । स्त्रीप्रत्ययेति किम् ? शुभं यातीति शुभंयाः अज्ञाता शुभंयाः शुभंयिका ॥ **धात्वन्तयकोस्तु नित्यम्** *॥ सुनयिका । सुपाकिका ॥ **भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि** । ७ । ३ । ४७ ॥ स्वेत्यन्तं लुप्तषष्ठीकं पदम् । एषामत इद्वा स्यात् ॥ तदन्तविधिनैव सिद्धे नञ्पूर्वाणामपीति स्पष्टार्थम् । भस्त्राग्रहणमुपसर्जनार्थम् । अन्यस्य तूत्तरसूत्रेण सिद्धम् ॥ एषा द्वा एतयोस्तु सपूर्वयोर्नेत्त्वम् ॥ अन्तर्वर्तिनीं विभक्तिमाश्रित्याऽसुप इति प्रतिषेधात् । अनेषका । परमैषका । अद्वके । परमद्वके । स्वशब्दग्रहणं संज्ञोपसर्जनार्थम् । इह हि 'आतः स्थाने' इत्यनुवृत्तं स्वशब्दस्यासो विशेषणम् । न तु द्वैपयोरसंभवात् । नाप्यन्येषामव्यभिचारात् । स्वशब्दस्त्वनुपसर्जनमात्मीयवाची अकजर्हः । अर्थान्तरे तु न स्त्री[14] । संज्ञोपम-

---

१ 'उदीचामातः स्थाने' इति विकल्पबाधाय वार्तिकमिदमिति भावः ॥ २ क्षिपका, ध्रुवका, चरका, सेवका, करका, चटका, अवका, लहका, अलका, कन्यका, एडका । एते क्षिपकादयः । आकृतिगणोऽयम् ॥ ३ अन्यत्र सूतकावृन्दारकयोरित्यर्थः ॥ ४ 'आतः' इत्येतद्विशेषणभूते 'यकपूर्वायाः' इत्यत्र स्त्रीलिङ्गनिर्देशः स्त्रीत्वद्योतकत्वविवक्षार्थः इत्यभिप्रेत्याह-स्त्रीप्रत्ययाकारस्येति ॥ ५ 'सांकाश्ये भवा' इत्यर्थे 'धन्वयोपधाद् वुञ्' इति जातस्य वुञः स्थाने जातस्याकादेशस्यायमकारो न स्त्रीप्रत्ययाकारस्य स्थाने इति भावः ॥ ६ अत्र धातोराकारस्य स्थानेऽकारः न तु स्त्रीप्रत्ययाकारस्येति भावः ॥ ७ 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति पूर्वपदरहितानामितरपूर्वाणामपि सिद्धेरिति भावः ॥ ८ उपसर्जने तदन्तस्य भाषितपुंस्कत्वात् उत्तरसूत्रस्याप्राप्तेरिति भावः ॥ ९ अन्यस्य अनुपसर्जनस्य । उत्तरसूत्रेण 'अभाषितपुंस्काच्च' इत्यनेन ॥ १० 'न + एतकद्सु' 'न + द्विऔ' इति विग्रहे समासे 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति पूर्वं सुब्लुकि समासात्प्रातिपदिकात्सुपि त्यदाद्यत्वे टापि प्रत्ययलक्षणेन अन्तर्वर्तिसुपः पर एव टाबिति भावः ॥ ११ असंभवात् । क्वचि ककारात्प्राक्तनस्याकारस्यौपदेशिकत्वेन स्त्रीप्रत्ययाकारस्य स्थानेऽजातत्वादिति भावः ॥ १२ अव्यभिचारादिति । स्त्रीप्रत्ययाकारस्थान एव सर्वत्र जातत्वेन व्यभिचाराभावादिति भावः ॥ १३ 'अतो न तत्र स्त्रीप्रत्ययाकारस्थानिकत्वमकारस्य मेलतीति भावः ॥ १४ 'तर्हि कथमकारस्य स्त्रीप्रत्ययाकारस्थानिकत्वं संभवेदिति शेषः ॥ 'स्वो ज्ञातावात्मनि, स्वं त्रिष्वात्मीये, स्वोऽस्त्रियां धने' इत्यमरादिति भावः ॥

र्जनीभूतस्तु कप्प्रत्ययान्तत्वाद्भवत्युदाहरणम् ।एवं चात्मीयायां स्विका परमस्विकेति नित्यमेवेत्त्वम् ॥ निर्भस्त्रका । निर्भस्त्रिका । एषका । एषिका । कृतषत्वनिर्देशान्नेह विकल्पः–एतिके- एतिकाः । अजका । अजिका । ज्ञका । ज्ञिका । द्वके । द्विके । निःस्वका । निःस्विका ॥ **अभाषितपुंस्काच्च । ७।३।४८ ॥** एतस्माद्विहितस्यातः स्थानेऽत इद्वा स्यात् ॥ गङ्गका । गङ्गिका । बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य नित्यम्–अज्ञाता अखट्वा अखट्विका ।शैषिके कपि तु विकल्प एव ॥ **आदाचार्याणाम् । ७ । ३ । ४९ ॥** पूर्वसूत्रविषये आद्वा स्यात् ॥ गङ्गाका ॥ उक्तपुंस्कात्तु शुभ्रिका ॥ **अनुपसर्जनात् । ४। १ । १४ ॥** अधिकारोऽयं यूनस्तिरित्यभिव्याप्य । अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति ॥ **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ।४ । १ । १५ ॥** अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप् स्यात् । कुरुचरी । उपसर्जनत्वान्नेह । बहुकुरुचरा । नदट्, नदी । वक्ष्यमाणेत्यत्र टित्वादु-

---

१ कप्रत्ययान्तत्वादिति । सर्वनामसंज्ञायाः प्रतिषेधेनाकचः प्राप्त्यभावेन इति पूर्वं शेषः ॥ '**सुबन्तात्तद्धितोत्पत्तिः**' इति मतेऽपि '**अन्तर्वर्तिसुप्टापोर्मध्ये**' **कप्रत्ययेन नापः सुबव्यवहितपरत्वमिति**' इत्युत्तरशेषः ॥ २ अविद्यमाना खट्वा यस्याः स '**नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः**' इति 'विद्यमानपदलोपे खट्वशब्दस्यान्यपदार्थपरत्वेन सर्वलिङ्गत्वाद्भाषितपुंस्कत्वेनाभाषितपुंस्कत्वाभावान्न विकल्पप्राप्तिरिति भावः ॥ ३ बहुव्रीहेर्भाषितपुंस्कात्स्वार्थिककनि विकल्पाप्रवृत्त्या नित्यत्वं संसाध्य समासान्तकपि व्यवस्थामाह-**शषिके कपीति** ॥ अयं भावः–समासान्तशब्दस्य समासयोग्यालौकिकविग्रहान्तार्थकत्वेन ' शेषाद्विभाषा ' इति कपः ' न+सु+खट्वा+सु ' इत्यलौकिकवाक्यान्त एव जातत्वेन ' न सु खट्वा सु कप्' इत्यवस्थायां सुब्लुकि 'अखट्वाक' इत्यत्र 'आपोऽन्यतरस्याम्' इति ह्रस्वे अकारस्याभाषितपुंस्काद्विहितटाप्स्थानिकत्वेन विकल्प एव भवतीति ॥ ४ तथा चोक्तं भाष्ये वार्तिकाभ्याम्–'**अनुपसर्जनग्रहणमनर्थकं प्रातिपदिकेन तदन्तविधिप्रतिषेधात्**' '**ज्ञापकं तु पूर्वत्र तदन्ताप्रतिषेधस्य**' इति ॥ **ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति**' इति प्रातिपदिकविशेषणत्वेऽपि तदन्तविधिप्रतिषेधादनुपसर्जनाधिकारो व्यर्थ इति चेत् ' स्त्रीप्रत्ययेषु न तदन्तविधिप्रतिषेधः ' इति ज्ञापनार्थम्, **स्वस्य गृह्यमाणविशेषणत्वज्ञापनार्थं** च तस्यावश्यकत्वादिति भावः ॥ ५ ' वच् ' ' वह् ' धात्वोर्लृटि शानचि स्ये सुकि कुत्वे ढत्वकत्वयोर्वा मूर्धन्ये वक्ष्यमाणशब्दे स्त्रीत्वविवक्षायां लृड्निष्ठमुगित्त्वं टित्त्वं वा ' प्रदाय प्रस्थाय ' इत्यादौ कित्त्वस्याल्धर्मत्वेन ' घुमास्था ' इतीत्त्वस्याल्विधित्वादेव तस्मिन्कर्तव्ये स्थानिवत्त्वनिषेधेनैवेत्त्वाप्राप्तिसिद्धौ व्यर्थेन ' न ल्यपि ' इति निषेधेन **अनुबन्धकार्येऽनल्विधाविति प्रतिषेधो न प्रवर्तते** ' इति ज्ञापिते प्रकृते स्थानिवत्त्वेन शानच्यानीय ङीप् कुतो न क्रियते इति शङ्कते–**वक्ष्यमाणेत्यत्रेति** ॥ समाधत्ते–**यासुट इति** ॥ अयं भावः–तुल्यन्यायेन लिङ्निष्ठङित्त्वस्य स्थानिवत्त्वेन तिङ्स्वागमने यदागमन्यायेन तिबादिनिष्ठङित्त्वस्य तदागमे यासुट्यपि समागमनेन ङित्त्वं व्यर्थं सत् '**आश्रयमनुबन्धकार्ये नादेशानाम्**' इति ज्ञापयतीति लृड्निष्ठटित्त्वोगित्त्वयोः शानच्यनाश्रयणे न ङीबापत्तिरिति । युयात् इत्यादौ ङित्त्वानागमने ङित्त्वप्रयुक्तकार्यकरणाय ङित्त्वमावश्यकमिति स्वांशे चारितार्थ्यम् ॥ ननु 'युयात्' इत्यादौ पित्यादेशे स्थानिवत्त्वेन ङित्त्वं दुर्लभम् '**पिच्च ङिन्न**' इति भाष्यसिद्धान्तात् । तथा च ङित्त्वं न ज्ञापकमिति ङीब् दुर्वार एवेत्यत आह–**श्नः शानच इति** । अयं भावः–'हलः श्नः शानच् ' इत्येन श्नादेशशानचि शित्त्वं स्थानिवत्त्वेन सिद्धं व्यर्थं सद् '**क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेधः**' इति ज्ञापयतीति न ङीबापत्तिरिति भावः ॥ यदि तु 'शानचि शित्त्वं भाष्यकृता प्रत्याख्यातमेवेति न ज्ञापकम्' इति विभाव्यते तदा शानचः पाठोऽजादिषु कल्पनीयः, अजादेराकृतिगणत्वादिति तत्त्वम् ॥

गित्त्वाच्च ङीप् प्राप्तः । यासुटो ङित्त्वेन **'लाश्रयमनुबन्धकार्यं नादेशानाम्'** इति ज्ञापनान्न भवति । श्नः शानचः शित्त्वेन **'क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेध'** ज्ञापनाद्वा ॥ सौपर्णेयी । ऐन्द्री । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी । लावणिकी । यादृशी । इत्वरी ॥ **ताच्छीलिके णेऽपि**[2] ॥ चौरी । **नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्** * ॥ स्त्रैणी । पौंस्नी । शाक्तीकी । आढ्यङ्करणी । तरुणी । तलुनी ॥ **यञश्च ।४।१।१६ ॥** यञन्तात्स्त्रियां ङीप्स्यात् ॥ अकारलोपे कृते ॥ **हलस्तद्धितस्य ।६ । ४ । १५० ॥** हल उत्तरस्य तद्धितयकारस्योपधाभूतस्य लोपः स्यादीति परे ॥ गार्गी ॥ **अनपत्याधिकारस्थान्न ङीप्**[3] ॥ द्वीपे भवा द्वैप्या ॥ अधिकारग्रहणान्नेह–देवस्यापत्यं दैव्या । देवाद्यञञाविति हि यञ् प्राग्दीव्यतीयो, न त्वपत्याधिकारपठितः ॥ **प्राचां ष्फ तद्धितः । ४ । १ । १७ ॥** यञन्ताष्फो वा स्यात् स्त्रियां स च तद्धितः ॥ **षः प्रत्ययस्य ।१ । ३ । ६ ॥** प्रत्ययस्यादिः ष इत्स्यात् ॥ **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ।७ । १।२ ॥** प्रत्ययस्यादिभूतानां फादीनां क्रमादायन्नादय आदेशाः स्युः ॥ तद्धितान्तत्वात्प्रातिपदिकत्वम्[4] । षित्त्वसामर्थ्यात् ष्फेणोक्तेऽपि स्त्रीत्वे षिद्गौरेति वक्ष्यमाणो ङीष् । गार्ग्यायणी ॥ **सर्वत्र लोहितादिकतन्तेभ्यः**[5][6]।

---

१ 'मात्रच्' इति मात्रशब्दात् 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति सूत्रस्थात् प्रभृति आ अयचः 'द्वित्रिभ्यां तयस्यायच्' इति सूत्रस्थस्य चकारात्प्रत्याहार एव । तेन 'उभशब्दाद् अयच् प्रत्ययान्तरमेव' इति 'न वेति विभाषा' 'स्थानिवदादेशः' इति सूत्रभाष्यसिद्धान्ते 'उभयी' इति ङीप् सिध्यति ॥ 'कति स्त्रियः' इत्यत्र तु न ङीबापत्तिः 'अतः' इत्यधिकारणादन्तादेव विधानात् ॥ तयब्विधिसूत्रं तु मात्रच्प्रत्याहारघटकप्रत्ययविधिभ्यः पश्चादेवासीत् । ततः पश्चात् पण्डितंमन्यलेखकेन पाठव्यत्ययः कृतोऽष्टमचतुर्थ इव पश्चाद्विधास्यमानानां स्थानिनां स्थाने प्रागादेशविधानम् 'अदिप्रभृतिभ्यः' इत्यादिषु बहुत्र दृष्टम् इति सारम् ॥ २ 'कर्म शीलं यस्य स कार्मः' इत्यत्र 'शीलं छत्रादिभ्यो णः' इति णप्रत्यये 'कर्मन् अ' इत्यत्र 'नस्तद्धिते' इति टिलोपेनैव कार्म इति सिद्धौ इदं टिलोपवचनम् **'ताच्छीलिके णेऽण्कृतानि भवन्ति'** इति ज्ञापयति । तथा च णेऽपि अण्कृतम् 'अन्' इति प्रकृतिभावः प्राप्नोतीति टिलोपविधानमिति स्वांशे चारितार्थ्यम् ॥ दाण्डा प्राज्ञा इत्यादौ ताच्छीलिकत्वाभावान्नाण्कार्यम् ॥ ३ भाष्यकृता 'द्वीपादनुसमुद्रं यञ्' इति यञन्तद्वैप्याशब्दे ङीब्वारणाय 'क्वर्पा' 'यञश्च' 'यस्कादिभ्यो गोत्रे यञञोश्च' 'गर्गादिभ्यो यञ्' 'हरितादिभ्योऽञोयञिञोश्च' इति संहितापाठे 'अयञ्' इति संधिविशेषः सूचितः । तथा च यत्रायञ् तत्रैव ङीप्ष्फादि स्वीकृतम् । न तु 'देवाद्यञञौ' 'द्वीपादनुसमुद्रं यञ्' इति विहितयञन्ताद् दैव्या द्वैप्या इत्यादौ । तद्विधिषु 'अयञ्' इति छेदस्य कर्तुमशक्यत्वात्तत्रायञो विधातुमशक्यत्वादिति सकलं मनसि निहितं प्रकाशयन्प्राचामनुरोधेनान्यथासन्धिविच्छेदेऽपि समानं फलं साधयति–**अनपत्याधिकारस्थादित्यादिना पठित इत्यन्तेन** ॥ ४ भाष्योक्तं तद्धितपदस्य प्रयोजनस्य खण्डनं दर्शयति–**प्रातिपदिकत्वमिति 'येन प्रातिपदिकात् इत्यधिकारविहितो ङीष् सिध्यति । तथापि'** इति शेषः ॥ **ङीषिति** । **'ङित्त्वसामर्थ्यादभस्यापि टेर्लोप इव षित्त्वसामर्थ्यादप्रातिपदिकत्वेऽपि ङीष् भविष्यतीति नार्थस्तद्धितग्रहणेन'** इति शेषः ॥ तत्र दृष्टान्तविधयाऽन्यदपि **'ष्फेणोक्तेऽपि स्त्रीत्वे'** इति निर्दिष्टम् । 'उक्तार्थानामप्रयोगः' इति न्यायबाध इव 'प्रातिपदिकादेव' इति नियमबाधोऽपीति भावः ॥ ५ गर्गाद्यन्तर्गणो **लोहितादिः** ॥ ६ कतन्तशब्दे तन्त्रादिना बहुव्रीहिस्तत्पुरुषश्च । **कण्वात्तु शकलः पूर्वं कतादुत्तर इष्यते । पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनम्** ॥

।४।१।१८ ॥ लोहितादिभ्यः कतशब्दान्तेभ्यो यञन्तेभ्यो नित्यं ष्फः स्यात् ॥ लौहित्यायनी । कात्यायनी ॥ **कौरव्यमाण्डूकाभ्यां च** ।४।१।१९ ॥ आभ्यां ष्फः स्यात् । टाप्ङीषोरपवादः । कुर्वादिभ्यो ण्यः । कौरव्यायणी । 'ढक् च मण्डूकात्' इत्यण् । माण्डूकायनी ॥ **आसुरेरुपसंख्यानम्** *॥ आसुरायणी ॥ **वयसि प्रथमे** ।४।१।२० ॥ प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप् स्यात् । कुमारी ॥ **वयस्यचरम इति वाच्यम्** *॥ वधूटी । चिरण्टी । वधूटचिरण्टशब्दौ यौवनवाचिनौ ॥ अतः किम् ? शिशुः ॥ कन्याया न । 'कन्यायाः कनीन च' इति निर्देशात् ॥ **द्विगोः** ।४।१।२१ ॥ अदन्ताद्द्विगोर्ङीप् स्यात् ॥ त्रिलोकी । अजादित्वात्रिफला । त्र्यनीका सेना ॥ **अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि** ।४।१।२२ ॥ अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोर्ङीप् न स्यात्तद्धितलुकि सति ॥ पञ्चभिरश्वैः क्रीता पञ्चाश्वा । आर्हीयष्ठक् । अध्यर्धेति लुक् । द्वौ बिस्तौ पचति द्विबिस्ता । द्व्याचिता । द्विकम्बल्या । परिमाणान्तात्तु द्व्याढकी । तद्धितलुकि किम् ? समाहारे पञ्चाश्वी ॥ **काण्डान्तात्क्षेत्रे** ।४।१।२३ ॥ क्षेत्रे, यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि ॥ द्वे काण्डे प्रमाणमस्याः सा द्विकाण्डा क्षेत्रभक्तिः । 'प्रमाणे द्वयसच्' इति विहितस्य मात्रचः 'प्रमाणे लो द्विगोर्नित्यम्' इति लुक् ॥ क्षेत्रे किम् ? द्विकाण्डी रज्जुः ॥ **पुरुषात्प्रमाणेऽन्यतरस्याम्** ।४।१।२४ ॥ प्रमाणे यः पुरुषस्तदन्ताद्द्विगोर्ङीप् वा स्यात्तद्धितलुकि ॥ द्वौ पुरुषौ[6] प्रमाणमस्याः सा द्विपुरुषा वा परिखा ॥ **ऊधसोऽनङ्** ।५।४।१३१ ॥ ऊधोऽन्तस्य बहु-

---

१ भाष्योपलब्धमर्पीदम् अकारस्य सवर्णदीर्घेणेष्टसिद्धौ 'यस्येति च' इतीकारलोपार्थेन 'ष्फ तद्धितः' इति तद्धितग्रहणेन ज्ञाप्यते इति नव्याः ॥ २ प्रकृतसूत्रभाष्ये कृतायाः 'यदि **तर्हि यत्र संबन्धाद् वयो गम्यते तत्र न प्राप्नोति, इहापि तर्हि न प्राप्नोति कुमारीति । अत्रापि संबन्धाद्वयो गम्यते । कोऽसौ संबन्धः ? 'पुंसा सहासंप्रयोगः**' इति शङ्कायाः '**संबन्धादेवात्र वयो गम्यते**' इति समाधानस्य चावलोकनात् कुमारीशब्दस्य शब्दशक्तिस्वभावत एव पुंसाऽसंप्रयोग एव प्रवृत्तिनिमित्तम् ॥ सोऽसंप्रयोगश्च विवाहाभावेन तद्योग्यवयोऽप्राप्त्या चेति द्विधा संभवति । तत्राद्ये जातिलक्षणो ङीष् भवतीति 'जातेरस्त्रीविषयात्' इति सूत्रभाष्ये स्पष्टम् । द्वितीयेऽनेन ङीब् भवतीति प्रकृतसूत्रभाष्ये ॥ '**वृद्धकुमारी**' इति प्रयोगो जातिलक्षणङीषा सुसाध्य एवेति कथं तस्य गौणत्वमङ्गीकृतमिति विभावयन्तु भाष्यविदः ॥ संप्रयोगयोग्यवयस्तु '**ऊनषोडशवर्षायामप्राप्तः पंचविंशतिम् । यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥ जातो वा न चिरं जीवेत् जीवेद्वा दुर्बलेन्द्रियः । तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥ पंचविंशे ततो वर्षे पुमान् नारी तु षोडशे । समत्वागतवीर्यौ तौ जानीयान्निपुणो भिषक् ॥**' इति शारीरस्थाने दशमाध्याये **सुश्रुता**चार्येण दर्शितम् । एवं च 'आषोडशाद्भवेद् बालस्तरुणस्तत उच्यते । वृद्धस्तु सप्ततेरूर्ध्वं वर्षीयान् नवतेः परः' इति चतुर्धा विभागो वयसो बोध्यः ॥ भाष्ये-असंप्रयोगशब्दश्च 'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इत्यादाविव कालवाचक इत्यभिप्रायेण 'वयो गम्यते' इत्युक्तमिति भावः ॥ ३ त्रिफलाशब्दस्याजादित्वकल्पनमनार्षम् । 'त्रैश्र' इति वार्तिकेन ङीष्निषेधसामर्थ्यान्ङीबपि न भवति । तयोरत्र विशेषाभावादिति कैयटः ॥ ४ '**सुवर्णबिस्तौ** हेम्नोऽक्षे' '**आचितो** दश भाराः स्युः' '**कम्बल्य**'मूर्णापलशतम्' ॥ ५ षोडशहस्तमितो दण्डः **काण्डम्** ॥ ६ 'पञ्चारत्निः **पुरुषः**' इति शुल्वसूत्रम् ॥

व्रीहेरनङादेशः स्यात् स्त्रियाम् ॥ इत्यनङि कृते डाप्ङीब्निषेधेषु प्राप्तेषु ॥ **बहुव्रीहेरूधसो ङीष् । ४ । १ । २५ ॥** ऊधोऽन्ताद्बहुव्रीहेर्ङीष् स्यात् स्त्रियाम् ॥ कुण्डोध्नी । स्त्रियां किम् ? कुण्डोधो धैनुकम् । इहानङपि न । तद्विधौ स्त्रियामित्युपसंख्यानात् ॥ **संख्याऽव्ययादेर्ङीप् । ४ । १ । २६ ॥** ङीषोऽपवादः ॥ द्व्यूध्नी । अत्यूध्नी । बहुव्रीहेरित्येव । ऊधोऽतिक्रान्ता अत्यूधाः ॥ **दामहायनान्ताच्च । ४ । १ । २७ ॥** संख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च ङीप् स्यात् ॥ दामान्ते डाप्प्रतिषेधयोः प्राप्तयोर्हायनान्ते टापि प्राप्ते वचनम् ॥ द्विदाम्नी ॥ अव्ययग्रहणाननुवृत्तेरुद्दामा वडवेत्यत्र डाब्निषेधावपि पक्षे स्तः ॥ द्विहायनी बाला ॥ **त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम् * ॥ वयोवाचकस्यैव हायनस्य ङीब् णत्वं चेष्यते *** ॥ त्रिहायणी । चतुर्हायणी । वयसोऽन्यत्र—त्रिहायना, चतुर्हायना शाला ॥ **नित्यं संज्ञाछन्दसोः । ४ । १ । २९ ॥** अन्नन्ताद्बहुव्रीहेरुपधालोपिनो ङीप् ॥ सुराज्ञी नाम नगरी । अन्यत्र पूर्वेण विकल्प एव । वेदे तु शतमूर्ध्नी ॥ **केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च । ४। १ । ३० ॥** एभ्यो नवभ्यो नित्यं ङीप् स्यात्संज्ञाछन्दसोः ॥ अथो त इन्द्रः केवलीर्विशः । मामकी । भागधेयी । पापी । अपरी । समानी । आर्यकृती । सुमङ्गली । भेषजी । अन्यत्र केवला इत्यादि । मामकग्रहणं नियमार्थम्, अण्णन्तत्वादेव सिद्धेः । तेन लोकेऽसंज्ञायां मामिका ॥ **अन्तर्वत्पतिवतोर्नुक् । ४ । १ । ३२ ॥** एतयोः स्त्रियां नुक् स्यात् ॥ ऋन्नेभ्यो ङीप् ॥ गर्भिण्यां जीवद्भर्तृकायां च प्रकृतिभागौ निपात्येते । तत्रान्तरस्त्यस्यां गर्भ इति विग्रहे अन्तःशब्दस्याधिकरणशक्तिप्रधानतयाऽस्तिसामानाधिकरण्याभावादप्राप्तो मतुब् निपात्यते । पतिवत्नीत्यत्र तु वत्त्वं निपात्यते । अन्तर्वत्नी । पतिवत्नी ॥ प्रत्युदाहरणं तु—अन्तरस्त्यस्यां शालायां घटः । पतिमती पृथिवी ॥ **पत्युर्नो यज्ञसंयोगे ।४।१।३३ ॥** पतिशब्दस्य नकारादेशः स्याद्यज्ञेन संबन्धे ॥ वसिष्ठस्य पत्नी । तत्कर्तृकयज्ञस्य फलभोक्त्रीत्यर्थः । दम्पत्योः सहाधिकारात् ॥

---

१ '**ऊधसोऽनङि स्त्रीग्रहणम्**' इति अनङ्विधौ वार्तिकादिति भावः ॥ २ '**दामहायनान्तात् संख्यादेः**' इति वार्तिकस्य '**क्वचिदेकदेशोऽप्यनुवर्तते**' इत्याश्रित्य प्रत्याख्यानादिति भावः ॥ ३ 'वृद्धिः' इति शेषः । मातुलपत्न्यां मामी मामकी॥ ४ **दम्पत्योरिति** । जीवतोरिति शेषः ॥ दम्पत्योर्द्वयोर्जीवतोस्तु द्वयोरेवैकस्मिन्यज्ञे 'स्वामित्वेनाधिकारः, न पृथक् पृथक् इत्येव निर्णीतं '**स्ववतोस्तु वचनादैककर्म्यं स्यात्**'(६।१।१८) इति सूत्रेण भार्याविरहे कण्वविभाण्डकभीष्मादीनामिव केवलानां पुंसामप्यधिकारः । पतिविरहे केवलस्त्रिया अपीति '**लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः**' ( ६।१।६ ) इति पूर्वपक्षे '**जातिं तु बादरायणोऽविशेषात् तस्मात्स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्**'( ६।१।८ ) इति सूत्रेण जैमिनिना 'स्वर्गकामो यजेत' इत्यत्र स्त्रीणामप्यधिकारः सिद्धान्तितः 'क्रीतत्वात्तु भक्त्या **स्वामित्वमुच्यते**' इति पूर्वपक्षस्य **फलार्थित्वात्तु स्वामित्वेनाभिसंबन्धः** ( ६।१।२० ) इति सूत्रेण जैमिनिना **पतिशब्दोऽयमैश्वर्यवाची स्वर्णेन गृहस्थेन प्रत्यहं पञ्च महायज्ञा निर्वर्त्या यज्ञाः सायंप्रातर्होमं चरुपुरोडाशान्निर्वपति तस्याभावीष्ट**' इति प्रकृतसूत्रे भाष्यकृता पतञ्जलिना च पुंस इव स्त्रिया अपि स्वामित्वकथनेन दूषितत्वान्न कस्यापि मान्यवचनस्य विरोधः ॥ कात्यायनश्रौतसूत्रेष्वप्येतस्य विषयस्येत्थमेव निर्णीतत्वाच्चेति विस्तरस्त्वन्यतो ग्राह्यः ॥ एतद्भाष्यप्रामाण्येन '**जातिं तु**' इति जैमिनिसूत्रे जातिपदं प्रवृत्तिनिमित्तभूतजातिगुणक्रियापरमेवेति प्रतीयते ॥

**विभाषा सपूर्वस्य । ४ । १ । ३४ ॥** पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्य नो वा स्यात् ॥ गृहस्य पतिः । गृहपतिः । गृहपत्नी ।[1]अनुपसर्जनस्येतीहोत्तरार्थमनुवृत्तमपि न पत्युर्विशेषणं किंतु तदन्तस्य । तेन बहुव्रीहावपि—दृढपत्नी,—दृढपतिः । वृषलपत्नी । वृषलपतिः ॥ अथ वृषलस्य पत्नीति व्यस्ते कथमिति चेत् ? पत्नीव पत्नीत्युपचारात्[2] । यद्वा—आचारक्विबन्तात्कर्तरि क्विप् । अस्मिंश्च पक्षे पत्नियौ पत्नियः इतीयङ्[3]विषये विशेषः ॥ सपूर्वस्य किम् ? गवां पतिः स्त्री ॥ **नित्यं सपत्न्यादिषु[4] । ४ । १ । ३५ ॥** पूर्वविकल्पापवादः । समानस्य सभावोऽपि निपात्यते ॥ समानः पतिर्यस्याः सा सपत्नी । एकपत्नी । वीरपत्नी ॥ **पूतक्रतोरै च । ४ । १ । ३६ ॥** इयं त्रिसूत्री पुंयोग एवेष्यते ॥ पूतक्रतोः स्त्री पूतक्रतायी । 'यया तु क्रतवः पूताः स्यात्पूतक्रतुरेव सा' ॥ **वृषाकप्यग्निकुसितकुसिदानामुदात्तः । ४ । १ । ३७ ॥** एषामुदात्त ऐ आदेशः स्यात् ङीप् च ॥ वृषाकपेः स्त्री वृषाकपायी । 'हरविष्णू वृषाकपी' इत्यमरः । वृषाकपायी श्रीगौर्योरिति च । अग्नायी । कुसितायी । कुसिदायी । कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्यः ॥ **मनोरौ वा । ४ । १ । ३८ ॥** मनुशब्दस्यौकारादेशः स्यादुदात्त ऐकारश्च वा ताभ्यां संनियोगशिष्टो ङीप् च ॥ मनोः स्त्री मनावी,—मनायी,—मनुः ॥ **वर्णादनुदात्तात्तोपधात्तो नः । ४ । १ । ३९ ॥** वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप् स्यात्तकारस्य नकारादेशश्च ॥ एनी । एता । रोहिणी । रोहिता । **'वर्णानां तणतिनितान्तानाम्'** इति फिट्सूत्रेणाद्युदात्तः । **त्र्येण्या च शलल्या**[5]' इति गृह्यसूत्रम् । त्रीण्येतानि यस्या इति बहुव्रीहिः ॥

---

१ **न पत्युरिति** । 'अनुपसर्जनात्' इत्यधिकारेणैव स्वस्य गृह्यमाणविशेषणत्वज्ञापनेन 'विभाषा सपूर्वस्य' इति सूत्रे पत्युर्गृह्यमाणत्वाभावात् ' सपूर्वस्य पत्युरेव गृह्यमाणत्वेन तदन्तस्यैव सपूर्वत्वाद् अनुपसर्जनत्वं सपूर्वपतिशब्दार्थस्यैव ग्राह्यमिति भावः ॥ २ तथा चोक्तं 'पुंयोगादाख्यायाम्' इति सूत्रे भाष्यकृता **'चतुर्भिः प्रकारैरतस्मिन्स इत्येतद्भवति तात्स्थ्यात ताद्धर्म्यात् तत्सामीप्यात् तत्साहचर्याद्'** इति । एवं च पत्न्यां यानि कार्याणि गृहोपकरणसंभालनादीनि तानि कुर्वत्यां ' पत्नी ' इति प्रयोगो भवति **गौर्वाहीक** इतिवदिति भावः ॥ ३ धातुत्वेन ' अचि श्नुधातुभ्रुवाम् ' इत्यस्यावश्यप्रवृत्तिकत्वादिति भावः ॥ ४ समान, एक, वीर, पिण्ड, श्व, भ्रातृ, भद्र, पुत्र, दासाच्छन्दसि । इति समानादिः ॥ ५ **यद्यपि** अनुपसर्जनाधिकारेण स्वस्य गृह्यमाणविशेषणत्वमेवेत्यपि ज्ञापितम् तथापि न केवलमष्टाध्याय्या यथाश्रुतार्थेन साधुत्वनिर्णयः किंतु—**'एतस्मिन्नार्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किंचिदन्तरेण कस्याश्चिद्विद्यायाः पारं गतास्तत्रभवन्तः शिष्टाः शब्देषु प्रमाणम्'** इति **पृषोदरादिसूत्र**—भाष्यतात्पर्यदर्शकस्य **' आविर्भूतप्रकाशानामनभिप्लुतचेतसाम् । अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते । अतीन्द्रियानसंवेद्यान्पश्यन्त्यार्षेण चक्षुषा । ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥'** इति ' हरिवाक्यस्यावलोकनेन तादृशामृषीणां वचनेषु यथाऽसाधुत्वं न भवेत् तथा पाणिनीयाष्टाध्यायीसूत्रादीनामर्थः करणीयः ' इति सिद्धान्तानुसारेण 'त्र्येण्या' इति गृह्यसूत्रप्रयोगेऽसाधुत्वभ्रमवारणाय ' तत्प्रमाणेनात्राधिकृतस्य अनुपसर्जनपदस्य न गृह्यमाणविशेषणत्वम् । अपि तु तदन्तविशेषणत्वमेवेति दर्शयंस्तदेव गृह्यसूत्रं प्रमाणभूतं दर्शयति—**त्र्येण्या चेति** ॥ यदि तु ' त्रिषु स्थानेष्वेनी ' इति ' सुप्सुपा ' इति समासाङ्गीकारे न गृह्यसूत्रप्रयोगासाधुत्वम् नापि गृह्यमाणविशेषणत्वसिद्धान्तबाध इति विभाव्यते तदास्तु ' अनुपसर्जनात् वर्णवाचिनस्तोपधादनुदात्तान्तान् ङीप् ' इत्येवार्थः इति ध्येयम् ॥

अनुदात्तात्किम् ? श्वेता । घृतादीनां चेत्यन्तोदात्तोऽयम् । अत इत्येव--शितिः स्त्री । **पिशङ्गादुपसंख्यानम्** * ॥ पिशङ्गी । पिशङ्गा ॥ **असितपलितयोर्न** * ॥ असिता । पलिता ॥ **छन्दसि क्नमेके** * ॥ असिक्नी । पलिक्नी ॥ अवदातशब्दस्तु न वर्णवाची किंतु विशुद्धवाची । तेन अवदाता इत्येव ॥ **अन्यतो ङीष्** । ४ । १ । ४० ॥ तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकात् स्त्रियां ङीष् स्यात् । कल्माषी । सारङ्गी । लघावन्ते द्वयोश्च बह्वषो गुरुरिति मध्योदात्तावेतौ । अनुदात्तान्तात्किम् ? कृष्णा । कपिला ॥ **षिद्गौरादिभ्यश्च** । ४ । १ । ४१ ॥ षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात् ॥ नर्तकी । गौरी ॥ **आमनडुहः स्त्रियां वा** * ॥ अनडुही । अनड्वाही ॥ **पिप्पल्यादयश्च** * ॥ आकृतिगणोऽयम् ॥ **सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः** । ६ । ४ । १४९ ॥ अङ्गस्योपधाया यस्य लोपः स्यात्स चेद्यः सूर्याद्यवयवः ॥ **मत्स्यस्य ङ्याम्** * ॥ **सूर्यागस्त्ययोश्छे च ङ्यां च** * ॥ **तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्** * ॥ मत्सी । **मातरि षिच्च** * इति षित्त्वादेव सिद्धे गौरादिषु मातामहीशब्दपाठादनित्यः षितां ङीष्–दंष्ट्रा ॥ **जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु** ॥ ४ ॥ १ । ४२ ॥ एभ्य एकादशभ्यः प्रातिपदिकेभ्यः क्रमाद् वृत्त्यादिष्वर्थेषु ङीष् स्यात् ॥ जानपदी वृत्तिश्चेत् । अन्या तु जानपदी । उत्सादित्वादञन्तत्वे टिड्ढेति ङीप्याद्युदात्तः ॥ कुण्डी अमत्रं चेत् । कुण्डान्या । कुडि दाहे । गुरोश्च हल इति अप्रत्ययः ॥ यस्तु 'अमृते जारजः कुण्ड' इति

---

१ तथा चोदाहृतं भाष्यकृता–" **त्रीणि यस्यावदातानि योनिर्विद्या च कर्म च । एतच्छिवे विजानीहि ब्राह्मणाग्र्यस्य लक्षणम्** ॥ " इति अनेन भाष्योदाहृतवाक्येन **योनिः**–ब्राह्मणाद् ब्राह्मणानां जन्मैव ब्राह्मण्यकारणम् । विद्याकर्मणी तु प्राशस्त्यरूपाग्र्यत्वसंपादके । योनिं विना ब्राह्मण्यं नायाति विश्वामित्रादिषु त्वृषित्वमेव तपोबलेनायातमिति 'अनृष्यानन्तर्ये ' इति सूत्रे भाष्ये स्पष्टम् । २ गौर, मत्स्य, मनुष्य, शृङ्ग, पिङ्गल, हय, गवय, मुकय, ऋष्य, पुट, तूण, द्रुण, द्रोण, हरिण, काकण, पटर, उणक, आमलक, कुवल, बिम्ब, बदर, कर्कर, तर्कार, शर्कार, पुष्कर, शिखण्ड, सदल, शुष्काण्ड, सनन्द, सुषम, सुषव, अलिन्द, गुडुल, पाण्डश, आढक, आनन्द, अश्वत्थ, सृपाट, आपच्चिक, शष्कुल, सूर्म, शूर्प, सूत्र, यूष, यूथ, सूप, पूप, मेथ, वल्लक, धातक, सल्लक, मालक, मालत, साल्वक, वेतस, बृस, अतस, उभय, भृङ्ग, दह, मठ, छेद, पेश, मेद, श्वन्, तक्षन्, अनडुह्, [ अनड्वाह् ] एषणः करणे, देह, देहल, काकादन, गवादन, तेजन, रजन, लवण, औद्गाहमानि, गौतम, पारक, अयःस्थूण, भौरिकि, भौलिकि, भौलिङ्गि, यान, मेध, आलम्बि, आलजि, आलब्धि, आलक्षि, केवाल, आपक, आरट, नट, टोट, नोट, मूलाट, शातन, पोतन, पातन, पाठन, आस्तरण, अधिकरण, अधिकार, आग्रहायण, प्रत्यवरोहिन्, सेचन, सुमङ्गलात्संज्ञायाम्, अण्डर, सुन्दर, मङ्गल, मन्थर, मण्डल, पट, पिण्ड, पिटक, षण्ड, उर्द, गुर्द, शम, सूद, आर्द, ह्रद, पाण्ड, भाण्ड, लोहाण्ड, कदर, कल, कन्दर, तरुण, तलुन, कल्माष, बृहत्, महत्, सोम, सौधर्म, रोहिणी–रेवती नक्षत्रे, विकल, निष्कल, पुष्कल, कटाच्छ्रोणिवचने, पिप्पल्यादयश्च, पिप्पली, हरीतकी, कोशातकी, शमी, वरी, शरी, पृथिवी, क्रोष्ट्री, [ मातामही, पितामही ]५ ॥ इति गौरादिः ॥ ३ 'शिल्पिनि ष्वुन्' इति ष्वुन् ॥ ४ गौराद्यन्तर्गणसूत्रमिदम् ॥ ५ दंष्ट्राशब्दोऽजादिषु पठ्यत एव । एवमन्येऽपीष्टाप्प्रत्ययास्तत्रैव कल्पनीया इति मातामहपितामहपाठोऽनार्ष इति शेखरकृत् ॥

मनुष्यजातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव[1]। अमत्रे हि स्त्रीविषयत्वादप्राप्तो ङीष् विधीयते न तु नियम्यते॥ गोणी आवपनं चेत्। गोणाऽन्या॥ स्थली अकृत्रिमा चेत्। स्थलाऽन्या॥ भाजी श्राणा चेत्। भाजाऽन्या॥ नागी स्थूला चेत्। नागाऽन्या॥ गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणम्। सर्पवाची तु दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम्। काली वर्णश्चेत्। कालाऽन्या॥ नीली अनाच्छादनं चेत्। नीलाऽन्या। नील्या रक्ता शाटीत्यर्थः॥ **नील्या अन्वक्तव्यः** *॥ इत्यन्। अनाच्छादनेऽपि न सर्वत्र किंतु–॥ **नीलादौषधौ** * ॥ नीली ॥ **प्राणिनि च** * ॥ नीली गौः॥ **संज्ञायां वा** * ॥ नीली। नीला। कुशी अयोविकारश्चेत्। कुशाऽन्या॥ कामुकी मैथुनेच्छा चेत्। कामुकाऽन्या। कबरी केशानां संनिवेशश्चेत्। कबराऽन्या। चित्रेत्यर्थः॥ **शोणात्प्राचाम्** । ४। १। ४३ ॥ शोणी। शोणा॥ **वोतो गुणवचनात्**[4] ४। १। ४४ ॥ उदन्ताद्गुणवाचिनो वा ङीष् स्यात्॥ मृद्वी। मृदुः। उतः[5] किम्? शुचिः। श्वेता। गुणेति किम्? आखुः[6]॥ **खरुसंयोगोपधान्न** *॥ खरुः पतिंवरा कन्या। पाण्डुः॥ **बह्वादिभ्यश्च**[7] । ४। १। ४५ ॥ एभ्यो वा ङीष् स्यात्॥ बह्वी बहुः॥ **कृदिकारादक्तिनः**[8] * ॥ रात्रिः[9]। रात्री॥

---

१ भवत्येवेति। प्राप्नोत्येवेत्यर्थः। परे तु ङीप्प्रकृतेरेव जातित्वे ङीप् भवतीति वृषलीत्यादि सिद्धेय लिङ्गानां च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या' इति लक्षणान्तरकरणसामर्थ्यात्। अन्यथा वृषलीत्यादावपि मनुष्यजातिप्रयुक्तङीष्सिद्धौ तद्वैयर्थ्यात्॥ तथा च कुण्डशब्दस्य कुण्डत्वाद्यनुगतसंस्थानव्यङ्ग्यत्वस्य सकृदाख्यातनिर्ग्राह्यत्वस्य गोत्रप्रत्ययान्तत्वस्य शाखाध्येतृवाचित्वस्य चाभावेन जातिवाचकत्वाभावान्नैव ङीषिति 'कुण्डा' इत्येव जायते इति बोध्यम्॥ २ 'कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमान्' इति कमण्डलुपात्रे नित्यस्त्रीलिङ्गत्वेन स्त्रीविषयत्वमेवेति भावः॥ ३ नागशब्दस्य गजे सर्पे च शक्तिः। स्थूलायां च नार्यां स्थौल्यगुणप्रयुक्तो नागशब्दप्रयोगः तत्सादृश्यात् लम्बटङ्गायां सर्पनिष्ठदैर्घ्यगुणप्रयुक्तो नागशब्दप्रयोगस्तत्सादृश्यादिति भावः॥ ४ **'अर्थवत्प्रातिपदिकम्' 'गुणवचनं च'** इत्यर्थवतः प्रातिपदिकसंज्ञां गुणवचनसंज्ञां च विधाय **'समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिः' 'टु (षट्संज्ञा) च' 'एकद्रव्योपनिवेशिनी संज्ञा'** इति वार्तिकैः **"एतेनानुपूर्व्येण संनिविष्टानां बाधनं यथा स्यात्। गुणवचनसंज्ञायाश्चेताभिः संज्ञाभिर्बाधनं यथा स्यात्"** इति भाष्येण च 'समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गजातिषट्–संज्ञाविनिर्मुक्तमर्थवत् गुणवचनम्' इति लक्षणलक्षितमेवं गुणवचनशब्देन गृह्यते॥ समासकृत्तद्धिताद्यतिरिक्ता त्वमुणादीनामव्युत्पन्नत्व एव संभवतीति बोध्यम्॥ ५ **'खरुसंयोगोपधान्न'** इति खरोः प्रतिषेधसामर्थ्यात् 'अतः' इति नानुवर्तते इत्याशयेनाह **शुचिरिति**॥ ६ **'आकृतिग्रहणा जातिः'** इति जातिसंज्ञया गुणवचनसंज्ञाया बाधेन न गुणवचनत्वमिति भावः॥ ७ बहु, पद्धति, अङ्कति, अञ्चति, अंहति, शकटि, शक्ति, शस्त्र, शारि, वारि, राति, राधि, शाधि, अहि, कपि, यष्टि, मुनि, **इतः प्राण्यङ्गात्, कृदिकारादक्तिनः, सर्वतोऽक्तिन्नर्थादित्येके,** चण्ड, अराल, कृपण, कमल, विकट, विशाल, विशङ्कट, भरुज, ध्वज, **चन्द्रभागा नद्याम्**, कल्याण, उदार, पुराण, अहन्। इति बह्वादिः॥ ८ संख्यासंज्ञया गुणवचनसंज्ञाया बाधेन पृथगुपादानमिति भावः॥ ९ **राजिरिति**राजधातोः **'इञ् वपादिभ्यः'** इतीञि **'इक् कृष्यादिभ्यः'**, इतीकि वा बोध्यम्। **रात्रिरिति** तु लेखकप्रमादजः' तस्योणादित्वेनाव्युत्पन्नत्वादिति बोध्यम्॥ **'सर्वतोऽक्तिन्नर्थात्'** इत्यनेन सिद्धत्वाच्च॥

**सर्वतोऽक्तिन्नार्थादित्येके** ॥ शकटिः । शकटी । अक्तिन्नर्थात्किम् ? अजननिः । क्तिन्नन्तत्वादप्रासे विध्यर्थं पद्धतिशब्दो गणे पठ्यते । हिमकाषिहतिषु चेति पद्भावः । पद्धतिः । पद्धती॥ **पुंयोगादाख्यायाम्** । ४ । १ । ४८ ॥ या पुमाख्या पुंयोगात् स्त्रियां वर्तते ततो ङीष् स्यात् ॥ गोपस्य स्त्री गोपी ॥ **पालकान्तान्न** * ॥ गोपालिका । अश्वपालिका ॥ **सूर्याद्देवतायां चाप् वाच्यः** * ॥ सूर्यस्य स्त्री देवता सूर्या । देवतायां किम् ? सूरी कुन्ती । मानुषीयम् ॥ **इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्** । ४ । १ । ४९ ॥ एषामानुगागमः स्यात् ङीष् च ॥ इन्द्रादीनां षण्णां मातुलाचार्ययोश्च पुंयोग एवेष्यते । तत्र ङीषि सिद्धे आनुगागममात्रं विधीयते । इतरेषां चतुर्णामुभयम् । इन्द्राणी ॥ **हिमारण्ययोर्महत्त्वे** * ॥ महद्धिमं हिमानी । महदरण्यम् अरण्यानी ॥ **यवाद्दोषे** ॥ * दुष्टो यवो यवानी ॥ **यवनाल्लिप्याम्** * ॥ यवनानां लिपिर्यवनानी ॥ **मातुलोपाध्याययोरानुग्वा** * ॥ मातुलानी॥ मातुली । उपाध्यायानी । उपाध्यायी ॥ **या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः** *॥ उपाध्यायी । उपाध्याया ॥ **आचार्यादणत्वं च** * ॥ आचार्यस्य स्त्री–आचार्यानी । पुंयोग इत्येव । आचार्या स्वयं व्याख्यात्री ॥ **अर्यक्षत्रियाभ्यां वा स्वार्थे** * ॥ अर्याणी । अर्या ॥ स्वामिनी वैश्या वेत्यर्थः । क्षत्रियाणी । क्षत्रिया ॥ पुंयोग तु । अर्यी । क्षत्रियी । कथं ब्रह्माणीति ? ब्रह्माणमानयति जीवयतीति कर्मण्यण् ॥ **क्रीतात्करणपूर्वात्** । ४ । १ । ५० ॥ क्रीतान्तादद-

---

१ **सर्वत इति** । अक्रदिकारादपि क्तिदिकारादपि । अत एव 'तां दृष्ट्वा श्रीमिवायतीम्' इत्यादिसिद्धिः॥ २ **'आक्रोशे नञ्यनिः'** इत्यनिः प्रत्ययः क्तिन्नर्थे इति भावः ॥ ३ योगश्चात्र दाम्पत्यलक्षण एवेति नाग्रहः किंतु जन्यजनकभावादिरपीति यथाप्रयोगमाश्रयणीयः । तेन केकयी–देवकी–श्याली–इत्यादिसिद्धिः ॥ 'भर्तृकृतान्' इति भाष्ये भर्तृपदं तूपलक्षणपरतया योजनीयमिति न तद्विरोध इति बोध्यम् ॥ ४ एवमेव केकयस्य दुहिता केकयी, देवकस्य दुहिता देवकी, श्यालस्य भगिनी श्याली, इत्यादयोऽपि बोध्याः॥ ५ "गोपालिकादीनां प्रतिषेधः" इति वार्तिकमर्थतोऽनुवदति–**पालकान्तादिति** ॥ ६ **"इङश्चेत्यपादाने स्त्रियामुपसंख्यानम्, तदन्ताच्च वा ङीष्"** इति "इङश्च" (३।३।२१) इति सूत्रवार्तिकमर्थतोऽनुवदति–**या त्विति** ॥ अस्य वार्तिकस्य '**उपेत्याधीयतेऽस्या उपाध्यायी उपाध्याया**' इति भाष्योक्तोदाहरणतश्च स्त्रीणामपि वेदाध्यापनेऽधिकारोऽङ्गीक्रियते । तदन्यथानुपपत्त्या वेदाध्ययनेऽप्यधिकारः सूच्यत एव ॥ '**एकदेशे तु वेदस्य वेदाङ्गान्यपि वा पुनः । योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते**' इति (२।१४१) मनुना वेदैकदेशमन्त्रब्राह्मणान्यतराध्यापकत्वस्यैवोपाध्यायत्वप्रयोजकत्वस्य दर्शितत्वात् । ७ '**स्यादाचार्यापि च स्वतः**' '**मन्त्रव्याख्याकृदाचार्यः**' इत्यमरैकवाक्यतयाह–**आचार्या स्वयमिति** ॥ एतेनापि स्त्रीणां वेदाध्ययनेऽधिकारो निराबाधो दर्शितः ॥ '**उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते**' इति मनुवाक्येनापि स्त्रीणां वेदाध्यापनाधिकारो ध्वनितः ॥ ८ आनुग्विधिसूत्रवार्तिकादिषु ब्रह्मशब्दोपादानाभावात्कथं '**ब्रह्माणी चाकरोच्छन्नून्**' इति ब्रह्माणीप्रयोग इत्याशयेन शङ्कते–**कथमिति** ॥ ९ **ब्रह्माणमानयतीत्यादि** । एवमेव पण्डितानी मिश्राणी देवराणी ज्येष्ठानीप्रभृतयः । सूत्रे तु 'इन्द्री' इत्यादिव्यावृत्त्यर्थमेव । शर्वशब्दे 'न संयोगात्' इति निषेधेन ककारस्य चारितार्थ्येन 'अल्लोपोऽनः' इत्येतद्बाधायाकारोच्चारणस्य आनुकि चरितार्थत्वात् पररूपवारणाय दीर्घविधानस्य चरितार्थत्वात् क्वचिदन्यतो विधानज्ञापनासंभवादिति भावः ॥

न्तात्करणादेः स्त्रियां ङीष् स्यात् ॥ वस्त्रक्रीती[1] । क्वचिन्न[2]—धनक्रीता ॥ **क्तादल्पाख्यायाम् ।४।१।५१ ॥** करणादेः क्तान्तात् स्त्रियां ङीष् स्यादल्पत्वे द्योत्ये ॥ अभ्रलिप्ती[3] द्यौः ॥ **बहुव्रीहेश्चान्तोदात्तात् ।४।१।५२।** बहुव्रीहेः क्तान्तादन्तोदात्तादन्तात् स्त्रियां ङीष् स्यात् ॥ **जातिपूर्वादिति वक्तव्यम् * ॥** तेन बहुनञ्सुकालसुखादिपूर्वान्न । ऊरुभिन्नी[4] । नेह—बहुकृता[5] ॥ **जातान्तान्न * ॥** दन्तजाता । **पाणिगृहीती भार्यायाम् * ॥** पाणिगृहीतान्या ॥ **अस्वाङ्गपूर्वपदाद्वा ।४।१।५३ ॥** पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् । सुरापीती ॥ सुरापीता । अन्तोदात्तात्किम् ? वस्त्रच्छन्ना । अनाच्छादनादित्युदात्तनिषेधः । अत एव पूर्वेणापि न ङीष् ॥ **स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ।४।१ । ५४ ॥** असंयोगोपधमुपसर्जनं[6] यत्स्वाङ्गं तदन्तादन्तात्प्रातिपदिकाद्वा ङीष् ॥ केशानतिक्रान्ता अतिकेशी । अतिकेशा । चन्द्रमुखी चंद्रमुखा । संयोगोपधात्तु सुगुल्फा । उपसर्जनात्किम् ? शिखा[8] । स्वाङ्गं त्रिधा ।

**अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्[7] * ॥**

सुस्वेदा, द्रवत्वात् ॥ सुज्ञाना, अमूर्तत्वात् ॥ सुमुखा शाला, अप्राणिस्थत्वात् ॥ सुशोफा, विकारजत्वात् ॥

**अतत्स्थं तत्र दृष्टं च[9] * ॥**

सुकेशी सुकेशा[10] वा रथ्या[11] । अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् ॥

**तेन[12] चेत्तत्तथा युतम् * ॥**

सुस्तनी सुस्तना वा प्रतिमा । प्राणिवत्प्राणिसदृशे स्थितत्वात् ॥ **नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाच्च ।४। १ ।५५ ॥** एभ्यो वा ङीष् स्यात् । आद्ययोर्बह्वज्लक्षणो निषेधो बाध्यते, पुरस्तादपवादन्यायात् ॥ ओष्ठादीनां पञ्चानां तु 'असंयोगोपधादिति तु पर्युदासे प्राप्ते वचनम्,

---

१ गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति परिभाषया 'वस्त्र टा क्रील' इत्यलौकिकवाक्य एव समासाङ्गीकारेण क्रीतस्यादन्तत्वमव्याहतमिति भावः ॥ २ क्वचिन्नेति । 'कर्तृकरणे कृता बहुलम्' इति सूत्रे बहुलग्रहणात् क्वचित्सुबन्तेन समासे सुपः प्रागेवान्तरङ्गत्वात् टापि जातेऽदन्तत्वाभावान्न ङीषिति भावः ॥ ३ अभ्रलिप्तीति । सकलायां द्यवि अभ्रलेपाभावात्क्वचिदेव द्यवि अभ्रसंबन्धेन अल्पत्वमिति भावः ॥ ४ ऊरुत्वस्यानुगतसंस्थानव्यङ्ग्यत्वेन जातित्वात् 'जातिकालसुखादिभ्योऽनाच्छादनात्—'इति भिन्नशब्दस्यान्तोदात्तत्वेन ङीषिति भावः ॥ ५ बहुनञ्सुकालसुखादीनां जातिवाचित्वाभावान्नैव भवति ङीषिति भावः ॥ ६ 'उपसर्जनात्' इति विशेषोपादानात् 'अनुपसर्जनात्' इति न संबध्यते इति भावः ॥ ७ केशमुखादीनां द्रवभिन्नत्वात् मूर्त्तिमत्त्वात् प्राणिस्थत्वाद् अविकारजत्वाच्च स्वाङ्गत्वमव्याहतमिति लक्षणसमन्वयः ॥ ८ भाष्ये 'शिखा' इति प्रत्युदाहरणदानेन क्रोडादिगणे शिखाशब्दपाठोऽनार्ष इति सूच्यते ॥ ९ इदं श्लोकवार्तिकम् ॥ १० तत्तद्विशेषणव्यावर्त्यं प्रकटयति ॥ ११ रथ्यायाः प्राणित्वाभावात्तत्र स्थितकेशानां स्वाङ्गत्वं न स्यादतो लक्षणान्तरमेतदाश्रितमिति भावः ॥ अप्राणिस्थमपि प्राणिनि दृष्टं चेत् तदपि स्वाङ्गमिति लक्षणान्तरार्थः ॥ १२ प्रतिमास्थितस्तनादीनां प्राणिस्थितिदर्शनयोरभावात् स्वाङ्गत्वाभावेन ङीषोऽनुपपत्तिरतो लक्षणान्तरमेतदाश्रितम् । येन स्वाङ्गेन यत् प्राणिरूपं वस्तु यथा युतं भवति तथैवानुगतसंस्थानप्रकारेण तत्स्वाङ्गसदृशेन तत्प्राणिसदृशं युतं भवति चेत् तदा तत्स्वाङ्गसदृशमपि स्वाङ्गमेवेत्यर्थः ॥

मध्ये[1]ऽपवादन्यायात् । सहनञ्लक्षणस्तु प्रतिषेधः परत्वादस्य बाधकः ॥ तुङ्गनासिकी तुङ्गनासिका इत्यादि ॥ नेह–सहनासिका । अनासिका ॥ अत्र वृत्तिः–**अङ्गगात्रकण्ठेभ्यो वक्तव्यम्** * ॥ स्वङ्गी । स्वङ्गेत्यादि ॥ एतच्चानुक्तसमुच्चयार्थेन चकारेण संग्राह्यमिति केचित् ॥ भाष्याद्यनुक्तत्वा-दप्रमाणमिति प्रामाणिकाः ॥ अत्र वार्तिकानि ॥ **पुच्छाच्च** *॥ सुपुच्छी । सुपुच्छा ॥ **कबरमणिविषशरेभ्यो नित्यम्** * ॥ कबरं चित्रं पुच्छं यस्याः सा कबरपुच्छी मयूरी इत्यादि ॥ **उपमानात्पक्षाच्च पुच्छाच्च** * ॥ नित्यमित्येव । उलूकपक्षी शाला । उलूकपुच्छी सेना ॥ **न क्रोडादिबह्वचः** ।४।१।५६ ॥ क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् ॥ कल्याणक्रोडा । अश्वानामुरः क्रोडा । आकृतिगणोऽयम् । सुजघना ॥ **सहनञ्विद्यमानपूर्वाच्च** ।४।१। ५७ ॥ सहेत्यादित्रिकपूर्वान्न ङीष् । सकेशा । अकेशा । विद्यमाननासिका ॥ **नखमुखात्संज्ञायाम्** ।४।१। ५८ ॥ ङीष् न स्यात् ॥ शूर्पणखा । गौरमुखा[3] ॥ संज्ञायां किम् ? ताम्रमुखी कन्या । **दिक्पूर्वपदान्ङीप्** ।४।१।६० ॥ दिक्पूर्वपदात्स्वाङ्गान्तात्प्रातिपदिकात्परस्य ङीषो ङीबादेशः स्यात् ॥ प्राङ्मुखी । आद्युदात्तं पदम् ॥ **वाहः** ।४। १। ६१ ॥ वाहन्तात्प्रातिपदिकात् ङीष् स्यात् । ङीषेवानुवर्तते, न ङीष् । दित्यवाट् च मे दित्यौही च मे ॥ **सख्यशिश्वीति भाषायाम्** ।४।१।६२ ॥ इति शब्दः प्रकारे भाषायामित्यस्यानन्तरं द्रष्टव्यः । तेन छन्दस्यपि क्वचित् । सखी[4] । अशिश्वी । आधेनवो धुनयन्तामशिश्वीः ॥ **जातेरस्त्रीविषयादयोपधात्** ।४।१। ६३ ॥ जातिवाचि[5] यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात् ॥ **आकृतिग्रहणा जातिः**[6] * ॥ अनुगतसंस्थानव्यङ्ग्येत्यर्थः[7] । तटी ॥ **लिङ्गानां च न सर्वभाक्** ॥ **सकृदाख्यातनिर्ग्राह्या** * ॥ असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरिति लक्षणान्तरम्[8]। वृषली ॥ सत्यन्तं किम् ? शुक्ला ॥

---

१ मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान् । तेनौष्ठादिषु पञ्चसु असंयोगोपधादिति निषेध एव बाध्यते नतु सहनञ्विद्यमान इति । पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्या बीजम् ॥ २ क्रोड, नख, खुर , उखा, वाल, शफ, गुद । आकृतिगणोऽयम् । तेन भग, गल, घोण, नाल, भुज, कर, इत्यादि । इति क्रोडादिः ॥ ३ नान्दीमुख्यो मातर इत्यत्र तु न निषेधः, निषेधसूत्रे संज्ञापदेन पौरुषेयसंज्ञाया एव ग्रहणेन ईश्वरीयसंज्ञायां निषेधाप्रवृत्तेरिति भावः ॥ ४ कस्यांचिच्छाखायां '**सखा सप्तपदी भव**' इति तु '**सर्वे विधयश्छन्दसि विकल्प्यन्ते**' इति ङीषभावे द्रष्टव्यम् ॥ ५ जातौ स्त्रीविषयत्वायोपधत्वादीनामभावात्तद्वा चकशब्दोपादानमित्याह–**जातिवाचीति** ॥ ६ इदं श्लोकवार्तिकम् ॥ ७ '**आकृतिर्जातिलिङ्गाख्या**' (२।६५) इति गौतमसूत्रम् । **यया जातिर्जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं विद्यात् । सा च नान्यसत्त्वावयवानां तदवयवानां च नियताद् व्यूहादिति । नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गम् शिरसा पादेन गामनुमिन्वन्ति । नियते च सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायते**' इति वात्स्यायनभाष्यं च मनसि निधायाह–**अनुगतेति** ॥ ८ मनुष्यमात्रे संस्थानस्यानुगतत्वेन वृषलादिजातिग्राहकसंस्थाने विशेषाभावाद् वृषलादिजातिसंभवाभाव इत्यतो लक्षणान्तरमाह–**लिङ्गानां चेति** ॥

सकृदित्यादि किम् ? देवदत्ता ॥ **गोत्रं च चरणैः सह** *॥ अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्दो जातिकार्यं लभत इत्यर्थः ॥ औपगवी । कठी । । बह्वृची ॥ ब्राह्मणीत्यत्र तु शार्ङ्गरवादिपाठात् ङीना ङीष् बाध्यते । जातेः किम् ? मुण्डा ॥ अस्त्रीविषयात्किम् ? बलाका ॥ अयोपधात्किम् ? क्षत्रिया ॥ **योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः** * ॥ हयी । गवयी । मुकयी । हलस्तद्धितस्येति यलोपः—मनुषी ॥ **मत्स्यस्य ङ्याम्** ॥ * मत्सी ॥ **पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च** । ४ । १ । ६४ ॥ पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष् स्यात् ॥ ओदनपाकी । शंकुकर्णी ॥ शालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोवाली । ओषधिविशेषे रूढा एते ॥ **इतो मनुष्यजातेः** । ४ । १ । ६५ ॥ ङीष् स्यात् । दाक्षी । योपधादपि । उदमेयस्यापत्यम् औदमेयी ॥ मनुष्येति किम् ? तित्तिरिः ॥ **ऊङुतः** । ४ । १ । ६६ ॥ उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् ॥ कुरूः । ' कुरुनादिभ्यो ण्यः ' तस्य स्त्रियामवन्तीत्यादिना लुक् ॥ अयोपधात्किम् ? अध्वर्युः ॥ **अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्** * ॥ रज्ज्वादिपर्युदासादुवर्णान्तेभ्य एव । अलाब्वा । कर्कन्ध्वा । अनयोर्दीर्घान्तत्वेऽपि ' नोङ्धात्वोरिति विभक्त्युदात्तत्वप्रतिषेध ऊङः फलम् ॥ प्राणिजातेस्तु कृकवाकुः ॥ रज्ज्वादेस्तु—रज्जुः । हनुः ॥ **बाह्वन्तात्संज्ञायाम्** । ४ । १ । ६७ ॥ स्त्रियामूङ् स्यात् ॥ भद्रबाहूः ॥ संज्ञायां किम् ? वृत्तबाहुः ॥ **पङ्गोश्च** । ४ । १ । ६८ ॥ पङ्गूः ॥ **श्वशुरस्योकाराकारलोपश्च** * ॥ चादूङ् । पुंयोगलक्षणस्य ङीषोऽपवादः ॥ लिङ्गविशिष्टपरिभाषया स्वादयः—श्वश्रूः ॥ **ऊरूत्तरपदादौपम्ये** । ४ । १ । ६९ ॥ उपमानवाचिपूर्वपदमूरू-

---

१ अपत्यप्रत्ययान्ते शाखाध्येतरि च संस्थानविशेषाभावात् व्यक्त्यन्तरे सुग्रहत्वाभावाच्च जातिकार्यं न प्राप्नोतीत्यतो जातिकार्यमतिदिशति—**अपत्यप्रत्ययान्त इति** ॥ २ **कठीति** । कठेन प्रोक्तम् अधीत इति वैशम्पायनान्तेवासित्वाज्जातस्य णिनेः ' कठचरकाल्लुक् ' इति लुकि कठशब्दः कठप्रोक्तवेदाध्यायिवाचकत्वाज्जातिकार्यं ङीषं लभते ॥ स्त्रीणामपि पतिसमानमेव वेदाध्ययनादिष्वधिकारम् ' **स्त्री चाविशेषात्** ' ' **दर्शनाच्च** ' इति श्रौतसूत्रे कात्यायनः ' ' **जातिं तु बादरायणः तस्मात् अपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्** ' इति पूर्वमीमांसायां जैमिनिः, **काशकृत्स्निना प्रोक्तां मीमांसामधीते काशकृत्स्ना ब्राह्मणी** ' ' **उपेत्याधीयतेऽस्या इति उपाध्यायी उपाध्याया** ' इत्युदाहरणमुपन्यस्यन् भगवान्भाष्यकारश्च स्वीकरोत्येवेति भावः ॥ तद्वंश्यत्वेन ताच्छब्द्ये तु ' वृषली ' इत्यत्रैव ' **सकृदाख्यातनिर्ग्राह्या** ' इत्यनेनैव सकलेष्टसिद्धौ ' **गोत्रं च चरणैः सह** ' इत्यस्य वैयर्थ्यापत्तिः स्यादिति बोध्यम् ॥ किंच 'अनुपसर्जनात्' इति सूत्रे तु स्वयमपि भाष्योक्ते एवोदाहरणे ' काशकृत्स्ना आपिशला' इति स्वीकृतवान् । अत्राधिकाराभावमिति पूर्वापरविरोधो विचार्य एवेति बोध्यम् ॥ ३ **इञ उपसंख्यानम्** * । सौतंगमी । मौनिचिती । तेन निर्वृत्तमित्यर्थे 'वुञ्छण्'—इति चातुरर्थिक इञ् ॥ ४ **कुरुशब्दस्य** जातिकार्यसंपत्तयेऽपत्यप्रत्ययान्तत्वं दर्शयति—**कुरुनादिभ्य इत्यादिना** । जनपदसमानशब्दात्क्षत्रियात्' इत्यनुवृत्त्या अपत्ये ण्य इति भावः ॥ ५ ' ङ्याप्प्रातिपदिकात् ' इति सूत्रभाष्ये " **उवर्णान्तादूङ् विधीयते तत्रैकादेशः । एकादेशे कृतेऽन्तादिवद्भावात्प्रातिपदिकसंज्ञा भविष्यति** " इति ग्रन्थेन तु श्वश्रूशब्देऽप्युत्पन्नत्वं ध्वन्यते ॥ ६ उपमीयते इति उपमा । कर्मण्यङ् । उपमेयम् । तद्भाव औपम्यम् । तत्रोपमेयत्वविषयवर्तमानोरूत्तरपदादित्यर्थः । ऊरूत्तरपदस्योपमेयत्वं पूर्वपदस्योपमानवाचित्व एव संभवतीत्यभिप्रेत्याह—**उपमानवाचीति** ॥

त्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात् ॥ करभोरूः ॥ **संहितशफलक्षणवामादेश्च । ४ । १ । ७० ॥** अनौपम्यार्थं सूत्रम् ॥ संहितोरूः ॥ सैव शफोरूः । शफौ खुरौ, ताविव संश्लिष्टत्वादुपचारात् ॥ लक्षणशब्दादर्शआद्यच् । लक्षणोरूः ॥ वामोरूः ॥ **सहितसहाभ्यां चेति वक्तव्यम्** * ॥ हितेन सह सहितौ ऊरू यस्याः सा सहितोरूः ॥ सहेते इति सहौ ऊरू यस्याः सा सहोरूः । यद्वा--विद्यमानवचनस्य सहशब्दस्य ऊर्वतिशयप्रतिपादनाय प्रयोगः ॥ **संज्ञायाम् ।४।१।७२ ॥** कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यात् ॥ कद्रूः । कमण्डलूः ॥ संज्ञायां किम् ? कद्रुः । कमण्डलुः । अच्छन्दोर्थं वचनम् ॥ **शार्ङ्गरवाद्यञो ङीन् ।४।१।७३ ॥** शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात् ॥ शार्ङ्गरवी । बैदी । जातेरित्यनुवृत्तेः पुंयोगे ङीषेव ॥ **नृनरयोर्वृद्धिश्चे**ति गणसूत्रम् । नारी ॥ **यङश्चाप् ।४।१।७४ ॥** यङन्तात् स्त्रियां चाप् स्यात् । यङ इति ञ्यङ्ष्यङोः सामान्यग्रहणम् ॥ आम्बष्ठ्या । कारीषगन्ध्या ॥ **षाद्यञश्चाप् वाच्यः** *॥ पौतिमाष्या ॥ **आवट्याच्च । ४ । १।७५ ॥** अस्माच्चाप् स्यात् । यञश्चेति ङीपोऽपवादः । अवटशब्दो गर्गादिः । आवट्या ॥ **तद्धिताः ।४।१।७६ ॥** आपञ्चमसमाप्तेरधिकारोऽयम् ॥ **यूनस्तिः ।४। १ । ७७ ॥** युवन्शब्दात्तिप्रत्ययः स्यात्स च तद्धितः । लिङ्गविशिष्टपरिभाषया सिद्धे तद्धिताधिकार उत्तरार्थः । युवतिः । अनुपसर्जनादित्येव । बहवो युवानो यस्यां सा बहुयुवा । युवतीति तु यौतेः शत्रन्तात् ङीपि बोध्यम् ॥

इति स्त्रीप्रत्ययप्रकरणम् ।

---

१ 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः ।' इत्यमरः । करभाविव ऊरू यस्या इति विग्रहः ॥ 'धात्री कराभ्यां करभोपमोरुः' इत्यत्र पूर्वपदस्य करभस्य नैवोपमानवाचित्वम्, उपमापदोपादानेन 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायादिति नैव भवत्यूङ् इति भावः ॥ २ संश्लेषधर्ममूलकः शफत्वाभाववतोरप्यूर्वोः शफत्वारोप इति 'शफाभिन्नोरुः' इत्येव शाब्दबोध इति भावः ॥ ३ 'ऊरूत्तरपदात्' इत्युत्तरपदग्रहणसामर्थ्यात् 'सहितसहाभ्याम्' इत्यत्रैव पूर्वपदाक्षेपादेव 'संहितशफलक्षणवामपूर्वपदकोरूत्तरपदकादूङ्' इत्यर्थसिद्धौ आदिग्रहणं 'तृम्फादीनाम्' इत्यत्रेव प्रकारार्थमिति वामप्रकाराः पीवरवरादय ऊरुप्रशंसाधायकाः शब्दाः संगृह्यन्ते । तेन 'पीवरोरूः वरोरूः' इत्यादिसिद्धिरिति बोध्यम् ॥ ४ कद्रूर्नागमाता ॥ ५ कमण्डलुश्चतुष्पाज्जातिविशेषः ॥ ६ कद्रुः पिङ्गलवर्णः ॥ ७ कमण्डलुः पात्रम् ॥ ८ शार्ङ्गरव, कापटव, गौग्गुलव, ब्राह्मण, गौतम, कामण्डलेय, ब्राह्मणकृतेय, आतिथेय, आनिधेय, आशोकेय, वात्स्यायन, मौञ्जायन, कैकसेय, काव्य, शैब्य, ऐहि, पर्येहि, अश्मरथ्य, औदपान, अराल, चण्डाल, वतण्ड, भोगवद्गौरमतोः संज्ञायां घादिषु नित्यं ह्रस्वार्थम् । **नृनरयोर्वृद्धिश्च** । इति शार्ङ्गरवादिः । पुत्रशब्दोऽप्यत्र पठ्यते । तेन पुत्री शैलपुत्रीत्यपि सिद्धम् ॥ ९ 'ऋतोऽञ्' 'नरस्य च' इत्यञि अञन्तत्वान्ङीनि 'नारी' इति धर्म्यार्थं इव जातावपि 'नारी' इत्येतत्सिद्धये गणसूत्रस्य करणेन नकारोत्तराकारस्यैव वृद्धिरिति भावः ॥ १० 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' ॥ ११ 'अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे' ॥ १२ टापः प्रागेतदधिकारकरणे तु 'पट्वी' इत्यादौ 'ओर्गुणः' इति गुणापत्तिरिति भावः ॥

## अथ कारकप्रकरणम् ।

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । २ । ३ । ४६ ॥** नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये संख्यामात्रे च प्रथमा स्यात् ॥ उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणम् ॥ अनियतलिङ्गास्तु लिङ्गमात्राधिक्यस्य । तटः । तटी । तटम् ॥ परिमाणमात्रे, द्रोणो व्रीहिः । द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः । प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम् । प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः ॥ वचनं संख्या । एकः । द्वौ । बहवः । इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम् ॥ **संबोधने च । २ । ३ । ४७ ।** इह प्रथमा स्यात् ॥ हे राम ॥

---

१ यस्मिन् प्रातिपदिके उच्चारिते स्वार्थद्रव्यलिङ्गसंख्याकारकेषु पञ्चसु मध्ये यस्यार्थस्य नियमेन उपस्थितिः स प्रातिपदिकार्थ इत्यर्थः ॥ प्रयोक्तुः स्वकीयतात्पर्यविषयस्यैवोपस्थितिः । श्रोतुश्च प्रयोक्तृप्रयुक्तवाक्ये संयोगविप्रयोगाद्यन्यतमेन प्रयोक्तृतात्पर्यवियस्यैवार्थस्योपस्थितिरिति न नानार्थेष्वपि नियतोपस्थितित्वव्याघात इति **'नियतोपस्थितिक' इति** । इदं चिन्त्यम् । 'हर्यादिभ्यो नानार्थेभ्यः प्रथमानापत्तेः' इति शब्दरत्नप्रभायां राघवेन्द्राचार्योक्तस्य तात्पर्यमन्वेषणीयम् ॥ २ 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इति न्यायादिति भावः ॥ ३ **परिमाणमात्र इति** । प्रातिपदिकादिकार्थादधिके इति शेषः ॥ अयमाशयः–यदि 'द्रोणशब्दस्य परिमाणमपि नियतोपस्थितिकत्वात् प्रातिपदिकार्थकोटिप्रविष्टमिति ततः प्रातिपदिकार्थे एव प्रथमासिद्धौ व्यर्थमेव परिमाणग्रहणम्' इत्युच्येत, तदा विचार्य समाधेयम्–यदि प्रातिपदिकार्थ एव प्रथमा क्रियते तदा प्रत्ययार्थस्य प्रकृत्यर्थ एवान्तर्भावात् प्रकृत्यर्थस्य नामार्थत्वेन तस्य व्रीहिरूपनामार्थेऽन्वयचिकीर्षायां **'नामार्थयोरभेदेनान्वयः'** इति व्युत्पत्त्या 'द्रोणाभिन्नो व्रीहिः' इत्येव शाब्दबोधः स्यात्, नत्विष्टः 'द्रोणपरिमितो व्रीहिः' इति शाब्दबोध इति सर्वसंमतस्य 'द्रोणपरिमितो व्रीहिः' इति बोधस्योपपत्तये परिमाणग्रहणमिति कृते च परिमाणग्रहणे परिमाणे प्रथमायाः करणे परिमाणविशेषस्य द्रोणरूपस्य प्रकृत्यर्थस्य प्रथमाप्रत्ययार्थे सामान्यपरिमाणे **'सामान्यविशेषयोरभेदान्वयः'** इति व्युत्पत्त्याऽभेदसंसर्गेणान्वयः । द्रोणशब्दोत्तरप्रथमाप्रत्ययार्थस्य परिमाणसामान्यस्य व्रीहिरूपप्रातिपदिकार्थे परिच्छेद्यपरिच्छेदकभावेनान्वयः । व्रीहिरूपप्रकृत्यर्थस्य तदुत्तरप्रत्ययार्थस्य च प्रातिपदिकार्थत्वान्नैव कश्चिद्विशेष इति 'द्रोणाभिन्नपरिमाणपरिमितो व्रीहिः' इति सर्वसंमतशाब्दबोधसिद्धिः । न चास्मिन् पक्षे 'नामार्थयोरभेदान्वयः' इति व्युत्पत्तेः प्राप्तिः 'द्रोणरूपनामार्थस्य प्रत्ययार्थेऽन्वयेन नामार्थेऽन्वयाभावात् प्रथमार्थपरिमाणस्य नामार्थेऽन्वयेन नामार्थस्य नामार्थेऽन्वयाभावादिति भावः ॥ ४ वचनशब्दस्य संख्यावाचकत्वे एकत्वादिसंख्यायाः नियतोपस्थितिकत्वेन प्रातिपदिकार्थत्वावश्यंभावत्वे प्रातिपदिकार्थमात्र एव प्रथमासिद्धौ व्यर्थमेव वचनग्रहणमित्याशङ्कायामाह–**इहेत्यादि** ॥ अयं भावः–'उक्तार्थानामप्रयोगः' इत्याश्रितौ प्रथमायाः प्राप्तौ पदत्वसंपादनाय प्रथमाकरणाय वचनग्रहणम् । अनन्वितार्थकविभक्तिकरणापेक्षयाऽन्वितार्थकविभक्तिकरणमेव न्याय्यमिति भावः ॥ ५ **'सिद्धस्याभिमुखीभावमात्रं संबोधनं विदुः । प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते ॥'** संबोध्यतावच्छेदकरूपेण सिद्धस्याभिमुखीकरणमेव संबोधनमिति कुमारावस्थायां 'राजन् युध्यस्व' इति न प्रयोगः ॥ मात्रग्रहणात्संबोधनाधिक्ये प्रथमा न प्राप्नोतीति सूत्रारम्भः ॥ 'हे राम मां पाहि' इत्यत्र **'अभिमुखीभवद्रामोद्देश्यकप्रवर्तनाविषयो रक्षणमिति बोधः ॥**

**कारके** । १ । ४ । २३ ॥ इत्यधिकृत्य ॥ **कर्तुरीप्सिततमं कर्म** ।१ । ४ । ४९ ॥ कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ॥ कर्तुः किम् ? माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषा नतु कर्तुः ॥ तमब्ग्रहणं ? किम् पयसा ओदनं भुङ्क्ते ॥ कर्मेत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम् । अन्यथा गेहं प्रविशतीत्यत्रैव स्यात् ॥ **अनभिहिते** । २। ३ । १ ॥ इत्यधिकृत्य ॥ **कर्मणि द्वितीया** । २ । ३ । २ ॥ अनुक्ते कर्मणि द्वितीया स्यात् ॥ हरिं भजति ॥

---

१ '**कारके**' इति '**संज्ञानिर्देशः**' इति भाष्यम् । तथा च 'कारकं सद्' इत्यग्रिमसंज्ञासूत्रेषु संबध्यत इति नैकसंज्ञापत्तिः । कारकसंज्ञाप्रदेशश्च 'कारकाद्दत्तश्रुतयोः' इत्यादि ॥ '**यावद् ब्रूयाद् 'क्रियायाम्' इति तावद् ब्रूयात् कारके**' इति भाष्यात्तु क्रियावाचकं कारकपदम् । तन्त्रेणोभयथा व्याख्यानं संभवतीति बोध्यम् ॥ २ अधिकृतमेव 'कारके' इति पदं तन्त्रेण व्याचष्टे- **क्रिययेति कारकमिति च** ॥ ३ ईप्सयैव कर्तुरीप्सोराक्षेपात् 'कर्तुः' इति व्यर्थमिति शङ्कते- **कर्तुः किमिति** ॥ सर्वेषामपि स्वस्वव्यापाराश्रयत्वात्कर्तृत्वात् कर्मणोऽपि स्वव्यापाराश्रयत्वेन कर्तृत्वान्माषभक्षणेप्सुत्वाच्च तदीप्सिततमानां माषाणां कर्मत्वापत्तिरतः 'कर्तुः' इत्युपात्तम् । उपात्ते च 'कर्तुः' पदे तत्सामर्थ्यात् '**प्रकृतधातूपात्तव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनेच्छाविषयत्वमेव** कर्मत्वम्' इति फलिते 'माषेष्वश्वं बध्नाति' इत्यत्र प्रकृतो वाक्योपात्तो धातुः-'बन्धधातुः, तदुपात्तो व्यापारः शंकुरज्जुसंयोगानुकूलो व्यापारः, तत्प्रयोज्यप्रकृतबन्धधातुवाच्यं फलं शङ्कुसंयोगरूपम्, तदाश्रयत्वेन अश्वः शंकुसंयुक्तो भवतु' इतीच्छाविषयोऽश्व एवेति अश्वस्यैव कर्मसंज्ञा भवति न तु 'माषा गलाधःसंयुक्ता भवन्तु' इति कर्मणोऽश्वस्येच्छाविषयमाषाणाम्, गलाधःसंयोगरूपफलवाचकभक्षादिधातोः प्रकृतवाक्योपात्तत्वाभावादिति मनसि निधाय समाधत्ते-**माषेष्वश्वं बध्नातीत्यादिना** ॥ ४ 'तमपो ग्रहणं यत्र' इति बहुव्रीहिणा 'ईप्सिततम' पदविषयकः प्रश्नः ॥ यथाश्रुते तु 'कर्तुरीप्सितं कर्म' इत्येवं सूत्रकरणे 'यवेभ्यो गां वारयति' इत्यत्र गोरपि अपादानसंज्ञा स्यात् 'हरिं भजति' इत्यत्र चारितार्थायाः पराया अपि कर्मसंज्ञाया विशेषविहितत्वेन प्रतिपदविहिता अपादानसंज्ञा बाधिका स्यात् ॥ तथा च 'कर्तुः क्रियया कारकं कर्म' इत्येवं सूत्रे जाते योग्यतया 'उद्देश्यम्' इत्यध्याहारेण 'कर्तुः क्रियया संबन्धुमुद्देश्यं कारकं कर्म' इत्यर्थे सकलेष्टसिद्धिरित्यभिमानेन शङ्कते-**तमब्ग्रहणं किमिति** ॥ ५ समाधत्ते-**पयसेति** । यदा कृतभोजनोऽपि 'पयसा खलु भुञ्जीय' इति पयःकरणे ओदनभोजने प्रवर्तते तदा पयस उद्देश्यत्वात्पयसोऽपि कर्मसंज्ञापत्तिरिति 'ईप्सिततमग्रहणं' कृतम् । कृते च तस्मिन् '**भुञ्जीयाहमोदनं यदि पयसा मृदुविशदः स्यात्**' इतीच्छायां पयसः संस्कारकत्वेन करणत्वस्यैवाभिप्रेतता, 'ओदन एव भुजधात्वर्थगलाधःसंयोगरूपफलाश्रयत्वेनेच्छाविषयता **तस्याप्योदन एवेप्सिततमः न तु गुणेष्वस्यानुरोधः**' इति भाष्यतः प्रतीयते ॥ यद्वा यदाऽरुचित्ववशादोदनभोजनेऽरुचिर्जाता तदा केनचिद्वैद्यवरेण रुग्णरुचये 'पयसौदनं भुङ्क्ष्व' इति पथ्यमुपदिष्टम् । तत्र पयःसंस्कृतौदनभोजने ओदनस्यैव क्षुन्निवर्तकत्वेन भोजनकर्मत्वम् । पयसः केवलं संस्कारकत्वेन करणतैव विवक्षितेति पयसो नेप्सिततमत्वम्, किंत्वोदनस्यैवेति सर्वं समञ्जसम् ॥ पयःसंस्कृतौदनकर्मकं भोजनमिति शाब्दबोधः ॥ ६ 'अधिशीङ्स्थासां कर्म' इत्यतः कर्मपदानुवृत्त्यैव सिद्धौ पुनरत्र-कर्मग्रहणं व्यर्थमित्यत आह-**कर्मेत्येति** । अयं भावः-पुनरत्र कर्मग्रहणाद् '**एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः**' इति न्यायो नैवाश्रीयते इति भावः ॥ ७ **अनुक्ते कर्मणीति** । 'वर्तमानात्प्रातिपदिकात्' इति शेषः ॥ तथा च कर्मादिकारकाणां द्योतिका एव विभक्तय इति सिद्धम् ॥ द्योत्यार्थानां विशेषणतैवेत्यन्यत्र विस्तरः ॥ ८ **हरिं भजतीति** । हरिशब्दस्य हरिरेवार्थः । अमा च कर्मत्वमेकत्वं च द्योत्यते इति तयोर्विशेषणतैव । हरिरूपकारकस्य क्रियाकर्मभावसंबन्धेन क्रियायामन्वयः । भजधातूत्तरतिपा कर्ता एकत्वं च द्योत्यते । तथा च कर्माभिन्नैकहरिकर्मकं देवदत्ताभिन्नैककर्तृकं भजनमिति बोधः ॥ प्राचां तु देवदत्ताभिन्नैकाश्रयको हर्यभिन्नैकाश्रयकप्रीत्यनुकूलो व्यापार इति बोधः ॥

अभिहिते[1] तु **कर्मणि** प्रातिपदिकार्थमात्र इति प्रथमैव। अभिधानं[2] तु प्रायेण तिङ्कृत्तद्धितसमासैः। तिङ्–हरि सेव्यते[3]। कृत्–लक्ष्म्या सेवितः[4]। तद्धितः–शतेन क्रीतः शत्यः[5]। समासः–प्राप्त आनन्दो यं स प्राप्तानन्दः[6]॥ क्वचिन्निपातेनाभिधानं[7] यथा–'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्।' सांप्रतमित्यस्य हि युज्यत इत्यर्थः॥ **तथायुक्तं चानीप्सितम्**। १। ४॥

---

१ **अभिहिते त्विति**। 'अभिहिते प्रथमा' इति न्यासान्तरेण प्रथमाविधानादिति भावः॥ २ 'कटं भीष्मं कुरु' इत्यादौ विशेष्यात् कटशब्दादुत्पन्नया द्वितीययाऽभिहितं कर्मेति विशेषणाद् भीष्मशब्दान्न प्राप्नोतीति परिगणनं दर्शयति– **अभिधानं चेति**॥ '**कट एव कर्म, तत्सामानाधिकरण्याद् भीष्मादिभ्योऽपि भविष्यति। तस्मान्नार्थः परिगणनेनेति** भाष्ये परिगणनं प्रत्याख्यातमिति बोध्यम्॥ ३ **हरिः सेव्यते इति** हर्यभिन्नैकाश्रयकप्रीत्यनुकूलश्चैत्राभिन्नैकाश्रयको व्यापारः इति प्राचां बोधः, नवीनानां तु कर्त्रभिन्नैकचैत्रकर्तृकव्यापारजन्या कर्माभिन्नहरिकर्मिका प्रीतिरिति बोधः॥ ४ 'लक्ष्म्यभिन्नकाश्रयकव्यापारजन्यप्रीत्याश्रयाभिन्नैको हरिः' इति प्राचां मते, 'कर्त्रभिन्नैकलक्ष्मीकर्तृकव्यापारजन्यप्रीत्याश्रयाभिन्नकर्मैको हरिः' इति नवीनानां मते बोधः॥ ५ **शत्य इति**॥ 'शतेन क्रीतः' इति विग्रहे 'तेन क्रीतम्' इति सूत्रे 'तेन' इति 'करणे' तृतीया, क्रीत इति क्रीधातोः कर्मणि क्तः। एवं च क्रयणकर्मरूपे तद्धितार्थे करणतया विवक्षितात् तृतीयान्तात् जातेन तद्धितेन क्रयणकर्मणः अभिहितत्वम् इति करणतया विवक्षितात् शतशब्दात् क्रयणकर्मरूपे अर्थे जातेन तद्धितेन कर्मण उक्तत्वान् न द्वितीया। तथा च शतकरणकक्रयकर्म शतसाध्यक्रयकर्म इति बोधः॥ ६ **प्राप्तानन्द इति**। प्राप्तः आनन्दः यम् इति विग्रहे 'अनेकमन्यपदार्थे' इति सूत्रेण अन्यपदार्थे जातेन बहुव्रीहिणा अन्यपदार्थस्य उक्तत्वात् प्रकृते 'यम्' इति अन्यपदार्थेन कर्मणः उक्तत्वात् यच्छब्दार्थे ग्रामादौ न द्वितीया। तथा च आनन्दकर्तृकप्राप्तिकर्मेति बोधः॥ ७ भाष्यानुक्तस्य 'प्रायेण' इत्यस्य फलं प्रदर्शयति–**क्वचिदित्यादिना**॥ निपातेन समुच्चयार्थेन कामचारार्थेन वाऽपिना कर्मत्वस्योक्तत्वान्न विषवृक्षशब्दाद् द्वितीयेति केचित्॥ अन्ये तु 'युज्यते' इत्यर्थकेन 'सांप्रतम्' इत्यनेन निपातेनाभिहितत्वात् कर्मत्वस्य न द्वितीयेति वदन्ति॥ वस्तुतस्तु–द्वयमपि न समीचीनम्। क्रियार्थक्रियाप्रयोगाभावेऽपि शकधृषादिप्रयोगाभावेऽपि दृष्टस्य तुमुन उपपत्तये 'इष्यते' इत्यध्याहार आवश्यके तेन कर्मतिङन्तेन कर्मण उक्तत्वान्न द्वितीयाप्राप्तिः॥ नच 'इष्यते, इति कर्मतिङा कर्मण उक्तत्वेऽपि 'संवर्ध्य' इति भावार्थककृता कर्मत्वस्यानभिहितत्वाद् द्वितीयापत्तिर्दुर्वारैवेति वाच्यम्। **प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्। शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते। प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते। यदा गुणे तदा तद्वदनुक्तापि प्रतीयते॥**' इति 'अनभिहिते' 'स्वादुमि णमुल्' इति सूत्रद्वयभाष्यतात्पर्यग्राहहरिवाक्यतः कृदन्तक्रिययाऽनुक्तत्वेपि तिङन्तक्रिययाऽभिहितत्वेनाभिहितत्वमेव कृत्क्रिययाप्यङ्गीक्रियते। इति नात्र संवर्धनक्रिययाऽनभिहितत्वेऽपि द्वितीया। एवमेव 'पक्वौदनो भुज्यते' इत्यत्र तिङ्क्रिययोक्तत्वेन कृत्क्रिययाऽप्युक्तमिव मन्यते इति नौदनशब्दाद् द्वितीया॥ यदा तिङ्क्रिययाऽनभिधानं तदा कृत्क्रिययोक्तमपि अनभिहितवत्प्रत्येयम्। अत एव 'आसने आस्ते' 'पक्वम् ओदनं भुङ्क्ते' इत्यत्रानभिहितत्वप्रयुक्ते सप्तमीद्वितीये भवत एवेति बोध्यम्॥ '**क्रमादमुं नारद इत्यबोधि सः**' इत्यत्र तु 'अयं नारदः' इति श्रीकृष्णीयबोधानुकरणम्। तस्यानुकरणत्वसंपत्तय एव इतिशब्दप्रयोगः॥ '**पश्य लक्ष्मण पंपायां बकः परमधार्मिकः**'। इत्यत्र '**अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति**' इति 'अस्ति' क्रियाया अध्याहारे सति 'परमधार्मिकबककर्तृकसत्तायाः कर्मतया दर्शनेऽन्वयेन तस्याप्रातिपदिकत्वान्न द्वितीया।' एवमेव '**श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः**' इत्यत्रापि 'अभूवन्' इत्यध्याहारे, शुभोत्पत्तिकर्तृकभूतकालिकसत्तायाः कर्मत्वेन श्रवणेऽन्वयात्तस्याप्रातिपदिकत्वान्न द्वितीयापत्तिरिति प्राञ्चः॥ नव्यास्तु आर्षत्वाद्विभक्तिव्यत्ययमेव स्वीकुर्वन्ति॥

५० ॥ ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात् । ग्रामं गच्छन् तृणं स्पृशति । ओदनं भुञ्जानो विषं भुङ्क्ते ॥ **अकथितं च । १ । ४ । ५१ ॥** अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् ॥

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥

दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्मेति परिगणनं कर्तव्यमित्यर्थः ॥ गां दोग्धि पयः । बलिं याचते वसुधाम् । अविनीतं विनयं याचते । तण्डुलानोदनं पचति । गर्गान् शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा ॥ अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि ॥ कारकं किम् ? माणवकस्य पितरं पन्थानं पृच्छति॥ **अकर्मकधातुभिर्योगे देशः**

---

१ धात्वर्थव्यापारप्रयोज्यफलाश्रयत्वेन विशिष्टमित्यर्थः ॥ २ ग्रामकर्मकवर्तमानगमनकर्तृकर्तृकं तृणकर्मकं वर्तमानं स्पर्शनमिति बोधः ॥ ३ ओदनकर्मकवर्तमानभोजनकर्तृकर्तृकं विषकर्मकं वर्तमानं भोजनमिति बोधः ॥ ४ **केनाकथितम् ? अपादानादिभिर्विशेषकथाभिः**' इति भाष्यमनुसृत्याह-**अपादानादिविशेषैरिति** ॥ ५ **यद्युज्यत इति** । ब्रुविशासिभिन्नधातुस्थले धात्वर्थव्यापारात्प्रागेव कर्मयुक्तं विवक्षितम् । ब्रुविशास्योः प्रयोगे तु धात्वर्थव्यापारादनन्तरमेव कर्मयुक्तमिति नानिष्टापादनम् ॥ ६ **परिगणनमिति** । तेन 'नटस्य गाथां शृणोति ' इत्यत्र न नटस्य कर्मसंज्ञा । उपयोगाभावेन नटस्य सर्वथाऽप्राप्त्याऽपादानत्वस्याविवक्षा ॥ परिगणनमिदम् । नोदाहरणदिगिति 'आख्यातोपयोगे' इत्यत्र भाष्ये स्पष्टम् ॥ ७ 'गोसंबन्धिपयःकर्मकं दोहनमिति प्राचां मते 'गोकर्मकं पयःकर्मकं दोहनमिति नव्यानां मते बोधः ॥ ८ 'बलिसंबन्धिवसुधाकर्मकं याचनम्' इति प्राचां मते 'बलिकर्मकं वसुधाकर्मकं याचनम्' इति नव्यानां मते बोधः ॥ ९ 'इदमवश्यं करिष्यामि' इति शब्दप्रयोगजनकज्ञानविशेषानुकूलव्यापारोऽत्र याचेरर्थः ॥ १० 'अहमपीदमचोद्यं चोद्ये' इति 'शकारमसि चोदितः' इति भाष्यप्रयोगे चुदेः प्रच्छिपर्यायत्वेन युष्मदस्मदोः कर्मत्वदर्शनेन तदन्यथानुपपत्त्या अर्था एवैते निर्दिष्टा इति मनसि निधायाह- **अर्थनिबन्धनेयमिति** ॥ परं तु भाष्ये--**परिगणनं तत्र क्रियते-'दुहियाचिरुधिप्रच्छिभिक्षिचित्राम्'** इति । इति परिगणनपदवैयर्थ्यापत्तिः । किंच **'प्रच्छिभिक्षि' 'ब्रुविशासि'** इति पर्यायोपादानान्नार्थनिबन्धनत्वम् । तथा च यत्र द्विकर्मत्वं शिष्टैर्दर्शितम् तत्र व्यापारद्वयार्थत्वमेवोररीकरणीयमिति बोध्यम् ॥ ११ प्रच्छिक्रियाजनकत्वस्य पितर्येव सत्त्वेन तेन माणवकस्यान्यथासिद्धत्वेन क्रियाजनकत्वाभावात् कारकत्वाभावेन न द्वितीयेति भावः ॥ १२ **'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' 'देशश्च'** इति भाष्ये दृष्टं 'कालाध्वनोरत्यन्तसंयोगे' इति सूत्रे **'कालाध्वनोः कर्मवत्'** इति वार्तिकप्रत्याख्यानाय ' **प्राकृतमेवैतत् कर्म यथा 'कटं करोति' इति**' इति भाष्ये प्राकृतपदोपादानेन ' कर्तुरीप्सिततमम्' इत्येव ' कर्मसंज्ञानुवादकम्' इति मनसि निधायाह-**अकर्मकधातुभिरिति** । एवं चानेन कर्मसंज्ञाया अव्यभिचारात् '**भवत्यर्थः कर्मभिर्युक्तो धातुर्द्वयैरकर्मकः । तस्य कर्मणि भावे च निमित्तं साध्यते नहि**' इति हर्युक्तेः देशकालादिकर्मभिन्नकर्मशून्यत्वमेवाकर्मकत्वमिति फलितमित्यग्रे स्फुटीभविष्यतीति भावः ॥

कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् * ॥ कुरून् स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते ॥ **गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ।१।४।५२ ॥** गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात् ॥

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् ।
आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥ १ ॥
आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ॥

गतीत्यादि किम् ? पाचयत्योदनं देवदत्तेन ॥ अण्यन्तानां किम् ? गमयति देवदत्तो यज्ञदत्तम्, तमपरः प्रयुङ्क्ते गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः ॥ **नीवह्योर्न[12] *** ॥ नाययति

---

**१ कुरून्स्वपितीति** । अयं भावः–व्याप्त्यनुकूलस्वापानुकूलव्यापारः स्वप्धातोरर्थ इति प्रकृतधात्वर्थप्रयोज्यव्याप्तिरूपफलाश्रयत्वेन कुरूणां 'कर्तुरीप्सिततमम्' इत्येव कर्मसंज्ञा भवतीति कुरुकर्मकव्याप्त्यनुकूलस्वापानुकूलव्यापारो देवदत्तकर्तृक इति बोधः ॥ २ व्याप्त्यनुकूलासनानुकूलव्यापार आसधातोरर्थ इत्येवं सर्वत्र बोध्यम् ॥ ३ 'शत्रवः स्वर्गम् अगच्छन्' इति अण्यन्तावस्थायां कर्तृभूतानां शत्रूणां ण्यन्तावस्थायां कर्मत्वं जातम् ॥ शत्र्वाश्रयकस्वर्गाश्रयकसंयोगानुकूलो हर्याश्रयको व्यापार इति प्राचां बोधः ॥ आश्रयस्थाने कर्मकेति नव्यमते ॥ ४ 'स्वे वेदार्थम् अविदुः' इत्यण्यन्तत्वे कर्तृभूतानां स्वेषां ण्यन्तावस्थायां कर्मसंज्ञा जातेति भावः ॥ वेदार्थाश्रयकज्ञानानुकूलस्वाश्रयकव्यापारानुकूलो हर्याश्रयको व्यापारः । वेदार्थकर्मकज्ञानानुकूलस्वनिष्ठव्यापारानुकूलो हरिनिष्ठो व्यापारः । वेदार्थकर्मकज्ञानानुकूलस्वकर्मकव्यापारानुकूलो हरिकर्तृको व्यापार इति बोधः ॥ ५ 'देवा अमृतम् आश्नन्' इति अण्यन्ते कर्तृभूतानां देवानां ण्यन्तावस्थायां कर्मसंज्ञा जातेति देवाश्रयकोऽमृताश्रयकभोजनानुकूलो यो व्यापारस्तदनुकूलो हरिनिष्ठो व्यापार इति बोधः ॥ ६ विधिर्वेदम् अध्यैत' इत्यण्यन्ते कर्तुर्विधेर्ण्यन्तावस्थायां कर्मत्वं जातमिति वेदकर्मकाध्ययनानुकूलविधिकर्तृकव्यापारानुकूलो हरिकर्तृको व्यापार इति बोधः ॥ ७ 'पृथ्वी सलिल आस्ते' इत्यण्यन्ते कर्त्र्याः पृथ्व्याः ण्यन्तत्वे कर्मत्वं जातमिति सलिलाधिकरणकपृथ्वीकर्तृकोपवेशनानुकूलो हरिकर्तृको व्यापार इति बोधः ॥ ८ प्रयोजकव्यापारे णिचि प्रयोज्यव्यापारानुकूलप्रयोजकव्यापारपर्यन्तं ण्यन्तधातुवाच्यत्वेन ण्यन्तगमिधातोः संयोगानुकूलव्यापारानुकूलवाचकत्वेन प्रकृतण्यन्तधातूपात्तचरमव्यापारप्रयोज्यसंयोगफलाश्रयत्वेन स्वर्गस्य, तद्व्यापारजन्यसंयोगानुकूलव्यापाररूपफलाश्रयत्वेन शत्रूणां च कर्मसंज्ञासिद्धौ व्यर्थमेवेदं सूत्रमिति शङ्कते–**गतीत्यादि किमिति** ॥ ९ '**अण्यन्तकर्तुः ण्यन्तत्वे कर्मसंज्ञा चेत् गत्याद्यर्थानामेव**' इति नियमार्थमिदं सूत्रमिति गत्यादिभिन्नार्थानामण्यन्तावस्थायां कर्तुर्ण्यन्तावस्थायां कर्मसंज्ञा नेति दर्शयति–**पाचयत्योदनं देवदत्तेनेति** ॥ १० 'गतिबुद्धि--काणां कर्ता स णौ' इत्येवं सूत्रकरणेऽपि 'णौ कर्मसंज्ञः प्रागवस्थाकर्ता' इति लाभेनैवेष्टसिद्धौ 'अणि' ग्रहणं व्यर्थमेवेति शङ्कते--**अण्यन्तानां किमिति** ॥ ११ 'वाक्यप्रयुक्तणेः प्राक् कर्ता वाक्यप्रयुक्तणौ कर्म' इत्येव प्रत्यासत्त्याऽर्थे कृते द्वितीयणेः प्राक् प्रथमण्यवस्थायां कर्तृभूतस्यापि द्वितीयण्यन्तावस्थायां कर्मत्वापत्तिरनिष्टा स्यादिति दर्शयति--**गमयतीत्यादिना** । प्रथमणेः प्राक् शुद्धगमेः कर्तुर्यज्ञदत्तस्य तु कर्मसंज्ञा प्रथमण्यन्तावस्थायां जातेष्टैव । एवं प्रथमण्यन्तगमिधातुकर्तुर्देवदत्तस्य द्वितीयण्यन्तावस्थायां कर्मसंज्ञाऽनिष्टा स्यादिति तद्वारणाय 'अणि' ग्रहणं कृतम् । कृते च तस्मिन् देवदत्तस्याण्यन्तकर्तृत्वाभावान्नैव द्वितीयण्यन्तावस्थायां कर्मसंज्ञापत्तिरित्याशयः ॥ १२ **नीवह्योर्नेति** । 'अणि कर्ता स णौ कर्म' इत्यध्याहार्यम् । तथा च 'नीवह्योरणि कर्ता णौ कर्म न' इत्यर्थः ॥ '**न वहिर्गत्यर्थः**' इति 'न गतिर्हिंसार्थेभ्यः' इति सूत्रभाष्यप्रमाणतो वहेर्गत्यर्थत्वाभावादेवाप्राप्तस्य कर्मत्वस्यानुवादकमेवेदं वार्तिकमिति बोध्यम् ॥

वाहयति वा भारं भृत्येन[1] ॥ **नियन्तृकर्तृकस्य[2] वहेरनिषेधः** * ॥ वाहयति[3] रथं वाहान् सूतः॥**आदिखाद्योर्न[4]***॥ आदयति खादयति वान्नं बटुना[5] ॥ **भक्षेरहिंसार्थस्य[6] न** * ॥ भक्षयत्यन्नं बटुना[7] । अहिंसार्थस्य[8] किम्? भक्षयति[9] बलीवर्दान् सस्यम् ॥ **जल्पतिप्रभृतीना[10]-मुपसंख्यानम्** * ॥ जल्पयति भाषयति वा धर्मं[11] पुत्रं देवदत्तः ॥ **दृशेश्च** * ॥ दर्शयति हरिं भक्तान् । **सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणम्, न तु तद्विशेषार्थानाम्**'इत्यनेन ज्ञाप्यते । तेन स्मरतिजिघ्रतीत्यादीनां न–स्मारयति घ्रापयति वा देवदत्तेन ॥ **शब्दायतेर्न[12]** * ॥ शब्दाययति देवदत्तेन । धात्वर्थसंगृहीतकर्मत्वेनाकर्मत्वात्प्राप्तिः[13] ॥ येषां[14] देशकालदिभिन्नं कर्म न संभवति, तेऽत्राकर्मकाः । न त्वविवक्षितकर्माणोऽपि । तेन मासमासयति देवदत्तमित्यादौ कर्मत्वं भवत्येव । देवदत्तेन पाचयतीत्यादौ तु न ॥ **हृक्रोरन्यतरस्याम्[15]** । १ । ४ । ५३ ॥

---

१ **नाययतीति** । ' नयति भारं भृत्यः ' इत्यण्यन्तावस्थायां कर्तृभूतस्य भृत्यस्य प्राप्ता कर्मसंज्ञा निषिध्यत इति भावकर्मकभृत्यकर्तृकनयनानुकूलव्यापारो देवदत्तकर्तृक इति बोधः ॥ २ ' **वहेरनियन्तृकर्तृकस्य** ' इति वार्तिकमर्थतोऽनुवदति–**नियन्तृकर्तृकस्येति** । ' अणि . कर्ता स णौ कर्म' इति वार्तिकेऽध्याहारेण नियन्तुः पशुप्रेरकस्य ण्यन्तकर्तृत्वे णिप्रकृतिकर्तृत्वं पशोरर्थादायातमिति पशुकर्तृकस्य वहेरण्यन्तत्वे कर्तृभूतानां पशूनां पशुप्रेरककर्तृकण्यन्तवहेः कर्मसंज्ञाया निषेधो नेत्यर्थः ॥ ३ **वाहयतीति** ॥ 'वाहा रथं वहन्ति ' इति अण्यन्तावस्थायां वहधातोः कर्तृभूतानां वाहपशूनां प्रयोजकसारथिकर्तृकव्यापारप्रेरणायां णिचि कर्मसंज्ञा न निषिद्धेति रथकर्मकवाहकर्तृकवहनानुकूलः सूतकर्तृको व्यापार इति बोधः ॥ ४ आदिखाद्योः प्रत्यवसानार्थत्वाद् अण्यन्तकर्तुः कर्मसंज्ञा ण्यन्तावस्थायां प्राप्ता निषिध्यते ॥ ५ अन्ननिष्ठकालसंयोगानुकूलबटुनिष्ठव्यापारानुकूलो व्यापार इति बोधः ॥ ६ भक्षेः प्रत्यवसानार्थत्वात्प्राप्ता कर्मसंज्ञा निषिध्यते ॥ ७ अन्ननिष्ठगलाधःसंयोगानुकूलबटुनिष्ठव्यापारानुकूलो व्यापार इति बोधः ॥ ८ गलाधःसंयोगानुकूलव्यापाररूपभक्षणस्य प्राणवियोगानुकूलव्यापाररूपहिंसात्वाभावाद् व्यर्थमेव अहिंसार्थस्य ' इति विशेषणमित्यभिमानेन प्रश्नः ॥ ९ व्याघ्रसिंहादिकर्तृकभक्षणस्य प्राणवियोगानुकूलव्यापाररूपहिंसात्वाद् 'भक्षयति मूषकान् विलावं पालक' इत्यादौ निषेधाप्रवृत्तये ' अहिंसार्थस्य ' इति विशेषणमिति सूचयन्नुदाहरति–**भक्षयतीत्यादि** 'आपोमयः प्राणः' इति श्रुतेः अद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वेन सस्यावस्थायां सेचनमन्तरेण म्लानत्वस्यानुभवसिद्धत्वेन प्राणित्वात् सस्यभक्षणे हिंसासत्त्वान्न निषेध इति भावः ॥ क्षेत्रस्थसस्यभक्षणेन ' क्षेत्रिणो हिंसा ' इति तु न सम्यक् अन्नभक्षणेन तत्स्वामिनोऽपि हिंसात्वापत्त्याऽन्नसस्ययोर्वैलक्षण्यानुपपत्तेः ॥ १० शब्दक्रियत्वेन शब्दकर्मकत्वाभावेऽपि कर्मसंज्ञाविध्यर्थं वार्तिकमिदमिति भावः ॥ ११ **धर्ममिति** । धर्मनामा कश्चिन्मनुज एव कर्म । अतः शब्दकर्मत्वाभावात् कर्मसंज्ञाया अप्राप्तौ वार्तिकेन पुत्रस्य कर्मसंज्ञा । धर्मशास्त्रस्य ग्रहणे तु शब्दकर्मकत्वादेव 'वेदमध्यापयद् विधिम्' इत्यत्रेव कर्मत्वसिद्धौ वार्तिकं व्यर्थमेव स्यादिति बोध्यम् ॥ अत एव 'जल्पति पुत्रं देवदत्तः' 'जल्पयति पुत्रं देवदत्तम् ' इत्यादि पदमञ्जर्यामुदाहृतम् ॥ १२ **शब्दायतेरिति** । प्राप्तिरिति शेषः ॥ १३ **प्राप्तिरिति** । यद्यपीत्यादिः ॥ तथापि बहिर्भूतपुत्रादिकर्मकत्वेनाकर्मकत्वाभावान्नैव प्राप्तिरिति तत्त्वम् ॥ १४ '**धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया** ॥' इत्युक्तेर्यथा धात्वर्थेनोपसंग्रहात्कर्मणोऽकर्मकत्वम् । एवं कर्मणोऽविवक्षणादप्यकर्मकत्वाङ्गीकारे पाचयत्यादावपि कर्मसंज्ञापत्तिरिति तां परिहरति–**येषामिति** ॥ अयं भावः–देशकालादिकर्मशून्यत्वस्य सर्वथा विरहेण सामर्थ्यादकर्मकपदमेतत्परमिति भावः ॥ १५ अभ्यवपूर्वहरतेः प्रत्यवसानार्थत्वात्प्राप्तौ शुद्धस्याप्राप्तावुभयत्र विभाषा । एवं विपूर्वकरोतेरकर्मकत्वप्राप्तौ शुद्धस्याप्राप्तावुभयत्र विभाषेति भावः ॥

हृक्रोरणौ यः कर्ता स णौ वा कर्म स्यात् ॥ हारयति[1] कारयति वा भृत्यं भृत्येन वा कटम् ॥ **अभिवादिदृशोरात्मनेपदे वेति वाच्यम्** * ॥ अभिवादयते दर्शयते देवं भक्तं भक्तेन वा ॥ **अधिशीङ्स्थासां कर्म । १ । ४ । ४६ ॥** अधिपूर्वाणामेषामाधारः कर्म स्यात् ॥ अधि-[2]शेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ॥ **अभिनिविशश्च । १ । ४ । ४७ ॥** अभिनीत्ये-तत्संघात[3]पूर्वस्य विशतेराधारः कर्म स्यात् ॥ अभिनिविशते सन्मार्गम् । परिक्रयणे संप्रदानमिति सूत्रादिह मण्डूकप्लुत्याऽन्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थित[4]विभाषाश्रयणात्क्वचिन्न । पापेऽभिनि-वेशः ॥ **उपान्वध्याङ्वसः । १ । ४ । ४८॥** उपादिपूर्वस्य वसतेराधारः कर्म स्यात् । उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः ॥ **अभुक्त्यर्थस्य[5] न** * ॥ वने उपवसति ॥

**उभसर्वतसोः[6] कार्या धिगुपर्यादिषु त्रिषु ॥**
**द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते** * ॥

उभयतः कृष्णं गोपाः। सर्वतः कृष्णम् । धिक्[7] कृष्णाभक्तम्। उपर्युपरि[8] लोकं हरिः। अध्यधि लोकम्। अधोऽधो लोकम्॥ **अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि*** ॥ अभितः कृष्णम् ।परितः कृष्णम्।ग्रामं समया । निकषा लंकाम् । हा कृष्णाभक्तम् । तस्य शोच्यतेत्यर्थः।बुभुक्षितं न प्रति-भाति किंचित् ॥ **अन्तरान्तरेण युक्ते ।२।३।४ ॥** आभ्यां योगे द्वितीया स्यात् । अन्तरा त्वां मां हरिः । अन्तरेण हरिं न सुखम् । **कर्मप्रवचनीयाः । १।४।८३ ॥** इत्यधिकृत्य[9] ॥ **अनुर्ल-क्षणे[10] ।१ । ४ । ८४ ॥** लक्षणे द्योत्येऽनुरुक्तसंज्ञः स्यात् । गत्युपसर्गसंज्ञापवादः॥ **कर्मप्रवचनी-ययुक्ते द्वितीया । २ ।३।८ ॥** एतेन योगे द्वितीया स्यात् ।               ।वर्षत् । हेतुभूतजपोपल-

---

१ भृत्यनिष्ठकटहरणानुकूलव्यापारानुकूलो देवदत्तनिष्ठो व्यापार इति बोधः ॥ २ हरिनिष्ठो वैकुण्ठ-कर्मकाधिशयनानुकूलो व्यापार इति बोधः ॥ ३ '**सत्त्वे निविशते ।**' इति भाष्यप्रयोगे द्वितीयाया अदर्शनेन 'अभिपूर्वनिपूर्वविश्=अभिनिविश्' इत्यङ्गीकारफलितमर्थमाह-**संघातेत्यादि** ॥ ४ यदि तु '**देवत्रातो गलो ग्राहः**' इति व्यवस्थितविभाषाः परिगणिताः इति विभाव्यते, तदा '**एष्वर्थेष्व-भिनिविष्टानाम्**' इति भाष्ये प्रयोगाद् 'अभिनिविश्' इत्यविकृतानुपूर्व्या एव ग्रहणविवक्षणेन न 'पापेऽभिनिवेशः' इत्यत्र कर्मत्वापत्तिरिति बोध्यम् ॥ ५ '**अश्यर्थस्य न**' इत्येतद्वार्तिकम् 'मशकार्थो धूमः' इतीव भोजननिवृत्त्यर्थस्य न' इति फलितार्थकमर्थतो वदति-**अभुक्त्यर्थस्येति** ॥ हरिदिन-मुपोषित इत्यादौ तु 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया ॥ ६ कारकविभक्तिद्वितीयाप्रकरणमुपन्यस्य उपपदविभक्तिद्वितीयाप्रकरणमुपन्यस्यति-**उभसर्वतसोरिति** । उभसर्वयोस्तसाविति विग्रहः ॥ उभशब्द-सर्वशब्दप्रकृतिकतसन्तयोगे इत्यर्थः । नित्यशब्दस्य प्रायःशब्दपर्यायत्वं ध्वनयन्नेवात्र नैव कृतोऽयजिति-बोध्यम् ॥ ७ धिग् मूर्खेत्यत्र तु गच्छेत्यादिक्रियान्वये प्रथमैव । अनध्याहारे तु द्वितीयैव ॥ ८ 'उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धयः' इत्यस्य तु 'उपरिबुद्धीनां श्रेष्ठबुद्धीनाम् उपरि ईश्वरबुद्धयश्चरन्ति' इत्येवार्थः । तेनाम्रेडितत्वाभावेन नैव द्वितीयापत्तिरिति बोध्यम् ॥ ९ 'विभाषा कृञि' इति यावत्॥ १० "लक्ष्यते ज्ञायतेऽनेनेति लक्षणम् । ज्ञानजनकज्ञानविषयत्वं हि लक्षणत्वमिति वृष्टिः करणभूतजपज्ञापिकेति वृष्ट्या ज्ञानेन रहस्यकारितजपज्ञानं जायते इति हेतुभूतजप उपलक्षितो येनेति । 'वाहिताग्न्यादिषु' इति निष्ठान्तस्य परप्रयोगः । सूत्रे लक्षणशब्दोऽर्शआद्यजन्तो लक्ष्यपर इति लक्ष्याज्जपाद् द्वितीया इति भावः । प्राञ्चस्तु जपज्ञानेन वर्षणज्ञानं जायत इति जपो लक्षणम् वृष्टिर्लक्ष्यम् इति वदन्ति ॥

क्षितं वर्षणमित्यर्थः । परापि हेताविति तृतीयाऽनेन बाध्यते । लक्षणेत्थंभूतेत्यादिमा सिद्धे पुनः-संज्ञाविधानसामर्थ्यात् ॥ **तृतीयार्थे । १।४।८९ ॥** अस्मिन् द्योत्येऽनुरुक्तसंज्ञः स्यात्॥नदीमन्ववसिता सेना । नद्या सह संबद्धेत्यर्थः ॥'षिञ् बन्धने' क्तः ॥ **हीने । १ ।४ ।८६ ॥**हीने द्योत्येऽनुः प्राग्वत् । अनु हरिं सुराः । हरेर्हीना इत्यर्थः ॥ **उपोऽधिके च । १ ।४।८६ ॥** अधिके हीने च द्योत्ये उपेत्यव्ययं प्राक्संज्ञं स्यात् ॥ अधिके सप्तमी वक्ष्यते । हीने, उप हरिं सुराः ॥ **लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः । १ । ४ । ९० ॥** एष्वर्थेषु विषयभूतेषु प्रत्यादय उक्तसंज्ञाः स्युः । लक्षणे, वृक्षं प्रति पर्यनु वा विद्योतते विद्युत् । इत्थंभूताख्याने, भक्तो विष्णुं प्रति पर्यनु वा । भागे, लक्ष्मीर्हरिं प्रति पर्यनु वा । हरेर्भाग इत्यर्थः । वीप्सायां, वृक्षं वृक्षं प्रतिपर्यनु वा सिञ्चति ॥ अत्रोपसर्गत्वाभावान्न षत्वम् ॥ एषु किम् ? परिषिञ्चति ॥ **अभिरभागे । १ ।४ । ९१ ॥** भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात् । हरिमभि वर्तते । भक्तो हरिमभि । देवं देवमभि सिञ्चति ॥ अभागे किम् ? यदत्र ममाभिष्यात्तद्दीयताम् ॥ **अधिपरी अनर्थकौ । १ । ४ ।९३ ॥** उक्तसंज्ञौ स्तः । कुतोऽध्यागच्छति । कुतः पर्यागच्छति । गतिसंज्ञाबाधाद्गतिर्गताविति निघातो न ॥ **सुः पूजायाम् । १ । ४ । ९४ ॥** सु सिक्तम् । सु स्तुतम् । अनुपसर्गत्वान्न षः ॥ पूजायां किम् ? सुषिक्तं किं तवात्र । क्षेपोऽयम् ॥ **अतिरतिक्रमणे च ।१।४। ९५ ॥** अतिक्रमणे पूजायां चातिः कर्मप्रवचनीयसंज्ञः स्यात् । अति देवान् कृष्णः ॥ **अपिः पदार्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेषु ।१।४।९६॥**एषु द्योत्येष्वपिरुक्तसंज्ञः स्यात्॥सर्पिषोऽपि स्यात् । अनुपसर्गत्वान्न षः । संभावनायां लिङ् । तस्यां एव विषयभूते भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः स्याद् इत्यनेन संबध्यते।सर्पिष इति षष्ठी

---

१ संतमसे विद्युद्विद्योतनं लक्षणम्, वृक्षो लक्ष्यम् ॥ प्राञ्चस्तु वृक्षप्रकाशेन विद्युद्विद्योतज्ञानाद् वृक्षो लक्षणम् विद्युद्विद्योतनं लक्ष्यम् इति वदन्ति ॥ २ इत्थंभूतस्य कंचित्प्रकारं प्राप्तस्य आख्याने इत्यर्थः ॥ ३ भक्तत्वरूपं प्रकारं विशेषणतां प्राप्त इति विष्णुनिरूपितत्वस्य भक्तत्वे कथनात् विष्णौ कर्मप्रवचनीययोगः॥ ४ लक्षणेत्थंभूताख्यानभागशब्दा अर्शआद्यजन्ता लक्ष्य-निरूपक-स्वामिपरा इति भावः ॥ ५ हरिनिष्ठस्वामिनानिरूपितस्वत्वाश्रयरूपा लक्ष्मीरिति बोध इति फलितमाह-**हरेर्भाग इत्यर्थ इति** ॥ भागशब्देन तत्प्राप्तिविषयत्वमेव द्योत्यत इति 'स्वत्वं प्रति' इत्यस्य 'स्वत्वप्राप्तियोग्यतायामित्यर्थः' प्रागस्माभिर्दर्शित इति न विस्मरणीयम् ॥ ६ वृक्षादीनां स्वरूपतः सेचनकर्मत्वेऽपि तत्त्वेनाविवक्षणान्नैव कर्मसंज्ञा ॥ '**वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम्**' इत्युक्तेः ॥ एवं च कर्मप्रवचनीययोग एव द्वितीयेति फलान्तरमप्याह-**अत्रोपसर्गत्वाभावादिति** ॥ क्रियायोगाभावादिति भावः ॥ ७ अत्र यद् वस्तु मम भागे स्यात् तद् दीयताम् इत्यर्थः ॥ ८ कर्मप्रवचनीयसंज्ञायाः प्रयोजनं दर्शयति-**अनुपेति** ॥ ९ अप्रयुक्तपदान्तरार्थद्योतनामवगमयति-**संभावनायामित्यादिना** ॥ 'उपसंवादाशङ्कयोर्लिङ्' इति वार्तिकेनेति भावः ॥ १० **तस्याः** संभावनायाः ॥ ११ **भवने** अस्धात्वर्थे ॥ '**दौर्लभ्यम्**' इत्यनेनान्वितम् ॥ १२ **कर्ता** चात्र सर्पिरवयवो बिन्दुरेव तद्दौर्लभ्यप्रयुक्तबिन्दुकर्तृकसत्तादौर्लभ्यमित्यर्थः ॥ १३ **अपिशब्दः** स्वद्योत्यबिन्दुवाची ॥ १४ **संबध्यत इति** । स्वद्योत्यबिन्दोः कर्तृतया कर्तृदौर्लभ्यप्रयुक्तदौर्लभ्यवत्त्वसंबन्धेन च स्यात्पदार्थक्रियायामन्वयादिति भावः ॥

तु अपिशब्दबलेन गम्यमानस्य बिन्दोरवयवावयविभावसंबन्धे इयमेव ह्यपिशब्दस्य पदार्थद्योतकता[3] नाम। द्वितीया तु नेह प्रवर्तते, 'सर्पिषो बिन्दुना योगो न त्वपिना' इत्युक्तत्वात्॥ अपि स्तुयाद्विष्णुम्। संभावनं शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः॥ अपि स्तुहि। अन्ववसर्गः कामचारानुज्ञा॥ धिग्देवदत्तमपि स्तुयाद् वृषलम्। गर्हा॥ अपि सिञ्च। अपि स्तुहि। समुच्चये॥ **कालाध्वनोरत्यन्तसंयोगे। २। ३। ५॥** इह द्वितीया स्यात्। मासं कल्याणी। मासमधीते। मासं गुडधानाः। क्रोशं कुटिला नदी। क्रोशमधीते। क्रोशं गिरिः॥ अत्यन्तसंयोगे किम्? मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः॥

**स्वतन्त्रः कर्ता। १। ४। ५४॥** क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात्॥ **साधकतमं करणम्। १। ४। ४२॥** क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात्। तमब्ग्रहणं किम्। गङ्गायां घोषः॥ **कर्तृकरणयोस्तृतीया। २। ३। १८।** अनभिहिते कर्तरि करणे च तृतीया स्यात्। रामेण बाणेन हतो वाली॥ **प्रकृत्यादिभ्य उपसंख्यानम् *॥** प्रकृत्या चारुः। प्रायेण याज्ञिकः। गोत्रेण गार्ग्यः। समेनैति। विषमेणैति। द्विद्रोणेन धान्यं क्रीणाति। सुखेन दुःखेन वा यातीत्यादि॥ **दिवः कर्म च। १। ४। ४३॥** दिवः साधकतमं कारकं कर्मसंज्ञं स्याच्चात्करणसंज्ञम्। अक्षैरक्षान्वा दीव्यति॥ **अपवर्गे तृतीया। २। ३। ६।** अपवर्गः फलप्राप्तिस्तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात्। अह्ना क्रोशेन वाऽनुवाकोऽधीतः॥ अपवर्गे किम्? मासमधीतो नायातः॥ **सहयुक्तेऽप्रधाने। २। ३। १९॥** सहार्थेन युक्ते अप्रधाने तृतीया स्यात्।

---

१ बिन्दुगमकतैव॥ २ अप्रयुज्यमानबिन्दुरूपपदार्थद्योतकतेत्यर्थः॥ ३ अत्यन्तसंयोगो व्याप्तिरूपो निरन्तरसंबन्धः। स च द्रव्यगुणक्रियाभिरिवाभावेनापि। तेन मासमध्ययनाभाव इति मासं नाधीते इत्यादिसिद्धिः॥ ४ अधिकृतकारकपदं क्रियापरमपीति प्रागुक्तमेवेत्याह–**क्रियायामिति**॥ ५ स्थाली पचति काष्ठानि पचन्ति इत्यादिसिद्ध्यर्थमाह–**विवक्षित इति**॥ 'स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः' इति हर्युक्तिरिति भावः॥ ६ **तमब्ग्रहणं किमिति**। कारकाधिकारात्करणल्युडन्तकरणेतिमहासंज्ञया च साधकत्वे लब्धे साधकपदमेव साधकतमार्थं भविष्यतीति प्रश्नः॥ ७ **गङ्गायामिति**। तुल्यन्यायेन अधिकरणमित्यधिकरणल्युडन्तमहासंज्ञयैव सिद्धे आधारग्रहणसामर्थ्यात्सर्वावयवव्याप्त्या य आधारः सोऽधिकरणमित्यर्थः स्यात्। एवं च तिलेषु तैलमित्यादावेव सप्तमी स्यान्नतु गंगायामित्यादिगौणाधारे॥ अतस्तब्ग्रहणेन 'अस्मिन् कारकाधिकारे शब्दसामर्थ्यगम्यस्तरतमयोगो न भवति' इति ज्ञाप्यते। तथा च 'गंगायां गावः' इत्यादावप्यधिकरणे सप्तमी निर्बाधैवेति भाष्ये स्पष्टम्॥ ८ रामकर्तृकबाणकरणकप्राणवियोगाश्रयो वालीति बोधः॥ ९ "वृद्धो यूना' इत्यादिनिर्देशात् 'सहयुक्ते' इत्यस्य 'सहार्थे गम्ये' इत्येवार्थः। तदेवाह–**सहार्थेन युक्ते इति**॥ तत्फलमाह–**एवमित्यादि**॥ 'युक्तग्रहणं शब्दविशेषानादरेणार्थयोगे भवत्वित्यर्थम्' इति वदतो नागेशस्य 'अन्तरान्तरेण युक्ते' इत्यत्रार्थयोगे द्वितीयापत्तिः कथं नेति परिभाव्यमेव॥ साहित्यं च स्वसमभिव्याहृतक्रियादिसमानकालिकसमानक्रियादिमत्त्वम्। क्वचित्समानदेशसमानक्रियादिमत्त्वम्। क्वचित् विद्यमानतामात्रमेव साहित्यम्॥ अत एव माषवापोत्तरं तत्रैव क्षेत्रे तिलवापे '**माषैः सह तिलान् वपति**' इत्यत्र '**सहैव दशभिः पुत्रैर्भारं वहति गर्दभी**' इत्यत्र च तृतीयासिद्धिः॥

पुत्रेण सहागतः पिता । एवं साकंसार्धसमंयोगेऽपि । विनापि तद्योगं तृतीया । 'वृद्धो यूने-त्यादिनिर्देशात् ॥ **येनाङ्गविकारः । २ । ३ । २० ॥** येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते तत-स्तृतीया स्यात् ॥ अक्ष्णा काणः । अक्षिसंबन्धिकाणत्वविशिष्ट इत्यर्थः ॥ अङ्गविकारः किम् ? अक्षि काणमस्य ॥ **इत्थंभूतलक्षणे । २ । ३ । २१ ॥** कंचित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् ॥ जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः ॥ **संज्ञोऽन्यतरस्यां कर्मणि । २ । ३ । २२ ॥** संपूर्वस्य जानातेः कर्मणि तृतीया वा स्यात् ॥ पित्रा पितरं वा संजानीते ॥ **हेतौ । २ । ३ । २३ ॥** हेत्वर्थे तृतीया स्यात् ॥ द्रव्यादिसाधारणं निर्व्यापारसाधारणं च हेतु-त्वम् । करणत्वं तु क्रियामात्रविषयं व्यापारनियतं च । दण्डेन घटः । पुण्येन दृष्टो हरिः ॥ फलमपीह हेतुः । अध्ययनेन वसति **गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका ।** अलं श्रमेण । श्रमेण साध्यं नास्तीत्यर्थः । इह साधनक्रियां प्रति श्रमः करणम् । शतेन शतेन वत्सान्पाययति पयः । शतेन परिच्छिद्येत्यर्थः ॥ **अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया *** ॥ दास्या संयच्छते कामुकः । धर्मे तु-भार्यायै संयच्छति ॥

**कर्मणा यमभिप्रैति संप्रदानम् । १ । ४ । ३२ ॥** दानस्य कर्मणा यमभिप्रैति स संप्रदानसंज्ञः स्यात् ॥ **चतुर्थी संप्रदाने । २ । ३ । १३ ॥** विप्राय गां ददाति ॥ अनभिहित इत्येव । दानीयो विप्रः ॥ **क्रियया यमभिप्रैति सोऽपि संप्रदानम् *** ॥ पत्ये शेते ॥ **कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा *** ॥ पशुना रुद्रं यजते । पशुं रुद्राय ददा-

---

१ अङ्गानि सन्त्यस्मिन्नित्यङ्गशब्दोऽर्शआद्यजन्त इत्यभिप्रेत्याह–**अङ्गिन इति** ॥ इत्थंभूतलक्षणं इत्यतो लक्षणपदसंबन्धेनाह–**लक्ष्यत इति** ॥ २ विकृताक्षिज्ञाप्यकाणत्वविशिष्ट इत्यर्थ इति भावः ॥ 'येनाङ्ग-विकारः' इति सूत्रं तु '**आचार्याः सूत्राणि कृत्वा न निवर्तयन्ति' नासूत्रा कर्तव्या यत्रानुगम आचार्येण क्रियेत**' इति भाष्यदर्शितरीत्यैव कृतम् 'अक्ष्णा काणः' इत्यादीनाम् ' इत्थंभूतलक्षणे च ' इत्य-नेनापि सिद्धत्वादिति सारम् ॥ ३ इदम्शब्दाज्जातस्य थमुप्रत्ययस्य प्रकारार्थत्वाद् इत्थंभूतशब्दस्य प्रकारंप्राप्तार्थ-कस्य लक्षणशब्देन षष्ठीतत्पुरुष इत्यभिप्रेत्याह–**कंचित्प्रकारमिति** ॥ जन्ममिद्धेऽपरिहार्ये विकारे 'येनाङ्ग-विकारः' इति कृतिसाध्य परिहाय च 'इत्थंभूतलक्षणे' इति भेदस्तु न विचारसह इति तत्त्वम् ॥ इत्थं-भूतस्य यत्र लक्षणवाचकात्प्रयोगोपस्थितिः, न तु तद्विशेषणबहुव्रीहिसमासघटकत्वं लक्षणवाचकस्य तत्रैव तृतीया यथा 'कमण्डलुना छात्रमद्राक्षीत्' इति 'कमण्डलुपाणिं छात्रमद्राक्षीत्' इति च ॥ अत्र बहुव्रीहौ कमण्ड-लुशब्दात्तृतीया नेति प्राचां मतम् । नागेशस्तु कमण्डलुपाणिशब्दादित्यभिप्रैति परं तु '**यासकृदपि तदपि**' इत्यनुसारेणैव '**तदेव**' इत्यत्रापि सामान्ये नपुंसकमिति नावगच्छतीति चित्रम् ॥ ४ 'हेतुर्ना कारणं बीजम्' इत्यत्र पर्यायतयोक्तयोरपि हेतुकरणयोर्विशेषं प्रतिपादयति–**द्रव्यादीति** । आदिना गुणक्रिय । दण्डस्य घटरूपद्रव्यजनकत्वेन पुण्यस्य व्यापारशून्यत्वेन न करणत्वं किंतु हेतुत्वमेवेति भावः ॥ ५ न तु श्रूयमा-णैवेत्याग्रहः ॥ ६ 'दाणश्च सा चेत्' इत्यनेनेदं ज्ञाप्यते । 'सा चेत्' इत्यनेन काचित्कत्वं बोधयता '**अशिष्टव्यवहारे**' इति ज्ञापितम् ॥ ७ संप्रदानसंज्ञाया अन्वर्थत्वेन लब्धमाह–**दानस्येति** ॥ ८ विप्रसंप्रदानकं विप्रोद्देश्यकं वा गोकर्मकं दानमिति बोधः ॥ ९ सूत्रे कर्मपदं यौगिकमेवेत्याह–**क्रिय-येति** ॥ १० पत्युद्देश्यकं पतिसंप्रदानकं वा शयनमिति बोधः ॥ ११ इदं छन्दोविषयम् ॥

तीत्यर्थः ॥ **रुच्यर्थानां प्रीयमाणः ।१।४।३३ ॥** रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः[1] संप्रदानं स्यात् । हरये रोचते भक्तिः । अनन्यकर्तृकोऽभिलाषो रुचिः[2] । हरिनिष्ठप्रीतेर्भक्तिः कर्त्री ॥ प्रीयमाणः किम् ? देवदत्ताय रोचते मोदकः पथि[3] ॥ **श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।१।४।३४॥** एषां प्रयोगे बोधयितुमिष्टः[4] संप्रदानं स्यात् । गोपी स्मरात्कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वा ॥ ज्ञीप्स्यमानः किम् ? देवदत्ताय श्लाघते पथि[5] ॥ **धारेरुत्तमर्णः ।१।४।३५॥** धारयतेः प्रयोगे उत्तमर्ण उक्तसंज्ञः स्यात् । भक्ताय धारयति मोक्षं हरिः ॥ उत्तमर्णः किम् ? देवदत्ताय शतं धारयति ग्रामे ॥ **स्पृहेरीप्सितः ।१।४।३६॥** स्पृहयतेः प्रयोगे इष्टः संप्रदानं स्यात् । पुष्पेभ्यः स्पृहयति ॥ ईप्सितः किम् ? पुष्पेभ्यो वने स्पृहयति ॥ ईप्सितमात्रे इयं संज्ञा । प्रकर्षविवक्षायां तु परत्वात्कर्मसंज्ञा—पुष्पाणि स्पृहयति ॥ **क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ।१।४।३७ ॥** क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपः स उक्तसंज्ञः स्यात् । हरये क्रुध्यति । द्रुह्यति । ईर्ष्यति । असूयति ॥ यं प्रति कोपः किम् ? भार्यामीर्ष्यति मैनामन्योऽद्राक्षीदिति ॥ [ क्रोधो[6]ऽमर्षः । द्रोहोऽपकारः । ईर्ष्याऽक्षमा । असूया गुणेषु दोषाविष्करणम् ] द्रुहादयो[7]ऽपि कोपप्रभवा एव गृह्यन्ते । अतो विशेषणं सामान्येन यं प्रति कोप इति ॥ **क्रुधद्रुहोरुपसृष्टयोः कर्म ।१।४।३८॥** सोपसर्गयोरनयोर्यं[8] प्रति कोपस्तत्कारकं कर्मसंज्ञं स्यात् । क्रूरमभिक्रुध्यति । अभिद्रुह्यति ॥ **राधीक्ष्योर्यस्य विप्रश्नः ।१।४।३९ ॥** एतयोः कारकं संप्रदानं स्यात्, यदीयो[9] विविधः प्रश्नः क्रियते ॥ कृष्णाय राध्यति ईक्षते वा । पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः॥

---

१ प्रीतिकर्ता समवायेन प्रीत्याश्रयः, न तु प्रीतिविषयः प्रीतिकर्म ।। २ विषयतासंबन्धावच्छिन्नप्रीत्यनुकूलः संमवायसंबन्धेन प्रीतिसमानाधिकरणो व्यापारो रुचेरर्थः ॥ तत्फलप्रीतेः समवायेनाश्रयो हरिः संप्रदानत्वशक्तिमान् । तथा च हरिसंप्रदानिका भक्तिकर्तृका रुचिरिति बोधः ॥ समवायसंबन्धेन हरिनिष्ठा या भक्तिविषया प्रीतिः तदनुकूलो भक्तिनिष्ठो व्यापार इति यावत् ॥ एवं च हरौ शेषषष्ठी कारकत्वविवक्षायां 'हरिं प्रीणयति भक्तिः' इति प्रतीतौ कर्मसंज्ञा प्राप्नोतीति तद्वारणाय संप्रदानत्वमनेन क्रियते । प्रीणयतेस्तु समवायसंबन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिव्यधिकरणो व्यापारोऽर्थ इति न रुच्यर्थता । अत एव 'हरिम्प्रीणयति भक्तिः' इत्यादौ प्रीधात्वर्थयोगे न संप्रदानसंज्ञा ।। विषयतासंबन्धावच्छिन्नप्रीतिव्यधिकरणव्यापाररूपोऽभिलष्यतेरर्थ इति नाभिलष्यतेरपि रुच्यर्थतेति न 'हरिर्भक्तमभिलष्यति' इत्यत्र संप्रदानसंज्ञापत्तिरिति सर्वं मनसि निधायाह--**अनन्यकर्तृक इति** ॥ विषयतया प्रीत्याश्रयाभिन्नकर्तृक इत्यर्थः ।। नागेशस्तु '**अन्यकर्तृकः**' इति पाठं कल्पयित्वा 'अभिलष्यतिकर्त्रपेक्षया यदन्यद् अभिलषतिकर्म तत्कर्तृक इत्यर्थः' इत्याह ॥ **हरिनिष्ठेति** ।। समवायसंबन्धेन हरिनिष्ठा या प्रीतिः तस्या विषयतासंबन्धनाश्रयभूता भक्तिरेव कर्त्री प्रीत्यनुकूलव्यापाराश्रयः । एवं च प्रीतिसमानाधिकरणव्यापारार्थत्वं रुचेः कथितम् ।। ३ पथः समवायेन प्रीत्याश्रयत्वाभावान्न संप्रदानतापत्तिरिति भावः ।। ४ ज्ञीप्स्यमान इत्यत्र णिजन्तज्ञाधातोः सनि कर्मणि शानच् इति दर्शयितुमाह—**बोधयितुमिष्ट इति** ।। ५ पथो न बोधयितुमिष्यमाणतेति भावः ।। ६ अत्रापपाठोऽयम् । मनोरमायामस्योपलभ्यमानत्वात् ॥ ७ **द्रोहादय इति** । घञन्तनिर्देशस्यैवोचितत्वादुचितः पाठः ॥ सूत्रनिर्दिष्टानुकरणेन—**द्रुहादय इति** पाठस्तु धातुपाठपठितानुपूर्व्याः कोपप्रभवत्वानाश्रयणात् तदर्थव्यापारस्यैव कोपप्रभवत्वौचित्येन भावघञन्तपाठस्यैव युक्ततरत्वादनुचित एव ॥ ८ **उपसृष्ट इति** सोपसर्गसंज्ञा प्राचाम् ॥ ९ यस्येति कर्मणि षष्ठी यत्कर्मको विविधः प्रश्न इत्यर्थसूचितमाह—**यदीयो विविध इति** ॥

**प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता** । १ । ४ । ४० ॥ आभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनारूपव्यापारस्य कर्ता संप्रदानं स्यात् ॥ विप्राय गां प्रतिशृणोति, आशृणोति वा । विप्रेण मह्यं देहीति प्रवर्तितः प्रतिजानीत इत्यर्थः ॥ **अनुप्रतिगृणश्च** । १ । ४ । ४१ ॥ आभ्यां गृणातेः कारकं पूर्वव्यापारस्य कर्तृभूतमुक्तसंज्ञं स्यात् । होत्रेऽनुगृणाति । प्रतिगृणाति । होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः ॥ **परिक्रयणे संप्रदानमन्यतरस्याम्** । १ । ४ । ४४ ॥ नियतकालं भृत्या स्वीकरणं परिक्रयणम्, तस्मिन् साधकतमं कारकं संप्रदानसंज्ञं वा स्यात् ॥ शतेन शताय वा परिक्रीतः ॥ **तादर्थ्ये चतुर्थी वाच्या** * ॥ मुक्तये हरिं भजति । **क्लृपि संपद्यमाने च** * ॥ भक्तिर्ज्ञानाय कल्पते, जायते इत्यादि ॥ **उत्पातेन ज्ञापिते च** * ॥ वाताय कपिला विद्युत् ॥ **हितयोगे च** * ॥ ब्राह्मणाय हितम् ॥ **क्रियार्थोपपदस्य च कर्मणि स्थानिनः** । २ । ३ । १४ ॥ क्रियार्था क्रिया उपपदं यस्य तस्य स्थानिनोऽप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी स्यात् ॥ फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः ॥ नमस्कुर्मो नृसिंहाय । नृसिंहमनुकूलयितुमित्यर्थः ॥ एवं स्वयंभुवे नमस्कृत्येत्यादावपि ॥ **तुमर्थाच्च भाववचनात्** । २ । ३ । १५ ॥ भाववचनाश्चेति सूत्रेण यो विहितस्तदन्ताच्चतुर्थी स्यात् ॥ यागाय याति । यष्टुं यातीत्यर्थः ॥ **नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च** । २ । ३ । १६ ॥ एभिर्योगे

---

१ द्विवचननिर्देशेऽपि 'देवदत्तयज्ञदत्तौ भोज्येताम्' इति भोजनाकर्मत्वस्य प्रत्येकमन्वयवदत्रापि प्रत्येकमुपसर्गयोग इत्यभिप्रेत्योदाहरति **प्रतिशृणोतीति** ॥ २ सूत्रे भ्यामो लुकमभिप्रेत्योदाहरति–**अनुगृणातीति** ॥ ३ तादर्थ्यशब्देनोपकार्योपकारकभाव एव गृह्यत इति उपकारकत्वं च परम्परयापि गृह्यते इति चाभिप्रेत्योदाहरति–**मुक्तय इति** । ब्राह्मणाय पायसम् इति चास्यैवोदाहरणम् इति भावः ॥ वस्तुतस्तु तादर्थ्येन प्रकृतिविकृतिभाव एव गृह्यते इति मुक्तये हरिं भजति ब्राह्मणाय पायसम् इत्यादौ तु 'क्रियया यमभिप्रैति' इत्यनेनैव संप्रदानतेति बोध्यम् ४ 'क्लृपि' इति लुप्तषष्ठ्यन्तम् संपद्यमानो विकारः । तेन विकारवाचकाच्चतुर्थी । कल्प्यमाने इत्येव वक्तव्ये 'संपद्यमान' ग्रहणसामर्थ्यात् क्लृपिपदेन तदर्थग्रहणमित्युदाहरति–**कल्पते संपद्यते इत्यादि** ॥ ५ 'वाताय कपिला विद्युदातपायातिलोहिनी। पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ।' इति भाष्योक्तश्लोकः ॥ ६ हितमस्ति इति स्वरूपसत्तान्वाख्यानेऽपि चतुर्थ्यर्थमिदं वार्तिकम् । चेन बलिमुखरक्षितयोगेऽपि । ७ क्रियार्था उपपदं यस्य इति विग्रहेण 'सप्तम्यन्तं क्रियार्थपदं यत्र श्रूयते' इत्यर्थावगमात् । तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्याध्येयम् । एवं च 'क्रियायां क्रियार्थायाम्' इत्येतत्संबन्धसूत्रैर्विहितास्तुमुनादयः प्रत्यया गृह्यन्ते । स्थानिपदं चाप्रयुज्यमानार्थकमित्यभिप्रायेणाह–**अप्रयुज्यमानस्येति** । **तुमन इति** । तुमुनादेरित्यर्थः ॥ ८ आहर्तुमिति । आहरिष्यतीत्यस्य आहारक इत्यस्य चोपलक्षणम् ॥ ९ 'नमस्करोति देवान्' इत्यत्रेव 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति द्वितीयाया एव बलीयस्त्वे 'नमस्कुर्मो नृसिंहाय' इति चतुर्थ्यनुपपन्नेत्याशङ्कायाः समाधानमाह–**नृसिंहमनुकूलयितुमितीति** ॥ एवं च नात्र चतुर्थ्युपपदविभक्तिः किंतु कारकविभक्तिरेवेति 'विप्रतिषेधे परं कार्यम्' इति चतुर्थ्येव भवतीति भावः ॥ १० 'अव्ययकृतो भावे' इत्युक्तत्वात्तुमुनो भाव एव विधानाद् भावस्यैव तुमर्थत्वात्तद् व्यर्थमेव भाववचनग्रहणस्वघटितसूत्रविशेषपरमेवेत्याह–**इति सूत्रेणेति** ॥ अव्ययेभ्यो विहिताया विभक्तेर्लुकापहारनित्यत्वेनाव्ययभिन्ना एव भावार्थकाः प्रत्यया ग्राह्या इति बोध्यम् ॥

चतुर्थी स्यात् ॥ हरये नमः ॥ उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ नमस्करोति देवान् । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा ॥ अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि ॥ प्रभ्वादियोगे षष्ठ्यपि साधुः । तस्मै प्रभवति 'स एषां ग्रामणीरिति निर्देशात् । तेन 'प्रभुर्बुभूषुर्भुवनत्रयस्येति सिद्धम् ॥ वषडिन्द्राय ॥ चकारः पुनर्विधानार्थः । तेनाशीर्विवक्षायां परामपि ' चतुर्थी चाशिषीति षष्ठीं बाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूयात् ॥ **मन्यकर्मण्यनादरे विभाषाऽप्राणिषु** ।२।३।१७। प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे ॥ न त्वां तृणं मन्ये तृणाय वा ॥ श्यना निर्देशात्तानादिकयोगे न-न त्वां तृणं मन्वे ॥ अप्राणिष्वित्यपनीय, **नौकाकान्नशुकशृगालवर्जेष्विति वाच्यम् *** ॥ तेन 'न त्वां नावमन्नं वा मन्ये इत्यत्राप्राणित्वेऽपि चतुर्थी न । नत्वां शुने मन्ये इत्यत्र प्राणित्वेऽपि भवत्येव ॥ **गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामध्वनि** । २ ।३ ।१२ ॥ अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायाम् । ग्रामं ग्रामाय वा गच्छति ॥ चेष्टायां किम् ? मनसा हरिं व्रजति ॥ अनध्वनीति किम् ? पन्थानं गच्छति ॥ गन्त्राधिष्ठितेऽध्वन्येवायं निषेधः । यदा तूत्पथात्पन्था एवाक्रमितुमिष्यते तदा चतुर्थी भवत्येव । उत्पथेन पथे गच्छति ॥

**ध्रुवमपायेऽपादानम्** । १ ।४ ।२४ ॥ अपायो विश्लेषस्तस्मिन्साध्ये ध्रुवमवधिभूतं कारकमपादानं स्यात् ॥ **अपादाने पञ्चमी** । २ । ३ । २८ ॥ ग्रामादायाति । धावतोऽश्वात्पतति ॥ कारकं किम् ? वृक्षस्य पर्णं पतति ॥ **जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् *** ॥

---

१ स्वसमभिव्याहृतपदविशेषनिमत्तका विभक्तिरुपपदविभक्तिः । कारकाधिकारीयसंज्ञाविशेषरूपस्वार्थनिमित्तका कारकविभक्तिः । तथा च कारकस्य स्वार्थत्वात्तनिमित्तकविभक्तेरन्तरङ्गत्वम्, स्वसमभिव्याहृतपदान्तरयोगनिमित्तकत्वादुपपदविभक्तेर्बहिरङ्गत्वम् एवं चान्तरङ्गपरिभाषाफलितत्वेऽपि पृथगुपन्यासः प्रपञ्चार्थः ' अभ्यर्हितं च ' इत्यनेनैव सिद्धौ ' वर्णानामानुपूर्व्येण ' ' भ्रातुश्च ज्यायसः ' इत्यनयोरिवेति न वाचनिकत्वकल्पने गौरवमिति बोध्यम् ॥ २ ' स्वस्तिर्भवतु मे नित्यम् ' इति भविष्योत्तरे प्रयोगादनव्ययमपि स्वस्तिशब्दः ॥ ३ श्यन्निर्देशो न श्यन्विशिष्टोपादानार्थः किंतु तानादिकव्यावृत्त्यर्थं एव । तेन दैवादिकादेव श्यन्सत्त्वे प्रत्ययान्तरसत्त्वे वा चतुर्थी भवत्येवेति ' तृणाय मत्वा रघुनन्दनो न ' इति भट्टिप्रयोगोपपत्तिरिति बोध्यम् ॥ ४ अपायः संयोगनाशकी व्यापार इति संयोगनाशौ स्वरूपसत्ताविव बुद्धिकल्पितावपि गृह्येते इति ' माथुराः पाटलिपुत्रेभ्य आढ्यतराः ' इति बुद्धिकल्पितमाथुरपाटलिपुत्रसंयोगनाशमेवाश्रित्य भाष्यकृतोक्तं पञ्चमीसाधु संगच्छते । असतोऽपि बुद्धौ कल्पनं भवत्येवेति शशशृङ्गादिशब्दानां प्रातिपदिकत्वसिद्धिः स्थाल्यादीनां कर्तृत्वसिद्धिश्चेति बोध्यम् ॥ ५ ध्रुवस्य निश्चलपर्यायत्वे ' त्रस्तादश्वात्पतितः ' 'सार्थाद्गच्छतो हीनः' इत्यादावश्वसार्थादीनां निश्चलत्वाभावेनापादानसंज्ञानुपपत्तिमाशङ्क्य ' न वाध्रौव्यस्याविवक्षितत्वात् ' 'इति समाधानं कृतवान् वार्तिककारः । तत्र ध्रुवत्वमविवक्षितमिति ध्रुवाध्रुवयोरुभयोरपि संयोगाश्रयत्वेन विवक्षितयोर्बौद्धसंयोगनाशावधित्वमात्रविवक्षयाऽपादानत्वसिद्धिरित्यभिप्रायेण व्याचष्टे-**ध्रुवमवधिभूतमिति** । अवधिभूतत्वेनैव विवक्षितं चलम् अचलं वापादानसंज्ञमित्यर्थः ॥ ६ निश्चलं विभागावधिं दर्शयति-**ग्रामादिति** ॥ चलस्याप्यवधित्वमात्रविवक्षाफलं दर्शयितुं विशिनष्टि-**धावत इति** ॥ धावनकर्त्रश्वापादानकं पतनमिति बोधः ॥ ७ **वृक्षस्येति** । पर्णपतनावधित्वस्य वृक्षे सत्त्वेऽपि यदा ' वृक्षावधिकं पर्णकर्तृकं पतनम्' इति बोधे वृक्षस्य पतनक्रियायामन्वयित्वेन कारकत्वं तदाऽपादनसंज्ञायां ' वृक्षात् ' इति पञ्चमी भवत्येव ॥ यदा तु ' वृक्षसंबन्धिपर्णकर्तृकं पतनम् ' इति बोधे वृक्षस्य पर्णे एव संबन्धित्वेनान्वयः तदा वृक्षस्य क्रियान्वयित्वाभावात्कारकत्वाभावेऽपि पञ्चमी मा भूदिति ' कारकम् ' इत्युपात्तम् ॥ ८ 'दुःखोऽधर्मो नानेन कृत्यमस्ति' इति बुद्ध्या संप्राप्य निवर्तते इत्येव बौद्धविभागसिद्धापादानसंज्ञानुवादकं वार्तिकमाह-**जुगुप्सेति**॥पापापादानकं जुगुप्सनं विरमणं चेति बोधः॥

पापाज्जुगुप्सते विरमति । धर्मात्प्रमाद्यति ॥ **भीत्रार्थानां भयहेतुः । १ ।४ । २५ ॥** भयार्थानां त्राणार्थानां च प्रयोगे भयहेतुरपादानं स्यात् ॥ चोराद् बिभेति । चोरात्त्रायते ॥ भयहेतुः किम् ? अरण्ये बिभेति त्रायते वा ॥ **पराजेरसोढः ।१।४।२६ ॥** पराजेः प्रयोगेऽसह्योऽर्थोऽपादानं स्यात् ॥ अध्ययनात्पराजयते । ग्लायतीत्यर्थः ॥ असोढः किम् ? शत्रून्पराजयते । अभिभवतीत्यर्थः ॥ **वारणार्थानामीप्सितः । १ । ४ । २७ ॥** प्रवृत्तिविघातो वारणम् । वारणार्थानां धातूनां प्रयोगे ईप्सितोऽर्थोऽपादानं स्यात् ॥ यवेभ्यो गां वारयति ॥ ईप्सितः किम् ? यवेभ्यो गां वारयति क्षेत्रे ॥ **अन्तर्धौ येनादर्शनमिच्छति । १ । ४ । २८ ॥** व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात् ॥ मातुर्निलीयते कृष्णः ॥ अन्तर्धौ किम् चौरान्न दिदृक्षते ॥ इच्छतिग्रहणं किम् ? अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् ॥ **आख्यातोपयोगे । १ । ४ । २९ ॥** नियमपूर्वकविद्यास्वीकारे वक्ता प्राक्संज्ञः स्यात् ॥ उपाध्यायादधीते ॥ उपयोगे किम् ? नटस्य गाथां शृणोति ॥ **जनिकर्तुः प्रकृतिः । १ । ४ । ३० ॥** जायमानस्य हेतुरपादानं स्यात् ॥ ब्रह्मणः प्रजाः प्रजायन्ते ॥ **भुवः प्रभवः ।१।४।३१ ॥** भवनं भूः । भूकर्तुः प्रभवस्तथा ॥ हिमवतो गङ्गा

---

१ भीत्राशब्दौ संपदादित्वाद्भावक्विबन्तौ भयत्राणार्थौ । ततो बहुव्रीहिलभ्यमर्थमाह–**भयार्थानामिति ॥** २ अरण्यं न भयहेतुः किं तु तत्स्था वृकादय एवेति भावः ॥ ३ परापूर्वकजयतेर्निवृत्त्यनुकूलासाध्यतापर्यायासह्यतासाधकग्लानौ न्यूनीकरणानुकूलाभिभवे च शक्तिः । तत्राद्ये ग्लानेः कर्तृनिष्ठत्वादकर्मकत्वम् । तत्रैवार्थे यत्रासाध्यतासाधिका ग्लानिस्तत्रापादानसंज्ञा । अत एव भाष्यकृता '**दुःखमध्ययनम् दुर्धरं च इति बुद्ध्या संप्राप्य निवर्तते**' इत्येवं ग्लानिसाध्यनिवृत्तिमादायैवापादानसंज्ञां संसाध्यैतत्सूत्रं प्रत्याख्यायि ॥ एवं चासोढशब्दस्यासाध्यपर्यायता ध्वनिता ॥ द्वितीये तु सकर्मकत्वम्, तस्यात्र न ग्रहणम् । 'विपराभ्यां जेः' इत्यत्र तूभयोरेव ग्रहणमिति लक्ष्यानुसारिव्याख्यानमेवात्र शरणमिति बोध्यम् ॥ निवृत्तिजनके न्यूनीभवनपर्यायासह्यताविवक्षायामपादानत्वमध्ययनात्पराजयते इत्यादौ निवर्तनाजनकन्यूनीकरणपर्यायसह्यताविवक्षायां शत्रून्पराजयते इत्यादौ ॥ अध्ययनात्पराजयत इत्यत्राध्ययनपदमध्ययनजन्यदुःखपरम्, शत्रुपदमपि शत्रुजन्यदुःखपरमेव । तत्र यदीयदुःखेऽसह्यत्वविवक्षा तदपादानम् । यदीयदुःखेऽसह्यताविवक्षा न तत्रापादानमिति सारम् ॥ ४ क्षेत्रस्य नेप्सितत्वम्, किंतु क्षेत्रस्थानां यवानामेवेति भावः ॥ ५ अन्तर्धौ इति 'यस्य च भावेन' इति सप्तमी । येनेति कर्तरि तृतीया सौत्री । दर्शनकर्मणोऽन्यस्यानुपादानाद् 'आत्मनः' इत्यस्य कर्मत्वं प्रत्यासत्त्या लभ्यते इति सकलमभिप्रेत्याह–**यत्कर्तृकस्यात्मनो दर्शनाभावम्**' इति ॥ ६ 'यद्यहं चोरान्पश्येयम्, तर्हि चोरा अपि मां पश्येयुः' इति हेतोश्चोरकर्तृकस्यात्मकर्मकदर्शनस्याभावेच्छैव चोरान्न दिदृक्षतीत्यत्र प्राप्ता चोरशब्दस्यापदानसंज्ञा अन्तर्ध्यभावान्नेति भावः ॥ ७ 'येन' इत्यस्याभावेऽदर्शनेच्छोरेवापादानसंज्ञा स्यादिति बोध्यम् ॥ ८ नटगाथाश्रवणं न नियमपूर्वकमिति भावः । नटच्छात्रस्य तु नटगाथाश्रवणेऽप्युपयोग एवेति बोध्यम् ॥ ९ प्रकृतिशब्देनोपादानकारणमेव गृह्यते । 'पुत्रात् प्रमोदो जायते' इत्यत्र तु पुत्रसौशील्यादिज्ञानपरमेव पुत्रपदमिति बोध्यम् ॥ 'आदित्याज्जायते वृष्टिः' इत्यत्रापि विलक्षणधर्मपरतैवादित्यपदस्येति बोध्यम् ॥ मूर्तमेवोपादानमिति तु नाग्रहः ॥ 'जनि' इत्यत्र षष्ठ्याः सौत्रो लुक् ॥ १० प्रभवः प्रथमप्रकाशस्थानम् ॥ इमानि सर्वाणि अपादानसंज्ञासूत्राणि बौद्धविभागसिद्धापादानसंज्ञानुवादकानि ॥

प्रभवति । तत्र प्रकाशत इत्यर्थः ॥ **ल्यब्लोपे कर्मण्यधिकरणे च** * ॥ प्रासादात्प्रेक्षते । आसनात्प्रेक्षते । प्रासादमारुह्य, आसने उपविश्य, प्रेक्षत इत्यर्थः । श्वशुराज्जिह्रेति । श्वशुरं वीक्ष्येत्यर्थः । गम्यमानापि क्रिया कारकविभक्तीनां निमित्तम् । कस्मात्त्वम् नद्याः ॥ **यतश्चाध्वकालनिर्माणं तत्र पञ्चमी** * ॥ **तद्युक्तादध्वनः प्रथमासप्तम्यौ** * ॥ **कालात्सप्तमी च वक्तव्या** * ॥ वनाद् ग्रामो योजनं योजने वा । कार्तिक्या आग्रहायणी मासे ॥ **अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहि युक्ते** ।२।३।२९ ॥ एतैर्योगे पञ्चमी स्यात् । अन्य इत्यर्थग्रहणम् । इतरग्रहणं पञ्चार्थम् । अन्यो भिन्न इतरो वा कृष्णात् । आराद्वनात् । ऋते कृष्णात् । पूर्वो ग्रामात् ॥ दिशि दृष्टः शब्दो दिक्शब्दः । तेन संप्रति देशकालवृत्तिना योगेऽपि भवति । चैत्रात्पूर्वः फाल्गुनः ॥ अवयववाचियोगे तु न । 'तस्य परमाम्रेडितम्' इति निर्देशात् । पूर्वं कायस्य ॥ अञ्चूत्तरपदस्य तु दिक्छब्दत्वेऽपि षष्ठ्यतसर्थेति षष्ठीं बाधितुं पृथग्ग्रहणम् । प्राक् प्रत्यग्वा ग्रामात् । आच्, दक्षिणा ग्रामात् । आहि दक्षिणाहि ग्रामात् । अपादाने पञ्चमीति सूत्रे 'कार्तिक्याः प्रभृतीति भाष्यप्रयोगात् प्रभृत्यर्थयोगे पञ्चमी—भवात्प्रभृति आरभ्य वा सेव्यो हरिः॥ अपपरिबहिरिति समासविधानाज्ज्ञापकाद्बहिर्योगे पञ्चमी—ग्रामाद्बहिः—**अपपरी वर्जने** ।१।४।८८॥ एतौ वर्जने कर्मप्रवचनीयौ स्तः ॥ **आङ् मर्यादावचने** ।१।४।८९ ॥ आङ् मर्यादायामुक्तसंज्ञः स्यात् । वचनग्रहणादभिविधावपि ॥ **पञ्चम्यपाङ्परिभिः** ।२।३।१० ॥ एतैः कर्मप्रवचनीययोगे पञ्चमी स्यात् । । अप हरेः

---

१ प्रासादाद् प्रेक्षणं तेजोरूपं चक्षुरिन्द्रियम् अपक्रामति । ततो विषयेण संयोगात् विषयप्रत्यक्षमिति अपादानसंज्ञामूलिकैव पञ्चमी सिद्धा ॥ २ श्वशुरं वीक्ष्य 'श्वशुरो मां मादर्शत्' इति बुद्ध्या निवर्तते इति बौद्धमपादानत्वमेव ॥ ३ 'कस्माद्' इति प्रश्ने 'आगतः' इत्युत्तरे च 'आगतः' इत्यध्याहारेणैवापादानत्वमस्त्येवेति बोध्यम् ॥ ४ 'योजनम्' इत्यत्र 'वर्तते' इत्यध्याहारेण प्रथमा सिद्धा ॥ ५ योजने मासे इत्यत्र 'गते' इत्यध्याहारेण 'यस्य च 'भावेन' इति सप्तमी सिद्धा ॥ ६ **अन्य इत्यर्थग्रहणमिति** । 'यदीत्यादिः ॥ **इतरेति** । 'तर्हि' इत्यादिः । स्यात्' इति शेषः ॥ परं तु नैतद्युज्यते 'स्वं रूपम्' इत्यस्य बाधापत्तेः । 'क्रुधद्रुहेर्ष्यासूयार्थानाम्' इत्यत्रार्थपदवैयर्थ्यापत्तेः । तस्मादत्र स्वरूपस्यैव ग्रहणम् । अत एव ' घटः पटो न' इत्यादौ न पञ्चमी ॥ घटाद्भिन्न इत्यत्र पञ्चमी तु 'घटाद् भेदः' इत्यत्रेव भिद्धात्वर्थविभागमादायापादानत्वेनैव सिद्धेति बोध्यम् ॥ ७ दृष्टः सर्वजनप्रसिद्ध्या रूढः । तेन ककुप्काष्ठैन्द्रीप्रभृतयो न गृह्यन्ते ॥ ८ यथा संप्रति दिग्वाचकत्वाभावेऽपि देशकालवृत्तियोगे भवति तथा 'पूर्वापराधरोत्तरम्' इति शास्त्रनिर्दिष्टावयववाचियोगेऽपि स्यात, अत आह–**अवयवेति** ॥ अवयविवाचकान्नेति ज्ञापितार्थः ॥ अत एव 'पूर्वं नाभेः कायस्य' इति प्रत्युदाहरणे 'नाभेः' इत्यत्र पञ्चमी वक्ष्यते तत्र नाभेरवयवित्वाभावादेव पञ्चमीति बोध्यम् ॥ ९ **पृथग्ग्रहणमिति** । 'वदन्ति' तत्र समीचीनम्, तत्र प्रत्ययग्रहणेन श्रूयमाणप्रत्यय एव तत्प्रवृत्तेरङ्गीकारेणाश्रूयमाणप्रत्यये तत्प्रवृत्तेरनङ्गीकारस्य तत्र भाष्ये ध्वनितत्वात्' इति शेषः ॥ १० **प्रभृत्यर्थेति** । 'मेरुपृष्ठादारभ्य ध्रुवपर्यन्तम्' 'अवीचिमारभ्य मेरुपृष्ठपर्यन्तम्' इति योगसूत्रभाष्यप्रयोगाद् 'आरभ्य' इत्येतद्योगे द्वितीयापञ्चम्यौ साधू इति बोध्यम् ॥ ११ **वचनग्रहणादि**· 'मर्यादायाम्' इत्येव वाच्ये 'मर्यादावचने' इति गुरुभूतन्यासेन 'मर्यादाया वचनं कथनं यस्मिन्नर्थसंघाते' इति विग्रहेण तादृग् अर्थसंघातः 'मर्यादाभिविध्योः' इत्यत्रोक्त एव गृह्यत इत्यभिप्रेत्याह–**अभिविधावपीति** ॥

परि हरेः संसारः । परिरत्र वर्जने । लक्षणादौ तु-हरिं परि ॥ आ[1] मुक्तेः संसारः । आ[2] सकलाद्ब्रह्म ॥ **प्रति[3]ः प्रतिनिधिप्रतिदानयोः । १ । ४ । ९२ ॥** एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात् ॥ **प्रतिनिधिप्रतिदाने च यस्मात् । २।३।११ ॥** अत्र कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । प्रद्युम्नः कृष्णात्प्रति । तिलेभ्यः प्रतियच्छति माषान् ॥ **अकर्तर्यृणे पञ्चमी । २ । ३ । २४ ॥** कर्तृ[4]वर्जितं यदृणं हेतुभूतं ततः पञ्चमी स्यात् ॥ शताद्[5]बद्धः ॥ अकर्तरि किम् ? शतेन[6] बन्धितः ॥ **विभाषा गुणेऽस्त्रियाम् ।२।३। २५॥** गुणे[7] हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् ॥ जाड्याज्जाड्येन वा बद्धः ॥ गुणे किम् ? धनेन कुलम् ॥ अस्त्रियां किम् ? बुद्ध्या मुक्तः ॥ **विभाषेति[8] योगविभागादगुणे स्त्रियां च क्वचित्** । धूमादग्निमान् । नास्ति घटोऽनुपलब्धेः ॥ **पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ॥ २ । ३ । ३२ ।** एभिर्योगे तृतीया स्यात्पञ्चमीद्वितीये च ॥ अन्यतरस्यांग्रहणं[9] समुच्चयार्थम् । पञ्चमीद्वितीये अनुवर्तेते[10] ॥ पृथग् रामेण रामात् रामं वा एवं विना नाना ॥ **करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ।२।३।३३॥** एभ्यो[11]ऽद्रव्यवचनेभ्यः करणे तृतीयापञ्चम्यौ[12] स्तः स्तोकेन स्तोकाद्वा मुक्तः । द्रव्ये तु-स्तोकेन विषेण हतः ॥**दूरान्तिकार्थेभ्यो द्वितीया च । २ । ३ । ३५॥** एभ्यो द्वितीया स्याच्चात्[13]पञ्चमीतृतीये ॥ प्रातिपदिकार्थमात्रे विधिरयम् । ग्रामस्य दूरं दूरात् दूरेण

---

१ **आ मुक्तेरिति** । तेन विनारूपायां मर्यादायामत्राङ् । अर्थात् मुक्तिनः प्रागेव संसारः मुक्तिदशायां संसाराभाव इति भावः ॥ २ **आ सकलादिति** । तेन सहरूपायाम् अभिविधावत्राङ् । ब्रह्मणः सकले सत्ता, न क्वाप्यभाव इति भावः ॥ ३ तत्कार्यकर्ता प्रतिनिधिः । यथा कृष्णोचितकार्यकर्ता प्रद्युम्नः कृष्णप्रतिनिधिः ॥ गृहीतवस्तुसममूल्यवस्तुप्रत्यर्पणं प्रतिदानम् ॥ ४ **कर्तृवर्जितमिति** । कर्तृसंज्ञावर्जितमित्यर्थः ॥ हेतुतृतीयायां प्राप्तायां पञ्चमी विधीयते ॥ ५ शतहेतुकबन्धनाश्रय इति बोधः ॥ ६ **शतेन बन्धित** इत्यत्र प्रयोज्यकर्तोत्तमर्णः । शतं तु बन्धनकर्त्रुत्तमर्णप्रयोजकत्वाद्धेतुसंज्ञासमनियतकर्तृसंज्ञाविशिष्टमिति कर्तृसंज्ञावर्जितत्वाभावान्नैव पञ्चमीति शतप्रयोज्यधनिकर्तृकबन्धनाश्रयोऽधमर्ण इति बोध्यम् ॥ ७ **सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः** ' ॥ इति लक्षित एव गुणो गृह्यते इति केचित् ॥ अन्ये तु पराश्रितत्वमेवात्र गुणत्वमित्यूचुः ॥ ८ **'बाहुलकं प्रकृतेस्तनुदृष्टेः'** इत्येतद्वार्तिकनिर्देशसिद्धमाह-**विभाषेति योगविभागादिति** ॥ लक्ष्यानुसारिव्याख्यानमेवात्राभिधानानभिधानयोः शरणमिति भावः ॥ ९ विभक्तिप्रतिरूपकत्वेन निपातस्य 'अन्यतरस्याम्' पदस्यानेकार्थत्वात् ॥ १० **अनुवर्तेते इति** । पञ्चमीमात्रमनुवर्तते । द्वितीया तु '**ततोऽन्यत्रापि दृश्यते**' इत्यनेनैव सिद्धेति भाष्यमतम् ॥ ११ 'गापोष्टक' इत्यत्रेव मात्रालाघवाय षष्ठी कृता पञ्चम्यर्थे इत्याह-**एभ्य इति** ॥ १२ चकारेण समुच्चितयोः पञ्चमीतृतीययोर्विधानमित्याह-**तृतीयापञ्चम्यादिति** ॥ एतेन 'द्वितीयानुवर्तनं तत्र प्राचामनुरोधेन' इति ध्वनितम् । अन्यथा चकारेण तिसृणामेव विधानं स्यात् । तथा च 'दूरान्तिकार्थेभ्यो द्वितीया च' इत्यत्रापि द्वितीयाग्रहणवैयर्थ्यं स्यादिति भावः ॥ १३ 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' करणे च 'स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ''दूरान्तिकार्थेभ्यो द्वितीया च' इत्येवमेव पाठो युक्तः । ननु मध्ये 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति यथाधुनिकाष्टाध्यायीपुस्तके समुपलभ्यते । द्वितीयाविधौ 'तेभ्यः' इत्येव सिद्धौ 'दूरान्तिकार्थेभ्यः' इत्यस्य वैयर्थ्यापत्तेः । तस्मात् षष्ठीविधायकम् 'अपादाने पञ्चमी' इत्युत्तरमेव ज्ञेयम् । एवं च तृतीयापञ्चम्यावेवानुवर्तेते नतु षष्ठ्यपीति सूच यन्नाह-**चात् पञ्चमीतृतीये इति** ॥ अर्थविशेषस्यानुपादानादाह-**प्रातिपदिकार्थमात्रे इति** ॥ सत्त्ववचनविशेष्याविवक्षायामिति यावत् ॥ सत्त्ववचनत्वविवक्षायां तु विशेष्यविभक्तिप्रमनियतैव विभक्तिर्भवतीत्याह-**दूरः पन्था इति** ।

वा । अन्तिकम् अन्तिकात् अन्तिकेन वा ॥ असत्त्ववचनस्येत्यनुवृत्तेर्नेह—दूरः पन्थाः ॥

**षष्ठी शेषे ।२।३।५०॥** कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसंबन्धः शेषस्तत्र षष्ठी स्यात् । राज्ञः पुरुषः । **कर्मादीनामपि संबन्धमात्रविवक्षायां षष्ठ्येव ।** सतां गतम् ॥ सर्पिषो जानीते । मातुः स्मरति । एधो दकस्योपस्कुरुते । भजे शम्भोश्चरणयोः । फलानां तृप्तः ॥ **षष्ठी हेतुप्रयोगे ।२।३।२६॥** हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् ॥ अन्नस्य हेतोर्वसति ॥ **सर्वनाम्नस्तृतीया च ।२।३।२७॥** सर्वनाम्नो हेतुशब्दस्य च प्रयोगे हेतौ द्योत्ये तृतीया स्यात् षष्ठी च ॥ केन हेतुना वसति । कस्य हेतोः ॥ **निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् *॥** किंनिमित्तं वसति । केन निमित्तेन । कस्मै निमित्तायेत्यादि । एवं किं कारणम् को हेतुः किं प्रयोजनमित्यादि । प्रायग्रहणादसर्वनाम्नः

---

१ शेषपदोक्त्यादन्य एव भवतीति प्रागुक्तादनभिहिताधिकारपठितकर्मादितत्तत्कारकविशेषात् प्रातिपदिकार्थाच्च व्यतिरिक्तः शाब्दबोधे संसर्गमर्यादया भासमानः संसर्गापरपर्यायः स्वस्वामिभावादिः संबन्धः सर्वैरङ्गीक्रियत इत्यत आह—**कारकेत्यादि** ॥" प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इत्यादि प्रथमाप्रकरणोत्तरम् अनभिहिताधिकारेऽपि द्वितीयादिविभक्तीरिव 'स्वौजसमौट्' सूत्रक्रमेण कुतो न विहितवान् इति चिन्त्यम् ॥ २ **तत्रेति** तस्य संबन्धत्वेनैव विवक्षायां विशेषणत्वेनैव विवक्षितात् षष्ठी नतु तस्य विशेष्यत्वादिविवक्षायाम्, विशेष्यत्वेन विवक्षितादिति यावत् । तदेवोक्तं हरिणा—'**द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते । तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते** ॥' इति ॥ अस्यार्थः—**असौ** संबन्धः **द्विष्ठोऽपि** विशेष्यविशेषणोभयनिष्ठोऽपि **परार्थत्वाद्**-विशेषणार्थत्वात् **गुणेषु** विशेषणतया विवक्षितेषु **व्यतिरिच्यते** प्रादुर्भूतो भवति । **तत्र** विशेषणे **अभिधीयमानः** षष्ठ्यादिना शब्देन कथ्यमानः **प्रधाने** विशेष्यतया विवक्षितेऽपि **उपयुज्यते** उपयोगं करोतीति ॥ ३ **राज्ञः पुरुष इति** । स्वस्वामिभावसंबन्धेन राजनिष्ठविशेषणतानिरूपितविशेष्यताश्रयः पुरुषः इति बोधः ॥ '**राज्ञः पुरुषः**' **इत्यत्र 'राजा विशेषणम्, पुरुषो विशेष्यः'** इति भाष्यात् ॥ 'स्वस्वामिभावसंबन्धेन पुरुषनिष्ठविशेषणतानिरूपितविशेष्यताश्रयो राजा' इतिबोधविवक्षायां तु 'पुरुषस्य राजा' इति भवत्येव ॥ ४ '**कर्मादिभ्यो येऽन्येऽर्थाः स शेषः**' इति समाधानस्य बाधकम् "**यद्येवं शेषो न प्रकल्पते । नहि कर्मादिभ्योऽन्येऽर्थाः सन्ति । इह तावत् 'राज्ञः पुरुषः' इति राजा कर्ता पुरुषः सम्प्रदानम् । तथा यदेतत् स्वं नाम चतुर्भिरेतत्प्रकारैर्भवति—क्रयणात् अपहरणात् याच्ञायाः विनिमयादिति । अत्र च सर्वत्र कर्मादयः सन्ति**" इत्येवमभिप्राय सिद्धान्तिना " एवं तर्हि **कर्मादीनामविवक्षा शेषः**" इति समाहितमिति तदेवाह—**कर्मादीनामपीति** ॥ ५ **सतां गतमिति** ॥ गमने सतां न कर्तृत्वेन विवक्षा किंतु संबन्धित्वेनैवेति 'सत्संबन्धि गमनम्' इत्येव बोधः ॥ एवं च प्राचां ग्रन्थे पठ्यमानम् ' नपुंसके भावे क्तस्य योगे' 'शेषत्वविवक्षायां च' इत्यादि नापूर्वमिति भावः ॥ ६ **सर्पिषो जानीत इति** । कर्मादीनां संबन्धत्वमात्रविवक्षयैव षष्ठीसिद्धावपि वक्ष्यमाणं प्रतिपदविधानं समासप्रतिषेधार्थमिति वक्ष्यति ॥ सर्पिःसंबन्धिनी प्रवृत्तिरिति बोधः ॥ ७ एधोऽदन्तः पुंल्लिङ्गः । सान्तं क्लीबं वा ॥ दकं पानीयम् काष्ठं पानीयस्य गुणमादत्ते इत्यर्थः । यथा पानीयं न ज्वलति एवमिदं काष्ठमपीति ज्वालने दुःखातिशयो व्यज्यते ॥ एधकर्तृकं पानीयसंबन्धि गुणाधानमिति बोधः ॥ ८ '**निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्**' इति 'हेतौ' सूत्रपठितवार्तिके पर्यायोपादानमधिकसंग्रहार्थमुपलक्षणमेवेति मन्यमानानां मतेन वार्तिकं पठति—**निमित्तपर्यायेति** ॥ तेभ्यः, 'तत्समानाधिकरणेभ्यश्च' इति शेषः ॥ ९ **प्रायग्रहणादिति** । प्रकृष्टशिष्टप्रयोगानुसारेणेति भावः ॥

प्रथमाद्वितीये न स्तः । ज्ञानेन निमित्तेन हरिः सेव्यः । ज्ञानाय निमित्तायेत्यादि ॥ **षष्ठ्यतसर्थप्रत्ययेन । २ । ३ । ३० ॥** एतद्योगे षष्ठी स्यात् । दिक्छब्देति पञ्चम्या अपवादः । ग्रामस्य दक्षिणतः, पुरः पुरस्तात्, उपरि उपरिष्टात् ॥ **एनपा द्वितीया ।२।३।३१ ॥** एनबन्तेन योगे द्वितीया स्यात् ॥ एनपेति योगविभागात्षष्ठ्यपि । दक्षिणेन ग्रामं ग्रामस्य वा । एवमुत्तरेण ॥ **दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् । २ । ३ । ३४ ॥** एतैर्योगे षष्ठी स्यात्पञ्चमी च ॥ दूरं निकटं ग्रामस्य ग्रामाद्वा ॥ **ज्ञोऽविदर्थस्य करणे । २ । ६ । ५१ ॥** जानातेरज्ञानार्थस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात् ॥ सर्पिषो ज्ञानम् ॥ **अधीगर्थदयेशां कर्माण ।२।३। ५२ ॥** एषां कर्मणि शेषे षष्ठी स्यात् ॥ मातुः स्मरणम् । सर्पिषो दयनम् । ईशनं वा ॥ **कृञः प्रतियत्ने । २ । ३ । ५३ ॥** कृञः कर्मणि शेषे षष्ठी स्याद्गुणाधाने । एधो दकस्योपस्करणम् ॥ **रुजार्थानां भाववचनानामज्वरेः। ।२।३।५४॥**भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात् । चौरस्य रोगस्य रुजा ॥ **अज्वरिसंताप्योरिति वाच्यम् *** ॥ रोगस्य चौरज्वरः । चौरसंतापो वा । रोग-कर्तृकं चौरसंबन्धि ज्वरादिकमित्यर्थः ॥ **आशिषि नाथः । २ । ३ । ५५ ॥** आशीरर्थस्य नाथतेः शेषे कर्मणि षष्ठी स्यात् । सर्पिषो नाथनम् । आशिषीति किम् ? माणवकनाथनम् ।

---

१ अतसूप्रत्ययस्य दिक्शब्देभ्य एव विधानादिति भावः ॥ २ अर्थग्रहणप्रयोजनं दर्शयति–**पुर इत्यादि** ॥ असिअस्तातिरिलरिष्टातिल्प्रत्ययाः क्रमेण वर्तन्ते । अर्थग्रहणेनैषामपि ग्रहणं सिद्धम् ॥ ततः पश्चात् इत्यत्रापि पञ्चम्यन्तात्सार्वविभक्तिकस्तसिरिति भावः ॥ ३ **योगविभागादिति** । यद्यप्ययं योगविभागो भाष्यकृता नोक्तः तथापि ‘ शिष्टप्रयोगानुसारेणैव शब्दानां साधुत्वं स्वीकार्यमेव’ इति पृषोदरादिसूत्रभाष्यध्वनितत्वेन नैव भाष्यविरोध इति योगविभागं दर्शयतां वृत्तिकृतामाशयः ॥ ४ ‘अपादाने पञ्चमी’ इत्यनन्तरमेव ‘दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्’ इति पाठे ‘दूरान्तिकार्थेभ्यः’ इत्यस्य सार्थक्यमिति प्राग्निवेदितं मनसि निधायाह–**पञ्चमी चेति** ॥ ५ अधिकृतस्य शेषपदस्य ‘करणे’ इत्यनेन संबन्धेऽपि अविरोधायाह–**शेषत्वेन विवक्षित इति** ॥ करणत्वेनाविवक्षिते केवलं संबन्धत्वेन विवक्षित इत्यर्थः । एवं च शेषत्वेन विवक्षायां षष्ठ्येव, शेषत्वेनाविवक्षायां तृतीयैव भवतीति भावः ॥ नव्यास्तु–**‘कर्मादिष्वकर्मकवद्वचनम्’** इति पूर्वपक्षिवार्तिके आदिशब्दस्याश्रयवाचकत्वेन ‘ कर्माश्रयेषु विधिषु ’ इत्यर्थस्य निर्णीतत्वेन **अविवक्षिते कर्मणि षष्ठी भवति । यदा च कर्म विवक्षितं भवति तदा षष्ठी न भवति । तद्यथा स्मराम्यहं मातरम्’** इति सिद्धान्तिभाष्ये कर्मविषय एव शेषपदानुवृत्तेर्ध्वनितत्वेन **‘अधीगर्थादयः प्रेष्यब्रूर्यन्ताः कर्मादिशब्देनोच्यन्ते’** इति प्रदीपकृता शेषपदानुवृत्तियोग्यानां परिगणितत्वेन च करणाधिकरणपदघटितविधिषु शेषपदाननुवृत्तेरेव लाभात् नैव भवति शेषपदानुवृत्तिरत्रेति शेषत्वेनाविवक्षायामपि तृतीया नैव भवतीति वदन्ति ॥ ६ **कर्मणि शेष इति** । शेषत्वेन विवक्षित इत्यर्थः । तेन विवक्षायां षष्ठी मातुः स्मरणम् इति, अविवक्षायां द्वितीया मातरं स्मरति इति ॥ ७ ‘प्रतियत्नो गुणाधानम्’ इति ‘डुकृञ्’ धातौ वक्ष्यते, तदाह–**गुणाधान इति** ॥ ८ **‘दकस्योपस्करणम्’** इति ‘करोति’ इति शेषः ॥ ९ **‘अथ किमर्थं भाववचनानाम्’ इत्युच्यते यावता रुजार्था भाववचना एव ‘भवन्ति’ इत्याक्षेपस्य ‘भावकर्तृकाद्यथा स्यात् इह मा भूत्–नदी कूलानि रुजतीति’** इति भाष्ये वचनशब्दस्य कर्तृपरताया उक्तत्वादाह–**भावकर्तृकाणामिति** ॥ चोरस्येति षष्ठी प्रतिपदविधानत्वान्न समस्यते इति भावः ॥

तत्संबन्धिनी याच्ञेत्यर्थः ॥ **जासिनिप्रहणनाटक्राथपिषां हिंसायाम् । २। ३। ५६ ॥** हिंसार्थानामेषां शेषे कर्मणि षष्ठी स्यात् । चौरस्योज्जासनम् । निप्रौ संहतौ विपर्यस्तौ व्यस्तौ वा । चौरस्य निप्रहणनम् । प्रणिहननम् । निहननम् । प्रहणनं वा । नट अवस्कन्दने चुरादिः । चौरस्योन्नाटनम् । चौरस्य क्राथनम् । वृषलस्य पेषणम् ॥ हिंसायां किम् ? धानापेषणम् ॥ **व्यवहृपणोः समर्थयोः । २ । ३ । ५७ ॥** शेषे कर्मणि षष्ठी स्यात् । द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थता[1] । शतस्य व्यवहरणं पणनं वा ॥ समर्थयोः किम् ? शलाकाव्यवहारः । गणनेत्यर्थः । ब्राह्मणपणनम् । स्तुतिरित्यर्थः ॥ **दिवस्तदर्थस्य । २ । ३ । ५८ ॥** द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी स्यात् । शतस्य[3] दीव्यति ॥ तदर्थस्य[2] किम् ? ब्राह्मणं दीव्यति स्तौतीत्यर्थः ॥ **विभाषोपसर्गे । २ । ३ । ५९ ॥** पूर्वयोगापवादः । शतस्य शतं वा प्रतिदीव्यति ॥ **प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने । २ । ३ । ६१ ॥** देवतासंप्रदानेऽर्थे वर्तमानयोः प्रेष्य[4]ब्रुवोः कर्मणो हविर्विशेषस्य वाचकाच्छब्दात्षष्ठी स्यात् । अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा ॥ **कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ।२।३ । ६४ ॥** कृत्वोर्थानां प्रयोगे कालवाचिन्यधिकरणे शेषे[5] षष्ठी स्यात् ॥ पञ्चकृत्वोऽह्नो भोजनम् । द्विरह्नो भोजनम् ॥ शेषे किम् ? द्विरहन्यध्ययनम् ॥ **कर्तृकर्मणोः कृति । २ । ३ । ६५ ॥** कृद्योगे कर्तरि कर्मणि च[6] षष्ठी स्यात् । कृष्णस्य[7] कृतिः । जगतः[8] कर्ता कृष्णः ॥

---

१ समानार्थसमंशब्दस्यार्थशब्देन बहुव्रीहौ शकन्ध्वादित्वात्पररूपमित्याह-**तुल्यार्थतेति** ॥ २ तदर्थस्येति तच्छब्देन व्यवहृपणावेव गृह्येते इत्याशयेनाह-**द्यूतार्थस्येत्यादि** ॥ ३ अस्मिन् षष्ठीसमासनिषेधफलकप्रतिपदविधानत्वसंपादकशेषपदानुवृत्तिर्न भवति व्याख्यानात्, इति सूचनायैव तिङन्तमुदाहरति-**शतस्य दीव्यइति** ॥४ दैवादिकस्यैव ग्रहणार्थम् 'मन्यकर्मणि' इत्यत्रेव श्यना विशिष्टानुकरणम्-'प्रेष्य' इति। एवं च 'प्रोपसृष्टदेवादिकस्येषधातोः प्रयोगे ब्रूधातोश्च प्रयोगे कर्मणो हविर्वाचकात् षष्ठी' इत्यर्थः । 'द्वितीया ब्राह्मणे' इत्यतो ब्राह्मणपदानुवृत्तौ ब्राह्मणस्य वेदभागत्वेन दृष्टानुविधित्वाद्वेदे लोण्मध्यमपुरुषैकवचन एव प्रवृत्तिदर्शनात् समासापत्तेरभावात् तद्वारणस्य व्यर्थत्वात् प्रतिपदविधानत्वसाधकशेषपदानुवृत्तिरत्र न भवतीति बोध्यम् ॥ '**इदं च** भाषायामपि भवति उत्तरत्र च्छन्दोग्रहणात्' इति पदमञ्जरी तु मन्त्रब्राह्मणोभयार्थकच्छन्दोग्रहणस्य वैयर्थ्यानापत्तेः पदमञ्जर्येव ॥ ५ वृत्त्यनुरोधेनाह-**शेष इति** ॥ बहुभिर्व्यवच्छेदान्मण्डूकानुवृत्त्याश्रयणे प्रमाणाभावाच्चेह 'शेषे' इति नानुवर्तते कर्माश्रय एव तदनुवृत्तेरङ्गीकारेण अधिकरणाश्रये तदनङ्गीकारस्यैव भाष्यकृता सूचनादिति सारम्॥ ६ अत्र सूत्रे 'शेषे' इति नानुवर्तते 'षष्ठी शेषे' इत्यनेनैव सिद्धावस्य वैयर्थ्यापत्तेः '**प्रतिपदविधाना च**' इत्यनेनात्रापि निषेधे '**कृद्योगा षष्ठी समस्यते**' इत्यस्य निर्विषयत्वापत्तेश्च ॥ ७ कर्तृषष्ठ्या उदाहरणमाह--**कृष्णस्येति** । क्तिन्प्रत्ययस्य भावे विधानाद् अनभिहिते कर्तरि षष्ठीति भावः ॥ ८ कर्मषष्ठीमुदाहरति-**जगत इति** । तृच्प्रत्ययेन कर्तुरभिहितत्वात् अनभिहिते कर्मणि षष्ठी । स्तोकं पाक इत्यत्र कर्मवाचकात् स्तोकशब्दाद् द्वितीयावत् षष्ठी दुर्वारा इति तु न शङ्कनीयम् । षष्ठीविधौ कर्तुः क्रियायां भेदेनैवान्वयिन एव ग्रहणस्यैव तत्साहचर्यात् कर्मणोऽपि क्रियायां भेदेनान्वयिन एव ग्रहणाद् अभेदेनान्वयिनः क्रियाविशेषणात्षष्ठ्यनापत्तेः।द्वितीयाविधौ तु विनिगमकाभावाद् भेदेनान्वयिनोऽभेदेनान्वयिनश्च कर्मणो ग्रहणं भवत्येवेति ग्रामं गच्छति, स्तोकं पचति, स्तोकं पाक इत्यादौ द्वितीयोभयत्र निर्बाधेति बोध्यम् ॥ कर्मसंज्ञापि भेदेन क्रियाजन्यफलाश्रयस्य ग्रामादेरिवाभेदेन क्रियाजन्यफलाश्रयस्य स्तोकादेरपि भवति विनिगमनाविरहादिति सारम् ॥

**गुणकर्मणि वेष्यते*** ॥ नेताऽश्वस्य स्रुघ्नस्य स्रुघ्नं वा॥**कृति** किम्? तद्धिते मा भूत् । **कृतपूर्वी कटम्** ॥ **उभयप्राप्तौ कर्मणि । २ । ३ । ६६** ॥ उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् ॥ आश्चर्यो गवां दोहोऽगोपेन॥**स्त्रीप्रत्ययोरकाकारयोर्नायं नियमः*** ॥भेदिका बिभित्सा वा रुद्रस्य जगतः ॥ **शेषे विभाषा*** ॥ स्त्रीप्रत्यय इत्येके । विचित्रा जगतः कृतिर्हरेर्हरिणा वा । केचिदविशेण विभाषामिच्छन्ति–शब्दानामनुशासनमाचार्येणाचार्यस्य वा ॥ **क्तस्य**

---

१ '**अथेह कथं भवितव्यम्**' '**नेताऽश्वस्य स्रुघ्नम्**' इति आहोस्वित् '**नेताऽश्वस्य स्रुघ्नस्य इति**' इत्याक्षेपस्य '**उभयथा गोणिकापुत्रः**' इति समाधानस्य "अकथित" सूत्रभाष्योक्तस्य फलितम् '**प्रधाने नियता षष्ठी गुणे तूभयथा भवेत्**' इति कैश्चित्पठितं मनसि निधायाह–**गुणकर्मणीति** ॥ २ 'कर्तृकर्मणोः' इत्येतावन्मात्रे सूत्रेऽपि कृते कर्तृकर्मभ्यां क्रियाया आक्षेपे क्रियावाचकस्य धातोः 'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः' इति "परश्च" इति सूत्रफलितन्यायेन प्रत्ययविशिष्टस्यैव प्रयोगे प्राप्ते तिङ्प्रयोगे प्राप्तायाः षष्ठ्याः "न लोकाव्यय" इति निषेधस्येष्टसाधकत्वेन कृदन्तक्रियाप्रयोग एवेष्टा षष्ठी भविष्यतीति नार्थः 'कृति' इति ग्रहणेनेति शङ्कते–**कृतीति किमिति** ॥ ३ एवं सिद्धे सति कृद्ग्रहणम् 'कृदन्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्तृकर्मणोरेव' षष्ठी यथा स्यात्, तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्तृकर्मणोर्मा भूत् इति नियमार्थमेवेति नियमव्यावर्त्यमाह–**तद्धिते मा भूदिति** । व्यावर्त्यमुदाहरणं स्पष्टतया निर्दिशति–**कृतपूर्वी कटमिति** । अयं भावः–कृधातोः सकर्मकत्वे निष्ठया कर्मण उक्तत्वेन कटशब्दात् षष्ठ्या अनापत्तेरिव द्वितीयाया अप्यनुपपत्तेः प्रथमाया आपत्तेश्च पूर्वं कर्मणोऽविवक्षयाऽकर्मकत्वमाश्रित्य भाव एव निष्ठां कृत्वा कृतशब्दं भावक्तान्तं मनसि निधाय 'कृतं पूर्वमनेन' इति विग्रहे 'पूर्वादिनिः' 'सपूर्वाच्च' इति कृतपूर्वशब्दादिनिप्रत्यये 'कृतपूर्विन्' शब्दे निष्पन्ने तेन कर्मण आकाङ्क्षायाम् उपस्थापितस्य कर्मभूतस्य कटस्य तद्धितान्तकृतपूर्विन्शब्दे–नानभिहितत्वेन षष्ठ्यापत्तिर्दुर्वारैव स्यादिति नियमाश्रयणे तद्धितान्तकृतपूर्विन्शक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितत्वात् कृदन्तकृतशब्दशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितत्वाभावाच्च कटरूपकर्मणो न षष्ठ्यापत्तिः, ईदृशरीत्या भावे क्तसाधनं तु न सर्वत्र, किंतु कृतपूर्व्यादितद्धितान्तविषयमेवेति भाष्ये स्पष्टम् ॥ निष्ठान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मण एव षष्ठीनिषेधकं 'न लोका' इति सूत्रमिति न तेनेह षष्ठीनिषेधप्राप्तिरिति षष्ठ्यनापत्तये नियमाश्रयणमावश्यकमेवेति ॥ तण्डुलानां पाचकतर इत्यादौ तु तरप्प्रत्ययरहितानां पाचक इत्यादीनामपि लोके पृथक्प्रयोगदर्शनात् कृदन्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मत्वं तण्डुलादीनामध्याहृतमेवेति षष्ठी निर्बाधैवेति बोध्यम् ॥ ४ **उभयोः प्राप्तिरिति** । प्रयोगे सत्येव प्राप्तेर्योग्यतया 'उभयोः प्रयोग एव प्राप्तिर्यस्मिन्नित्येवार्थो बोध्यः' इति 'आत्ममाने' इति निर्देशेन प्रतीयते तत्र कर्तुः प्रयोगाभावेन 'उभयप्राप्तौ कर्मणि' इत्यस्याप्रवृत्त्या 'कर्तृकर्मणोः कृति' इत्यनेनैव षष्ठ्यां जातायां 'कर्मणि च' इत्यत्र चकारेण '**कर्मणि**' इतिपदघटितसूत्रस्यैव ग्रहणेन तत्पदघटितसूत्रविहितषष्ठ्या एव समासनिषेधादत्र समासेन ध्वनितायां 'उभयप्राप्तौ' इत्यस्याप्रवृत्तेः 'उभयोः प्रयोगे प्राप्तिर्यत्र इति' समासाङ्गीकार एव संभवादिति बोध्यम् ॥ ५ '**अकाकारयोः प्रयोगे प्रतिषेधो नेति वक्तव्यम्**' इति उभयप्राप्तौ कर्तृषष्ठ्याः प्रतिप्रसवेन भावार्थकावेवाकाकारौ गृह्येते तौ च 'स्त्रियां क्तिन्' इत्यधिकारविहितावेवेत्याशयेनाह–**स्त्रीप्रत्ययोरिति** ॥ **भेदिकेति** । 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' ॥

**च वर्तमाने । २ । ३ । ६७ ॥** वर्तमाना[1]र्थस्य क्तस्य योगे षष्ठी स्यात् । न लोकेति निषेधस्यापवादः । राज्ञां मतो बुद्धः पूजितो वा ॥ **अधिकरणवाचिनश्च । २ ३ । ६८ ॥** क्तस्य[2] योगे षष्ठी स्यात् । इदमेषामासितं शयितं गतं भुक्तं वा ॥ **न लोकाव्ययनिष्ठाखलर्थतृनाम् । २।३।३९ ॥** एषां[3] प्रयोगे षष्ठी न स्यात् । लादेशः—कुर्वन् कुर्वाणो वा सृष्टिं हरिः । उः[4]—हरिं दिदृक्षुः । अलंकरिष्णुर्वा । उक—दैत्यान् घातुको हरिः ॥ **कमेरनिषेधः[5] * ॥** लक्ष्म्याः कामुको हरिः ॥ अव्ययम्—जगत्[6] सृष्ट्वा । सुखं कर्तुम् । निष्ठा—विष्णुना हता दैत्याः । दैत्यान् हतवान् विष्णुः । खलर्थः[7]—ईषत्करः प्रपञ्चो हरिणा ॥ तृन्निति[8] प्रत्याहारः शतृशानचाविति तृशब्दादारभ्य आ तृनो नकारात् । शानन्—सोमं पवमानः । चानश्—आत्मानं मण्डयमानः । शतृ—वेदमधीयन् । तृन्—कर्ता लोकान् ॥ **द्विषः शतुर्वा * ॥** मुरस्य मुरं वा द्विषन् ॥ सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः । शेषे षष्ठी तु स्यादेव—ब्राह्मणस्य कुर्वन् । नरकस्य जिष्णुः ॥ **अकेनोर्भविष्यदाधमर्ण्ययोः । २ । ३ । ७० ॥** भविष्यत्यकस्य[9] भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात् । सतः पालकोऽवतरति । व्रजं[10] गामी । शतं दायी ॥ **कृत्यानां कर्तरि वा । २ । ३ ७१ ॥** षष्ठी[11] वा स्यात् । मया मम वा सेव्यो हरिः ॥ कर्तरीति किम् ? गेयो माणवकः साम्नाम् । भव्यगेयेति कर्तरि यद्विधानादनभिहितं कर्म ॥ अत्र योगो[12] विभज्यते—**कृत्यानाम् ॥** उभयप्राप्ताविति नेति चानुवर्तते । तेन नेतव्या व्रजं

---

१ 'वर्तमाने' इति क्तस्यैव विशेषणं योग्यतयेत्याह—**वर्तमानार्थस्येति** ॥ 'मतिबुद्धिपूजार्थेभ्यश्च' इति सूत्रविहितस्येत्यादिः ॥ कर्मण उक्तत्वेन कर्तरि षष्ठ्या 'न लोका' इति निषेधे प्राप्ते तद्बाधनार्थमिदमित्याह—**निषेधस्यापवाद इति** 'छात्रस्य हसितम्' इत्यादि 'नपुंसके भावे क्तः' इति भावक्तान्तकर्तरि कर्तृत्वाविवक्षया शेष एव षष्ठीति '**क्तस्य च वर्तमाने नपुंसके भाव उपसंख्यानम्**' इति वार्तिकं भाष्ये प्रत्याख्यातमिति यथा वार्तिकसत्त्वे भावक्तः 'नपुंसके भावे' इति विहित एव गृह्यते । 'नपुंसके भावे क्त' इति त्वकर्मकेभ्य एव भवतीति 'भ्रान्तं देशमनेकदुर्गविषमम्' इत्यत्र 'गत्यर्थाकर्मक' इत्यनेन क्ते षष्ठी न भवति तथा प्रत्याख्यानपक्षेऽपि साऽविवक्षापि अकर्मकेभ्यो नपुंसके भावे क्ते एवेति नारम्भप्रत्याख्यानयोः फलभेदापत्तिः ॥ २ **क्तस्येति** । क्तोऽधिकरणे च 'ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इति सूत्रविहितस्येत्यादिः ॥ ३ **एषामिति** । ल उ उक अव्यय निष्ठा खलर्थ तृन् इत्येतदन्तानामित्यर्थः ॥ ४ उकारेण उकारान्तस्यापि ग्रहणमित्याह—**अलंकरिष्णुर्वेति** ॥ ५ '**उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः**' इति वार्तिकमनुसृत्य वदति—**कमेरनिषेध इति** ॥ ६ 'कृन्मेजन्तः' 'क्त्वातोसुन्कसुनः' इत्येषु अव्ययेषु कर्मणि षष्ठीनिषेधे प्राप्ते '**अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः**' इति षष्ठीप्रतिप्रसवं च मनसि निधायोदाहरति—**जगत् सृष्ट्वेत्यादि** ॥ ७ 'आतो युच्' इत्यस्य संग्रहार्थम् अर्थग्रहणम् ॥ 'ईषत्पानः सोमो भवता' इत्युदाहरणम् ॥ ८ शानश्चानश्शतॄणां संग्रहाय भाष्यकृताश्रितं प्रत्याहारं दर्शयति—**तृन्निति प्रत्याहार इत्यादिना** ॥ तत्र शता '‘इङ्धार्योः शत्रकृच्छ्रिणि' इति विहित एव गृह्यते, अन्यस्य लादेशत्वेन सिद्धत्वात् ९ ॥ '**अकस्य भविष्यति**' '**इन आधमर्ण्ये च**' इति वार्तिके अनुसृत्याह—**भविष्यत्यकस्येत्यादि** ॥ १० अत्र व्रजं गमीत्यपि पाठः ॥ ११ निषेधविकल्पस्यापि विधिविकल्प एव पर्यवसानादुक्तम्—**षष्ठी वा स्यादिति** ॥ १२ द्विकर्मकाणामन्यतरकर्मणि प्रत्ययोत्पत्त्याऽन्यतरकर्मणोऽनुक्तत्वात्तत्र षष्ठीनिषेधार्थं योगविभागं भाष्योक्तं दर्शयति—**योगो विभज्यत इति** ॥

गावः कृष्णेन । ततः—**कर्तरि वा** ॥ उक्तोऽर्थः ॥ **तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् । २ । ३ । ७२ ॥** तुल्यार्थैर्योगे तृतीया वा स्यात्पक्षे षष्ठी ॥ तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा ॥ अतुलोपमाभ्यां किम् ? तुला उपमा वा कृष्णस्य नास्ति ॥ **चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः । २ । ३ । ७३ ॥** एतदर्थैर्योगे चतुर्थी वा स्यात्पक्षे षष्ठी आशिषि ॥ आयुष्यं चिरंजीवितं कृष्णाय कृष्णस्य वा भूयात् । एवं मद्रं भद्रं, कुशलं निरामयं, सुखं शम्, अर्थः प्रयोजनं, हितं पथ्यं वा भूयात् ॥ आशिषि किम् ? देवदत्तस्यायुष्यमस्ति ॥ [2]व्याख्यानात्सर्वत्रार्थग्रहणम् । मद्रभद्रयोः पर्यायत्वादन्यतरो न पठनीयः ॥ **आधारोऽधिकरणम् । १ । ४ । ४५ ॥** [3]कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यात् ॥ **सप्तम्यधिकरणे च । २ । ३ । ३६ ॥** अधिकरणे सप्तमी स्यात्,चकाराद् दूरान्तिकार्थेभ्यः ॥ [4]औपश्लेषिको वैषयिको[5]ऽभिव्यापक[6]श्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छाऽस्ति । सर्वस्मिन्नात्मास्ति । वनस्य दूरे अन्तिके वा ॥ दूरान्तिकार्थेभ्यः इति विभक्तित्रयेण[7] सह चतस्रोऽत्र विभक्तयः फलिताः ॥ **क्तस्येन्विषयस्य[8] कर्मण्युपसंख्यानम्** * ॥ अधीती व्याकरणे । अधीतमनेनेति विग्रहे 'इष्टादिभ्यश्च' इति कर्तरीनिः ॥ **साध्वसाधुप्रयोगे च** * ॥ साधुः[9] कृष्णो मातरि । असाधुर्मातुले ॥ **निमित्तात्कर्मयोगे** * ॥ निमित्तमिह फलम् ।

---

१ 'तुलां यदारोहति दन्तवाससा' 'स्फुटोपमं भूतिसितेन शंभुना' इत्यादौ तु तुलोपमाशब्दोपादानेऽपि 'सहयुक्तेऽप्रधाने' इति विना सहशब्दप्रयोगं 'पिता मात्रा' इति निर्देशेन तृतीया सुसाध्यैवेति भावः ॥ २ **व्याख्यानादिति** । यत्र च स्फुटतया भाष्यविरोधो नोपलभ्यते, तत्र प्राचां वृत्तिकृतां व्याख्यैव स्वीकरणीयेति भावः ॥ मद्रभद्रयोरुभयोरुपादानसामर्थ्यात् 'स्वं रूपम्' इत्यस्य गमकं विनैव बाधापत्तेश्च नात्रार्थग्रहणमिति तत्त्वम् ॥ ३ 'कारके' इत्यधिकारेण क्रियाया लाभे क्रियाया धात्वर्थस्य फलव्यापारोभयात्मकत्वेन साक्षात् फलाधारस्य कर्मसंज्ञया व्यापाराधारस्य कर्तृसंज्ञया परत्वाद् बाधापत्त्या परम्परयाधारस्य ग्रहणम् । तथा चोक्तं हरिणा- 'कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम् । उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥' इति ॥ इति सकलं मनसि निधायाह-**कर्तृकर्मद्वारेति** । **तन्निष्ठेति** । कर्तृकर्मनिष्ठेत्यर्थः ॥ ४ 'निजदिक्कत्वकृतमप्यौपश्लेषिकाधारत्वमाश्रीयते यथा कूपे गर्गकुलमिति । तन्निजदिक्कत्वं मूर्तयोरिवामूर्तयोरपि बुद्धिपरिकल्पितं मुख्यमिव मन्यते अजिकोरौपश्लेषिकमाधाराधेयभावं कथयता 'संहितायाम्' सूत्रे भाष्यकृता ॥ "बुद्धौ कुर्यात् पौर्वापर्यम्" इति संहितासंज्ञासूत्रे च भाष्यकृता ॥ मासेऽतिक्रान्ते दीयते इति 'तत्र च दीयते' इत्यत्र च भाष्यकृता ॥ ५ अभिव्यापकौपश्लेषिकाधारभिन्नाधारत्वं **वैषयिका**धारत्वम् । मोक्षे इच्छास्ति खे शकुनयः गुरौ वसतीत्यादि ॥ ६ सर्वावयवव्याप्त्याधारत्वमभि**व्यापकत्वम्** । यथा 'तिलेषु तैलम् , सर्वस्मिन्नात्मास्ति' इत्यादिषु मुख्यमाधारत्वम् ॥ ७ **विभक्तित्रयेण** द्वितीयातृतीयापञ्चमीनामकेन ॥ **चतस्रः** सप्तमीसहिताः ॥ ८ **इन्विषयस्येति** । अनन्यभावे विषयशब्दस्तथा च तद्राहित्ये पर्यवसानाद् 'इन्रहितक्तान्तमात्रकर्मणि' इत्यर्थाद् इन्प्रकृतिक्तान्तमात्रे 'अधीती' इत्यादावेव प्रवर्तते । नतु 'कृतपूर्वी कटम्' इत्यादौ, अत्र कृतपूर्वसमुदायस्य इन्प्रकृतित्वेन केवलक्तान्तस्य कृतशब्दस्येन्प्रकृतित्वाभावात् । क्तप्रत्ययस्त्वत्रापि कृतपूर्वीत्यादिवत् पूर्वं कर्मणोऽविवक्षया एव भावे क्तप्रत्ययं कृत्वा इनि प्रत्यययोत्तरं कर्माकाङ्क्षया कर्मसंबन्धे कर्मत्वविवक्षायामपि द्वितीयावारणार्थं वार्तिकमिति बोध्यम् ॥ कर्मपदेन कालादिभिन्नकर्मण एव ग्रहणम् ॥ ९ **साधुः कृष्णो मातरीति** । अनर्चायां तत्त्वकथनेऽपि सप्तम्यर्थं साधुग्रहणम् ॥

योगे: संयोगसमवायात्मकः ॥ 'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ' ॥ १ ॥ हेतौ तृतीयाऽत्र प्राप्ता तन्निवारणार्थमिदम् । सीमाऽण्डकोशः। पुष्कलको गन्धमृगः ॥ योगविशेषे किम् ? वेतनेन धान्यं लुनाति ॥ **यस्य च भावेन भावलक्षणम् ।२।३। ३७ ॥** यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् ॥ गोषु दुह्यमानासु गतः । **अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च * ॥** सत्सु तरत्सु असन्त आसते। असत्सु तिष्ठत्सु सन्तस्तरन्ति । सत्सु तिष्ठत्सु असन्तस्तरन्ति । असत्सु तरत्सु सन्तस्तिष्ठन्ति ॥ **षष्ठी चानादरे ।२। ३। ३८ ॥** अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः ॥ रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ॥ **स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च । २ । ३ । ३९ ॥** एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः ॥ षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम् । गवां गोषु वा स्वामी । गवां गोषु वा प्रसूतः । गा एवानुभवितुं जात इत्यर्थः ॥ **आयुक्तकुशलाभ्यां चासेवायाम् ।२।३।४० ॥** आभ्यां योगे षष्ठीसप्तम्यौ स्तस्तात्पर्येऽर्थे ॥ आयुक्तो व्यापारितः । आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा । आसेवायां किम् ? आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः॥ **यतश्च निर्धारणम् ।२।३। ४१ ॥** जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणं यतस्ततः षष्ठीसप्तम्यौ स्तः ॥ नृणां नृषु वा ब्राह्मणः श्रेष्ठः । गवां गोषु वा कृष्णा बहुक्षीरा । गच्छतां गच्छत्सु वा धावन् शीघ्रः । छात्राणां छात्रेषु वा मैत्रः पटुः ॥ **पञ्चमी विभक्ते ।२। ३। ४२ ॥** विभागो विभक्तम् । निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात् ॥ माथुराः पाटलिपुत्रकेभ्य आढ्यतराः॥ **साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ।२।३। ४३ ॥** आभ्यां योगे सप्तमी स्यादर्चायां न

---

१ 'निमित्तात्कर्मसंयोगे' इति वार्तिके संयोगपदं समवायस्याप्युपलक्षणमिति मनसि निधाय कृतं योगपद व्याचष्टे-**योगः संयोगसमवायात्मक इति** ॥ २ वार्तिके निमित्तपदं प्रवृत्तिप्रयोजनवाचकम् । तत्र प्रवृत्तिप्रयोजने चर्मण्यण्डकोशे च द्वीपिमृगसमवेतत्वम्, इतरत्र संयोग इति मत्वोदाहरति-**चर्मणीत्यादि** ॥ ३ **हेतौ तृतीयेति** । 'फलमपीह हेतुः' इत्युक्तत्वादिति भावः ॥ ४ 'कारकार्हाणां च कारकत्वे' अकारकार्हाणां चाकारकत्वे' 'तद्विपर्यासे च' इति वार्तिकत्रयं लक्ष्यलक्षणभावाविवक्षायामपि सप्तम्यर्थम् । लक्ष्यलक्षणभावविवक्षायां तु 'यस्य च भावेन' इति सूत्रेणैव सिद्धा सप्तमीति व्यर्थमेवेदं वार्तिकत्रयमिति मनसि निधायाह-**अर्हाणामिति** । तत्कर्मयोग्यानामित्यर्थः ॥ सन्त एव तरणक्रियार्हाः ॥ ५ **सत्स्विति** । सतां तरणक्रियार्हाणां तरणक्रियाकर्तृत्वेन सप्तमी । **असत्स्विति** । असतां तरणानर्हाणां तरणक्रियाकर्तृत्वाभावेन सप्तमी । **सत्स्विति** । सतां तरणक्रियार्हाणां तरणक्रियाकर्तृत्वाभावाद्विपर्यासेन सप्तमी । **असत्स्विति** । असतां तरणक्रियानर्हाणां तरणक्रियाकर्तृत्वाद्विपर्यासेन सप्तमीति चतुर्थोदाहरणानि ॥ ६ **रुदति रुदतो वेति** । रोदनकर्तृपुत्राद्यनादरलक्षकं प्रव्रजनमिति बोधः ॥ ७ **स्वामीश्वरा** । पर्यायान्तरव्यावृत्त्यर्थं पर्यायोपादानम् ॥ '**दायादस्तु** भवेत् पुंसि सपिण्डे तनयेऽपि च' इति मेदिनी ॥ ८ **आसेवा** तत्परत्वम् ॥ ९ यतः समुदायात् सामान्यवाचकात् निर्धारणं विशेषवाचकस्य पृथक्करणम्, ततः सामान्यवाचकात्षष्ठीसप्तम्यौ स्तः ॥ १० **भेद एव** न तु सामान्यविशेषभावः ॥ माथुराः पाटलिपुत्राणां नैव सामान्यविशेषभावः, द्वयोरपि विशेषत्वात् ॥ ११ अविद्यमानस्यापि धर्मस्य पूजनीयत्वद्योतनाय बोधनम् **अर्चा** ॥ अर्चायाम् इत्येतद् निपुणपदेनैवान्वेति । न साधुपदेन तद्योगेऽनर्चायामपि '**साध्वसाधुप्रयोगे च**' इति वार्तिकेन सप्तमीसिद्धेः ॥

तु प्रतेः प्रयोगे ॥ मातरि साधुर्निपुणो वा ॥ अर्चायां किम् ? निपुणो राज्ञो भृत्यः । इह तत्त्वकथने तात्पर्यम् ॥ **अप्रत्यादिभिरिति वक्तव्यम्** * ॥ साधुर्निपुणो वा मातरं प्रतिपर्येनु वा ॥ **प्रसितोत्सुकाभ्यां तृतीया च** ।२।३। ४४ ॥ आभ्यां योगे तृतीया स्याच्चात्सप्तमी । प्रसित उत्सुको वा हरिणा हरौ वा ॥ **नक्षत्रे च लुपि** ।२ । ३ । ४५ ॥ नक्षत्रे प्रकृत्यर्थे यो लुप्संज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे ॥ मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् ॥ मूले श्रवणे इति वा ॥ लुपि किम् ? पुष्ये शनिः ॥ **सप्तमीपञ्चम्यौ कारकमध्ये** ।२।३।७ ॥ शक्तिद्वयमध्ये यौ कालाध्वनौ ताभ्यामेते स्तः ॥ अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता । कर्तृशक्त्योर्मध्येऽयं कालः । इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । कर्तृकर्मशक्त्योर्मध्येऽयं देशः ॥ अधिकशब्देन योगे सप्तमीपञ्चम्याविष्येते । तदस्मिन्नधिकमिति ' यस्मादधिकमिति च सूत्रनिर्देशात् । लोके लोकाद्वाधिको हरिः ॥ **अधिरीश्वरे** । १ । ४ । ९७ ॥ स्वस्वामिसंबन्धेऽधिः कर्मप्रवचनीयसंज्ञः स्यात् । **यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी** ।२। ३। ९ ॥ अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात् ॥ उप परार्धे हरेर्गुणाः । परार्धादधिका इत्यर्थः । ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी । अधि भुवि रामः । अधि रामे भूः ॥ सप्तमी शौण्डैरिति समासपक्षे तु रामाधीना । अषडक्षेत्यादिना खः ॥ **विभाषा कृञि** ।१।४।९८ ॥ अधिः करोतौ प्राक्संज्ञो वा स्यादीश्वरेऽर्थे ॥ यदत्र मामधिकरिष्यति । विनियोक्ष्यत इत्यर्थः । इह विनियोक्तुरीश्वरत्वं गम्यते । अगतित्वात्तिङि चोदात्तवतीति निघातो न ॥

इति कारकप्रकरणम् ।

---

## अथाव्ययीभावसमासप्रकरणम् ।

**समर्थः पदविधिः** ।२।१।१ ॥ पदसंबन्धी यो विधिः स समर्थाश्रितो बोध्यः ।: **प्राक्-**

---

१ मूल--श्रवणशब्दाभ्यां 'मूल--श्रवणनक्षत्रस्थचन्द्रमसा युक्ते काले' इत्यर्थे "नक्षत्रेण युक्तः कालः" इति जातस्याणः "लुबविशेषे" इत्यनेन लुपि जाते लुपा लुप्तस्य प्रत्ययस्य प्रकृतिभूताद् नक्षत्रवाचकादधिकरणार्थात् सप्तमी जातेति भावः ॥ २ **पुष्ये शनिरिति** । अत्र पुष्यपदं केवलनक्षत्रवाचकमेव नतु पुष्यनक्षत्रस्थितचन्द्रयुक्तकालपरम् ॥ ३ 'क्रियामध्ये' इति वार्तिकस्य प्रत्याख्यानाय 'नान्तरेण साधनं क्रियायाः प्रवृत्तिर्भवति । क्रियामध्यं चेत् कारकमध्यमपि भवति' इति भाष्ये साधनशब्देन तद्गता शक्तिरुच्यते इति मनसि निधायाह--**शक्तिद्वयमध्य इति** ॥ ४ **पर्यायेणेति** ॥ अवसरेण एकैकस्मादेवेत्यर्थः ॥ अयं भावः--'यस्य चेश्वरवचनम्' इत्यत्र 'ईश्वरशब्दो भावप्रधानत्वान्निर्देशस्य ईश्वरत्वपर' इति 'यस्य' इति षष्ठ्या निष्ठत्वं निरूपितत्वं वाऽर्थः । तथा च 'यन्निरूपितमीश्वरत्वमुच्यते' इत्यर्थविवक्षायां स्ववाचकादेव सप्तमी ' अधि भुवि रामः ' ॥ इति । 'यन्निष्ठमीश्वरत्वमुच्यते' इत्यर्थविवक्षायां स्वामिवाचकादेव सप्तमी ' अधि रामे भूः ' इति--इति ॥ इति सारग्राहिदाधिमथपण्डितशिवदत्तविरचितायां दाधिमथ्यां विभक्त्यर्थनिरूपणम् ॥ ५ समर्थः पदविधिः ॥ 'समर्थपदयोरयं सर्वविभक्त्यन्तः समासः--समर्थस्य ( योः ) ( र्थानाम् ) विधिः, समर्थाद् विधिः, समर्थे विधिः, पदस्य ( योः ) ( दानाम् ) विधिः, पदाद् विधिः, पदे विधिः ' इति भाष्येण फलितमर्थमाह--**पदसंबन्धी--**

**डारात्समासः** । २ । १ । ३ ॥ कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते ॥ **सह सुपा** ।२।१।४॥ **सह** इति योगो विभज्यते । सुबन्तं समर्थेन सह समस्यते ॥ योगविभाग-स्येष्टसिद्धयर्थत्वात्कतिपयतिङन्तोत्तरपदोऽयं समासः । स च छन्दस्येव । पर्यभूषत् । अनुव्य-चलत् ॥ **सुपा** । २ । १ । ४ ॥ सुप्सुपा सह समस्यते ॥ समासत्वात्प्रातिपदिकत्वम् ॥ **सुपो धातुप्रातिपदिकयोः** । १ । ४ ७१ ॥ एतयोरवयवस्य सुपो लुक् स्यात् ॥ भूतपूर्वे चरडिति निर्देशाद्भूतशब्दस्य पूर्वनिपातः । पूर्वं भूतो भूतपूर्वः । **इवेन समासो विभक्त्यलोपश्च** * ॥ जीमूतस्येव ॥ **अव्ययीभावः** । २ । १ । ५ ॥ अधिकारोऽयम् । **अव्ययं विभक्तिसमीपस-मृद्धिव्यृद्धयर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्ति-**

---

-**त्यादि** । पदसंवन्धिविधित्वेन समर्थपदोपस्थापिकेयं परिभाषेति वोध्यम् ॥ एवं च वर्णसंवन्धी न सम-र्थाश्रित इति ' तिष्ठतु दध्यशान त्वं शाकेन ' ' तिष्ठतु कुमारी च्छत्रं हर देवदत्त ' इत्यादौ यणुतुगादि सिध्य-त्येवेति बोध्यम् ॥ अत्र पदविधित्वं सनादिविधिष्वपि ' छत्रिणो यान्ति ' इतिवज्ज्ञेयम् । तेन तत्राप्येकार्थी-भावाङ्गीकारेण विशेषणयोगादि नेति ज्ञेयम् ॥ द्विविधं हि सामर्थ्यम्-एकार्थीभावः, । व्यपेक्षा च । तत्र **व्यपेक्षा** स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद् यः संवन्धः सा । **एकार्थीभावस्तु**-अपृथगुपस्थिति-विषयत्वमेव । अत्र च्विप्रत्ययस्तु सदृशानुपूर्वीकत्वेन विग्रहस्थानामपि तत्त्वाध्यवसायेन तान्येवेमानि पदा-नीति भ्रान्तानां तोषाय समासघटकानां गौणमेकार्थत्वमिति बोधनायैव ॥ वस्तुतस्तु राजपुरुष इत्यादिर्वृत्तः शब्दो भिन्न एव न विग्रहदृष्टैरेकीभूतैर्निष्पन्न इति च्विप्रत्ययो दाक्षिणात्यानां प्रियतद्धितत्वेनैवेति सारम् ॥ अत एव नित्यो घट इत्येतद्वारणाय कल्पितेन ' पदार्थः पदार्थेनान्वेति न पदार्थैकदेशेन ' इति न्यायेनैव ' ऋद्धस्य राजपुरुषः ' इति विशेषणयोगे वारिते तद् वारयितुं ' सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणयोगो न ' इति न्यायो नाश्रयणीयो भवति ॥

१ ' कडाराद् ' इत्यत्र कडारपदम् अर्शआद्यजन्तमिति ' कडार ' इति अस्ति यस्मिन्निति कडारम् कडार-पदघटितं सूत्रम् " कडाराः कर्मधारये " इत्येवावधित्वेन निर्णीयते इत्याह-**कडाराः कर्मेत्यादि** ॥ कर्म-धारयत्वस्य समासत्वाव्यभिचारात् ' **प्रागिति** ' ॥ २ ' सुबामन्त्रिते ' इत्यतः ' सुप् ' इत्यधिक्रियते । सुप्पदेन सुबन्तबोधे सुबन्तत्वस्य पदत्वव्याप्यत्वेन पदविधित्वेन लिङ्गेन ' समर्थः ' इति तृतीयाविपरिणतमुपतिष्ठते । समास इत्यधिक्रियते चेत्याह-**सुबन्तं समर्थेनेत्यादि** ॥ ३ योगविभागफलं दर्शयति-**योगविभाग-स्येति** । कतिपयविशेषणदाने हेतुमाह-**इष्टसिद्धयर्थत्वादिति** । अनिष्टव्यावृत्त्यर्थत्वाच्चेत्यपि बोध्यम् ॥ ४ समासत्वेन जातस्य प्रातिपदिकत्वस्य फलमाह-**सुपो धात्विति** ॥ ५ ' **क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका** ' इत्युक्तेः कालस्य क्रियाविशेषणत्वेन कालपरस्य पूर्वपदस्य क्रियावाचिभूतश-ब्दापेक्षया पूर्वनिपाते प्राप्ते आह-**भूतपूर्वे इत्यादि** । पूर्वशब्दापेक्षया निष्ठान्तस्य पूर्वप्रयोगज्ञापकोऽयं निर्देश इति दृष्टपूर्वश्रुतपूर्वकृतपूर्वादिसिद्धिरिति भावः ॥ ६ **समास इति** ॥ 'सुप् सुपा' इति तु न नित्यसमासः । ' अव्ययम् ' ' इत्यादिसमासविधानाज्ज्ञापकात् ' इत्यग्रे ' विभाषा ' इति सूत्रव्याख्यायां स्पष्टमभिधास्यते । अत एव ' उद्बाहुरिव वामनः ' इत्यत्र वामनशब्दात्प्रागिवशब्दप्रयोगः संगच्छते । अन्यथा ' वामनइव ' इति प्रयोगः स्यात् इवशब्दस्य तृतीयानिर्दिष्टत्वेन प्रथमानिर्दिष्टत्वाभावादुपसर्जनसंज्ञाया अप्राप्त्या पूर्वनिपाताप्राप्तेः ॥ ' हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणीम् ' इत्यत्र मातेति प्रथमाऽसाधुरेव उपमानोपमेययोर्भिन्नवि-भक्तिकत्वस्यानभिधानात् इति शेखरकृतामाशयः ॥ समासाभावे भिन्नविभक्तित्वं मा भूत् ॥ ' मातेव ' इति समस्तस्य हितकारिणीशब्देन समासे ' मातेव हितकारिणीम् ' इति समस्तमेव हरीतकीमित्यस्य विशेषणमिति कल्पने तु न काप्यनुपपत्तिरिति परे ॥

**साकल्यान्तवचनेषु** । २ । १ । ६ ॥ अव्ययमिति योगो[1] विभज्यते । अव्ययं समर्थेन सह समस्यते सोऽव्ययीभावः ॥ **प्रथमानिर्दिष्टं समास उपसर्जनम्** । १ । २ । ४३ ॥ समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥ **उपसर्जनं पूर्वम्** । २ । २ । ३० ॥ समासे उपसर्जनं प्राक्प्रयोज्यम् ॥ **एकविभक्ति चापूर्वनिपाते** । १ । २ । ४४ ॥ विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यात्, नतु तस्य पूर्वनिपातः ॥ **गोस्त्रियोरुपसर्जनस्य** । १ । २ । ४८ ॥ उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् ॥ अव्ययीभावश्चेत्यव्ययत्वम् ॥ **नाव्ययीभावादतोऽम् त्वपञ्चम्याः** । २ । ४ । ८३ ॥ अदन्तादव्ययीभावात्सुपो न लुक्, तस्य पञ्चमीं विना अमादेशः ॥ दिशयोर्मध्ये अपदिशम् । 'क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक्स्त्रियाम्' इत्यमरः ॥ **तृतीयासप्तम्योर्बहुलम्** ।२।४।८४ ॥ अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् ॥ अपदिशम् । अपदिशेन । अपदिशम् । अपदिशे । बहुलग्रहणात्सुमद्रमुन्मत्तगङ्गमित्यादौ सप्तम्या नित्यमम्भावः ॥

**विभक्ती**त्यादेरयमर्थः—विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह समस्यते सोऽव्ययीभावः ॥ विभक्तौ तावत्—हरौ इत्यधिहरि । सप्तम्यर्थस्यैवात्र द्योतकोऽधिः । हरि ङि अधि

---

१ **योगो विभज्यते इति** । 'क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्' इत्यमराद्युक्तिसंवादेनापदिशशब्दस्य दिङ्मध्यवाचित्वनिर्णये मध्यरूपार्थस्य सूत्रपरिगणितार्थेष्वनायानाद् योगविभागेनेष्टार्थसिद्धिरिति भावः ॥ यदि तु भाष्योक्तत्वाद्योगविभागो नाङ्गीक्रियेत तर्हि 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यनेन समासोऽङ्गीकार्यः । उभयदिग्वर्जितदेशस्यैवोभयमध्यत्वात्सार्थासंगतिरित्यङ्गीकरणीयमिति सर्वमनवद्यम् ॥ 'अपदिशम्' इत्यादिमान्तानां 'स्वरादिपाठादव्ययत्वम्' इति' शेखरकृत् तु व्युत्पत्तिपक्षे मान्तत्वसाधनं प्रष्टव्यः इति दाधिमथाः ॥ २ समासपदस्य यथाश्रुतार्थपरत्वे बह्वनिष्टापत्तिः स्यात् । अतः 'तादर्थ्यात्ताच्छब्द्यम्' इति न्यायेन सूत्रे समासपद समासार्थपरं सत् समासविधायकविधिपरमिति मनसि निधायाह—**समासशास्त्रे इति** ॥ 'अप्रधानमुपसर्जनम्' इति व्याकरणान्तरोक्तलक्षणस्याप्यत्रानुसरणेन 'समासशास्त्रे प्रथमानिर्दिष्टं यत् प्रति अप्रधानम् तत् प्रति उपसर्जनसंज्ञं स्यात्' इत्यर्थाङ्गीकारेण 'राज्ञः कुमारीं श्रितः' इत्येत्र विग्रहेऽपि न कुमारीपदस्य राजशब्दात् पूर्वनिपातापत्तिरिति भाष्ये स्पष्टम् ॥ ३ अत्रानुवृत्तं समासपदं समासार्थपरं सद् विग्रहपरमेवेत्याह—**विग्रह इति** । विग्रहशब्दार्थश्चाग्रे सर्वसमासशेषप्रकरणे द्रष्टव्यः ॥ **नियतविभक्तीति** ॥ परि निष्ठितविभक्त्या समास एवेदं सार्थकमिति तत्रेदमेव ज्ञापकम् ॥ इयं चोपसर्जनसंज्ञा पूर्वनिपातभिन्ने कार्ये कर्तव्ये वतीत्याह—**नतु तस्य पूर्वनिपात इति** ॥ अव्ययीभावप्रकरणे अस्या उपसर्जनसंज्ञाया एतत्फलस्य ह्रस्वस्य चोपन्यासो विश्वपाशब्दे 'दीर्घाज्जसि च' इत्यस्येव न्याय्यत्वादेव ॥ ह्रस्वादेशस्तु 'अव्ययीभावश्च' इति नपुंसकसंज्ञायां 'ह्रस्वो नपुंसके' इति सिद्ध एवेति बोध्यम् ॥ ४ उपसर्जनपदस्य विशेष्यत्वे गोपदस्य विशेषणत्वेन तत्र तदन्तविधौ 'गोन्तास्य स्त्रीप्रत्ययान्तान्तस्य चोपसर्जनस्य' इत्येवमर्थसंभवे 'पञ्चगो' 'रूपवद्भार्या' समुदायस्योपसर्जनत्वाभावेन ह्रस्वाद्युपपत्त्या पञ्चगुः रूपवद्भार्य इत्याद्यसिद्ध्यापत्तिः स्याद् । अत उपसर्जनपदस्य गोस्त्रीविशेषणत्वमाश्रित्याह—**उपसर्जनं यो गोशब्द इत्यादि** ॥ 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्यतोऽनुवर्त्याह—**प्रातिपदिकस्येत्यादि** ॥ ५ "**सप्तम्या ऋद्धि-नदीसमास-संख्यावयवेभ्यो नित्यम्**" इति वार्तिकविषये 'बहुलग्रहणाल्लब्धश्चायमर्थो वर्णितः' इति कैयटोक्तिमनुसृत्याह—**बहुलग्रहणादिति** ॥ आदिना एकविंशतिभारद्वाजमित्यादिसंग्रहः ॥ ६ अव्ययस्य विभक्त्यर्थवृत्तित्वं दर्शयति—**सप्तम्यर्थस्यैवेति** ॥ अयं भावः—यदव्ययं यस्या विभक्तेरर्थस्य द्योतकम् तद्विभक्त्यन्तस्यैव तेनाव्ययेन समासः प्रत्यासत्त्याऽङ्गीकरणीय इति ॥

इत्यलौकिकं विग्रहवाक्यम्। अत्र निपातेनाभिहितेऽप्यधिकरणे वचनसामर्थ्यात्सप्तमी ॥ **अव्ययीभावश्च । २ । ४ । १८ ॥** अयं नपुंसकं स्यात् ॥ ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ गोपायतीति गाः पातीति वा गोपाः। तस्मिन्नित्यधिगोपम्। समीपे—कृष्णस्य समीपमुपकृष्णम्। समया ग्रामम्, निकषा लङ्काम्, आराद्वनादित्यत्र तु नाव्ययीभावः। "अभितःपरितः" "अन्यारादिति द्वितीयापञ्चम्योर्विधानसामर्थ्यात् ॥ मद्राणां समृद्धिः सुमद्रम् ॥ यवनानां व्यृद्धिर्दुर्यवनम्। विगता ऋद्धिः ॥ मक्षिकाणामभावो निर्मक्षिकम् ॥ हिमस्यात्ययोऽतिहिमम्। अत्ययो ध्वंसः ॥ निद्रा संप्रति न युज्यत इत्यतिनिद्रम् ॥ हरिशब्दस्य प्रकाश इतिहरि ॥ विष्णोः पश्चादनुविष्णु। पश्चाच्छब्दस्य तु नायं समासः, 'ततः पश्चात्स्रंस्यते' ध्वंस्यते' इति भाष्यप्रयोगात् ॥ योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थः। अनुरूपम्। रूपस्य योग्यमित्यर्थः। अर्थमर्थं प्रति प्रत्यर्थम्। प्रतिशब्दस्य वीप्सायां कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्तद्योगे द्वितीयागर्भं वाक्यमपि ॥ शक्तिमनतिक्रम्य यथाशक्ति। हरेः सादृश्यं सहरि। वक्ष्यमाणेन सहस्य सः ॥ ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् ॥ चक्रेण युगपदिति विग्रहे—॥ **अव्ययीभावे चाकाले । ६ । ३ । ८१ ॥** सहस्य सः स्यादव्ययीभावे न तु काले ॥ सचक्रम्। काले तु सहपूर्वाह्णम् ॥ सदृशः सख्या ससखि। यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये

---

१ 'क्वचिन्निपातेनाऽप्यभिधानम्' इति प्रागुक्तमनुसृत्य जातायाः शङ्कायाः समाधानमाह—**वचनसामर्थ्यादिति**। विभक्तिरूपार्थकथनसामर्थ्यादित्यर्थः ॥ यदि अधिशब्देनाभिहितत्वादधिकरणे सप्तमी न स्यात्तदा अधिरूपाव्ययार्थाधिकरणस्य विभक्त्यर्थत्वमेव न स्यादिति विभक्तौ समासविधानं व्यर्थमेव स्यादिति भावः ॥ २ **द्वितीयापञ्चम्योर्विधानेति** ॥ रक्षितस्योक्तिरियम् ॥ मध्यार्थकसमयाशब्दयोगे द्वितीयायाः दूरार्थकाराच्छब्दयोगे पञ्चम्या विधानस्य चारितार्थ्याच्चिन्त्यैवेयं रक्षितस्योक्तिरिति ध्येयम् ॥ समया--निकषा--आराच्चाधिकरणशक्तिप्रधाना इति समीपमात्रवाचित्वाभावान्नैतैः समास इति शेखरोक्तेरभिप्रायः 'उप स्यादधिकार्थे च हीनार्थासन्नयोरपि' 'समयाऽन्तिकमध्ययोः' 'आराद् दूरे समीपे च' इति मेदिनीदर्शनेनोपसमयानिकषारादर्थे विशेषाभावात् केन वर्णनीयः स्यादिति बोध्यम् ॥ निकषासाहचर्यान्मध्यार्थकसमयायोगे द्वितीयाया अप्रवृत्त्यङ्गीकारस्यैव सर्वसंमतत्वात् ॥ ३ **'निर्हिमम्'** इत्येव पाठः। न तु 'अतिहिमम्' इति, तथाप्रयोगेण हिमातिशयस्यैव प्रतीत्याऽतेस्तदर्थत्वाभावात् ॥ ४ **भाष्यप्रयोगादिति**। 'अचः परस्मिन्' इति सूत्रे--इत्यादिशेषः। 'एतत्सूत्रे तत्तदर्थबोधकपदघटकतयोच्चारितस्य तत्तदर्थबोधकस्याव्ययस्य समासो न' इति ज्ञायते--इति उत्तरत्र शेषः ॥ ५ **सामर्थ्यादिति**। प्रतिस्थानमित्यत्र षत्वाप्राप्तये कर्मप्रवचनीयसंज्ञायाश्चरितार्थत्वात्सामर्थ्यवर्णनमकिंचित्करमेव। वीप्साया द्वित्वेन द्योतितत्वात् प्रतिशब्दस्य वीप्साद्योतकत्वाभावेन समासो न प्राप्नोतीति तत्त्वम् ॥ ६ **वक्ष्यमाणेनेति**। 'अनुपदमेव' इत्यादिः ॥ 'अव्ययीभावे चाकाले' इत्यनेनेति भावः ॥ ७ **आनुपूर्व्येणेति**। एतस्मिन्नेवार्थे एतदर्थबोधकपदघटकतयोच्चारितस्याप्यनोः समासो भवति सूत्र एव तथा निर्देशात्। सादृश्यपदे तु समानशब्दस्यैव निर्देशः, न तु सहेत्यव्ययस्येति सादृश्यार्थकेन सहेत्यव्ययेन समासो भवत्येव ॥ ८ पूर्वाह्णमप्यपरित्यज्येत्यर्थे साकल्येऽव्ययीभावे 'सहपूर्वाह्णम्' इति भवति ॥ ९ [illegible]ऽपीति। यथार्थान्तर्गतसादृश्यशब्दे तु [illegible]द्भावे [illegible]। तथा च सदृशभावस्य सादृश्यस्य तथा [illegible] समासः। सूत्रघटके सादृश्य[illegible] तु स्वार्थे [illegible] व्याख्यानादिति सादृश्यवति सदृशे समासे सदृशार्थस्य [illegible]शब्द्येत्वेन प्राधान्यम्, सादृश्यस्य तत्र विशेषणत्वेन गुणभूतत्वमेवेति 'सखिनिरूपितसादृश्यवान्' इति 'ससखि' इत्यतो बोधः। 'सहरि' इत्यतस्तु 'हरिनिरूपितं सादृश्यम्' इति बोधः ॥

यथा स्यादित्येवमर्थम् ॥ क्षत्राणां संपत्तिः सक्षत्रम्। ऋद्धेराधिक्यं समृद्धिः । अनुरूप आत्मभावः संपत्तिरिति भेदः ॥ तृणमप्यपरित्यज्य सतृणमत्ति । साकल्येनेत्यर्थः । नत्वत्र तृणभक्षणे तात्पर्यम् ॥ अन्ते–अग्निग्रन्थपर्यन्तमधीते साग्नि ॥ **यथाऽसादृश्ये । २ । १ । ७ ॥** असादृश्ये एव यथाशब्दः समस्यते ॥ तेनेह न–यथा हरिस्तथा हरः । हरेरुपमानत्वं यथाशब्दो द्योतयति । तेन सादृश्य इति [ यथार्थ इति वा ] प्राप्तं निषिध्यते ॥ **यावदवधारणे । २ । १ । ८ ॥** यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामा यावच्छ्लोकम् ॥ **सुप् प्रतिना मात्रार्थे ।२।१।९॥** शाकस्य लेशः शाकप्रति ॥ मात्रार्थे किम् ? वृक्षं वृक्षं प्रति विद्योतते विद्युत् ॥ **अक्षशलाकासंख्याः परिणा २ । १ । १० ॥** द्यूतव्यवहारे पराजय एवायं समासः । अक्षेण विपरीतं वृत्तं अक्षपरि । शलाकापरि । एकपरि ॥ **विभाषा ।२।१।११ ॥** अधिकारोऽयम्। एतत्सामर्थ्यादेव प्राचीनानां नित्यसमासत्वम् । सुप्सुपेति तु न नित्यसमासः । अव्ययमित्यादिसमासविधानाज्ज्ञापकात् ॥ **अपपरिबहिरञ्चवः पञ्चम्या । २ । १ । १२॥** अपविष्णु संसारः । अप विष्णोः। परिविष्णु। परिविष्णोः । बहिर्वनम् । बहिर्वनात् । प्राग्वनम्। प्राग्वनात् ॥ **आङ्मर्यादाभिविध्योः ।२।१।१३॥** एतयोराङ् पञ्चम्यन्तेन वा समस्यते सोऽव्ययीभावः ॥ आमुक्ति संसारः । आमुक्तेः । आबालं हरिभक्तिः । आ बालेभ्यः॥ **लक्षणेनाभिप्रती आभिमुख्ये । २। १। १४॥** आभिमुख्यद्योतकावभिप्रती चिह्नवाचिना सह प्राग्वत् ॥ अभ्यग्नि शलभाः पतन्ति।अग्निमभि । प्रत्यग्नि । अग्निं प्रति॥ **अनुर्यत्समया । २ । १। १५॥** यं पदार्थं समया द्योत्यते तेन लक्षणभूतेनानुः समस्यते सोऽव्ययी-

---

१ **अनुरूपः** अनुगतो रूपं श्लोकं यशः अनुरूपो यथायशाः **आत्मनः** प्रवृत्तिनिमित्तस्य **भावः** सत्ता अन्यूनत्वम् संपत्तिः ॥ एवं च ' सक्षत्रम् ' इत्यस्य क्षत्राणां यथाप्रसिद्ध्येव क्षात्रमित्यर्थः ॥ परमपि अनृणीकर्तुं शक्तिः समृद्धिः स्वस्यैवानृणीभावसामर्थ्यं संपत्तिरिति समृद्धसंपन्नयोर्भेदः ॥ २ ' यथाशब्दः समर्थेन सुबन्तेन समस्यते, न तु सादृश्ये द्योत्ये ' इति प्रसज्यप्रतिषेधाङ्गीकारे सूत्रार्थः । 'यथाशक्ति ' इत्याद्युदाहरणम् । अत्र पदार्थानतिवृत्तियथार्थेनैव समासः तदर्थे तत्सूत्रगृहीताव्ययेन समासाभावज्ञापनात् । असादृश्ये इत्यस्य पर्युदासत्वमाश्रित्याह–**असादृश्य एवेति** ॥ असादृश्यपदप्रयोजनमाह--**तेनेह नेति** । अत्र प्राप्तिं भाष्यकथितामाह--**सादृश्य इतीति** ॥ हरदत्तोक्तं पक्षान्तरं दर्शयति–**यथार्थ इति वेति** ॥ ३ '**अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत् । कितवव्यवहारे च एकत्वेऽक्षशलाकयोः** ॥ ' इति वार्तिके पूर्वोक्तस्य पूर्ववृत्तस्येत्यर्थः । इति सकलमभिप्रेत्य सूत्रप्रवृत्तियोग्यतां दर्शयन् विग्रहं दर्शयति--**द्यूतव्यवहार इत्यादि** ॥ **एतदिति** । ४ अयं भावः--एकार्थीभावसामर्थ्यविवक्षायां समासस्य व्यपेक्षासामर्थ्यविवक्षायां समासाभावस्य सिद्धत्वाद् व्यर्थं सदिदं सूत्रमत्र करणेन 'प्राचीनेषु व्यपेक्षासामर्थ्याभावं ज्ञापयति' इति । नन्वेवं सति 'पूर्वं भूतो भूतपूर्वं' इति विग्रहप्रदर्शनमसंगतं स्यात् अविग्रहस्यैव नित्यसमासत्वाद् अत आह--**सुप्सुपेतीति** । प्राक्कडारसूत्रे 'विस्पष्टं पटुः ' 'व्यक्तं पटुः' इति विग्रहप्रदर्शकभाष्यप्रामाण्यादिति भावः ॥ **समासेति** । अयं भावः--'यदयं 'चतुर्थी तदर्थार्थ' इति चतुर्थ्यन्तस्यार्थशब्देन सह समासं शास्ति' इति ' चतुर्थी संप्रदाने ' इति सूत्रे भाष्ये . ' समासं [illegible] इति प्रदर्शनेन ' अव्ययं वि[illegible] ' बहुलंप्र- संज्ञाविधायकत्वमपि सर्वसंमतमेव । अत एवैकं [illegible] प्रणास्यति ' [illegible] तिभावः- संज्ञाव्ययीभावादिसंज्ञयोरुभयोर्विधानेन 'या परा[illegible]नवका[illegible]' इति बाधहेत्वोराप्रतेः ॥ अन्यथा परत्वादव्ययीभावादिसंज्ञया समाससंज्ञाया बाधेन समाससंज्ञाप्रयु[illegible]प्रातिपदिकसंज्ञास्वरयोरसिद्धिः स्यादिति ॥

भावः ॥ अनुवनमशनिर्गतः[1] । वनस्य समीपं गत इत्यर्थः । **यस्य चायामः । २ । १ । १६ ॥** यस्य दैर्ध्यमनुना द्योत्यते तेन लक्षणभूतेनानुः समस्यते । अनुगङ्गं[2] वाराणसी । गङ्गाया अनु । गङ्गादैर्ध्यसदृशदैर्ध्योपलक्षितेत्यर्थः ॥ **तिष्ठद्गुप्रभृतीनि[3] च ।२।१।१७ ॥** एतानि निपात्यन्ते ॥ तिष्ठन्त्यो[4] गावो यस्मिन्काले स तिष्ठद्गु दोहनकालः । आयतीगवम् । इह[5] शत्रादेशः पुंवद्भावविरहः समासान्तश्च निपात्यते ॥ **पारे मध्ये षष्ठ्या वा ।२।१।१८ ॥** पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते ॥ एदन्तत्वं[6] चानयोर्निपात्यते । पक्षे षष्ठीतत्पुरुषः । पारेगङ्गादानय । गङ्गापारात् । मध्येगङ्गात् । गङ्गामध्यात्॥महाविभाषया[7] वाक्यमपि—गङ्गायाः पारात् । गङ्गाया मध्यात्। **संख्या वंश्येन ।२।१।१९ ॥** वंशो द्विधा विद्यया जन्मना च[8] । तत्र भवो वंश्यः । तद्वाचिना सह संख्या वा समस्यते ॥ द्वौ मुनी वंश्यौ द्विमुनि। व्याकरणस्य त्रिमुनि। विद्यातद्वतामभेदविवक्षायां त्रिमुनि व्याकरणम् ॥ एकविंशति[9] भारद्वाजम् ॥ **नदीभिश्च ।२।१।२० ॥** नदीभिः सह संख्या प्राग्वत् ॥ समाहारे[10] चायमिष्यते * ॥ सप्तगङ्गम्[11] । द्वियमुनम् ॥ **अन्यपदार्थे च संज्ञायाम्**

---

१ एवमेव ‘अन्वक्षं स्फाटिकं चाक्षुपमानम्’ इत्यस्य ‘अक्षिसमीपं स्फटिकनिर्मितं चाक्षुपस्य रूपस्य मानं दर्शनोपकरणम्’ अस्ति’ इत्यर्थः ॥ २ एवमेव ‘अन्वक्षं स्फाटिकं दर्शनम्’ इत्यस्य ‘अक्षिदैर्ध्यसदृशदैर्ध्योपलक्षितं स्फटिकनिर्मितं दर्शनोपकरणम्’ इत्यर्थः ॥ ३ तिष्ठद्गु, वहद्गु, आयतीगवम्, खलेयवम्, खलेबुसम्, लूनयवम्, लूयमानयवम्, पूतयवम्, पूयमानयवम्, संहृतयवम्, संह्रियमाणयवम्, संहृतबुसम्, संह्रियमाणबुसम्, समभूमि, समपदाति, सुषमम्, विषमम्, दुःषमम्, निःषमम्, अपसमम्, आयतीसमम्, पापसमम्, पुण्यसमम्, प्राह्णम्, प्ररथम्, प्रमृगम्, प्रदक्षिणम्, संप्रति, असंप्रति, इच्, । इति तिष्ठद्ग्वादिः ॥ ४ ‘**तिष्ठद्गु ( प्रभृतीनि ) कालविशेषे**’ ‘**खलेयवादीन्यन्यपदार्थे**’ इति वार्तिकमनुसृत्य विग्रहं दर्शयति-**तिष्ठन्त्य इत्यादि** ॥ सूत्रे च एवकारार्थः । तेन तिष्ठद्गुप्रभृतीनि समासान्तरे घटकानि न स्युः । तेन ‘परमं तिष्ठद्गु’ इत्यत्र समासो न भवतीति बोध्यम् ॥ ५ आयतीगवे निपातनीयं दर्शयति-**इहेति** ॥ तिष्ठद्गुशब्दे तु पुंवद्भावो जात एवेति भावः ॥ ६ ‘**एकारान्तनिपातनं च ‘पारेमध्ये षष्ठ्या वा वचनम्’ ‘अवचने हि षष्ठीसमासाभावो यथैकदेशिप्रधाने’**’ इति वार्तिके अनुसृत्य व्याचष्टे-**एतदन्तत्वं चेत्यादि** ॥ ७ **महाविभाषयेति** । ‘विभाषा’ इत्यधिकारेणेत्यर्थः ॥ ८ **विद्यया जन्मना चेति** । विद्यया वंशो वंशब्राह्मणादिषु स्पष्टः । जन्मना वंशस्त्वाबालं प्रसिद्ध एवेति बोध्यम् ॥ **त्रिमुनि व्याकरणस्येति** । त्रयो मुनयो वंश्या वंशप्रवर्तका इत्यर्थः । पाणिनिकात्यायनपतञ्जलयः । उपलक्षणं व्याडेरपि इदं सर्वं ‘त्रिमुनि व्याकरणस्य’ इति प्रयोगोपपादनाय ॥ शेखरकृता तु विद्यावंशे गुरुशिष्यपरम्पराया एव ग्राह्यत्वात् पाणिनिकात्यायनव्याडिपतञ्जलीनां गुरुशिष्यत्वे मानाभावः । ‘व्याकरणं त्रिमुनि’ इति प्रयोगस्येष्टत्वे तिष्ठद्गुप्रभृतिषु पाठः कल्पनीयः । ‘त्रिमुनि व्याकरणम्’ इति तु बहुव्रीहिणा साधु इति सिद्धान्तितम् ॥ ९ जन्मवंशमुदाहरति-**एकविंशति भारद्वाजमिति** ॥ भारद्वाजशब्दस्योपकादिगणे पाठाल्लुगभावः ॥ १० **समाहारे चेति** । समाहार एवेत्यर्थः । तेन समाहाराविवक्षायाम् ‘एकनदीतर’ इत्यत्र ‘पूर्वकालैकसर्व’ इति समानाधिकरणतत्पुरुषस्यैव जातत्वादव्ययीभावाभावेन दीर्घ एव श्रूयते । अव्ययीभावत्वे तु नपुंसकह्रस्वापत्तिः स्यादिति भावः ॥ ११ सूत्रे ‘नदीभिः’ इति बहुवचननिर्देशान्नदीपदं न नदीसंज्ञकपरम् नापि शब्दस्वरूपपरम् ॥ किंतु तदर्थपरं सद् अर्थे कार्यासंभवात् तद्वाचकपरं भवति । तथा च तद्विशेषवाचकशब्दानामिव सामान्यवाचकशब्दस्यापि ग्रहणम् इति संख्यासंज्ञासूत्रे भाष्ये स्पष्टमिति ध्वनयन् विशेषवाचकमुदाहरति-**सप्तगङ्गमिति** ॥ सामान्यवाचकस्य तु पञ्चनदमिति उदाहरणं बोध्यम् ॥

।२।१।२१ ॥ अन्यपदार्थे [विद्यमानं] सुबन्तं नदीभिः सह नित्यं समस्यते संज्ञायाम् ॥ विभाषाधिकारेऽपि वाक्येन संज्ञानवगमादिह नित्यसमासः । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् ॥ **समासान्ताः** ।५।४। ६८ ॥ इत्यधिकृत्य ॥ **अव्ययीभावे शरत्प्रभृतिभ्यः** ।५।४। १०७ ॥ शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे ॥ शरदः समीपमुपशरदम् । प्रतिविपाशम् ॥ शरद् । विपाश् । अनस् । मनस् । उपानह् । दिव् । हिमवत् । अनडुह् । दिश् । दृश् । विश् । चेतस् । चतुर् । त्यद् । तद् । यद् । कियत् । **जराया जरस् च** ॥ उपजरसम् । **प्रतिपरसमनुभ्योऽक्ष्णः** ॥ यस्येति च ॥ प्रत्यक्षम् । अक्ष्णः परमिति विग्रहे समासान्तविधानसामर्थ्यादव्ययीभावः । परोक्षे लिडिति निपातनात्परस्यौकारादेशः । परोक्षम् । परोक्षा क्रियेत्यादिं तु अर्शआद्यचि । समक्षम् । अन्वक्षम् । **अनश्च** ।५।४।१०८॥ अन्नन्तादव्ययीभावाट्टच् स्यात् ॥ **नस्तद्धिते** ।६।४।१४४ ॥ नान्तस्य भस्य टेर्लोपः स्यात्तद्धिते ॥ उपराजम् । अध्यात्मम् । **नपुंसकादन्यतरस्याम्** ।५।४।१०९ ॥ अन्नन्तं यत्क्लीबं तदन्तादव्ययीभावाट्टच् वा स्यात् ॥

---

१ **अन्यपदार्थे** इति 'समस्यते' इत्यनेनान्वेति । तथा च 'अन्यपदार्थे समस्यते समस्तं संज्ञायां चेत्' इत्यर्थः । एवं च वृत्तौ दृश्यमानम् 'विद्यमानम्' इति पदमनन्वितत्वात्केनचिद्विद्वद्वरेण 'अनेकमन्यपदार्थे' इति सूत्रवृत्तौ दृष्टं वर्धितमिति व्यर्थमेवेति बोध्यम् ॥ इति केचित् ॥ 'अन्यपदार्थे विद्यमानं यथा स्यात् तथा समस्यते' इति क्रियाविशेषणतया योज्यमिति तु दाधिमथाः ॥ २ **वाक्येन संज्ञानवगमादिति** । वृत्त्यर्थावबोधकमेव विग्रहवाक्यं भवति । संज्ञा हि अनादिपरम्परयोच्चारितैव भवति । यथा 'पङ्कज' इत्येककमलसंज्ञा न तु 'पङ्के जातम्' 'पङ्कजनिकर्तृ' इति । तथा अनादिपरम्परया लोहितगङ्ग' इत्येव श्रूयते न तु 'लोहिता गङ्गा यस्मिन्' इति वाक्यमिति वाक्येन शक्तिग्रहाभावाद्वाक्यं संज्ञावाचकं न भवतीत्येवार्थः । न तु वाक्यं नैव प्रयुज्यते' इति, 'संज्ञायाम्' इति सूत्रविधेयसमासस्य भाष्ये 'वाप्यामश्वो वाप्यश्वः' इति विग्रहप्रदर्शनात् । 'द्वितीयतृतीय' इति सूत्रभाष्ये '**लोहितगङ्गम्**' **अव्ययीभावेन**' '**मुक्ते बहुव्रीहिर्न**' इत्यत्र मुक्तपदोपादानेन अव्ययीभावाभावस्यापि ध्वननाच्च ॥ ३ **नित्यसमास इति** । "एष ब्रह्मदत्तः इति अब्रह्मदत्तं 'ब्रह्मदत्तः' इत्याह । तेन गम्यते "ब्रह्मदत्तवदयम् इति" तत्र भाष्यदर्शितरीत्या 'नित्यसमासवत्' इत्येवार्थः ॥ ४ शरद्, विपाश्, अनस्, मनस्, उपानह्, अनडुह्, दिव्, हिमवत्, हिरुक्, विद्, सद्, दिश्, दृश्, विश्, चेतस्, चतुर्, त्यद्, तद्, यद्, कियत्, जराया जरस् च, प्रतिपरसमनुभ्योऽक्ष्णः, पथिन् । इति शरदादिः ॥ ५ '**अव्ययीभावे**' इति पञ्चम्यर्थे सप्तमीति 'शरदाद्यन्ताव्ययीभावसमासयोग्यालौकिकप्रक्रियावाक्यस्यान्तावयवष्टच्' इत्येव सूत्रार्थ इति 'उप ग्र शरद् ङस्' इत्यलौकिकप्रक्रियावाक्यस्यैवान्तावयवे टचि जाते 'उप् सु शरद् ङस् टच्' इत्येवं जाते तद्धितान्तत्वात्प्रतिपदिकत्वेन सुपो लुकि 'उपशरद्' इति जाते समासत्वात्तद्धितान्तत्वाद्वा जातां प्रातिपदिकसंज्ञामाश्रित्य जातस्य सुपः 'नाव्ययीभावाद्' इत्यमादेशः इति प्रक्रियातत्त्वम् ॥ ६ **अक्ष्णः परमिति विग्रहे समासान्तविधानसामर्थ्यादिति** । परशब्दस्याव्ययत्वाभावेन समासाप्राप्तौ समासान्तविधानमसंगतं सत् समासं विशेषापेक्षया ज्ञापयति इति भावः ॥ इदं च परशब्दपाठं यथाश्रुतमकारान्तमनुसृत्य ॥ वस्तुतस्तु 'परि' इत्येव पाठः । स्वल्पप्रमादेनैव तथापाठस्य संभवात् । तथा च 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यनेन समासः सिद्ध एवेति लाघवम् ॥ परिवर्जनार्थस्यासंभवाभावात् ॥ 'परोक्षे' इति निर्देशेनौकारनिपातनस्य ज्ञाप्यसमासपाठसत्त्वे परशब्दाकारस्यैव सिद्धसमासपाठसत्त्वे परिशब्दे इकारस्यैवेत्युभयत्र समत्वात् '**परो भावः परस्याक्षे परोक्षे लिटि दृश्यताम् । उदं वादेः परादक्ष्णः सिद्धं वास्मान्निपातनात्**॥' इत्येतेषु तृतीयोपायेन महर्षिसपाठस्यापि ध्वननादिति मात्सर्यमुत्सार्य विचार्यमाचार्यवर्यैः ॥ ७ **इत्यादीत्यादिना** 'अन्वक्षं स्फाटिकम्' इत्यस्यापि संग्रहः ॥

उंपचर्मम् । उपचर्म ॥ **नदीपौर्णमास्याग्रहायणीभ्यः । ५। ४। ११०** ॥ [ वा ] टच् स्यात् ॥ उपनदनम् । [ उंपनदि ] उपपौर्णमासम् । [ उपपौर्णमासि ] उपाग्रहायणम् । [ उपाग्रहायणि ] ॥ **झयः । ५ । ४ । १११** ॥ झयन्तादव्ययीभावाट्टज्वा ॥ उपसमिधम् । उपसमित्॥ **गिरेश्च सेनकस्य। ५ । ४ । ११२**॥गिर्यन्तादव्ययीभावाट्टज्वा स्यात् ॥ सेनकग्रहणं पूजार्थम्। उपगिरम् । उपगिरि ॥

इत्यव्ययीभावप्रकरणम् ।

## अथ तत्पुरुषप्रकरणम ।

**तत्पुरुषः । २। १ । २२** ॥ अधिकारोऽयम्, प्राग्बहुव्रीहेः ॥ **द्विगुश्च । २। १। २३** ॥ द्विगुरपि तत्पुरुषसंज्ञः स्यात् ॥ ईंदं सूत्रं त्यक्तुं शक्यम् । संख्यापूर्वो द्विगुश्चेति पठित्वा चकारबलेन संज्ञाद्वयसमावेशस्य सुवचत्वात् । समासान्तः प्रयोजनम्—पञ्चराजम् ॥ **द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः । २ । १ । २४** ॥ द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते, स तत्पुरुषः ॥ कृष्णं श्रितः कृष्णश्रितः । दुःखमतीतो दुःखातीतः ॥ **गम्यादीनामुपसंख्यानम्** * ॥ ग्रांमं गमी ग्रामगमी । अन्नं बुभुक्षुः अन्नबुभुक्षुः **स्वयं क्तेन । २ । १ । २५** ॥ द्वितीयेति न संबध्यते, अयोग्यत्वात् । स्वयंकृतस्यापत्यं स्वांयंकृतिः ॥ **खट्वा क्षेपे । २ । १ । २६**॥ खट्वाप्रकृतिकं द्वितीयान्तं क्तान्तप्रकृतिकेन सुबन्तेन

---

१ '**आचार्यप्रवृत्तिर्ज्ञापयति–' न तद्विशेषेभ्यो भवति** ' इति । **यदयं विपाट्शब्दं शरत्प्रभृति**ष्वपि पठति ' इति संख्यासंज्ञासूत्रभाष्यप्रामाण्येन ध्वनिते 'नदीपौर्णमास्याग्रहायणीभ्यः' इति सूत्रस्य 'अनश्च ' इत्यतः प्राक् पाठेन नित्यसमासान्तविधायकत्वे ' उपनदि ' इत्यादिसमासान्तविरहितप्रयोगल्लेखनं काशिकानुसरणैवेति तत्त्वम् ॥ २ शरदादिगणे झयन्तपाठो नित्यार्थ एवेति ॥ ३ ' आकडाराद् ' इत्येकसंज्ञाधिकाराद् द्विगुसंज्ञायास्तत्पुरुषसंज्ञाबाधकत्वे ' पञ्चराजम् ' इत्यादौ तत्पुरुषत्वप्रयुक्तष्टज् न स्यादत उभयोः समावेशार्थं कृतं 'द्विगुश्च' इति सकलसूत्रं व्यर्थम् 'संख्यापूर्वो द्विगुः ' इति सूत्रे चकारकरणेनैव तत्पुरुषसंज्ञाया द्विगुसंज्ञया समावेशस्य सिद्धेरित्यभिप्रायेणाह–**इदं सूत्रं त्यक्तुं शक्यमिति** ॥ ४ सुब्रूपद्वितीयायाः प्रत्ययत्वेन ' प्रत्ययग्रहणे तदन्तग्रहणम्' इति तदन्तविधिम्, 'सुपा' इत्येतद्विशेषणश्रितादीनां सुप्त्वाभावात् सुबन्तत्वाभावाच्चानन्वयापत्तिवारणाय स्वप्रकृतिकपरत्वं चाङ्गीकृत्य व्याचष्टे- **द्वितीयान्तमित्यादि** । 'श्रितादीनां निष्ठान्तत्वात्तद्योगेऽनुक्ते कर्मणि' 'न लोका ' इति षष्ठीनिषेधाद् द्वितीयैवेति भावः ॥ ५ भाष्ये यद्यपि '**गमिगाम्यादीनामुपसंख्यानम्** ' इति पाठो दृश्यते 'गमेरिनिः, इत्यौणादिकस्य 'आवश्यकाधमर्ण्ययोर्णिनिः ' इत्यनौणादिकस्योपादानमुभयविधानामन्येषां च प्रत्ययानां परिग्रहार्थम् इति प्रदीपपदमञ्जर्यौ । उभयोरप्युणादिप्रत्ययान्तत्वेन कथम् उभयोपादानेन 'अन्येषां च' इत्यर्थलाभ इति चिन्त्यम् ॥ इति नागेशोक्तिस्तु 'आवश्यकाधमर्ण्ययोः ' इत्यस्याप्यौणादिकत्वमभिप्रेत्य ॥ तथाप्यादिशब्दस्य प्रकारार्थत्वेनाभीष्टसंग्रहे सिद्ध उभयोपादानं स्पष्टार्थमित्याशयेनाह--**गम्यादीनामिति** ॥ ६ **ग्राममिति** । 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीनिषेधे द्वितीयान्तम् ॥ **अन्नमिति** । 'न लोका' इति षष्ठीनिषेधे द्वितीयान्तम् ॥ ७ समासमन्तरापि स्वयमित्यस्याव्ययत्वेन विभक्तिलुकि सिद्धे समासविधानस्यान्यत्फलमाह--**स्वायंकृतिरिति** । समासेन स्वयंकृतशब्दयोरेकपदत्वे आतो एव स्वयंकृतसमुदायस्य तद्धितनिरूपिताङ्गत्वं संभवति नान्यथेति समुदायस्य आदेर्वृद्धिर्भवतीति भावः ॥

समस्यते निन्दायाम् । खट्वारूढो जाल्मः[1] । नित्यसमासोऽयम् । नहि वाक्येन निन्दा गम्यते ॥ **सामि । २ । १ । २७ ॥** सामिकृतम् ॥ **कालाः ।२। १ । २८॥** क्तेनेत्येव । अनत्यन्तसंयोगार्थं वचनम् । मासं[4] प्रमितः मासप्रमितः प्रतिपच्चन्द्रः । मासं परिच्छेत्तुमारब्धवानित्यर्थः ॥ **अत्यन्तसंयोगे च । २ । १ । २९ ॥** काला इत्येव ॥ अक्तान्तार्थं वचनम् । मुहूर्तं[5] सुखं मुहूर्तसुखम् ॥ **तृतीया तत्कृतार्थेन गुणवचनेन । २ । १ । ३० ॥** तत्कृतेति[6] लुप्ततृतीयाकम् । तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थशब्देन च सह प्राग्वत् ॥ शङ्कुलया खडः शङ्कुलाखण्डः । धान्येनार्थो धान्यार्थः ॥ तत्कृतेति किम् ? अक्ष्णा काणः ॥ **पूर्वसदृशसमोनार्थककलहनिपुणमिश्रश्लक्ष्णैः । २ । १ । ३१ ॥** तृतीयान्तमेतैः प्राग्वत् ॥ मासपूर्वः । मातृसदृशः । पितृसमः ॥ ऊनार्थे—माषोनं कार्षापणम् । माषविकलम् । वाक्कलहः । आचारनिपुणः । गुडमिश्रः ॥ मिश्रग्रहणे[7] सोपसर्गस्यापि ग्रहणम् । 'मिश्रं चानुपसर्गमसन्धौ' इत्यत्रानुपसर्गग्रहणात् गुडसंमिश्रा धानाः ॥ आचारश्लक्ष्णः ॥ **अवरस्योपसंख्यानम् * ॥** मासेनावरो मासावरः ॥ **कर्तृकरणे कृता बहुलम् २ । १ । ३२ ॥** कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् ॥ हरिणा त्रातो हरित्रातः । नखैर्भिन्नो नखभिन्नः ॥ **कृद्ग्रहणे[8] गतिकारकपूर्वस्यापि ग्रहणम् * ॥** नखनिर्भिन्नः ॥ कर्तृकरणे इति किम् ? भिक्षाभिरुषितः[9] । हेतावेषा तृतीया ॥ बहुलग्रहणं[10] सर्वोपाधिव्यभिचारार्थम् । तेन दात्रेण लूनवानित्यादौ न ॥ कृता किम् ? काष्ठैः पचतितराम् ॥ **कृत्यैरधिकार्थवचने । २ । १ ३३ ॥** स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचनं तत्र कर्तारि करणे च तृतीया कृत्यैः प्राग्वत् ॥ वातच्छेद्यं[11] तृणम् । काकपेया

---

१ **जाल्म इति** । समावर्तनात् प्राग् ब्रह्मचर्यावस्थायां शास्त्रविहितस्य खट्वारोहणपरिहेयस्याकरणादिति भावः ॥ २ उक्तोऽर्थ आशयश्च ॥ ३ ऐकपद्यमैकस्वर्यं चैव सर्वत्रैव ॥ ४ **मासं प्रमित इति,** । माङ्धातोः 'आदिकर्मणि क्तः कर्तरि च' इति कर्तरि क्तप्रत्यये तद्योगे कर्मणोऽनुक्तत्वेन षष्ठ्यां 'न लोका' इति निषिद्धायां द्वितीया ॥ **परिच्छेत्तुमिति** ॥ परिमातुमिति यावत् । अमायां चन्द्रलोपस्य नित्यत्वात् प्रतिपदि कदाचिद् चन्द्रदर्शनं भवति तदनुसारेणायं ग्रन्थः । पञ्चदशदिनेषु चन्द्रशौक्ल्यमेधते क्रमेण पौर्णमासीपर्यन्तम्, ततः पञ्चदशदिनेषु चन्द्रशौक्ल्यं क्रमेण परिहीयते इत्येवं मासपरिच्छेदश्चन्द्रदर्शनेन भवति । तथा च यावत् शौक्ल्यं चन्द्रस्य प्रतिपदि कदाचिद् दृश्यते तावन्मात्रशौक्ल्यस्य मासपर्यन्तमविद्यमानत्वान्नात्यन्तसंयोग इति भावः ॥ ५ **मुहूर्त्तमिति** । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया ॥ ६ 'तत्कृतार्थेन' इत्यस्य समस्तत्वे 'तत्कृत' शब्दार्थस्य गुणवचनशब्दार्थेनान्वयानुपपत्तिरत आह-**तत्कृतेति लुप्तेति** ॥ ७ 'समासप्रत्ययविधौ प्रतिषेधः' इति तदन्तविधेः प्रतिषेधाद् 'गुडसंमिश्राः' इत्यत्र समासानुपपत्तिरत आह-**मिश्रग्रहण इति** ॥ ८ **कृद्ग्रहण इति** ॥ 'अभ्युद्धृतम्' इत्यादौ क्तान्त उत्तरपदे विधीयमानो गतेः स्वरो व्यवहितस्य नैव प्राप्नोतीति व्यर्थं सद् 'गतिरनन्तरः' इति सूत्रे अनतन्तरग्रहणं प्राचीनवैयाकरणतन्त्रे वाचनिकीं '**कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्**' इति परिभाषां स्थालीपुलाकन्यायेन स्वीकारयतीति भावः ॥ ९ 'फलमपीह हेतुः' इत्युक्तत्वाद् भिक्षाफलको यो भूतकालको वासस्तत्कर्तेति बोधः ॥ १० 'कर्तृकरणे कृता क्तेन' इति वार्तिकं 'बहुलवचनात्सिद्धम्' इत्युक्त्वा भाष्यकृता प्रत्याख्यातमित्येव स्वयमप्याह-**बहुलग्रहणमिति** ॥ **सर्वोपाधिः** सर्वानिष्टम् ॥ ११ **वातच्छेद्यमिति** । कोमलताध्वननाय स्तुतिः । **काकपेयेति** । अन्याग्राह्यत्वध्वननाय निन्दा ॥

नदी ॥ **अन्नेन व्यञ्जनम् । २ । १ । ३४** ॥ संस्कारकद्रव्यवाचकं तृतीयान्तमन्नेन प्राग्वत् ॥ दध्ना ओदनो दध्योदनः । इहान्तर्भूतोपसेकक्रियाद्वारा सामर्थ्यम् ॥ **भक्ष्येण मिश्रीकरणम् २ । १ । ३५** ॥ गुडेन धानाः गुडधानाः । मिश्रणक्रियाद्वारा सामर्थ्यम् ॥ **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः । २ । १ । ३६** ॥ चतुर्थ्यन्तार्थाय यत्तद्वाचिनाऽर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत् ॥ तदर्थेन प्रकृतिविकृतिभाव एव गृह्यते । बलिरक्षितग्रहणाज्ज्ञापकात् । यूपाय दारु यूपदारु । नेह–रन्धनाय स्थाली । अश्वघासादयस्तु षष्ठीसमासाः ॥ **अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्** * ॥ द्विजायायं द्विजार्थः सूपः । द्विजार्था यवागूः । द्विजार्थं पयः । भूतबलिः । गोहितम् । गोसुखम् । गोरक्षितम् ॥ **पञ्चमी भयेन । २ । १ । ३७** ॥ चोराद्भयं चोरभयम् ॥ **भयभीतभीतिभीभिरिति वाच्यम्** * ॥ वृकभीतः । वृकभीतिः । वृकभीः ॥ **अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ।२।१। ३८**॥ एतैः सहाल्पं पञ्चम्यन्तं समस्यते स तत्पुरुषः ॥ सुखापेतः । कल्पनापोढः । चक्रमुक्तः । स्वर्गपतितः । तरङ्गापत्रस्तः ॥ अल्पशः किम् ? प्रासादात्पतितः ॥ **स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ।२।१।३९**॥ स्तोकान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः। विप्रकृष्टादागतः । कृच्छ्रादागतः । 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक् ॥ **षष्ठी ।२।२।८** ॥ राज्ञः पुरुषो राजपुरुषः ॥ **याजकादिभिश्च ।२। २ । ९** ॥ एभिः षष्ठ्यन्तं समस्यते ॥ 'तृजकाभ्यां कर्तरि' इत्यस्य प्रतिप्रसवोऽयम् । ब्राह्मणयाजकः । देवपूजकः ॥ **गुणात्तरेण तरलोपश्चेति वक्तव्यम्** * ॥ तरबन्तं यद् गुणवाचि तेन सह समासस्तरप्प्रत्ययलोपश्च ॥ 'न निर्धारणे' इति 'पूरणगुण' इति च निषेधस्य प्रतिप्रसवोऽयम् । सर्वेषां श्वेततरः सर्वश्वेतः ॥ सर्वेषां महत्तरः सर्वमहान् ॥ **कृद्योगा च षष्ठी समस्यत इति वाच्यम्** * ॥ इध्मस्य व्रश्चनः इध्मव्रश्चनः ॥ **न निर्धारणे । २ । २ । १०** ॥ निर्धारणे या षष्ठी सा न समस्यते ॥ नृणां द्विजः श्रेष्ठः ॥

---

१ दध्योदनयोर्द्वयोरपि कारकत्वात्परस्परमसामर्थ्यानुपपत्तिवारणायाह–**इहान्तर्भूतोपसेकेति** ॥ २ गुडधानयोरपि सामर्थ्यमुपपादयति–**मिश्रणेति** ॥ ३ तदर्थशब्देन किं प्रकृतिविकृतिभाव एव गृह्यते तदुपकारकोऽपीत्यत्र विनिगमकमाह–**तदर्थेनेति** ॥ ४ उपकार्योपकारकभावस्याग्रहणे अश्वघासादीनां कथं सिद्धिरत आह–**अश्वघासादय इति** ॥ ५ '**भयनिर्गतजुगुप्सुभिः**' इति वार्तिकान्तरम् ॥ ६ **अल्पश इति** । मङ्गलामङ्गलसंबन्धाभावेऽप्यत एव निर्देशाच्छस् ॥ तथा च अल्पं यथाप्रयोगं कतिपयमेव पञ्चम्यन्तं समस्यते, न सर्वम् इति भावः ॥ ७ **राजपुरुष इति** ॥ 'राजन्' इत्यस्य प्रत्ययलक्षणेन ङसूरूपसुबन्तत्वेन पदत्वान्नकारलोप इति भावः ॥ ८ याजक, पूजक, परिचारक, परिषेचक , परिवेषक, स्नापक, अध्यापक, उत्सादक, उद्वर्तक, होतृ , भर्तृ, रथगणक, पत्तिगणक, इति याजकादिः । ९ बाधकबाधनेन प्राग्विहितविधानं **प्रतिप्रसवः** ॥ १० **गुणात्तरेणेति** । 'सर्वे गुणकार्त्स्न्ये' इति सूत्रे वार्तिकमिदं पठितमिति सर्वशब्दमात्रविषयकत्वेन 'गुणवाचकाद् विहितो यस्तरप् तदन्तेन षष्ठ्यन्तसर्वशब्दः समस्यते ।' 'तरपो लोपश्च' इति वार्तिकार्थं ध्वनयन्नाह–तरबन्तमिति ॥ ११ **कृद्योगा चेति** । **'प्रतिपदविधाना च षष्ठी न समस्यते*' इति वक्ष्यति तस्यायं पुरस्तादपकर्षः** ' इति भाष्यकृत्॥ १२ **निर्धारण इति** ॥ '**यतश्च निर्धारणम्**' इति सूत्रेण विहिता या षष्ठीत्यर्थः ॥

**प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम्** * ॥ सर्पिषो ज्ञानम् ॥ **पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ।२। २ । ११ ॥** पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते ॥ पूरणे—सतां षष्ठः ॥ गुणे—काकस्य कार्ष्ण्यम् ॥ [ ब्राह्मणस्य शुक्लाः । यदा प्रकरणादिना दन्ता इति विशेष्यं ज्ञातं तदेदमुदाहरणम् ॥ ] अनित्योऽयं गुणेन निषेधः । 'तदशिष्यं संज्ञाप्रमाणत्वात्' इत्यादिनिर्देशात् । तेनार्थगौरवं बुद्धिमान्द्यमित्यादि सिद्धम् ॥ सुहितार्थास्तृप्त्यर्थाः—फलानां सुहितः । तृतीयासमासस्तु स्यादेव । स्वरे विशेषः ॥ सत्—द्विजस्य कुर्वन् कुर्वाणो वा । किंकर इत्यर्थः ॥ अव्ययम्—ब्राह्मणस्य कृत्वा । पूर्वोत्तरसाहचर्यात्कृदव्ययमेव गृह्यते । तेन तदुपरीत्यादि सिद्धमिति रक्षितः ॥ तव्यः—ब्राह्मणस्य कर्तव्यम् । तव्यता तु भवत्येव । स्वकर्तव्यम् । स्वरे भेदः ॥ मानाधिकरणेन—तक्षकस्य सर्पस्य । विशेषणसमासस्त्विह बहुलग्रहणान्न । गोर्धेनोरित्यादिषु पोटायुवतीत्यादीनां विभक्त्यन्तरे चरितार्थानां परत्वाद्बाधकः षष्ठीसमासः प्राप्तः, सोऽप्यनेन वार्यते ॥ **क्तेन च पूजायाम् ।२। २।१२॥** मतिबुद्धीति सूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते ॥ राज्ञां मतो बुद्धः पूजितो वा। राजपूजित इत्यादौ तु भूते क्तान्तेन सह तृतीयासमासः ॥ **अधिकरणवाचिना च । २ ।२। १३ ॥** क्तेन षष्ठी न समस्यते ॥ इदमेषामासितं गतं भुक्तं वा ॥ **कर्मणि च ।२। २ । १४ ॥** उभयप्राप्तौ कर्मणीति या षष्ठी सा न समस्यते ॥ आश्चर्यो गवां दोहोऽगोपेन ॥ **तृजकाभ्यां कर्तरि ।२।२।१५॥** कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः ॥ अपां स्रष्टा । वज्रस्य भर्ता ।

---

१ प्रतिपदेति ॥ '**सर्वा षष्ठी प्रतिपदविधाना शेषलक्षणां वर्जयित्वा । 'कर्तृकर्मणोः कृति' इति तु या षष्ठी सा कृद्योगा**' इति भाष्योक्तलक्षणे 'शेषमात्रलक्षणां 'षष्ठी शेषे' इति विहिताम्' इत्येवार्थः ॥ धातुकारकविशेषयोः साक्षाद् उपादानेन 'ज्ञोऽविदर्थस्य करणे' इति प्रकरणविहितेत्यर्थः ॥ २ '**योऽसौ पूरणान्तात् स्वार्थे भागेऽन् सोऽपि पूरणमेव**' इति 'द्वितीयतृतीय' इति सूत्रे भाष्यम् ॥ '**पादपूरणम्**' इति निर्देशेन पूरणार्थेन समासनिषेधस्यानित्यत्वज्ञापनात् 'कुम्भपूरणभवः' इति • 'तान्युञ्छषष्ठाङ्कित' इति च सिद्ध्यत्येवेति बोध्यम् ॥ ३ गुणार्थशब्देन केवलगुणवाची सन् यो गुणोपसर्जनद्रव्यवाची स शुक्लादिः, गुणिबोधकप्रकृतिकभावप्रत्ययान्तश्च गृह्यते इत्यभिप्रेत्योदाहरति—**काकस्येत्यादि** ॥ '**एतदेव खल्वपि तस्मिन्योग उदाहरणम्**' इति 'षष्ठी' इति सूत्रे भाष्ये '**एतदेव**' इत्यवधारणादिदमेवं मुख्यमुदाहरणम् ॥ ४ '**भवति व कस्यचिदर्थात्प्रकरणाद्वा ज्ञातं तदा वृत्तिः प्राप्नोति**' इत्येकदेशिनः प्रौढिभाष्यमेवात्र मानम् ॥ ५ **स्वरे विशेष इति** ॥ 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरे सत्याद्युदात्त इष्टः । षष्ठीसमासे त्वन्तोदात्तः स्यादिति भावः ॥ ६ **स्वरे भेद इति** । 'गतिकारकोपपदात् कृत्' इति कृदुत्तरपदप्रकृतिस्वरेण तित्स्वरस्यैवावस्थानाद् अन्तस्वरित इष्टः । तव्येन समासे तु तस्य 'आद्युदात्तश्च' इत्याद्युदात्तत्वात् कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदस्य मध्योदात्तत्वं स्यादिति भावः ॥ ७ 'पूजायाम्' इति पूजापदघटितसूत्रोपलक्षणमित्यभिप्रेत्याह—**मतिबुद्धीति** ॥ ८ **कर्मणि च** ॥ अत्र चकार इत्यर्थः सन् सूत्रघटकपदानुकरणत्वं बोधयन् 'उभयप्राप्तौ कर्मणि' इति तत्पदघटितं सूत्रं स्मारयतीति मनसि निधाय—'**उभयप्राप्तौ कर्मणीति विहितेति**' अत एव 'शब्दानुशासन' पदे आचार्यस्य कर्तुरुपादानाभावेन 'उभयप्राप्तौ—' इति नियमस्याप्रवृत्त्या 'कर्तृकर्मणोः कृति' इत्यनेनैव कर्मणि षष्ठ्या अपि नानेन समासनिषेध इति भावः ॥

पत्यर्थभर्तृशब्दस्य तु याजकादित्वात्समासः—भूभर्ता । कथं तर्हि 'घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः' इति । शेषषष्ठ्या समास इति कैयटः[1] ॥ ओदनस्य पाचकः ॥ कर्तरि किम् ? इक्षूणां भक्षणमिक्षुभक्षिका[2] ॥ **कर्तरि च** । २ । २ । १६ ॥ कर्तरि षष्ठ्या अकेन न समासः ॥ भवतः शायिका[3] । नेह—तृजनुवर्तते । तद्योगे कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावात् ॥ **नित्यं क्रीडाजीविकयोः** । २ । २ । १७ ॥ एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते ॥ उद्दालकपुष्पभञ्जिका । क्रीडाविशेषस्य संज्ञा । संज्ञायामिति भावे ण्वुल् । जीविकायाम्—दन्तलेखकः । तत्र क्रीडायां विकल्पे, जीविकायां तृजकाभ्यां कर्तरीति निषेधे प्राप्ते, वचनम् ॥ **पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे** । २ । २ । १ ॥ अवयविना[4] सह पूर्वादयः समस्यन्ते, एकत्वसंख्याविशिष्टश्चेदवयवी ॥ षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः ॥ एकदेशिना किम् ? पूर्वं नाभेः[5] कायस्य ॥ एकाधिकरणे किम् ? पूर्वश्छात्राणाम् ॥ सर्वोऽप्येकदेशोऽह्ना समस्यते । संख्याविसायेति ज्ञापकात्[6] । मध्याह्नः । सायाह्नः ॥ केचित्तु सर्वोऽप्येकदेशः कालेन[7] समस्यते न त्वह्नैव । ज्ञापकस्य सामान्यापेक्षत्वात् । तेन मध्यरात्रः 'उपारताः पश्चिमरात्रगोचरा' इत्यादि सिद्धमित्याहुः ॥ **अर्धं नपुंसकम्** । २ । २ । २ ॥ समांशवाच्यर्धशब्दो नित्यं क्लीबे, स प्राग्वत् ॥ **एकविभक्तावषष्ठ्यन्तवचनम्** * ॥ एकदेशिसमासविषयकोऽयमुपसर्जनसंज्ञानिषेधः । तेन पञ्चखट्वी इत्यादि सिध्यति । अर्धं पिप्पल्याः अर्धपिप्पली[8] । क्लीबे किम् ? ग्रामार्धः ॥ द्रव्यैक्य[9] एव । अर्धं पिप्पलीनाम् ॥ **द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्** । २ । २ । ३ ॥ एतान्येकदेशिना सह प्राग्वद्वा ॥ द्वितीयं भिक्षाया द्वितीयभिक्षा ॥ एकदेशिना किम् ? द्वितीयं भिक्षाया भिक्षुकस्य[10] ।

---

१ **कैयट इति** । 'जनिकर्तुः' 'तत्प्रयोजकः' इति निर्देशाभ्यामस्य निषेधस्यानित्यत्वज्ञापनादित्यन्ये ॥ २ **इक्षुभक्षिकेति** । 'पर्यायार्हर्णोत्पत्तिषु' इति भावे ण्वुच् ॥ ३ **शायिकेति** । 'पर्यायार्हर्णोत्पत्तिषु' इति भावे ण्वुच् ॥ ४ एकदेशावयवशब्दौ पर्यायभूतावेवेत्याह—**अवयविनेति** । अधिकरणशब्दस्य द्रव्यवाचित्वाद् 'एकद्रव्ये' इत्यस्य 'एकत्वसंख्यायुते द्रव्ये अवयविनि' इत्यर्थफलितमाह-**एकत्वसंख्येति** ॥ ५ **पूर्वं नाभेरिति** नाभेरिति दिग्योगलक्षणा पञ्चमीति नाभिः पूर्वत्वस्यावधिरेव नावयविनीति नाभिशब्देन पूर्वशब्दस्य समासो न भवति । कायशब्देन तु भवत्येव नाभेः पूर्वकायः इतीति भावः ॥ ६ सायमध्यशब्दयोः सूत्रेऽनुपादानात् कथं 'मध्याह्नः सायाह्नः' इति प्रयोग इत्यत आह—**सर्वोऽप्येकदेश इति** । सायशब्दस्य समासविधेरनुपलम्भात्सायपूर्वस्याह्नशब्दस्यासंभवाद् व्यर्थं सद् सायग्रहणं सर्वस्यैकदेशस्याह्ना समासज्ञापकं भवतीति भावः ॥ ७ एवमपि मध्यरात्रशब्दस्यासिद्धिरत आह—**कालेनेति** ॥ अह्नशब्देनाहन्शब्दविषयकज्ञापने विशेषपरतायां मध्यरात्रादिशब्दानामनेकाप्तप्रयुक्तानामसाधुतापत्तिः स्याद्, अतः सामान्यापेक्षज्ञापकतैव स्वीकार्येति सकलेष्टसिद्धिरिति भावः ॥ ८ अर्धपिप्पलीत्यत्र पिप्पलीशब्दस्य विग्रहे नियतविभक्तित्वाद् उपसर्जनत्वेन 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वापत्तिं वारयितुम् उपसर्जनसंज्ञायाः प्रतिषेधवार्तिकमाह—**एकविभक्ताविति** । विग्रहे षष्ठ्या नियतत्वेऽपि तदन्तस्य नोपसर्जनसंज्ञेति न पिप्पलीशब्दस्य ह्रस्वापत्तिरिति भावः ॥ ९ षष्ठ्यन्तस्योपसर्जनसंज्ञाविरहे "**वाचनतः**" इति वार्तिकोदाहरणत्वेन भाष्यकृता प्रयुक्ते 'पञ्चखट्वी' इत्यत्र 'पञ्चानां खट्वानां समाहारः' इति विग्रहे खट्वाशब्दस्य नियतषष्ठ्यन्तत्वाद् उपसर्जनत्वमिष्टं न सिध्यति । तथा चोपसर्जनह्रस्वाभावेऽत्वाभावाद् 'द्विगोः' इति ङीबनुपपत्तिः स्यात् अत आह—**एकदेशिसमासेति** ॥ १० 'एकाधिकरणे' इत्यनुवृत्तेरिति भावः ॥

अन्यतरस्यांग्रहणसामर्थ्यात्पूरणगुणेति निषेधं बाधित्वा पक्षे षष्ठीसमासः—भिक्षाद्वितीयम् ॥ **प्राप्तापन्ने च द्वितीयया । २ । २ । ४ ॥** पक्षे द्वितीया श्रितेति समासः । प्राप्तो जीविकां प्राप्तजीविकः । जीविकाप्राप्तः । आपन्नजीविकः । जीविकापन्नः ॥ इह सूत्रे द्वितीयया अ इति छित्त्वा अकारोऽपि विधीयते । तेन जीविकां प्राप्ता स्त्री प्राप्तजीविका । आपन्नजीविका ॥ **कालाः परिमाणिना । २ । २ । ५ ॥** परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते ॥ मासो जातस्य यस्य स मासजातः । द्व्यहजातः । द्वयोरह्नोः समाहारो द्व्यहः । द्व्यहो जातस्य यस्य स इति विग्रहः ॥ **उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम्** * द्वे अहनी जातस्य यस्य स द्व्यह्नजातः । ' अह्नोऽह्न ' इति वक्ष्यमाणोऽह्नादेशः ॥ पूर्वत्र तु 'न संख्यादेः समाहारे' इति निषेधः ॥ **सप्तमी शौण्डैः । २ । १ । ४० ॥** सप्तम्यन्तं शौण्डादिभिः प्राग्वद्वा ॥ अक्षेषु शौण्डः अक्षशौण्डः । अधिशब्दोऽत्र पठ्यते । अध्युत्तरपदादिति खः । ईश्वराधीनः ॥ **सिद्धशुष्कपक्वबन्धैश्च । २ । १ । ४१ ॥** एतैः सप्तम्यन्तं प्राग्वत् ॥ सांकाश्यसिद्धः । आतपशुष्कः । स्थालीपक्वः । चक्रबन्धः ॥ **ध्वाङ्क्षेण क्षेपे । २ । १ । ४२ ॥** ध्वाङ्क्षवाचिना सह सप्तम्यन्तं समस्यते निन्दायाम् ॥ तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः । तीर्थकाकः [ इत्यर्थः ] ॥ **कृत्यैर्ऋणे । २ । १ । ४३ ॥** ऋणग्रहणं नियोगोपलक्षणार्थम् ॥ सप्तम्यन्तं कृत्यप्रत्ययान्तैः सह प्राग्वदावश्यके । मासेदेयमृणम् ॥ पूर्वाह्णेगेयं साम ॥ **संज्ञायाम् । २ । १ । ४४ ॥**

---

१ ' **अन्यतरस्याम्-ग्रहणं किमर्थम्** ' इत्याक्षेपस्य ' **इदं तर्हि प्रयोजनम् एकदेशिसमासेन मुक्ते षष्ठीसमासो यथा स्यात्-भिक्षाद्वितीयमिति** ' ' इति प्रयोजनग्रन्थस्य ' **क्रियमाणेऽपि वै अन्यतरस्यांग्रहणे षष्ठीसमासो न प्राप्नोति ' पूरणेनेति प्रतिषेधात** ' इति बाधके वादिना कथिते ' **एवं तर्ह्यन्यतरस्यांग्रहणसामर्थ्यात्षष्ठीसमासो भविष्यति** ' ' इति सिद्धान्तितं भाष्यकृता ' इति तदेवाह—**अन्यतरस्यामित्यादि** ॥ २ ' **प्राप्तापन्ने द्वितीयान्तेन समस्येते अत्वं च भवति प्राप्तापन्नयोः** ' इति भाष्यदर्शितान्वयेन ' प्राप्तापन्ने अ च द्वितीयया ' इत्येवं क्रमो निश्चीयते प्रगृह्यत्वप्रयुक्तप्रकृतिभावस्य नित्यग्रहणेन प्रायिकत्वबोधनादसार्वत्रिकत्वनिश्चयेन दोषाभावेऽपि नित्यपदस्य सार्वत्रिकार्थत्वेऽपि ' **अनानुपूर्व्येण सन्निविष्टानामपि यथेष्टं संबन्धो भवति** ' इति ' न पदान्त ' सूत्रभाष्ये ' पदानां विप्रकृष्टोच्चारणेऽपि शाब्दबोधीयक्रमेण विप्रकृष्टत्वज्ञाने दोषाभावं सूचयन् भिन्नक्रमसूचकमपि पदविभागमङ्गीकरोति—**इह सूत्रे द्वितीयया अ इतीति** ॥ ३ द्व्यहजात इत्यस्येति बोध्यम् ॥ ४ ' **पूर्वत्र तु** ' द्व्यहजातः ' इत्यत्र तु ॥ ५ शौण्ड, धूर्त, कितव, व्याड, प्रवीण, संवीत, अन्तर, अधि, पटु, पण्डित, कुशल, चपल, निपुण, इति शौण्डादिः ॥ ६ ' बहुवचननिर्देशात् ' ' शौण्डादिभिः ' इति विज्ञास्यते ' इति भाष्यमनुसृत्याह—**शौण्डादिभिरिति** ॥ ७ ' ध्वाङ्क्षेणेत्यर्थग्रहणम् ' इति वार्तिकमनुसृत्याह—**ध्वाङ्क्षवाचिनेति** ॥ ८ ' **इत्यर्थः** ' इति तु केनचिद् विद्वद्वरेण वर्धितम् ' **ध्वाङ्क्षणेत्यर्थग्रहणम्** ' इत्यर्थग्रहणोदाहरणत्वेनैव भाष्यकृता प्रयुक्तत्वात् ॥ यद्वा ' वाचिना ' इत्युक्तेः ' **इत्यर्थः** ' इति प्रयोजनमिति बोधनायैव प्रयुक्तः ॥ ९ ' **कृत्यैर्नियोगे यत् ग्रहणम्** ' इति वार्तिकस्य ऋणग्रहणप्रत्याख्यानाय ' **इह यद् यस्य नियोगतः कार्यम् ऋणं तस्य तद् भवति तत्र ऋण इत्येव सिद्धम्** ' इति भाष्येण ऋणशब्दस्यावश्यकोपलक्षणार्थत्वमित्याह—ऋणग्रहणमिति ॥ १० यत्प्रत्ययनियमस्तु ' पूर्वाह्णे दातव्या भिक्षा ' इत्यत्र समासवारणाय कर्तव्य एवेति भाष्ये स्पष्टमित्युदाहरति—**मासेदेयमिति** ॥

सप्तम्यन्तं सुपा प्राग्वत् संज्ञायाम् ॥ वाक्येन संज्ञानवगमान्नित्यसमासोऽयम् । अरण्येतिलकाः । वनेकसेरुकाः । हलदन्तात्सप्तम्या इत्यलुक् ॥ **क्तेनाहोरात्रावयवाः । २ । १ । ४५ ॥** अहो रात्रेश्चावयवाः सप्तम्यन्ताः क्तान्तेन सह प्राग्वत् ॥ पूर्वाह्णकृतम् । अपररात्रकृतम् । अवयवग्रहणं किम्? अह्नि दृष्टम् ॥ **तत्र । २ । १ । ४६ ॥** तत्रेत्येतत्सप्तम्यन्तं क्तान्तेन सह प्राग्वत् ॥ तत्रभुक्तम् ॥ **क्षेपे ।२।१। ४७ ॥** सप्तम्यन्तं क्तान्तेन प्राग्वन्निन्दायाम् ॥ अवतप्तेनकुलस्थितं त एतत्[1] । **पात्रेसमितादयश्च । २ । १ । ४८ ॥** एते निपात्यन्ते क्षेपे ॥ पात्रेसमिताः । भोजनसमये एव संगताः नतु कार्ये । गेहेशूरः । गेहेनर्दी । आकृतिगणोऽयम् ॥ चकारोऽवधारणार्थः । तेनैषां समासान्तरे घटकतया प्रवेशो न–परमाः पात्रेसमिताः ॥ **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन । २। २ ।४९॥** 'विशेषणं विशेष्येणेति सिद्धे पूर्वनिपातनियमार्थं सूत्रम् । एकशब्दस्य 'दिक्संख्ये संज्ञायाम्' इति नियमबाधनार्थं च । पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः । एकनाथः । सर्वयाज्ञिकाः । जरन्नैयायिकाः । पुराणमीमांसकाः । नवपाठकाः । केवलवैयाकरणाः ॥ **दिक्संख्ये संज्ञायाम् । २ ।१।५० ॥** समानाधिकरणेनेत्यापादपरिसमाप्तेरधिकारः । संज्ञायामेवेति नियमार्थं सूत्रम् । पूर्वेषुकामशमी । सप्तर्षयः ॥ नेह–उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ॥ **तद्धितार्थोत्तरपदसमाहारे च।२।१।५१ ॥** तद्धितार्थे विषये, उत्तरपदे च परतः, समाहारे च वाच्ये दिक्संख्ये प्राग्वद्वा ॥ पूर्वस्यां शालायां भवः । समासे कृते 'दिक्पूर्वपदादसंज्ञायां ञः' इतिञः **सर्वनाम्नो[6] वृत्तिमात्रे पुंवद्भावः** * ॥ पौर्वशालः । आपरशालः ॥ पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ कृते प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः । तेन शालाशब्दे आकार उदात्तः । पूर्वशालाप्रियः ॥ दिक्षु समाहारो नास्त्यनभिधानात् ॥ संख्यायास्तद्धितार्थे–षण्णां मातॄणामपत्यं षाण्मातुरः ॥ पञ्च गावो धनं यस्येति

---

१ 'यथा अवतप्ते नकुला न चिरं स्थातारो भवन्ति एवं कार्याण्यारभ्य यो न चिर तिष्ठति स उच्यते–'अवतप्तेनकुलस्थितं त एतद्' इति' इति प्रकृतसूत्रे भाष्यम् ॥ २ पात्रेसमिताः, पात्रेबहुलाः, उदुम्बरकृमिः, कूपकच्छपः, अवटकच्छपः, उदुम्बरमशकः, कूपमण्डूकः, कुम्भमण्डूकः, उदपानमण्डूकः, नगरकाकः, नगरवायसः, मातरिपुरुषः, पिण्डीशूरः, पितरिशूरः, गेहेशूरः, गेहेनर्दी, गेहेविजिती, गेहेव्याडः, गेहेमेही, गेहेदाही, गेहेदृप्तः, गेहेधृष्टः, गर्भेतृप्तः, आखनिकबकः, गोष्ठेशूरः, गोष्ठेविजिती, गोष्ठेक्ष्वेडी, गोष्ठेपटुः, गोष्ठेपण्डितः, गोष्ठेप्रगल्भः, कर्णेटिरिटिरा, कर्णेचुरुचुरा । इति पात्रेसमितादिराकृतिगणः ॥ ३ पूर्वकालवृत्तिः नियतापेक्षत्वात् परकालवृत्तिना समस्यते इति सूत्रार्थः ॥ तथा चानुलेपापेक्षया स्नानस्य पूर्वकालवृत्तित्वात्स्नानशब्दः प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् पूर्वं निपततीति भावः ॥ ४ 'पूर्वेषुकामशमी' इति कस्याश्चित् पुर्या नाम । एवं 'सप्तर्षि' इत्यपि 'मरीच्यत्रिवसिष्ठादिसप्तर्षिगणे रूढम् । तथैव नवग्रहा इत्यपि ॥ ५ 'उत्तरवृक्ष' 'पञ्चब्राह्मण' पदयोः कुत्रापि रूढ्यभावात्संज्ञात्वं न ॥ ६ 'दिङ्नामान्यन्तराले' 'दक्षिणोत्तराभ्यामतसुच्' इति सूत्रयोर्भाष्यकृता पठितेष्टिरियम् ॥ अत्र विशेषस्तु बहुव्रीहौ वक्ष्यते ॥ ७ पूर्वशालेति समासस्य संज्ञात्वेऽपि तद्धितान्तपौर्वशालस्य न संज्ञात्वमिति भावः ॥ ८ पूर्वयोः पूर्वाशब्दशालाशब्दयोः ॥ ९ **आकार उदात्त इति** ॥ 'पूर्वशाला' इत्यस्य तत्पुरुषत्वे 'समासस्य' इत्यन्तोदात्तत्वं भवति । अन्यथा बहुव्रीहिप्रयुक्तपूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वं स्यादिति भावः ॥

त्रिपदे बहुव्रीहाववान्तरतत्पुरुषस्य विकल्पे प्राप्ते ॥ **द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्** * ॥ **गोरतद्धितलुकि** ।५।४।९२॥ गोन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तद्धितलुकि । पञ्चगवधनः ॥ **संख्यापूर्वो द्विगुः** ।२।१।५२॥ तद्धितार्थेत्यत्रोक्तः संख्यापूर्वो द्विगुः स्यात् ॥ **द्विगुरेकवचनम्** ।२।४।१॥ द्विग्वर्थः समाहार एकवत्स्यात् ॥ स नपुंसकमिति नपुंसकत्वम् । पञ्चानां गवां समाहारः पञ्चगवम् ॥ **कुत्सितानि कुत्सनैः** ।२।१।५३॥ कुत्स्यमानानि कुत्सनैः सह प्राग्वत् ॥ वैयाकरणखसूचिः । मीमांसकदुर्दुरूढः ॥ **पापाणके कुत्सितैः** ।२।१।५४॥ पूर्वसूत्रापवादः । पापनापितः। अणककुलालः ॥ **उपमानानि सामान्यवचनैः** ।२।१।५५॥ घन इव श्यामो घनश्यामः । इहपूर्वपदं तत्सदृशे लाक्षणिकमिति सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते । पूर्वनिपातनियमार्थं सूत्रम् ॥ **उपमितं व्याघ्रादिभिः सामान्याप्रयोगे** ।२।१।५६॥ उपमेयं व्याघ्रादिभिः सह प्राग्वत्साधारणधर्मस्याप्रयोगे सति । विशेष्यस्य पूर्वनिपातार्थं सूत्रम् । पुरुषव्याघ्रः । नृसोमः । व्याघ्रादिराकृतिगणः ॥ सामान्याप्रयोगे किम् ? पुरुषो व्याघ्र इव शूरः॥ **विशेषणं विशेष्येण बहुलम्** ।२।१।५७॥ भेदकं समानाधिकरणेन भेद्येन बहुलं प्राग्वत् ॥ नीलमुत्पलं नीलोत्पलम् ॥ बहुलग्रहणात्क्वचिन्नित्यम्—कृष्णसर्पः ॥ क्वचिन्न—रामो जामदग्न्यः ॥ **पूर्वापरप्रथमचरमजघन्यसमानमध्यममध्यमवीराश्च** ।२।१।५८॥ पूर्वनिपातनियमार्थमिदम् ॥ पूर्ववैयाकरणः । अपराध्यापकः ॥ **अपरस्यार्धे पश्चभावो वक्तव्यः** * ॥ अपरश्चासावर्धश्च पश्चार्धः ॥ कथमेकवीर इति । 'पूर्वकालैकेति

---

१ **विकल्पे प्राप्ते इति** । 'विभाषा' इत्यधिकारेणेति भावः ॥ २ **नित्यसमासेति** । समुदायवृत्तावयवानां मा कदाचिद् वृत्तिर्भूत्' इति वार्तिकस्यास्य प्रयोजनं भाष्यकृतोक्तम् ॥ ३ 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायमनुसृत्याह—**तद्धितार्थेत्यादि** ॥ तेन 'दिक्संख्ये संज्ञायाम्' इत्येतत्समासविषये 'सप्तर्षि' शब्दे द्विगुत्वाभावाद् 'इगन्तकालकपालभगालशरावेषु द्विगौ' इति स्वरो न भवतीति भावः ॥ ४ '**समाहारग्रहणं च तद्धितार्थप्रतिषेधार्थम्**' इति वार्तिकमनुसृत्याह—**समाहार इति** ॥ ५ पूर्वसूत्रे 'कुत्सितानि' इति प्रथमानिर्दिष्टत्वात् कुत्सितानां नापितादीनां पूर्वनिपाते 'पापनापितः' इत्यभीष्टरूपानुपपत्तिः स्यादिति भावः ॥ ६ येन वस्त्वन्तरं स्ववृत्तिधर्मवत्त्वेन परिच्छिद्यते तद् **उपमानम्** । यथा मुखम् स्वनिष्ठाह्लादकत्वादिधर्मवत्त्वेन चन्द्रेण परिच्छिद्यत इति चन्द्र उपमानम् । यद् अन्यनिष्ठधर्मवत्त्वेन परिच्छिद्यते तद् **उपमेयम्** । यथा मुखम् । उपमानोपमेयसाधारणधर्मविशिष्टोपमेयवचनत्वं **सामान्यवचनत्वम्** । यथा आह्लादकत्वादि ॥ ७ घन उपमानम् । श्रीकृष्ण उपमेयः । श्यामत्वस्योभयसाधारणधर्मत्वात्सामान्यवचनत्वम् ॥ ८ **लाक्षणिकमिति** ॥ अत एव एकार्थवाचकत्वरूपसामानाधिकरण्यस्योपपत्त्या 'समानाधिकरणेन' इत्यधिकारस्य न बाधः । अन्यथा 'मृगीव चपला मृगचपला' इत्यादौ मृगीपदार्थचपलापदार्थयोर्भेदे सामानाधिकरण्यानुपपत्त्या पुंवद्भावो न स्यादिति भावः ॥ ९ **पूर्वनिपातेति** ॥ घनपदसदृशपरत्वे श्यामशब्दस्य श्यामवर्णवत्परत्वे विशेषणमिति समासे खञ्जकुब्जादिवत् पूर्वनिपाते विनिगमनाविरहेण पूर्वनिपातानियमे प्राप्ते पूर्वनिपातनियमार्थं सूत्रमिति 'उपमानानि' इति प्रथमानिर्देशेनोपमानवाचकानामेव पूर्वनिपातनिर्णय इति भावः ॥ १० व्याघ्र, सिंह, ऋक्ष, ऋषभ, चन्दन, वृक, वृष, वराह, हस्तिन्, तरु, पृषत्, पुण्डरीक, पलाश, कितव । इति व्याघ्रादिराकृतिगणः । तेन नृसोमः, मुखपद्मम्, मुखकमलम्, करकिसलयम्, पार्थिवचन्द्र इत्यादि सिद्धम् ॥ ११ एतत्सूत्राभावे उपमेयस्य विशेष्यत्वाद् व्याघ्रादेः सदृशलाक्षणिकस्य विशेषणत्वाद् विशेषणस्यैव पूर्वनिपातापत्तिः स्यादत उपमेयस्य पूर्वनिपातनियमार्थमिदं सूत्रमिति भावः ॥

बाधित्वा परत्वादनेन समासे वीरैक इति हि स्यात्। बहुलग्रहणान्न भविष्यति।। **श्रेण्यादयः कृतादिभिः । २ । १ । ५९ ॥ श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम्** * ॥ अश्रेणयः श्रेणयः कृताः श्रेणिकृताः॥ **क्तेन नञ्विशिष्टेनानञ् । २ । १ । ६० ॥** नञ्विशिष्टेन क्तान्तेनानञ् क्तान्तं समस्यते॥ कृतं च तदकृतं च कृताकृतम् ॥ **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्** * ॥ शाकप्रियः पार्थिवः शाकपार्थिवः। देवब्राह्मणः॥ **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः । २ । १ । ६१ ॥** सद्वैद्यः ॥ वक्ष्यमाणेन महत आकारः । महावैयाकरणः ॥ पूज्यमानैः किम् ? उत्कृष्टो गौः । पङ्कादुद्धृत इत्यर्थः ॥ **वृन्दारकनागकुञ्जरैः पूज्यमानम् । २ । १ । ६२ ॥** गोवृन्दाकः॥ ॥ व्याघ्रादेराकृतिगणत्वादेव सिद्धे सामान्यप्रयोगार्थं वचनम् ॥ **कतरकतमौ जातिपरिप्रश्ने । २ । १ । ६३ ॥** कतरकठः । कतमकलापः । 'गोत्रं च चरणैः सहेति जातित्वम् ॥ **किं क्षेपे । २ । १ । ६४ ॥** कुत्सितो राजा किंराजा' यो न रक्षति ॥ **पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः । २ । १ । ६५ ॥ तत्पुरुषः समानाधिकरणः कर्मधारयः । १ । २ । ४२ ॥ पुंवत्कर्मधारयजातीयदेशीयेषु । ६ । ३ । ४२ ॥** कर्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कात्पर ऊङभावो यस्मिंस्तथाभूतं पूर्वं पुंवत् ॥ पूरणीप्रियादिष्वप्राप्तः पुंवद्भावोऽनेन विधीयते । महानवमी । कृष्णचतुर्दशी । महाप्रिया ॥ तथा कोपधादेः प्रतिषिद्धः पुंवद्भावः कर्मधारयादौ प्रतिप्रसूयते । पाचकस्त्री । दत्तभार्या । पञ्चमभार्या । स्रौघ्नभार्या । सुकेशभार्या । ब्राह्मणभार्या । एवं पाचकजातीया। पाचकदेशीयेत्यादि॥ इभपोटा। '**पोटा** स्त्रीपुंसलक्षणा ' ॥ इभयुवतिः । अग्निस्तोकः । उदश्वित्कतिपयम् । '**गृष्टिः** सकृत्प्रसूता ' गोगृष्टिः । '**धेनु**र्नवप्रसूतिका' गोधेनुः । '**वशा** वन्ध्या' गोवशा । '**वेहत्** गर्भघातिनी ' गोवेहत् । '**बष्कयणी** तरुणवत्सा ' गोबष्कयणी । कठप्रवक्ता । कठश्रोत्रियः ।

---

१ श्रेणि, एक, पूग, मुकुन्द, राशि, विषय, निचय, निधन, पर, इन्द्र, देव, मुण्ड, भूत, श्रवण, वदान्य, अध्यापक, अभिरूपक, ब्राह्मण, क्षत्रिय, पटु, पण्डित, कुशल, चपल, निपुण, कृपण । इति श्रेण्यादयः ॥ २ कृत, मित, भूत, मत, उक्त, समाज्ञात, समाम्नात, समाख्यात, संभावित, अवधारित, निराकृत, अवकल्पित, उपकृत, । उपाकृत । इति कृतादिराकृतिगणः । तेन दृष्ट, कलित, दलित, उदाहृत, विश्रुत, उदित एते ज्ञेयाः ॥ ३ अनेकशिल्पपण्यजीविन एकशिल्पपण्यजीविनः कृता इत्युदाहरणार्थः । असमूहरूपाः समूहरूपाः कृता इति वा ॥ ४ एकदेशकरणात् 'कृतम्' इत्युच्यते एकदेशान्तरस्याकरणाद् 'अकृतम्' इत्युच्यते ॥। '**गतप्रत्यागतादीनां चोपसंख्यानम्**' ॥ ५ शाकपार्थिव, कुतपसौश्रुत, अजातौल्वलि, आकृतिगणोऽयम् । तेन कृतापकृत , भुक्तविभुक्त, पीतविपीत, गतप्रत्यागत, यातानुयात , क्रयाक्रयिक, पुटापुटिका, फलाफलिका, मानोन्मानिका, इत्यादि ज्ञेयम् ॥ ६ 'शाकप्रियपार्थिवः' इत्यादिप्रयोगव्यावृत्त्यर्थं वार्तिकम् ॥ ७ देवपूजको ब्राह्मण इत्यर्थः ॥ ८ 'आन्महतः' इत्यनेनेति भावः ॥ ९ महापापमित्यत्र पापे आधिक्येनैव प्रशंसेति भावः १० **सामान्येति** । गोकुञ्जरः स्थूल इत्यादाविति भावः ॥ ११ 'द्वयोरेकस्य' 'वा बहूनाम्' इति सूत्रयोरुपाधिप्रत्याख्यानात् 'कतमो भवतां पण्डितः' इत्यादौ समासाभावाय-'जातिपरिप्रश्ने' इति-इति शेखरकृत् ॥ 'किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम्' इति वार्तिकव्याख्याभाष्ये 'द्वयोः' 'बहूनाम्' इत्यनयोरेव प्रत्याख्यानस्य 'निर्धारणे' जातिपरिप्रश्ने' इत्यनयोर्यथाश्रुतस्थितत्वमेव प्रतीयत इति अत्र जातिपरिप्रश्नग्रहणस्य कतरविषय आवश्यकत्वमेवेति दाधिमथाः ॥

कठाध्यापकः । कठधूर्तः[1] ॥ [2]**प्रशंसावचनैश्च** ।२।१।६६॥ एतैः सह जातिः प्राग्वत् ॥ गोमतल्लिका ॥ गोमचर्चिका । गोप्रकाण्डम् । गवोद्धः । गोतल्लजः । प्रशस्ता गौरित्यर्थः । मतल्लिकादयो नियतलिङ्गा, न तु विशेष्यनिघ्नाः ॥ जातिः किम् ? कुमारी मतल्लिका ॥ **युवा खलतिपलितवलिनजरतीभिः** ।२।१।६७॥ पूर्वनिपातनियमाय सूत्रम् । लिङ्ग[3]विशिष्टपरिभाषया युवतिशब्दोऽपि समस्यते । युवा खलतिः युवखलतिः । युवतिः खलती युवखलती । युवजरती । [4]युवत्यामेव जरतीधर्मोपलम्भेन तद्रूपारोपात्सामानाधिकरण्यम् ॥ **कृत्यतुल्याख्या अजात्या** ।२।१।६८॥ भोज्योष्णम् । तुल्यश्वेतः । सदृशश्वेतः ॥ अजात्या किम् ? भोज्य ओदनः । प्रतिषेधसामर्थ्याद्विशेषणसमासोऽपि न ॥ **वर्णो वर्णेन** ।२।१।६९॥ समानाधिकरणेन सह प्राग्वत् । [5]कृष्णसारङ्गः ॥ [6]**कडाराः कर्मधारये** ।२।१।३८॥ कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः । कडारजैमिनिः । जैमिनिकडारः ॥ **कुमारः श्रमणादिभिः**[7] ।२।१।७०॥ कुमारी श्रमणा कुमारश्रमण ॥ इह गणे श्रमणा प्रव्रजिता गर्भिणीत्यादयः स्त्रीलिङ्गाः पठ्यन्ते । लिंगविशिष्टपरिभाषाया एतदेव[8] ज्ञापकं बोध्यम् ॥ **चतुष्पादो गर्भिण्या** ।२।१।७१॥ चतुष्पा[9]ज्जातिवाचिनो गर्भिणीशब्देन सह प्राग्वत् ॥ गोगर्भिणी ॥ [10]**मयूरव्यंसकादयश्च**

---

१ धूर्तग्रहणमकुत्सार्थम् । कुत्सायां तु 'कुत्सितानि कुत्सनैः' इत्येव सिद्धम् ॥ २ 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ। प्रशस्तवाचकान्यमूनि' इत्यमरः ॥ 'मतल्लिकोद्धमिश्राः स्युः प्रकाण्ड–स्थलभित्तयः। हस्तपाश,-तटाः पादः पालीमचर्चिकादयः ॥' इत्येवं गणरत्नमहोदधौ प्रशंसावाचिनो दर्शिताः ॥ ३ 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषायां च 'जरती' इति स्त्रीलिङ्गसमानाधिकरणत्वविवक्षया युवशब्दस्य समासविधानमपि ज्ञापकमिति बोध्यम् ॥ ४ जरत्यां युवतीधर्मारोपे तु युवतीशब्दस्य विशेषणत्वेन 'विशेषणं विशेष्येण' इति समासः सिद्ध एवेति जरतीग्रहणं व्यर्थमेव स्यादिति शेखरकृत् ॥ ५ सारङ्गश्चित्रो वर्णः । कृष्णशब्दः कृष्णावयवके लाक्षणिक इति सामानाधिकरण्यम् ॥ ६ कडार, गडुल, खञ्ज, खाड, काण, कुण्ठ, खलति, गौर, वृक्ष, भिक्षुक, पिङ्ग, पिङ्गल, तनु, जठर, बधिर, मठर, कुब्ज, बर्बर इति कडारादिः । क्वचित्तु । नौ, काक, अभ्र, शुक, शृगाल, प्रकृति, प्राय, गोत्र, सम, विषम, द्विद्रोण, पञ्चक, साहस्र, प्रति, परि, अनु । एतेऽपि दृश्यन्ते ॥ ७ श्रमणा, प्रव्रजिता, कुलटा, गर्भिणी, तापसी दासी, बन्धकी अध्यापक, अभिरूपक, पण्डित, पटु, मृदु, कुशल, चपल, निपुण इति श्रमणादिः ॥ ८ एवकारोऽप्यर्थे । 'युवा खलति' इत्यत्र जरतीग्रहणस्यापि ज्ञापकत्वसंभवात् ॥ समानाधिकरणाधिकारे विहितः समासः कुमारशब्देन पुंल्लिङ्गेन स्त्रीलिङ्गानां श्रमणादीनाम् अप्राप्तत्वाद् व्यर्थः सन्नेतत्परिभाषाज्ञापक इति भावः ॥ ९ चतुष्पाज्जातिरिति वक्तव्यम् ॥ * ॥ नेह । स्वस्तिमती गर्भिणी ॥ १० मयूरव्यंसक, छात्रव्यंसक, कम्बोजमुण्ड । यवनमुण्ड । छन्दसि । हस्तेगृह्य, पादेगृह्य, लाङ्गूलेगृह्य, पुनर्दाय, '**एहीडाद, योऽन्यपदार्थे**' एहीडम्, एहिपचम्, एहिवाणिजा । क्रिया । अपेहिवाणिजा, प्रेहिवाणिजा एहिस्वागता-अपेहिस्वागता, एहिद्वितीया, अपेहिद्वितीया, प्रेहिद्वितीया, एहिकटा, अपेहिकटा, प्रेहिकटा, आहरकरटा, प्रेहिकरटा, प्रेहिकर्दमा, प्रोहिकर्दमा, विधमचूडा, उद्धमचूडा, आहरचेला, आहरवनिता, आहरवसना, कृन्तविचक्षणा, उद्धरोत्सृजा, उद्धरावसृजा, उद्धमविधमा, उत्पचनिपचा, उत्पतनिपता, उच्चावचम्, उच्चनीचम्, आचोपचम्, आचपराचम्, निश्चप्रचम्, अकिंचनः, स्नात्वाकालकः, पीत्वास्थिरकः, भुक्त्वासुहितः, प्रोष्यपापीयान्, उत्पत्यपालका, निपत्यरोहिणी, निषण्णश्यामा, अपेहिप्रघसा, इहिविघसा, इहपञ्चमी, इहद्वितीया, '**जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति**' जहिजोडः, जहिस्तम्बः । '**आख्यातमाख्यातेन क्रियासातत्ये**' अश्नीतपिबता, पचतभृज्जता, खादतमोदता, खादतवमता, आहरनिवपा, आहरनिष्करा, भिन्धिलवणा, कृन्धिविचक्षणा, पचलवणा, पचप्रकूटा । आकृतिगणोऽयम् । तेन अकुतोभय, कान्दिशीक, आहोपुरुषिका, अहमहमिका, यदृच्छा, एहिरेयाहिरा, उन्मृजविमृजा, द्रव्यान्तरम्, अवश्यकार्यमित्यादि सिद्धम् ॥

। २ । १ । ७१ ॥ एते निपात्यन्ते ॥ मयूरो व्यंसको मयूरव्यंसकः । व्यंसको धूर्तः । उदक्चावाक्च उच्चावचम् । निश्चितं च प्रचितं च निश्चप्रचम् । नास्ति किञ्चन यस्य सः अकिञ्चनः ॥ **आख्यातमाख्यातेन क्रियासातत्ये** ॥ ग. ॥ अश्नीत पिबतेत्येवं सततं यत्राभिधीयत सा अश्नीतपिबता । पचतभृज्जता । खादतमोदता ॥ **एहीडादयोऽन्यपदार्थे** ॥ ग. ॥ एहीड इति यस्मिन्कर्मणि तदेहीडम् । एहिपचम् । उद्धर कोष्ठादुत्सृज देहीति यस्यां क्रियायां सा उद्धरोत्सृजा । उद्धमविधमा । असातत्यार्थमिह पाठः ॥ **जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति** ॥ ग. ॥ ॥ जहीत्येतत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्ये, समासेन चेत्कर्ताऽभिधीयत इत्यर्थः ॥ जहिजोडः । जहिस्तम्बः ॥ नास्ति कुतो भयं यस्य सोऽकुतोभयः । अन्यो राजा राजान्तरम् । चिदेव चिन्मात्रम् ॥ **ईषदकृता । २ । २ । ७ ॥** ईषत्पिङ्गलः ॥ **ईषद्गुणवचनेनेति वाच्यम् *** ॥ ईषद्रक्तम् ॥ **नञ् । २ । २ । ६ ॥** नञ् सुपा सह समस्यते ॥ **नलोपो नञः । ६ । ३ । ७३ ॥** नञो नस्य लोपः स्यादुत्तरपदे ॥ न ब्राह्मणः अब्राह्मणः ॥ **तस्मान्नुडचि । ६ । ३ । ७४ ॥** लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् ॥ अनश्वः ॥ अर्थाभावेऽव्ययीभावेन सहायं विकल्प्यते । रक्षोहागमलघ्वसंदेहाः प्रयोजनमिति अद्रुतायामसंहितमिति च भाष्यवार्तिकप्रयोगात् । तेनानुपलब्धिरविवादोऽविघ्नमित्यादि सिद्धम् ॥ **नञो नलोपस्तिङि क्षेपे *** ॥ अपचसि त्वं जाल्म ॥ नैकधेत्यादौ तु नशब्देन सह सुप्सुपेति समासः ॥ **नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या । ६ । ३ । ७५ ॥** पादिति शत्रन्तः । वेदा इत्यसुन्नन्तः । न सत्या असत्या न असत्या नासत्याः । न मुञ्चतीति नमुचिः । न कुलमस्य नकुलम् । न खमस्य नखम् । न स्त्री पुमान् नपुंसकम् । स्त्रीपुंसयोः पुंसकभावो निपातनात् । न क्षरतीति नक्षत्रम् । क्षीयतेः क्षरतेर्वा क्षत्रमिति निपात्यते । न क्रामतीति नक्रः । क्रमेर्डः । न अकमस्मिन्निति नाकः ॥ **नगोऽप्राणिष्वन्यतरस्याम् । ६ । ३ । ७७ ॥** नग इत्यत्र नञ्प्रकृत्या वा ॥ नगा अगाः पर्वताः ॥ अप्राणिष्विति किम् ? अगो

---

१ पस्पशाह्निके भाष्ये उपलभ्यमानम् असंदेहशब्दस्य पुंलिङ्गत्वम् अव्ययीभावे नपुंसकत्वापत्त्या अनुपपद्यमानं तत्पुरुषे विनिगमकं भवति ॥ संहितासंज्ञासूत्रे वार्तिके उपलभ्यमानम् असंहितशब्दस्य क्लीबत्वं स्त्रीलिङ्गसंहिताशब्देन तत्पुरुषेऽनुपपन्नं सद् क्लीबत्वसाधकेऽव्ययीभावे विनिगमकं भवतीति भावः ॥ प्रातिशाख्ये तद्भाष्ये च क्लीबसंहितशब्दस्योपलम्भात् तेनैव ' असंहित ' शब्दनिष्पत्तौ विनायासं सिद्धायां वृथैव तदर्थं तत्सूत्रगृहीताव्ययेनाव्ययीभावसमासविधानं भाष्यानङ्गीकृतं स्वीकृतमिति बोध्यम् ॥ एवं च ' अविघ्नम् ' इत्यत्रार्थाभावजन्तेन विघ्नसहितकार्यवाचकेन नञ्तत्पुरुष एवेति ज्ञेयम् ॥ २ निरनुबन्धकनकारस्याव्ययस्य सत्त्वे "नलोपो नञः" इति सूत्रे भाष्यकृतः ' **किमर्थं नञः सानुबन्धकस्य ग्रहणं क्रियते, न 'नस्य' इत्येवोच्येत** ' इति पूर्वपक्षस्य समाधानाय ' **पामनपुत्र इत्यत्रापि** नलोपः **प्राप्नोति । तस्मात् सानुबन्धकग्रहणं कर्तव्यम्** ' इत्येतावत्पर्यन्तधावनं व्यर्थं स्यादिति 'नैकधा' इत्यादौ पृषोदरादित्वमेव कल्पनीयमिति तत्त्वम् ॥ ३ **क्षरतेरिति** ॥ निश्चलमेव नक्षत्रमण्डलम् । नक्षत्राणि तु सृष्ट्यादितस्तस्मिन्नेकस्मिन्नेव स्थाने निश्चलान्येव वर्तन्ते । केवलं क्रान्तिमण्डलमेव प्रतिवर्षं ५१३ विकलात्मकं ७० सप्ततिवर्षैरेकांशात्मकं पश्चिमाभिमुखं चलति । इति स्पष्टं गणितसिद्धान्तविदाम् ॥

वृषलः शीतेन ॥ नित्यं क्रीडेत्यतो नित्यमित्यनुवर्तमाने ॥ **कुगतिप्रादयः । २ । २ । १८ ॥** एते समर्थेन नित्यं समस्यन्ते ॥ कुत्सितः पुरुषः कुपुरुषः ॥ गतिश्चेत्यनुवर्तमाने—॥[A]**ऊर्यादिच्विडाचश्च । १ । ४ । ६१ ॥** एते क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । उररीकृत्य । शुक्लीकृत्य । पटपटाकृत्य ॥ **कारिकाशब्दस्योपसंख्यानम् * ॥** कारिका क्रिया । कारिकाकृत्य ॥ **अनुकरणं चानितिपरम् । १ । ४ । ६२ ॥** खाट्कृत्य ॥ अनितिपरं किम्? खाडिति कृत्वा निरष्ठीवत् ॥ **आदरानादरयोः सदसती । १ । ४ । ६३ ॥** सत्कृत्य । असत्कृत्य । **भूषणेऽलम् । १ । ४ । ६४ ॥** अलंकृत्य ॥ भूषणे किम्? अलं कृत्वौदनं गतः । पर्याप्तमित्यर्थः ॥ अनुकरणमित्यादित्रिसूत्री स्वभावात्कृञ्विषया ॥ **अन्तरपरिग्रहे । १ । ४ । ६५ ॥** अन्तर्हत्य । मध्ये हत्वेत्यर्थः ॥ अपरिग्रहे किम्? अन्तर्हत्वा गतः । हतं परिगृह्य गत इत्यर्थः ॥ **कणेमनसी श्रद्धाप्रतीघाते । १ । ४ । ६६ ॥** कणेहत्य पयः पिबति । मनोहत्य । कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषातिशये वर्तते । मनःशब्दोऽप्यत्रैव ॥ **पुरोऽव्ययम् । १ । ४ । ६७ ॥** पुरस्कृत्य ॥ **अस्तं च । १ । ४ । ६८ ॥** अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात् । अस्तंगत्य ॥ **अच्छ गत्यर्थवदेषु । १ । ४ । ६९ ॥** अव्ययमित्येव । अच्छगत्य । अच्छोद्य । अभिमुखं गत्वा उक्त्वा चेत्यर्थः ॥ अव्ययं किम्? जलमच्छं गच्छति ॥ **अदोऽनुपदेशे । १ । ४ । ७० ॥** अदःकृत्य अदः कृतम् । परं प्रत्युपदेशे प्रत्युदाहरणम्—अदः[3] कृत्वा अदः कुरु ॥ **तिरोऽन्तर्धौ । १ । ४ । ७१ ॥** तिरोभूय ॥ **विभाषा कृञि । १ । ४ । ७२ ॥** तिरःकृत्य, तिरस्कृत्य[4] । तिरः कृत्वा । **उपाजेऽन्वाजे । १ । ४ । ७३ ॥** एतौ कृञि वा गतिसंज्ञौ स्तः । उपाजेकृत्य । उपाजे कृत्वा । अन्वाजेकृत्य । अन्वाजे कृत्वा । दुर्बलस्य बलमाधायेत्यर्थः ॥ [B]**साक्षात्प्रभृतीनि च । १ । ४ । ७४ ॥** कृञि वा गतिसंज्ञानि स्युः ॥ **च्व्यर्थ इति वाच्यम् * ॥** साक्षात्कृत्य । साक्षात्कृत्वा । लवणंकृत्य । लवणं कृत्वा । मान्तत्वं निपातनात् ॥ **अनत्याधान उरसिमनसी । १ । ४ । ७५ ॥** उरसिकृत्य । उरसि कृत्वा । अभ्युपगम्येत्यर्थः ॥ मनसिकृत्य । मनसि कृत्वा । निश्चित्येत्यर्थः ॥

---

A ऊरी, उररी, वेताली, धूर्सी, शकला, स्रंसकला, ध्वंसकला, भ्रंसकला, गुलुगुधा, सजूः, फल, फली, विक्ली, आक्ली, आलोष्टी, केवाली, सेवाली, शेवाली, वर्षाली, मसमसा, मस्मसा, वौषट्, वषट्, श्रौषट्, स्वाहा, स्वधा, पाम्पी, प्रादुः, श्रत्, आविस्, । इत्यूर्यादिः । कैश्चिदन्येऽप्यत्र पठ्यन्ते । ते च यथा । पाम्पाली, संकला, केवासी, वार्दाली, पादाली, आलम्बी, आङ्गी, तन्थी, ताली, आताली, धूली, अश्मसा, वशाला, मस्मसा, मष्मसा, बन्धा, इत्यादि ।

B साक्षात्, मिथ्या, चिन्ता, भद्रा, रोचना, आस्था, अमा, अद्धा, प्राजर्या, प्राजरुहा, बीजर्या, बीजरुहा, संसर्या, अर्थे लवणम्, उष्णम्, शीतम्, उदकम्, आर्द्रम्, अग्नौ, वशे, विकसने, विहसने, प्रतपने, प्रादुस्, नमस्, आविस् । आकृतिगणोऽयम् । अत्र लवणादीनां पञ्चानां गतिसंज्ञासंनियोगेन मान्तत्वं निपात्यते ।

---

१ प्रादयस्तु पूर्वमुक्ताः ॥ २ क्रियेति । कृधातोर्भावे ण्वुलि 'विभाषाख्यानपरिप्रश्नयोरिञ्च' इति इञि 'कारिशब्दात्' 'कृदिकाराद्' इति ङीषि 'कारी' शब्दाद्वा के वा, कारिकाशब्दो निष्पद्यते ॥ ३ 'अदः कृत्वा अदः कुरु' इत्येतावान् पाठः, न तु 'अदः कृत्वा' इत्येतावानेव, 'परं प्रत्युपदेशे' इत्युक्तिस्वारस्यात् ॥ ४ 'तिरसोऽन्यतरस्याम्' इति विसर्गस्य सत्वविकल्पः ॥

अत्याधानमुपश्लेषणं तत्र न—उरसि कृत्वा पाणिं शेते ॥ **मध्ये पदे निवचने च । १ । ४ । ७६ ॥** एते कृञि वा गतिसंज्ञाः स्युरनत्याधाने ॥ मध्येकृत्य । मध्ये कृत्वा । पदेकृत्य पदे कृत्वा । निवचनेकृत्य । निवचने कृत्वा । वाचं नियम्येत्यर्थः ॥ **नित्यं हस्ते पाणावुपयमने । १ । ४ । ७७ ॥** कृञि ॥ उपयमनं विवाहः । स्वीकारमात्रमित्यन्ये । हस्तेकृत्य । पाणौकृत्य ॥ **प्राध्वं बन्धने ।१।४।७८ ॥** प्राध्वमित्यव्ययम् । प्राध्वंकृत्य । बन्धनेनानुकूलं कृत्वेत्यर्थः ॥ प्रार्थनादिना त्वानुकूल्यकरणे—प्राध्वं कृत्वा ॥ **जीविकोपनिषदावौपम्ये । १ । ४ । ७९ ॥** जीविकामिव कृत्वा जीविकाकृत्य । उपनिषदमिव कृत्वा उपनिषत्कृत्य ॥ औपम्ये किम् ? जीविकां कृत्वा ॥ प्रादिग्रहणमगत्यर्थम् । सुपुरुषः ॥ अत्र वार्तिकानि—॥ **प्रादयो गताद्यर्थे प्रथमया * ॥** प्रगत आचार्यः प्राचार्यः ॥ **अत्यादयः क्रान्ताद्यर्थे द्वितीयया * ॥** अतिक्रान्तो मालामतिमालः ॥ **अवादयः क्रुष्टाद्यर्थे तृतीयया * ॥** अवक्रुष्टः कोकिलया अवकोकिलः ॥ **पर्यादयो ग्लानाद्यर्थे चतुर्थ्या * ॥** परिग्लानोऽध्ययनाय पर्यध्ययनः ॥ **निरादयः क्रान्ताद्यर्थे पञ्चम्या * ॥** निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः ॥ **कर्मप्रवचनीयानां प्रतिषेधः * ॥** वृक्षं प्रति ॥ **तत्रोपपदं सप्तमीस्थम् । ३ । १ । ९२ ॥** सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात्, तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यात् ॥ **उपपदमतिङ् । २ । २ । १९ ॥** उपपदं सुबन्तं समर्थेन नित्यं समस्यते । अतिङन्तश्चायं समासः ॥ कुम्भं करोतीति कुम्भकारः । इह ' कुम्भ अस् कार ' इत्यलौकिकं प्रक्रियावाक्यम् ॥ अतिङ् किम् ? मा भवान् भूत् । माङि लुङिति सप्तमीनिर्देशान्माङुपपदम् । अतिङ्ग्रहणं ज्ञापयति—' सुपेत्येतन्नेहानुवर्तते ' इति पूर्वसूत्रेऽपि गतिग्रहणं पृथक्कृत्यातिङ्ग्रहणं तत्रापकृष्यते, सुपेति च निवृ-

---

१ एषु वार्तिकेषु, सर्वत्रादिशब्दः प्रकारे न तु प्रभृतौ ॥ २ अधिकारोऽयम् । तेन वक्ष्यमाणेषु सर्वेषु सूत्रेषूपस्थितेऽस्मिन् सूत्रे ' तत्र ' इत्यस्य तन्त्रेणोच्चारणम् । तत्र संनिहितधात्वधिकारपरामर्शकमेकम् । द्वितीयं तु प्रत्यय इत्यधिकृते निमित्तत्वेनान्वेति । तथा च ' संनिहिते धात्वधिकारे प्रत्ययविधायके ' कर्मण्यण् ' इत्यादौ सप्तमीस्थं सप्तमीनिर्दिष्टं ' कर्मणि ' इत्यादि उपपदं स्यात्, तस्मिन् उपपदे सत्येव धातोः अण्प्रभृति स्यात् ' इत्येवं विध्येकवाक्यतयैवार्थः संभवति । अत एव ' अमैव तुल्यविधानमुपपदम् ' इत्यग्रे वक्ष्यमाणं संगच्छते । इत्यादि सर्वं मनसि निधाय सूत्रार्थं वर्णयति—**सप्तम्यन्ते पदे इत्यादि** ॥ ३ अत्र ' सुपा ' इति तृतीयान्तं न संबध्यते इत्यग्रे वक्ष्यते इति सूचयन्नेवाह—**समर्थेनेति** ॥ ४ माङ उपपदत्वं दर्शयति—**माङि लुङ् इतीति** ॥ ' उपपदम् ' इति संज्ञा प्राचामनुरोधेनैव, नान्वर्था । सति हि समासे मध्ये ' भवान् ' इति पदं नैवागच्छेदिति भावः ॥ परे तु ' उप समीप उच्चारितं पदम् उपपदम् ' इत्यन्वर्थत्वे महासंज्ञाकरणसामर्थ्येन ज्ञाते ' मा वा पूर्वपदस्य भूत् ' इति वार्तिके " मा कदाचिदप्यवृत्तिर्भूत् ' इति भाष्ये च माङ्लुङन्तयोर्मध्येऽनेकपददर्शनान्नोपपदत्वं माङ इति यदि विभाव्यते तदा ' कारको व्रजति ' इति भाष्योक्तमेव प्रत्युदाहरणं देयमिति वदन्ति ॥ ५ ननु ' सुपा ' इत्येतत्संबन्धेनान्यत्रावश्यकेनैव ' कारको व्रजति ' इत्यादिवारणसंभवे किमिति ' सुपा ' इत्येतस्यासंबन्धं कल्पयित्वा अतिङ्ग्रहणं करणीयम् ' इति गौरवाङ्गीकार इत्यतो गौरवाङ्गीकारस्य फलं प्रदर्शयितुम् आह—**अतिङ्ग्रहणमिति** ॥ ६ **पूर्वसूत्रे** ' कुगतिप्रादयः ' इति सूत्रेऽपि ॥

तम् । तथा च–**गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरिति** सिद्धम् ॥ व्याघ्री । अश्वक्रीती । कच्छपी ॥ **अमैवाव्ययेन ।२ । २ । २० ॥** अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते । स्वादुङ्कारम् । नेह--कालसमयवेलासु तुमुन् । कालः समयो वेला वा भोक्तुम् ॥ अमैवेति किम् ? अग्रे भोजम् । अग्रे भुक्त्वा । विभाषाग्रेप्रथमपूर्वेष्विति क्त्वाणमुलौ । अमा चान्येन च तुल्यविधानमेतत् ॥ **तृतीयाप्रभृतीन्यन्यतरस्याम् ।२।२।२१ ॥** उपदंशस्तृतीयायामित्यादीन्युपपदान्यमन्तेनाव्ययेन सह वा समस्यन्ते ॥ मूलकेनोपदंशं भुङ्क्ते । मूलकोपदंशम् ॥ **क्त्वा च । २ । २ । २२ ॥** तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते ॥ उच्चैःकृत्य उच्चैः कृत्वा । अव्यये यथाभिप्रेतेति क्त्वा ॥ तृतीयाप्रभृतीनीति किम् ? अलं कृत्वा खलु कृत्वा ॥ **तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ।५।४।८६ ॥** संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलं दारु । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ॥ **अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ।५। ४। ८७ ॥** एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः ॥ अहर्ग्रहणं द्वन्द्वार्थम् । अहश्च रात्रिश्चाहोरात्रः । सर्वा रात्रिः सर्वरात्रः । पूर्वं रात्रेः पूर्वरात्रः । संख्यातरात्रः । पुण्यरात्रः । द्वयो रात्र्योः समाहारो द्विरात्रम् । अतिक्रान्तो रात्रिमतिरात्रः ॥ **राजाहःसखिभ्यष्टच्**

---

१ उभयत्रापि 'सुपा' इत्यस्यासंबन्धकल्पने फलं दर्शयति–**तथाचेति** ॥ गत्युपपदांशे व्यञ्जनीयं स्वाभिमतत्वं प्राचीनवैयाकरणतन्त्रे वचनरूपेण पठितायाम् अस्यां परिभाषायाम् स्थालीपुलाकन्यायेन प्रकाशयतीति भावः ॥ २ **सुबुत्पत्तेरिति** । अत्र लिङ्गबोधकप्रत्ययोत्पत्तेरप्युपलक्षणमिदमिति बोध्यम् ॥ ३ गतेः समासप्रयोजनमाह–**व्याघ्रीति** । 'व्याजिघ्रतीति' व्याघ्री । 'आतश्चोपसर्गे' इति गत्यपरपर्याय उपसर्गे उपपदे आदन्ताद् घ्राधातोः कप्रत्यये आङो घ्रशब्देन सुबुत्पत्तेः प्राग् गतिसमासे विशब्दस्य आघ्रशब्देन गतिसमासे व्याघ्रशब्दाद् 'जातेरस्त्रीविषयाद्' इति ङीषि 'व्याघ्री' इति सिध्यति । अत्र यदि घ्रशब्दस्य आघ्रशब्दस्य वा सुबन्तत्वमपेक्ष्येत तर्हि 'स्वार्थद्रव्यलिङ्गसंख्याकारकप्रयुक्तकार्याणां क्रमेणैवोत्पत्तिस्वीकारेण संख्याकारकनिमित्तकसुबुत्पत्तेः प्राग् लिङ्गनिमित्तकस्त्रीप्रत्ययस्य घ्र–आघ्रशब्दयोर्जातिवाचकत्वाभावात् टाप उत्पत्तेरावश्यकत्वेन टाबन्तेन समासे व्याघ्राशब्दस्य अदन्तत्वाभावाद् ङीष् नैव स्यादिति भावः ॥ ४ कारकोदाहरणमाह–**अश्वक्रीतीति** । सुबुत्पत्तेः प्राक् समासे तु 'अश्व टा क्रीत' इत्यलौकिकविग्रहवाक्ये 'कर्तृकरणे कृता' इति समासे अश्वक्रीतशब्दात् 'क्रीतात्करणपूर्वात्' इति ङीषि अश्वक्रीतीति सिध्यति ॥ अत्रापि सुबन्तेन समासे तु सुबुत्पत्तेः प्राक् स्त्रीप्रत्ययस्य टाप उत्पत्तौ टाबन्तेन समासे अश्वक्रीताशब्दस्य अदन्तत्वाभावात् ङीष् नैव स्यादिति भावः ॥ ५ उपपदोदाहरणमाह–**कच्छपीति** । अधिकरणस्य करणत्वविवक्षया तृतीयायां कच्छाभ्यां पातीति विग्रहे 'सुपि' इति योगविभागात् के सुबुत्पत्तेः प्राक् 'कच्छ भ्याम् प' इत्यलौकिकविग्रहे कारकत्वोपपदत्वयोरविशेषेऽपि परत्वात् 'उपपदमतिङ्' इति समासे 'जातेरस्त्रीविषयात्' इति ङीषि कच्छपीति सिध्यति ॥ सुबन्तेन समासाङ्गीकारे तु सुबुत्पत्तेः प्राक् प्राग्वत् टाप्प्रत्ययान्तेन समासे अदन्तत्वाभावान्ङीष् नैव स्यादिति भावः ॥ ६ 'स्वादुमि णमुल्' इत्यनेन स्वादुम उपपदसंज्ञायां णमुल्प्रत्ययस्य च विधानात् 'स्वादुम्' इति अमा सहैव तुल्यविधानम् उपपदमिति मान्तत्वादव्ययेन 'कारम्' इत्यनेन समस्यते इति भावः ॥ ७ 'कालसमयवेलासु तुमुन्' इति कालसमयवेलानां तुमुना तुल्यविधानोपपदत्वम् नामा इति नैव समास इति भावः ॥ ८ 'अमैव' इत्येवकारस्य फलमाह–**अग्रेभोजमिति** ॥ क्त्वयापि तुल्यविधानत्वाद् व्यावृत्तिः ॥ ९ **द्वन्द्वार्थमिति** । तत्पुरुषस्यासंभवादिति भावः ॥ १० 'संख्यापूर्वं रात्रं क्लीबम्' इत्यग्रे वक्ष्यमाणत्वादिति भावः ॥

। ५ । ४ । ९१ ॥ एतदन्तात्तत्पुरुषाट्टच् स्यात् ॥ परमराजः[1] । अतिराजी[2] । कृष्णसखः ॥ **अह्नष्टखोरेव** । ६ । ४ । १४५ ॥ टिलोपः स्यान्नान्यत्र ॥ उत्तमाहः[3] ॥ द्वे अहनी भृतो द्व्यहीनः[4] क्रतुः । तद्धितार्थे द्विगुः । 'तमधीष्ट' इत्यधिकारे द्विगोर्वेत्यनुवृत्तौ रात्र्यहःसंवत्सराच्चेति खः ॥ [[5] लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नेह—मद्राणां राज्ञी मद्रराज्ञी ॥] **अह्नोऽह्न एतेभ्यः** ५ । ४ । ८८ ॥ सर्वादिभ्यः[6] परस्याहन्शब्दस्याह्नादेशः स्यात्समासान्ते परे ॥ **अह्नोऽदन्तात्** । ८ । ४ । ७ ॥ अदन्तपूर्वपदस्थाद्रेफात्परस्याह्नादेशस्य[7] नस्य णः स्यात् । सर्वाह्णः । पूर्वाह्णः । संख्याताह्नः ॥ द्वयोरह्नोर्भवः । 'कालाट्ठञ्' । 'द्विगोर्लुगनपत्ये' इति ठञो लुक् । द्व्यह्नः । स्त्रियामदन्तत्वाट्टाप्—द्व्यह्ना[8] ॥ द्व्यह्नप्रियः । अत्यह्नः ॥ A**क्षुभ्नादिषु च** । ८ । ४ । ३९ ॥ एषु णत्वं न स्यात् । दीर्घाह्नी प्रावृट् । एवं चैतदर्थमह्न इत्यदन्तानुकरणक्लेशो[9] न कर्तव्यः । प्रातिपदिकान्तेति णत्ववारणाय क्षुभ्नादिषु पाठस्यावश्यकत्वात् । अदन्तादिति तपरकरणान्नेह । परागतमहः पराह्नः ॥ **न संख्यादेः समाहारे** । ५ । ४ । ८९ ॥ समाहारे वर्तमानस्य[10] संख्यादेरह्नोऽह्नादेशो न स्यात् । संख्यादेरिति स्पष्टार्थम्[11] । द्वयोरह्नोः समाहारो द्व्यहः । त्र्यहः ॥ **उत्तमैकाभ्यां च** । ५ । ४ । ९० ॥ आभ्यामह्नादेशो न । उत्तमशब्दोऽन्त्यार्थः पुण्यशब्दमाह ॥ पुण्यैकाभ्यामित्येव सूत्रयितुमुचितम् ।

---

A क्षुभ्न, नृनमन, नन्दिन्, नन्दन, नगर । एतानि त्रीण्युत्तरपदानि संज्ञायां प्रयोजयन्ति । हरिनन्दी, हरिनन्दनः, गिरिनगरम् । नृतिर्यङि प्रयोजयति । नरीनृत्यते । नर्तन, गहन, नन्दन, निवेश, निवास, अग्नि, अनूप, एतानि सप्तोत्तरपदानि प्रयोजयन्ति । परिनर्तनमित्यादि । आचार्यादणत्वं च । आकृतिगणोऽयम् । अत्र पाठान्तरम् । क्षुभ्न, तृप्नु, नृनमन, नरनगर, नन्दन, नृतिर्यङि, गिरिनन्दी, गृहगमन, निवेशनिवास, अग्नि, अनूप, आचार्यभोगीन, चतुर्हायन, इरिकादीनि वनोत्तरपदानि संज्ञायाम् । इरिका, तिमिर, समीर, कुवेर, हरि, कर्मार । इति क्षुभ्नादिः ॥

---

१ 'सन्महत्परम' इति समासः ॥ २ राजानमतिक्रान्ताऽतिराजी इत्यत्र 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः ॥ 'नस्तद्धिते' इति टिलोपः । टित्त्वान्ङीबिति भावः ॥ ३ 'सन्महत्परमोत्तम' इति समासे टचि टिलोप इति भावः ॥ ४ प्रसङ्गसङ्गत्या खप्रत्ययोदाहरणमाह—द्व्यहीन इति ॥ ५ कोष्ठकान्तर्गतोऽयं पाठः 'कृष्णसखः' इत्यतः प्रागेवोचिततरः । अनित्यत्वे प्रमाणं च "शक्तिलाङ्गलाङ्कुश" इति वार्तिके घटशब्दात् पृथग् घटीग्रहणमेवेति प्रागुक्तमेव ॥ ६ 'अहःसर्वैकदेश—' इति सूत्रोपात्ता एतच्छब्देन परामृश्यन्ते । तत्रायोग्यत्वादहःशब्दव्यावृत्तिरित्याह—**सर्वादिभ्य इति** ॥ '**समासान्ते**' इति तु अधिकाराल्लभ्यत इति भावः ॥ टचि प्राप्तस्य टिलोपस्य बाधनायेदमिति सूत्रस्वरसः ॥ भाष्यकृता तु "अह्नः" इत्यादेशविधानं प्रत्याख्यातम् । "अह्न एतेभ्यः" इत्यत्र 'अच्' इत्यनुवर्त्य तस्य विशेषविहितत्वेन टज्बाधकत्वमङ्गीकृत्य 'टखोरेव' इति टिलोपाप्राप्त्या 'अल्लोपोऽनः' इति सूत्रेणाकारलोपेन सकलेष्टसिद्धेः ॥ ७ 'अह्नः' इति षष्ठ्यर्थे प्रथमेति समासान्तविशिष्टस्याह्नादेशस्य णत्वं विधीयते इत्याह—**अह्नादेशस्येति** ॥ ८ **द्व्यह्नेति** । इदं तद्धितार्थद्विगोर्विशेष्यनिघ्नत्ववादिनां मते 'रात्राह्नाहाः पुंसि' इति पुंस्त्वनियमस्य प्रबलत्वमते तु चिन्त्यमेव ॥ ९ **क्लेश इति** । 'अह्नोऽदन्तात्' इति सूत्रे 'अदन्तस्येति वक्तव्यम्' इति वार्तिकप्रत्याख्यानाय भाष्यकृता इति शेषः ॥ अयं च दीक्षितानां प्रौढिवादः 'एतद्भाष्यध्वनितस्य' 'तत्पुरुषातिरिक्तोऽहन्शब्दान्तः सर्वोऽपि समासः क्षुभ्नादिषु स्वीक्रियते' इत्येतस्याप्यनङ्गीकार एव घटते ॥ १० **वर्तमानस्येति** । समस्यमानस्येत्यर्थः ॥ विद्यमानस्येति तु नार्थः । केवलस्याहन्शब्दस्य तत्राविद्यमानत्वात् ॥ ११ **स्पष्टार्थमिति** । समाहारेऽन्यस्य वृत्त्यभावादिति भावः ॥

पुण्याहम्[1] । एकाहः । उत्तमग्रहणमुपान्त्यस्यापि[2] संग्रहार्थमित्येके । संख्याताहः ॥ **अग्राख्या-यामुरसः । ५ । ४ । ९३ ॥** टच् स्यात् ॥ अश्वानामुर इव[4] अश्वोरसम् । मुख्योऽश्व[3] इत्यर्थः ॥ **अनोश्मायःसरसां जातिसंज्ञयोः ।५।४।९४ ॥** टच् स्याज्जातौ संज्ञायां च ॥ उपानसम् । अमृताश्मः । कालायसम् । मण्डूकसरसमिति जातिः ॥ महानसम् । पिण्डाश्मः । लोहिता-यसम् । जलसरसमिति संज्ञा ॥ **ग्रामकौटाभ्यां च तक्ष्णः । ५ । ४ । ९५ ॥** ग्रामस्य तक्षा ग्रामतक्षः[5] । साधारण इत्यर्थः । कुट्यां भवः कौटः स्वतन्त्रः स चासौ तक्षा च कौटतक्षः ॥ **अतेः शुनः । ५ । ४ । ९६ ॥** अतिश्वो वराहः । अतिश्वी सेवा[6] ॥ **उपमानादप्राणिषु ।५।४। ९७ ॥** अप्राणिविषयकोपमानवाचिनः[7] शुनष्टच् स्यात् ॥ आकर्षः[8] श्वेव आकर्षश्वः ॥ अप्राणिषु किम् ? वानरः श्वेव वानरश्वा ॥ **उत्तरमृगपूर्वाच्च सक्थ्नः । ५ । ४ । ९८ ॥** चादुपमानात् ॥ उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । फलकमिव सक्थि फलकसक्थम्[9] ॥ **नावो द्विगोः । ५।४।९९ ॥** नौशब्दान्ताद्द्विगोष्टच् स्यान्न तु तद्धितलुकि ॥ द्वाभ्यां नौभ्यामागतः द्विनाव-रूप्यः । 'द्विगोर्लुगनपत्ये' इत्यत्र अचीत्यस्यापकर्षणाद्धलादेर्न लुक् ॥ पञ्चनावप्रियः । द्विना-वम् । त्रिनावम् ॥ अतद्धितलुकीति किम् ? पञ्चभिर्नौभिः क्रीतः पञ्चनौः[10] ॥ **अर्धाच्च । ५ । ४। १०० ॥** अर्धान्नावष्टच् स्यात् ॥ नावोऽर्धम् । अर्धनावम् । क्लीबत्वं लोकात् ॥ **खार्याः प्राचाम् ।५।४। १०१ ॥** द्विगोरर्धाच्च खार्याष्टज्वा स्यात् ॥ द्विखारम् । द्विखारि । अर्ध-खारम् । अर्धखारि ॥ **द्वित्रिभ्यामञ्जलेः ।५।४।१०२ ॥** टज्वा स्याद् द्विगौ ॥ द्व्यञ्जलम् । द्व्यञ्जलि ॥ अतद्धितलुकीत्येव । द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः ॥ **ब्रह्मणो जानप-दाख्यायाम् । ५ । ४ । १०४ ॥** ब्रह्मान्तात्तत्पुरुषाट्टच् स्यात्समासेन जानपदमाख्यायते[11] चेत् ॥ सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः ॥ **कुमहद्भ्यामन्यतरस्याम् ।५।४।१०५ ॥** आभ्यां ब्रह्मणो वा टच् स्यात् तत्पुरुषे ॥ कुत्सितो ब्रह्मा कुब्रह्मः कुब्रह्मा ॥ **आन्महतः समाना-धिकरणजातीययोः ।६।३।४६ ॥** महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे ॥ महाब्रह्मः । महाब्रह्मा ॥ महादेवः ।महाजातीयः ॥ समानाधिकरणे किम् ? महतः सेवा महत्सेवा ॥ लाक्षणिकं विहाय प्रतिपदोक्तः 'सन्महत्' इति समासो ग्रहीष्यते चेत्, महाबाहुर्न स्यात् । तस्मात् 'लक्षणप्रतिपदोक्तयोः[12] प्रतिपदोक्तस्य' इति परिभाषा नेह प्रवर्तते । समा-

---

१ **पुण्याहमिति** । 'पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा' इति वक्ष्यते ॥ २ उचितं विहायोत्तमशब्दो-पादानफलमाह–**उपान्त्यस्यापीति** । अन्यथा 'पुण्यैकाभ्याम्' इत्येव 'अन्त्यैकाभ्याम्' इत्येव वा वदेदिति भावः ॥ ३ अग्रे भवोऽग्र्यो मुख्य इत्यर्थः ॥ **'उरो** वक्षसि च श्रेष्ठे' इति मेदिनी ॥ ४ **उर इवेति** । इवशब्दोपादानफलं चिन्त्यम् ॥ ५ **ग्रामतक्ष इति** । 'नस्तद्धिते' इति टिलोप इति भावः ॥ ६ 'सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्' इति मनूक्तेः अतिश्वी, नीचा इत्यर्थः ॥ ७ **अप्रा-णिविषयकेति** । अप्राण्युपमेयकेत्यर्थः ॥ ८ धान्यादिकर्षकः पञ्चाङ्गुलः काष्ठविशेष **आकर्षः** ॥ 'उपमितं व्याघ्रादिभिः' इति व्याघ्रादेराकृतिगणत्वात्समासः ॥ ९ **फलकसक्थमिति** । 'मयूरव्यंसकादित्वा-त्समासः ॥ १० **पञ्चनौरिति** 'तेन क्रीतम्' इति ठञ आदेशद्वाराऽजादित्वाद् 'द्विगोर्लुगनपत्ये' इति लुग् भवतीति भावः ॥ ११ जनपदो देश इति देशसंबन्धित्वम् आख्याते चेत् इत्यनेन तस्मिन् सुराष्ट्र-देशरचयितृत्वमिव प्रतीयते ॥ १२ लक्षणप्रतिपदोक्तपरिभाषापि अन्तरङ्गबहिरङ्गभावमूलिकैवेति सारम् ॥

नाधिकरणग्रहणसामर्थ्यात्[1] ॥ [आदिति[2] योगविभागादात्त्वम्[3] । 'प्रागेकादशभ्यः' इति निर्देशाद्वा-एकादश ॥ ] महतीशब्दस्य पुंवत्कर्मधारयेति पुंवद्भावे कृते[4] आत्त्वम्-महाजातीया॥ **महदात्त्वे-घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च** * ॥ असामानाधिकरण्यार्थमिदम् । महतो[5] महत्या वा घासो महाघासः । महाकरः । महाविशिष्टः ॥ **अष्टनः कपाले हविषि*** ॥ अष्टाकपालः॥ **गवि च युक्ते** * गोशब्दे परे, युक्त इत्यर्थे गम्येऽष्टनआत्त्वं वक्तव्यमित्यर्थः ॥ अष्टागवं[6] शकटम् । 'अच्प्रत्यन्वव' इत्यत्राजिति योगविभागाद्बहुव्रीहावप्यच्[7] ॥ अष्टानां गवां समाहारः अष्टागवम्[8] । तद्युक्तत्वाच्छकटमष्टागवमिति वा ॥ **द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः । ६।३।४७॥** आत्स्यात् ॥ द्वौ[9] च दश च द्वादश । द्व्यधिका दशेति वा । द्वाविंशतिः[10]। अष्टादश । अष्टाविंशतिः ॥ अबहुव्रीह्यशीत्योः किम् ? द्वित्राः[11] । द्व्यशीतिः ॥ **प्राक्शतादिति वक्तव्यम्*** ॥ नेह-द्विशतम्[12] । द्विसहस्रम् ॥ **त्रेस्त्रयः ॥ ६ । ४ । ४८** ॥ त्रिशब्दस्य त्रयस्[13] स्यात्पूर्वविषये ॥ त्रयोदश । त्रयोविंशतिः ॥ बहुव्रीहौ तु त्रिदश त्रिदशाः । सुजर्थे बहुव्रीहिः ॥ अशीतौ तु त्र्यशीतिः॥ प्राक् शतादित्येव । त्रिशतम् । त्रिसहस्रम् ॥**विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्[14]** । ६।३ । ४९ ॥ द्व्यष्टनोस्त्रेश्च प्रागुक्तं वा स्याच्चत्वारिंशदादौ परे । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । त्रिचत्वारिंशत् ।

---

१ **सामर्थ्यादिति** । 'आन्महत' इति प्रतिपदोक्तसमास उत्तरपदस्य समानाधिकरणत्वाव्यभिचारात् समानाधिकरणग्रहणं व्यर्थमेव स्यादिति भावः ॥ २ अयं कोष्ठकान्तर्गतः पाठः 'द्व्यष्टनः संख्यायाम्' इत्यतः 'त्रेस्त्रयः' इत्यतो वा प्राग्योग्यः ॥ ३ 'आत' इति योगविभागस्य ऋष्यनुक्तत्वाद् उक्ते 'प्रागेकादशभ्यः' इति निर्देशादेव इत्यत्र प्रवर्तितेन 'अन्येषामपि दृश्यते' इति दीर्घेण इति शेषः ॥ ४ **पुंवद्भावे कृते इति** । 'पुंवद्भावं बाधित्वा' इति तु न संभवति 'आन्महतः' इति सूत्रे लिङ्गविशिष्टपरिभाषाया अप्रवृत्तेः 'ङ्याप्प्रातिपदिकात' सूत्रभाष्ये स्पष्टमुक्तत्वात् इति भावः ॥ ५ भाष्योक्तानां स्त्रीलिङ्गोदाहरणानामुपलक्षणत्वमाश्रित्य पुंलिङ्गेऽप्युदाहरति-**महत इति** ॥ ६ अष्टौ गावो युक्ता यत्रेति त्रिपदबहुव्रीहौ 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' इति अष्टगोशब्दयोस्तत्पुरुषे 'गोरतद्धितलुकि' इति टचि अष्टगवशब्दे अष्टशब्दस्य आत्त्वे 'अष्टागवयुक्त' शब्दे 'विनापि प्रत्ययं पूर्वोत्तरपदलोपः' इति युक्तशब्दलोपे 'अष्टागवम्' इति सिध्यति ॥ ७ **योगविभागादिति** । योगविभागं प्रमाणीकृत्येत्यर्थे 'ल्यब्लोपे कर्मणि' इति पञ्चमीति योगविभागस्य भाष्यादृष्टत्वादप्रमाणता सूचितेति बोध्यम् ॥ ८ अष्टानां गवां समाहार इत्यर्थे अष्टगवशब्दात् अष्टगवमस्ति यत्रेति 'अर्शआद्यच्' युक्तार्थप्रत्यये अष्टन आत्त्वे अष्टागवम् इति भवति ॥ ९ '**एकादश द्वादशेति कोऽयं समासः?** इति पूर्वपक्षस्य समाधानाय '**एकादीनां दशादिभिर्द्वन्द्वः**' '**अधिकान्तासंख्या संख्यया समानाधिकरणाधिकारेऽधिकलोपश्च**' इति वार्तिककृता द्विधा समासो दर्शितः इति स्वयमपि तथैवाह-**द्वौ च दश चेत्यादिना** ॥ १० **द्वाविंशतिरिति** । द्वौ च विंशतिश्च इति समाहारद्वन्द्वे एकवचनमेव । नपुंसकत्वं तु न भवति '**लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य**' इति भाष्ये स्पष्टम् ॥ ११ '**द्वौ वा त्रयो वा**' इति विग्रहे 'संख्ययाऽव्ययासन्ना दूराधिकसंख्याः' इति बहुव्रीहिसमासो वक्ष्यते ॥ १२ द्व्यधिकं शतमिति विग्रहः । '**द्वौ च शतं च**' इति वा समाहारद्वन्द्वः ॥ १३ '**त्रयस्**' इति सान्त आदेशोऽत्र व्याख्यानात् । आङ्गे तु अदन्त एवादेशः, 'त्रयाणाम्' इति निर्देशादित्युक्तमेव ॥ १४ **व्यवहितयोरपि द्व्यष्टनोरनुवृत्त्यर्थं** '**सर्वेषाम्**' इति न कर्तव्यम्, मण्डूकानुवृत्त्या तयोरप्यनुवृत्त्येष्टसिद्धेरिति भाष्ये स्पष्टम् ॥

त्र्यश्चत्वारिंशत् । एवं पञ्चाशत्षष्टिसप्ततिनवतिषु ॥ **एकादिश्चैकस्य चादुक् । ६ । ३ । ७६ ॥** एकादिश्च नञ् प्रकृत्या स्याद् एकस्य अदुगागमश्च ॥ नञो विंशत्या सह समासे कृते एकशब्देन सह तृतीयेति योगविभागात्समासः । अनुनासिकविकल्पः । एकेन न विंशतिः एकान्नविंशतिः । एकाद्नविंशतिः । एकोनविंशतिरित्यर्थः ॥ **षष उत्वं दतृदशसूत्तरपदादेः ष्टुत्वं च धासु वेति वाच्यम्** * ॥ षोडन् । षोडश । षोढा । षड्धा ॥ **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः । २ । ४ । २६ ॥** एतयोः परपदस्येव लिङ्गं स्यात् ॥ कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धपिप्पली ॥ **द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः** * ॥ पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः ॥ अलं कुमार्यै अलंकुमारिः । अत एव ज्ञापकात्समासः ॥ निष्कौशाम्बिः ॥ **पूर्ववदश्ववडवौ । २ । ४ । २७ ॥** द्विवचनमतन्त्रम् । अश्ववडवौ । अश्ववडवान् । अश्ववडवैः ॥ **रात्राह्नाहाः पुंसि । २ । ४ । २९ ॥** एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव ॥ अनन्तरत्वात्परवल्लिङ्गतापवादोऽप्ययं परत्वात्समाहारनपुंसकतां बाधते–अहोरात्रः । रात्रेः पूर्वभागः पूर्वरात्रः । पूर्वाह्णः । द्व्यहः ॥ **संख्यापूर्वं रात्रं क्लीबम्** ॥ द्विरात्रम् । त्रिरात्रम् । गणरात्रम् ॥ **अपथं नपुंसकम् । २ । ४ । ३० ॥** तत्पुरुष-

---

१ '**किमर्थम् आदुग् उच्यते, न अदुगेवोच्येत**' इति भाष्यतो लट्प्रयोगेण पररूपानापत्तये आदुगेव सूत्रकृतोपात्तः इति प्रतीयते तथापि भाष्यकृता अकारोच्चारणसामर्थ्यात्पररूपं वारयित्वा अदुगेव प्रौढया स्थापित इति मनसि निधाय यथोत्तरं मुनीनां प्रामाण्येन अदुकमेवाह–**अदुगिति** ॥ २ 'एकेन न' इति विग्रहे तृतीयान्तस्यैकशब्दस्य ऊनार्थेन नञा 'पूर्वसदृशसमोनार्थ–' इति सूत्रेण समासे एकोनार्थकस्य 'एकन' शब्दस्य विंशत्या 'विशेषणं विशेष्येण' इति समासे 'एकनविंशति' शब्दे 'नलोपो नञः' इति नलोपे प्राप्ते 'एकादिश्च' इत्यनेन प्रकृतिभावः, एकस्य अदुगामश्च विधीयते इति निर्दोषरीत्या अकृतव्यूहपरिभाषाया उपसंजनिष्यमाणनिमित्तपरिभाषाया वा प्रवृत्तिं विनापि सकलेष्टसिद्धावपि यया रीत्या साधने उक्तपरिभाषाप्रवृत्तिं विना नेष्टसिद्धिः तामेव रीतिमाश्रित्य बोज्झलवङ्गपाकरपरिधानेन बोज्झसहनस्य दाक्षिणात्यानामादितः सिद्धतया गुरुभूतामेव प्रक्रियां प्रदर्शयति–**नञो विंशत्या सहेत्यादि** ॥ भाष्यानारूढयोगविभागाश्रयणमेव क्लेशः । नविंशतिरित्यवस्थायां नलोपवारणायोक्तपरिभाषाश्रयणम् 'एकादिश्च' इत्यस्य सामर्थ्यकल्पनं च क्लेश इति बोध्यम् ॥ ३ '**दशसूत्तर–**' इत्येव पाठः । न तु '**दशधासूत्तर–**' इति, भाष्ये वार्तिकोदाहरणेषु तथैवोपलम्भात् ॥ ४ 'धासु वा' इत्युत्तरवार्तिकेन 'षट् दधातीति षड्धा' इत्यत्र उत्वष्टुत्ववारणाय नानाधिकरणवाचिनो धाप्रत्ययस्यैव ग्रहणार्थबहुवचनघटितप्रधानशिष्टस्य उत्वस्यैव विकल्पः न तु संनिकृष्टोच्चारितस्य ष्टुत्वस्यापीति ष्टुत्वं तु नित्यमेवेति यद्यपि '**षोढा षड्ढा कुरु**' इत्युदाहरणपरभाष्यप्रदीपाभ्यां प्रतीयते तथापि हरदत्तानुरोधेन अधिकसिद्धौ न्यूनसिद्धेरपि जातत्वेनोत्वष्टुत्वयोर्विकल्पमाश्रित्योदाहरति–**षड्धेति** ॥ 'उत्वपक्षे नित्यं ष्टुत्वम् ( उत्वाभावे ष्टुत्वं न )' इति हि हरदत्तग्रन्थः ॥ ५ प्रधानलिङ्गबाधनार्थमिदमिति भावः ॥ ६ परवल्लिङ्गताया इत्यादिः ॥ तेन विशेष्यस्य प्रधानस्य यल्लिङ्गं तदेव भवतीति भावः ॥ ७ **अत एव** ॥ अलंपूर्वग्रहणादेव ॥ 'सुप्सुपा' इत्यनेन समासे तु अलमः पूर्वनिपातनियमानुपपत्तिरिति ज्ञापकाश्रयणमावश्यकमिति भावः ॥ ८ **समाहारेति** । अहोरात्रः द्व्यह इत्यादिषु ॥ ९ समाहारनपुंसकत्वेनेष्टसिद्धावपि 'रात्राह्नाहाः पुंसि' इत्येतद्बाधनायेदमिति बोध्यम् ॥ १० 'द्वन्द्वतत्पुरुषयोरधिकारेऽपि द्वन्द्वे तस्यासंभवादिति भावः ॥

इत्येव । अन्यत्र तु अपथो देशः ॥ कृतसमासान्तनिर्देशान्नेह–अपन्थाः ॥ A **अर्धर्चाः पुंसि च । २ । ४ । ३१ ॥** अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः ॥ अर्धर्चः । अर्धर्चम् । ध्वजः । ध्वजम् । एवं तीर्थ, शरीर, मण्ड, पीयूष, देह, अंकुश, कलश इत्यादि ॥ [ **जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् । १ । २ । ५८ ॥** एकोऽप्यर्थो वा बहुत्ववद्भवति ॥ ब्राह्मणाः पूज्याः । ब्राह्मणः पूज्यः ॥ **अस्मदो द्वयोश्च ।१।२।५९॥** एकत्वे द्वित्वे च विवक्षितेऽस्मदो बहुवचनं वा स्यात् ॥ वयं ब्रूमः । पक्षेऽहं ब्रवीमि,आवां ब्रूव इति वा ॥ **सविशेषणस्य प्रतिषेधः** * ॥ पटुरहं ब्रवीमि ॥ **फल्गुनीप्रोष्ठपदानां च नक्षत्रे ।१।२।६०॥** द्वित्वे बहुत्वप्रयुक्तं कार्यं वा स्यात् ॥ पूर्वे फल्गुन्यौ । पूर्वाः फल्गुन्यः । पूर्वे प्रोष्ठपदे । पूर्वाः प्रोष्ठपदाः ॥ नक्षत्रे किम् ? फल्गुन्यौ माणविके॥ **तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ।१।२।६३॥** बहुत्वं द्वित्ववद्भवति ॥ तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू ॥ तिष्येति किम् ? विशाखानुराधाः ॥ नक्षत्रेति किम् ? तिष्यपुनर्वसवो माणवकाः ॥ ] **स नपुंसकम् । २ । ४ । १७॥** समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् ॥ परवल्लिङ्गापवादः । पञ्चगवम् । दन्तोष्ठम् ॥ **अका-**

---

A अर्धर्च, गोमय, कषाय, कार्षापण, कुतप, कुणप, कपाट, शङ्ख गूथ, यूथ, ध्वज, कवन्ध, पद्म गृह, सरक, कंस, दिवस, यूष, अन्धकार, दण्ड, कमण्डलु, मण्ड भूत, द्वीप, द्यूत, चक्र धर्म, कर्म, मोदक, शतमान, यान, नख, नखर चरण, पुच्छ दाडिम हिम रजत, सक्तु, पिधान सार, पात्र, घृत, सैन्धव, औषध, आढक चषक द्रोण, खलीन, पात्रीव, षष्टीक, वार, बाण, प्रोथ, कपित्थ शुष्क शाल शील, शुक्ल, शीधु, कवच, रेणु, ऋण, कपट, शीकर मुसल, सुवर्ण वर्ण पूर्ण, चमस, क्षीर, कर्ष, आकाश, अष्टापद, मङ्गल, निधान निर्यास, जृम्भ, वृत्त, पुस्त, बुस्त, क्ष्वेडित, शृङ्ग निगड, खल, मधु मूल, मूलक, स्थूल, शराव, नाल, वप्र, विमान, मुख, प्रग्रीव, शूल, वज्र, कटक, कण्टक, कर्पट, शिखर, कल्क, नाट, मस्तक, वलय, कुसुम, तृण, पङ्क, कुण्डल, किरीट, कुमुद, अर्बुद, अङ्कुश, तिमिर, आश्रम, भूषण, इल्कस, मुकुल, वसन्त, तडाग, पिटक, विटङ्क, विडङ्ग, पिण्याक, माष, कोश, फलक, दिन, दैवत, पिनाक, समर, स्थाणु, अनीक, उपवास, शाक, कर्पास, विशाल, चषाल, खण्ड, दर, विटप, रण, वल, मृणाल, हस्त, आर्द्र, हल, सूत्र, ताण्डव, गाण्डीव, मण्डप, पटह, सौध, योध, पार्श्व, शरीर, देह, फल, छल, पुर, राष्ट्र, बिम्ब, अम्बर, कुट्टिम, मण्डल, कुक्कुट, कुडप, ककुद, खण्डल, तोमर, तोरण, मञ्चक, पञ्चक, पुङ्ख, मध्य, बाल, छाल, वल्मीक, वर्ष, वस्त्र, वसु, उद्यान, उद्योग, स्नेह, स्तन, स्तेन, स्वर, संगम, निष्क, क्षेम, शूक, छत्र, क्षत्र, पवित्र, यौवन, कलह, पालक, वल्कल, कुञ्ज, विहार, लोहित, विषाण, भवन, अरण्य, पुलिन, हल, दृढ, आसन, ऐरावत, शूर्प, तीर्थ, लोमश, तमाल, लोह, दण्डक, शपथ, प्रतिसर, दारु, धनुस्, मान, वर्चस्क, कूर्च, तण्डक, मठ, सहस्र, ओदन, प्रवाल, शकट, अपराह्ण, नीड, शकल, तण्डुल, मुस्तक । इत्यर्धर्चादिः ॥

---

१ कोष्ठकान्तर्गतस्य पाठस्य नात्रोपयोगः ॥ किंतु त्रयाणां षड्लिङ्गप्रकरणे, 'तिष्यपुनर्वस्वोः'–इत्यस्य द्वन्द्वप्रकरण एवोपयोग इति बोध्यम् ॥ **जात्याख्यायाम्** भावप्रत्ययं विना प्राधान्येन जातिवाचकतायाम् ॥ २ " **अर्थातिदेशात् सिद्धम्** " इति वार्तिकव्याख्यायाम् " **यावद् ब्रूयात् 'एकोऽर्थो बहुवद् भवति' इति, तावद् 'एकस्मिन् बहुवचनम्' इति**" इति भाष्यमनुसृत्याह–एकोऽप्यर्थो वेति ॥ इदं च सूत्रं " **जातिशब्देन द्रव्यमप्यभिधीयते जातिरपि । यदा द्रव्याभिधानं तदा बहुवचनं भविष्यति यदा सामान्याभिधानं तदैकवचनं भविष्यति**" इति भाष्यकृता प्रत्याख्यातम् ॥

**रान्तोत्तरपदो द्विगुः स्त्रियामिष्टः** * ॥ पञ्चमूली ॥ **आबन्तो वा** * पञ्चखट्वी । पञ्चखट्वम् ॥ **अनो नलोपश्च वा द्विगुः स्त्रियाम्** * ॥ पञ्चतक्षी । पञ्चतक्षम् ॥ **पात्राद्यन्तस्य न** * ॥ पञ्चपात्रम् । त्रिभुवनम् । चतुर्युगम् ॥ **पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा** * ॥ पुण्याहम् । सुदिनाहम्[2] ॥ **पथः संख्याव्ययादेः** * ॥ संख्याव्ययादेः परः कृतसमासान्तः पथशब्दः क्लीबमित्यर्थः । त्रयाणां पन्थास्त्रिपथम् । विरूपः पन्थाः विपथम्[3] । कृतसमासान्तनिर्देशान्नेह । सुपन्थाः । अतिपन्थाः ॥ **सामान्ये[4] नपुंसकम्** * ॥ मृदु[5] पचति । प्रातः कमनीयम् ॥ **तत्पुरुषोऽनञ्कर्मधारयः । २ । ४ । १९ ॥** अधिकारोऽयम् ॥ **संज्ञायां कन्थोशीनरेषु ।२।४।२०॥** कन्थान्तस्तत्पुरुषः क्लीबं स्यात्सा चेदुशीनरदेशोत्पन्नायाः कन्थायाः संज्ञा ॥ सुशमस्यापत्यानि सौशमयः तेषां कन्था सौशमिकन्थम् ॥ संज्ञायां किम् ? वीरणकन्था ॥ उशीनरेषु किम् ? दाक्षिकन्था ॥ **उपज्ञोपक्रमं[6] तदाद्याचिख्यासायाम् । २ । ४ । २१ ॥** उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात्, तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्राथम्यं चेदाख्यातुमिष्यते ॥ पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः । नन्दोपक्रमं द्रोणः ॥ **छाया बाहुल्ये । २।४। २२ ॥** छायान्तस्तत्पुरुषो नपुंसकं स्यात्पूर्वपदार्थबाहुल्ये ॥ विभाषासेनेति विकल्पस्यायमपवादः ॥ इक्षूणां छाया इक्षुच्छायम् ॥ इक्षुच्छायानिषादिन्य इति तु आसमन्तान्निषादिन्य इत्याङ्प्रश्लेषो बोध्यः ॥ **सभा राजाऽमनुष्यपूर्वा ।२।४।२३ ॥** राजपर्यायपूर्वोऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात् ॥ इनसभम् । ईश्वरसभम् ॥ **पर्यायस्यैवेष्यते[7]** * ॥ नेह—राजसभा । चन्द्रगुप्तसभा ॥ अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह । रक्षःसभम् । पिशाचसभम् ॥ **अशाला च । २ । ४ । २४ ॥**

---

१ समासान्तानां समासार्थालौकिकविग्रहान्तत्वमेव न तूत्तरपदावयवत्वमिति 'पञ्चराजम्' इत्यादौ न स्त्रीत्वमिति भावः ॥ २ सुदिनशब्दः प्रशस्तपर्याय इति बोध्यम् ॥ ३ विपथ इति तु 'वाटः **पथश्च** माथश्च' इति त्रिकाण्डशेषोक्तेनाकारान्तपथशब्देन समासे बोध्यः ॥ ४ **सामान्य इति** ॥ अलिङ्गस्य विशेष्यत्वविवक्षायां सलिङ्गस्य विशेष्यत्वेऽपि तत्संबन्धस्याविवक्षायां वा लिङ्गविशेषस्याविवक्षाया अङ्गीकारे लिङ्गसामान्यविवक्षायां नपुंसकमेव भवति इति भावः ॥ ५ अलिङ्गस्य विशेष्यत्वस्थलमुदाहरति—**मृदु पचतीत्यादि** । विशेष्यसंबन्धस्याविवक्षया विशेषणे लिङ्गविशेषस्याविवक्षायां लिङ्गसामान्यविवक्षायामेव यदि स्वादिप्रत्ययस्तदा नपुंसकलिङ्गस्यैव प्रयोगः—यथा साधीयो य एकहलादिः । कश्च साधीयः इति भाष्यप्रयोगे ॥ **शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्** ' इत्यत्र कर्मभूतायाः क्षुधः स्त्रीलिङ्गत्वेऽपि तत्संबन्धविवक्षायाः पूर्वमेव कर्मसामान्ये कृत्यप्रत्ययोत्पत्तिवेलायां लिङ्गविशेषस्याविवक्षया लिङ्गसामान्यविवक्षायामेव निष्पन्नकृदन्तोऽपि नपुंसकत्वमेवेति ' शक्यम् ' इत्यतो न क्षुत्समानलिङ्गोत्पत्तिः । पश्चात् क्षुद्रूपविशेषकर्मसंबन्धे कृत्येन कर्मण उक्तत्वेन 'क्षुद्' इति प्रथमैव । यदा तु कर्मसामान्यस्याप्यविवक्षायां भावे प्रत्ययः पश्चात् कर्मविवक्षया कर्मप्रयोगः, तदा कृत्यप्रत्ययेन कर्मणोऽनुक्तत्वेन ' क्षुधम्' इति द्वितीयाविभक्तिरिति भावः ॥ एतत्प्रामाण्यादेव **'सभा वा न प्रवेष्टव्यम्'** इत्यादयो बहुतरप्राचीनपुस्तकेषु पाठाः । एतदजानानैः प्राचीनविद्वद्भिस्तु 'सभा वा न प्रवेष्टव्या' इति शोधितम् ॥ कुल्लूकेन तु ल्यबन्तमध्याहृत्य तत्कर्मत्वेन द्वितीया समर्थितेति बोध्यम् ॥ ६ **'उपज्ञा ज्ञानमाद्यं स्यात् ज्ञात्वारम्भ उपक्रमः'** । इत्यमरः ॥ ७ **'जित्पर्यायवचनस्यैव राजाद्यर्थम्'** इति स्वरूपसूत्रवार्तिकार्थमाह—**पर्यायस्यैवेति** ॥

संघातार्था या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात् ॥ स्त्रीसभम्। स्त्रीसंघात इत्यर्थः ॥ अशाला किम्? धर्मसभा। धर्मशालेत्यर्थः ॥ **विभाषा सेनासुराच्छायाशालानिशानाम् ।२।४।२५॥** एतदन्तस्तत्पुरुषः क्लीबं वा स्यात् ॥ ब्राह्मणसेनम्। ब्राह्मणसेना। यवसुरम्। यवसुरा। कुड्यच्छायम्। कुड्यच्छाया। गोशालम्। गोशाला। श्वनिशम्। श्वनिशा। तत्पुरुषोऽनञ्कर्मधारय इत्यनुवृत्तेर्नेह। दृढसेनो राजा। असेना। परमसेना ॥

इति तत्पुरुषप्रकरणम्।

---

## अथ बहुव्रीहिप्रकरणम्।

**शेषो बहुव्रीहिः ।२।२।२३।** अधिकारोऽयम्। द्वितीयाश्रितेत्यादिना यस्य त्रिकस्य विशिष्य समासो नोक्तः सः शेषः, प्रथमान्तमित्यर्थः ॥ **अनेकमन्यपदार्थे। २।२।२४॥** अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते, स बहुव्रीहिः ॥ अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति, समानाधिकरणानामिति च फलितम्। प्राप्तमुदकं यं प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। पीताम्बरो हरिः। वीरपुरुषको ग्रामः ॥ प्रथमार्थे तु न--वृष्टे देवे गतः ॥ व्यधिकरणानामपि न--पञ्चभिर्भुक्तस्य ॥ **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः *** ॥ प्रपतितपर्णः। प्रपर्णः ॥ **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः *** ॥ अविद्यमानपुत्रः। अपुत्रः ॥ अस्तीति विभक्तिप्रतिरूपकमव्ययम्। अस्तिक्षीरा गौः ॥ **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ।६।२।३४॥** भाषितपुंस्कादनूङ् ऊङोऽभावो यस्यामिति बहुव्रीहिः। निपातनात्पञ्चम्या अलुक् षष्ठ्याश्च लुक्। तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽ-

---

१ 'यस्यां मत्ता निशि श्वानः श्वनिशं श्वनिशा च सा' इति केशवपुरुषोत्तमौ ॥ 'कृष्णचतुर्दशीत्याङ्गः शुनश्च चतुर्दश्यामुपवसतः पश्यामः' इति तिर्यगधिकरणे शाबरभाष्यम् ॥ २ 'शेषो बहुव्रीहिः' इति वाक्यस्य पाणिनीयत्वात् पाणिनीयोक्तादन्यः शेषः। पाणिनिना च 'प्रथमा' इति विशेषविभक्तिनाम्नः समासविधिष्वनुपात्तत्वादत्र प्रथमैव शेषपदार्थः इत्यभिप्रेत्याह-**प्रथमान्तमिति** ॥ ३ अन्यपदार्थे इत्यत्र यदन्यत्वं तत् प्रत्यासत्त्या शेषपदार्थप्रथमान्तापेक्षयैव गृह्यते इत्याशयेनाह-**अप्रथमाविभक्त्यर्थे इति** ॥ ४ 'बहुव्रीहिः समानाधिकरणानाम्' इति वार्तिकप्रत्याख्यात् "न वाऽनभिधानादसमानाधिकरणेषु समाससञ्ज्ञाभावः" इति वार्तिकमनुसृत्याह-**समानाधीति** ॥ ५ अप्रथमाविभक्त्यर्थे इत्यस्य फलमाह-**प्रथमेति** ॥ 'समानाधिकरणानाम्' इत्यस्य फलमाह-**पञ्चभिरिति** ॥ ६ **प्रादिभ्य इति** प्रादिभ्यः परं यद् धातुजं तदन्तप्रकृतिकं प्रथमान्तं प्रथमान्तेनैव अन्यपदार्थे वर्तमानं यथा स्यात् तथा समस्यते इति सूत्रसिद्धार्थानुवादः। विधेयं वाचनिकमाह-**वा चेति**। **उत्तरपदेति**। समस्यमानपूर्वपदवृत्त्युत्तरपदलोप इत्यर्थः ॥ ७ **नञ इति**। नञः परं यद् अस्त्यर्थं तदन्तप्रकृतिकप्रथमान्तं प्रथमान्तेनैव अन्यपदार्थे वर्तमानं यथा स्यात् तथा समस्यत इति सूत्रसिद्धार्थानुवादः। वाचनिकं विधेयमाह-**वा चेति** ॥ ८ 'अस्तिक्षीरा' इत्यादावस्तीत्यस्य तिङन्तत्वेन प्रथमान्तत्वाभावात् कथं समास इति शङ्कामपनुदति-**अस्तीति** ॥ ९ **निपातनादिति**। शास्त्रानन्विते पारिनिष्ठितत्वाङ्गीकारो निपातनम् ॥ १० भाषितः पुमान् यस्मिन्नर्थे सोऽर्थो भाषितपुंस्कः सोऽस्ति यस्येति भाषितपुंस्कं प्रातिपदिकमिति वृत्तिद्वयफलितमाह-**तुल्ये प्रवृत्तिनिमित्त इति** ॥

भावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात्समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे नतु पूरण्यां प्रियादौ च परतः ॥ गोस्त्रियोरिति ह्रस्वः । चित्रा गावो यस्येति लौकिकविग्रहे चित्रा अस् गो अस् इत्यलौकिकविग्रहे । चित्रगुः । रूपवद्भार्यः ॥ चित्रा [1]जरती गौर्यस्येति विग्रहे अनेकोक्तेर्बहूनामपि बहुव्रीहिः । अत्र केचित्–चित्राजरतीगुः । जरतीचित्रागुर्वा । एवं दीर्घातन्वीजङ्घः। तन्वीदीर्घाजङ्घः। त्रिपदे बहुव्रीहौ प्रथमं न पुंवत् । उत्तरपदस्य मध्यमेन व्यवधानात् । द्वितीयमपि न पुंवत् । पूर्वपदत्वाभावात् । उत्तरपदशब्दो[2] हि समासस्य चरमावयवे रूढः । पूर्वपदशब्दस्तु प्रथमावयवे रूढ इति वदन्ति ॥ वस्तुतस्तु नेह पूर्वपदमाक्षिप्यते 'आनङ् ऋतः' इत्यत्र यथा । तेनोपान्त्यस्य पुंवदेव–चित्राजरद्गुरित्यादि । अत एव चित्रा जरत्यौ गावौ यस्येति द्वन्द्वगर्भेऽपि[3] चित्राजरद्गुरिति भाष्यम्॥कर्मधारयपूर्वपदे तु द्वयोरपि पुंवत्–जरच्चित्रगुः[4] । कर्मधारयोत्तरपदे तु–चित्रजरद्गवीकः ॥ स्त्रियाः किम् ? ग्रामणि कुलं[5] दृष्टिरस्य ग्रामणिदृष्टिः ॥ भाषितपुंस्कात्किम् ? गङ्गाभार्यः ॥ अनूङ् किम् ? वामोरूभार्यः । समानाधिकरणे किम् ? कल्याण्याः[6] माता कल्याणीमाता ॥ स्त्रियां किम् ? कल्याणी प्रधानं यस्य स कल्याणीप्रधानः ॥ पूरण्यां तु–॥ **अप्पूरणीप्रमाण्योः** ।५।४।११६ ॥ पूरणार्थप्रत्ययान्तं यत् स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात् ॥ कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः । स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः ॥ पुंवद्भावप्रतिषेधोऽप्प्रत्ययश्च प्रधानपूरण्यामेव । रात्रिः पूरणी[7] वाच्या चेत्युक्तोदाहरणे मुख्या ॥ अन्यत्र तु–॥ **नद्यृतश्च** ।५।४।१५३ ॥

---

१ चित्रः पटः, चित्रा शाटी, चित्रं वस्त्रम्, इति चित्रशब्दस्यानेकविधरूपसमाहाररूपं प्रवृत्तिनिमित्तमुद्दिश्यैव पुंसि स्त्रियां क्लीबे च प्रवृत्तिदर्शनादनेकविधरूपसमाहारे प्रवृत्तिनिमित्ते भाषितपुंस्कात् चित्रशब्दात् परत्र ऊङो ऽनवेक्षणात् चित्राशब्दः पुंवदेव जात इति टापो निवृत्तिरिति भावः ॥ गर्भिभार्य इत्यादौ पुंस्यपि गर्भवत्त्वस्य ऐतरेयोपनिषदि प्रतिपादनात् गर्भिन्' शब्दस्य भाषितपुंस्कत्वेन पुंवद्भावसिद्धिरिति सर्वं समञ्जसम् ॥ २ मध्यमस्य जरतीशब्दस्य पूर्वोच्चारितचित्राशब्दापेक्षयोत्तरत्वेऽप्युत्तरपदत्वाभावे गोशब्दापेक्षया पूर्वत्वस्याव्याहतत्वेऽपि पूर्वपदत्वाभावे च युक्तिमाह–**उत्तरपदशब्दो हीति** ॥ ३ द्वन्द्वस्य पूर्वपदत्वेऽपि भाषितपुंस्कत्वाभावान्नैव पुंवत्त्वप्राप्तिरिति तत्र पुंवत्त्वदर्शनेन उत्तरपदे परतः पूर्वमात्रस्यैव पुंवत्त्वं निश्चीयत इति भावः ॥ शेखरकृतस्तु–परे त्वाक्षेपेऽपि न दोषः 'धर्मादनिच् केवलात्' इत्यत्र त्रिपदव्यावृत्तये उपात्तं'केवलात्'इति पदं समासाक्षिप्तपूर्वपदशब्दस्य यौगिकत्वं ज्ञापयति–इति वदन्ति ॥ अत्र दाधिमथाः–समासान्तप्रकरणे उत्तरपद–पूर्वपदशब्दयोरभावेन 'धर्मादनिच् केवलात्' इत्यत्र 'केवलात्' इति पञ्चम्या 'उत्तरस्य' इत्यस्योपस्थित्या उत्तरत्वस्य पूर्वत्वसापेक्षत्वेन तदाक्षेपे 'केवलात् असहायात् असमस्ताद् उत्तराद् धर्मशब्दात्' इत्येवमर्थसामञ्जस्येन पूर्वपदाक्षेपे मानाभावात् । समासान्तप्रकरणे तथाकल्पनेऽपि प्रकरणान्तरे 'अलुगुत्तरपदे' इत्यधिकारेऽपि तथाकल्पने मानाभावाच्च ॥ किंच यदि पूर्वपदशब्दस्तत्र यौगिक एव स्यात् न रूढः, तर्हि 'ढ्रलोपे–इति सूत्रे-पूर्वमात्रग्रहणार्थं पूर्वशब्दोपादानं व्यर्थमेव स्यात् ॥ इति वदन्ति ॥ ४ 'जरती चासौ चित्रा च' इति विग्रहे 'जरच्चित्रा' शब्दं निष्पाद्य तस्य गोशब्देन समासे इत्याशयः ॥ ५ ग्रामणीशब्दस्य नपुंसकत्वेन नैव स्त्रीलिङ्गत्वमिति भावं दर्शयितुमेव 'कुलम्' इत्यस्य प्रयोगः ॥ ६ कल्याणी कन्या, ततस्तस्या माता भिन्नैवेति न सामानाधिकरण्यम् ॥ ७ पूरणी पञ्चसंख्यापूरणी चतसृषु रात्रिषु एकस्या रात्रेरेव योगेन पञ्चकं रात्रीणां भवतीति भावः ॥ वाच्या अन्यपदार्थभूते रात्रिसमूहे उद्भूतावयवे तस्याः पञ्चम्याः रात्रेरपि शक्यतावच्छेदकरात्रित्वविशिष्टतयाऽन्तर्भावादिति भावः ॥

नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप्स्यात् ॥ पुंवद्भावः ॥ **केऽणः । ७ । ४ । १३ ॥** के परेऽणो ह्रस्वः स्यात् ॥ इति प्राप्ते—॥ **न कपि।७।४।१४ ॥** कपि परे ह्रस्वो न स्यात् ॥ कल्याणपञ्चमीकः पक्षः । अत्र तिरोहितावयवभेदस्य पक्ष[1]स्यान्यपदार्थतया रात्रिरप्रधानम् ॥ बहुकर्तृकः ॥ अप्रियादिषु[2] किम् ? कल्याणीप्रियः । प्रिया । मनोज्ञा । कल्याणी । सुभगा । दुर्भगा । भक्तिः । सचिवा । स्वसा । कान्ता । क्षान्ता । समा । चपला । दुहिता । वामा । अबला । तनया ॥ सामान्ये नपुंसकम् ॥ दृढं भक्तिर्यस्य स दृढ[3]भक्तिः । स्त्रीत्वविवक्षायां तु-दृढाभक्तिः॥ **तसिलादिष्वाकृत्वसुचः ।६।३।३५ ॥** तसिलादिषु कृत्वसुजन्तेषु परेषु स्त्रियाः पुंवत्स्यात् ॥ परिगणनं कर्तव्यम् । अव्या[4]प्त्यतिव्याप्तिपरिहाराय । त्रतसौ । तरप्तमपौ । चरड्जातीयरौ । कल्पब्देशीयरौ । रूपप्पाशपौ । थाल् । तिल्थ्यनौ। बह्वीषु बहुत्र । बहुतः । दर्शनीयतरा । दर्शनीयतमा ॥ घरूपेति वक्ष्यमाणो ह्रस्वः परत्वात्पुंवद्भावं बाधते । पट्वितरा । पट्वितमा ॥ पटुचरी । पटुजातीया । दर्शनीयकल्पा । दर्शनीयदेशीया । दर्शनीयरूपा । दर्शनीयपाशा । बहुथा । प्रशस्ता वृकी वृकतिः । अजाभ्यो हिता अजथ्या ॥ **शसि[5] बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः * ॥** बह्वीभ्यो देहि बहुशः ॥ अल्पाभ्यो देहि अल्पशः ॥ **त्वतलोर्गुण[6]वचनस्य* ॥** शुक्लाया भावः शुक्लत्वम् । शुक्लता ॥ गुणवचनस्य किम् ? कर्त्र्या भावः कर्त्रीत्वम् ॥ शरद[7]ः कृतार्थतेत्यादौ तु सामान्ये नपुंसकम् ॥ **भस्याढे तद्धिते * ॥** हस्तिनीनां समूहो हास्तिकम् । अढे किम् ? रौहिणेय[9]ः ॥ स्त्रीभ्यो ढगिति ढोऽत्र गृ[10]ह्यते । अग्नेर्ढगिति ढकि तु पुंवदेव ॥

---

१ **पक्षस्येति** । पक्षत्वेन पक्षस्य शक्यतया पक्षत्वस्यैव शक्यतावच्छेदकतया रात्रेः शक्यताभावेन रात्रित्वस्य शक्यतानवच्छेदकत्वाद्रात्रिरप्रधानमेवेति भावः ॥ २ एतदनुरोधेनापि '**पूरण्यां तु**' इत्यस्य स्थाने '**अपूरण्यां किम्**' इत्येव पाठ उचितः ॥ यद्वा तत्र '**अपूरणीप्रियादिष्विति किम्**' इति पाठो भवेत् । अत्र तु 'प्रियादौ तु–' इत्येवं पाठो भवेत् ॥ ३ लिङ्गत्वेन लिङ्गसामान्यविवक्षायामपि स्त्रीत्वस्य विवक्षा वर्तत एवेति सामानाधिकरण्यमव्याहतमिति 'समानाधिकरणानां बहुव्रीहिः' इति फलितनियमेऽपि समाससिद्धिरिति भावः ॥ ४ **अव्याप्त्यतिव्याप्तीति** । तसिलादिषु तिल्थ्यन्शसादीनां पाठाभावेऽपि तत्र पुंवद्भावस्येष्टत्वेनाव्याप्तिः, देश्यादीनां तत्र पाठेऽपि तेषु पुंवद्भावस्यानिष्टत्वादतिव्याप्तिरिति भावः ॥ ५ प्रकृत्यन्तरवारणाय प्रकृतिप्रत्ययोभयोपादानाय परिगणनात्परतोऽपि परिगणनमेव वार्तिकरूपतया भाष्यकृदेव वर्णयति- **शसि बह्वल्पार्थस्येति** । शसः परिगणन एव तात्पर्यम् । बह्वल्पार्थादन्यतः शसो विधानाभावात् । 'संख्यैकवचनात्' इत्युत्तरसूत्रविहिते प्रयोजनाभावाच्चेति बोध्यम् ॥ ६ **गुणवचनस्येति** । आकडारसूत्रभाष्योक्तः संज्ञाकृदन्ततद्धितान्तसमस्तसर्वनामसंख्याशब्दातिरिक्तः शब्द एव गुणवचनशब्देनोच्यते । अत एव 'एक तद्धिते च' इति सूत्रे भाष्यकृता 'एकत्वम्' इत्यस्य 'त्वतलोः–' इत्यनेनासिद्धिः कथिता । अत एव गुणवचनस्य प्रत्युदाहरणम् 'कर्त्र्या भावः कर्त्रीत्वम्' दत्तम् । कर्त्रीशब्दस्य कृदन्तत्वेन गुणवचनत्वाभावात् ॥ ७ 'कृतार्था' शब्दस्य समस्तत्वेन गुणवचनत्वाभावात्पुंवद्भावाप्राप्तौ 'कृतार्थता' इति प्रयोगः कथमिति शङ्कां निकारोति-**शरद इत्यादि** ॥ ८ 'भसंज्ञाप्रयोजके ढभिन्ने तद्धिते चिकीर्षित एव भाषितपुंस्कं पुंवद् भवति' इति वार्तिकार्थो 'भिक्षादिभ्योऽण्' इतिसूत्रभाष्यसंमतः ॥ ९ पुंवद्भावे 'रौहितेयः' इति स्यात् ॥ १० **गृह्यते इति** । व्याख्यानमेवात्र शरणम् ॥

अग्नायी देवताऽस्यस्थालीपाकस्याग्नेयः॥ सपत्नीशब्दस्त्रिधा।शत्रुपर्यायात्सपत्नशब्दाच्छार्ङ्गरवादित्वात् ङीन्येकः। समानः पतिर्यस्या इति विग्रहे विवाहनिबन्धनं पतिशब्दमाश्रित्य नित्यस्त्रीलिङ्गो द्वितीयः। स्वामिपर्यायपतिशब्देन भाषितपुंस्कस्तृतीयः॥ आद्ययोः शिवाद्यण्। सपत्न्या अपत्यं सापत्नः। तृतीयात्तु लिङ्गविशिष्टपरिभाषया पत्युत्तरपदलक्षणो ण्य एव। न त्वण्। शिवादौ रूढयोरेव ग्रहणात्। सापत्यः। **ठक्छसोश्च** * ॥ भवत्याश्छात्रा भावत्काः। भवदीयाः। एतद्वार्तिकम्, 'एकतद्धिते च' इति सूत्रं च न कर्तव्यम् '**सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः**' इति भाष्यकारेष्ट्या गतार्थत्वात्। सर्वमयः। सर्वकाम्यति। सर्विका भार्या यस्य स सर्वकभार्यः। सर्वप्रिय इत्यादि॥ पूर्वस्यैवेदम्। भस्त्रैषाद्वेति लिङ्गात्। तेनाकचि एकशेषवृत्तौ च न। सर्विका। सर्वाः॥ **कुक्कुट्यादीनामण्डादिषु**A * ॥ कुक्कुट्या अण्डं कुक्कुटाण्डम्। मृग्याः पदं मृगपदम्। मृगक्षीरम्। काकशावः॥ **क्यङ्मानिनोश्च** ६। ३। ३६ ॥ एतयोः परतः पुंवत्॥ एनीवाचरति एतायते। श्येनीवाचरति श्येतायते। स्वभिन्नां कांचिद्दर्शनीयां मन्यते दर्शनी-

---

Aकुक्कुटी, मृगी, काकी॥ अण्ड, पद, शाव, क्षीर॥ इति कुक्कुट्यादिरण्डादिश्च॥

---

१ अग्नाविवाग्नाय्यामपि प्रवृत्तिनिमित्तम् अग्नित्वमेव 'पुंयोगादाख्यायाम्' इति सूत्रे 'अयमप्यभिसंबन्धो भवति-'सोऽयम्' इति इत्यादिभाष्यग्रन्थेन प्रतीयत इति भाषितपुंस्कत्वमव्याहतमेवेति ढक्चिकीर्षायामेव पुंवत्त्वेन ङीबैकारागमयोरप्राप्त्या 'यस्येति च' इतीकारलोपे रूपं सिध्यतीति भावः॥ २ सपत्न इव सपत्न्यामपि शत्रुत्वमेव प्रवृत्तिनिमित्तमिति ङीनन्तः सपत्नीशब्दो भाषितपुंस्क इति अण्चिकीर्षायामेव पुंवत्त्वं तत्र भवत्येवेति ङीनोऽप्राप्तौ सपत्नशब्दादेव अणि 'यस्येति च' इत्यकारलोपे सापत्न इति सिध्यति। 'नित्यं सपत्न्यादिषु' इति निष्पन्नसपत्नीशब्दस्याभाषितपुंस्कत्वात् पुंवद्भावाप्राप्त्या नान्तलक्षणङीपो दुर्वारत्वेन तदन्ताद् अणि 'यस्येति च' इतीकारलोपे 'सापत्नः' इति सिध्यतीति भावः॥ ३ संभावितलिङ्गबोधकप्रत्ययविशिष्टस्यापीत्यपि तन्त्रेण परिभाषार्थः न तु 'लिङ्गबोधकप्रत्ययविशिष्टस्य' इत्येवार्थः, प्रत्ययचिकीर्षायामेव पुंवद्भावे जाते स्त्रीत्वाभावादेव स्त्रीप्रत्ययाप्राप्तावेतत्परिभाषोपन्यासवैयर्थ्यापत्तेः 'यदि पुंवत्त्वं न स्यात् तर्हि लिङ्गबोधकटाबादीनामुत्पत्तिः स्यादिति संभावनायाः सत्त्वमिति भावः॥ वस्तुतस्तु प्रत्ययचिकीर्षायामेव पुंवत्त्वे स्त्रीप्रत्ययाप्राप्तौ पत्युत्तरपदत्वमव्याहतमेवेति ण्यप्रत्यये 'यस्येति च' इतीकारलोपे सापत्यसिद्धिरिति परिभाषोपन्यासो व्यर्थ एवेति बोध्यम्॥ ४ **वृत्तिमात्र इति**। वृत्तिमात्रविवक्षायामेव पुंवत्त्वं विधीयते। तेन वृत्तितः प्रागेव पुंवद्भावेन स्त्रीत्वाभावात् टाबादीनां नैव प्राप्तिरिति लाघवम्। जातानां निवृत्तिकल्पनायां तु गौरवं स्यादिति बोध्यम्॥ ५ **गतार्थत्वादिति**। एवं च सूत्रवार्तिके स्पष्टार्थे एव 'आचार्याः सूत्राणि कृत्वा न निवर्तयन्ति' इति न्यायात्प्रपञ्चार्थे॥ अस्याश्चेष्टेर्विषये पुंवद्भावप्रतिषेधः परिगणितातिरिक्तेऽप्रवृत्तिश्च नैव भवति॥ ६ परिगणिततसिलाद्यतिरिक्तमयडादिस्थलेऽपि प्रवृत्तिं दर्शयति-**सर्वमय इति**॥ ७ 'न कोपधायाः' इति 'अपूरणीप्रियादिषु' इति प्रतिषेधस्थलेऽपि प्रवृत्तिं दर्शयति-**सर्वकभार्य इत्यादि**॥ ८ **पूर्वस्यैवेदमिति**। वृत्तिघटकानेकभागमध्ये किंचिदपेक्षया पूर्वस्यैवेत्यर्थः॥ ९ **लिङ्गादिति**। पूर्वस्यैवेति नियमाभावे एषा द्वा एताभ्यामकचि वृत्तौ विवक्षितायामेव पुंवत्त्वेन टापोऽप्रवृत्त्या एषक सु द्वक औ इत्यवस्थायाम् आप्परत्वाभावाद् आपि विधीयमानमित्त्वं निर्विषयमेव स्यादिति भावः॥ १० वार्तिकमिदं 'जात्यन्तरनिवृत्तिफलकजातिमात्रवाचकत्वाभिप्रायेण लिङ्गविशेषाविवक्षया 'प्रयुक्तकुक्कुटादिशब्दानामेव समासेन सर्वेष्टसिद्धिः, इत्यर्थकेन "**नवाऽस्त्रीपूर्वपदविवक्षितत्वात्**॥" * ॥ इति वार्तिकेन प्रत्याख्यातं भाष्यकृता॥ ११ '**मानिन्ग्रहणमन्यर्थमसामानाधिकरण्यार्थं च**' इति वार्तिकार्थं प्रदर्शयन् असमानाधिकरणोदाहरणं निर्दिशति-**स्वभिन्नामिति**॥

यमानिनी । दर्शनीयां स्त्रियं मन्यते दर्शनीयमानी चैत्रः ॥ **न कोपधायाः । ६ । ३ । ३७॥** कोपधायाः स्त्रिया न पुंवत् ॥ पाचिकाभार्यः । रसिकाभार्यः । मद्रिकायते । मद्रिकामानिनी ॥ **कोपधप्रतिषेधे तद्धितवुग्रहणम्** * ॥ नेह—पाका भार्या यस्य स पाकभार्यः ॥ **संज्ञापूरण्योश्च । ६ । ३ । ३८ ॥** अनयोर्न पुंवत् ॥ दत्ताभार्यः । दत्तामानिनी । दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्ति ॥ पञ्चमीभार्यः । पञ्चमीपाशा ॥ **वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे । ६ । ३। ३९॥** वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत् ॥ स्रौघ्नीभार्यः । माथुरीयते । माथुरीमानिनी ॥ वृद्धिनिमित्तस्य किम् ? मध्यमभार्यः ॥ तद्धितस्य किम् ? काण्डलावभार्यः ॥ वृद्धिशब्देन किम् ? तावद्भार्यः । रक्ते तु काषायी कन्था यस्य स काषायकन्थः ॥ विकारे तु हैमी मुद्रिका यस्येति हैममुद्रिकः [ वृद्धिशब्देन वृद्धिं प्रति फलोपधानाभावादिह पुंवत् । वैयाकरणभार्यः । सौवश्वभार्यः ॥ ] **स्वाङ्गाच्चेतः । ६ । ३ । ४० ॥** स्वाङ्गाद्य ईकारस्तदन्ता स्त्री न पुंवत् ॥ सुकेशीभार्यः ॥ स्वाङ्गात्किम् ? पटुभार्यः ॥ ईतः किम् ? अकेशभार्यः ॥ **अमानिनीति**

---

१ अरुच्यर्थस्योदाहरणं निर्दिशति—**दर्शनीयमानी चैत्र इति** ॥ २ '**न कोपधायाः' इत्ययं योगः पुंवद्भावमात्रस्य विषये'** इति भाष्ये '**पुंवद्भावमात्रस्य** इत्यनेन 'स्त्रियाः पुंवत्—' 'तसिलादिषु—' 'क्यङ्मानिनोः' इति सूत्रत्रयमेव गृह्यते 'भस्याढे' इत्यादीनि वार्तिकानि तु परिगणनशेषभूतान्येवेति दाधिमथैकगम्यो मार्गः ॥ कैयटादयस्तु—**पुंवद्भावमात्रस्य**' इत्यनेन सूत्रविहितो वार्तिकविहितश्च गृह्यते इत्याहुः ॥ ३ तद्धितश्च वुश्च तयोर्ग्रहणमित्यर्थः । पूर्वनिपातप्रकरणस्यानित्यत्वे बहून्येव प्रमाणानि ॥ ४ 'पोतः पाकोऽर्भको डिम्भः' इति प्रथमवयोवाची 'अर्भकपृथुकपाका वयसि' इत्युणादिसूत्रेण 'पा' धातोः कप्प्रत्ययान्तः पाकशब्दोऽजादिगणे बोधनीयः ॥ नेह तद्धितककारः, नापि वुरिति भावः ॥ ५ '**ततः ( न कोपधाया इत्यतः ) उत्तरमेवमाद्यनुक्रमणमाद्यस्य योगस्य विषये** इति भाष्ये यद्यपि '**आद्यस्य**' इत्यनेन 'स्त्रियाः पुंवद्' इत्यस्य, नतु 'तसिलादिषु' इत्यादिसूत्रद्वयस्य इत्येवाक्षरमर्यादया लभ्यते तथापि '**आद्यस्य**' इत्यनेन 'पाणिनीयसूत्रमात्रविहितस्यैव ग्रहणमिति न वार्तिकविहितपुंवद्भावस्य' इति कैयटादिसंमतमर्थमेवानुसृत्योदाहरति—**दत्तामानिनीति** ॥ 'अक्षरमर्यादालब्धमेव '**आद्यस्य**' इत्यस्य 'स्त्रियाः पुंवत्' इत्यस्य' इत्यर्थमाश्रयतां दाधिमथानां मते तु 'दत्तमानिनी' इत्येव भवितव्यमिति मात्सर्यमुत्सार्य विचार्यमाचार्यवर्यैः ॥ ६ संज्ञायां भाषितपुंस्कमुपपादयति—**दानक्रियेति** ॥ ७ काण्डलावशब्दे 'कर्मण्यण्' इति कृत्संज्ञकोऽण्, न तु तद्धितसंज्ञः ॥ ८ 'आ सर्वनाम्नः' इति वृद्धिशब्दमुच्चार्य वृद्धिराकाररूपा न विहिता, किं तु 'आ' शब्दमुच्चार्येति न पुंवद्भावप्रतिषेधः ॥ ९ अयं कोष्ठकान्तर्गतः पाठो यद्यपि "तावद्भार्यः" इत्यनन्तरमेवोचिततरः त्रद्भावस्येष्टत्वे प्रतिभाति । तथापि तावद्भार्यं इत्यत्रैव पुंवद्भावस्य सिद्धये व्यधिकरणसमासस्य वृद्धिसंज्ञासूत्रे व्यक्ततोक्तत्वेन णित्ञित्किदन्यतमतद्धितस्यैव पुंवद्भावप्रतिषेधनिमित्ततायाः स्पष्टमुपपादितत्वाद् वैयाकरणसौवश्वादौ तत्सत्त्वेन पुंवद्भावप्रतिषेधो ध्वन्यते इति भाष्यकारमते नैव वैयाकरणतावत्शब्दयोः पुंवद्भावे तुल्यतोत कैयटाद्यनुसरणं च 'बाधेऽदृढेऽन्यसाम्यात्किं दृढेऽन्यदपि बाध्यताम्' इति मनसि निधाय 'वृद्धिनिमित्तस्य च' इति सूत्रकैयटोक्तं प्रयोगं साधयितुं पृथगुपन्यासः कृतः ॥ १० 'सहनञ्विद्यमानपूर्वाच्च' इति ङीषः प्रतिषेधे टाबेव भवति ॥ ११ उक्तभाष्ये आद्यशब्देन प्रथमकालोद्भूतसूत्राणामेव ग्रहणं 'क्यङ्मानिनोः' इति सूत्रप्राप्तपुंवत्त्वस्य प्रसवभूतमिदं वार्तिकम् ॥ आद्यशब्देन याः पुंवत्' इति सूत्रमेव प्रथमोपात्तत्वाद् गृह्यते इति दाधिमथानां मते तु एतद्वार्तिकार्थानुवादकमेवोक्तभाष्यम्, स्थालीपुलाकन्यायेनोक्तभाष्यमपेक्ष्यैवेदं वार्तिकमिति वा बोध्यम् ॥

**वक्तव्यम्** * ॥ सुकेशमानिनी ॥ **जातेश्च** । ६।३।४१ ॥ जातेः परो यः स्त्रीप्रत्ययस्तदन्तं न पुंवत् ॥ शूद्राभार्यः । ब्राह्मणीभार्यः ॥ सौत्रस्यैवायं निषेधः । तेन हस्तिनीनां समूहो हास्तिकमित्यत्र 'भस्याढे–' इति तु भवत्येव ॥ **संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये** ।२।२।२५॥ संख्येयार्थया संख्ययाऽव्ययादयः समस्यन्ते, स बहुव्रीहिः ॥ दशानां समीपे ये संति ते उपदशाः । नव एकादश वेत्यर्थः ॥ 'बहुव्रीहौ संख्येये' इति वक्ष्यमाणो डच् ॥ **ति विंशतेर्डिति** ।६।४ ।१४२॥ विंशतेर्भस्य तिशब्दस्य लोपः स्याड्डिति ॥ आसन्नविंशाः। विंशतेरासन्ना इत्यर्थः ॥ अदूरत्रिंशाः । अधिकचत्वारिंशाः । द्वौ वा त्रयो वा द्वित्राः । द्विरावृत्ता दश द्विदशाः । विंशतिरित्यर्थः ॥ **दिङ्नामान्यन्तराले** । २ । २ । २६ ॥ दिशो नामान्यन्तराले वाच्ये प्राग्वत् ॥ दक्षिणस्याः पूर्वस्याश्च दिशोऽन्तरालं दक्षिणपूर्वा । नामग्रहणाद्यौगिकानां न । ऐन्द्र्याश्च कौबेर्याश्चान्तरालं दिक् ॥ **तत्र तेनेदमिति सरूपे** ।२ । २। २७॥ सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे द्योत्ये, स बहुव्रीहिः । इतिशब्दादयं विषयविशेषो लभ्यते ॥ **अन्येषामपि दृश्यते** ।६।३।१३७ ॥ दीर्घ इत्यनुवर्तते । इचि कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घः । इच् समासान्तो वक्ष्यते । तिष्ठद्गुप्रभृतिष्विच्प्रत्ययस्य पाठादव्ययीभावत्वमव्ययत्वं च । केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं केशाकेशि । दण्डैर्दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि । मुष्टीमुष्टि ॥ **ओर्गुणः** ।३।४।१४६ ॥ उवर्णान्तस्य भस्य गुणः स्यात्तद्धिते ॥ अवादेशः । बाहूबाहवि ॥ ओरोदिति वक्तव्ये गुणोक्तिः '**संज्ञापूर्वको विधिरनित्यः**' इति ज्ञापयितुम् । तेन स्वायम्भुवमित्यादि सिद्धम् ॥ सरूपे इति किम्? हलेन मुसलेन ॥ **तेन सहेति तुल्ययोगे** ।२। २। २८ ॥तुल्ययोगे वर्तमानं सहेत्येतत्तृतीयान्तेन प्राग्वत् ॥**वोपसर्जनस्य** ।६।३।८२॥बहु-

---

१ 'सकृदाख्यातनिर्ग्राह्या' इति जातिलक्षणमवसेयम् ॥ २ 'स्त्रियाः पुंवत्' इत्यस्यापवादस्यसूत्रस्यैवायं निषेध इति दाधिमथसिद्धान्ते 'भस्याढे' इत्यस्य तसिलादिपरिगणनशेषत्वेन दोषाभावेऽपि कैयटाद्यनुसारेण पाणिनीयसूत्रपरत्वमाद्यपदस्येत्यभिप्रायेणाह–**सौत्रस्यवति** ॥ ३ डच्प्रत्यये जाते 'नस्तद्धिते' इति 'टेः' इति वाऽनो लोपः ॥ ४ 'टेः' इत्यनेन प्राप्तं टिलोपं बाधितुं तिमात्रस्य लोपं विधातुमिदं सूत्रमिति तिशब्दस्य लोपे कृते 'अतो गुणे' इति पररूपमिति भावः ॥ ५ 'टेः' इत्यनेन टिलोप इति भावः ॥ ६ नामपदस्य रूढेष्वेव रूढेरिति भावः ॥ ७ **'तृतीयासप्तम्यन्तेषु च क्रियाभिधानात्'** इति वार्तिके 'क्रियाऽभिधीयते' इति भाष्ये च सामान्यतः क्रियाया अभिधानमुक्तम् । उपलभ्यन्ते च 'कर्णाकर्णि प्रथितमयशः' 'हस्ताहस्तिमिषात् स्पृशन् कुचतटीम्' इत्यादौ प्रथनस्पर्शनक्रियाभिधानेऽपि सूत्रेणानेन बहुव्रीहिः । तथापि 'युद्धक्रियायामेव भवति' इति प्रदीप एवकारदर्शनात्तदनुसारेणैव स्वयमपि निर्दिशति–**इदं युद्धमिति** ॥ ८ **ओरोदितीति** । 'संज्ञाशब्दानामर्थमात्रत्वम्' इत्येतदनाश्रित्येदमिति भावः ॥ ९ संज्ञारूपं यत्र विधेयसमर्पकं स एव संज्ञापूर्वको विधिरिति संज्ञानिमित्तकानां न तत्त्वम् ॥ भाष्ये त्वेषा न दृश्यते इति स्वायंभुव इत्यादीनामसाधुतैवेति शेखरकृत् ॥ 'पृषोदरादीनि' इति सूत्रे भाष्यकृता 'शिष्टप्रयुक्तत्वमेव साधुत्वनियामकम्' इत्युक्तत्वेन शिष्टप्रयोगसाधकानां प्राचीनवैयाकरणतन्त्रे वाचनिकानां पाणिनीयतन्त्रे यथाकथंचिदपि स्वीकारस्यात्यावश्यकत्वमेवेति सारग्राहिणां दाधिमथानां सिद्धान्तः ॥ १० लौकिकमप्रधानत्वरूपं शास्त्रीयं प्रथमानिर्दिष्टत्वरूपं चोभयविधमेवोपसर्जनत्वं यत्रास्ति घटकसकलपदानां तादृशः समासो बहुव्रीहिरेवेत्याशयेनाह--बहुव्रीह्यवयवस्येति ॥

व्रीह्यवयस्य सहस्य सः स्याद्वा ॥ पुत्रेण सह सपुत्रः सहपुत्रो वा आगतः ॥ **तुल्ययोगवचनं प्रायिकम्** । सकर्मकः । सलोमकः ॥ **प्रकृत्याशिषि** ।६।३।८३ ॥ सहशब्दः प्रकृत्या स्यादाशिषि ॥ स्वस्ति राज्ञे सहपुत्राय सहामात्याय ॥ **अगोवत्सहलेष्विति वाच्यम्** * ॥ सगवे । सवत्साय । सहलाय ॥ **बहुव्रीहौ संख्येये डजबहुगणात्** । ५ । ४ । ७३ ॥ संख्येये यो बहुव्रीहिस्तस्माड्डच् स्यात् ॥ उपदशाः ॥ अबहुगणात्किम् ? उपबहवः । उपगणाः । अत्र **स्वरे** विशेषः ॥ **संख्यायास्तत्पुरुषस्य वाच्यः** * ॥ निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि चैत्रस्य । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खङ्गः ॥ **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्** । ५। ४। ११३॥ व्यत्ययेन षष्ठी । स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् ॥ दीर्घे सक्थिनी यस्य स दीर्घसक्थः । जलजाक्षी ॥ स्वाङ्गात्किम् ? दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । अक्ष्णोऽदर्शनादित्यच् ॥ **अङ्गुलेर्दारुणि** । ५ । ४ । ११४ ॥ अङ्गुल्यन्ताद्बहुव्रीहेः षच् स्याद्दारुण्यर्थे ॥ पञ्चाङ्गुलयो यस्य तत्पञ्चाङ्गुलं दारु । अङ्गुलिसदृशावयवं धान्यादिविक्षेपणकाष्ठमुच्यते ॥ बहुव्रीहेः किम् ? द्वे अङ्गुली प्रमाणमस्या द्व्यङ्गुला यष्टिः । तद्धितार्थे तत्पुरुषे 'तत्पुरुषस्याङ्गुलेरित्यच् ॥ दारुणि किम् ? पञ्चाङ्गुलिर्हस्तः ॥ **द्वित्रिभ्यां ष मूर्ध्नः** । ५ । ४ । १२५॥ आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ ॥ द्विमूर्धः । त्रिमूर्धः॥ **नेतुर्नक्षत्रे अब्वक्तव्यः** * ॥ मृगो नेता यासां ताः मृगनेत्रा रात्रयः । पुष्यनेत्राः ॥ **अन्तर्बहिर्भ्यां च लोम्नः** । ५ । ४ । ११७ ॥ आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ ॥ अन्तर्लोमः । बहिर्लोमः ॥ **अञ् नासिकायाः संज्ञायां नसं चास्थूलात्** । ५ । ४। ११८ ॥ नासिकान्ताद्बहुव्रीहेरच् स्यात् नासिकाशब्दश्च नसं प्राप्नोति नतु स्थूलपूर्वात् ॥ **पूर्वपदात्संज्ञायामगः** । ८ । ४ । ३ ॥ पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात्संज्ञायां न तु गकारव्यवधाने ॥ द्रुरिव नासिकाऽस्य द्रुणसः ॥ अगः किम् ? ऋचामयनं ऋगयनम् ।

---

१ 'सह साद्दृश्यसम्बंधयौगपद्यसमृद्धिषु । साकल्ये विद्यमाने च' इति कोशोक्तिष्वर्थेषु यौगपद्य एव बहुव्रीहिविधानाद् एककाल एकक्रियान्वयित्वमेव यौगपद्यं तुल्ययोगपर्यायं सकर्मक इत्यादौ न संभवति धातुकर्मणोरेकक्रियान्वयित्वाभावादत आह-**तुल्ययोगेति** । **प्रायिकमिति** । तेन क्वचिद्विद्यमानार्थकस्यापि समासो भवत्येवेत्युदाहरति-**सकर्मक इति** । विद्यमानकर्मक इत्यर्थः । विद्यमानार्थकसहशब्देन समानाधिकरणेन 'अनेकमन्यपदार्थे' इति समासेन प्रायिकत्वकथनं चिन्त्यप्रयोजनम् ॥ 'वोपसर्जनस्य' इत्यत्र प्रतिपदोक्तपरिभाषा तु नैव प्रवर्तते, 'सपूर्वस्य' 'सपूर्वायाः' इत्यादिनिर्देशात् ॥ २ **स्वरे विशेष इति** ॥ डचि सति 'चितः इत्यन्तोदात्तत्वं स्यात्, असति पूर्वपदप्रकृतिस्वरो भवतीति भावः ॥ ३ पञ्चम्यर्थे सप्तमी । नक्षत्रशब्दस्य तद्विशेषपरत्वं व्याख्यानात् । पञ्चम्या 'तस्मादित्युत्तरस्य' इति 'उत्तरपदोपस्थितौ' 'नक्षत्रविशेषवाचकादनन्तरोत्तरो यो नेतृशब्दः तदन्ताद् बहुव्रीहेरप् स्यात् इत्यर्थः ॥ ४ 'तस्मादित्युत्तरस्य' इति परिभाषया उत्तरपदोपस्थानेन 'स्थूलभिन्नादनन्तरोत्तरो यो नासिकाशब्दस्तदन्तात्' इत्यर्थफलितमाह-**नतु स्थूलपूर्वादिति** ॥ ५ 'यत् प्रति पूर्वपदम् तत्स्थस्य नस्य चेत् तर्हि संज्ञायामेव' इति नियमेन तद्धितनकारस्य 'खारपायणः' इत्यत्र णत्वं भवत्येव ॥ ६ **संज्ञायामिति** । णत्वेन चेत् संज्ञा रूढयर्थो गम्यत इत्यर्थः । 'संज्ञाशब्दा अनादिप्रयुक्तनियतानुपूर्वीका एव सिद्धाः तत्रेदानीं कस्तद्विपरीतं प्रयोक्तुमर्हति' इत्यभियुक्तोः ॥ रघुनाथादिशब्देषु तु संज्ञाभङ्गभयादेव न णत्वम् ॥

'अणुगयनादिभ्य' इति निपातनात् णत्वाभावमाश्रित्य अग इति प्रत्याख्यातं भाष्ये ॥ अस्थूलात्किम् ? स्थूलनासिकः ॥ **खुरखराभ्यां [ वा ] नस्** * ॥ खुरणाः । खरणाः ॥ [ **पक्षे अजपीष्यते*** ॥ खुरणसः । खरणसः ॥ ] **उपसर्गाच्च** । ५ । ४ । ११९ ॥ प्रादेर्यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच् नासिकाया नसादेशश्च । असंज्ञार्थं वचनम् । उन्नता नासिका यस्य स उन्नसः ॥ **उपसर्गादनात्परः** । ८ । ४ । २८॥ इति सूत्रम् ॥ तद्भङ्क्त्वा भाष्यकार आह– '**उपसर्गाद्बहुलम्**' उपसर्गस्थान्निमित्तात्परस्य नसो नस्य णः स्याद्बहुलम् । प्रणसः ॥ **वेर्ग्रो वक्तव्यः** * ॥ विगता नासिकाऽस्य विग्रः ॥ **ख्यश्च** * ॥ विख्यः । कथं तर्हि 'विनसा हतबाधवेति भट्टिः ? विगतया नासिकयोपलक्षितेति व्याख्येयम् ॥ **सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः** । ५ । ४ । १२० ॥ एते बहुव्रीहावच्प्रत्ययान्ता निपात्यन्ते । शोभनं प्रातरस्य सुप्रातः । शोभनं श्वोऽस्य सुश्वः । शोभनं दिवाऽस्य सुदिवः । शारेरिव कुक्षिरस्य शारिकुक्षः । चतस्रोऽश्रयोऽस्य चतुरश्रः । एण्या इव पादावस्य एणीपदः । अजपदः । प्रोष्ठो गौः तस्येव पादावस्य प्रोष्ठपदः ॥ **नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम** । ५ । ४ । १२१ ॥ अच स्यात् । अहलः । अहलिः । असक्थः । असक्थिः । एवं दुःसुभ्याम् ॥ शक्त्योरिति पाठान्तरम् । अशक्तः । अशक्तिः ॥ **नित्यमसिच् प्रजामेधयोः** । ५ । ४ । १२२ ॥ नञ्दुःसुभ्य इत्येव ॥ अप्रजाः । दुष्प्रजाः । सुप्रजाः । अमेधाः । दुर्मेधाः । सुमेधाः ॥ **धमादनिच्केवलात्** । ५ । ४ । १२४ ॥ केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् स्यात् ॥ कल्याणधर्मा ॥ केवलात्किम् ? परमः स्वो धर्मो यस्येति

१ एवं च प्रागयनम् ऋग्भवनम् इत्यादीनां सत्त्वे 'अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः' इति-भाष्योक्तेः क्षुभ्नादित्वं कल्पनीयं येनारम्भप्रत्याख्यानयोः फलभेदो न स्यादिति भाष्याशयः ॥ २ केवलादेशविधानं प्रत्ययनिवृत्त्यर्थमिति वोध्यम् ॥ 'निर्दिश्यमानस्यादेशा भवन्ति' इति न तदन्तस्य सर्वस्यादेश इति भावः ॥ ३ भाष्ये तु वार्तिके वाशब्दो न दृश्यते इति अजन्तोदाहरणे अपि न दृश्येते इति वोध्यम् ॥ ४ "**वद्धिधिनस्भावावीत्वस्वाङ्गादिस्वरणत्वेषु वचनप्रामाण्यात् सिद्धम्**" इति "गतिश्च" इति सूत्रवार्तिकेनोपसर्गग्रहणं स्वसंज्ञिप्रादिबोधकमेवेति बोध्यते इत्याह **प्रादेरिति** ॥ ५ 'प्रणो नय' 'प्रनः पूषा' इत्यादावव्याप्त्यतिव्याप्तिपरिहाराय 'अनोत्परः' इति पदं त्यक्त्वा 'बहुलम्' इत्येतत् तत्स्थाने दत्त्वा' इत्यर्थः । ६ उक्तवार्तिकप्रामाण्येनात्राप्युपसर्गपदं प्रादिपरमेवेति न विस्मर्तव्यम् ॥ ७ 'नस' इत्यतदत्र सूत्रे 'नश्च धातुस्थोरुषुभ्यः' इति पूर्वसूत्रे च तंत्रेण नासिकाशब्ददेशस्यास्मच्छब्दादेशस्य चानुकरणमिति बोध्यम् ॥ ८ 'हतबांधवा' इति प्रथमान्तसमभिव्याहाराद् 'विनसा' इति प्रथमांतमुचितम्–तत्र समासान्तादेशौ बाधित्वा ग्रादेशेन ख्यादेशेन वा भवितव्यमिति शङ्कते–**कथं तर्हीति** ॥ ९ नायं बहुव्रीहिः येनोक्तादेशापत्तिः स्यात् । किंतु 'प्रादयो गताद्यर्थे' इति तत्पुरुषे 'इत्थंभूतलक्षणे च' इति तृतीयान्तमेतत् । तत्र 'पद्दन्नः' इति नासिकाया नस् इति समाधानम् ॥ १० अच्प्रत्ययमात्रं निपात्यते । सुप्रातादिषु त्रिषु 'अव्ययानां भमात्रे' इति टिलोपः, शारिकुक्षाद्योर्द्वयोः 'यस्येति च' इतीकारलोपः, एणीपदादिषु 'पादः पद्' इति पद्भावः सिद्ध एवेति बोध्यम् ॥ ११ पञ्चम्यर्थे षष्ठीति बोध्यम् ॥ १२ 'शक्त्योः' इति केचित्पठंति' इति काशिका ॥ 'शुक्त्योः' इति केचित्पठंति' इति पदमञ्जरी ॥ परंतु 'अशक्तः' इति शक्तशब्देन 'अशुक्तः' इति शुक्तशब्देनापि सिद्धौ व्यर्थ एव तथा पाठ इति ध्येयम् ॥

त्रिपदे बहुव्रीहौ मा भूत् । स्वशब्दो हीह न केवलं पूर्वपदं किन्तु मध्यमत्वादापेक्षिकम् ॥ संदिग्धसाध्यधर्मेत्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः एवं तु परमस्वधर्मेत्यपि साध्वेव निवृत्तिधर्मा अनुच्छित्तिधर्मेत्यादिवत् । पूर्वपदं तु बहुव्रीहिणाक्षिप्यते॥**जम्भा सुहरिततृणसोमेभ्यः** । ५ । ४ । १२५ ॥ जम्भेति कृतसमासान्तं निपात्यते ॥ 'जम्भो भक्ष्ये दन्ते च' । शोभनो जम्भोऽस्य सुजम्भा । हरितजम्भा । तृणं भक्ष्यं यस्य तृणमिव दन्ता यस्येति वा तृणजम्भा । सोमजम्भा ॥ स्वादिभ्यः किम् ? पतितजम्भा ॥ **दक्षिणेर्मा लुब्धयोगे** । ५ । ४ । १२६ ॥ दक्षिणे ईर्मं व्रणं यस्य दक्षिणेर्मा मृगः । व्याधेन कृतव्रण इत्यर्थः ॥ **इच् कर्मव्यतिहारे** । ५।४।१२७ ॥ कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच् स्यात्समासान्तः ॥ केशाकेशि । मुसलामुसलि ॥ A**द्विदण्ड्यादिभ्यश्च** । ५ । ४ । १२८ ॥ तादर्थ्ये चतुर्थ्येषा । एषां सिद्ध्यर्थमिच् प्रत्ययः स्यात् ॥ द्वौ दण्डौ यस्मिन्प्रहरणे तद् द्विदण्डि प्रहरणम् । द्विमुसलि । उभाहस्ति । उभयाहस्ति ॥ **प्रसंभ्यां जानुनोर्ज्ञुः** । ५ । ४ । १२९ ॥ आभ्यां परयोर्जानुशब्दयोर्ज्ञुरादेशः स्याद्बहुव्रीहौ ॥ प्रगते जानुनी यस्य प्रज्ञुः । संज्ञुः ॥ **ऊर्ध्वाद्विभाषा** । ५ । ४ । १३० ॥ ऊर्ध्वज्ञुः । ऊर्ध्वजानुः ॥ **धनुषश्च** । ५ । ४ । १३२ ॥ धनुरन्तस्य बहुव्रीहेरनङादेशः स्यात् ॥ शार्ङ्गधन्वा ॥ **वा संज्ञायाम्** । ५।४। १३३ ॥ शतधन्वा । शतधनुः ॥ **जायाया निङ्** ।५।४।१३३ ॥ जायान्तस्य बहुव्रीहेर्निङादेशः स्यात्॥ **लोपो व्योर्वलि** । ६ । १ । ६६ ॥

---

A द्विदण्डि, द्विमुसलि, उभाञ्जलि, उभयाञ्जलि, उभादन्ति, उभयादन्ति, उभाहस्ति, उभयाहस्ति, उभाकर्णि, उभयाकर्णि, उभापाणि, उभयापाणि, उभाबाहु, उभयाबाहु, एकपदि, प्रोष्ठपदि, आढ्यपदि, सपदि निकुच्यकर्णि, संहतपुच्छि, अन्तेवासि । इति द्विदण्ड्यादिः ॥

---

१ 'राजाहःसखिभ्यः' इत्यादाविव 'धर्मादनिच' इत्येवेष्टसिद्धावपि धर्मशब्दे यदुत्तरत्वमपेक्ष्यते तत्र पूर्वस्मिन् केवलत्वं सजातीयान्यरहितत्वेन नियतत्वं परत्वासमानाधिकरणत्वमेव यदा भवेत् तदैव धर्मशब्दान्ताद् अनिच् स्याद् इति बोधयितुं 'केवलात्' इति पदम् । तथा च 'केवलात्' इति पञ्चम्या 'तस्मादित्युत्तरस्य' इति परिभाषया उत्तरपदोपस्थितौ उत्तरत्वस्य पूर्वसापेक्षत्वादेव 'पूर्वात्' इत्यस्याक्षेपः । तथा च परत्वासमानाधिकरणपूर्वत्वविशिष्टाद् उत्तरो यो धर्मशब्दः तदन्तबहुव्रीहियोग्यालौकिकप्रक्रियावाक्यस्यान्तावयवोऽनिच् स्यादिति सूत्रार्थसंपत्तौ केवलपदव्यावर्त्यव्यावृत्तिरीतिमुपपादयति-**स्वशब्दो हीति** । केवलं पूर्वपदं नियतपूर्वत्वविशिष्टपदम् इत्यर्थः ॥ मध्यमत्वात् परत्वसमानाधिकरणत्वात् आपेक्षिकं वैवक्षिकमित्यर्थः ॥ २ अनेकपदानामेव बहुव्रीह्यङ्गीकारात् 'धर्मशब्दान्ताद् बहुव्रीहेः' इत्यर्थे तदैव धर्मशब्दोऽन्ते भवति यदि किंचिदन्यत् पदं पूर्वमपि भवेदिति भावः ॥ ३ **समासान्तमिति** । अनिच्प्रत्ययान्तमिति भावः ॥ ४ प्रकृतानुपयुक्तत्वाद्दैत्यविशेषजम्बीरौ द्वावर्थौ न निर्दिष्टौ ॥ ५ 'अनिच्प्रत्ययान्त एवेति बोध्यम् ॥ ६ प्रसमुत्तरजानुशब्दकबहुव्रीहौ जानुशब्दस्य ज्ञुरादेश इत्यर्थः ॥ "जानुनोरिति द्विवचनमर्थगतं द्वित्वमारोप्य पञ्चमीभ्रमनिवृत्तये" ॥ 'उपज्ञु बाधो नमसा सदेम' इत्यत्र वेदे तु 'तत्त्वा यामि' इत्यत्र चालोप इवमभ्यस्याकारलोपेन वैदिकेन कथमसाधुत्वमिति भावः ॥

वकारयकारयोर्लोपः स्याद्वलि ॥ पुंवद्भावः । युवतिर्जाया यस्य युवजानिः । **गन्धस्येदुत्पूतिसुसुरभिभ्यः । ५ । ४ । १३५॥** एभ्यो गन्धस्य इकारोऽन्तादेशः स्यात् ॥ उद्गन्धिः । पूतिगन्धिः। सुगन्धिः । सुरभिगन्धिः ॥ **गन्धस्येत्त्वे तदेकान्तग्रहणम् * ॥** एकान्त एकदेश इव अविभागेन लक्ष्यमाण इत्यर्थः । सुगन्धि पुष्पं सलिलं च । सुगन्धिर्वायुः ॥ नेह—शोभना गन्धाः द्रव्याण्यस्य सुगन्ध आपणिकः ॥ **अल्पाख्यायाम् । ५ । ४ । १३६ ॥** सूपस्य गन्धो लेशो यस्मिंस्तत् सूपगन्धि भोजनम् । घृतगन्धि । ' **गन्धो** गन्धक आमोदे लेशे संबन्धगर्वयोः' इति विश्वः ॥ **उपमानाच्च । ५ । ४ । १३७ ॥** पद्मस्येव गन्धोऽस्य पद्मगन्धि ॥ **पादस्य लोपोऽहस्त्यादिभ्यः**A **। ५ । ४ । १३८ ॥** हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ ॥ स्थानिद्वारेणायं समासान्तः । व्याघ्रस्येव पादावस्य व्याघ्रपात् ॥ अहस्त्यादिभ्यः किम् । हस्तिपादः । कुसूलपादः ॥ B**कुम्भपदीषु च । ५ ।४। १३९ ॥** कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियाम् ॥ पादः पत् ॥ कुम्भपदी ॥ स्त्रियां किम् ? कुम्भपादः ॥ **संख्यासुपूर्वस्य । ५ । ४ । १४० ॥** पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ ॥ द्विपात् । सुपात् ॥ **वयसि दन्तस्य दतृ । ५ । ४ । १४१ ॥** संख्यासुपूर्वस्य दन्तस्य दतृ इत्यादेशः स्याद्वयसि ॥ द्विदन् । चतुर्दन् । षट् दन्ता अस्य षोडन् । सुदन् । सुदती ॥ वयसि किम् ? द्विदन्तः करी । सुदन्तः ॥ **स्त्रियां संज्ञायाम् । ५ । ४ । १४३ ॥** दन्तस्य दतृ स्यात्समासान्तो बहुव्रीहौ ॥ अयोदती । फालदती । संज्ञायां किम् ? समदन्ती ॥ **विभाषा श्यावारोकाभ्याम् । ५ । ४ । १४४ ॥** दन्तस्य दतृ वा बहुव्रीहौ ॥ श्यावदन् । श्यावदन्तः । अरोकदन् । अरोकदन्तः ॥ **अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च । ५ । ३ ।**

---

A हस्तिन्, कुद्दाल, अश्व, कशिक, कुरुत, कटोल, कटोलक, गण्डोल, गण्डोलक, कण्डोल, कण्डोलक अज, कपोल, जल, गण्ड, महेला, दासी, गणिका, कुसूल । इति हस्त्यादिः ॥ B कुम्भपदी, एकपदी, जालपदी, मुनिपदी, शूलपदी, गुणपदी, शतपदी, सूत्रपदी, गोधापदी, कलशीपदी, विपदी, द्विपदी, त्रिपदी, षट्पदी, दासीपदी, तृणपदी, शितपदी, विष्णुपदी, सुपदी, निष्पदी, आर्द्रपदी, कुणिपदी, कृष्णपदी, शुचिपदी, द्रोणीपदी, द्रुपदी, सूकरपदी, शकृत्पदी, अष्टापदी, स्थूणापदी, आपदी, सूचीपदी । इति कुम्भपद्यादिः ॥

---

१ यद्यपि भाष्ये ' **अनारम्भो वा पुनर्वलोपस्य न्याय्यः** ' इत्युक्त्वा ' **कथमस्रेमाणं जीरदानुरिति** ' इति शङ्कायाः ' **अस्रेमाणं जीरदानुरिति छान्दसाद्वर्णलोपात् सिद्धम्** ' इति समाधानेन वकारप्रत्याख्यानमेव लभ्यते तथापि ' **लोपो व्योर्वलि** ' इत्यत्र वकारग्रहणादपि सूत्रकृता वकार उपात्त एवेति यथान्याससूत्रानुसारेणैव व्याचष्टे—**वकारयकारयोरिति** ॥ २ पूर्वोत्तरयोर्ङित्त्वसामर्थ्येनादेशत्वनिश्चयेऽस्येकारस्य प्रत्ययत्वे ' यस्येति च ' इत्यकारलोपेनेष्टसिद्धावपि लोपविधाने गौरवापत्त्या प्रक्रमभङ्गापत्त्या चास्यादेशत्वमेवाङ्गीकृतं लाघवात् । तदा ' आदेः परस्य' इति तु न प्रवर्तते ' समासान्ताः ' इत्यधिकारैकवाक्यत्वात् ॥ ३ बहुव्रीह्यर्थोऽन्यपदार्थे इत्यादिः ॥ ४ ' **गन्धस्तु** सौरभे नृत्ये गन्धके गर्वलेशयोः । स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः ॥ ' इति कोशाद्बहुवचनान्तो **गन्धशब्दः** ॥ ५ लोपस्याभावरूपत्वेन कथमवयवतेत्यत आह—**स्थानिद्वारेणेति** ॥ स्थानिगतमवयवत्वं लोपे आरोप्यते इति भावः ॥ ६ ' षष उत्वं दतृदशसूत्तरपदादेः ष्टुत्वं च ' इति उत्वष्टुत्वे ॥

१४५ ॥ एभ्यो दन्तस्य दतृ वा ॥ कुड्मलाग्रदन् । कुड्मलाग्रदन्तः ॥ **ककुदस्यावस्थायां लोपः । ५ । ४ । १४६ ॥** अजातककुत् । पूर्णककुत् ॥ **त्रिककुत्पर्वते । ५ । ४ । १४७ ॥** त्रीणि ककुदान्यस्य त्रिककुत् । संज्ञैषा पर्वतविशेषस्य । त्रिककुदोऽन्यः ॥ **उद्विभ्यां काकुदस्य । ५ । ४ । १४८ ॥** लोपः स्यात् ॥ उत्काकुत् । विकाकुत् । काकुदं तालु ॥ **पूर्णाद्विभाषा । ५ । ४ । १४९ ॥** पूर्णकाकुत् । पूर्णकाकुदः ॥ **सुहृद्दुर्हृदौ मित्रामित्रयोः । ५ । ४ ।१५० ॥** सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते ॥ सुहृन्मित्रम् । दुर्हृदमित्रः । अन्यत्र सुहृदयः । दुर्हृदयः ॥**उरः A प्रभृतिभ्यः कप् । ५।४। १५१॥**व्यूढोरस्कः । प्रियसर्पिष्कः । इह पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीरिति एकवचनान्तानिपठ्यन्ते । द्विवचनबहुवचनान्तेभ्यस्तु शेषाद्विभाषेति विकल्पेन कप्–द्विपुमान् । द्विपुंस्कः ॥ **अर्थान्नञः *॥** अनर्थकम् ॥ नञः किम् ? अपार्थम् । अपार्थकम् ॥ **इनः स्त्रियाम् । ५ । ४ । १५२ ॥** बहुदण्डिका नगरी ॥ अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥ बहुवाग्ग्मिका ॥ स्त्रियां किम् ? बहुदण्डी । बहुदण्डिको ग्रामः ॥ **शेषाद्विभाषा । ५।४।१५४॥** अनुक्तसमासान्ताच्छेषाधिकारस्थाद्बहुव्रीहेः कप् वा स्यात् ॥ महायशस्कः । महायशाः॥अनुक्तत्यादि किम् ? व्याघ्रपात् । सुगन्धिः । प्रियपथः ॥ शेषाधिकारस्थात्किम् ? उपबहवः । उत्तरपूर्वा । सपुत्रः । तन्त्रादिना शेषशब्दोऽर्थद्वयपरः ॥ **आपोऽन्यतरस्याम् । ७। ४। १५॥** कप्याबन्तस्य ह्रस्वो वा स्यात् ॥ बहुमालाकः । बहुमालकः । कबभावे बहुमालः ॥ **न संज्ञायाम् ।५।४।१५५ ॥** शेषादिति प्राप्तः कप् न स्यात्संज्ञायाम् ॥ विश्वे देवा अस्य विश्वदेवः ॥ **ईयसश्च । ५ । ४। १५६॥** ईयसन्तोत्तरपदान्न कप् ॥ बहवः श्रेयांसोऽस्य बहुश्रेयान् ॥ गोस्त्रियोरिति ह्रस्वे प्राप्ते--॥ **ईयसो बहुव्रीहेर्नेति वाच्यम्*** ॥ बह्वयः श्रेयस्योऽस्य बहुश्रेयसी ॥ बहुव्रीहेः किम् ? अतिश्रेयसिः ॥ **वन्दिते भ्रातुः ।५। ४ । १५७ ॥**पूजितेऽर्थे यो भ्रातृशब्दस्तदन्तान्न कप् स्यात् ॥ प्रशस्तो भ्राता यस्य प्रशस्तभ्राता । न पूजनादिति निषेधस्तु बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः प्रागेवेति वक्ष्यते ॥ वन्दिते किम् ? मूर्खभ्रातृकः ॥ **नाडीतन्त्र्योः स्वाङ्गे । ५। ४। १५९ ॥** स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्तात्कप् न स्यात् । बहुनाडिः कायः । बहुतन्त्रीर्ग्रीवा । तन्त्रीर्धमनी । स्त्रीप्रत्ययान्तत्वाभावाद्ध्रस्वो न ॥ स्वाङ्गे किम् ? बहुनाडीकः स्तम्भः । बहुतन्त्रीका वीणा ॥ **निष्प्रवाणिश्च । ५ । ४ । १६० ॥** कबभावोऽत्र निपात्यते ॥ प्रपूर्वाद्वयतेर्ल्युट् । प्रवाणी तन्तुवायशलाका । निर्गता प्रवाण्यस्य निष्प्रवाणिः पटः । समाप्तवानः । नव इत्यर्थः ॥ **सप्तमीविशेषणे बहुव्रीहौ ।२।२। ३५ ॥** सप्तम्यन्तं विशेषणं

---

A उरस्, सर्पिस्, उपानह्, पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीः, दधि, मधु, शालि, अर्थान्नञः। इत्युरःप्रभृतयः॥

---

१ 'संख्ययाऽव्यया--' इत्यादिसूत्रेषु भाष्ये 'कबभावार्थम्' इति वार्तिकेन ध्वनितोऽयमर्थ इति बोध्यम् ॥
२ सकृदुच्चरितशब्देनार्थद्वयबोधनस्यैव तन्त्रत्वमिति भावः ॥ ३ पूजितेऽर्थे इति । 'वर्तमानात्परः' इति शेषः॥
४ 'न पूजनात्' इत्यनेनैव निषेधे सिद्धे व्यर्थमिदमितिशङ्कामपनुदति--न पूजनादितीति ॥

च बहुव्रीहौ पूर्वं प्रयोज्यम् ॥ कण्ठेकालः। अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः॥ चित्रगुः॥ **सर्वनामसंख्ययोरुपसंख्यानम्*** ॥ सर्वश्वेतः । द्विशुक्लः॥ **मिथोऽनयोः[२] समासे संख्या पूर्वम्** । शब्दपरविप्रतिषेधात् ॥ द्व्यन्यः ॥ **संख्याया अल्पीयस्याः*** ॥ द्वित्राः ॥ **द्वन्द्वेऽपि**। द्वादश ॥ **वा प्रियस्य** * ॥ गुडप्रियः । प्रियगुडः ॥ **गड्वादेः परा सप्तमी** * ॥ गडुकण्ठः ॥ क्वचिन्न—वहेगडुः॥ **निष्ठा । २। २।३६**॥ निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् ॥ कृतकृत्यः॥ **जातिकालसुखादिभ्यः परा निष्ठा वाच्या** * ॥ सारङ्गजग्धी । मासजाता । सुखजाता । प्रायिकं चेदम् । कृतकटः । पीतोदकः ॥ [A]**वाहिताग्न्यादिषु** ।२। २। ३७ ॥ आहिताग्निः । अग्न्याहितः । आकृतिगणोऽयम् ॥-**प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ** * ॥ अस्युद्यतः । दण्डपाणिः ॥ कचिन्न—विवृतासिः ॥

इति बहुव्रीहिप्रकरणम् ।

---

## अथ द्वन्द्वप्रकरणम् ।

**चार्थे द्वन्द्वः । २ । २ । २९** ॥ अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः।परस्परनिरपेक्षस्यानेकस्य एकस्मिन्नन्वयः **समुच्चयः**। अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः । मिलितानामन्वय **इतरेतरयोगः** । समूहः **समाहारः** । तत्रेश्वरं गुरुं च भजस्वेति समुच्चये, भिक्षामट गां चानयेत्यन्वाचये च न समासोऽसामर्थ्यात्[३] । धवखदिरौ । संज्ञापरिभाषम् ॥ अनेकोक्तेर्होतृपोतृनेष्टोद्गातारः ॥ द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वे तु होतापोतानेष्टोद्गातारः ॥ **राजदन्तादिषु**[B]**परम्** ।२।२।३१ ॥ एषु पूर्वप्रयोगार्हं परं स्यात्।

---

A अहिताग्निः, जातपुत्रः, जातदन्तः, जातश्मश्रुः, तैलपीतः, घृतपीतः ऊढभार्यः, गतार्थः । आकृतिगणोऽयम् । इत्याहिताग्न्यादिः ॥

B राजदन्तः, अग्रेवणम्, लिप्तवासितम्, नग्नमुषितम्, सिक्तसंमृष्टम्, मृष्टलुञ्चितम्, अवक्लिन्नपक्वम्, अर्पितोप्तम्, उप्तगाढम्, उलूखलमुसलम्, तण्डुलकिण्वम्, दृषदुपलम्, आरग्वायनबन्धकी, चित्ररथबाह्लीकम्, अवन्त्यश्मकम्, शूद्रार्यम्, स्नातकराजानौ, विष्वक्सेनार्जुनौ, अक्षिभ्रुवम्, दारगवम् ॥

---

१ प्रथमान्तस्यैव शेषपदार्थत्वेन कथं सप्तम्याः बहुव्रीहिप्रसङ्ग इत्यत आह- **अत एव ज्ञापकादिति** । 'ज्ञापकसिद्धं न सर्वत्र' इति 'पञ्चभिर्भुक्तमस्य' इत्यादौ नातिप्रसङ्गः ॥ २ **अनयोः** सर्वनामसंख्ययोः ॥ ३ **असामर्थ्यादिति**। एकत्रैकधर्मावच्छिन्नावच्छिन्नान्वयरूपसहविवक्षारूपसामर्थ्याभावादित्यर्थः॥ समुच्चये एकस्य क्रियायामन्वयोत्तरमेवापरस्य क्रियायामन्वयाङ्गीकारात् । अन्वाचये च प्रतिकर्मक्रियाभेदात् स्फुटमेव परस्परनिरपेक्षताप्रतीतेरिति भावः ॥ ४ इतरेतरयोगे परस्परापेक्ष उद्भूतावयवभेदसमूहत्वेन यथायथं द्विवचनबहुवचने भवतः ॥ ५ समाहारे परस्परापेक्षतिरोहितावयवभेदसमूहत्वेन समूहस्यैव प्रधानत्वेनैकवचनमेव भवति ॥ ६ 'नेह पूर्वपदमाक्षिप्यते 'आनङ्ृतः--'इत्यत्र यथा' इति बहुव्रीहावुक्तस्योदाहरणं दर्शयति--**होतृपोतृनेष्टोद्गातार इति** ॥ यदि तत्र पूर्वपदमाक्षिप्येत तदा तस्य समासप्रथमावयवे रूढत्वाद् अतथाभूतस्य नेष्टृशब्दस्य आनङ् नैव स्यादिति भावः ॥ ७ सर्वसमासविषयमिदम् । षष्ठीतत्पुरुषकर्मधारयद्वन्द्वानां कियतां तत्र परिगणितत्वात् ॥

दन्तानां राजानो राजदन्ताः ॥ Aधर्मादिष्वनियमः * ॥ अर्थधर्मौ । धर्मार्थौ । दम्पती । जम्पती । जायापती । जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते । आकृतिगणोऽयम् ॥ **द्वन्द्वे घि । २ । २ । ३२ ॥** द्वन्द्वे घिसंज्ञं पूर्वं स्यात् ॥ हरिश्च हरश्च हरिहरौ ॥ **अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे *** ॥ हरिगुरुहराः । हरिहरगुरवः ॥ **अजाद्यदन्तम् । २ । २ । ३३ ॥** इदं द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ ॥ बहुष्वनियमः । अश्वरथेन्द्राः ॥ इन्द्राश्वरथाः ॥ **घ्यन्तादजाद्यदन्तं विप्रतिषेधेन ॥** इन्द्राग्नी ॥ **अल्पाच्तरम् ।२।२।३४॥** शिवकेशवौ ॥ **ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण *** ॥ हेमन्तशिशिरवसन्ताः । कृत्तिकारोहिण्यौ। समाक्षराणां किम् ? ग्रीष्मवसन्तौ॥ **लघ्वक्षरं पूर्वम् *** ॥कुशकाशम्॥ **अभ्यर्हितं च*** ॥ तापसपर्वतौ ॥ **वर्णानामानुपूर्व्येण *** ॥ ब्राह्मणक्षत्रियविट्शूद्राः ॥ **भ्रातुर्ज्यायसः*** ॥ युधिष्ठिरार्जुनौ ॥ **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् । २ । ४ । २ ॥** एषां द्वन्द्व एकवत्स्यात् ॥ पाणिपादम् । मार्दङ्गिकपाणविकम् ॥ रथिकाश्वारोहम् ॥ समाहारस्यैकत्वादेकत्वे सिद्धे निय-

---

A **धर्मादिषूभयम्**=अर्थधर्मौ, धर्मार्थौ,अर्थशब्दौ, शब्दार्थौ, अर्थकामौ, कामार्थौ, वैकारिमतम्, गोजवाजम्, गोपालधानीपूलासम्, पूलासककरण्डम्, स्थूलपूलासम्, स्थलपूलासम्, उशीरबीजम्, सिञ्जास्थम्, चित्रास्वाती, भार्यापती, दम्पती, जम्पती, जायापती, पुत्रपती, पुत्रपशू, केशश्मश्रु, शिरोबीजम्, शिरोजानु, सर्पिर्मधुनी, मधुसर्पिषी, आद्यन्तौ, अन्तादी, गुणवृद्धी, वृद्धिगुणौ । आकृतिगणोऽयं राजदन्तादिः ॥

---

१ '**राजदन्तास्तु** चत्वारो दशनानां पुरःस्थिताः' इति त्रिकाण्डशेषः ॥ हैमे तु–' **राजदन्तौ तु** मध्यस्थावुपरिश्रेणिकौ क्वचित् ॥' इत्युपलभ्यते ॥ २ " अल्पाच्तरम् " इति सूत्रभाष्यनिर्दिष्ट ' **धर्मादिषूभयम्** ' इति वार्तिकं राजदन्ताद्यन्तर्गणसूत्रं मत्वा तदर्थमाह–**धर्मादिष्वनियम इति** ॥ ३ **निपात्यत इति** । राजदन्तादिगणे पाठेनेति शेखरकृत ॥ धर्मादिगणे पाठेनेति दाधिमथाः ॥ ४ **अयमिति** । राजदन्तादिरित्यर्थ इति शेखरकृत् । ' धर्मादिरित्यथ इति दाधिमथाः ॥ ५ **अल्पाच्तरम्**। 'ऐऔच्' इति सूत्रे निर्देशादेवेत्संज्ञकचकारस्य कुत्वस्थानित्वाभावनिपातनमिव श्चुत्वनिमित्तत्वाभावनिपातमप्येतन्निर्देशादेव निश्चीयते । अत एव 'अच्त्वम्' 'अनच्त्वम्' 'अकच्स्वरौ' इत्यादयो भाष्यप्रयोगाः 'अच्संधि' इत्यादयोऽपि प्रयोगाः ॥ एवं च 'अक्षु' 'एक्षु' इत्यत्र भाष्यप्रयोगे तु कुत्वं कैश्चित्पण्डितप्रकाण्डैः शोधितमेव भवेदिति दाधिमथानां निश्चयः ॥ ६ ननु समाहारे द्वन्द्वे समाहारस्यैकत्वादेवैकवद्भावे सिद्ध इदं प्रकरणं व्यर्थमिति शङ्कायामाह–**नियमार्थमिति** । 'प्राण्यङ्गादीनामेव समाहारः' इति विपरीतनियमस्तु न, 'संज्ञापरिभाषम्' इत्यसिद्ध्यापत्तेः॥ 'तिष्यपुनर्वस्वोः–' इति सूत्रे बहुवचनग्रहणात् । तद्धि 'तिष्यपुनर्वसु' इति समाहारैकवचनस्य मा भूत् इति कृतम्, इति मनोरमाशयश्चिन्त्यः । उक्तविपरीतनियमे 'तिष्यपुनर्वसु' इत्यत्रैकवद्भावो भवति न वा । भवति चेदिष्टापत्तिरेव । न भवति चेत्, कुतो न भवति प्राण्यङ्गादिष्वप्राणिजातेरप्यन्तर्भावात्प्राप्तेरव्याहतत्वात् ॥ तेन प्राण्यङ्गादीनामितरेतरयोगे द्वन्द्वो नैव भवतीति ॥ एवं च 'जातिरप्राणिनाम्' इत्येकवद्भावनियमेन बहुवचनस्यासंभवात् 'तिष्यपुनर्वस्वोः–' इति सूत्रे बहुवचनग्रहणमनर्थकं सत् " **सर्वो द्वन्द्वो विभाषयैकवद्भवति** " इति परिभाषां ज्ञापयति तद्घटकसर्वशब्दस्य 'प्राणितूर्यसेनाङ्गद्वन्द्वव्यतिरिक्तपरत्वं च । तथा चोक्तं " विभाषा वृक्ष–" इति सूत्रे भाष्ये–' **तर्हि न वक्तव्यम्** ' इति शङ्कायाम् ' **वक्तव्यं च । किं प्रयोजनम् ? पूर्वत्र नियमार्थम्, उत्तरत्र व्यभिचारार्थम्** " इति व्याख्यातं कैयटप्रदीपे–**पूर्वत्रेति** । 'प्राण्यङ्गादीनां समाहार एव' इत्येवमर्थमित्यर्थः ॥ उद्योते–**व्यभिचारार्थमिति** । नित्यैकवद्भावस्य व्यभिचारार्थमित्यर्थः ॥ एवं च 'जातिरप्राणिनाम्' इत्येकवद्भावस्य वैकल्पिकत्वाद् बहुवचने तस्य द्विवचनं विधीयत इति तिष्यपुनर्वसू तिष्यपुनर्वसु सिद्धमिति बोध्यम् ॥

मार्थं प्रकरणम्-प्राण्यङ्गादीनां समाहार एव यथा स्यात् ॥ **अनुवादे चरणानाम्** । २।४।३॥ चरणानां द्वन्द्व एकवत्स्यात्सिद्धस्योपन्यासे ॥ **स्थेणोर्लुङीति वक्तव्यम्*** ॥ उदगात्कठकालापम् । प्रत्यष्ठात्कठकौथुमम् ॥ **अध्वर्युक्रतुरनपुंसकम्** । २ । ४ । ४ ॥ यजुर्वेदे विहितो यः क्रतुस्तद्वाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवत्स्यात् ॥ अर्काश्वमेधम् ॥ अध्वर्युक्रतुः किम् ? इषुवज्रौ सामवेदे विहितौ ॥ अनपुंसकं किम् ? राजसूयवाजपेये । अर्धर्चादी ॥ **अध्ययनतोऽविप्रकृष्टाख्यानाम्** । ४ । ५ ॥ अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत् ॥ पदकक्रमकम् ॥ **जातिरप्राणिनाम्** । २ । ४ । ६ ॥ प्राणिवर्जजातिवाचिनां द्वन्द्व एकवत् ॥ धानाशष्कुलि ॥ प्राणिनां तु विट्शूद्राः ॥ द्रव्यजातीयानामेव । नेह- रूपरसौ । गमनाकुञ्चने ॥ जातिप्राधान्य एवायमेकवद्भावः । द्रव्यविशेषविवक्षायां तु बदरामलकानि ॥ **विशिष्टलिङ्गो नदीदेशोऽग्रामाः** । २ । ४ । ७ ॥ ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां समाहारे द्वन्द्व एकवत्स्यात् ॥ उद्ध्यश्च इरावती च उद्ध्येरावति । गङ्गा च शोणश्च गङ्गाशोणम् । कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् ॥ भिन्नलिङ्गानां किम् ? गङ्गायमुने । मद्रकेकयाः ॥ अग्रामाः किम् ? जाम्बवं नगरम् । शालूकिनी ग्रामः । जाम्बवशालूकिन्यौ ॥ **क्षुद्रजन्तवः** । २ । ४ । ८ ॥ एषां समाहारे द्वन्द्व एकवत्स्यात् ॥ यूकालिक्षम् ॥ आनकुलात्क्षुद्रजन्तवः ॥ **येषां च विरोधः शाश्वतिकः** । २ । ४ । ९ ॥ एषां प्राग्वत् ॥ अहिनकुलम् । गोव्याघ्रम् ॥ काकोलूकमित्यादौ परत्वाद् विभाषा वृक्षमृगेति प्राप्तं चकारेण बाध्यते ॥ **शूद्राणामनिरवसितानाम्** । २ । ४ । १० ॥ अबहिष्कृतानां शूद्राणां प्राग्वत् ॥ तक्षायस्कारम् । पात्राद्बहिष्कृतानां तु चण्डालमृतपाः ॥ A**गवाश्वप्रभृतीनि च** । २ । ४ । ११ ॥ यथोच्चारितानि साधूनि स्युः ॥ गवाश्वम् । दासीदासमित्यादि ॥ **विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्** । २ । ४ । १२ ॥ वृक्षादीनां सप्तानां द्वन्द्वः अश्ववडवेत्यादि द्वन्द्वत्रयं च प्राग्वद्वा । वृक्षादौ विशेषाणामेव ग्रहणम् । प्लक्षन्यग्रोधम् । प्लक्षन्यग्रोधाः ॥ रुरु-

---

A गवाश्वम्, गवाविकम्, गवैडकम्, अजाविकम्, अजैडकम्, कुब्जवामनम्, कुब्जकिरातम्, पुत्रपौत्रम्, श्वचण्डालम्, स्त्रीकुमारम्, दासीमाणवकम्, शाटीपटीकम्, शाटीप्रच्छदम्, शाटीपट्टीकम्, उष्ट्रखरम्, उष्ट्रशशम्, मूत्रशकृत्, मूत्रपुरीषम्, यकृन्मेदः, मांसशोणितम्, दर्भशरम्, दर्भपूतीकम्, अर्जुनशिरीषम्, अर्जुनपुरुषम्, तृणोलपम्, दासीदासम्, कुटीकुटम्, भागवतीभागवतम् । एते गवाश्वप्रभृतयः ॥

---

१ सिद्धस्येति किम् ? उदगुः कठकालापाः प्रत्यष्ठुः कठकौथुमाः ॥ २ "आपोमयः प्राणः" इति श्रुतेरद्भिर्विना ग्लायमानप्राणानां लोकप्रसिद्ध्या जङ्गमानां मनुष्यादीनामेव प्राणित्वमिति नक्षत्राणां न प्राणित्वमिति 'तिष्यपुनर्वसु' इत्यत्रैकवद्भावः सिध्यतीति भावः ॥ ३ **द्रव्येति** । 'अप्राणिनाम्' इति पर्युदासाल्लब्धमिदमिति भावः ॥ ४ तज्जात्याश्रयसकलव्यक्तिबोधनमेव **जातिप्राधान्यम्** ॥ ५ तज्जात्याश्रयकिंचिद्व्यक्तिबोधनेच्छैव द्रव्यविशेषविवक्षा ॥ ६ 'क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः । शतं वा प्रसृतौ येषां केचिदानकुलावधि' ॥ ७ "सित्तद्विशेषाणां वृक्षाद्यर्थम्" इति 'स्वं रूपम्' इति सूत्रवार्तिकं स्मारयन्नाह- **विशेषाणामेवेति** ॥

पृषतम्। रुरुपृषताः। कुशकाशम्। कुशकाशाः। व्रीहियवम्। व्रीहियवाः। दधिघृतम्। दधिघृते। गोमहिषम्। गोमहिषाः। शुकबकम्। शुकबकाः। अश्ववडवम्। अश्ववडवौ। पूर्वापरम्। पूर्वापरे। अधरोत्तरम्। अधरोत्तरे॥ **फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्** * ॥ बदराणि चामलकानि च बदरामलकम्। जातिरप्राणिनामित्येकवद्भावः। नेह—बदरामलके। रथिकाश्वारोहौ। प्लक्षन्यग्रोधौ। इत्यादि॥ विभाषावृक्षेति सूत्रे येऽप्राणिनस्तेषां ग्रहणं जातिरप्राणिनामिति नित्ये प्राप्ते विकल्पार्थम्॥ पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वान्नित्ये प्राप्ते॥ 'मृगाणां मृगैरेव शकुनीनां तैरेवोभयत्र द्वन्द्वः। अन्यैस्तु सहेतरेतरयोग एव' इति नियमार्थं मृगशकुनिग्रहणम्॥ एवं पूर्वापरमधरोत्तरमित्यपि॥ अश्ववडवग्रहणं तु पक्षे नपुंसकत्वार्थम्। अन्यथा परत्वात् पूर्ववदश्ववडवाविति स्यात्॥ **विप्रतिषिद्धं चानधिकरणवाचि। २।२।१३॥** विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकवद्वा स्यात्॥ शीतोष्णम्। शीतोष्णे। वैकल्पिकः समाहारद्वन्द्वः 'चार्थे द्वन्द्व' इति सूत्रेण प्राप्तः स विरुद्धार्थानां यदि भवति, तर्हि अद्रव्यवाचिनामेवेति नियमार्थमिदम्। तेन द्रव्यवाचिनामितरेतरयोग एव। शीतोष्णे उदके स्तः॥ विप्रतिषिद्धं किम्? नन्दकपाञ्चजन्यौ। इह पाक्षिकः समाहारद्वन्द्वो भवत्येव॥ **न** [A] **दधिपयआदीनि। २।४।१४॥** एतानि नैकवत्स्युः। दधिपयसी। इध्माबर्हिषी। निपातनाद्दीर्घः। ऋक्सामे। वाङ्मनसे॥ **अधिकरणैतावत्त्वे च। २।४।१५॥** द्रव्यसंख्यावगमे एकवदेवेति नियमो न स्यात्॥ दश दन्तोष्ठाः॥ **विभाषा समीपे। २।४।१६॥** अधिकरणैतावत्त्वस्य सामीप्येन परिच्छेदे समाहार एवेत्येवंरूपो नियमो वा स्यात्॥

---

A दधिपयसी, सर्पिर्मधुनी, मधुसर्पिषी, ब्रह्मप्रजापती, शिववैश्रवणौ, स्कन्दविशाखौ, परिव्राजककौशिकौ, प्रवर्ग्योपसदौ, शुक्लकृष्णौ, इध्माबर्हिषी, दीक्षातपसी, अध्ययनतपसी, उलूखलमुसले, आद्यवसाने, श्रद्धामेधे ऋक्सामे, वाङ्मनसे। इति दधिपयआदयः॥

---

१ एकवद्भावे नियमार्थं वार्तिकमाह-**फलसेनेति**॥ २ 'विभाषावृक्ष-'इति सूत्रे 'फलसेना-' 'इति वार्तिके च निर्दिष्टप्रयोजनमाह-**विभाषा वृक्षेति सूत्र इति**॥ अप्राणिनः वृक्षतृणधान्यव्यञ्जनानि॥ ३ **हस्त्यश्वादिषु सेनाङ्गत्वादिति**। 'एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका' इति पत्तिपरिगणितपील्वादीनां लक्षणलक्षितपत्तितो यथाक्रमं त्रिगुणतया +३=सेनामुख+३= गुल्म+=३ गण+३= वाहिनी +३=पृतना×३=चमू+३=अनीकिनीसंज्ञाः सेना भवन्ति। अनीकिन्या दशगुणत्वे अक्षौहिणीसंज्ञा सेना भवति। तत्र हस्तिरथाश्वानां केवलानामनुपपत्त्या पीलुवानरथवानचर्वोधाराः स्वारा हस्त्ययौद्धारश्च यद्यपि गृह्यन्ते तथापि पीलुवानादीनां तदधीनवृत्तित्वाद् मुख्यतया हस्त्यादय एव सेनाङ्गत्वेन गृह्यन्ते। तथा चेदं प्रयोजननिरूपणं सूत्रवार्तिकयोरेकवाक्यतया सेनापशुग्रहणपरं बोध्यम्। अत एव शुद्धपशुग्रहणचारितार्थ्यस्य 'महाजोरभ्रम्' इत्यत्र भाष्ये वर्णितस्य नासामञ्जस्यम्॥ ४ **नित्ये प्राप्त इति**। विकल्पार्थम् इति शेषः॥ ५ **मृगशकुनिग्रहणमिति**। मृगग्रहणं वार्तिके, शकुनिग्रहणं सूत्रे वार्तिके चेति बोध्यम्॥ 'चार्थे द्वन्द्वः' इत्येव समाहारद्वन्द्वेनैवकद्भावसिद्धौ इति शेषः॥ ६ पूर्वापरशब्दयोरधरोत्तरशब्दयोश्च परस्परं यथानिर्दिष्टयोरेव समाहारद्वन्द्वः अन्यैस्त्वितरेतरयोग एवेति भावः॥ ७ 'चार्थे द्वन्द्वः' इति सूत्रेण प्राप्तो यो वैकल्पिकः समाहारद्वन्द्वः, स इत्यन्वयः॥ ८ 'चार्थे द्वन्द्वः' इति सूत्रेण प्राप्तो वैकल्पिकः समाहारद्वन्द्वोऽद्रव्यवाचिनामेव' इति नियमाङ्गीकारे 'नन्दकपाञ्चजन्यौ' इत्यत्र द्रव्यवाचित्वेन नैव स्याद् अतो 'विप्रतिषिद्धम्' इतीति भावः॥

उपदशं दन्तोष्ठम् । उपदशाः दन्तोष्ठाः ॥ **आनङ् ऋतो द्वन्द्वे** । ६ । ३ । २५ ॥ विद्यायोनिसंन्धवाचिनामृदन्तानां[1] द्वन्द्वे आनङ् स्यादुत्तरपदे परे ॥ होतापोतारौ । होतृपोतृनेष्टोद्गातारः । मातापितरौ ॥ पुत्रेऽन्यतरस्यामित्यतो मण्डूकप्लुत्या पुत्रे इत्यनुवृत्तेः[2]—पितापुत्रौ ॥ **देवताद्वन्द्वे च** ।६।३।२६॥ इहोत्तरपदे परे आनङ् ॥ मित्रावरुणौ ॥ **वायुशब्दप्रयोगे प्रतिषेधः** * ॥ अग्निवायू वाय्वग्नी ॥ पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य परिग्रहार्थम् । तेन ब्रह्मप्रजापती इत्यादौ नानङ् । एतद्धि नैकहविर्भागित्वेन श्रुतं, नापि लोके प्रसिद्धं साहचर्यम् ॥ **ईदग्नेः सोमवरुणयोः** ।६।३।२७॥ देवताद्वन्द्वे इत्येव ॥ **अग्नेः स्तुत्स्तोमसोमाः** । ८ । ३ । ८२ ॥ अग्नेः परेषामेषां सस्य षः स्यात्समासे ॥ [ अग्निष्टुत् । अग्निष्टोमः ॥ ] अग्नीषोमौ[3] । अग्नीवरुणौ ॥ **इद्वृद्धौ** । ६ । ३ । २८ ॥ वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्याद्देवताद्वन्द्वे ॥ अग्नामरुतौ देवते अस्य आग्निमारुतं कर्म । अग्नीवरुणौ देवते अस्य आग्निवारुणम् । ' देवताद्वन्द्वे च' इत्युभयपदवृद्धिः । अलौकिके[4] वाक्ये आनङमीत्त्वं च बाधित्वा इत् ॥ वृद्धौ किम् ? आग्नेन्द्रः । नेन्द्रस्य परस्येत्युत्तरपदवृद्धिप्रतिषेधः ॥ **विष्णौ न** * ॥ आग्नावैष्णवम् ॥ **दिवो द्यावा** । ६ । ३ । २९ ॥ देवताद्वन्द्वे उत्तरपदे ॥ द्यावाभूमी । द्यावाक्षामे ॥ **दिवसश्च पृथिव्याम्** । ६ । ३ । ३० ॥ दिव इत्येव । चाद् द्यावा । आदेशे अकारोच्चारणं सकारस्य रुत्वं मा भूदित्येतदर्थम् । **द्यौश्च** पृथिवी च दिवस्पृथिव्यौ । द्यावापृथिव्यौ ॥ **छन्दसि दृष्टानुविधिः** ॥ द्यावा चिदस्मै[5] पृथिवी । दिवस्पृथिव्योररतिरित्यत्र पदकारा विसर्गं पठन्ति ॥ **उषासोषसः** । ६ । ३ । ३१ ॥ उषस्शब्दस्योषासादेशो देवताद्वन्द्वे ॥ उषासासूर्यम् ॥ **मातरपितरावुदीचाम्** ।६। ३। ३२ ॥ मातरपितरौ ॥ उदीचां किम् ? मातापितरौ ॥ **द्वन्द्वाच्चुदषहान्तात्समाहारे** ।५। ४। १०६ ॥ चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे ॥ वाक् च त्वक् च वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् ॥ समाहारे किम् ? प्रावृट्शरदौ ॥

इति द्वन्द्वप्रकरणम् ।

## अथैकशेषप्रकरणम् ।

सरूपाणाम् । रामौ । रामाः ॥ **विरूपाणामपि समानार्थानाम्** * ॥ वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ । कुटिलदण्डौ ॥ **वृद्धो यूना तल्लक्षणश्चेदेव विशेषः** । १ । २ । ६५ ॥

---

१ **ऋदन्तानामिति** । 'ऋतो विद्यायोनिसंबन्धेभ्यः' इत्यतः 'ऋतः इत्यनुवर्तमाने पुनर् 'ऋतः' इत्युपादानसामर्थ्याद् अवधारणप्रतीत्या 'ऋदन्तानामेव द्वन्द्वे' इत्यर्थो बोध्यः । तेन पितृपितामहादौ नैवानङ् ॥ २ **पुत्र इत्यनुवृत्तेरिति** । 'ऋदन्तस्य पुत्रे आनङ्' इत्यर्थाङ्गीकारेण तातपुत्रावित्यादौ नानङ् ॥ ३ षत्वोदाहरणत्वेनानयोरपि निर्देशोऽत्र ॥ ४ अन्तरङ्गत्वाल्लौकिकविग्रहवाक्य इव जातम् आनङम् ईत्त्वं च को वारयेद् अत आह-**अलौकिक इति** । उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते' इति न्यायादिकारः स्वनिमित्तवृद्धेरुपसंजनिष्यमाणत्वेन उपसंजातद्वन्द्वरूपनिमित्तमपि आनङम् ईत्त्वं च बाधते इति भावः ॥ ५ मध्ये 'चिदस्मै' इति पददानेन सूचिते समासाभावेऽपि द्यावादेशदर्शनाद् वेदे द्यावादेशे नैव द्वन्द्वापेक्षेति भावः ॥ लोके विसर्गस्थानिरुत्वबाधकल्पनेऽपि पदपाठे विसर्गदर्शनेन रुत्वं भवत्येवेति भावः ॥

यूना सहोक्तौ गोत्रं शिष्यते, गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात् । **गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ** ॥ वृद्धः किम् ? गर्गगार्ग्यायणौ ॥ यूना किम् ? गर्गगार्ग्यौ ॥ तल्लक्षणः किम् ? भागवित्तिभागवित्तिकौ ॥ कृत्स्नं किम् ? गार्ग्यवात्स्यायनौ ॥ **स्त्री पुंवच्च** ।१।२।६६ ॥ यूना सहोक्तौ वृद्धा स्त्री शिष्यते, तदर्थश्च पुंवत् ॥ गार्गी च गार्ग्यायणश्च गार्ग्यौ । अस्त्रियामित्यनुवर्तमाने यञञोश्चेति लुक् ॥ दाक्षी च दाक्षायणश्च दाक्षी ॥ **पुमान् स्त्रिया** । १ । २ । ६७॥ स्त्रिया सहोक्तौ पुमान् शिष्यते, तल्लक्षण एव विशेषश्चेत् ॥ हंसी च हंसश्च हंसौ ॥ **भ्रातृपुत्रौ स्वसृदुहितृभ्याम्** । १। २। ६८ ॥ भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ ॥ **नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्**। १ । २ । ६९ ॥ अक्लीबेन सहोक्तौ क्लीबं शिष्यते, तच्च वा एकवत्स्यात्तल्लक्षण एव विशेषश्चेत् ॥ शुक्लः पटः । शुक्ला शाटी। शुक्लं वस्त्रम्--तदिदं शुक्लम्, तानीमानि शुक्लानि ॥ **पिता मात्रा** । १ । २ । ७० ॥ मात्रा सहोक्तौ पिता वा शिष्यते ॥ माता च पिता च पितरौ । मातापितरौ ॥ **श्वशुरः श्वश्र्वा** । १।२। ७१ ॥ श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते तल्लक्षण एव विशेषश्चेत् ॥ श्वश्रूश्च श्वशुरश्च श्वशुरौ। श्वश्रूश्वशुरौ ॥ A **त्यदादीनि सर्वैर्नित्यम्**।१। २। ७२ ॥ सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते ॥ स च देवदत्तश्च तौ ॥ **त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते** * ॥ स च यश्च यौ ॥ **पूर्वशेषोऽपि दृश्यते** इति भाष्यम् ॥ स च यश्च तौ ॥ **त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि** * सा च देवदत्तश्च तौ । तच्च देवदत्तश्च यज्ञदत्ता च तानि ॥ पुंनपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते । तच्च देवदत्तश्च ते ॥ **अद्वन्द्वतत्पुरुषविशेषणानामिति**

---

A त्यदादिः सर्वाद्यन्तर्गणः ॥

---

१ भागवित्तशब्दाद् गोत्र इञ् । तदन्ताद् यूनि कुत्सने च 'वृद्धाट्ठक् सौवीरेषु बहुलम्' इति ठकि जाते भागवित्तिकशब्दे यूनोऽर्थाद् अधिकयोः सौवीरकुत्सार्थयोरपि प्रतीत्या गोत्रयुवमात्रकृतस्य वैलक्षण्यस्याभावान्नैन भवत्यत्रैकशेष इति भावः ॥ २ अत्र कृत्स्नं वैरूप्यं गोत्रयुवप्रत्ययमात्रकृतं न किंतु 'गर्ग--वत्स' इति प्रकृतिकृतमप्यस्तीति नैकशेषो भवतीति भावः ॥ ३ पुंवद्भावफलं दर्शयति--**अस्त्रियामितीति** ॥ ४ पुंवत्त्वेन 'इतो मनुष्यजातेः' इति ङीषोऽप्राप्तेः ह्रस्वान्ताद् दाक्षिशब्दाद् औङि 'दीर्घाज्जसि च' इति निषेधस्याप्राप्त्या 'प्रथमयोः' इति पूर्वसवर्णदीर्घो भवतीति भावः ॥ ५ एवं च देवदत्तश्च त्वं चेति सहविवक्षायां **'युवां गच्छथः'** चैत्रश्च अहं चेति सहविवक्षायाम् **'आवां गच्छावः'** इत्येवं पुरुषव्यवस्था सिद्धा भवति ॥ ६ एवं च स च त्वं चेति सहविवक्षायां **'युवां गच्छथः'** त्वं च अहं चेति सहविवक्षायाम् **'आवां गच्छावः'** स च त्वं च अहं चेति सहविवक्षायां **'वयं गच्छामः'** इत्येवमेव पुरुषव्यवस्था सिद्धा ॥ ७ युष्मदस्मद्भिन्नत्यदादिष्वेव सहविवक्षायां पूर्वशेषोऽपि स्वीकार्यः । तत्र प्रथमपुरुषस्यैव नियतत्वात् ॥ युष्मदस्मदोरेव, तयोस्तत्प्राक्पठितानां च सहविवक्षायां तु परशेष एव । तत्र यथायथं मध्यमोत्तमयोरेवाङ्गीकारात् ॥ युष्मदस्मदोर्भवत्किंभ्यां च सहविवक्षायां तु पूर्वशेष एव स्वीकार्यः । तत्र यथायथं मध्यमोत्तमावेव भवतः ॥ अत एव **प्रथममध्यमोत्तमानामेकशेषोऽसरूपत्वात्'** इति सरूपसूत्रवार्तिकेन **'तत्र युष्मदस्मदन्येषु प्रथमप्रतिषेधः शेषत्वात् 'युष्मदि मध्यमादस्मद्युत्तमो विप्रतिषेधेन'** इति युष्मद्युपपदसूत्रवार्तिकाभ्यां च संवादः सिद्धो भवति ॥

**वक्तव्यम्** * ॥ कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । तच्च सा च अर्धपिप्पल्यौ ते । **ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री १ । २ । ७३ ॥** एषु सहविवक्षायां स्त्री शिष्यते ॥ पुमान् स्त्रियेत्यस्यापवादः ॥ गाव इमाः ॥ ग्राम्येति किम्? रुरव इमे ॥ पशुग्रहणं किम्? ब्राह्मणाः ॥ सङ्घेषु किम्? एतौ गावौ ॥ अतरुणेषु किम्? वत्सा इमे ॥ **अनेकशफेष्विति वाच्यम्** *॥ अश्वा इमे ॥ इह सर्वत्र एकशेषे कृतेऽनेकसुबन्ताभावाद्द्वन्द्वो न । तेन शिरसी शिरांसीत्यादौ समासस्येत्यन्तोदात्तः प्राण्यङ्गत्वादेकवद्भावश्च न । पन्थानौ पन्थान इत्यादौ समासान्तो न ॥

इत्येकशेषप्रकरणम् ।

## अथ सर्वसमासशेषप्रकरणम् ।

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः ।[1] परार्थाभिधानं वृत्तिः ।[2] वृत्त्यर्थावबोधकं वाक्यं विग्रहः ।[3] स द्विविधः । लौकिकोऽलौकिकश्च ।[4] परिनिष्ठितत्वात्साधुर्लौकिकः ।[5] प्रयोगानर्होऽसाधुरलौकिकः । यथा–राज्ञः पुरुषः । राजन् अस् पुरुष सु इति ।[6] अविग्रहो नित्यसमासः, अस्वपदविग्रहो वा । समासश्चतुर्विध इति तु प्रायोवादः । अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वाधिकारबहिर्भूतानामपि सह सुपेति समासविधानात् । पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । अन्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्व इत्यपि प्राचां प्रवादः प्रायोऽभिप्रायः । सूपप्रति उन्मत्तगङ्गमित्याद्यव्ययीभावे अतिमालादौ तत्पुरुषे द्वित्रा इत्यादिबहुव्रीहौ दन्तोष्ठमित्यादिद्वंद्वे चाभावात् । तत्पुरुषविशेषः कर्मधारयः । तद्विशेषो द्विगुः । अनेकपदत्वं द्वंद्वबहुव्रीह्योरेव । तत्पुरुषस्य क्वचिदेवेत्युक्तम् । किंच ॥

---

१ "**सविशेषणानां वृत्तिर्न, वृत्तस्य विशेषणयोगो न**" इति वार्तिकभाष्यनिर्दिष्टवृत्तिपदार्थं निरूपयन् वृत्तिपदबोध्यान् परिगणयति--**कृत्तद्धितेति** ॥ २ वृत्तेर्लक्षणमाह--**परार्थेति** ॥ शास्त्रे कल्पिता लोके कल्पिता वा याऽवयवशक्तिस्तत्सहकृता यैकार्थीभावरूपा समुदायशक्तिस्तद्रूपयोः पर उत्कृष्टोऽर्थस्तस्याभिधानं प्रतिपादनं येन तत् परार्थाभिधानम् । सामान्ये नपुंसकम् । सा वृत्तिरित्यर्थः ॥ ३ '**स नित्यः समासः यस्य विग्रहो न भवति**' इति भाष्यनिर्दिष्टविग्रहपदार्थं निरूपयति--**वृत्त्यर्थेति** ॥ '**समानार्थेन वाक्येन भवितव्यम् प्रत्ययान्तेन च**' इति 'सुप आत्मनः' इति सूत्रे भाष्योक्तेः '**य एवार्थो रथं वहति स एवार्थो रथस्य वोढा**' इति 'तद् वहति--' इति सूत्रे भाष्योक्ते. '**आख्यातं तद्धितान्तस्य यत्किंचिदुपदर्शकम् । गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥**' इति हर्युक्तेः सर्वत्र वृत्तिविग्रहयोः समान एव विशेष्यविशेषणभावः प्रतीयते । परंतु वहतीत्यत्र तिपः, 'वोढा' इत्यत्र तृचः कर्त्रर्थकत्वेनार्थसाम्येऽपि कृदन्ततद्धितविशिष्टयोः '**सत्त्वप्रधानानि नामानि**' इति निरुक्तभाष्ययोरनुरोधेन धात्वर्थविशेषणकः कारकविशेष्यक एव बोधः, तद्विग्रहत्वेन कल्पिते तिङन्ते तु '**भावप्रधानमाख्यातम्=क्रियाप्रधानमाख्यातम्**' इति निरुक्तभाष्ययोरनुरोधेन कारकविशेषणको धात्वर्थविशेष्यक एव शाब्दबोधो भवति' इत्येतावानेव विपर्ययो भवति ॥ एवमेव प्राप्तोदक इत्यतः 'उदककर्तृकप्राप्तिकर्म' इत्येवं बोधः । 'प्राप्तमुदकं यम्' इति विग्रहस्तु 'यत्कर्मकप्राप्तिकर्त्रुदकम्' इति बोध इति विपर्ययस्याप्युपलक्षणमिति भावः ॥ ४ अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वमेव **परिनिष्ठितत्वम्** ॥ **लौकिकः** लोके प्रयोगार्हः ॥ ५ **लोके प्रयोगानर्हो**ऽपरिनिष्ठित्वादिति भावः ॥ ६ **अविग्रहः** लौकिकविग्रहहीन इत्यर्थः ॥ **अस्वपदविग्रह** इत्यत्र विग्रहो लौकिक एव ग्राह्यः ॥

सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा ।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥ १ ॥

सुपां सुपा, राजपुरुषः । तिङा, पर्यभूषयत् । नाम्ना, कुम्भकारः । धातुना, कटप्रूः । अजस्रम् । तिङां तिङा, पिबतखादता । खादतमोदता । तिङां सुपा, कृन्तविचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा । एहीडादयोऽन्यपदार्थे इति मयूरव्यंसकादौ पाठात्समासः ॥

इति सर्वसमासशेषप्रकरणम् ।

## अथ समासान्तप्रकरणम् ।

**ऋक्पूरब्धूःपथामानक्षे ।** ५ । ४ । ७४ ॥ अ[1] अनक्षे इति छेदः । ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः स्यात्, अक्षे या धूस्तदन्तस्य तु न । अर्धर्चः ॥ अनृचबह्वृचावध्येतर्येव ॥ नेह—अनृक्साम । बह्वृक् सूक्तम् ॥ विष्णोः पूः विष्णुपुरम् । क्लीबत्वं लोकात्[2] ॥ विमलापं सरः ॥ **द्व्यन्तरुपसर्गेभ्योऽप ईत् ।** ६ । ३ । ९७ ॥ अप इति कृतसमासान्तस्यानुकरणम् । षष्ठ्यर्थे प्रथमा । एभ्योऽपस्य ईत्स्यात् ॥ द्विर्गता आपो यस्मिन्निति द्वीपम् । अन्तरीपम् । प्रतीपम् । समीपम् । समापो देवयजनमिति तु समा आपो यस्मिन्निति बोध्यम् ॥ कृतसमासान्तग्रहणान्नेह—स्वर्पू[3] । स्वपी ॥ **अवर्णान्ताद्वा * ॥** प्रेपम्[4] । परेपम् । प्रापम् । परापम् ॥ **ऊदनोर्देशे ।** ६ । ३ । ९८ ॥ अनोः परस्यापस्य ऊत्स्याद्देशे । अनूपो देशः ॥ राजधुरा ॥ अक्षे तु अक्षधूः । दृढधूरक्षः ॥ सखिपथः । रम्यपथो देशः ॥ **अच् प्रत्यन्ववपूर्वात्सामलोम्नः ।** । ५ । ४ । ७५ ॥ एतत्पूर्वात्सामलोमान्तात्समासादच् स्यात् । प्रतिसामम् । अनुसामम् । अवसामम् । प्रतिलोमम् । अनुलोमम् । अवलोमम् ॥ **कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते * ॥** कृष्णभूमः[5] । उदग्भूमः । पाण्डुभूमः । द्विभूमः प्रासादः ॥ **संख्याया नदीगोदावरीभ्यां च * ॥** पञ्चनदम् । सप्तगोदावरम् ॥ अजिति योगविभागादन्यत्रापि—पद्मनाभः ॥ **अक्ष्णोऽदर्शनात् ।** ५ । ४ । ७६ ॥ अचक्षुः[6]पर्यायादक्ष्णोऽच् स्यात्समासान्तः । गवामक्षीव गवाक्षः ॥ **अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ।** ५ । ४ । ७७ ॥ एते पञ्चविंशतिरजन्ता निपात्यन्ते ॥ **आद्यास्त्रयो बहुव्रीहयः**[7] । अविद्यमानानि चत्वार्यस्य अचतुरः । विचतुरः । सुचतुरः ॥ **त्र्युपाभ्यां चतुरोऽजिष्यते * ॥** त्रिचतुराः । चतुर्णां समीपे ये सन्ति ते उपचतुराः ॥ **तत एकादश द्वन्द्वाः ।** स्त्रीपुंसौ । धेन्वनडुहौ ।

१ अ इत्यत्र 'सुपां सुलुक्' इति प्रथमाया लुक् ॥ २ 'स्त्रापस्तिष्ठन्ति' इति येन विधिरिति सूत्रभाष्ये प्रयोगोऽत्र प्रमाणमिति भावः ॥ ३ 'न पूजनात्' इति सूत्रेण समासान्तनिषेध इति भावः ॥ ४ अत्र प्रमाणभूतानि भाष्योदाहरणान्येव दर्शयति–**प्रेपमित्यादि** ॥ ५ 'कृष्णभूमः' 'पञ्चनदम्' 'पद्मनाभः' इत्यादिसिद्धिः पृषोदरादित्वात्सत्यभिधाने इति योगविभागस्य भाष्येऽदर्शनविदां सिद्धान्तः ॥ ६ दर्शनशब्दो योगरूढिभ्यां चक्षुःपर्याय इति ॥ ७ समासपरिगणनं भाष्योक्तमेवाह–**आद्या इत्यादिना** ॥

मे । वाङ्मनसे । अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् । दाराश्च गावश्च दारगवम् । ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम्–निपातनाट्टिलोपः । पदष्ठीवम्–निपातनात्पादशब्दस्य पद्भावः । नक्तं च दिवा च ' नक्तन्दिवम् ' । रात्रौ च दिवा च ' रात्रिन्दिवम् ' रात्रेर्मान्तत्वं निपात्यते । अहनि च दिवा च 'अहर्दिवम् ' वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनीत्यर्थः ॥ सरजसमिति साकल्येऽव्ययीभावः । बहुव्रीहौ तु सरजः पङ्कजम् । निश्चितं श्रेयो निःश्रेयसम् । तत्पुरुष एव । नेह–निःश्रेयान् पुरुषः । पुरुषस्यायुः पुरुषायुषम् ॥ ततो द्विगू । द्व्यायुषम् । त्र्यायुषम् ॥ ततो द्वन्द्वः । ऋग्यजुषम् ॥ ततस्त्रयः कर्मधारयाः । जातोक्षः । महोक्षः । वृद्धोक्षः ॥ शुनः समीपम् उपशुनम् । टिलोपाभावः संप्रसारणं च निपात्यते ॥ गोष्ठे[2] श्वा गोष्ठश्वः ॥ **ब्रह्महस्तिभ्यां वर्चसः ।५।४।७८ ॥** अच् स्यात् । ब्रह्मवर्चसम् । हस्तिवर्चसम् ॥ **पल्यराजभ्यां चेति वक्तव्यम् ॥** पल्यवर्चसम् ॥ राजवर्चसम् ॥ **अवसमन्धेभ्यस्तमसः ।५।४।७९ ॥** अवतमसम् । संतमसम् । अन्धयतीत्यन्धं पचाद्यच् । अन्धं तमः अन्धतमसम् ॥ **श्वसोवसीयःश्रेयसः । ५ । ४ । ८० ॥** वसुशब्दः प्रशस्तवाची तत ईयसुनि वसीयः । श्वस्शब्द उत्तरपदार्थप्रशंसामाशीर्विषयतामाह । मयूरव्यंसकादित्वात्समासः ॥ श्वोवसीयसम् । श्वःश्रेयसं ते भूयात् ॥ **अन्ववतप्ताद्रहसः । ५ ।४ । ८१ ॥** अनुरहसम् । अवरहसम् । तप्तरहसम् ॥ **प्रतेरुरसः सप्तमीस्थात् ।५। ४। ८२ ॥** उरसि इति प्रत्युरसम् । विभक्त्यर्थेऽव्ययीभावः ॥ **अनुगवमायामे । ५। ४। ८३ ॥** एतन्निपात्यते दीर्घत्वे ॥ अनुगवं यानम् । ' यस्य चायामः ' इति समासः ॥ **द्विस्तावा त्रिस्तावा वेदिः । ५ । ४ । ८४ ॥** अच्प्रत्ययष्टिलोपः समासश्च निपात्यते ॥ यावती प्रकृतौ वेदिस्ततो द्विगुणा त्रिगुणा वाऽश्वमेधादौ तत्रेदं निपातनम् ॥ वेदिरिति किम् ? द्विस्तावती त्रिस्तावती रज्जुः ॥ **उपसर्गादध्वनः । ५ । ४ । ८५ ॥** प्र गतोऽध्वानं प्राध्वो रथः ॥ **न पूजनात् । ५ । ४ । ६९ ॥** पूजनार्थात्परेभ्यः समासान्ता न स्युः ॥ सुराजा । अतिराजा ॥ **स्वतिभ्यामेव[3] * ॥** नेह– परमराजः ॥ पूजनात्किम् ? गामतिक्रान्तोऽतिगवः ॥ बहुव्रीहौ[4] सक्थ्यक्ष्णोरित्यतः प्रागेवायं निषेधः । नेह–सुसक्थः । स्वक्षः ॥ **किमः क्षेपे । ५ । ४ । ७० ॥** क्षेपे यः किंशब्दस्ततः परं यत्तदन्तात्समासान्ता न स्युः ॥ कुत्सितो राजा किंराजा । किंसखा । किंगौः ॥ क्षेपे किम् ? किंराजः किंसखः । किंगवः ॥ **नञस्तत्पुरुषात् । ५ । ४ । ७१ ॥** समासान्तो न ॥ अराजा । असखा ॥ तत्पुरुषात्किम् ? । अधुरं शकटम् ॥ **पथो विभाषा । ५। ४। ७२ ॥** नञ्पूर्वात्पथो वा समासान्तः ॥ अपथम् । अपन्थाः ॥ तत्पुरुषादित्येव– अपथो देशः । अपथं[5] वर्तते ॥

इति समासान्तप्रकणरम् ।

---

१ 'ततोऽव्ययीभावः ' इति भाष्यं निगमयति–**शुनः समीपमिति** ॥ २ ' ततः **सप्तमीसमासः**' इति भाष्यं निगमयति–**गोष्ठे श्वेति** ॥ ३ 'पूजायां स्वतिग्रहणम्' इति वार्तिकफलितमाह–**स्वतिभ्यामिति** ॥ ४ ' प्राग्बहुव्रीहिग्रहणं च ' इति वार्तिकार्थमाह–**बहुव्रीहाविति** ॥ ५ अ पथं वनमित्यत्र शेषः ॥ यद्वा अत्यये ध्वंसे नञोऽव्ययीभावः ॥

## अथालुक्समासप्रकरणम् ।

**अलुगुत्तरपदे** । ६। ३। १॥ अलुगधिकारः प्रागानङः, उत्तरपदाधिकारस्त्वापादसमाप्तेः ॥ **पञ्चम्याः** A **स्तोकादिभ्यः** ६।३।२॥ एभ्यः पञ्चम्या अलुक् स्यादुत्तरपदे । स्तोकान्मुक्तः । एवमन्तिकार्थदूरार्थकृच्छ्रेभ्यः ॥ उत्तरपदे किम्? निष्कान्तः स्तोकान्निस्तोकः ॥ **ब्राह्मणाच्छंसिन उपसंख्यानम्** * ॥ ब्राह्मणे विहितानि शस्त्राणि उपचाराद् ब्राह्मणानि तानि शंसतीति ब्राह्मणाच्छंसी ऋत्विग्विशेषः । द्वितीयार्थे पञ्चम्युपसंख्यानादेव ॥ **ओजःसहोऽम्भस्तमसस्तृतीयायाः** ।६।३।३ ॥ ओजसाकृतमित्यादि ॥ **अञ्जस उपसंख्यानम्** * ॥ अञ्जसाकृतम् । आर्जवेन कृतमित्यर्थः ॥ **पुंसानुजो जनुषान्ध इति च** * ॥ यस्याग्रजः पुमान् स पुंसानुजः । जनुषान्धो जात्यन्धः ॥ **मनसः संज्ञायाम्** । ६ । ३ । ४ ॥ मनसागुप्ता ॥ **आज्ञायिनि च** । ६ । ३ । ५ ॥ मनसा इत्येव । मनसा आज्ञातुं शीलमस्य मनसाज्ञायी ॥ **आत्मनश्च**[1] ।६।३।६ ॥ आत्मनस्तृतीयाया अलुक् स्यात् ॥ **पूरण इति वक्तव्यम्*** ॥ पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः । आत्मना पञ्चमः । जनार्दनस्त्वात्मचतुर्थ एवेति बहुव्रीहिर्बोध्यः ॥ पूरणे किम्? आत्मकृतम् ॥ **वैयाकरणाख्यायां चतुर्थ्याः**[2] । ६ । ३ । ७ ॥ आत्मन इत्येव । आत्मनेपदम् । आत्मनेभाषा । तादर्थ्ये चतुर्थ्येषा । चतुर्थीति योगविभागात्[3]समासः । **परस्य च** । ६ । ३ । ८ ॥ परस्मैपदम् । परस्मैभाषा ॥ **हलदन्तात्सप्तम्याः संज्ञायाम्** । ६ । ३ । ९ ॥ हलन्ताददन्ताच्च सप्तम्या अलुक् संज्ञायाम् । त्वचिसारः ॥ **गवियुधिभ्यां स्थिरः** ।८। ३ । ९५ ॥ आभ्यां स्थिरस्य सस्य षः स्यात् । गविष्ठिरः । अत्र गवीति वचनादेवालुक् । युधिष्ठिरः । अरण्येतिलकाः । अत्र संज्ञायामिति सप्तमीसमासः ॥ **हृद्द्युभ्यां च** ॥ हृदिस्पृक् । दिविस्पृक् ॥ **कारनाम्नि च प्राचां हलादौ** । ६ । ३ । १० ॥ प्राचां देशे यत्कारनाम[4] तत्र हलादावुत्तरपदे हलदन्तात्सप्तम्या अलुक् ॥ मुकुटेकार्षापणम् । दृषदिमाषकः ॥ पूर्वेण सिद्धे नियमार्थम् । कारनाम्न्येव प्राचामेव हलादावेवेति ॥ कारनाम्नि किम्? अभ्यर्हितपशुः[5] । कारादन्यस्यैतद्देयस्य नाम । प्राचां किम्? यूथपशुः । हलादौ किम्? अविकटोरणः ॥ हलदन्तात्किम्? नद्यां दोहो नदीदोहः ॥ **मध्याद् गुरौ** । ६ । ३ । ११ ॥ मध्येगुरुः ॥ **अन्ताच्च** * ॥ अन्तेगुरुः ॥ **अमूर्धमस्तकात्स्वाङ्गादकामे** ।६। ३। १२ ॥ कण्ठेकालः । उरसि-

---

A स्तोकान्तिकदूरार्थकृच्छ्राणीति सूत्रपठिता एव स्तोकादयः ॥

---

१ 'आत्मनश्च पूरणे' इति विशिष्टं सूत्रं काशिकापाठे ॥ विशिष्टस्यैव वार्तिकत्वं भाष्यदर्शनतः प्रतीयते ॥
२ 'वैयाकरणाख्यायां चतुर्थ्याः' इत्यस्यापि 'परस्य च' इत्युत्तरसूत्रेऽनुवर्तनात् परस्मैपदपरस्मैभाषाशब्दसिद्धौ आत्मनेपदात्मनेभाषेति वैयाकरणाख्यादृष्टचतुर्थ्यलुग्योग्यस्यात्मन्शब्दस्यैव समुच्चयार्थश्चकार इत्यभिप्रायं प्रकटयति-**आत्मन इत्येवेति** ॥ ३ योगविभागस्य भाष्यादृष्टत्वात् 'सुप् सुपा' इत्युपन्यासो योग्यः ॥
४ वणिक्पशुपालकर्षकेभ्यो राजग्राह्यो भागः करः । स एव कारः, तस्य नाम संज्ञा कारनाम ॥ ५ **अभ्यर्हितपशुरिति** । 'षडर्घ्या भवन्ति-आचार्य ऋत्विग् विवाह्यो राजा प्रियः स्नातकः' इति सूत्रेण राज्ञोऽर्हणीयत्वेन मधुपर्के पशो राजग्राह्यत्वेऽपि न तत् करत्वेन किंतु अभ्यर्हणाङ्गत्वेनेति भावः ॥

लोमा ॥ अमूर्धमस्तकात्किम् ? मूर्धशिखः ॥ मस्तकशिखः ॥ अकामे किम् ? मुखे कामोऽस्य मुखकामः ॥ **बन्धे च विभाषा । ५ । ३ । १३ ॥** हलदन्तात्सप्तम्या अल ॥ हस्तेबन्धः । हस्तबन्धः ॥ हलदन्तेति किम् ? गुप्तिबन्धः ॥ **तत्पुरुषे कृति बहुलम् । ६ । ३ । १४ ॥** स्तम्बेरमः । कर्णेजपः ॥ क्वचिन्न—कुरुचरः ॥ **प्रावृट्शरत्कालदिवां जे । ६ । ३ । १५ ॥** प्रावृषिजः । शरदिजः । कालेजः । दिविजः । पूर्वस्यायं प्रपञ्चः ॥ **विभाषा वर्षक्षरशरवरात् । ६ । ३ । १६ ॥** एभ्यः सप्तम्या अलुक् जे ॥ वर्षेजः । वर्षजः । क्षरेजः । क्षरजः । शरेजः । शरजः । वरेजः । वरजः ॥ **घकालतनेषु कालनाम्नः । ६ । ३ । १७ ॥** सप्तम्या विभाषाऽलुक् स्यात् ॥ घे—पूर्वाह्णेतरे । पूर्वाह्णतरे । पूर्वाह्णेतमे । पूर्वाह्णतमे । काल—पूर्वाह्णेकाले । पूर्वाह्णकाले । तने—पूर्वाह्णेतने । पूर्वाह्णतने ॥ **शयवासवासिष्वकालात् । ६ । ३ । १८ ॥** खेशयः । खशयः । ग्रामेवासः । ग्रामवासः । ग्रामेवासी । ग्रामवासी ॥ हलदन्तादित्येव । भूमिशयः ॥ **अपो योनियन्मतुषु * ॥** अप्सु योनिरुत्पत्तिर्यस्य सोऽप्सुयोनिः । अप्सु भवोऽप्सव्यः । अप्सुमन्तावाज्यभागौ ॥ **नेन्सिद्धबध्नातिषु च । ६ । ३ । १९ ॥** इन्नन्तादिषु सप्तम्या अलुग्न ॥ स्थण्डिलशायी । साङ्काश्यसिद्धः । चक्रबद्धः ॥ **स्थे च भाषायाम् । ६ । ३ । २० ॥** सप्तम्या अलुग्न ॥ समस्थः ॥ भाषायां किम् ? कृष्णोऽस्याखरेष्ठः ॥ **षष्ठ्या आक्रोशे ।६।३।२१ ॥** चौरस्य कुलम् ॥ आक्रोशे किम् ? ब्राह्मणकुलम् ॥ **वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु * ॥** वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः ॥ **आमुष्यायणाऽऽमुष्यपुत्रिकाऽऽमुष्यकुलिकेति च *** ॥ अमुष्यापत्यम् आमुष्यायणः । नडादित्वात्फक् । अमुष्यपुत्रस्य भावः आमुष्यपुत्रिका । मनोज्ञादित्वाद् वुञ् । एवमामुष्यकुलिका ॥ **देवानांप्रिय इति च *** ॥ मूर्खे ॥ अन्यत्र—देवप्रियः ॥ **शेपपुच्छलाङ्गूलेषु शुनः *** ॥ शुनःशेपः । शुनःपुच्छः । शुनोलाङ्गूलः ॥ **दिवश्च दासे * ॥** दिवोदासः ॥ **पुत्रेऽन्यतरस्याम् । ६ । ३ । २२ ॥** षष्ठ्याः पुत्रे परेऽलुग्वा निन्दायाम् ॥ दास्याःपुत्रः । दासीपुत्रः ॥ निन्दायां किम् ? ब्राह्मणीपुत्रः ॥ **ऋतो विद्यायोनिसंबन्धेभ्यः ।६। ३ । २३ ॥** विद्यासंबन्धयोनिसंबन्धवाचिन ऋदन्तात्षष्ठ्या अलुक् ॥ होतुरन्तेवासी । होतुःपुत्रः । पितुरन्तेवासी । पितुःपुत्रः ॥ **विद्यायोनिसंबन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम् *** ॥ नेह—होतृधनम् ॥ **विभाषा**

---

१ यद्यपि भाष्यवृत्त्यादौ ‘ **अपो योनियन्मतिषु** ’ इत्येवमेव वार्तिके, उदाहरणे च ‘अप्सुमतिः’ इति पाठ उपलभ्यते । तथापि हरदत्तानुसारेण वार्तिकपाठं विपर्यस्यति—**अपो योनियन्मतुषु इति** ॥

२ यद्यपि भाष्ये ‘ **देवानां प्रिय इति चोपसंख्यातम्** ’ इत्येवमानुपूर्वीक एव वार्तिकपाठ उपलभ्यते नतु ‘ मूर्खे ’ इत्यर्थनिर्देशघटितः । तथापि प्रकृतवार्तिकस्य “ षष्ठ्या आक्रोशे ” इत्येतत्सूत्रे पठितत्वेनात्रापि ‘ आक्रोशे ’ इत्यस्य संबन्धे तत्फलितमेव निर्दिष्टम्—‘ **मूर्ख** ’ इति ॥ परं तु ‘ **स्याद्देवानांप्रियः** क्षेपे’ इति त्रिकाण्डशेषस्य ‘ **देवानांप्रिय**जाल्मौ च ’ इति हैमस्य च संवादेनासमीक्ष्यकारितामात्रं निन्दा प्रतीयते । अत एव ‘ अजेर्व्यघञपोः ’ इति सूत्रभाष्ये वैयाकरणं प्रति ‘ **सूत आह—प्राप्तिज्ञो देवानांप्रियः, न त्विष्टिज्ञः** ’ इति सूतवाक्ये प्राप्तिज्ञेऽपि ‘ देवानांप्रियः ’ इति प्रयोगः ॥

**स्वसृपत्योः । ६।३।२४** ॥ ऋदन्तात्षष्ठ्या अलुग् वा स्वसृपत्योः परयोः ॥ **मातुःपितुर्भ्यामन्यतरस्याम् । ८ । ३ । ८५** ॥आभ्यां स्वसुः सस्य षो वा स्यात् समासे ॥ मातुःष्वसा । मातुःस्वसा । पितुःष्वसा । पितुःस्वसा ॥ लुक्पक्षे तु–॥ **मातृपितृभ्यां स्वसा । ८।३ । ८४**॥ आभ्यां परस्य स्वसुः सस्य षः स्यात्समासे ।मातृष्वसा पितृष्वसा ॥ असमासे तु मातुः स्वसा । पितुः स्वसा ॥

इत्यलुक्समासप्रकरणम् ।

---

## अथ समासाश्रयविधिप्रकरणम् ।

**घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः । ६ । ३ । ४३** ॥ भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वः स्यात् घरूपकल्पप्प्रत्ययेषु परेषु चेलडादिषु चोत्तरपदेषु॥ ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रेत्यादि ॥ ब्रूञः पचाद्यचि वच्यादेशगुणयोरभावो निपात्यते । चेलडादीनि वृत्तिविषये कुत्सनवाचीनि तैः कुत्सितानि कुत्सनैरिति समासः ॥ ङ्यः किम् ? दत्तातरा ॥ भाषितपुंस्कात्किम् ? आमलकीतरा । कुवलीतरा ॥ **नद्याः शेषस्यान्यतरस्याम् । ६ । ३ । ४४**॥ अङ्यन्तनद्या ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा स्यात् ॥ ब्रह्मबन्धुतरा । ब्रह्मबन्धूतरा । स्त्रितरा । स्त्रीतरा ॥ **कृन्नद्या न *** ॥ लक्ष्मीतरा ॥ **उगितश्च । ६ । ३ । ४५** ॥ उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात् ॥ विदुषितरा । ह्रस्वाभावपक्षे तु तसिलादिष्विति पुंवत्–विद्वत्तरा । वृत्त्यादिषु विदुषीतरेत्यप्युदाहृतं तन्निर्मूलम्[1] ॥ **हृदयस्य हृल्लेखयदण्लासेषु । ६ । ३ । ५०** ॥ हृदयं लिखतीति हृल्लेखः । हृदयस्य प्रियं हृद्यम् । हृदयस्येदं हार्दम् । हृल्लासः ॥ लेखेत्यणन्तस्य ग्रहणम् । घञि तु हृदयलेखः । लेखग्रहणमेव ज्ञापकम्[2] उत्तर[3]पदाधिकारे तदन्तविधिर्नास्तीति ॥ **वा शोकष्यञ्रोगेषु । ६ । ३ । ५१** ॥ हृच्छोकः । हृदयशोकः ; सौहार्द्यम् । सौहृदय्यम् । हृद्रोगः । हृदयरोगः । हृदयशब्दपर्यायो हृच्छब्दो[4]ऽप्यस्ति । तेन सिद्धे प्रपञ्चार्थमिदम् ॥ **पादस्य पदाज्यातिगोपहतेषु । ६ । ३ । ५२** ॥ एषूत्तरपदेषु पादस्य पद इत्यदन्त आदेशः स्यात् । पादाभ्यामजतीति पदाजिः । पदातिः । ' अज्यतिभ्याम् पादे च ' इतीण् प्रत्ययः । अजेर्व्यभावो निपातनात् ॥ पदगः । पदोपहतः । **पद्यत्यतदर्थे ।६।३।५३** ॥ पादस्य पत्स्यादतदर्थे यति परे ॥ पादौ विध्यन्ति पद्याः शर्कराः । अतदर्थे किम् ? पादार्थमुदकं पाद्यम् । पादार्घाभ्यां चेति यत् ॥ **इके चरतावुपसंख्यानम्***॥ पादाभ्यां चरति पदिकः । पर्पादित्वात् ष्ठन् ॥ **हिमकाषिहतिषु च । २ । ३ । ५४** ॥ पद्धि-

---

१ .अप्रवर्तमानस्य ह्रस्वस्य पुंवत्त्वबाधकत्वासंभवादिति शेषः ॥ २ ज्ञापकपरभाष्यप्रामाण्यादिति भावः ॥ ३ तेन ' कुमारीगौरितरा ' इत्यत्र तरबन्ते परे ह्रस्वो नेति भावः ॥ ४ ' चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ' इत्येवमिति भावः ॥ ५ ' पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् ' ' पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ' पाद–पद–पद्–इत्येवं त्रिधोपलम्भात्प्रपञ्चार्थमेवेति बोध्यम् ॥

मम् । पत्काषी । पद्धतिः ॥ **ऋचः शे । ६ । ३ । ५५॥** ऋचः पादस्य पत्स्याच्छे परे ॥ गायत्रीं पच्छः शंसति । पादं पादमित्यर्थः ॥ ऋचः किम् ? पादशः कार्षापणं ददाति ॥ **वा घोषमिश्रशब्देषु । ६ । ३ । ५६ ॥** पादस्य पत् ॥ पद्घोषः । पादघोषः । पन्मिश्रः । पादमिश्रः । पच्छब्दः । पादशब्दः ॥ **निष्के चेति वाच्यम् *** ॥ पन्निष्कः । पादनिष्कः ॥ **उदकस्योदः संज्ञायाम् । ६ । ३ । ५७॥** उदमेघः ॥ **उत्तरपदस्य चेति वक्तव्यम् ***॥ क्षीरोदः ॥ **पेषंवासवाहनधिषु च । ७ । ३ । ५८ ॥** उदपेषं पिनष्टि । उदवासः । उदवाहनः । उदधिर्घटः । समुद्रे तु पूर्वेण सिद्धम् ॥ **एकहलादौ पूरयितव्येऽन्यतरस्याम् । ६ । ३ । ५९ ॥** उदकुम्भः । उदककुम्भः ॥ एकेति किम् ? उदकस्थाली ॥ पूरयितव्येति किम् ? उदकपर्वतः ॥ **मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च । ६ । ३ । ६० ॥** उदमन्थः । उदकमन्थः । उदौदनः । उदकौदनः । **इको ह्रस्वोऽङ्यो गालवस्य । ६ । ३ । ६१ ॥** इगन्तस्याङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे । ग्रामणिपुत्रः । ग्रामणीपुत्रः ॥ इकः किम् ? रमापतिः ॥ अङ्य इति किम् ? गौरीपतिः ॥ गालवग्रहणं पूजार्थम् । अन्यतरस्यामित्यनुवृत्तेः ॥ **इयङुवङ्भाविनामव्ययानां च नेति वाच्यम् *** ॥ श्रीमदः । भ्रूभङ्गः । शुक्लीभावः ॥ A**अभ्रूकुसादीनामिति वक्तव्यम् *** ॥ भ्रुकुंसः । भ्रुकुटिः । भ्रूकुंसः । भ्रूकुटिः ॥ अकारोऽनेन विधीयत इति व्याख्यानान्तरम् ॥ भ्रकुंसः । भ्रकुटिः। भ्रुवा कुंसो भाषणं शोभा वा यस्य सः स्त्रीवेषधारी नर्तकः । भ्रुवः कुटिः कौटिल्यम् । **एकतद्धिते च । ४ । ३ ॥ ५२ ॥** एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च ॥ एकस्य आगतं एकरूप्यम् । एकक्षीरम् ॥ **ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् । ६ । ३ । ६३ ॥** रेवतिपुत्रः अजक्षीरम् ॥ **त्वे च । ६ । ३ । ६४ ॥** त्वप्रत्यये ङ्यापोर्वा ह्रस्वः ॥ अजत्वम् । अजात्वम् । रोहिणित्वम् । रोहिणीत्वम् ॥ **ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे । ६ । १ । १३ ॥** ष्यङन्तस्य * पूर्वपदस्य संप्रसारणं स्यात्पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे ॥ **संप्रसारणस्य । ६ । ३ । १३९ ॥** संप्रसारणस्य दीर्घः स्यादुत्तरपदे ॥ कौमुदगन्ध्यायाः पुत्रः । कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः ॥ व्यवस्थितविभाषया ह्रस्वो न ॥ **स्त्रीप्रत्यये चानुपसर्जने** नेति तदादिनियमप्रतिषेधात्—परमकारीषगन्धीपुत्रः ॥ उपसर्जने तु तदादिनियमान्नेह—अतिकारीषगन्ध्य-

---

A भ्रकुंसः भ्रकुटिः ॥ इति भ्रकुट्यादिः ॥

---

१ 'एकहलादावित्युच्यते । सर्वश्चैवैकहलादिः । तत्र प्रकर्षगतिर्विज्ञायते साधीयो य एकहलादिरिति, कश्च साधीयः । यत्रैकं हलमुच्चार्याजुच्यते' इति भाष्यं स्मरणीयमेव ॥ २ तत्पुरुषपदेन पूर्वपदोत्तरपदयोराक्षेप इति भावः ॥ ३ 'ष्यङ' इति संप्रसारणे पूर्वरूपे च अल्विधित्वेऽपि दीर्घविधानसामर्थ्यात् स्थानिवत्त्वेन संप्रसारणत्वे दीर्घ इति भावः ॥ ४ 'इको ह्रस्व' इत्यनेन प्राप्तः ॥ ५ 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेः' इति परिभाषाप्राप्तेत्यादिः ॥ ६ परमकारीषगन्ध्याशब्दे 'कारीषगन्ध्या' इति ष्यङन्तस्योपसर्जनत्वाभावात् तदादिनियमो नेति भावः ॥ ७ कारीषगन्ध्यामतिक्रान्तस्य पुत्रः अतिकारीषगन्ध्यपुत्र इत्यत्र ष्यङन्तस्यातिक्रमणार्थं प्रत्युपसर्जनत्वेन तदादिनियमस्याप्रतिषेधात् पूर्वपदस्य अतिकारीषगन्ध्यपदस्य न ष्यङन्तत्वमिति भावः ॥

पुत्रः ॥ **बन्धुनि बहुव्रीहौ । ६ । १ । १४ ॥** बन्धुशब्दे उत्तरपदे ष्यङः संप्रसारणं स्याद्बहुव्रीहौ ॥ कारीषगन्ध्या बन्धुरस्येति कारीषगन्धीबन्धुः ॥ बहुव्रीहाविति किम् ? कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः। क्लीबनिर्देशस्तु शब्दस्वरूपापेक्षया ॥ **मातज्मातृकमातृषु वा*॥** कारीषगन्धीमातः । कारीषगन्ध्यामातः । कारीषगन्धीमातृकः । कारीषगन्ध्यामातृकः । कारीषगन्धीमाता । कारीषगन्ध्यामाता । अस्मादेव निपातनान्मातृशब्दस्य मातजादेशः कविकल्पश्च । बहुव्रीहावेवेदम् । नेह–कारीषगन्ध्याया माता कारीषगन्ध्यामाता । चित्त्वसामर्थ्याच्चित्स्वरो बहुव्रीहिस्वरं बाधते ॥ **इष्टकेषीकामालानां चिततूलभारिषु । ६ । ३ । ६५ ॥** इष्टकादीनां तदन्तानां[१] च पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात् ॥ इष्टकचितम् । पक्वेष्टकचितम्। इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारी । उत्पलमालभारी ॥ **कारे सत्यागदस्य । ६ । ३ । ७० ॥** मुम् स्यात् । सत्यङ्कारः । अगदङ्कारः ॥ **अस्तोश्चेति वक्तव्यम् *॥** अस्तुङ्कारः ॥ **धेनोर्भव्यायाम् *॥** धेनुम्भव्या ॥ **लोकस्य पृणे *॥**लोकम्पृणः । पृण इति मूलविभुजादित्वात्कः ॥ **इत्येऽनभ्याशस्य *॥** अनभ्याशमित्यः । दूरतः परिहर्तव्य इत्यर्थः । **भ्राष्ट्राग्न्योरिन्धे *॥** भ्राष्ट्रमिन्धः । अग्निमिन्धः ॥ **गिलेऽगिलस्य*॥** तिमिङ्गिलः ॥ अगिलस्य किम् । गिलगिलः ॥ **गिलगिले च *॥** तिमिङ्गिलगिलः ॥ **उष्णभद्रयोः करणे*॥** उष्णङ्करणम् । भद्रङ्करणम् ॥ **रात्रेः कृति विभाषा । ६ । ३ । ७२ ॥** रात्रिञ्चरः । रात्रिचरः । रात्रिमटः । रात्र्यटः । अखिदर्थमिदं सूत्रम् । खिति तु अरुर्द्विषदिति नित्यमेव वक्ष्यते । रात्रिम्मन्यः ॥ **सहस्य सः संज्ञायाम् । ६ । ३ । ७८ ॥** उत्तरपदे ॥ सपलाशम् ॥ संज्ञायां किम् ? सहयुध्वा[२] ॥ ॥ **ग्रन्थान्ताधिके च । ६ । ३ । ७९॥** अनयोरर्थयोः सहस्य सः स्यादुत्तरपदे ॥ समुहूर्तं[३] ज्योतिषमधीते । सद्रोणा खारी ॥ **द्वितीये चानुपाख्ये । ६ । ३ । ८० ॥** अनुमेये[४] द्वितीये सहस्य सः स्यात् ॥ सराक्षसीका[५] निशा । राक्षसी साक्षादनुपलभ्यमाना निशयाऽनुमीयते ॥ **समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु । ६ । ३ । ८४ ॥** समानस्य सः स्यादुत्तरपदे नतु मूर्धादिषु ॥ अनु भ्राता सगर्भ्यः । अनु सखा सयूथ्यः । यो नः सनुत्यः । 'तत्र भवः' इत्यर्थे 'सगर्भसयूथसनुताद्यत्' ॥ अमूर्धादिषु किम् । समानमूर्धा । समानप्रभृतयः । समानोदर्काः ॥ समानस्येति योगो विभज्यते । तेन सपक्षः साधर्म्यं सजातीयमित्यादि सिद्धमिति काशिका ॥ अथवा सहशब्दः सदृशवचनोऽप्यस्ति।सदृशः सख्या ससखीति यथा । तेनायमस्वपदविग्रहो बहुव्रीहिः । समानः पक्षोऽस्येत्यादि ॥ **ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु । ६ । ३ । ८५ ॥** एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात् ॥ सज्योतिः । सजनपद इत्यादि ॥ **चरणे ब्रह्म-**

---

१ 'पदाङ्गाधिकारे तस्य तदन्तस्य च' इति परिभाषोपस्थितमर्थमाह–**तदन्तानामिति** ॥ २ सहे चेति क्वनिपि उपपदसमासः ॥ ३ अन्तवचनेऽव्ययीभावः ॥ ४ आसमन्तात् ख्यायते दृश्यते अनेनेति आर्धधातुकविवक्षायां 'चक्षिङः ख्याञ्' 'आतश्चोपसर्गे' इत्याङ्, आख्याया दर्शनस्यच क्षुषः समीपम् उपाख्यं प्रत्यक्षम्॥ न उपाख्यम् अनुपाख्यम् अप्रत्यक्षम् अनुमेयमित्याह **अनुमेय इति** ॥ ५ बहुव्रीहिः न घृतश्चेति कप् ॥

चारिणि । ६ । ३ । ८६ ॥ ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने॥ चरणः शाखा । ब्रह्म वेदः । तदध्ययनार्थं व्रतमपि ब्रह्म तच्चरतीति ब्रह्मचारी । समानः सः सब्रह्मचारी ॥ **तीर्थे ये । ६ । ३ । ८७ ॥** तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात् ॥ सतीर्थ्यः एकगुरुकः । समानतीर्थे वासीति यत्प्रत्ययः ॥ **विभाषोदरे । ६ । ३ । ८८ ॥** यादौ प्रत्यये विवक्षिते इत्येव ॥ सोदर्यः । समानोदर्यः ॥ **दृग्दृशवतुषु । ६ । ३ ८९ ॥** सदृक् । सदृशः ॥ **दृक्षे चेति वक्तव्यम्** * ॥ सदृक्षः ॥ वतुरुत्तरार्थः ॥ **इदंकिमोरीश्की ६ । ३ । ९० ॥** दृग्दृशवतुषु इदम ईश् किमः की स्यात् । ईदृक् । ईदृशः । कीदृक् । कीदृशः॥ वतूदाहरणं वक्ष्यते ॥ **दृक्षे च ॥** ईदृक्षः । कीदृक्षः ॥ **आ सर्वनाम्नः ॥ दृक्षे च ॥** तादृक् । तादृशः । तावान् । तादृक्षः ॥ दीर्घः । मत्वोत्वे । अमूदृक् । अमूदृशः । अमूदृक्षः ॥ **समासेऽङ्गुलेः सङ्गः । ८ । ३ । ८० ॥** अङ्गुलिशब्दात्सङ्गस्य सस्य मूर्धन्यः स्यात्समासे ॥ अङ्गुलिषङ्गः ॥ समासे किम् ? अङ्गुलेः सङ्गः ॥ **भीरोः स्थानम् । ८ । ३ । ८१ ॥** भीरुशब्दात् स्थानस्य सस्य मूर्धन्यः स्यात्समासे ॥ भीरुष्ठानम् ॥ असमासे तु भीरोः स्थानम् ॥ **ज्योतिरायुषः स्तोमः । ८ । ३ । ८३ ॥** आभ्यां स्तोमस्य सस्य मूर्धन्यः स्यात्समासे ॥ ज्योतिष्टोमः। आयुष्टोमः ॥ समासे किम् ? ज्योतिषः स्तोमः ॥ A**सुषामादिषु च । ८ । ८३ । ९८ ॥** सस्य मूर्धन्यः ॥ शोभनं साम यस्य सुषामा । सुषन्धिः ॥ **एति संज्ञायामगात् [ ८ । ३ । ९० ] ॥** एति सस्य मूर्धन्यः । हरिषेणः ॥ एति किम् ? हरिसक्थम् ॥ संज्ञायां किम् ? पृथुसेनः ॥ अगकारात्किम् ? विष्वक्सेनः ॥ इण्कोरित्येव । सर्वसेनः ॥ **नक्षत्राद्वा [ ८ । ३ । १०० ] ॥** एति सस्य संज्ञायामगकारान्मूर्धन्यो वा ॥ रोहिणीषेणः । रोहिणीसेनः ॥ अगकारात्किम् ? शतभिषक्सेनः ॥ आकृतिगणोऽयम् ॥ **अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु । ६ । ३ । ९९ ॥** अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु ॥ अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यद्रागः । अन्यदीयः । अषष्ठीत्यादि किम् ? अन्यस्यान्येन वाशीः अन्याशीः ॥ कारके छे च नायं निषेधः । अन्यस्य कारकः अन्यत्कारकः । अन्यस्यायमन्यदीयः । गहादेराकृतिगणत्वाच्छः ॥ **अर्थे विभाषा । ६ । ३ । १०० ॥** अन्यदर्थः । अन्यार्थः ॥ **कोः**

---

A सुषामा, निःषामा, दुःषामा, सुषेधः, निःषेधः निषेधः, दुःषेधः, सुषन्धिः, निःषन्धिः, दुःषन्धिः, सुष्ठु, दुष्ठु, गौरिषक्थः संज्ञायाम्, प्रतिष्णिका, जलाषाहम्, ( जलाषाडम् ) नौषेचनम्, दुन्दुभिषेवणम्, (दुन्दुभिषेचनम् ) एतिसंज्ञायामगात् । हरिषेणः, नक्षत्राद्वा । रोहिणीषेणः । आकृतिगणोऽयं सुषामादिः॥

---

१ 'त्यदादिषु दृशोऽनालोचने कञ्च' इति सूत्रे 'समानान्ययोश्च' इति वार्तिकेन समानशब्द उपपदे दृशेः क्विन्कञौ ॥ २ 'इदम्किमोरीश्की' 'आ सर्वनाम्नः' इत्येतदर्थं इत्यर्थः ॥ ३ 'तद्धिते' इत्यादिः ॥ ४ एति संज्ञायामगात्, नक्षत्राद्वा । एतद्गणसूत्रद्वयमपि कैश्चित्पाणिनीयसूत्रपाठे प्रक्षिप्तम् ॥ ५ 'अन्यस्य दुक् छकारकयोः' 'अषष्ठ्यतृतीयास्थस्याशीराशास्थास्थितोत्सुकोतिरागेषु' इत्येवं न्यासकरणस्य भाष्यकृता निर्णीतत्वादिति भावः ॥

**कत्तत्पुरुषेऽचि ६।३। १०१** ॥ अजादावुत्तरपदे ॥ कुत्सितोऽश्वः कदश्वः । कदन्नम् ॥ तत्पुरुषे किम् ? कूष्ट्रो राजा ॥ **त्रौ च*** ॥ कुत्सितास्त्रयः कत्रयः ॥ **रथवदयोश्च । ६। ३ । १०२** ॥ कद्रथः । कद्वदः ॥ **तृणे च जातौ । ६ । ३ । १०३** ॥ कत्तृणम् ॥ **का पथ्यक्षयोः । ६ । ३ । १०४** ॥ कापथम् । काक्षः । अक्षशब्देन तत्पुरुषः । अक्षिशब्देन बहुव्रीहिर्वा ॥ **ईषदर्थे । ६। ३। १०५** ॥ ईषज्जलं काजलम् । अजादावपि परत्वात्कादेशः । काम्लः॥ **विभाषा पुरुषे । ६ । ३।१०६** ॥ कापुरुषः । कुपुरुषः । अप्राप्तविभाषेयम् । ईषदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव । ईषत्पुरुषः कापुरुषः ॥ **कवं चोष्णे ।६।३।१०७** ॥ उष्णशब्दे कोः कवं का च वा स्यात् ॥ कवोष्णम् । कोष्णम् । कदुष्णम् ॥ A**पृषोदरादीनि यथोपदिष्टम् । ६ । ३ । १०९** ॥ पृषोदरप्रकाराणि[1] शिष्टैर्यथोच्चारितानि[2] तथैव साधूनि स्युः ॥ पृषतः उदरं पृषोदरम् । तलोपः ॥ वारिवाहको बलाहकः । पूर्वपदस्य बः उत्तरपदादेश्च लत्वम् ॥

भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् । गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् ॥ १ ॥

**दिक्शब्देभ्यस्तीरस्य तारभावो वा *** ॥ दक्षिणतारम् । दक्षिणतीरम् । उत्तरतारम् । उत्तरतीरम् । **दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च***॥ दुःखेन दाश्यते 'दूडाशः'। दुःखेन नाश्यते 'दूणाशः' दुःखेन दम्भ्यते 'दूडभः' खलू त्रिभ्यः, दम्भेर्नलोपो निपात्यते' दुःखेन ध्यायतीति 'दूढ्यः' आतश्चेति कः । ब्रुवन्तोऽस्यां सीदन्तीति 'बृसी' ब्रुवच्छब्दस्य बृ आदेशः सदेरधिकरणे डट् ॥ आकृतिगणोऽयम् ॥ **संहितायाम् ।६।३।११४॥** अधिकारोऽयम् ॥ **कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य । ६।३।११५॥** कर्णे परे लक्षणवाचकस्य दीर्घः ॥ द्विगुणाकर्णः ॥ लक्षणस्य किम् ? शोभनकर्णः । अविष्टादीनां किम् ? विष्टकर्णः । अष्टकर्णः । पञ्चकर्णः । मणिकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ॥ **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ । ६। ३। ११६** ॥ क्विबन्तेषु एषु परेषु पूर्वपदस्य दीर्घः ॥ उपानत् । नीवृत् । प्रावृट् । मर्मावित् ।

---

A पृषोदर, पृषोत्थान, बलाहक, जीमूत, श्मशान, उलूखल, पिशाच, बृसी, मयूर । इति पृषोदरादिराकृतिगणः ॥

---

१ "येषु लोपागमवर्णविकाराः श्रूयन्ते नचोच्यन्ते तानि पृषोदरप्रकाराणि" इति भाष्यम् ॥
२ 'प्रागादर्शात् प्रत्यक् कालकवनात् दक्षिणेन हिमवन्तम् उत्तरेण पारियात्रम् आर्यावर्तः एतस्मिन्नार्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारं गतास्तत्रभवन्तः शिष्टाः' इति भाष्यम् ॥ ३ तथा च "शिष्टाः शब्देषु प्रमाणम्" इति च भाष्यम् ॥ एवं चैतद्भाष्यप्रामाण्यात् "छन्दोवत्कवयः कुर्वन्ति नह्येषेष्टिरस्ति" इति भाष्यम् 'नह्येषेष्टिः' इति भागस्यैकदेशित्वेन 'किम् (?) एषामिष्टिर्न अपि तु इष्टिरेव' इत्येवमेव काकुभाष्यत्वेन वा व्याख्येयम् ॥ इत्येवम् 'सीतायाः पतये नमः' 'यदूनां पतये' इत्यादिषु 'षष्ठीयुक्तश्छन्दसि वा' इत्यनेन 'सुपतये' इत्येवं समासमाश्रित्यानेन विनापि प्रत्ययं पूर्वोत्तरपदलोपः' इति वा पूर्वपदलोपे समासत्वेन वा घिसंज्ञा करणीया ॥ 'कृष्णस्य सखिरर्जुनः' 'सखिना वानरेन्द्रेण' इत्यादिषु 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इत्यनङ्घिसंज्ञाप्रतिषेधादीनां वैकल्पिकत्वेन निर्वाहः करणीयः ॥

नीरुक् । अभीरुक् । ऋतीषट् । परीतत् ॥ काविति किम् ? परिणहनम् । 'विभाषा पुरुषे' इत्यतो मण्डूकप्लुत्या विभाषानुवर्तते सा च व्यवस्थिता । तेन गतिकारकयोरेव । नेह–पटुरुक् । तिग्मरुक् ॥ **वनगिर्योः संज्ञायां** A**कोटरकिंशुलुकादीनाम्**B । ६ । ३ । ११७ ॥ कोटरादीनां वने परे किंशुलुकादीनां गिरौ परे दीर्घः स्यात्संज्ञायाम् ॥ **वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः** । ८ । ४ । ४ ॥ वनशब्दस्योत्तरपदस्य एभ्य एव णत्वं नान्येभ्यः ॥ इह कोटरान्ताः पञ्च दीर्घविधौ कोटरादयो बोध्याः । तेषां कृतदीर्घाणां णत्वविधौ निर्देशो नियमार्थः । अग्रेशब्दस्य तु विध्यर्थः । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । सारिकावणम् । कोटरावणम् ॥ एभ्य एवेति किम् ? असिपत्रवनम् । वनस्याग्रे अग्रेवणम् । राजदन्तादिषु निपातनात्सप्तम्या अलुक् । प्रातिपदिकार्थमात्रे प्रथमा । किंशुलुकागिरिः ॥ **वले** । ६ । ३ । ११८ ॥ वलप्रत्यये परे दीर्घः स्यात्संज्ञायाम् ॥ कृषीवलः ॥ **मतौ बह्वचोऽनजिरादीनाम्**C । ६ । ३ । ११९ ॥ अमरावती ॥ अनजिरादीनां किम् ? अजिरवती ॥ बह्वचः किम् ? व्रीहिमती ॥ संज्ञायामित्येव । नेह–वलयवती ॥ D**शरादीनां च** । ६ । ३ । १२० ॥ शरावती ॥ **इको वहेऽपीलोः** ।६।३।१२१ ॥ इगन्तस्य दीर्घः स्याद्वहे । ऋषीवहम् । कपीवहम् । इकः किम् ? पिण्डवहम् ॥ अपीलोः किम् ? पीलुवहम् ॥ E**अपील्वादीनामिति वाच्यम्** * ॥ दारुवहम् ॥ **उपसर्गस्य घञ्यमनुष्ये बहुलम्** । ६।३।१२२ ॥ उपसर्गस्य बहुलं दीर्घः स्याद्घञन्ते परे, नतु मनुष्ये ॥ पारीपाकः । परिपाकः ॥ अमनुष्ये किम् ? निषादः ॥ **इकः काशे** । ६ । ३ । १२३ ॥ इगन्तस्योपसर्गस्य दीर्घः स्यात्काशे ॥ वीकाशः । नीकाशः । इकः किम् ? प्रकाशः ॥ **अष्टनः संज्ञायाम्** ।६। ३। १२५ ॥ उत्तरपदे दीर्घः ॥ अष्टापदम् । संज्ञायां किम् ? अष्टपुत्रः ॥ **चितेः कपि** ।६। ३। १२७ ॥ एकचितीकः ॥ **नरे संज्ञायाम्** । ६ । ३ । १२९ ॥ विश्वानरः ॥ **मित्रे चर्षौ** ।६।३।१३० ॥ विश्वामित्रः ॥ ऋषौ किम् ? विश्वमित्रो माणवकः ॥ **शुनो दन्तदंष्ट्रा-**

---

A कोटर, मिश्रक, सिध्रक, पुरग, शारिक । इति कोटरादिः ॥

B किंशुलुक, शाव, नड, अञ्जन, भञ्जन, लोहित, कुक्कुट, । इति किंशुलुकादिः ॥

C अजिर, खदिर, पुलिन, हंस, कारंडव, चक्रवाक । इत्यजिरादिः ॥

D शर, वंश, धूम, अहि, कपि, मणि, मुनि, शुचि, हनु । इति शरादिः ॥

E पील्वादिराकृतिगणः ॥

---

१ '**यथोपदिष्टम्**' इत्यनुवृत्तेः ॥ २ संज्ञायामेव दीर्घस्य विधानादस्य णत्वस्य संज्ञायामेव विधानात् 'पूर्वपदात्संज्ञायाम्' इत्येव सिद्धे इति भावः ॥ ३ अग्रेवणशब्दस्यासंज्ञात्वादिति भावः ॥ ४ 'अगकारान्तपूर्वपदात्' इत्यर्थाद् 'अगः' इति प्रतिषेधो नेति भावः ॥ ५ **अमनुष्यादिष्विति वक्तव्यम्** * । प्रसेवः, प्रसारः, प्रहारः ॥ **सादकारयोः कृत्रिमे** * । एषोऽस्य प्रासादः । एषोऽस्य प्राकारः ॥ कृत्रिम इति किमर्थम् ? एषोऽस्य प्रसादः । प्रकारः ॥ **प्रतिवेशादीनां विभाषा** *। प्रतिवेशः । प्रतीवेशः । प्रतिकारः । प्रतीकारः ॥ बहुलग्रहणस्यैवायं प्रपञ्चो भाष्ये उक्तः ॥ ६ 'अन्येषामपि' इति सूत्रप्रपञ्चभूताभियुक्तोक्तिरियम् ॥

कर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः ॥ श्वादन्तः[1] । इत्यादि ॥ **प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि। ८।४।५॥** एभ्यो वनस्य णत्वं स्यात् । प्रवणम्। कार्ष्यवणम्। इह षात्परत्वाण्णत्वम् ॥ **विभाषौषधिवनस्पतिभ्यः । ८।४।६॥** एभ्यो वनस्य णत्वं वा स्यात् ॥ दूर्वावणम्। दूर्वावनम् । शिरीषवणम् । शिरीषवनम् । **द्व्यच्त्र्यज्भ्यामेव *** ॥ नेह—देवदारुवनम् ॥ A **इरिकादिभ्यः प्रतिषेधो वक्तव्यः *** ॥ नेह—इरिकावनम् । मिरिकावनम् ॥ **वाहनमाहितात् । ८।४।८॥** आरोप्य यदुह्यते तद्वाचिस्थान्निमित्तात्परस्य वाहननकारस्य णत्वं स्यात् ॥ इक्षुवाहणम् ॥ आहितात्किम्? इन्द्रवाहनम् । इन्द्रस्वामिकं वाहनमित्यर्थः। वहतेर्ल्युटि वृद्धिरिहैव सूत्रे निपातनात् ॥ **पानं देशे। ८।४।९॥** पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णत्वं स्याद्देशे गम्ये॥ क्षीरं पानं येषां ते क्षीरपाणा उशीनराः । सुरापाणाः प्राच्याः। पीयते इति पानम्, कर्मणि ल्युट् ॥ **वा भावकरणयोः । ८।४।१०॥** पानस्येत्येव ॥ क्षीरपानम्। क्षीरपाणम् ॥ **गिरिनद्यादीनां**B **वा *** ॥ गिरिनदी । गिरिणदी । चक्रनितम्बा । चक्रणितम्बा ॥ **प्रातिपदिकान्तनुम्विभक्तिषु च । ८।४।११॥** पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा स्यात् ॥ प्रातिपदिकान्ते—माषवापिणौ । नुमि—व्रीहिवापाणि । विभक्तौ--माषवापेण। पक्षे माषवापिनावित्यादि ॥ उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वम्। नेह--गर्गाणां भगिनी गर्गभगिनी । अत[2] एव नुम्ग्रहणं कृतम् । अङ्गस्य नुम्विधानात्तद्भक्तो हि नुम्, नतूत्तरपदस्य। किंच । प्रहिण्वन्नित्यादौ हिवेर्नुमो णत्वार्थमपि नुम्ग्रहणम्। प्रेन्वनमित्यादौ[4] तु क्षुभ्नादित्वान्न ॥ C**युवादेर्न *** ॥ रम्ययूना । परिपक्वानि ॥ **एकाजुत्तरपदे णः ॥** नित्यमित्युक्तम्। वृत्रहणौ । हरिं मानयतीति[5] हरिमाणी । नुमि--क्षीरपाणि । विभक्तौ--क्षीरपेण । रम्यविणा ॥ **कुमति च । ८।४।१३॥** कवर्गवत्युत्तरपदे प्राग्वत् ॥ हरिकामिणौ । हरिकामाणि । हरिकामेण ॥ **पदव्यवायेऽपि । ८।४।३८॥** पदेन व्यवधानेऽपि णत्वं न स्यात् ॥ माषकुम्भवापेन । चतुरङ्गयोगेन ॥ **अतद्धित[6] इति वाच्यम् *** ॥ आर्द्रगोमयेण ॥ शुष्कगोमयेण ॥

---

A इरिका, मिरिका, तिमिरा। इतीरिकादिराकृतिगणः ॥

B गिरिनदी, गिरिनख, गिरिनड्ध, गिरिनितम्ब, चक्रनदी, चक्रनितम्ब, तूर्यमान, माषोन, आर्गयन । इति गिरिनद्यादिराकृतिगणः ।

C युवन्, पक्क, इत्यादि युवादिरपि क्षुभ्नाद्यन्तर्गण एवेति भाष्यस्वरसः ॥

---

१ **आदिना** श्वापुच्छम्। श्वापद इत्यादि। 'दृश्यते यथा तथैव साधु' इत्यर्थात् श्वपदम् श्वपुच्छमित्याद्यपि

२ **अत एव** समासरूपप्रातिपदिकान्त्यस्याग्रहणादेव उत्तरपदभूतप्रातिपदिकान्तस्यैव ग्रहणादेव ॥ समासरूपप्रातिपदिकस्यैवाङ्गत्वेन तदुद्देशेनैव नुमो विधानान्नुम समासावयव एव नतूत्तरपदावयव इति भावः ॥

४ **इत्यादाविति** । 'नुमः' इति शेषः ॥ कृन्नकारस्य तु यथा न भवति तथा तत्रैव वक्ष्यामः ॥

५ **हरिंमानयतीति**। ण्यन्तान्मन्यतेः क्विप् । प्राक्सुबुत्पत्तेरपि समासे नान्तत्वान्ङीपि उत्तरपदभूतप्रातिपदिकान्तत्वान् नकारस्य णत्वं भवतीति भावः ॥ ६ 'व्यवधायकपदनिमित्तिनोर्मध्ये तद्धितो न चेत्' इत्यर्थः ॥ 'पदे व्यवायः' इति विग्रहस्वीकारेण त्वेतत्प्रत्याख्यातं भाष्ये ॥

**कुस्तुम्बुरूणि जातिः । ६ । १ । १४३ ॥** अत्र सुण्निपात्यते ॥ कुस्तुम्बुरु धान्याकम् । क्लीबत्वमतन्त्रम् ॥ जातिः किम् ? कुतुम्बुरूणि । कुत्सितानि तिन्दुकीफलानीत्यर्थः ॥ **अपरस्पराः क्रियासातत्ये । ६ ।१।१४४ ॥** सुण्निपात्यते ॥ अपरस्पराः सार्था गच्छन्ति । सततमविच्छेदेन गच्छन्तीत्यर्थः ॥ क्रियेति किम् ? अपरपरा गच्छन्ति । अपरे च परे च सकृदेव गच्छन्तीत्यर्थः ॥ **गोष्पदं सेवितासेवितप्रमाणेषु । ६ । १ । १४५ ॥** सुट् सस्य षत्वं च निपात्यते ॥ गावः पद्यन्तेऽस्मिन्देशे स गोभिः सेवितो गोष्पदः । असेविते--अगोष्पदान्यरण्यानि । प्रमाणे--गोष्पदमात्रं क्षेत्रम् ॥ सेवितेत्यादि किम् ? गोः पदं गोपदम् ॥ **आस्पदं प्रतिष्ठायाम् । ६ । १ । १४६॥** आत्मयापनाय स्थाने सुट् निपात्यते॥ आस्पदम् ॥ प्रेति किम् ? आपदापदम् ॥ **आश्चर्यमनित्ये ।६।१।१४७ ॥** अद्भुते सुट् ॥ आश्चर्यं यदि स भुञ्जीत ॥ अनित्ये किम् ? आचर्यं कर्म शोभनम् ॥ **वर्चस्केऽवस्करः । ६ । १। १४८॥** कुत्सितं वर्चः वर्चस्कम् अन्नमलं तस्मिन् सुट् ॥ अवकीर्यत इत्यवस्करः ॥ वर्चस्के किम् ? अवकरः ॥ **अपस्करो रथाङ्गम् । ६ ।१।१४९ ॥** अपकरोऽन्यः ॥ **विष्किरः शकुनौ वा । ६ । १ । १५०॥** पक्षे विकिरः। वावचनेनैव सुड्विकल्पे सिद्धे विकिरग्रहणं तस्यापि शकुनेरन्यत्र प्रयोगो माभूदिति वृत्तिस्तन्न । भाष्यविरोधात् ॥ **प्रतिष्कशश्च कशेः । ६ । १ । १५२ ॥** कश गतिशासनयोरित्यस्य प्रतिपूर्वस्य पचाद्यचि सुट् निपात्यते षत्वं च ॥ सहायः पुरोयायी वा प्रतिष्कश इत्युच्यते ॥ कशेः किम् ? प्रतिगतः कशां प्रतिकशोऽश्वः ॥ यद्यपि कशेरेव कशा, तथापि 'कशेरिति धातोर्ग्रहणमुपसर्गस्य प्रतेर्ग्रहणार्थम् । तेन धात्वन्तरोपसर्गान्न ॥ **प्रस्कण्वहरिश्चन्द्रावृषी । ६।१।१५३ ॥** हरिश्चन्द्रग्रहणममन्त्रार्थम् ॥ ऋषीति किम् ? प्रकण्वो देशः । हरिचन्द्रो माणवकः ॥ **मस्करमस्करिणौ वेणुपरिव्राजकयोः । ६। १। १५४ ॥** मकरशब्दोऽव्युत्पन्नस्तस्य सुडिनिश्च निपात्यते ॥ वेण्विति किम् ? मकरो ग्राहः । मकरी समुद्रः ॥ **कास्तीराजस्तुन्दे नगरे । ६ । १ । १५५ ॥** ईषत्तीरमस्यास्तीति कास्तीरं नाम नगरम् । अजस्येव तुन्दमस्येति अजस्तुन्दं नाम नगरम् ॥ नगरे किम् ? कातीरम् । अजतुन्दम् ॥ **कारस्करो वृक्षः । ६ । १ ।१५६॥** कारं करोतीति कारस्कारो वृक्षः । अन्यत्र कारकरः ॥ केचित्तु कस्कादिष्विदं पठन्ति, न सूत्रेषु ॥ [A]**पारस्करप्रभृतीनि च संज्ञायाम् । ६ । १ । १५७ ॥** एतानि ससुट्कानि निपात्यन्ते नाम्नि ॥ पारस्करः । किष्किन्धा ॥ **तद्बृहतोः करपत्योश्चोरदे-**

---

पारस्करो देशः, कारस्करो वृक्षः, रथस्या नदी, किष्कुः प्रमाणम्, किष्किन्धा गुहा, तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च, प्रात्तुंपतौ गवि कर्तरि च, प्रायस्य चित्तिचित्तयोः । इति पारस्करादिराकृतिगणः ॥

---

१ 'सातत्ये' इति निपातननिर्देशेन 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि । समो वा हिततत्योर्मांसस्य पचि युड्घञोः ॥' इति प्राचीनवैयाकरणतन्त्रे वाचनिकस्यास्य श्लोकस्य एकदेशानुमत्या स्वीकारः सूचितः ॥ २ '**विष्किरः शकुनौ विकिरो वेति वक्तव्यम्**' इति वार्तिके इति बोध्यम् ॥ ३ '**विष्किर इत्येतच्छकुनौ वा निपात्यते**' इति भाष्येण शकुनेरन्यत्र विकिरस्येष्टत्वमेव प्रतीयत इति भावः ॥ ४ '**पारस्करादिषु**' इत्येवमुचितः पाठः, तस्मिन्नेव गणेऽस्य दर्शनात् ॥ कस्कादिष्वौचित्याभावाच्च ॥

**वतयोः सुट् तलोपश्च** * ॥ तात्पूर्वं चेत्तेन दकारोऽपि बोध्यः। तद्बृहतोर्दकारतकारौ लुप्येते। करपत्योस्तु सुट्। चोरदेवतयोरिति समुदायोपाधिः। तस्करः। बृहस्पतिः ॥ **प्रायस्य चित्तिचित्तयोः** * ॥ प्रायश्चित्तिः। प्रायश्चित्तम्। वनस्पतिरित्यादि। आकृतिगणोऽयम् ॥

इति समासाश्रयविधिप्रकरणम्।

---

## अथ तद्धितेष्वपत्यादिविकारान्तार्थसाधारणप्रत्ययप्रकरणम्।

**समर्थानां प्रथमाद्वा। ४। १। ८२** ॥ इदं पदत्रयमधिक्रियते 'प्राग्दिशः' इति यावत्॥ सामर्थ्यं परिनिष्ठितत्वम्। कृतसंधिकार्यत्वमिति यावत् ॥ **प्राग्दीव्यतोऽण्। ४। १। ८३** ॥ तेन दीव्यतीत्यतः प्रागणधिक्रियते॥ A**अश्वपत्यादिभ्यश्च। ४। १। ८४** ॥ एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेषु। वक्ष्यमाणस्य ण्यस्यापवादः ॥ **तद्धितेष्वचामादेः। ७। २। ११७** ॥ ञिति णिति च त तद्धिते परेऽचामादेरचो वृद्धिः स्यात् ॥ **किति च। ७। २। ११८** किति तद्धिते च तथा ॥ अश्वपतेरपत्यादि आश्वपतम्। गाणपतम् ॥ गाणपत्यो मन्त्र इति तु प्रामादिकमेव ॥ **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः। ४। १। ८५** ॥ दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यादणोऽपवादः ॥ दैत्यः। अदितेरादित्यस्य वा आदित्यः। प्राजापत्यः ॥ **यमाच्चेति काशिकायाम्** * ॥ याम्यः ॥ **पृथिव्या ञाञौ** * पार्थिवा। पार्थिवी ॥ **देवाद्यञञौ** * दैव्यम् ॥ दैवम् ॥ **बहिषष्टिलोपो यञ्च** ॥ बाह्यः ॥ **ईकक्च** * ॥ बाहीकः ॥ **स्थाम्नोऽकारः** * ॥ अश्वत्थामः। पृषोदरादित्वात्सस्य तः ॥

---

A अश्वपति, स्थानपति, ज्ञानपति, यज्ञपति, बन्धुपति, शतपति, धनपति, गणपति, राष्ट्रपति, कुलपति, गृहपति, पशुपति, धान्यपति, धर्मपति, धन्वपति, सभापति, प्राणपति, क्षेत्रपति। इत्यश्वपत्यादिः ॥

---

१ "झरो झरि" इति लोपेन इति कुतो नोक्तमिति प्रष्टव्यः ॥ २ प्रायस्य चित्तिचित्तयोः सुडस्कारो वेति भाष्यम् ॥ ३ आकृतिगणत्वेनैव परश्शत-परस्सहस्र-परस्युत-परस्लक्ष-परस्कोटिप्रभृतय एव प्रयोगाः, नतु 'परःशत-परोलक्ष' इत्यादिविसर्गौकारविशिष्टाः। सुटः सकारस्य परादित्वेन पदान्तत्वाभावाद्रुत्वविसर्गाप्राप्तेः॥

इति सारदर्शिशिवदत्तदाधिमथकृतायां लघुदाधिमथ्यां समासप्रकरणम्।

---

४ 'घकालतनेषु कालनाम्नः' इति सप्तम्या अलुग्विधानसामर्थ्यात्सुबन्तादेव तद्धितोत्पत्तेर्ज्ञापितत्वे सुबन्तस्य पदत्वात् पदविधित्वादेव 'समर्थः पदविधिः' इति परिभाषोपस्थित्या असामर्थ्ये तद्धितवारणे 'समर्थानाम्' इति 'किं पुनः समर्थम्? अर्थाभिधाने यच्छक्तम्॥ किं पुनस्तत्? कृतवर्णानुपूर्वीकं पदम्' ॥ इति भाष्यानुसारेण 'लोके प्रयोगयोग्यानाम्' इत्यर्थकमेव वाच्यमिति लोके प्रयोगयोग्यं च परिनिष्ठितमेवेत्याह-**सामर्थ्यं परिनिष्ठितत्वमिति**। तच्च-अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वमेवेत्यस्य फलितमाह-**कृतसंधिकार्यत्वमिति** ॥ तथा च अन्तरङ्गत्वात्प्रागेव संधिर्भविष्यत्येवेति व्यर्थं सत् 'समर्थानाम्' इति पदम् 'अकृतव्यूहाः पाणिनीयाः' इति प्राचीनवैयाकरणतन्त्रे वाचनिक्या इहाप्याश्रयणमिति सूचयति। एवं चान्तरङ्गत्वात्प्राक् प्राप्तमपि सवर्णदीर्घत्वं न प्रवर्तेत स्वनिमित्तभूतस्य सवर्णपराक्त्वस्य वृद्ध्या विनाशसंभवस्य ज्ञातत्वात् इति सवर्णदीर्घरूपसंधेः प्राक् प्रवृत्तये समर्थग्रहणमिति स्वांशे चारितार्थ्यमिति। 'च्छ्वोः शूड्' इति सूत्रे सतुक्कनिर्देशेन 'अल्लोपोऽनः' इत्यत्र तपरनिर्देशेन चेयमनित्येति ज्ञाप्यते ॥ इयं भाष्ये क्वापि न व्यवहृतेति नागेशभट्टाः ॥ ५ गणपतिशब्दस्याश्वपत्यादिगणे पाठेनाणो विशेषविहितत्वादिति हरदत्तस्य भावः॥ चातुर्वर्ण्यादेराकृतिगणत्वेनाणन्तात् ष्यञा साधुरेवेति दीक्षिताः ॥

भवार्थे तु लुग्वाच्यः * ॥ अश्वत्थामा ॥ **लोम्नोऽपत्येषु बहुष्वकारः** * ॥ बाह्वादीञोऽपवादः । उडुलोमाः । उडुलोमान् ॥ बहुषु किम् ? औडुलोमिः ॥ **गोरजादिप्रसङ्गे यत्** * ॥ गव्यम् ॥ अजादिप्रसङ्गे किम् ? गोभ्यो हेतुभ्य आगतं गोरूप्यम् । गोमयम् ॥ A **उत्सादिभ्योऽञ्** । ४ । १ । ८६ ॥ औत्सः ॥ **अग्निकलिभ्यां ढग्वक्तव्यः** * ॥ अग्नेरपत्यादि आग्नेयम् । कालेयम् ॥

इति तद्धितेष्वपत्यादिविकारान्तार्थसाधारणप्रत्ययप्रकरणम् ।

---

## अथ तद्धितेष्वपत्याधिकारप्रकरणम् ।

**स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्** । ४ । १ । ८७ ॥ 'धान्यानां भवने'–इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः ॥ स्त्रैणः । पौंस्नः ॥ वत्यर्थे न, 'स्त्रीपुंवच्चेति ज्ञापकात् । स्त्रीवत् । पुंवत् ॥ **द्विगोर्लुगनपत्ये** । ४ । १ । ८८ ॥ द्विगोर्निमित्तं यस्तद्धितोऽजादिरनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात् । पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः ॥ द्विगोर्निमित्तमिति किम् ? पञ्चकपालस्येदं खण्डं पाञ्चकपालम् [2] ॥ अजादिः किम् ? पञ्चगर्गरूप्यम् ॥ अनपत्ये किम् ? द्वयोर्मित्रयोरपत्यं द्वैमित्रिः ॥ **गोत्रेऽलुगचि** । ४ । १ । ८९ ॥ अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक् स्यात् । गर्गाणां [3] छात्राः 'वृद्धाच्छः' ॥ **आपत्यस्य च तद्धितेऽनाति** । ६ । ४ । १५१ ॥ हलः परस्यापत्ययकारस्य लोपः स्यात्तद्धिते परे न त्वाकारे ॥ गार्गीयाः ॥ प्राग्दीव्यतीये किम् ? गर्गेभ्यो हितं गर्गीयम् ॥ अचि किम् ? गर्गेभ्य आगतं गर्गरूप्यम् ॥ **यूनि लुक्** । ४ । १ । ९० ॥ प्राग्दीव्यतीये अजादौ प्रत्यये विवक्षिते युवप्रत्ययस्य लुक् स्यात् ॥ ग्लुचुकस्य गोत्रापत्यं ग्लुचुकायनिः–वक्ष्यमाणः [4] फिन् । ततो यून्यण्–ग्लौचुकायनः । तस्य छात्रोऽपि ग्लौचुकायनः । अणो लुकि वृद्धत्वाभावाच्छो न ॥ **पैलादिभ्यश्च** B । २ । ४ । ५९ ॥ एभ्यो युवप्रत्ययस्य लुक् ॥ पीलाया वेत्यण् ।

---

A उत्स, उपादान, विकिर, विनद, महानद, महानस, महाप्राण, तरुण, तलुन, वृष्कयासे, धेनु, पृथ्वी, पंक्ति, जगती, त्रिष्टुप्, अनुष्टुप्, जनपद, भरत, उशीनर, ग्रीष्म, पीलु, कुण, उदस्थान देश, पृषदंश, भल्लकीय, रथन्तर, मध्यन्दिन, बृहत्, महत्, सत्वत्, कुरु, पञ्चाल, इन्द्रावसान, उष्णिह्, ककुभ्, सुवर्ण, देव, ग्रीष्मादयश्छन्दसि । इत्युत्सादिः ॥

B पैल, शालङ्कि, सात्यकि, सात्यंकामि, राहवि, रावणि, औदञ्चि, औदव्रजि, औदमेधि, औदमज्जि, औदभृज्जि, दैवस्थानि, पैङ्गलौदायनि, राहक्षति, भौलिङ्गि, राणि, औदन्थि, औद्वाहमानि, औज्जिहानि- औदशुद्धि, तद्राजाच्चाणः । आकृतिगणोऽयम् । इति पैलादिः ॥

---

१ 'अन्तःपूर्वपदात्–' इति सूत्रस्थेन वार्तिकेनेति भावः ॥ २ समाहारे द्विगोः कृतत्वात् तद्धितार्थो नात्र द्विगोर्निमित्तमिति भावः ॥ ३ गोत्रे 'यस्कादिभ्यो गोत्रे' इति प्रकरणविहितस्य प्रत्ययस्य लुक्प्रतिषेधो विधीयत इति गोत्रे प्रत्ययस्य लुक् च 'तद्राजस्य बहुषु–' इति प्रकरण एव 'यञञोश्च' इति विधीयते स च बहुष्वेवेति दर्शयन्नुदाहरति–**गर्गाणामिति** ॥ अत्र तु यञो लुग् भवत्येव तथापि अजादिप्रत्ययचिकीर्षायां तु बहुत्वविवक्षायामपि लुक् प्रतिषिध्यत एवेति भावः ॥ ४ 'प्राचामवृद्धात् फिन् बहुलम्' इति वक्ष्यमाण इत्यर्थः ॥

तस्माद् 'अणो द्व्यचः' इति फिञ् । तस्य लुक् पैलः पिता पुत्रश्च ॥ **तद्राजाच्चाणः** * 'द्व्यञ्-मगधेत्यणन्तादाङ्गशब्दाद् 'अणो द्व्यचः' इति फिञो लुक् आङ्गः पिता पुत्रश्च ॥ **इञः प्राचाम्** । २ । ४ । ६० ॥ गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुक् स्यात् तच्चेद्गोत्रं प्राचां भवति ॥ पन्नागारस्यापत्यम् । 'अत इञ' 'यञिञोश्चेति फक्—पान्नागारिः पिता पुत्रश्च ॥ प्राचां किम् ? दाक्षिः पिता । दाक्षायणः पुत्रः॥ **न** A **तौल्वलिभ्यः** । २ । ४ । ६१ ॥ तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य लुक् न स्यात् पूर्वेण प्राप्तः ॥ तुल्वलः । तत इञि फक् । तौल्वलिः पिता । तौल्वलायनः पुत्रः ॥ **फक्फिञोरन्यतरस्याम्** । ४ । १ । ९१ ॥ यूनि लुगिति नित्ये लुकि प्राप्ते विकल्पार्थं सूत्रम् ॥ कात्यायनस्य छात्राः कातीयाः । कात्यायनीयाः ॥ यस्कस्यापत्यं यास्कः शिवाद्यण् । तस्यापत्यं युवा यास्कायनिः '' अणो द्व्यचः इति फिञ् । तस्य छात्राः यास्कीयाः । यास्कायनीयाः ॥ **तस्यापत्यम्** । ४ । १ । ९२ ॥ षष्ठ्यन्तात् कृतसन्धेः प्रथमादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः । उपगोरपत्यमौपगवः । आदिवृद्धिरन्त्योपधावृद्धी बाधते ॥

'तस्येदमित्यपत्येऽपि' 'बाधनार्थं कृतं भवेत्' ।
'उत्सर्गः शेष एवासौ, वृद्धान्यस्य प्रयोजनम् ॥ १ ॥

---

A तौल्वलि, धारणि, पारणि, रावणि, दैलीपि, दैवमित्रि, दैवति, वार्कलि, नैकिक, दैवयज्ञि, दैवमति, वाफट्कि, वैल्वकि, धैम्बकि, आनुरोहिति, पौष्करसादि, आनुराहति, आनुति, प्रादोहनि, नैमिश्रि, प्राडाहति, वान्धकि, वैशीति, आसिनासि, आहिंसि, आसुरि, नैमिषि, आसिबन्धकि, पौष्पि, कारेणुपालि, वैकर्णि, वैनकि, वैहति । इति तौल्वल्यादिः ॥

---

१ '**आदिवृद्ध्यन्त्योपधालक्षणप्रतिषेधः**' इति वार्त्तिकात् ॥ अनुशतिकादिषु 'पुष्करसद्' शब्दपाठात् स्थालीपुलाकन्यायेन ज्ञाप्यते वेति भावः ॥ २ 'तस्येदम्' इति सूत्रेणैव 'अपत्य–समूह–विकार–निवासादीनामर्थानाम् इदमर्थे एवान्तर्भावाद् अणि सिद्धे 'तस्यापत्यम्' इति योगविभागः किमर्थः इत्यर्थ इति प्रश्नः ॥ ३ 'तस्येदम्' इत्यस्य यानि बाधकानि 'वृद्धाच्छः' इत्यादीनि तेषां बाधनार्थं योगस्य विभागकरणमित्यर्थः इति समाधानम् ॥ ४ 'तस्येदम्' इत्यस्य 'शेषे' इत्यधिकारस्थत्वाद् अपत्यरूपार्थस्योक्तत्वेन शेषत्वाभावाद् नैव इदमर्थे तस्यान्तर्भाव इति नैव तेन सूत्रेण सिद्धिः–इति प्रश्नस्यैवासंगतिरिति शङ्कशङ्कां निराकुर्वन् प्रश्नं सुद्रढयति–**उत्सर्ग इति** । 'तस्यापत्यमत इञ्' इत्येवं सूत्रसत्त्वेन 'अकारान्तादिप्रकृतिसंबन्ध्यपत्यरूपार्थस्यैवोक्तत्वेन अकारान्ताद्यतिरिक्तसंबन्ध्यपत्यरूपार्थस्यानुक्तत्वेन शेषत्वाद् तस्य शेषाधिकारीयेदमर्थे अन्तर्भावाद् अण्सिद्धिरेवेति प्रश्नाशयो निर्बाध एव ॥ एतेन प्रश्नस्य दृढीकरणम् ॥ ५ एवं प्रश्ने दृढीभूत एवोत्तरस्यावश्यकतां सूचयन्नुत्तरस्यैवोदाहरणं दर्शयति–**वृद्धानीति** ॥ 'तस्येदम्' इति सामान्यविहितस्याणो बाधकम् 'वृद्धाच्छः' इति तेन सामान्यस्याणो बाधनाद् 'भानवः' इत्यत्र भानुशब्दस्य वृद्धत्वाच्छस्यैवापत्तिरणोऽनुपपत्तिरिति समाधानस्याशयः ॥

योगविभाग[1]स्तु-भानोरपत्यं भानवः ॥ कृत[2]सन्धेः किम् ? सौत्थितिः ॥ अकृतव्यूहपरिभाषया सावुत्थितिर्मा भूत्[3] ॥ समर्थपरिभाषया नेह-वस्त्रमुपगोरपत्यं चैत्रस्य ॥ प्रथमात्किम् ? अपत्यवाचकात्षष्ठ्यर्थे मा भूत्[4] ॥ वाग्रहणाद्वाक्यमपि ॥ दैवयज्ञीति सूत्रादन्यतरस्यांग्रहणानुवृत्तेः समासोऽपि-उपग्वपत्यम् ॥ जातित्वान् ङीष्-औपगवी ॥ आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ॥ **अपत्यं पौत्रप्रभृति गोत्रम् । ४ । १ । १६२ ॥** अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ॥ **जीवति तु वंश्ये युवा । ४१ । १६३॥** वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव न गोत्रसंज्ञम्[5] ॥ **भ्रातरि च ज्यायसि । ४ । १ । १६४ ॥** ज्येष्ठे भ्रातरि जीवति कनीयान् चतुर्थादिर्युवा स्यात् ॥ **वान्यस्मिन्सपिण्डे स्थविरतरे जीवति । ५ । १ । १६५ ॥** भ्रातुरन्यस्मिन्सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा स्यात् ॥ एकं जीवतिग्रहणमपत्यस्य विशेषणम् । द्वितीयं सपिण्डस्य । तरब्निर्देश उभयोरुत्कर्षार्थः । स्थानेन वयसा चोत्कृष्टे पितृव्ये मातामहे भ्रातरि वा जीवति । गार्ग्यस्यापत्यं गार्ग्यायणः । गार्ग्यो वा ॥ स्थविरेति किम् ? स्थानवयोन्यूने[6] गार्ग्य एव ॥ जीवतीति किम् ? मृते मृतो वा गार्ग्य एव ॥ **वृद्धस्य च पूजायामिति वाच्यम्[7] * ॥** गोत्रस्यैव वृद्धसंज्ञा प्राचाम् । गोत्रस्य युवसंज्ञा पूजायां गम्यमानायाम् ॥ तत्रभवान् गार्ग्यायणः ॥ पूजेति किम् ? गार्ग्यः ॥ **यूनश्च कुत्सायां गोत्रसंज्ञेति वाच्यम् *** ॥ गार्ग्यो जाल्मः ॥ कुत्सेति किम् ? गार्ग्यायणः ॥ **एको गोत्रे । ४ । १ । ९३ ॥** गोत्रे एक एवापत्यप्रत्ययः स्यात् ॥ उपगोर्गोत्रापत्यमौपगवः । गार्ग्यः । नाडायनः ॥

---

१ तदेव योगविभागस्य प्रयोजनं प्रकृतिविशेषे प्रदर्शयन् समग्रश्लोकस्याभिप्रायं प्रदर्शयति-**योगविभागस्त्विति** । 'तस्यापत्यम्' इति योगविभाग इत्यर्थः ॥ **मानव इति** । अत्र वृद्धे अकारान्तभिन्ने प्रकृतिभूते अण्करणार्थ इति शेषः ॥ २ कृतवर्णानुपूर्वीकपदार्थकं समर्थपदं किमर्थमिति प्रश्नस्य अयमाशयः विभज्यान्वाख्यानपक्षे सु उत्थित इति विभक्तादपि इञि प्रत्यये सवर्णदीर्घस्य आदिवृद्धेश्च प्राप्तौ परत्वाद् आदिवृद्धेः प्राप्तावपि अन्तर्भूतनिमित्तकत्वेनान्तरङ्गत्वात् सवर्णदीर्घे जाते वृद्धौ कृतायां सौत्थितिवैक्षमाणीत्यादिसिद्धावनर्थकमेव समर्थग्रहणमिति ॥ ३ अयमाशयः-अनेन समर्थग्रहणेन 'अभ्यासस्यासवर्णे' इत्यनेन वा ज्ञापितया 'वार्णादाङ्गं बलीयः' इत्यनया परिभाषया पूर्वं वृद्धौ कृतायां 'सावुत्थितिः वार्यीक्षमाणिः' इति प्राप्नोति तद्वारणार्थेदं समर्थग्रहणमिति स्वांशे चारितार्थ्यमिति मनसि निधायात्रत्यकैयटादिप्राचीनानुरोधेनाह-**अकृतव्यूहेति** ॥ ४ समर्थानां सामर्थ्यप्रदर्शकनिर्देशवतां 'तस्यापत्यम्' इत्यादीनां मध्ये प्रथमात् प्रथमनिर्दिष्टात् षष्ठ्यन्तादेः अणादिः प्रत्ययो भवेत्' इत्यर्थकरणायोपात्तं प्रथमपदं व्यर्थम् इति शङ्कायाः समाधानम् चरमनिर्दिष्टाद् अपत्यशब्दान्मा भूदिति एकदेशिना दत्तं नैव समीचीनम् अपत्यादणि कृतेऽपि अपत्यसंबन्धिनाम् अनन्तानामर्थानां प्रत्ययेनाभिधानासंभवात् प्रथमात् षष्ठ्यन्तात् प्रत्यये कृते तु विवक्षितार्थानां प्रकृतीनां स्वरूपत उपादानात् केवलस्यापत्यरूपार्थस्यैव प्रत्ययेनाभिधानस्य कर्तुं शक्यत्वाच्च तत्तत्प्रकृत्यर्थसंवलितापत्यरूपार्थबोधस्य प्रकृतिसंनिहितप्रत्ययेन लाघवेन जायमानत्वात् प्रथमग्रहणं स्पष्टार्थमेवेति भाष्ये स्पष्टम् ॥ ५ 'गोत्रं च' इत्यनेन परिभाषितत्वादिति भावः ॥ ६ स्थानन्यूने वयसोत्कृष्टे स्थानोत्कृष्टे वयोन्यूने वा ॥ ७ वृद्धस्य चेति यूनश्चेति च वार्तिके सूत्रपाठे कैश्चित्प्रक्षिप्ते ॥

गोत्रे स्वैकोनैसंख्यानां प्रत्ययानां परम्परा । यद्वा स्वेद्व्यूनसंख्येभ्योऽनिष्टोत्पत्तिः प्रसज्यते ॥१॥
अपत्यं पितुरेव स्यात्ततः प्राचामपीति च । मतभेदेन तद्धान्यै सूत्रमेतत्तथोत्तरम् ॥ २ ॥

पितुरेवापत्यमिति पक्षे हि उपगोस्तृतीये वाच्य औपगवादिञ् स्यात् । चतुर्थे त्वजीवज्ज्येष्ठे मृतवंश्ये औपगवेः फक् । इत्थं फगिञोः परम्परायां मूलाच्छततमे गोत्रे एकोनशतं प्रत्ययाः स्युः॥ पितामहादीनामपीति मुख्यपक्षे तु तृतीये वाच्ये उपगोरणा इष्टे सिद्धेऽपि अणन्तादिञपि स्यात्॥ चतुर्थे फगिति फगिञोः परम्परायां शततमे गोत्रेऽष्टनवतिरनिष्टप्रत्ययाः स्युः । अतो नियमार्थमिदं सूत्रम् ॥ एवमुत्तरसूत्रेऽप्यूह्यम् ॥ **गोत्राद्यून्यस्त्रियाम्** ।४। १।९४॥ यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् । स्त्रियां तु न युवसंज्ञा ॥ गर्गस्य युवापत्यं गार्ग्यायणः । स्त्रियां गोत्रत्वादेक एव प्रत्ययः ॥ **अत इञ्** । ४ ।१।९५॥अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात्षष्ठयन्तादिञ् स्यादपत्येऽर्थे ॥ दाक्षिः ॥[A] **बाह्वादिभ्यश्च** ।४ । १ ।९६॥ बाहविः । औडुलोमिः । आकृतिगणोऽयम् ॥ **सुधातुरकङ् च** । ४ । १ । ९७ ॥ चादिञ् ॥ सुधातुरपत्यं सौधातकिः ॥ **व्यासवरुडनिषादचण्डालबिम्बानां चेति वक्तव्यम्** * ॥ **न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्** । ७ । ३ । ३ ॥ पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किंतु ताभ्यां पूर्वौ क्रमादैचावागमौ स्तः ॥ वैयासकिः । वारुडकिरित्यादि ॥ **गोत्रे** [B] **कुञ्जादिभ्यश्च्फञ्** । ४। १। ९८ ॥ **व्रातच्फञोरस्त्रियाम्** । ५। ३। ११३ ॥ व्रातवाचिभ्यश्च्फञन्तेभ्यश्च स्वार्थे ञ्यः स्यान्न तु स्त्रियाम् ॥ कौञ्जायन्यः । बहुत्वे तद्राजत्वाल्लुग्वक्ष्यते ॥ ब्राध्नायन्यः ।

---

A बाहु, उपबाहु, उपवाकु, निवाकु, शिवाकु, वटाकु, उपविन्दु, वृषली, वृकला, चूडा, बलाका, मूषिका, कुशला, छगला, ध्रुवका, धुवका, सुमित्रा, दुर्मित्रा, पुष्करसद्, अनुहरद्, देवशर्मन्, अग्निशर्मन्, भद्रशर्मन्, सुशर्मन्, कुनामन्, सुनामन्, पञ्चन्, सप्तन्, अष्टन्, अमितौजसः सलोपश्च, सुधावन्, उदञ्चु, मात्र, शिरस्, शराविन्, मरीचिन्, क्षेमवृद्धिन्, शृङ्खलतोदिन्, खरनादिन्, नगरमर्दिन्, प्राकारमर्दिन्, लोमन्, अजीगर्त, कृष्ण, युधिष्ठिर, अर्जुन, साम्ब, गद, प्रद्युम्न, राम, उदङ्क, उदक, संज्ञायाम्, संभूयोऽम्भसोः सलोपश्च । आकृतिगणोऽयम् । तेन सात्यकिः, जाङ्घिः, ऐन्द्रशर्मिः, आजधेनवि । इति बाह्वादिः ॥

B कुञ्ज, ब्रध्न, शङ्ख, भस्मन्, गण, लोमन्, शठ, शाक, शुण्डा, शुभ, विपाश, स्कन्द, स्कम्भ । इति ॥

---

१ स्व इष्टो य एकः प्रत्ययः तेनोना संख्या येषां तेषां प्रत्ययानां परम्परा अनिष्टा प्रसज्यत इत्यर्थः ॥ २ स्वौ इष्टौ यौ द्वौ प्रत्ययौ ताभ्यामूना संख्या येषां तेषां प्रत्ययानां परम्परा अनिष्टा प्रसज्यत इत्यर्थः ॥ छन्दोनुरोधेन पञ्चमी कृता तात्पर्यमेकमभिप्रेत्य ॥ ३ एकेनानिष्टापत्तौ साधकं मतं दर्शयति–**अपत्यं पितुरेवेति** ॥ ४ द्व्यूनानिष्टापत्तौ साधकं मतं दर्शयति–**प्राचामपीति चेति** ॥ ५ एकोनानिष्टापत्तिं स्फुटयति–**पितुरेवापत्यमित्यादिना** ॥ ६ द्व्यूनानिष्टापत्तिं स्फुटयति–**पितामहादीनामपीतीति** ॥ ७ 'गोत्राद्यून्यस्त्रियाम्' इति सूत्रेऽपीति भावः ॥ ८ 'ञ्यादयस्तद्राजाः' इति तद्राजसंज्ञकस्य 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति' लुग् वक्ष्यते इति भावः ॥

स्त्रियां कौञ्जायनी । गोत्रत्वेन जातित्वान्ङीष् ॥ अनन्तरापत्ये कौञ्जिः ॥ A **नडादिभ्यः फक्** । ४ । १ । ९९ ॥ गोत्र इत्येव ॥ नाडायनः । चारायणः । अनन्तरो नाडिः ॥ B **हरितादिभ्योऽञः** । ४ । १ । १०० ॥ एभ्योऽञन्तेभ्यो यूनि फक् ॥ हारितायनः । इह गोत्राधिकारेऽपि सामर्थ्याद्यून्ययम् । नहि गोत्रादपरो गोत्रप्रत्ययः ॥ बिदाद्यन्तर्गणो हरितादिः ॥ **यञिञोश्च** । ४ ।१।१०१॥ गोत्रे यौ यञिञौ तदन्तात् फक् स्यात् ॥ अनातीत्युक्तेः 'आपत्यस्येति यलोपो न । गार्ग्यायणः । दाक्षायणः ॥ **शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु** ।४।१। १०२ ॥ गोत्रे फक् । अञिञोरपवादः ॥ आद्यौ बिदादी । शारद्वतायनो भार्गवश्चेत् । शारद्वतोऽन्यः ॥ शौनकायनो वात्स्यश्चेत् । शौनकोऽन्यः ॥ दार्भायण आग्रायणश्चेत् । दार्भिरन्यः ॥ **द्रोणपर्वतजीवन्तादन्यतरस्याम्** । ४ । १ । १०३ ॥ एभ्यो गोत्रे फग् वा ॥ द्रौणायनः । द्रौणिः । पार्वतायनः । पार्वतिः । जैवन्तायनः । जैवन्तिः ॥ अनादिरिह द्रोणः । अश्वत्थाम्न्यनन्तरे तूपचारात्[1] ॥ **अनृष्यानन्तर्ये** C**बिदादिभ्योऽञ्** । ४ । १ । १०४ ॥ एभ्योऽञ् गोत्रे, ये[2] त्वत्रानृषयस्तेभ्यः अनन्तरे ॥ सूत्रे स्वार्थे ष्यञ् । बिदस्य गोत्रापत्यं बैदः । अनन्तरो बैदिः । बाह्वादेराकृतिगणत्वादिञ् ॥ पुत्रस्यापत्यं पौत्रः । दौहित्रः ॥ D**गर्गादिभ्यो यञ्** । ४ । १ । १०५ ॥ गोत्र इत्येव । गार्ग्यः । वात्स्यः ॥ **यञञोश्च** । २ ।

A नड, चर वक, मुञ्ज, इतिक, इतिश, उपक, एक, लमक, शलंकं च, सप्तल, वाजप्य, तिक, अग्निशर्मन्, वृषगणे, प्राण, नर, सायक, दास, मित्र, द्वीप, पिङ्गर, पिङ्गल, किङ्कर, किङ्कल, काश्यप, कातर, कातल, काश्य, काव्य, अज, अमुष्य, कृष्णरणौ, ब्राह्मणवासिष्ठे, अमित्र, लिगु, चित्र, कुमार, क्रोष्टु क्रोष्टं च, लोह, दुर्ग, स्तम्भ, शिंशपा, अग्रतृण, शकट, सुमनस्, सुमत, मिमत, ऋच्, जलन्धर, अध्वर, युगन्धर, हंसक, दण्डिन्, हस्तिन्, पिण्ड, पञ्चाल, चमसिन्, सुकृत्य, स्थिरक, ब्राह्मण, चटक, बदर, अश्वल, खरप, लङ्क, इन्ध, अस्त्र, कामुक, ब्रह्मदत्त, उदुम्बर, शोण, अलोह, दण्ड, इति नडादिः ॥

B अयं गणः अस्मिन्नेव पृष्ठेऽधः स्थितो बिदादिगणान्तर्गतो द्रष्टव्यः ॥

C बिद ऊर्व, कश्यप, कुशिक, भरद्वाज, उपमन्यु, किलात, किंदर्भ, विश्वानर, ऋष्टिषेण, ऋतभाग, हर्यश्व, प्रियक, आपस्तम्ब, कूचवार, शरद्वत्, शुनक, धेनु, गोपवन, शिग्रु, बिन्दु, भाजक, भाजन, अश्वावतान, श्यामाक, शामक, श्यावलि, श्यापर्ण, हरित, किंदास, वह्यस्क, अर्क, लुष, वध्योग, विष्णुवृद्ध, प्रतिबोध, रथीतर, रथन्तर, गविष्ठिर, निषाद, शबर, अलस, मठर, सृपाकु, मृदु, पुनर्भू, पुत्र, दुहितृ, ननान्दृ, परस्त्री, परशु च' इति बिदादिः ॥

D गर्ग, वत्स, वाजासे, संस्कृति, अज, व्याघ्रपात्, विदभृत, प्राचीनयोग, अगस्ति, पुलस्ति, चमस, रैभ, अग्निवेश्य, शङ्ख, शठ, शाक, एक, धूम, अवट, मनस्, धनञ्जय, वृक्ष, विश्वावसु, जरमाण, लोहित, संशित, बभ्रु, वल्गु, मण्डु, गण्डु, शंकु, लिंकु, गुहलु, मनु, मङ्क्षु, अलिगु, जिगीषु, मनु, तन्तु, मनायी, सूनु, कथक, कन्थक, ऋक्ष, तृक्ष, ननु, तरुक्ष, तलुक्ष, तण्ड, वतण्ड, कपि, कत, कुरुकत, अनडुह, कण्व, शकल, गोकक्ष, अगस्त्य, कुण्डिनी, यज्ञवल्क, पर्णवल्क, अभयजात, विरोहित, वृषगण, रहूगण, शण्डिल, चणक, चुलुक, मुद्गल, मुसल, जमदग्नि, पराशर, जतूकर्ण, महित, मन्त्रित, अश्मरथ, शर्कराक्ष, पूतिमाष, स्थूर, अररका, एरका, पिङ्गल, कृष्ण, गोलन्द, उलूक, तितिक्ष, भिषज्, भिष्णज्, भडित, भण्डित, दल्भ, चैकित, चिकित्सित, देवहू, इन्द्रहू, एकलू, पिप्पलू, बृहदग्नि, सुलाभिन्, उक्थ, कुटीगु । इति गर्गादिः ॥

१ **अश्वत्थाम्नीति** ॥ भारतप्रसिद्धस्य द्रोणाचार्यस्यानन्तर एवाश्वत्थामाऽतस्ततो गोत्रप्रत्ययः कथमिति शङ्का-समाधानं तु- **उपचारादिति** ॥ गोत्रत्वारोपादित्यर्थः ॥ २ बिदादिषु येऽनृषयः पठ्यन्ते तेषामनन्तरेऽपि वृत्तिर्भवति ' इति भाष्यमनुसृत्याह-**ये त्विति** ॥

। ४ । ६४ ॥ गोत्रे[1] यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक्स्यात्तत्कृते बहुत्वे, नतु स्त्रियाम् ॥ गर्गाः । वत्साः । बिदाः । ऊर्वाः ॥ तत्कृते इति किम् ? प्रियगार्ग्याः । स्त्रियां तु—गार्ग्यः स्त्रियः ॥ गोत्रे किम् ? द्वैप्याः । औत्साः ॥ प्रवराध्यायप्रसिद्धमिह गोत्रम् । तेनेह न—पौत्राः । दौहित्राः ॥ **मधुबभ्र्वोर्ब्राह्मणकौशिकयोः** । ४ । १ । १०६ ॥ गोत्रे यञ् ॥ माधव्यो ब्राह्मणः । माधवोऽन्यः । बाभ्रव्यः कौशिक ऋषिः । बाभ्रवोऽन्यः । बभ्रुशब्दस्य गर्गादिपाठात्सिद्धे नियमार्थमिदम् । गर्गादिपाठफलं तु लोहितादिकार्यम् । बाभ्रव्यायणी ॥ **कपिबोधादाङ्गिरसे** । ४ । १ । १०७ ॥ गोत्रे यञ् स्यात् ॥ काप्यः । बौध्यः ॥ आङ्गिरसे किम् ? कापेयः । बौधिः ॥ **वतण्डाच्च** । ४ । १ । १०८ ॥ आङ्गिरस इत्येव ॥ वातण्ड्यः । अनाङ्गिरसे तु गर्गादौ शिवादौ च पाठाद्यञणौ । वातण्ड्यः । वातण्डः ॥ **लुक् स्त्रियाम्** ४ । १ । १०९ ॥ वतण्डाच्चेति विहितस्य लुक् स्यात् स्त्रियाम् ॥ शार्ङ्गरवादित्वात् ङीन् । वतण्डी । अनाङ्गिरस तु वातण्ड्यायनी । लोहितादित्वात् ष्फः । अणि तु वातण्डी । ऋषित्वाद्वक्ष्यमाणः ष्यङ् न ॥ A **अश्वादिभ्यः फञ्** । ४ । १ । ११० ॥ गोत्रे ॥ आश्वायनः ॥ **पुंसि जाते** * ॥ पुंसीति तु प्रकृतिविशेषणम् । जातस्य गोत्रापत्यं जातायनः ॥ पुंसीति किम् ? जाताया अपत्यं जातेयः ॥ **भर्गात्त्रैगर्ते** । ४ । १ । १११ ॥ गोत्रे फञ् ॥ भार्गायणस्त्रैगर्तः । भार्गरन्यः ॥ B **शिवादिभ्योऽण्** । ४ । १ । ११२ ॥ गोत्रे इति निवृत्तम् । शिवस्यापत्यं शैवः । गाङ्गः । पक्षे तिकादित्वात् फिञ्—गाङ्गायनिः । शुभ्रादित्वाड्ढक्—गाङ्गेयः ॥ **अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः** । ४ । १ । ११३ ॥ अवृद्धेभ्यो नदीमानुषीनामभ्योऽण् स्यात् । ढकोऽपवादः ॥ यामुनः । नार्मदः । चिन्तिताया अपत्यं चैन्तितः ॥ अवृद्धेभ्यः किम् ? वासवदत्तेयः ॥ नदीत्यादि किम् ? वैनतेयः ॥ तन्नामिकाभ्यः किम् ? शोभनाया अपत्यं

---

A अश्व, अश्मन्, शङ्ख, शूद्रक , बिद, पुट, रोहिण, खर्जूर, पिञ्जूल, भडिल, भण्डिल, भडित, भण्डित, प्रहृत, रामोद, ग्रीवाकाश, काण, गोलाङ्क, अर्क, स्वन, वन, पाद, चक्र, कुल, पूल, श्रविष्ठा, वीक्ष, पविन्द, पवित्र, गोमिन्, श्याम, धूम, धूम्र, वाग्मिन्, विश्वानर, कुट, शपात्रेये, जन, जड, खड, ग्रीष्म, अर्ह, केत, विशय, विशाल, गिरि, चपल, चुप, दास, वैल्य, प्राच, आनडुह्य, ' पुंसि जाते ' अर्जुन, सुमनस्, दुर्मनस्, नम, क्षान्त, ध्वन, ' आत्रेयभारद्वाजे ' ' भरद्वाजात्रेये ' उत्स, आतव, कितव, शिव, खदिर । इत्यश्वादिः ॥

B शिव, प्रोष्ठ, प्रोष्ठिक, पड, जम्भ, भूरि, दण्ड, कुठार, ककुभ, भ्रम, अनभिम्लान, कोहित, सुख, संधि, मुनि, ककुत्स्थ, कहोड, कोहड, कहूषय, कहय, रौधक, पिञ्जल, खञ्जन, वतण्ड, तृण, कर्ण क्षीर, ह्रद, जलह्रद, परिल, पिष्ट, हैहय, गोपिका, कपालिका, जटिलिका, बधिरिका, मञ्जिष्ठा, वृष्णक, खञ्जार, खञ्जाल, रेख, लेख, रिख, आलेखन, विश्रवण, रवण, वर्तनाक्ष, ग्रीवाक्ष, पिटक, ऋक्षाक, नभाक, ऊर्णनाभ, जरत्कारु, पुरोहितिका, सुरोहिका, आर्यश्वेत, सुपिष्ट, मसुर, कर्ण, मयूरकर्ण, खदूरक, तक्षन्, ऋष्टिषेण, गङ्गा, विपाश, यस्क, लह्य, दुह्य, अयस्थूण, तृणकर्ण, पर्ण, भलन्दन, विरूपाक्ष, भूमि, इला, सपत्नी, 'द्व्यचो नद्याः ' ' त्रिवणी त्रिवणं च ' । इति शिवादिः ॥

---

* " **उभयत्र** ( यञञोश्च ' ' संघाङ्कलक्षणेष्वञ्यञिञामण् ' इत्यनयोः ) **लौकिकस्य गोत्रस्य ग्रहणम्** ' इति " स्त्रीपुंसाभ्याम्‌ ·· " इति सूत्रभाष्यप्रामाण्येन लौकिकस्य गोत्रस्य प्रवराध्यायप्रसिद्धस्यैव ग्रहणे यञञोस्तद्गोत्रवाचित्वाभावात्सामर्थ्यात् तदन्तविधिरित्याह·· **गोत्रे यद् यञन्तमञन्तं चेति** ॥ २ ' निर्दिश्यमानस्यादेशा भवन्ति ' इति परिभाषयेति भावः ॥

शौभनेयः ॥ **ऋष्यन्धकवृष्णिकुरुभ्यश्च । ४ । १ । ११४ ॥** ऋषयो मन्त्रद्रष्टारः । वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः, श्वाफल्कः । वृष्णिभ्यः, वासुदेवः । आनिरुद्धः ॥ शौरिरिति तु बाह्वादित्वादिञ् ॥ कुरुभ्यः, नाकुलः । साहदेवः ॥ इञ एवायमपवादो मध्येऽपवादन्यायात् । अत्रिशब्दात्तु परत्वाड्ढक्--आत्रेयः ॥ **मातुरुत्संख्यासंभद्रपूर्वायाः । ४ । १ । ११५ ॥** संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण्प्रत्ययश्च ॥ द्वैमातुरः । षाण्मातुरः । सांमातुरः । भाद्रमातुरः । आदेशार्थं वचनं प्रत्ययस्तूत्सर्गेण सिद्धः ॥ स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः । तेन धान्यमातुर्न ॥ संख्येति किम् ? सौमात्रः । शुभ्रादित्वाद्वैमात्रेयः ॥ **कन्यायाः कनीन च । ४ । १ । ११६ ॥** ढकोऽपवादोऽण् तत्सन्नियोगेन कनीनादेशश्च । कानीनो व्यासः कर्णश्च । अनूढाया एवापत्यमित्यर्थः ॥ **विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु । ४ । १ । ११७ ।** अपत्येऽण् ॥ वैकर्णो वात्स्यः । वैकर्णिरन्यः ॥ शौङ्गो भारद्वाजः । शौङ्गिरन्यः ॥ छागल आत्रेयः । छागलिरन्यः । केचित्तु शुङ्गेत्याबन्तं पठन्ति, तेषां ढक् प्रत्युदाहरणम् । शौङ्गेयः ॥ **पीलाया वा ।४।१ । ११८ ॥** तन्नामिकाणं बाधित्वा 'द्व्यचः' इति ढकि प्राप्ते पक्षेऽण् विधीयते । पीलाया अपत्यं पैलः । पैलेयः ॥ **ढक् च मण्डूकात् । ४ । १ । ११९ ॥** चादण् ॥ पक्षे इञ् । माण्डूकेयः । माण्डूकः । माण्डूकिः ॥ **स्त्रीभ्यो ढक् । ४ । १ । १२० ॥** स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात् ॥ वैनतेयः ॥ बाह्वादित्वात्सौमित्रिः । शिवादित्वात्सापत्नः ॥ **द्व्यचः । ४ । १ । १२१ ॥** द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक् । तन्नामिकाणोऽपवादः ॥ दात्तेयः । पार्थ इत्यत्र तु तस्येदमित्यण् ॥ **इतश्चानिञः । ४ । १ । १२२ ॥** इकारान्ताद् द्व्यचोऽपत्ये ढक् स्यात् न त्विञन्तात् ॥ दौलेयः । नैधेयः ॥ A**शुभ्रादिभ्यश्च । ४ । १ । १२३ ॥** ढक् स्यात् ॥ शुभ्रस्यापत्यं शौभ्रेयः ॥ **प्रवाहणस्य ढे । ७ । ३ । २८ ॥** प्रवाहण-शब्दस्योत्तरपदस्याचामादेरचो वृद्धिः पूर्वपदस्य तु वा ढे परे ॥ प्रवाहणस्यापत्यं प्रावाहणेयः । प्रवाहणेयः ॥ **तत्प्रत्ययस्य च । ७ । ३ । २९ ॥** ढान्तस्य प्रवाहणस्योत्तरपदस्यादेरचो वृद्धिः

---

A शुभ्र, विष्ट, पुर, ब्रह्मकृत, शतद्वार, शलाथल, शलाकाभ्र, लेखाभ्र, विकास, रोहिणी, रुक्मिणी, धर्मिणी, दिश्, शालूक, अजवस्ति, शकन्धि, विमातृ, विधवा, शुक, विश्, देवतर, शकुनि शुक्र, उग्र, शवल, बन्धकी, सृकण्डु, विश्र, अतिथि, गोदन्त, कुशाम्ब, मकष्टु, शान्ता, हर, यवष्टु, रिक सुनामन्, लक्षण-श्यामयोर्वासिष्ठे, गोधा, कृकलास, अर्णाव, प्रवाहण, भरत, भरम, वृकण्डु, कर्पूर, इतर, अन्यतर, आलीढ, सुदत्, सुदक्ष, सुवक्षस्, सुदाकन्, कद्रु, तुदत्, अशाय, कुमारिका, कुठारिका, किशोरिका, अम्बिका, जिह्माशिन्, परिधि, वायुदत्त, शकल, शलाका, खड्वर, कुबेरिका, अशोका, गन्धपिङ्गला, खडोन्मता, अनुदृष्टिन्, जरतिन्, बलीवर्दिन्, विग्र, वीज, जीव, श्वन्, अश्मन्, अश्व । इति शुभ्रादिराकृतिगणः ॥

---

१ अनुक्रमणिकायां निर्दिष्टा इति शेषः ॥ '**ऋषिर्दर्शनात्**' इति निरुक्तात् ॥ २ '**कन्याशब्दोऽयं पुंसाऽभिसंबन्ध ( विवाह ) पूर्वके संप्रयोगे निवर्तते । या चदानीं प्रागभिसंबन्धात् पुंसा सह संप्रयोगं गच्छति तस्यां कन्याशब्दो वर्तत एव**' इति भाष्यार्थमाह—**अनूढाया एवेति ।**

पूर्वपदस्य तु वा ॥ प्रवाहणेयस्यापत्यं प्रावाहणेयिः । प्रवाहणेयिः ॥ बाह्यतद्धितनिमित्ता वृद्धिर्द्धश्रयेण विकल्पेन बाधितुं न शक्यत इति सूत्रारम्भः ॥ **विकर्णकुषीतकात्काश्यपे** ।४।१।१२४॥ अपत्ये ढक् ॥ वैकर्णेयः । कौषीतकेयः । अन्यो वैकर्णिः । कौषीतकिः ॥ **भ्रुवो वुक् च**। ४।१।१२५॥ चाड्ढक् ॥ भ्रौवेयः ॥ A **कल्याण्यादीनामिनङ्** । ४ । १ । १२६ ॥ एषामिनङादेशः स्यात् ढक् च ॥ काल्याणिनेयः । बान्धकिनेयः ॥ **कुलटाया वा** । ४ । १ । १२७॥ इनङ्मात्रं विकल्प्यते, ढक् तु नित्यः पूर्वेणैव ॥ कौलटिनेयः । कौलटेयः । सती भिक्षुक्यत्र कुलटा । या तु व्यभिचारार्थं कुलान्यटति तस्याः क्षुद्राभ्यो वेति पक्षे ढ्रक् । कौलटेरः ॥**हृद्भगसिन्ध्वन्ते पूर्वपदस्य च** । ७। ३ । १९ ॥ हृदाद्यन्ते पूर्वोत्तरपदयोरचामादेरचो वृद्धिर्ञिति णिति किति च ॥ सुहृदोऽपत्यं सौहार्दः । सुभगाया अपत्यं सौभागिनेयः । सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः । तेषु भवः साक्तुसैन्धवः ॥ **चटकाया ऐरक्** । ४ । १ । १२८ ॥ **चटकस्येति वाच्यम्** * ॥ लिङ्गविशिष्टपरिभाषया स्त्रिया अपि ॥ चटकस्य चटकाया वा अपत्यं चाटकैरः ॥ **स्त्रियामपत्ये लुग्वक्तव्यः** * ॥ तयोरेव स्त्र्यपत्यं चटका । अजादित्वाट्टाप् ॥ **गोधाया ढ्रक्** । ४ । १ । १२९ ॥ गौधेरः । शुभ्रादित्वात्पक्षे ढक् । गौधेयः ॥ **आरगुदीचाम्** । ४ । १ । १३० ॥ गौधारः ॥ रका सिद्धे आकारोच्चारणमन्यतो विधानार्थम्—जडस्यापत्यं जाडारः । पण्डस्यापत्यं पाण्डारः ॥ **क्षुद्राभ्यो वा** । ४ । १ । १३१ ॥ अङ्गहीनाः शीलहीनाश्च क्षुद्रास्ताभ्यो वा ढ्रक् । पक्षे ढक् । काणेरः। काणेयः ॥ दासेरः । दासेयः ॥ **पितृष्वसुश्छण्** । ४ । १ । १३२ ॥ अणोऽपवादः ॥ पैतृष्वस्रीयः ॥ **ढकि लोपः** । ४ । १ । १३३ ॥ पितृष्वसुरन्त्यलोपः स्याड्ढकि ॥ अत एव ज्ञापकात् ढक् । पैतृष्वसेयः ॥ **मातृष्वसुश्च** । ४ । १ । १३४ ॥ पितृष्वसुर्यदुक्तं तदस्यापि स्यात् ॥ मातृष्वस्रीयः ॥ मातृष्वसेयः ॥ **चतुष्पाद्भ्यो ढञ्** । ४ । १ । १३५ ॥ **ढे लोपोऽकद्र्वाः** । ६ ।४। १४७ ॥ कद्रूभिन्नस्योवर्णान्तस्य भस्य लोपः स्यात् ढे परे ॥ कामण्डलेयः । कमण्डलुशब्दश्चतुष्पाज्जातिविशेषे ॥ B**गृष्ट्यादिभ्यश्च** । ४। १ ।१३६॥ एभ्यो ढञ् स्यात् ॥अण्ढकोरपवादः ॥ गार्ष्टेयः । मित्रयोरपत्यम् । ऋष्यणि प्राप्ते ढञ् ॥ **केकयमित्रयुप्रलयानां यादेरियः** । ७ । ३ । २ ॥ एषां यकारादेरिय् आदेशः स्यात् ञिति णिति किति च तद्धिते परे ॥ इति इयादेशे प्राप्ते - ॥ **दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवा-**

A कल्याणी, सुभगा, बन्धकी, अनुदृष्टि, अनुसृति, जरती, बली, बदी, ज्येष्ठा, कनिष्ठा, मध्यमा, परस्त्री । इति कल्याण्यादिः ॥

B गृष्टि, हृष्टि, हलि, बलि, विध्रि, कुद्रि, अजवस्ति, मित्रयु । इति गृष्ट्यादिः ॥

१ 'प्रवाहणस्य ढे' इत्यनेन विकल्पस्य विहितत्वात् पुनः 'तत्प्रत्ययस्य च' इत्यनेन विकल्पविधानं व्यर्थमिति शङ्कामपनुदति -**बाह्येति** । बाह्यतद्धित इञ् । अयं भावः—इञ्प्रत्ययोत्पत्तितः पूर्वकालजातेन विकल्पेन इञ्प्रत्ययोत्पत्तितः पश्चात्कालप्राप्ता तन्निमित्ता नित्यवृद्धिर्नैव बाध्येत लक्ष्ये लक्षणस्याप्रवृत्तेरनङ्गीकारादिति भावः ॥ २ **अन्यत इति** ॥ 'स्वस्य श्रवणं यथा स्यात् तथा' इत्यादिशेषः ॥

युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः स्यात् ॥ **प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च । १ । ४ । १०६ ॥** मन्यधातुरुपपदं यस्य धातोस्तस्मिन्प्रकृतिभूते सति मध्यमः स्यात्परिहासे गम्यमाने मन्यतेस्तूत्तमः स्यात्स चैकार्थस्य वाचकः स्यात् ॥ **अस्मद्युत्तमः । १ । ४ । १०७ ॥** तथाभूतेऽस्मद्युत्तमः स्यात् ॥ **शेषे प्रथमः । १ । ४ । १०८ ॥** मध्यमोत्तमयोरविषये प्रथमः स्यात् ॥ **भू** सत्तायाम् ॥ कर्तृविवक्षायां भू ति इति स्थिते ॥ **तिङ्शित्सार्वधातुकम् । ३ । १ । ११३ ॥** तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥ **कर्तरि शप् । ३ । १ । ६८ ॥** कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् ॥ शपावितौ ॥ **सार्वधातुकार्धधातुकयोः । ७ । ३ । ८४ ॥** अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् ॥ अवादेशः । भवति । भवतः ॥ **झोऽन्तः । ७ । १ । ३ ॥** प्रत्ययावयवस्य झस्यान्तादेशः

---

१ **भू सत्तायामिति** । नन्वनेकधातुषु सत्सु किमपराधेन भूधातोरेव सर्वतः प्रथमं लेख इति शङ्कायां ब्रुवन्ति केचन-अशोकवनिकान्यायेन तथोपात्तमिति । भूशब्दस्य महाव्याहृतिसमानरूपतया स्वरूपतो मङ्गलवाचकत्वात् माङ्गलिकेनाचार्येणानायासेन मङ्गलसिद्ध्यर्थं तदुपादानं कृतमिति तु वस्तुस्थितिः । सत्तार्थनिर्देशोऽप्येवमेव, सत्ताख्यस्य परब्रह्मणः स्मरणात् । "**सत्तायाम्**" इत्यादेः "वर्तते" इति शेषः पूरणीयः । "भू" इत्यनुकरणम् । तत्र पक्षद्वयम्, अनुकरणमनुकार्याद् भिन्नम्, अनुकरणमनुकार्यादभिन्नमिति । प्रकृते चानुकार्यानुकरणयोरभेदविवक्षायामनुकार्यनिरूपितशक्त्यैव अनुकरणेनापि वोधात् "शक्तिमत्त्वमर्थवत्त्वम्" इत्येवं लक्षणलक्षितार्थवत्त्वाभावेन प्रातिपदिकत्वाभावात् न विभक्तेरुत्पत्तिः । भेदानुकरणे तु अनुकरणेन बोधाय शक्तेः स्वीकारात् शक्तिमत्त्वरूपार्थवत्त्वस्य सत्त्वेन प्रातिपदिकत्वात्स्यादेव विभक्त्युत्पत्तिः' अत एव "भुवो वुक्" इत्यादिनिर्देशसङ्गतिः । इति प्राञ्चः । '**भ्वेधस्पर्ध-**' इति पाणिनीयपाठे सौत्रो विभक्तेर्लुगिति 'भू सतायाम्' इत्याधुनिकपाठे 'गवित्ययमाह' इतिवन्न विभक्त्युत्पत्तिरिति सारम् ॥ २ निःसन्देहपुरुषव्यवस्थाज्ञानाय कर्तृकर्मरूपकारकार्थं एव तिङो विधातव्यत्वे तत्र कर्मणः कर्त्रधीनत्वेन पूर्वं कर्तृप्रत्ययानाह-**कर्त्रीति** । "भू ल्" इति दशायां प्राप्तोऽपि "आर्धधातुकस्येड्वलादेः" इतीडागमो न प्रवर्तते, "नेड्वशि कृति" इति निषेधात् ॥ ३ **भवतीति** । नन्वत्र लकारवृत्त्यार्धधातुकत्वस्य स्थानिवत्त्वेन तिप्यतिदेशादिट् कस्मान्नेति चेन्नैवम्, "आर्धधातुकं शेषः" इत्यत्र "शेष" पदलब्धा "तिङ्" पदेन अजहत्स्वार्थलक्षणया 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्रेव तिङ्-तिङ्स्थान्युभयभिन्नबोधनेन लस्यार्धधातुकसंज्ञाया अप्राप्त्या आर्धधातुकत्वस्य स्थानिन्यवृत्तेरतिदेष्टुमशक्यत्वात्, इति केचित् ॥ अन्ये तु-"रुदादिभ्यः सार्वधातुके" इतीड्विधिसामर्थ्यात् "लकारवृत्त्यार्धधातुकत्वं नादेशानाम्" इति ज्ञापनेन न भवतीत्यादाविट्प्रसक्तिः । न च "रुदादिभ्यश्चेत् सार्वधातुकस्यैव" इति विपरीतनियमार्थमेव तत् कुतो न स्यादिति वाच्यम्, "रुदविद-" इति सूत्रेण रुदधातोः परयोः क्त्वासनोः कित्त्वविधानवैयर्थ्यप्रसङ्गात् । त्वद्रीत्या रुदधातोः क्त्वासनोरिडभावेन "न क्त्वा सेट्" इति निषेधाप्रवृत्त्या क्त्वाप्रत्यये औपदेशिककित्त्वस्य सुस्थत्वात् । "हलन्ताच्च" इत्यनेन सिद्धत्वाच्च इत्याहुः ॥ इतरे तु-"लिट् च" इति सूत्रे "लङः शाकटायनस्य" इति सूत्रादेवकारानुवृत्तिसामर्थ्यात् "लकारवृत्त्यार्धधातुकत्वं नादेशानाम्" इति कल्प्यते ॥ अन्यथा स्थानिवत्त्वेनार्धधातुकत्वादेवेडादिषु सिद्धेषु "लिट् च" इत्यारम्भसामर्थ्यादेव सार्वधातुकसंज्ञाबाधे सिद्धे "एव" कारानुवृत्तिवैयर्थ्यं स्पष्टमेव, इति वदन्ति ॥ भवतीत्यत्रान्तरङ्गमपि यणं बाधित्वा गुण एव तावद् भवति, "वार्णादाङ्गं बलीयः" इति परिभाषाप्रवृत्तेः । ज्ञापकं चात्राग्रे स्फुटीभविष्यति ॥

स्यात् । अतो गुणे । भवन्ति ॥ भवसि । भवथः भवथ ॥ **अतो दीर्घो यञि । ७ । ३ । १०१ ॥** अतोऽङ्गस्य दीर्घः स्याद् यञादौ सार्वधातुके परे ॥ भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः ॥ एहि मन्ये ओदनं भोक्ष्यसे इति भुक्तः सोऽतिथिभिः । एतमेत वा मन्ये ओदनं भोक्ष्येथे । भोक्ष्यध्वे ॥ भोक्ष्ये । भोक्ष्यावहे ॥ भोक्ष्यामहे ॥ मन्यसे मन्येथे । मन्यध्वे इत्यादिरर्थः । युष्मद्युपपदे इत्याद्यनुवर्तते । तेनेह न—एतु भवान्मन्यते ओदनं भोक्ष्ये इति भुक्तः सोऽतिथिभिः ॥ प्रहासे किम् ? यथार्थकथने मा भूत्—एहि मन्यसे ओदनं भोक्ष्ये इति भुक्तः सोऽतिथिभिरित्यादि ॥ **परोक्षे लिट् । ३ । २ । ११५ ॥** भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् ॥ लस्य तिबादयः ॥ **लिट् च । ३ । ४ । ११५ ॥** लिडादेशस्तिङार्धधातुकसंज्ञ एव स्यान्न तु सार्वधातुकसंज्ञः ॥ तेन शबादयो न ॥ **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः । ३ । ४ । ८२ ॥** लिटस्तिबादीनां नवानां णलादयो नव स्युः ॥ भू अ इति स्थिते **भुवो वुग्लुङ्लिटोः । ६ । ४ । ८८ ॥** भुवो वुगागमः स्यात् लुङ्लिटोरचि ॥ नित्यत्वाद्वुग्गुणवृद्धी बाधते ॥ **एकाचो द्वे प्रथमस्य । ६ । १ । १ ॥ अजादेर्द्वितीयस्य । ६ । १ । २ ॥** इत्यधिकृत्य ॥ **लिटि धातोरन-**

---

१ स्यान्यलाश्रयविधौ स्थानिवत्त्वाप्रवृत्तेर्नेह " अतो दीर्घो यञि " इति सूत्रप्रवृत्तिरिति ध्वनयन्नाह-**अतो गुणे इति** । न च शबकारान्त्यकारयोः पररूपे कृते " सार्वधातुकमपित् " इति ङित्त्वेन " क्ङिति च" इति निषेधाद् गुणो न स्यादिति वाच्यम्, " अचः परस्मिन् " इति स्थानिवत्त्वेन गुणप्रवृत्तेः सुलभत्वात् । नचैवमपि " वार्णादाङ्गम्–" इति न्यायेनैकादेशात् पूर्वमेव गुणः स्यादिति वाच्यम्, वार्णाङ्गयोः समानस्थानिकत्वे एव तत्प्रवृत्त्यङ्गीकारेण प्रकृते तथात्वाभावात् ॥ २ श्वशुरगृहे गतं पुरुषं प्रति सत्यप्योदने परिहासशीलश्यालकादेर्वाक्यमुदाहरति–**एहि मन्ये इत्यादि** । भो देवदत्त ! त्वमेहि त्वं मन्यसे–'अहमोदनं भोक्ष्ये' इति स ओदनोऽतिथिभिर्भुक्त इत्यर्थः ॥ **एतमेत वेति** । भो देवदत्तौ ! युवामेतं युवां मन्येथे ' आवामोदनं भोक्ष्यावहे ' इति भुक्तः स इत्यादि पूर्ववत् । भो देवदत्ताः ! यूयमेत यूयं मन्यध्वे ' वयमोदनं भोक्ष्यामहे' इति, भुक्त इत्यादि पूर्ववत् । इत्यर्थः । यस्य स्थाने आदेशः तं स्थानिनमेव दर्शयति–**भोक्ष्ये इत्यादिना** । ३ **परोक्षे लिडिति** । साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वं परोक्षत्वम् । एवं च मनसोऽसांनिध्यात्प्रत्यक्षत्वाभावेनोत्तमपुरुषोऽपि भवतीति भाष्ये स्पष्टमिति "घटमहं चकार" इत्यादिरूपाणां नासङ्गतिरिति दिक् ॥ अतीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितः सकलो दिवसोऽद्यतनस्तद्भिन्नोऽनद्यतनः ॥ ४ ननु " भू अ " इति दशायां वुकं बाधित्वा परत्वाद् गुणवृद्धी स्यातामिति चेत्तत्राह—**नित्यत्वादिति** । " परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः " इति परिभाषया परापेक्षया नित्यस्य बलवत्त्वबोधनादिति भावः । गुणे वृद्धौ च ' अचः परस्मिन् ' इति स्थानिवत्त्वेन भूशब्दत्वात् कृताकृतप्रसङ्गित्वेन वुको नित्यत्वमिति भावः ॥ न च " शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति " इति परिभाषया वुकोऽपि नित्यत्वाभाव एवेति वाच्यम्, " क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता " इति परिभाषाबोधितस्य कृताकृतप्रसङ्गित्वस्यैव लक्ष्यानुरोधेन प्रकृते आश्रयणेन वुको नित्यत्वानपायात् । नचैवमपि " द्विर्वचनेऽचि " इति निषेधाद् गुणादेरप्राप्तौ मूलमसङ्गतमिति वाच्यम्, " सार्वधातुकार्धधातुकयोः " इति गुणस्य द्वित्वनिमित्तघटकान्तपर्याप्तनिमित्तताकाजादेशाभावेन " द्विर्वचनेऽचि " इत्यस्याप्राप्तेः इति केचित् ॥ अन्ये तु–" द्विर्वचनेऽचि " इति सूत्रं स्थानिरूपातिदेशविधायकमिति मतेन मूलं योजयन्ति ॥

भ्यासस्य। ६ । १ । ८॥ लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदिभूतादचः परस्य तु द्वितीयस्य ॥ भूव् भूव् अ इति स्थिते ॥ **पूर्वोऽभ्यासः । ६ । १ । ४॥** अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् ॥ **हलादिः शेषः । ६ । ४ । ६०॥** अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते । इति वलोपः॥ **ह्रस्वः । ७ । ४ । ५९ ॥** अभ्यासस्याचो ह्रस्वः स्यात् ॥ **भवतेरः । ७ । ४ । ७३ ॥** भवतेरभ्यासोकारस्य अः स्यात् लिटि ॥ **अभ्यासे चर्च । ८ । ४ । ५४ ॥** अभ्यासे झलां चरः स्युर्जशश्च ॥ झशां जशः खरां चरः । तत्रापि प्रकृतिजशां प्रकृतिजशः, प्रकृतिचरां प्रकृतिचर इति विवेक आन्तरतम्यात् ॥ **असिद्धवदत्राभात्। ६ । ४ । २२ ॥** इत ऊर्ध्वमापादपरिसमाप्तेराभीयम् । समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्यात्॥ इति वुकोऽसिद्धत्वादुवङि प्राप्ते-॥ **वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ** * ॥ बभूव । बभूवतुः । बभूवुः ॥ **आर्धधातुकस्येड्वलादेः । ७ । २ । ३५ ॥** वलादेरार्धधातुकस्येडागमः स्यात् ॥ बभूविथ । बभूवथुः । बभूव ॥ बभूव । बभूविव । बभूविम ॥ **अनद्यतने लुट् । ३ । ३ । १५ ॥** भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् ॥ **स्यतासी लृलुटोः । ३ । १ । ३३॥** लृ इति लृङ्लृटोर्ग्रहणम् । धातोः स्यतासी एतौ स्तो लृलुटोः परतः । शबा-

---

१ हलादिः शेष इति । "ह्रस्वो हलादिः शेषः" इति संहितापाठे 'ह्रस्वः' 'अहल्' 'आदिः शेषः' इत्येवं योगविभागे 'अहल्' इत्यत्र 'अभ्यासस्य' इति संबन्धे 'अभ्यासस्य अहल्भावो भवति' इत्यर्थः । ततः 'आदिः शेषः' इत्यत्र 'क्वचिदेकदेशोऽप्यनुवर्तते' इति न्यायेन 'अहल्' इत्यतः 'हल्' इत्येवानुवर्तते । तथा च 'अभ्यासस्यादिर्हल् चेत् स शिष्यते' इत्यर्थः ॥ तथा च "अभ्यासस्याहल् हलभावो भवति, यश्चादिः स तत्र शिष्यते" इत्यर्थाद् "आट, आटतुः" इत्यादौ न दोषः ॥ २ इति वलोप इति । "सर्वं वाक्यं सावधारणं भवति" इति न्यायाद् विनाप्येवकारं तदर्थप्रतीतिः । इत्यनेनैव वलोप इत्यर्थः ॥ न तु "लोपो व्योर्वलि" इत्यनेन, "वार्णादाङ्गम्--" इति न्यायात, वलि लोपे वग्रहणप्रत्याख्यानेन तदप्राप्तेश्च ॥ ३ अभ्यासस्याच इति । अभ्यासस्यावयवो योऽच् तस्येत्यर्थः । वैयधिकरण्यान्वयफलं तु "चच्छौ" इति । अत्र हि सामानाधिकरण्येनान्वये "अजन्तस्याभ्यासस्य ह्रस्वः" इत्यर्थे छो इत्यस्यात्त्वे छाशब्दस्य द्वित्वेऽन्तरङ्गत्वात् ह्रस्वात् पूर्वं तुकि ह्रस्वो न स्यात, अभ्यासस्याजन्तत्वाभावात् ॥ 'वार्णादाङ्गं बलीय' इति तु तुग्विषये न प्रवर्तते, 'च्छ्वोः शूड्-' इत्यत्र सतुक्निर्देशादिति भावः ॥ यद्यपि 'भवतेरः' इत्येव सिद्धेरस्य प्रकृते नोपयोगस्तथापि पर्जन्यवच्छास्त्रप्रवृत्त्यभ्युपगमेनेदमत्रोक्तमिति बोध्यम् ॥ ४ समानाश्रये इति । असिद्धत्वाश्रय शास्त्रसम्बन्धिनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वं समानाश्रयत्वम् ॥ ५ उवङीति । णल्यपि वृद्ध्यपेक्षया नित्यत्वाद् वुकि वृद्धेराभीयत्वाभावेन तत्रासिद्धत्वाभावाद् वृद्ध्यप्राप्तावुवङः प्राप्तिः । अभ्यासविकारेषु बाध्यबाधकभावाभावाद् हलादिः शेषात्वयोरत्र समावेशः ॥ ६ बभूविथेति । नचात्र "श्र्युकः किति" इतीण्निषेधेऽचूपरत्वाभावेन "भुवो वुक्" इति वुगागमोऽपि न स्यादिति वाच्यम्, क्रादिनियमेनेडागमप्रवृत्तेः सुलभत्वात् ॥ ७ लृङ्लृटोरिति । "इत्यक्तानुबन्धग्रहणे सामान्यस्य ग्रहणम्" इति परिभाषाप्रवृत्तेरिति भावः ॥ नन्वेवं सति शब्दतः साम्याभावाद् यथासंख्यं न स्यादिति चेत् न, वाचकशब्दसाम्याद् यथासंख्यप्रवृत्तेः ॥ ८ ननु स्याद्यपेक्षया लादेशानां परत्वाद् "विकरणेभ्यो नियमो बलीयान्" इति न्यायाच्च तिबाद्युत्पत्तौ शबादयः कुतो नेत्यत आह—शबाद्यपवाद इति । आदिना श्यनादीनां समुच्चयः । यदि तु अत्र सूत्रे "आर्धधातुके" इत्यनुवृत्त्याऽस्य लावस्थायामेव प्रवृत्तिरिति विभाव्यते तदा यदीदं न स्यात् तदा शप् स्यात्, कृते त्वप्राप्तिरित्येवताऽपवादत्वव्यवहारोऽवसेयः ॥

पवादः । **आर्धधातुकं शेषः । ३ । ४ । ११४ ॥** तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् ॥ इट् ॥ **लुटः प्रथमस्य डारौरसः । २ । २ । ८५ ॥** डा रौ रस् एते क्रमात्स्युः ॥ डित्त्वेसामर्थ्यादभस्यापि टेर्लोपः ॥ **पुगन्तलघूपधस्य च । ७ । ३। ८६ ॥** पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात्सार्वधातुकार्धधातुकयोः ॥ येन नोव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् । तेन भिनत्तीत्यादावनेकव्यवहितस्येको न गुणः । भवित् आ । अत्रेटो गुणे प्राप्ते ॥ **दीधीवेवीटाम् । १ । १ । ६ ॥** दीधीवेव्योरिटश्च गुणवृद्धी न स्तः ॥ भविता ॥ **तासस्त्योर्लोपः । ७ । ४ । ५० ॥** तासेरस्तेश्च लोपः स्यात्सादौ प्रत्यये परे ॥ **रि च । ७ । ४ । ५१ ॥** रादौ प्रत्यये प्राग्वत् ॥ भवितारौ । भवितारः ॥ भवितासि । भवितास्थः । भवितास्थ ॥ भवितास्मि । भवितास्वः । भवितास्मः ॥ **लृट् शेषे च । ३ । ३ । १३ ॥** भविष्यदर्थाद्धातोर्लृट् स्यात्क्रियार्थायां क्रियायामसत्यां सत्यां च ॥ स्यः, इट् । भविष्यति । भविष्यतः । भविष्यन्ति ॥ भविष्यसि । भविष्यथः । भविष्यथ ॥ भविष्यामि । भविष्यावः । भविष्यामः ॥ **लोट् च । ३ । ३ । १६२ ॥** विध्यादिष्वर्थेषु धातोर्लोट् स्यात् ॥ **आशिषि लिङ्लोटौ । ३ । ३ । १७३ ॥ एरुः । ३ । ४ । ८६॥** लोट इकारस्य उः स्यात्॥ भवतु ॥ **तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् । ७ । १ । ३५ ॥** आशिषि तुह्योस्तातङ् वा

---

१ **डित्त्वेति** । सर्वादेशत्वं त्वनुबन्धान्तरेणापि सुशकमिति भावः । एतच्च "उच्चरितप्रध्वंसो ह्यनुबन्धः" इति वदतां प्राचामनुरोधेन । "इत्संज्ञायोग्यत्वमनुबन्धत्वम्" इति नव्यमते तु "डा आ" इत्येवं प्रश्लेषेणैव सर्वादेशत्वं सम्पादनीयम् ॥ २ ननु "सार्वधातुकार्धधातुकयोः" इत्यस्याङ्गविशेषणत्वे "सार्वधातुकार्धधातुकाव्यवहितपूर्वस्याङ्गस्येको गुणो भवति" इति सूत्रार्थे "भिनत्ति" इत्यादावपि गुणः स्यात् "सार्वधातुकार्धधातुकयोः" इत्यस्य इको विशेषणत्वे तु "सार्वधातुकार्धधातुकाव्यवहितपूर्वस्याङ्गावयवस्येको गुणो भवति" इति सूत्रार्थे "भेत्ता" इत्यादावपि गुणो न स्यादत आह-**येन नाव्यवधानमिति** । "येन" इति कर्तरि तृतीया । "व्यवधानम्" इति भावे ल्युट् । "भवति" इत्यस्याध्याहारः । एवं च "येन नाव्यवधानम्" इत्यस्य "यत्कर्तृकावश्यव्यवधानम्" इत्यर्थो नञ्-द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । "यत्कर्तृकव्यवधानशून्यसंभवाभावस्तद्व्यवधानेऽपि भवति" इति यावत् । एवं च वचनसार्थक्याय वर्णैकव्यवधाने प्रवृत्तावपि अनेकवर्णव्यवधाने प्रवृत्तिर्नेति भावः सूच्यते ॥ अत्र च "दीधीवेवीटाम्" इत्यत्रेड्ग्रहणं क्ङसनोः कित्त्वं च ज्ञापकम्" इति ज्ञेयम् ॥ ३ **दीधीववीटामिति** । ननु "दीङ् क्षये" "धीङ् अनादरे" "वेञ् तन्तुसन्ताने" "वी गत्यादिषु" एतेषां चतुर्णां ग्रहणं कस्मान्नेति चेन्न, अवयवप्रसिद्ध्यपेक्षया समुदायप्रसिद्धेर्बलवत्त्वात्, किंच चतुर्णां ग्रहणेऽभिप्रेतेऽसंदेहार्थम्-"दीवेधीवीटाम्" इत्येव ब्रूयात् भगवान् सूत्रकारः । साहचर्यपरिभाषायाः क्त्वोऽर्थग्रहणेनानित्यत्वबोधनात् प्रकृतसूत्रे लक्ष्या रोधेन प्रवृत्त्यभावे आगमस्यैटो ग्रहणम् ॥ एतेन दीधीवेवीभ्यां साहचर्याद् "इट किट कटी" इत्यत्र निर्दिष्टस्येड्धातोरेव ग्रहणं स्यादिति मन्दोक्तमपास्तम् ॥ ४ **प्राग्वदिति** । तासेर्लोप इत्यर्थः । अस् तु नात्र सम्बध्यते, ततो रादिप्रत्ययासंभवात् इति प्राञ्चः ॥ लिटि 'व्यतिरे' इत्यत्र रादावस्तेः सकारलोपार्थमस्तेरप्यनुवर्तनमावश्यकमेवेति नव्याः ॥ ५ **आशिषीति** । स्वस्य परस्य चेष्टार्थस्य शंसनमाशीः।

स्यात् ॥ अनेकाल्त्वात्सर्वादेशः । यद्यपि[1] 'ङिच्चेत्ययमपवादस्तथाप्यनन्यार्थङित्त्वेष्वनङादिषु चरितार्थ इति गुणवृद्धिप्रतिषेधसंप्रसारणाद्यर्थतया सम्भवत्प्रयोजनङकारे तातङि मन्थरं प्रवृत्तः परेण बाध्यते । इहोत्सर्गापवादयोरपि समबलत्वात् । भवतात् ॥ **लोटो लङ्वत् । ३ । ४ । ८५ ॥** लोटो लङ इव कार्यं स्यात् ॥ तेन तामादयः सलोपश्च ॥ तथा हि—॥ **तस्थस्थमिपां तान्तन्तामः । ३ । ४ । १०१ ॥** ङितश्चतुर्णां तामादयः क्रमात्स्युः ॥ **नित्यं ङितः । ३ । ४ । ९९ ॥** सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात् ॥ अलोऽन्त्यस्येति सस्य लोपः । भवताम् । भवन्तु ॥ **सेर्ह्यपिच्च । ३ । ४ । ८७ ॥** लोटः सेर्हिः स्यात्सोऽपिच्च ॥ **अतो हेः । ६ । ४ । १०५ ॥** अतः परस्य हेर्लुक् स्यात् ॥ भव । भवतात् । भवतम् भवत ॥ **मेर्निः । ३ । ४ । ८९ ॥** लोटो मेर्निः स्यात् ॥ **आडुत्तमस्य[2] पिच्च । ३ । ४ । ९२ ॥** लोडुत्तमस्याडागमः स्यात्स पिच्च ॥ हिन्योरुत्वं न, इकारोच्चारणसामर्थ्यात् । भवानि । भवाव[3] । भवाम ॥ **अनद्यतने लङ् । ३ । २ । १११ ॥** अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् ॥ **लुङ्लङ्लृङ्क्ष्वडुदात्तः । ६ । ४ । ७१ ॥** एषु परेष्वङ्गस्याडागमः स्यात्सचोदात्तः ॥ **इतश्च । ३ । ४ । १०० ॥** ङितो लस्य परस्मैपदमिकारान्तं यत्तस्य लोपः स्यात् ॥ अभवत्[4] । अभवताम् । अभवन् ॥ अभवः । अभवतम् । अभवत । अभवम् ॥ अभवाव । अभवाम ॥ **विधिनि-**

---

१ ननु "भवतात्" इत्यत्र तातङादेशस्य ङित्त्वेन अनेकाल्त्वेऽपि अनङादाविव बाधकेन "ङिच्च" इत्यनेनाऽन्त्यस्य स्थाने प्रवृत्तिर्युक्तेति "अनेकाल्त्वात्सर्वादेशः" इति मूलमसङ्गतमेवेत्याशयेन शङ्कते-**यद्यपीति** ॥ समाधत्ते-**तथापीति** । अयं भावः-अनन्यफलकङित्त्वे अनङादौ चारितार्थस्य "ङिच्च" इति शास्त्रस्य गुणवृद्धिप्रतिषेधसंप्रसारणादिफलकतातङ्ङित्त्वे दुर्बलस्यैव प्राप्तौ परेण "अनेकाल्-" इत्यनेन बाधः ॥ नह्यनङादौ ङित्त्वस्यान्त्यादेशादृते फलमस्ति, नहि च यत्र कुत्रचित् सावकाशस्य विधेर्बाधकत्वं दृष्टमस्ति । निरवकाशत्वरूपस्यापवादशास्त्रे बाधकत्वप्रयोजकस्याभावात् । 'निरवकाशो ह्यपवाद उत्सर्गं बाधते' इति नियम इति । **संप्रसारणाद्यर्थतये**त्यादिना ध्रुव ईडभावः समुच्चीयते । न च सति सर्वादेशे गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थत्वम्, सति गुणवृद्धिप्रतिषेधसंप्रसारणाद्यर्थत्वे सर्वादेशत्वम् इत्यन्योन्याश्रयेण सर्वादेशत्वालाभे अन्त्यादेशत्वमेव स्यादिति वाच्यम्, "एरुः" इत्यस्यानन्तरम् "तिह्योस्तादाशिष्यन्यतरस्याम्" इति न्यासेन इकारानुवृत्त्या 'निह्योरिवर्णस्य तात्" इत्यर्थकेनान्त्यादेशत्वसिद्धौ ङित्त्वस्य सर्वादेशत्वविधानार्थत्वकल्पनेनादोषात् ॥ २ **सामर्थ्यादिति** । इतरथा प्रक्रियालाघवाय "हुनू" एव विदध्यात् सूत्रकार इति भावः ॥ **भवानीति** । लङ्वद्भावात् प्राप्तमपि "इतश्च" इति न प्रवर्तते, "मो नः" इति वक्तव्ये 'मेर्निः" इति सूत्रकरणात् ॥ एवं हेरपि । अन्यथा "सो हः" इत्येव ब्रूयात् पाणिनिः । न च "मो नः" इति न्यासे "भवामः" इत्यत्र मसो मकारस्यापि नकारः स्यादिति वाच्यम्, "एरुः" इत्यतः "एः" इत्यस्यानुवृत्त्या लोड्विशेषणत्वेन "इवर्णान्तस्य लोटो मस्य नः" इत्यर्थेनादोषात् ॥ ३ **भवाव इति** । अत्र "आदेः परस्य" इत्यनेनादेर्वकारस्य तु लोपो न, "परबोधकं परशब्दमुच्चार्य परस्य विहितं यत्कार्यं तत् कार्यं परत्वेन निर्दिष्टस्यादेरलो बोध्यम्" इति सूत्रार्थात् ॥ "सेर्ह्यपिच्च" इत्यस्य स्थाने "सेर्हिङ्" इति तु नासूत्रि, छन्दसीष्यमाणस्य "योहि युहि" इति रूपद्वयस्यासिद्ध्यापत्तेः । सिद्धान्ते हि "बहुलं छन्दसि" इति वैकल्पिकेऽपित्त्वातिदेशे तद्भावाभावपक्षे "उतो वृद्धिर्लुकि हलि" इति वृद्धौ रूपद्वयनिष्पत्तिः । इदानीं तु वैकल्पिके हिङादेशे "योहि युहि" इत्यनिष्पत्तिरिति बोध्यम् ॥ ४ **अभवदिति** । नचात्र "आदेः परस्य" इत्यादेर्लोपापत्तिः, अनुवृत्तस्य "धातोः" इत्यस्य विहितविशेषणत्वेन परशब्देन परस्य कार्यविधानाभावात् ॥

**मन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् । ३ । ३ । १६१ ॥** एष्वर्थेषु द्योत्येषु वाच्येषु वा लिङ् स्यात् ॥ विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम् । निमन्त्रणं नियोगकरणम् । आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टः सत्कारपूर्वको व्यापारः । 'प्रवर्तनायां लिङ्' इत्येव सुवचम् । चतुर्णां पृथगुपादानं प्रपञ्चार्थम् ॥ **यासुट् परस्मैपदेषूदात्तो ङिच्च । ३ । ४ । १०३ ॥** लिङः परस्मैपदानां यासुडागमः स्यात्स चोदात्तो ङिच्च ॥ ङित्त्वोक्तेर्ज्ञायते 'क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेध' इति । श्नादेशस्य शानचः शित्त्वमपीह लिङ्गम् ॥ **सुट् तिथोः । ३ । ४ । १०७ ॥** लिङस्तकारथकारयोः सुट् स्यात् ॥ सुटा यासुट् न बाध्यते । लिङो यासुट्, तकारथकारयोः सुडिति विषयभेदात् ॥ **लिङः सलोपोऽनन्त्यस्य । ७ । २ । ७९ ॥** सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् ॥ इति सकारद्वयस्यापि निवृत्तिः । सुटः श्रवणं त्वाशीर्लिङि । स्फुटतरं तु तत्राप्यात्मनेपदे ॥

---

१ **प्रपञ्चार्थमिति ।** प्रवर्तनात्वस्य विध्यादिषु चतुर्ष्वनुस्यूतत्वादिति भावः ॥ अत एव "अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि । तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥ न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा । विध्यादीनामुपादानं चतुर्णामादितः कृतम् ॥" इति संगच्छते । **प्रवृत्तिजनकज्ञानविषयतावच्छेदकधर्मवत्त्वं प्रवर्तनात्वम्** । तच्चेष्टसाधनत्वास्तीति तदेव विध्यर्थः ॥ २ **ङित्त्वोक्तेरिति ।** लिङो ङित्त्वस्य स्थानिवत्त्वेन तदादेशेऽतिदिष्टत्वात्, आदेशे च ङित्त्वस्याचारितार्थ्यात् समुदायोपकारकत्वमेव ॥ एवं च सति यासुटो ङित्त्वेन "न ल्यपि" इति ज्ञापितायाः अनुबन्धकार्येऽनल्विधाविति निषेधाप्रवृत्तेः काचित्कत्वं बोध्यते इति भावः ॥ ननु "सार्वधातुकमपित्" इति सूत्रे "अपित्" इति योगं विभज्य "गाङ्कुटा" इत्यतो 'ङित्' ग्रहणमनुवर्त्य, उभयोरावृत्तिं कृत्वा "अपित्" इति प्रसज्यप्रतिषेधं चाश्रित्य "ङिच्च पिन्न भवति" "पिच्च ङिन्न भवति" इति भाष्ये उक्तम्, अत एव "ब्रूतात्" इत्यादौ "ब्रुव ईट्" इति न ॥ एवं च "स्तुयात्" इत्यादौ गुणनिषेधाय ङित्त्वस्य चारितार्थ्येन ज्ञापकत्वासंभव इत्यरुचेराह-श्नादेशस्येति । अन्यथा आवृत्तिशित्त्वमादाय "सुपाण" इत्यादौ गुणाभावादिसिद्धे तद्वैयर्थ्यं स्पष्टमेव । अत्र यद्वक्तव्यं तत् 'टिड्ढा' इति सूत्रे गुरुचरणैरुक्तमिति तत एवाधिकमवधार्यम् ॥ ३ ननु सुटो विशेषविहितत्वेन येन नाप्राप्तिन्यायेन यासुटो बाधः कथं नेत्यत आह-**सुटा यासुडिति** ॥ तत्र हेतुमाह-**विषयभेदादिति** । अत एव "असंभवे एवापवादत्वम्" इति वार्तिकमतं संगच्छते । भाष्ये तु-"सत्यपि संभवे बाधनं भवति" यथा दधिदानोत्तरं तक्रदानस्य चारितार्थ्येऽपि तक्रदानेन दधिदानस्य बाध इत्युक्तम् ॥ अत एव-अचि रादेशेन नुटो बाधमाशङ्क्य "न तिसृ" इति ज्ञापकेन समाहितं भाष्ये ॥ एवं च प्रकृते का गतिरिति चेच्छृणु-"यासुट् परस्मैपदेषु" इत्यत्र "परस्मैपदेषु" इति विषयसप्तमी । तेन परस्मैपदविषयतायामेव लिङो यासुड्विधानम् । तस्मिंश्च समये सुटः प्राप्तिरेव नेति कथं बाध्यबाधकभावः । अत एव "लिङो यासुट्, तकारथकारयोः सुट्" इति मूले उक्तम् । "**विषयभेदात्**" इत्यस्य "प्राप्तिविषयभेदात्" इत्यर्थः । "प्राप्तिकालभेदात्" इति फलितार्थः । वस्तुतः "**यासुड्विषये सीयुटः प्रतिषेधो वक्तव्यः**" इति वार्तिकेनात्र प्रकरणे बाध्यबाधकभावाभावज्ञापनेन न दोष इति सर्वं सुस्थम् ॥ अत एव झेर्जुस्विषये यासुट्सिद्धिरन्यथा जुसा यासुटो बाधापत्तिः ॥ केचित्तु आत्मनेपदे सुटश्चारितार्थ्येऽपि परत्वाद् बाधः कुतो नेत्याशङ्क्य "**विषयभेदात्**" इत्यस्य यौगपद्यासंभवरूपविप्रतिषेधाभावान्न परत्वेन बाधः "विरोधे हि बलीयसा दुर्बलं बाध्यते" इत्याशयं वदन्ति ॥ ४ **सकारद्वयस्यापीति** । अङ्गुल्यादिवत् लोकसिद्धेन "दीधीवेवीटाम्" इति सूत्रस्थेड्ग्रहणज्ञापितेन च "**अवयवावयवोऽपि समुदायावयवः**" इति न्यायेन सुटोऽपि "लिङ्भक्तत्वात्" इति भावः । "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इत्यस्य-

**अतो येयः । ७ । २ । ८० ॥** अतः परस्य सार्वधातुकावयवस्य या इत्यस्य इय् स्यात् ॥ गुणः । यलोपः । भवेत् ॥ सार्वधातुके किम् ? चिकीर्ष्यात् । मध्येऽपवादन्यायेन हि अतो लोप एव बाध्येत । भवेदित्यादौ तु परत्वाद्दीर्घः स्यात् । भवेताम् ॥ **झेर्जुस् । ३ । ४ । १०८ ॥** लिङो झेर्जुस् स्यात् । ज इत् ॥ **उस्यपदान्तात् । ६ । १ । ९६ ॥** अपदान्तादवर्णादुसि परे पररूपमेकादेशः स्यात् ॥ इति प्राप्ते-परत्वान्नित्यत्वाच्च 'अतो येयः' इति प्राञ्चः ॥ यद्यप्यन्तरङ्गत्वात्पररूपं न्याय्यं तथापि यास् इत्येतस्य इय् इति व्याख्येयम् । एवं च सलोपस्यापवाद इय् । अतो येय इत्यत्र तु सन्धिरार्षः । भवेयुः ॥ भवेः । भवेतम् । भवेत ॥ भवेयम् । भवेव । भवेम ॥ **लिङाशिषि । ३ । ४ । ११६ ॥** आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् ॥ **किदा-**

---

—तु लक्ष्यभेदान्नास्ति विषयतेति तत्त्वम् ॥ नन्वेवं सुड्विधानं व्यर्थमत आह-**सुटः श्रवणं त्विति॥आशीर्लिङीति** । भूयास्तामित्यादौ । ननु सुटि जाते "अनचि च" इत्यस्यासिद्धत्वात् ततः पूर्वमेव "स्कोः" इत्यनेन यासुटः सकारस्य लोपः, झलि परसंयोगादित्वात् तथा चैकसकारकं रूपं तुल्यम् । सुडभावे यासुटः सकारस्य द्वित्वे कृते तु सुटि "स्कोः" इति सलोपात् सुट एव सकारस्य द्वित्वे च द्विसकारकमपि रूपं तुल्यमेवेति सुटो विधानं व्यर्थमित्यपरितोषादाह-**स्फुटतरं त्विति** 'एधिषीष्ट' इत्यादाविति भावः ॥

१ **यलोप इति** । न च यलोपे कर्तव्ये संज्ञासापेक्षत्वेयो बहिरङ्गतयाऽसिद्धत्वमिति वाच्यम्, परिभाषायामङ्गशब्देन शब्दस्वरूपस्य सप्तम्याद्यन्तोपात्तस्य निमित्तस्यैव ग्रहणम्, न तु संज्ञाया आर्थस्य चेत्यदोषात् ॥ एवं चेयोऽपरनिमित्तकत्वेनान्तरङ्गत्वमिति शेखरकृत् ॥ अत्र दाधिमथाः-यलोपस्यापि संज्ञासापेक्षत्वेन बहिरङ्गत्वमेवेति निर्दोषतायामपि यलोपस्याल्पापेक्षत्वेनान्तरङ्गत्वम् इयादेशस्य बह्वपेक्षत्वेन बहिरङ्गत्वमित्यस्य न्याय्यत्वे बहिरङ्गपरिभाषया अनित्यत्वेन लक्ष्यसिद्धिः करणीया-इति वदन्ति ॥ २ "अतो येयः" इति सूत्रे आर्धधातुकयकारे शबादिविकरणानामप्राप्त्याऽकारात्परत्वासंभवेनाव्यभिचाराद् "रुदादिभ्यः" इत्यतः सार्वधातुकपदानुवृत्तिः किमर्थेत्याशङ्क्य समाधत्त-**चिकीर्ष्यादिति** । अयं भावः—"भवेत्" इत्यत्र "अतो दीर्घो यञि" इति दीर्घः प्राप्तः, "चिकीर्ष्यात्" इत्यत्र "अतो लोपः" इति लोपः प्राप्तः, एवं च इयादेशप्राप्तिविषयस्य बहुभिराक्रान्ततयाऽपवादत्वम् । तत्र कस्य बाधेन चारितार्थ्यमित्यपेक्षायाम् "अतो लोपः ६ । ४ । ४८" "अतो येयः । ७ । २ । ८०" "अतो दीर्घो यञि । ७ । ३ । १०१" इति पाठक्रमे "**मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्**" इति न्यायेन अतो लोपबाधेन चारितार्थ्ये दीर्घबाधे मानाभावेन परत्वाद् दीघः स्यादिति सार्वधातुकग्रहणमिति । कृते चास्मिन् "चिकीर्ष्यात्" इत्यत्रेयादेशाप्राप्तौ उक्तन्यायविषयाभावेन दीर्घबाधेनैव चारितार्थ्यमिति हृदयम् ॥ ३ "उस्यपदान्तात्" इति सूत्रस्य "अवर्णादपदान्तादुसि पूर्वान्तपरायोरेकः पररूप आदेश इत्यर्थः ॥ तदाह-**इति प्राप्ते इति** ॥ ४ **परत्वादिति** । "भवेत्" इत्यादौ "अतो येयः" इत्यस्य "अयुः" इत्यादौ च पररूपविधायकस्य चारितार्थ्येन प्रकृते विप्रतिषेधः सुलभ इति भावः ॥ **नित्यत्वादिति** । एकादेशस्य पूर्वान्तवत्त्वेन ग्रहणान्नित्यत्वमिति भावः ॥ ५ "प्राञ्चः" इत्यनेन सूचितामरुचिं प्रकटयन्नाह-**यद्यपीति** । **अन्तरङ्गत्वादिति** । प्रत्ययमात्रापेक्षत्वेन पररूपस्यान्तरङ्गत्वम् । प्रकृतिप्रत्ययोभयापेक्षत्वेन "अतो येय" इत्यस्य बहिरङ्गत्वमिति भावः ॥ ६ **किदाशिषीति** । ननु ङित्त्वेनैव गुणवृद्धिनिषेधे सिद्धे किद्वचनमनर्थकमिति चेन्न, "इज्यात्" इत्यादौ "वचिस्वपियजादीनां किति" इति सम्प्रसारणार्थं तस्यावश्यकत्वात् । न च "वचिस्वपियजादीनां ङिति" इति न्यासेन "इज्यात्" इत्यादौ न दोष इति वाच्यम्, तथा न्यासे "ईजतुः" इत्यादौ सम्प्रसारणानुपपत्तेः । ननु च "असंयोगाल्लिट्" ङित् इति न्यासेन "ईजतुः" इत्यादौ नातिप्रसङ्ग इति चेन्मैवम्, "जागर्यात्" इत्यत्र गुणार्थं किद्वचनस्यावश्यकत्वात् । जागर्तेर्गुणो हि ङिति पर्युदस्यते, ङित्त्वं चेह विशेषविहितेन कित्त्वेन बाध्यते ॥

**शिषि । ३ । ४ । १०४ ॥** आशिषि लिङो यासुट् कित्स्यात् ॥ स्कोरिति सलोपः ॥ **क्ङिति च । १ । १ । ५ ॥** गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः ॥ भूयाः । भूयास्तम् । भूयास्त ॥ भूयासम् । भूयास्व । भूयास्म ॥ **लुङ् । ३ । २ । ११० ॥** भूतार्थवृत्तेर्धातोर्लुङ् स्यात् ॥ **माङि लुङ् । ३ । ३ । १७५ ॥** सर्वलकारापवादः ॥ **स्मोत्तरे लङ् च । ३ । ३ । १७६ ॥** स्मोत्तरे माङि लङ् स्याच्चाल्लुङ् ॥ **च्लि लुङि । ३ । १ । ४३ ॥** शबाद्यपवादः ॥ **च्लेः सिच् । ३ । १ । ४४ ॥ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । २ । ४ । ७७ ॥** एभ्यः सिचो लुक् स्यात् ॥ गापाविहेणादेशपिबती गृह्येते[1] ॥ **भूसुवोस्तिङि । ७ । ३ । ८८ ॥** भू सू एतयोः सार्वधातुके तिङि परे गुणो न स्यात् ॥ **अस्तिसिचोऽपृक्ते । ७ । ३ । ९६ ॥** सिच् अस् चेति[2] समाहारद्वन्द्वः । सिच्छब्दस्य सौत्रं भत्वम् । अस्तीत्यव्ययेन कर्मधारयः । ततः पञ्चम्याः सौत्रो लुक् । विद्यमानात्सिचोऽस्तेश्च[3] परस्यापृक्तस्य हल ईडागमः स्यात् ॥ इतीड् न, इह सिचो लुप्तत्वात्[4] । अभूत् ॥ हलः किम् ? ऐधिषि ॥ अपृक्तस्येति किम् ? ऐधिष्ट ॥ अभूताम् ॥ **सिजभ्यस्तविदिभ्यश्च । ३ । ४ । १०९ ॥** सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् स्यात् ॥ इति प्राप्ते[5] ॥ **आतः । ३ । ४ । ११० ॥** सिज्लुक्यादन्तादेव झेर्जुस् स्यात् ॥ अभूवन् ॥ अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ॥ **न माङ्योगे । ६ । ४ । ७४ ॥** अडाटौ न स्तः ॥ मा भवान् भूत् । मा स्म भवत् भूद्वा ॥ **लिङ्निमित्ते लृङ् क्रियातिपत्तौ । ३ । ३ । १३९ ॥** हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात् । क्रियाया अनिष्पत्तौ गम्यमानायाम् ॥ अभविष्यत् । अभविष्यताम् । अभविष्यन् ॥ अभविष्यः । अभविष्यतम् । अभविष्यत ॥ अभविष्यम् । अभविष्याव । अभविष्याम ॥ **ते प्राग्धातोः । १ । ४ । ८० ॥** ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः ॥ **आनि लोट् । ८ । ४ । १६ ॥** उपसर्गस्थान्निमित्तात्परस्य

---

१ ननु "पा रक्षणे" इति धातोर्लुङि "अपासीत्" इत्यत्र गै शब्दे" इत्यस्य "अगासीत्" इत्यत्र च सिज्लुक् स्यादत आह-**गापाविति** । अत एव "**गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्**" इत्युक्तं भाष्ये ॥ २ ननु "अस्तिश्च सिच्च" अनयोः समाहारः "अस्तिसिच्" इति समाहारद्वन्द्वे "असूधातोः सिचश्च परस्यापृक्तस्य हल ईडागमः स्यात्" इति सूत्रार्थे अस्तेर्भूभावस्य स्थानिवत्त्वेनास्तितया अभूदित्यत्र, अस्थादित्यादौ च स्थानिवत्त्वेन सिच्परत्वादीडागमापत्तिः स्यादत आह-**सिच् च अस् चेति** । "अयनन्तु समाहारद्वन्द्वे अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वेन कुत्वजश्त्वे स्यातामत आह-**भत्वमिति** । "अयस्मयादीनि च्छन्दसि" इत्यनेनेति भावः । "छन्दोवत् सूत्राणि भवन्ति" इति वृद्धिरादैच्सूत्रभाष्योक्तेः । **कर्मधारय इति** । "अस्ति चासौ सिचस्" इत्येवंरूपः । ननु सति कर्मधारये कृत्तद्धितेति प्रातिपदिकत्वेन स्वौजसिति पञ्चम्युत्पत्तौ "**अस्तिसिचसः**" इत्येवं रूपापत्तिरत आह-**सौत्रो लुगिति** । "सुपां सुलुग्" इत्यनेनेति भावः ॥ ३ अस्तीत्यव्ययस्यार्थमाह-**विद्यमानादिति** । विद्यमानादित्यस्योभाभ्यां सम्बन्धः, इति नोक्तदोषावसरः । "**सर्वादेशनानपहृतत्वं विद्यमानत्वम्**" इति तल्लक्षणात् । यथाऽत्र सूत्रपाठे भाष्याक्षरस्वारस्यं तथा भाष्यटिप्पण्यां सविस्तरं गुरुचरणैराविष्कृतमिति तत एवावधार्यम् ॥ ४ **लुप्तत्वादिति** विद्यमानत्वाभावाद् ' इति शेषः ॥ ५ **इति प्राप्ते इति** । प्रत्ययलक्षणेन सिच्त्वमादाय प्राप्तिः ॥

लोडादेशस्यानीत्यस्य नस्य णः स्यात् ॥ प्रभवाणि ॥ **दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः** *॥ दुःस्थितिः। दुर्भवानि॥ **अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्** *॥ अन्तर्धा । अन्तर्धिः । अन्तर्भवाणि ॥ **शेषे विभाषाऽकखादावषान्त उपदेशे ।८।४।१८ ॥** उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन् धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा स्यात्॥ प्रणिभवति । प्रनिभवति । इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तम्।

'संहितैकपदे नित्या नित्या धातूपसर्गयोः ॥
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ १ ॥' इति ॥

सत्ताद्यर्थनिर्देशश्चोपलक्षणम् । यागात्स्वर्गो भवतीत्यादावुत्पद्यत इत्याद्यर्थात् ॥

---

१ **दुरः षत्वेति** । अत्र वार्तिके प्रादिषु पठितयोः सान्तरान्तयो " दुस्दुर् " इत्युभयोरपि प्रयोगस्थयोरेवानुकरणम् । " षत्वणत्वयोः इत्यस्य " तद्विधायकशास्त्रयोः " इत्यर्थेन रुत्वस्य सिद्धत्वात् । उभयोर्ग्रहणादेव सुषामादिषु दुष्टुशब्दपाठः सार्थकः । स हि " अपदुःसुषु स्थः कुः " इति दुस्पूर्वकस्थाधातोः कुप्रत्यये सिद्ध्यति, । अन्यथा दुस्पूर्वकात् कुप्रत्यये " उपसर्गात्" इत्येव षत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव ॥ तेन " दुःसेधति " इत्यत्र कदापि षत्वं न । **दुःस्थितिरिति** । "स्त्रियां क्तिन् " इति क्तिन्प्रत्यये "द्यतिस्यतिमास्थामित्ति किति" इतीदादेशे च रूपमिदम् । उपसर्गत्वनिषेधे "उपसर्गात्सुनोति--" इत्यादिना सत्वाभावः॥ **दुर्भवानीति** । उपसर्गत्वाभावेन " आनि लोट् " इति णत्वं न ॥ २ **अन्तर्धेति** । " आतश्चोपसर्गे " इत्यङ्प्रत्यये "आतो लोप इटि च " इत्याकारलोपे "अजाद्यतष्टाप् " इति टापि च रूपमिदम् ॥ **अन्तर्धिरिति** । अन्तःशब्दस्योपसर्गत्वेन ' उपसर्गे घोः किः ' इति किप्रत्यये " आतो लोप इटि च " इत्याकारलोपे च रूपमिदम् ॥ **अन्तर्भवाणीति** । उपसर्गत्वाद् "आनि लोट्" इति णत्वं सिद्ध्यति ॥ ३ ननु संहिताधिकारात् तद्विवक्षाविवक्षायां रूपद्वयसिद्धौ विभाषाग्रहणं व्यर्थमत आह--**इहोपसर्गाणामिति** । **असमस्तत्वेऽपीति** । सुबन्तानामेव समासविधानादिति भावः । "सह" इति योगविभागेन समासस्तु छन्दस्येवेति हृदयम् ॥ ४ उक्तार्थे प्रमाणमुपन्यस्यति-**तदुक्तमिति** । अभियुक्तैरिति शेषः । तदेव वाक्यमाह-**संहितैकपदे इति** । एकमेव पदमेकपदम्, तत्र संहिता नित्या यथा "हरये " इति । धातुश्च उपसर्गश्च धातूपसर्गौ तयोः संहिता नित्या, यथा "प्रेक्ष्यते" इति ॥ समसनं समासस्तत्र संहिता नित्या यथा "देवेन्द्र" इति । सा= संहिता, वाक्ये तु=एकतिङन्तार्थनिष्ठमुख्यविशेष्यताकबोधजनकं वाक्यम्, तत्र तु, विवक्षाम्=वक्तुमिच्छाम्, अपेक्षते=अभिलष्यतीत्यर्थः । यथा " हे रोहिणि ! त्वमसि शीलवतीषु धन्या एनं निवारय पतिं सखि ! दुर्विनीतम्" इत्यादिषु विवक्षाधीना संहिता ज्ञेया । संहितात्र सन्धिः ॥ एकपदशब्देन चात्र अखण्डपदं गृह्यते । अखण्डत्वं च पदत्वाभाववदुत्तरखण्डत्वम् । पदत्वाभाववान् उत्तरखण्डो यस्य तत्त्वमिति चास्यार्थः । अत एव समासग्रहणं चरितार्थम् । अन्यथा "एकपद" इत्यनेनैव सिद्धे समासग्रहणं निष्फलमेव स्यात् । " गोबलीवर्दन्यायेन" इति तत्त्वबोधिनीकारप्रभृतीनामुक्तिस्तु हेयैव, निरुक्तलक्षणस्य "राजीयति" इत्यादिसिद्धये आवश्यकत्वात् । अन्यथा तत्र पक्षे शबेकादेशोऽपि न स्यात् । अत एव च " अग्र अग्रे " इत्यादौ पदद्वित्वे संहिता अनित्यैवेत्यलं पल्लवितेन ॥ ५ ननु भूधातोः सत्तारूपस्यैवार्थस्याङ्गीकारे " सत्तायां मङ्गले वृद्धौ निवासे व्याप्तिसम्पदोः । अभिव्याप्तौ च शक्तौ च प्रादुर्भावे गतौ च भूः " इत्यादीनि अभियुक्तवचनानि न सङ्गच्छेरन् इत्याशङ्कां परिहरन्नाह-**सत्ताद्यर्थनिर्देशश्चोपलक्षणमिति** । स्वबोधकत्वे सति स्वेतरबोधकत्वमुपलक्षणत्वम् ॥ तत्र हेतुमाह-**यागादिति** । अत एव "सर्पतेर्गतौ" इत्यत्र गतिग्रहणम्, "परो भुजोऽवज्ञाने" इत्यत्रावज्ञानग्रहणम्, " कुर्द खुर्द गुर्द गुद क्रीडायामेव" इत्यत्रैवकारग्रहणं च सार्थकम् । अत एव च "धातवश्चोपसर्गाश्च निपाताश्चेति ते त्रयः । अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥" इत्युक्तं सङ्गच्छते ॥

उपसर्गास्त्वर्थविशेषस्य द्योतकाः । प्रभवति । पराभवति । संभवति । अनुभवति । अभिभवति । उद्भवति । परिभवतीत्यादौ विलक्षणार्थावगतेः । उक्तं च—'उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते । प्रहाराहारसंहारविहारपरिहारवत् ॥ १ ॥ ' इति ॥ एध वृद्धौ । **कत्थन्ताः षट्त्रिंशदनुदात्तेतः** ॥ **टित आत्मनेपदानां टेरे । ३ । ४ । ७९ ॥** टितो लस्यात्मनेपदानां टेरेत्वं स्यात् । एधते ॥ **सार्वधातुकमपित् । १ । २ । ४ ॥** अपित्सार्वधातुकं ङिद्वत्स्यात् ॥ **आतो ङितः । ७ । २ । ८१ ॥** अतः परस्य ङितामाकारस्य इय् स्यात् । एधेते । एधन्ते ॥ **थासः से । ३ । ४ । ८० ॥** टितो लस्य थासः से स्यात् ॥ एधसे । एधेथे । एधध्वे ॥ अतो गुणे । एधे । एधावहे । एधामहे ॥ **इजादेश्च गुरुमतोऽनृच्छः । ३ । १ । ३६ ॥** इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि ॥ आमो मकारस्य नेत्त्वम् । आस्कासोराम्विधानाज्ज्ञापकात् ॥ **आमः । २ । ४ । ८१ ॥** आमः परस्य लुक् स्यात् ॥ **कृञ्चानुप्रयुज्यते लिटि ।**

---

१ ननूपसर्गाणां वाचकत्वस्य "आ" इत्यर्वागर्थे इत्यादिना यास्काचार्येणाङ्गीकृतत्वेन तैरेव नानार्थबोधे सिद्धे किमुपलक्षणत्वेनेति शङ्कां परिहरन्नाह—**उपसर्गास्त्विति** ॥ **द्योतका इति** । यथा प्रदीपसंयोगे द्रव्यस्य गुणविशेषोऽभिव्यज्यमानो द्रव्याश्रय एव भवति, न प्रदीपाश्रयः तथैव धातोरेवार्थविशेषः सत्युपसर्गसंयोगे व्यज्यते, न तु वाचका इति हृदयम् । उपसर्गाणां वाचकत्वाङ्गीकारे तु "अनुभूयते" इत्यादौ कर्मणि लकाराद्यनुपपत्तिः स्यात्, अनुभवरूपफलस्यानुपसर्गार्थत्वेन धातोरकर्मकत्वात् । "**उपसर्गाः**" इत्युक्त्या निपातानां द्योतकत्वं वाचकत्वं वाभ्युपैति ॥ २ द्योतकत्वे सम्मतिमपि दर्शयति -**उपसर्गेणेति** । **उपसर्गेण**=प्रादिना, **धात्वर्थः**=सत्तादिरूपः, **अबलात्**=बलाभावात् निर्बलत्वादित्यर्थः, अस्वतन्त्रत्वादिति यावत् । **अन्यत्र**=अन्यस्मिन्नर्थे, **नीयते**=प्राप्यते किंवत्—प्रहारा[illegible]हारसंहारविहारपरिहारवत् । हरणार्थोऽपि हरतिः तत्रोपसर्गवशात् प्रहरणार्थः, एवमाहरणार्थः, संहरणार्थः, विहरणार्थः, परिहरणार्थश्च यथा सम्पद्यते तथेत्यर्थः । अत्र "अबलात्" इति च्छेदः, नतु "बलात्" इति । तथा सति उपसर्गाणां द्योतकत्वं व्याहन्येत । अपि तु वाचकत्वमेव स्यादिति केचित् ॥ महामहोपाध्यायोपपदालङ्कृताः श्रीगुरुचरणास्तु—"उपसर्गेण नीयते" इति पाठे नयनकर्तृत्वस्योपसर्ग एवाङ्गीकारे बलाभावेऽस्वतन्त्रत्वे च कर्तृत्वं नैव द्रष्टव्यमिति नयनकर्मण एवास्वतन्त्रत्वस्य सर्वत्राङ्गीकाराद् धातावस्वतन्त्रत्वमुपसर्गेषु स्वतन्त्रत्वमिति विपरीतमेव स्यात् । तस्मात् ' उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते " इत्येव पाठो भवेत् । "उपसर्गेण=उपसर्गसंसर्गेण, बलात्=शब्दशक्तिस्वभावात्, अन्य एव धात्वर्थः प्रतीयते" इति च तदर्थः । "अन्यत्र नीयते" इति पाठे उपसर्गेण कर्त्रा बलात्कारेण धात्वर्थोऽन्यत्र=केवलस्य प्रसिद्धार्थाद् भिन्नेऽर्थे नीयते=अर्थाद् विलक्षणो धात्वर्थ एव प्रत्याय्यते न स्वार्थ इत्यनेनोपसर्गाणां द्योतकत्वमेव चेति सूचितम् । अधिकरणत्वविवक्षया कर्मत्वं नेति वदन्ति ॥ **द्योतकत्वं च समभिव्याहृतपदशक्त्युद्बोधकत्वम्** ॥ ३ इह एत्वे कृते "एध ए" इति दशायाम् 'आद्गुणः" इति गुणं बाधित्वा "वृद्धिरेचि" इति वृद्धौ प्राप्तायामाह **अतो गुण इति** ॥ ४ आमो मकारस्य 'हलन्त्यम्" इतीत्संज्ञा कस्मान्न भवतीत्यत आह—**आमो मस्य नेत्त्वमिति** ॥ तत्र प्रमाणमाह—**आस्कासोरिति** । सति हि मित्त्वे आस्कासोराम् भवन्नपि "मिदचोऽन्त्यात् परः" इत्यचामन्त्यात् परः स्यात् तथा च "अकः सवर्णे दीर्घः" इति सवर्णदीर्घत्वे सत्यकिंचित्करः स्यात्, अतः "दयायासश्च" इति "कास्प्रत्ययादाममन्त्रे लिटि" इति च आस्कासोराम्विधानं व्यर्थं सद् "हलन्त्यम्" इति प्राप्तेत्संज्ञाया अभावं ज्ञापयतीति भावः ॥ ननु आम्प्रत्ययस्यादन्तत्वाङ्गीकारेण तस्य च "उपदेशेऽजनुनासिक इत्" इतीत्संज्ञया निवृत्तावपि उपदेशेऽन्त्यहलोऽभावान्नेत्संज्ञाप्रवृत्तिरिति किं ज्ञापकेन ॥ नचादन्तत्वे "आमः" इति सूत्रनिर्देशानुपपत्तिरिति वाच्यम्, उत्सृष्टानुबन्धेन निर्देश इत्यङ्गीकारेणादोषात् ॥ नचैवमपि "कास्प्रत्ययादाममन्त्रे लिटि" इति सूत्रघटिताममन्त्र इति निर्देशानुपपत्तिरेवेति वाच्यम्, "सर्वत्र लोहितादिकतन्तेभ्यः" इत्यत्र पररूपवत् शकन्ध्वादेराकृति-

३ । १ । ४० ॥ आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते ॥ आम्प्रत्ययवत्कृञोऽनुप्रयोगस्येति सूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीति ज्ञायते तेन । 'कृभ्वस्तियोग' इत्यतः कृञो द्वितीयेति ञकारेण प्रत्याहाराश्रयणात्कृभ्वस्तिलाभः । तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदान्वयः । संपदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्रयुज्यते ॥ कृञस्तु क्रियाफले परगामिनि परस्मैपदे प्राप्ते–॥ **आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य । १ । ३ । ६३ ॥** आम् प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदं स्यात् ॥ इह पूर्ववदित्यनुवर्त्य वाक्यभेदेन

---

गणत्वेन पररूपेणादोषात्, इति चेन्न, अनेकक्लिष्टकल्पनापेक्षया ज्ञापकस्यैव लघीयस्त्वात् । इत एवारुचेः "**आमोऽमित्त्वमदन्तत्वाद्गुणत्वं विदेस्तथा । आस्कासोराम्विधानाच्च पररूपं कतन्तवत्**" इत्यभियुक्तवचनेऽदन्तत्वेन समाधाय "आस्कासोराम्विधानाच्च" इति स्वीकृतम् । न च मित्त्वादन्त्यादचः परत्वसामर्थ्यादसंजातविरोधित्वन्यायेनात्र सवर्णदीर्घबाधोऽस्त्विति वाच्यम्, प्रधानसवर्णदीर्घबाधापेक्षया गुणभूतेरसंज्ञाबाधस्यैवौचित्यात् तस्मादत्र ज्ञापकेनैव निर्वाह इति भावः ॥ दाधिमथास्तु–भाष्ये तु 'अथापि कथंचिदित्कार्यं स्यात्' एवमपि न दोषः । क्रियते न्यास एव 'आममन्त्रे' इति । यद्येवम् "आमामन्त्रे" इति प्राप्नोति इत्याशङ्क्य "शकन्धुन्यायेन निर्देशः" इति स्पष्टमेवोपलभ्यते । तेनादन्तपाठे सर्वदोषपरिहारः सूच्यते इत्याहुः ॥

१ ननु सूत्रे एकस्य कृञ एवोपादानेन वृत्तौ भ्वस्त्योर्लाभः कथमत आह–**आम्प्रत्ययवदिति ॥ कृञ्ग्रहणेति** । कृञ एवानुप्रयोगे धात्वन्तरस्य प्राप्त्यभावात् "अनुप्रयोगस्य" इत्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । न च "कृञ्" इति ञकारेणैवान्यप्रयोगबोधनाज् ज्ञापकाश्रयणं निष्फलमिति वाच्यम्..."धातोराम् स्यात् लिट्परः कृञ्चानुप्रयुज्यते" इत्यर्थेन तस्य सफलत्वात् । "लुटि च क्लृपः" इति सूत्रभाष्ये "सर्वे चकाराः प्रत्याख्यायन्ते" इत्युक्त्या तस्यासत्त्वबोधनेन पूर्वोक्तकल्पनाया वक्तुमशक्यत्वाच्च । ननु "अन्यस्यापि प्रयोगः" इतीयता कथनेन प्रकृते किमायातमिति चेत् तत्राह–**तेनेति** । अन्यस्यापि प्रयोग इति बोधनेनेत्यर्थः । "कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः" इति सूत्रघटितकृशब्दमारभ्य "कृञो द्वितीयतृतीयशम्बबीजात् कृषौ" इति सूत्रघटितञकारपर्यन्तं प्रत्याहाराश्रयणात् कृभ्वस्तीनां लाभ इत्यर्थः ॥ ननु कृभ्वस्तीनामाम्प्रकृतीनां च परस्परमन्वयो न स्याद् भिन्नविषयत्वादिति शङ्कां परिहरन्नाह–**तेषामिति** । कृभ्वस्तीनामित्यर्थः । **क्रियासामान्येति** । "कृञ्" क्रियावाची । भ्वस्ती सत्तारूपभाववाचकौ । 'भावो भावनोत्पादना क्रिया' इत्यग्रे वक्ष्यमाणत्वेन भावक्रिययोरभेदादिति भावः ॥ **आम्प्रकृतीनामिति** । एधादीनाम् ॥ **विशेषेति** । एधप्रभृतयः तत्तत्फलानुकूलव्यापारवाचकाः । अनुप्रयोगकृञादिवाच्या क्रिया समभिव्याहृताम्प्रकृतिवाच्यफलिकैव व्यापारस्य द्विर्भानप्राप्तावपि 'संभेदे नान्यतरवैयर्थ्यम्' इति सकृदेव शाब्दबोधे भानम् । "नीलो घटः" इत्यादौ "नीलाभिन्नो घटः" इत्यर्थेन "सामान्यविशेषयोरभेदान्वयः" इत्यस्य क्लृप्तत्वात् । एवं च "एधांचक्रे" इत्यस्य–"परोक्षानद्यतनभूतकालिकक्रियोपलक्षितैककर्तृकवृद्ध्यनुकूलव्यापाराभिन्नो व्यापारः" इति बोधः ॥ ननु प्रत्याहाराश्रयणे सम्पदेरपि मध्यपतितत्वेनानुप्रयोगापत्तिरित्याशङ्क्य समाधत्ते–**सम्पदिस्त्विति । अनन्वितार्थत्वादिति** । सम्पदेर्हि सिद्धवस्तुनो योग्यरूपान्तरापत्तिरूपार्थकत्वादिति भावः । एवं चाम्प्रकृतीनां सम्पदेश्च क्रियाविशेषार्थत्वेनाभेदान्वयो न भवितुमर्हतीति हृदयम् ॥ २ आम्प्रत्ययान्तस्यात्मनेपदनिमित्तत्वाभावादाह–**अतद्गुण इति** ॥ ३ एवमप्राप्तस्य विधानेऽपि प्राप्तस्य निवारणमनेनैव सूत्रेण न संभवतीत्यत आह–**इह पूर्ववदिति** पूर्वशब्देन पूर्वापादानकात्मनेपदभवनं लक्ष्यते तदाह–**पूर्ववदेवेति** ॥ "**आम्प्रत्ययवत्**" इति सूत्रे न प्रत्याहारग्रहणम् "**अनुप्रयोगस्य**" इत्येव सिद्धे कृञ्ग्रहणसामर्थ्यात् ॥ 'अचः परस्मिन्' इत्यादाविव भावाभावयोरुभयोरतिदेशेनैवोपपत्त्यनुपपत्तिपरिहारसिद्धावपि 'पूर्ववत्' इत्यस्यानुवर्तनं भाष्य उपायान्तरकथनपरमेवेति दाधिमथाः ॥

संबध्यते। पूर्ववदेवात्मनेपदं नतु तद्विपरीतमिति। तेन कर्तृगेऽपि फले इन्दांचकारेत्यादौ न तङ्॥ **लिटस्तझयोरेशिरेच्। ३। ४। ८१॥** लिडादेशयोस्तझयोरेश् इरेच् एतौ स्तः॥ ऐकारोच्चारणं ज्ञापकम्--तङादेशानां टेरेत्वं नेति। तेन डारौरसां न॥ कृ ए इति स्थिते॥ **असंयोगाल्लिट्कित्। १। २। ५॥** असंयोगात्परोऽपिलिट्कित्स्यात्॥ 'क्ङिति चेति निषेधात् सार्वधातुकार्धधातुकयोरिति गुणो न। द्वित्वात्परत्वाद्यणि प्राप्ते--॥ **द्विर्वचनेऽचि। १। १। ५९॥** द्वित्वनिमित्तेऽचि परे अच आदेशो न स्याद् द्वित्वे कर्तव्ये॥ **उरत्। ७। ४। ६६॥** अभ्यासऋवर्णस्य अत्स्यात्प्रत्यये परे॥ रपत्वम्॥ हलादिः शेषः॥ प्रत्यये किम्? वव्रश्च॥ **कुहोश्चुः। ७। ४। ६२॥** अभ्यासकवर्गहकारयोश्चवर्गादेशः स्यात॥ एधांचक्रे। एधांचक्राते। एधांचक्रिरे॥ **एकाच उपदेशेऽनुदात्तात्। ७। २। १०॥** उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्धधातुकस्येट् न स्यात्॥ उपदेशे इत्युभयान्वयि॥ एकाच इति किम्? यङ्लुग्व्यावृत्तिर्यथा स्यात्॥ स्मरन्ति हि--'श्तिपा शपाऽनुबन्धेन

---

१ ननु "लिटस्तझयोरिशिरिच्" इत्येवमेव मात्रालाघवेन 'पठितव्यम्, पश्चाच्च 'टित आत्मनेपदानां टेरे" इत्यनेनैत्वं भावष्यत्येवेति किमेकारोच्चारणेनेत्यत आह-**एकारोच्चारणमिति**॥ ज्ञाप्यस्वरूपमाह-**तङादेशानां टेरेत्वं न इतीति**। तङः स्थाने ये आदेशास्तेषां टेरेत्वं न भवतीत्यर्थः॥ ज्ञापनफलमाह-**तेनेति**। तङादेशानां टेरेत्वं नेत्यङ्गीकारेणेत्यर्थः॥ **डारौरसामिति**। 'एधिता, एधितारौ, एधितारः' इत्यादाविति भावः॥ वस्तुतः "एधतास् त" इति दशायां "लुटः प्रथमस्य" इति योगापेक्षया परत्वेन-"टित आत्मनेपदानाम्-" इति टेरेत्वे "पुनःप्रसङ्गविज्ञानात्सिद्धम्" इति परिभाषया डादिषु कृतेषु पुनरेत्वस्य प्रवृत्तिरेव न, "लक्ष्ये लक्षणं सकृदेव प्रवर्तते" इति परिभाषणादिति चिन्त्यमेतत्॥ गुरुचरणास्तु-'उदवोढाम्' इत्यादाविव स्थानिभेदेन लक्ष्यभेदाङ्गीकारेण प्राप्तं टेरेत्वं ज्ञापनेनैव वारणीयमित्याहुः॥ २ **प्रत्यये किमिति**। आसप्तमसमाप्तेरङ्गाधिकारमाश्रित्याङ्गेन प्रत्ययाक्षेपः किमर्थं इति प्रश्नः॥ उत्तरयति-**वव्रश्चेति**। आसप्तमसमाप्तेरङ्गाधिकारानङ्गीकारे प्रत्ययाक्षेपाभावे "**उरत्**" इति योगस्य परनिमित्तत्वाभावात् स्थानिवत्त्वाभावेन "**न संप्रसारणे**-" इति निषेधाप्रवृत्तौ पुनरपि वकारस्य "**लिट्यभ्यासस्य**" इति सम्प्रसारणं स्यादिति भावः॥ अत एवासप्तमसमाप्तेरङ्गाधिकारोऽभ्यधायि भगवता भाष्यकारेण "**प्रागभ्यासविकारेभ्योऽङ्गाधिकारः**" इति पक्षो "वव्रश्च" इत्यसिद्ध्या दूषितश्चेति बोध्यम्॥ **उभयान्वयीति**। देहलीदीपन्यायात् काकाक्षिन्यायाद्वेति भावः॥ एकाचि तदसम्बन्धे "बिभित्सति" इति सन इड्निषेधो न स्याद् 'सन्यङोः' इत्यस्य षष्ठीत्वेनानैमित्तिकद्वित्वोत्तरमेकाच्त्वाभावात्। अनुदात्ते च तदसम्बन्धे "कर्तुं हर्तुम्" इति तुमुनि "ञ्नित्यादिर्नित्यम्" इत्याद्युदात्तत्वे तुमुन इडागमापत्तिरनुदात्तत्वाभावेन निषेधाप्रवृत्तेरित्युभयत्रान्वय आवश्यक इति भावः॥ ४ ननूपदेशेऽनुदात्तस्यैकाच्त्वाव्यभिचारात् किं तेनेति पृच्छति-**एकाचः किमिति**। नच वधिव्यावृत्त्यर्थं तत्, तत्सामर्थ्येनोपदेशमात्रे एकाचो ग्रहणादिति वाच्यम्, आद्युदात्तनिपातनेन सिद्धेरित्याशयात्॥ नन्वेकाज्ग्रहणाभावे "जङ्घनिता इति यङ्लुगन्ते निषेधस्यादिति चेत् सत्यम्, कृतेऽप्येकाज्ग्रहणे उपदेशे एकाच्त्वस्य सत्त्वेन निषेधस्य दुर्वारत्वात्, एवं च व्यर्थमेकाज्ग्रहणं "श्तिपा शपा" इति निषेधं ज्ञापयति स्थालीपुलाकन्यायात्। अत एव वक्ष्यति-**एतच्चेति**। न च "श्र्युकः किति" इति सूत्रेऽनुवृत्त्यर्थमेकाज्ग्रहणमिति वाच्यम्, लक्ष्यानुसारादेवोक्तनिषेधज्ञापनात्। **यङ्लुग्व्यावृत्तिरिति**। यङ्लुको निषेधनिमित्तत्वव्यावृत्तिरित्यर्थः॥ इदमेव कथमत आह-**स्मरन्तीति**।

निर्दिष्टं यद्गणेन च । यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १ ॥ 'इति ॥ एतच्चेहैवैकाज्ग्रहणेन ज्ञाप्यते ॥ अच इत्येवैकत्वविवक्षया तद्वतो ग्रहणेन च सिद्धे एकग्रहणसामर्थ्यादनेकाच्कोपदेशो व्यावर्त्यते । तेन वधेर्हन्त्युपदेशे एकाचोऽपि न निषेधः । आदेशोपदेशेऽनेकाच्त्वात् ॥ अनुदात्ताश्चानुपदमेव संग्रहीष्यन्ते ॥ एधांचक्रुषे । एधांचक्राथे ॥ **इणः षीध्वंलुङ्लिटां धोऽङ्गात् । ८ । ३ । ७८ ।** इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य मूर्धन्यः स्यात् ॥ एधांचकृढ्वे ॥ एधांचक्रे । एधांचकृवहे । एधांचकृमहे ॥ एधांबभूव ॥ अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न । अन्यथा हि कृसूचानुप्रयुज्यत इति कृभ्वितीति वा ब्रूयात् ॥ **अत आदेः । ७ । ४ । ७० ॥** अभ्यासस्यादेरतो दीर्घः स्यात् । पररूपापवादः ॥ एधामास । एधामासतुरित्यादि ॥ एधिता । एधितारौ । एधितारः ॥ एधितासे ॥ एधितासाथे ॥ **धि च । ८ । २ । २५ ॥** धादौ प्रत्यये परे सलोपः स्यात् ॥ एधिताध्वे ॥ **ह एति । ७ । ४ । ५२ ॥** तासस्त्योः सस्य हः स्यादेति परे ॥ एधिताहे । एधितास्वहे । एधितास्महे ॥ एधिष्यते । एधिष्येते । एधिष्यन्ते ॥ एधिष्यसे । एधिष्येथे । एधिष्यध्वे ॥ एधिष्ये । एधिष्यावहे । एधिष्यामहे ॥

---

१ **एतच्चेति** । श्तिपा शपेति वचनञ्च ॥ **इहैवेति** । "एकाच्" इति सूत्र एव । **एकाज्ग्रहणेनेति** । तदर्थैकैकाच इति पदेनेत्यर्थः ॥ एतेन "यदि एकाच्पदघटितत्वेन निषेधसूत्रस्य यङ्लुक्यप्रवृत्तिः फलं तर्हि "**अच इत्येव**" इत्युत्तरग्रन्थासङ्गतिः, एकग्रहणाभावेऽस्य सूत्रस्यैकाच्पदघटितत्वाभावादित्यपास्तम् ॥ २ ननु वधादावाद्युदात्तनिपातनेऽपि न सिद्ध्यति हन्त्युपदेशे तस्यानुदात्तत्वाक्षतेः ॥ न च तत्सामर्थ्यं, गौरवादत आह-**अच इत्येवेति** । 'अचः' इत्यत्र ङसर्थैकत्वस्य "अनयोः पूलयोः कटं कुरु" इत्यादाविव विवक्षितत्वादेकत्वस्य संख्यात्वेन संख्येयविशेषणत्वाल्लक्ष्यानुरोधेन मत्वर्थलक्षणया एकाज्वतो ग्रहणेन च सिद्धे एकग्रहणं व्यर्थमित्याक्षेपः ॥ उपदेशत्वावच्छेदेनैकाचो ग्रहणमिति बोधनाय तदित्युत्तरम् ॥ तेन "अवधीत्" इत्यादौ निषेधो न, स्थान्युपदेशे एकाच्त्वेऽपि आदेशोपदेशेऽनेकाच्त्वात् । न च "**अर्धं नपुंसकम्**" इति नपुंसकग्रहणेन "**आकडारात्**" इति सूत्रे एकग्रहणेन च "**सूत्रे लिङ्गवचनमतन्त्रम्**" इति ज्ञापनेन प्रकृते कथं निर्वाह इति वाच्यम्, साक्षादुपदेशग्रहणेन चरितार्थ्ये स्थान्युपदेशग्रहणे मानाभावात् । इति प्राञ्चः ॥ नवीनास्तु "**उत्तरार्थमेकाज्ग्रहणम्**" इति वदता भाष्यकारेण अत्र सूत्रे एकाज्ग्रहणस्यानावश्यकत्वं ध्वनितम् । न चोत्तरार्थस्यापि "इह किंचित् त्रपो" इति वदता भाष्येणेह करणस्य श्तिपेति ज्ञापनेन साफल्यमिति वाच्यम्, "**इह च वध्यर्थम्**" इति भाष्यकारेणैवोक्तत्वात् । न च वधादेशो हन्तिरूप उपदेशे एकाजेवेति वाच्यम्, साक्षादुपदेशसंभवे स्थान्युपदेशग्रहणे मानाभावात् । न च "श्तिपा शपा" इति निषेधं विना यङ्लुकि कथं तत्तत्कार्याप्रवृत्तिरिति वाच्यम्, यङ्लुकश्छान्दसत्वेन छन्दसि दृष्टस्यैवानुविधानात् । "चर्करीतं च" इत्यादौ पाठाच्चेति दिक् ॥ ३ ननु "एधामास" इत्यत्र "अस्तेर्भूः" इति वक्ष्यमाणसूत्रेणास्तेः स्थाने भूभावः कथं न भवतीति शङ्कायामाह-**अनुप्रयोगेति** ॥ **अन्यथेति** । भूभावप्रवृत्त्यङ्गीकारे । "कृश्चानुप्रयुज्यते लिटि" इत्येवं सूत्रं लाघवात् पाणिनिर्ब्रूयात् । **वेति** । अथवा । "कृभ्वनुप्रयुज्यते लिटि" इति सूत्रं ब्रूयात् । अस्मिन् पक्षे प्रक्रियालाघवमपि वर्तते । तेन पाणिनिना तथा सूत्रं न कृतमतो ज्ञायते भूभावस्तस्य नाभिप्रेत इतीति भावः ॥ ४ **पररूपापवाद इति** । पररूपपदमेकादेशोपलक्षणम्, "आनृजे" इत्यादौ गुणस्यैव प्राप्तेः । अभ्यासविकारेषु बाध्यबाधकभावाभावेन पूर्वोपस्थितहलादिः शेषोत्तरं दीर्घ इति भावः ॥ यथास्य नामधातुस्थग्रन्थेन न विरोधस्तथा तत्रैव निरूपयिष्यते ॥ ५ **धादौ प्रत्यये इति** । तेन "पयो धावति" इत्यादौ सकारलोपो न । अत्र भाष्यकृता "**सङि इति वक्तव्यम्**" इत्युक्तम् । सङ् च सनः सकारमारभ्य महिङो ङकारेण प्रत्याहाराश्रयणात् प्रत्यय एवेति "प्रत्यय" इत्यस्य लाभः ॥

**आमेतः । ३ । ४ । ९० ॥** लोट एकारस्याम् स्यात् ॥ एधताम् । एधेताम् । एधन्ताम् ॥ **सवाभ्यां वामौ । ३ । ४ । ९१ ॥** सवाभ्यां परस्य लोडेतः क्रमाद्व अम् एतौ स्तः ॥ एधस्व। एधेथाम् । एधध्वम् ॥ **एत ऐ । ३ । ४ । ९३ ॥** लोडुत्तमस्य एत ऐ स्यात् । आमोऽपवादः॥ एधै । एधावहै । एधामहै ॥ **आडजादीनाम् । ६ । ४ । १०२ ॥** अजादीनामाट् स्याल्लुङादिषु । **अटोऽपवादः** ॥ आटश्च ॥ ऐधत । ऐधेताम् । ऐधन्त ॥ ऐधथाः । ऐधेथाम् । ऐधध्वम् ॥ ऐधे । ऐधावहि । ऐधामहि ॥ **लिङः सीयुट् ।३।४।१०२ ॥** सलोपः । एधेत । एधेयाताम् ॥ **झस्य रन् । ३ । ४ । १०५ ॥** लिङो झस्य रन् स्यात् । एधेरन् ॥एधेथाः।एधेयाथाम् । एधेध्वम् ॥ **इटोऽत् । ३ । ४ । १०६ ॥** लिङादेशस्येटोऽत्स्यात् ॥ एधेय । एधेवहि। एधेमहि ॥ आशीर्लिङि आर्धधातुकत्वात् लिङः सलोपो न। सीयुट्सुटोः प्रत्ययावयवत्वात्षत्वम्। एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् ॥ एधिषीष्ठाः । एधिषीयास्थाम् ।एधिषीध्वम्॥एधिषीय ।एधिषीवहि । एधिषीमहि ॥ ऐधिष्ट। ऐधिषाताम् ॥ **आत्मनेपदेष्वनतः । ७ । १ । ५॥** अनकारात्परस्यात्मनेपदेषु झस्य अत् इत्यादेशः स्यात् ॥ ऐधिषत ॥ ऐधिष्ठाः । ऐधिषाथाम् । इणः षीध्वंलुङ्लिटां धोऽङ्गात् ॥ ऐधिढ्वम् ॥ [ इङ्ग्नि एव इणिह गृह्यते इति मते तु ऐधिध्वम् । ] ढधयोर्वस्य मस्य च द्वित्वविकल्पात्षोडश रूपाणि । ऐधिषि । ऐधिष्वहि । ऐधिष्महि ॥ ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त ॥ ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् ॥ ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि ॥ उदात्तत्वाद्वलादेरिट् ॥ प्रसङ्गादनुदात्ताः संगृह्यन्ते ॥

---

१ **एधिषीध्वमिति** । इटो धंशब्दभक्ततयाङ्गस्येणन्तत्वाभावेन मूर्धन्याभावः ॥ २ **ऐधिढ्वमिति** । " ऐध् इस् ध्वम् " इत्यत्र ध्वमो लुङो वा प्रत्ययस्य एधधातोर्विहितत्वेन एधादिसमुदायः " ऐधिस् " इति ध्वमि प्रत्यये परे अङ्गसंज्ञको जात इति " धि च " इति सलोपोत्तरमेकदेशविकृतन्यायेन " ऐधि " इति भागस्याङ्गत्वं वर्तत एवेति ढत्व भवत्येवेति बोध्यम् ॥ वेदाङ्गप्रकाशकर्त्रा ( दयानन्देन ) तु " सलोपस्य स्थानिवत्त्वेनाङ्गस्येणन्तत्वव्याघातान्नात्र ढत्वप्राप्तिः "-इत्युक्तम् । तत्तु व्याकरणरहस्यानभिज्ञत्वसूचकम्, " स्थानिवत्" इति सूत्रेण स्थानिवद्भावविषये आदेशप्रयुक्तवारणे तु " नायकः " इत्यादावायाद्यादेशानुपपत्तिरिति भूयानुपप्लवः स्यात् । तस्मादत्र स्थानिवद्भावेनापि आदेशप्रयुक्तकार्यस्यावारणाद् इणन्तत्वनिमित्तं ढत्वं भवत्येवेति बोध्यम् ॥ इति दाधिमथाः ॥ ३ **इति मते त्विति** । " **विभाषेटः** " इत्युत्तरसूत्रे इणः परस्येटो ग्रहणेन तत्रानुवर्तमानम् " इण " इति पदमवश्यमितिरिक्तपरमिति **स्वीकार्यमिति** " **इणः षीध्वम्** " इति पूर्वसूत्रेऽपि तथैव युक्तमिति तेषां भावः ॥ अत्रारुचिर्बीजं तु भाष्येऽस्यादर्शनम् । सूत्रान्तरस्थेन गोबलीवर्दन्यायग्रहणे च न दृढतरं मानम् । एतच्च तुना सूचितम् ॥ ४ **षोडश रूपाणीति** । मतभेदेन ढत्वधत्वयोर्विकल्पाद् द्वे रूपे । उभयत्रापि " अनचि च " इति ढकारधकारयोर्द्वित्वे च चत्वारि रूपाणि । चतुर्ष्वपि " मय इति पञ्चमी यण इति षष्ठी " इति पक्षे "**यणो मयो द्वे वाच्ये** " इति वार्तिकेन वकारस्य द्वित्वे अष्टौ रूपाणि । अष्टास्वपि " अनचि च " इति मकारस्य द्वित्वे उक्ता संख्येतिभावः ॥ ५ **प्रसङ्गादिति** । **प्रसङ्गत्वं** चानन्तराभिधानप्रयोजकशिष्यजिज्ञासाजनकज्ञानविषयत्वम् ॥ **संगृह्यन्ते इति** । मयेति शेषः । **संग्रहत्वं** नाम भिन्नस्थलीयवस्तुजातानामेकत्र करणम् ॥

ऊदॄदन्तैर्यौति–रु–क्ष्णु,–शीङ्–स्नु–नु–क्षु–श्वि–डीङ्–श्रिभिः ॥
वृङ्–वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥ १ ॥
शक्ल–पच्–मुच्–रिच्–वच्–विच्–सिच्–प्रच्छि–त्यज्–निजिर्–भजः ॥
भञ्ज्–भुज्–भ्रस्ज्–मस्जि–यज्–युज्–रुज्,–रञ्ज्–विजिर्–स्वञ्जि–सञ्ज–सृजः ॥ २ ॥
अद्–क्षुद्–खिद्–छिद्–तुदि–नुदः, पद्य–भिद्–विद्यति–र्विनद् ॥
शद्–सदी स्विद्यति स्कन्दि–हदी,क्रुध् क्षुधि–बुध्यती ॥ ३ ॥
बन्धि–र्युधि–रुधी राधि,–र्व्यध्–शुधः साधि—सिध्यती ॥
मन्य–हन्नाप्–क्षिप्–छुपि–तप्,–तिप–स्तृप्यति–दृप्यती ॥ ४ ॥
लिप्–लुप्–वप्–शप्–स्वप्–सृपि–यभ्–रभ–लभ् गम्–नम्–यमो रमिः ॥
क्रुशि–र्दंशि–दिशी दृश्–मृश्, रिश्–रुश्–लिश्–विश्–स्पृशः कृषिः ॥ ५ ॥
त्विष्–तुष्–द्विष्–दुष्–पुष्य–पिष्–विष्–शिष्–शुष्–श्लिष्यतयो घसिः ॥
वसति–र्दह्–दिहि दुहो, नह्–मिह्–रुह्–लिह् वहिस्तथा ॥ ६ ॥
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ॥
तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥ ७ ॥
तृप्–दृपी तौ वारयितुं श्यना निर्देश आदृतः ॥

किं च ॥

स्विद्यपद्यौ सिध्यबुध्यौ, मन्यपुष्यश्लिषः श्यना ॥ ८ ॥
वसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये ॥
णिजिर् विजिर् शक्ल इति, सानुबन्धा अमी तथा ॥ ९ ॥

---

१ **ऊदृदन्तैरिति** । **अजन्तेषु**=अच् अन्ते=अवसाने, येषान्ते अजन्तास्तेषु, **एकाचो** धातवः, एकोऽच्, येषु तादृशा धातवः, **निहताः**=अनुदात्ताः, **स्मृताः**=कथिताः । नन्वेवं भूदॄप्रभृतीनामप्यनुदात्तत्वापत्तिरित्यत आह–**ऊदृदन्तैरिति** ॥ युप्रभृतीनामनुदात्तत्वनिरासायाह–**यौतीत्यादि** । यौत्यादिभिर्विनेत्यर्थः ॥ वृङ्वृञो-स्तर्ह्यनुदात्तत्वापत्तिरत आह—**वृङ्वृञ्भ्याञ्च विनेति** । कारिकोक्ताः सर्वे सेटः, अन्ये एकाचोऽनुदात्ताइति भावः ॥ २ एवमजन्तेषु व्यवस्थां विधाय हलन्तेषु व्यवस्थां चिकीर्षुः कादिक्रमेण हलन्तान् धातून् निर्दिशति-“**शक्ल** ” इत्यादिना “**वहिस्तथा**” इत्यन्तेन ॥ ३ उपसंहरति—**अनुदात्ता इति** । हलन्तेषु धातुषु अनुदात्ता धातवो द्व्यधिकं शतम्, बोध्या इति शेषः ॥ ४ ननु यान्तेषु “ तृप्यतिदृप्यती” इति श्यना निर्देशेन किम्, इतरव्यावर्त्याभावादिति शङ्कायामाह–**तुदादाविति** । यौ तृप्दृपी तुदादौ चुरादिषु च मतभेदेन स्थितौ, तौ= तृप्दृपौ, वारयितुम्=निषेधयितुम्, श्यना निर्देश आदृत इत्यन्वयः ॥ तृप्दृपी मतभेदेन स्थितौ, चुरादौ तु दृपिर्मतभेदेन स्थित इति विवेकः ॥ ५ अन्येषामपि तत्तद्विकरणनिर्देशस्य प्रयोजनं निर्दिशन्नाह-**किंच–स्विद्यपद्याविति** । स्विद्यपद्यौ श्यना निर्दिष्टौ, “**अन्यनिवृत्तये**” इत्यस्य प्रत्येकं सम्बन्धः । सिध्यबुध्यौ श्यना निर्दिष्टौ, मन्यपुष्यश्लिषः श्यना निर्दिष्टाः, वसिः शपा निर्दिष्टः, यौतिर्लुका निर्दिष्टः ॥ कस्यै सिद्ध्यै ? **अन्यनिवृत्तये** । अन्येषां व्यावृत्तये ॥ “ णिजिर्विजिर् शक्ल ” अमी त्रयः सानुबन्धाः अनुबन्धयुक्ताः पठिताः, किमर्थं तत्राह–**तथेति** । अन्यनिवृत्तये इत्यर्थः ॥

विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते ।
व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ॥ १० ॥
रञ्जि–मस्जी अदि-पदी, तुद् क्षुध् शुषि–पुषी शिषिः ॥
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसंमतेः ॥ ११ ॥

**स्पर्ध** संघर्षे । संघर्षः पराभिभवेच्छा । धात्वर्थेनोपसंग्रहादकर्मकः । स्पर्धते ॥ **शर्पूर्वाः खयः ।७।४।६१॥** अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते । हलादिः शेष इत्यस्यापवादः । पस्पर्धे । स्पर्धिता । स्पर्धिष्यते । स्पर्धताम् । अस्पर्धत । स्पर्धेत । स्पर्धिषीष्ट । अस्पर्धिष्ट । अस्पर्धिष्यत ॥ ३ ॥ **गाधृ** प्रतिष्ठालिप्सयोर्ग्रन्थे च । गाधते । जगाधे ॥ ४ ॥ **बाधृ** लोडने । लोडनं प्रतिघातः । बाधते ॥ ५ ॥ **नाथृ नाधृ** याच्ञोपतापैश्वर्याशीःषु ॥ **आशिषि नाथ इति वाच्यम्** * ॥ अस्याशिष्येवात्मनेपदं स्यात् ॥ नाथते । अन्यत्र नाथति ॥ ६ ॥ नाधते ॥ ७ ॥ **दध** धारणे । दधते ॥ **अत एकहल्मध्येऽनादेशादेर्लिटि ।६।४।१२०॥** लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्याकारस्य एकारः स्यादभ्यासलोपश्च किति लिटि ॥ **थलि च सेटि ।६।४।१२१॥** प्रागुक्तं स्यात् ॥ आदेशश्चेह वैरू-

---

१ विन्दतिरिति । चान्द्रदौर्गादेः ( मते इति शेषः ) विन्दतिः=विद्लृ लाभे इति धातुः, इष्टः-अभीष्टः, अनिट्त्वेनेति शेषः ॥ **भाष्येऽपि दृश्यते**=अवलोक्यते ॥ कोऽन्यथा ब्रवीति येनैवमुच्यते ' चान्द्रदौर्गादेः' रिति, तत्राह–**व्याघ्रभूत्यादयस्त्विति** । तुशब्दः पूर्वपक्षव्यावर्तकोऽरुचौ वा । व्याघ्रभूत्यादयस्तु एनम्=विन्दतिधातुम्, इह=अनिट्कारिकायाम्, न पेठुः=न पठितवन्तः ॥ इति स्थितम्, **तेषां ग्रन्थे** इति शेषः॥ २ " **रञ्जि** " इत्यादि । रञ्जिप्रभृतयो नव धातवो **भाष्यानुक्ताः**=भाष्ये न कथिताः ॥ ननु भाष्यानुक्तस्य साधुताया नियामकत्वाभावात् कथमिह त्वया ते नव पठिता इति चेत्, तत्राह–**इहेति** । व्याघ्रभूत्यादिसम्मतेः, इह=अनिट्कारिकायाम्, **उक्ताः**=कथिताः, **मयेति** शेषः ॥ ३ **अकर्मक इति** । "देवदत्तो यज्ञदत्तं स्पर्धते " इत्यत्र स्पर्धापूर्वके शब्दने वृत्तिर्बोध्या ॥ ४ **शर्पूर्वा इति** । अत्र " आदिः" इत्यनुवर्तते । "शेषः " इति च, शर् चात्र धात्वादिभूत एव गृह्यते । तेन " वव्रश्च " इत्यत्र चस्य न शेषः ॥ ५ **गाधृ इति** । ऋकारः " अजगाधत " इत्यत्र " नाग्लोपि " इति निषेधार्थः ॥ एवं सर्वत्रोन्नेयम् । स्थापना तत्स्थापनं वा **प्रतिष्ठा** । लब्धुमिच्छा **लिप्सा** । एकत्र स्थापनं सन्दर्भो वा **ग्रन्थः** । तत्राद्येऽकर्मकः । इतरयोः सकर्मकः ॥ ६ " **नाथृ नाधृ** " इति "उपतापो रोगः " इति वृत्तौ । "उपघात" इति तरङ्गिण्याम् । थान्तस्य नाथतेर्धान्तकाण्डे पाठोऽर्थसाम्यात् ॥ ७ अनुदात्तत्त्वादेव सिद्धे नियमार्थं वार्तिकमित्याह–**आशिष्येवेति** ॥ ८ एकशब्दोऽसहायवाची, द्विवचनान्तेन समासः । द्वयोरेव मध्यसंभवादित्याह–**असंयुक्तेत्यादि** । नेमिथ, सेहे, चकणतुरित्यत्रानुपपत्त्यापत्तिपरिहाराय " लिटि" इत्यावर्तते । तत्रैकमादेशविशेषणम्, एकदेशान्वयेऽपि सौत्रत्वाद् वृत्तिस्तदाह–**लिण्निमित्तेति** । ' तन्निमित्तादेशादिभिन्नम् ' इत्यर्थः । द्वितीये ' गमहन-' इत्यतोऽनुवृत्ते ' क्ङिति ' इत्यन्वितेऽपि लिटः कित्त्वमेव संभवतीत्याशयेनाह: **किति लिटीति** ॥ ९ ननु " देधे " इत्यादौ अभ्यासादेर्दकारस्य जश्त्वेन " प्रकृतिजशां प्रकृतिजशः " इत्युक्तत्वाद् दत्वेऽनादेशादित्वाभावेनैत्त्वाभ्यासलोपौ न स्याताम् ॥ न च " पूर्वत्रासिद्धम् " इत्यनेन " अभ्यासे चर्च " इत्यस्य " अत एकहल्मध्ये " इति सूत्रं प्रत्यसिद्धत्वप्रतिपादनेनैत्त्वाभ्यासलोपौ स्त एवेति वाच्यम्, "तॄफलभजत्रपश्च " इत्यत्र फलभजग्रहणेन एत्त्वविधिं प्रति तत्सूत्रस्य सिद्धत्वज्ञापनात्, **इति शङ्कायामाह-आदेशश्चेहेति** ॥ तत्र ज्ञापकमाह–**शसिदद्योरिति** । यद्यत्र सामान्यतो ग्रहणं पाणिनेरभिमतमभविष्यत्

ष्यसंपादक एवाश्रीयते । शसिदद्योः प्रतिषेधवचनाज्ज्ञापकात् । तेन प्रकृतिजश्चरां तेषु सत्स्वपि एत्वाभ्यासलोपौ स्त एव । देधे । देधाते । देधिरे ॥ अतः किम् ? दिदिवतुः ॥ तपरः किम् ? ररासे ॥ एकेत्यादि किम् ? तत्सरतुः ॥ अनादेशादेः किम् ? चकणतुः ॥ लिटा आदेशविशेषणादिह स्यादेव । नेमिथ । सेहे ॥ ८ ॥ **स्कुदि** आप्रवणे । आप्रवणमुत्प्लवनमुद्धरणं च ॥ **इदितो नुम् धातोः । ७ । १ । ५८ ॥** स्कुन्दते । चुस्कुन्दे ॥ ९ ॥ **श्विदि** श्वैत्ये । अकर्मकः । श्विन्दते । शिश्विन्दे ॥ १० ॥ **वदि** अभिवादनस्तुत्योः । वन्दते । ववन्दे ॥ ११ ॥ **भदि** कल्याणे सुखे च । भन्दते । बभन्दे ॥ १२ ॥ **मदि** स्तुतिमोदमदस्वप्नकान्तिगतिषु । मन्दते । ममन्दे ॥ १३ ॥ **स्पदि** किंचिच्चलने । स्पन्दते । पस्पन्दे ॥ १४ ॥ **क्लिदि** परिदेवने । शोक इत्यर्थः ॥ सकर्मकः । क्लिन्दते चैत्रम् । चिक्लिन्दे ॥ १५ ॥ **मुद** हर्षे । मोदते ॥ १६ ॥ **दद** दाने । ददते ॥ **न शसददवादिगुणानाम् । ६ । ४ । १२६ ॥** शसेर्ददेर्वकारादीनां गुणशब्देन भावितस्य च योऽकारस्तस्य एत्वाभ्यासलोपौ न ॥ ददे । ददाते । ददिरे ॥ १७ ॥ **ष्वद स्वर्द** आस्वादने । अयमनुभवे सकर्मकः । रुचावकर्मकः ॥ **धा-**

---

–तदा शसिदद्योरपि " अभ्यासे चर्च " इति चर्त्वेनादेशादित्वादेत्वाभ्यासलोपौ नैव भविष्यत इति शसिदद्योर्ग्रहणं नाकरिष्यदिति भावः ॥ तथा च वार्तिकम्–" **प्रथमतृतीयादीनामादेशादित्वादेत्वाभावः** " इति शङ्कायाम् " **नवा शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेदे चर्त्वादिज्ञानस्य** इति " । **शसिदद्योः** इति द्विवचनेन " **अभ्यासे चर्च** " इत्यत्र "**झशां जशः खगां चरः**" इत्येव पाठो युक्तः अत एव "**प्रकृतिचरां प्रकृतिचरः**" इत्येवं भाष्योक्तमत्राप्यग्रे वक्ष्यमाणं स्थानिषु चर्पदोपादानं सङ्गच्छते । "**खयां चरः** " इति पाठे तु शस्धातोर्ज्ञापकत्वकथनमसङ्गतं स्यादिति विभावयन्तु सुधियः ॥

१ **एकेत्यादि किमिति** । "आटतुः" इत्यादौ "**हल्मध्ये** इत्येतावतापि वारणसम्भवादिति प्रश्नः ॥ २ **अनादेशादेः किमिति** । ननु तद्ग्रहणाभावे ' फेलुः–भेजुः " इत्यादावप्यनेनैवेत्त्वाभ्यासलोपयोः सिद्धयोः "**तॄफलभजत्रपश्च**" इति सूत्रे फलभजग्रहणस्य ' **आदेशादेश्चेदेत्त्वाभ्यासलोपौ तर्हि फलिभज्योरेव** ' इति नियमेन "चकणतुः" इत्यादौ दोषाभावात् तद्ग्रहणं निष्फलमेवेति चेन्न, सति तथा नियमे " नेमिथ, सेहे " इत्यादावप्येत्त्वाभ्यासलोपानुपपत्तेः ॥ ३ **उत्प्लवनम्**–उत्प्लुत्य गमनम् ॥ ४ **इदित इति** । **इदित** इति कर्मधारयेण धातोर्विशेषणम्, तेन "**इदिदन्तस्य धातोर्नुम् स्यात** " इति सूत्रार्थात् चक्षिङादौ न दोषः ॥ ५ ॥ **अकर्मक इति** । **श्विन्दते** इत्यस्य "श्वेतो भवति" इति विवरणात् ॥ ६ **अभिवादनम्**=नतितत्पूर्वकमाशिषां वाचनं च ॥ ७ **कल्याणम्**=मङ्गलम् ॥ **सुखम्**=आत्मगुणः ॥ ८ **मोदः**=हर्षः **मदः**=गर्वः । **स्वप्नः**=आलस्यम् । **गतिः**=गमनम् । यत्रानेकेऽर्था निर्दिष्टास्तत्र गतिशब्देन गमनरूपस्यैकस्यैवार्थस्य बोधः "वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु" इत्यत्र गतेः पृथक् ज्ञानग्रहणात् । यत्र त्वेक एव गतिशब्द उपात्तो यथा 'षिध गत्याम्' इति तत्र ज्ञानगमनप्राप्तिरूपाणां त्रयाणां बोध इति बोध्यम् ॥ स्तुतिगतिभ्यामन्यत्राकर्मकः ॥ ९ **स्पदि इति** । **चलनम्**=कम्पनम् । अकर्मकः ॥ १० **दद दाने इति** । स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादनं **दानम्** ॥ ११ " **न शस** " इति । गुणशब्दोऽत्र नादिङ्मात्रपरः, शसिददिग्रहणवैयर्थ्यापत्तेः ॥ व्यपदेशिवद्भावेन गुणावयवत्वसंभवात् । अतो गुणशब्देन भावितपरः स इति व्याचष्टे–**गुणशब्देनेति** ॥ १२ **आस्वादनम्**=अनुभवः, रुचिश्च , **सकर्मक इति** । 'स्वदन्ति देवा उभयानि हव्या' इति दर्शनात् । छान्दसं परस्मैपदम् ॥ **अकर्मक इति** । ' अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारः ' इति श्रीहर्षप्रयोगे तथा दर्शनात् । " **अयम्** " इति प्रत्येकाभिप्रायेणैकवचनम् । अन्यथा " **इमौ** " इति वक्तव्यं स्यात् ॥

**स्वादेः षः सः। ६। १। ६४॥** धातोरादेः षस्य सः स्यात्। सात्पदाद्योरिति षत्वनिषेधः। अनुष्वदते। सस्वदे॥ १८॥ स्वर्दते। सस्वर्दे॥ १९॥ **उर्द** माने क्रीडायां च॥ **उपधायां च। ८। २। ७८॥** धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात्॥ ऊर्दते। ऊर्दांचक्रे॥ २०॥ **कुर्द खुर्द गुर्द गुद** क्रीडायामेव। कूर्दते। चुकूर्दे॥ २१॥ खूर्दते॥ २२॥ गूर्दते २३॥ गोदते। जुगुदे॥ २४॥ **षूद** क्षरणे। सूदते। सुषूदे॥ **सेक्-सृप्-सृ-स्तृ-सृज्-स्तृ-स्त्याऽन्ये** दन्त्याजन्तसादयः। एकाचः षोपदेशाः ष्वष्क,-स्विद-स्वद-स्वञ्ज-स्वप-स्मिङः॥ १॥ दन्त्यः केवलदन्त्यो, न तु दन्तोष्ठजोऽपि ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञापकात्॥ २५॥ **ह्लाद** अव्यक्ते शब्दे। ह्लादते। जह्लादे॥ ॥ २६॥ **ह्लादी** सुखे च। चादव्यक्ते शब्दे। ह्लादते॥ २७॥ **स्वाद** आस्वादने। स्वादते॥ २८॥ **पर्द** कुत्सिते शब्दे। गुदरवे इत्यर्थः। पर्दते॥ २९॥ **यती** प्रयत्ने। यतते। येते॥ ३०॥ **युतृ जतृ** भासने। योतते। युयुते॥ ३१॥ जोतते। जुजुते॥ ३२॥ **विथृ वेथृ** याचने। विविथे॥ ३३॥ विवेथे॥ ३४॥ **श्रथि** शैथिल्ये॥ श्रन्थते॥ ३५॥ **ग्रथि** कौटिल्ये। ग्रन्थते॥ ३६॥ **कत्थं** श्लाघायाम्। कत्थते॥ ३७॥ एधादयोऽनुदात्तेतो गताः॥ **अथाष्टात्रिंशत्तवर्गीयान्ताः परस्मैपदिनः॥ अतं** सातत्यगमने। अतति॥ अत आदेः॥ आत। आततुः। आतुः। लुङि आतिस् ई त् इति स्थिते॥ **इट ईटि। ८। २। २८॥** इटः परस्य सस्य लोपः स्यादीटि परे॥ **सिज्लोप एकादेशे सिद्धो वाच्यः *॥** आतीत्। आतिष्टाम्। आतिषुः॥ **वदव्रजहलन्तस्याचः।**

---

१ **उर्द इति।** इह **मानं** मुखम्। चकारादास्वादने। क्रीडायामकर्मकः॥ २ **गुदेति।** पृथग् धातुरित्याह-**गोदते इति॥** ३ **षूद इति। क्षरणं** निस्सारणम्। अकर्मकः॥ ४ पाणिनिना कृतस्य षोपदेशपाठस्येदानीं लेखादिप्रमादेन परिभ्रष्टत्वात् षोपदेशत्वाषोपदेशत्वज्ञानं दुर्विज्ञेयमित्याकाङ्क्षायाम् लक्षणमुखेन तान् व्यवस्थापयति-**सेगित्यादिना।** दन्त्यश्च अच्च दन्त्याचौ तौ अन्ते यस्य स दन्त्याजन्तः, दन्त्याजन्तश्चासौ सश्च इति दन्त्याजन्तसः, दन्त्याजन्तस आदिर्येषां धातूनां ते दन्त्याजन्तसादयः। दन्त्यान्तसादयः, अजन्तसादयश्चेत्यर्थः। एकाचः-एकोऽच् येषु, ते धातवः षोपदेशाः स्युः। कथंभूता एकाचः सेकप्रभृतिभ्यः अन्ये-भिन्नाः। इमे तु सोपदेशा इत्यर्थः। पूर्वोक्तलक्षणेन केषांचिदसंग्रहादाह-**ष्वष्केत्यादि।** इमेऽपि षोपदेशा इत्यर्थः॥ ननु कैयटसंमते वकारस्य दन्त्यत्वे "**स्वाद आस्वादने**" इत्यादीनामपि षोपदेशत्वापत्तिर्दन्त्याजन्तसादित्वादिति शङ्कायामाह-**दन्त्य इति।** ५ **ह्लादेति। अव्यक्तशब्दोऽ**स्फुटवर्णानुपूर्वीको वाय्वादिघोषः॥ ६ "**ह्लादी**" **इति।** ईकारः 'प्रह्लन्न' इत्यत्र "श्वीदितो निष्ठायाम्" इतीण्निषेधार्थः एवं सर्वत्र ज्ञेयम्॥ ७ **पर्दति।** संयोगान्तेषु उर्दादिष्वयं न पठितः। शब्दविशेषार्थेन ह्लादादिनापि साम्यात्। स्वादधातुस्तु आकारवत्संयोगादित्वेन ह्लाद्यनुरोधेन मध्ये पठितः इति बोध्यम्॥ ८ **ग्रथि इति। कौटिल्यं** शाठ्यं वक्रता वा॥ ९ **कत्थेति।** अविद्यमानगुणसम्बन्धख्यापनं **श्लाघा॥** १० **अतेति। सातत्यगमनं** सन्ततगमनम्॥ ११ ननु "आति ईत्" इति दशायाम् "इट ईटि" इति विहितसलोपस्य त्रिपादीस्थत्वेन सपादसप्ताध्यायीस्थस्य "अकः सवर्णे" इति सूत्रस्य दृष्ट्याऽसिद्धत्वेन सवर्णाच्परत्वाभावेन दीर्घो न स्यादत आह-**सिज्लोप इति।** एकादेशे कर्तव्ये सिचो लोपः सिद्धो वक्तव्य इति वार्तिकार्थः॥

।७।२।३॥ वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु ॥ इति प्राप्ते–॥ **नेटि** । ७ । २ । ४ ॥ इडादौ सिचि प्रागुक्तं न स्यात ॥ मा भवानतीत् । अतिष्टाम् । अतिषुः ॥ १ ॥ **चितीँ** संज्ञाने । चेतति । चिचेत । अचेतीत् । अचेतिष्टाम् । अचेतिषुः ॥ २ ॥ **च्युतिर्** * ॥ आसेचने । आसेचनमार्द्रीकरणम् । आङीषदर्थेऽभिव्याप्तौ च । **इर् इत्संज्ञा वाच्या** * ॥ च्योतति । चुच्योत ॥ **इरितो वा** । ३ । १ । ५७ ॥ इरितो धातोश्च्लेरङ् वा स्यात्परस्मैपदे परे । अच्युतत् । अच्योतीत् ॥ ३ ॥ **श्च्युतिर्** क्षरणे । श्च्योतति । चुश्च्योत । अश्च्युतत् । अश्च्योतीत् ॥ ४ ॥ यकाररहितोऽप्ययम् । श्चोतति ॥ ५ ॥ **मन्थ** विलोडने । विलोडनं प्रतिघातः । मन्थति । ममन्थ । यासुटः किदाशिषीति कित्त्वाद् अनिदितामिति नलोपः–मथ्यात् ॥ ६ ॥ **कुथि पुथि लुथि मथि** हिंसासंक्लेशनयोः । इदित्त्वान्नलोपो न । कुन्थ्यात् । मन्थ्यात् ॥ १० ॥ **षिध** गत्याम् । सेधति । सिषेध । सेधिता । असेधीत् । सात्पदाद्योरिति निषेधे प्राप्ते–॥ **उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** । ८ । ३ । ६५ ॥ उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात् ॥ **सदिरप्रतेः** । ८ । ३ । ६६ ॥ प्रतिभिन्नादुपसर्गात्सदेः सस्य षः स्यात् ॥ **स्तन्भेः** । ८ । ३ । ६७ ॥ स्तन्भेः सौत्रस्य सस्य षः स्यात् ॥ योगविभाग उत्तरार्थः ॥ किंच–अप्रतेरिति नानुवर्तते । 'बाहुप्रतिष्टम्भविवृद्धमन्युः' ॥ **अवाच्चालम्बनाविदूर्ययोः** । ८ । ३ । ६८ ॥ अवात्स्तन्भेरेतयोरर्थयोः षत्वं स्यात् ॥ **वेश्च स्वनो भोजने** । ८ । ३ । ६९ ॥ व्यवाभ्यां स्वनतेः सस्य षः स्याद्भोजने ॥ **परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्** । ८ । ३ । ७० ॥ परिनिविभ्यः परेषामेषां सस्य षः स्यात् ॥ निषेधति ॥ **प्राक्सितादड्व्यवायेऽपि** । ८ । ३ । ६३ ॥ सेवसितेत्यत्र सितशब्दात्प्राग् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात् ॥ न्यषेधत् । न्यषेधीत् । न्यषेधिष्यत् ॥ **स्थादिष्वभ्यासेन चाभ्यासस्य** । ८ । ३ । ६४ ॥ प्राक् सितात् स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात् ॥ एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम् ॥ निषिषेध । निषिषिधतुः ॥ **सेधतेर्गतौ** । ८ । ३ । ११३ ॥ गत्यर्थस्य सेधतेः षत्वं न स्यात् ॥ गङ्गां विसेधति ॥ ११ ॥ **षिधू** शास्त्रे

---

१ चिती इति । संज्ञानं चैतन्यम् ॥ २ इकारस्य "उपदेशेऽजनुनासिकः" इतीत्त्वे, रेफस्य "हलन्त्यम्" इतीत्त्वे च "इदितः" इति नुमापत्तिरित्यभिमानेन वार्तिककृदाह–**इर् इति** । इदिदन्तस्य धातोरित्यर्थस्य पूर्वमुक्तत्वेन नुमोऽप्राप्तौ विफल एव वार्तिककृतः प्रयास इत्यभिमानपदेन सूचितम् ॥ ३ **इति निषेधे प्राप्ते इति** । उपलक्षणमिषम्, "अवष्टभ्राति" इत्यादावप्राप्तस्यैव विधानात् । ४ **उत्तरार्थः इति** । उत्तरसूत्रे सदेरनुवृत्तिर्माभूत्, स्तन्भेरेवानुवृत्तिर्यथा स्यादित्येवमर्थं इत्यर्थः ॥ ५ ननु सदेरालम्बनाविदूर्ययोर्वृत्त्यभावादेवासम्बन्धः सिद्धोऽत आह–**किंचेति** । ६ **आविदूर्यं** सामीप्यम् । अवष्टब्धा गौः । निरुद्धा सती समीपे आस्ते इत्यर्थः ॥ **आलम्बनमाश्रयणम्** ॥ यष्टिमवष्टभ्य आस्ते । तामाश्रित्य तिष्ठतीत्यर्थः ॥ ७ **गङ्गां विसेधतीति** । "विप्रतिषेधे" इत्यत्र " सेधतेर्गतौ" इति निषेधो न विरोधार्थत्वेन गत्यर्थत्वाभावात् । "सिषेध" इत्यत्र "आदेशप्रत्यययोः" इति षत्वं भवत्येव । "अनन्तरस्य" इति न्यायेन "सेधतेर्गतौ" इत्यनेन "आदेशप्रत्यययोः" इत्यस्यानिषेधात् । इति केचित् ॥

माङ्गल्ये च । शास्त्रं शासनम् ॥ स्वरतिसूतिसूयतिधूञूदितो वा । ७ । २ । ४४ ॥ स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात् ॥ झषस्तथोर्धोऽधः । ८ । २ । ४० ॥ झषः परयोस्तथयोर्धः स्यान्न तु दधातेः ॥ जश्त्वम् ॥ सिषेद्ध । सिषेधिथ । सेद्धा । सेधिता । सेत्स्यति । सेधिष्यति । असैत्सीत् ॥ झलो झलि । ८ । २ । २६ ॥ झलः परस्य सस्य लोपः स्यात् झलि ॥ असैद्धाम् । असैत्सुः ॥ असैत्सीः । असैद्धम् । असैद्ध ॥ असैत्सम् । असैत्स्व । असैत्स्म । पक्षे असेधीत् । असेधिष्टामित्यादि ॥ १२ ॥ खादृ भक्षणे । ऋकार इत् । खादति । चखाद ॥ १३ ॥ खद स्थैर्ये हिंसायां च । चाद्भक्षणे । स्थैर्ये अकर्मकः । खदति ॥ अत उपधायाः । ७ । २ । ११६ ॥ उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे ॥ चखाद ॥ णलुत्तमो वा । ७ । १ । ९१ ॥ उत्तमो णल्वा णित्स्यात् ॥ चखाद । चखद ॥ अतो हलादेर्लघोः । ७ । २ । ७ ॥ हलादेर्लघोरकारस्य इडादौ परस्मैपदपरे सिचि वृद्धिर्वा स्यात् ॥ अखादीत् । अखदीत् ॥ १४ ॥ बद स्थैर्ये । पवर्गीयादिः । बदति । बबाद । बेदतुः । बेदिथ । बबाद । बबद । अबादीत् । अबदीत् ॥ १५ ॥ गद व्यक्तायां वाचि । गदति ॥ नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च । ८ । ४ । १७ ॥ उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णः स्यात् गदादिषु ॥ प्रणिगदति । जगाद ॥ १६ ॥ रद विलेखने । विलेखनं भेदनम् । रराद । रेदतुः ॥ १७ ॥ णद अव्यक्त शब्दे ॥ णो नः । ६ । १ । ६५ ॥ धातोरादेर्णस्य नः स्यात् ॥ णोपदेशास्त्वनर्द्-नाटि-नाथ्-नाध्-नन्द्-नक्क-नॄ-नृतः ॥ नाटेर्दीर्घाद्दस्य पर्युदासाद्धटादिर्णोपदेश एव । तवर्गचतुर्थान्तनाधतेर्नृनद्योश्च केचिण्णोपदेशतामाहुः ॥ उपसर्गादसमासेऽपि णोपदेशस्य । ८ । ४ । १४ ॥ उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि ॥ प्रणदति । प्रणिनदति ॥ १८ ॥ अर्द गतौ याचने च । अत आदेः ॥ तस्मान्नुड् द्विहलः । ७ । ४ । ७१ ॥ द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् ॥ आनर्द । आर्दीत् ॥ १९ ॥ नर्द गर्द शब्दे । णोपदेशत्वाभावान्न णः । प्रणदति ॥ २० ॥ गर्दति । जगर्द ॥ २१ ॥ तर्द हिंसायाम् । तर्दति ॥ २२ ॥ कर्द कुत्सिते शब्दे । कुत्सिते कौक्षे । कर्दति ॥ २३ ॥ खर्द दन्दशूके । दंशहिंसादिरूपायां दन्दशूकक्रियायाम् ।

---

१ माङ्गल्यं मङ्गलक्रिया । मङ्गलमेव माङ्गल्यम् । स्वार्थे ष्यञ् । २ स्वरतीति । "सूति सूयति" इत्यत्र 'षू प्रेरणे' इति तौदादिकव्यावृत्त्यर्थो गुणाभावः, श्यन्निर्देशः सौत्रः॥ धूञः सानुबन्धकनिर्देशः "धू विधूनने" इत्येतद्व्यावृत्त्यर्थः । "इट् सनि वा" इत्यतो "वा" इत्यनुवर्तमाने वाग्रहणं "लिङ्सिचोरात्मनेपदेषु" इत्यस्य निवृत्त्यर्थम् । न च स्वरतिग्रहणसामर्थ्यादेव तन्निवृत्तिः सिद्धा "ऋतश्च" इतीड्विकल्पस्य सिद्धत्वादिति वाच्यम्, स्वरतिग्रहणं नित्यार्थं स्यादिति तस्याज्ञापकत्वात् । इति कैयटः ॥ ३ ननु लौकिकप्रयोगे सर्वत्र नकारस्यैव दर्शनेन णोपदेशत्वाणोपदेशत्वव्यवहारो दुर्विज्ञेयोऽत आह—णोपदेशास्त्विति । एभ्यो भिन्ना णोपदेशा इत्यर्थः । नर्दादयस्तु नोपदेशा इति भावः ॥ आहुरिति । भाष्यविरोधोऽत्रारुचिः । भाष्ये हि "के पुनर्णोपदेशाः ? तवः" इत्याशङ्क्य "सर्वे णादयो णोपदेशा नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृनॄवर्जम्" इति प्रतिपादितम् । ४ दन्दशूकस्याक्रियत्वादाह—दन्दशूकक्रियायामिति । दन्दशूको बिलेशयः । सर्प इति यावत् ॥

क्रियायामित्यर्थः । खर्दति । चखर्द ॥ २४ ॥ **अति अदि** बन्धने । अन्तति । आनन्त ॥ २५ ॥ अन्दति । आनन्द ॥ २६ ॥ **इदि** परमैश्वर्ये[1] । इन्दति । इन्दांचकार ॥ २७ ॥ **बिदि** अवयवे । पवर्गतृतीयादिः । बिन्दति । अवयवं करोतीत्यर्थः । भिदीति पाठान्तरम् ॥ २८ ॥ **गडि** वदनैकदेशे[2] । गण्डति । अन्तत्यादयः पञ्चैते न तिङ्विषया इति काश्यपः । अन्ये[3] तु तिङमपीच्छन्ति ॥ २९ ॥ **णिदि** कुत्सायाम्[4] । निन्दति । प्रणिन्दति ॥ ३० ॥ **टुनदि** समृद्धौ ॥ **आदिर्ञिटुडवः । १ । ३ । ५ ॥** उपदेशे धातोराद्या एते इतः स्युः ॥ नन्दति । इदित्त्वान्नलोपो न । नन्द्यात् ॥ ३१ ॥ **चदि** आह्लादे । चचन्द ॥ ३२ ॥ **त्रदि** चेष्टायाम् । तत्रन्द ॥ ३३ ॥ **कदि क्रदि क्लदि** आह्वाने रोदने च । चकन्द ॥ ३४ ॥ चक्रन्द ॥ ३५ ॥ चक्लन्द ॥ ३६ ॥ **क्लिदि** परिदेवने[6] । चिक्लिन्द ॥ ३७ ॥ **शुन्ध** शुद्धौ । शुशुन्ध । नलोपः--शुध्यात् ॥ ३८ ॥ * ॥ **अथ कवर्गीयान्ता अनुदात्तेतो द्विचत्वारिंशत्[7] ॥ शीकृ** सेचने । तालव्यादिः । दन्त्यादिरित्येके । शीकते । शिशीके ॥ १ ॥ **लोकृ** दर्शने । लोकते । लुलोके ॥ २ ॥ **श्लोकृ** संघाते । संघातो ग्रन्थः । स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा । आद्य अकर्मको द्वितीये सकर्मकः । श्लोकते ॥ ३ ॥ **द्रेकृ ध्रेकृ** शब्दोत्साहयोः । उत्साहो वृद्धिरौद्धत्यं च । दिद्रेके ॥ ४ ॥ दिध्रेके ॥ ५ ॥ **रेकृ** शङ्कायाम् । रेकते ॥ ६ ॥ **सेकृ स्रेकृ स्रकि श्रकि श्लकि** गतौ । त्रयो दन्त्यादयः ॥ द्वौ तालव्यादी । अषोपदेशत्वान्न षः[8] । सिसेके ॥ ११ ॥ **शकि** शङ्कायाम् । शङ्कते । शशङ्के ॥ १२ ॥ **अकि** लक्षणे । अङ्कते । आनङ्के ॥ १३ ॥ **वकि** कौटिल्ये । वङ्कते ॥ १४ ॥ **मकि** मण्डने । मङ्कते ॥ १५ ॥ **कक** लौल्ये । लौल्यं गर्वश्चापल्यं च । ककते । चकके ॥ १६ ॥ **कुक वृक** आदाने । कोकते । चुकुके ॥ १७ ॥ वर्कते ॥ **ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन ॥ * ॥** ववृके ॥ १८ ॥ **चक** तृप्तौ प्रतिघाते च । चकते । चेके ॥ १९ ॥ **ककि वकि श्वकि**

---

१ **इदि परमैश्वर्ये** इति । ईश्वरस्य भाव ऐश्वर्यम् । परा = उत्कृष्टा, मा = लक्ष्मीर्यस्य तत् परमम् । परमञ्च तदैश्वर्यं च परमैश्वर्यम् । तस्मिन् ॥ २ **वदनैकदेश** इति । तत्क्रियायामित्यर्थः ॥ ३ तिङ्विषयत्वाभावे विशेषहेतुर्नास्तीत्याह--**अन्ये** त्विति ॥ ४ **णिन्दीति** । " उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे" इत्यमरः ॥ ५ टुशब्दः " नन्दथुः" इत्यत्र " ट्वितोऽथुच्" इत्यथुजर्थः । एवं सर्वत्र ॥ ६ **परिदेवनं** शोकः । परस्मैपदार्थः पुनः पाठः ॥ ७ **द्विचत्वारिंशदिति** । " विभाषा चत्वारिंशत् प्रभृतौ--" इति विकल्पविधानादात्त्वाभावः ॥ ८ **अषोपदेशत्वादिति** । सेकः पर्युदासात् सेक्-स्रकोर्दन्त्याजन्तसादित्वाभावादित्यर्थः ॥ ननु गुणस्य " चेतति" इत्यादौ चारितार्थत्वेन कित्त्वस्य "ईजतुः" इत्यादौ सावकाशत्वेन " ववृके" इत्यत्रोभयोः प्राप्तौ **"विप्रतिषेधे"** इति सूत्रप्रवृत्त्या परत्वाद् गुणेन भवितव्यमित्याशङ्कायामाह--**ऋदुपधेभ्य इति** । वस्तुतस्तु ऋदुपधविपर्यैतल्लक्षणोपप्लवकृतकित्त्वस्यानवकाशत्वमेव । तदुक्तं भाष्ये--" **नवा क्सस्यानवकाशत्वादपवादो गुणस्य** " इति । " यथा क्सस्य कित्त्वसामर्थ्यादेव " अलिक्षत्" इत्यादौ गुणो बाध्यते, तथेह ऋदुपधविपर्यैतल्लक्षणोपप्लवप्रापितातिदेशसामर्थ्यादित्यर्थ " इति कैयटः ॥ एवं च व्यर्थ एवायं वार्तिककृतः प्रयासः । अधिकं नागेशीये ॥

**त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ तिकृ तीकृ रघि लघि** गत्यर्थाः ॥ कङ्कते । डुढौके । तुत्रौके । **सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः *॥** ष्वष्कते । षष्वष्के ॥ अत्र तृतीयो दन्त्यादिरित्येके ॥ **लघि** भोजननिवृत्तावपि ॥ ३४ ॥ **अघि वघि मघि** गत्याक्षेपे । आक्षेपो निन्दा । गतौ गत्यारम्भे चेत्यन्ये । अङ्घते । आनङ्घे । वङ्घते । मङ्घते । **मघि** कैतवे च ॥ ३७ ॥ **राघृ लाघृ द्राघृ** सामर्थ्ये । राघते ॥ ३८ ॥ लाघते ॥ ३९ ॥ **ध्राघृ** इत्यपि केचित् । **द्राघृ** आयामे च । आयामो दैर्घ्यम् । द्राघते ॥ ४१ ॥ **श्लाघृ** कत्थने । श्लाघते ॥ ४२ ॥ * ॥ **अथ परस्मैपदिनः पञ्चाशत् ॥ फक्क** नीचैर्गतौ । नीचैर्गतिर्मन्दगमनमसद्व्यवहारश्च । फक्कति । पफक्क ॥ १ ॥ **तक** हसने । तकति ॥ २ ॥ **तकि** कृच्छ्रजीवने । तङ्कति ॥ ३ ॥ **बुक्क** भषणे । भषणं श्वरवः ॥ बुक्कति ॥ ४ ॥ **कख** हसने । प्रनिकखति ॥ ५ ॥ **ओखृ राखृ लाखृ द्राखृ ध्राखृ** शोषणालमर्थयोः । ओखति । ओखांचकार ॥ १० ॥ **शाखृ श्लाखृ** व्याप्तौ । शाखति ॥ १२ ॥ **उख उखि वख वखि मख मखि णख णखि रख रखि लख लखि इख इखि ईखि वल्ग रगि लगि अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि रिगि लिगि** गत्यर्थाः । द्वितीयान्ताः पञ्चदश । तृतीयान्तास्त्रयोदश । इह खान्तेषु **रिख त्रख त्रिखि शिखि** इत्यपि चतुरः केचित्पठन्ति ॥ **अभ्यासस्यासवर्णे । ६ । ४ । ७८ ॥** अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि ॥ उवोख । संनिपातपरिभाषया इजादेरित्याम्न ॥ ऊखतुः । ऊखुः । इह सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाद्ध्रस्वः प्राप्तो न भवति सकृत्प्रवृत्तत्वात् । आङ्गत्वाद्धि पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततो दीर्घः ।

१ ननु " ष्वष्कते " इत्यादौ " धात्वादेः " इति सत्वं कुतो नेति शङ्कायामाह-" **सुब्धातु** " इति । सुब्धातोरुदाहरणम्-" षण्डीयति " इत्यादि ॥ भाष्ये तु " धात्वादेः " इति सूत्रे उपदेशपदसम्बन्धेन तत्रत्यं धातुग्रहणमेतद्वार्तिकस्थसुब्धातुग्रहणं च प्रत्याख्यातम् । यदि तु ष्ठिवुप्रभृतीनामपि यादित्वादेव सिद्धिरिति विभाव्यते तदा तेषां ग्रहणमप्यनावश्यकम् । इति बोध्यम् ॥ २ **उवोखेति** । " द्विर्वचनेऽचि " इति निषेधात् पूर्वं द्वित्वे कृते उकारस्य वार्णादाङ्गस्य बलीयस्त्वात् सवर्णदीर्घं बाधित्वा गुणे कृते उवङ् । पूर्वस्यैव विधौ स्थानिवत्त्वेन सवर्णदीर्घे कर्तव्ये न गुणस्य स्थानिवत्त्वम् । उवङि कर्तव्येऽपि न स्थानिवत्त्वम्, असवर्णग्रहणसामर्थ्यात् । एतत्प्रवृत्तिकालेऽचः परस्मिन्नित्यस्य प्रवृत्तौ असवर्णपरत्वाभावेन तद्वैयर्थ्यं स्पष्टमेव ॥ ३ ननु ' उवोख ' इत्यत्र गुणे ( ' ऊखतुः ' इत्यादौ कृते सवर्णदीर्घे ) कृते इजादिगुरुमत्त्वेन " इजादेश्च गुरुमतः-" इत्यामा भाव्यमित्याशङ्कायामाह-**सन्निपातेति** । आमि सति " आमः " इति लुकि धातोर्णल ( लिट् ) परत्वव्याघातः स्यादिति भावः ॥ ४ ननूखतुरित्यादौ " अन्तादिवच्च " इति पूर्वस्यान्तवत्त्वेनाभ्यासत्वाद् " ह्रस्वः " इति ह्रस्वापत्तिरित्याशङ्क्य समाधत्ते- **इहेति** । ऊखतुरित्यादावित्यर्थः ॥ ह्रस्वाप्रवृत्तौ हेतुमाह-**सकृत्प्रवृत्तत्वादिति** । "**लक्ष्ये लक्षणं सकृदेव प्रवर्तते**" इति परिभाषाप्रवृत्तेरिति भावः ॥ ५ प्राक् तत्प्रवृत्तिमेव दर्शयति-**आङ्गत्वादिति** । आङ्गत्वात् पूर्वं ह्रस्वे कृते ततो दीर्घ इत्यन्वयः ॥ ननु " **अकृतकारि खल्वपि शास्त्रमग्निवत्** " इति न्यायेन ह्रस्वस्य ह्रस्वो न स्यादत आह-**पर्जन्येति** । " **पर्जन्यवल्लक्षणप्रवृत्तिः** " इति परिभाषया ह्रस्वस्यापि ह्रस्व इति भावः ॥ तदुक्तम्-" इको झल् " इति सूत्रे भाष्ये " **कृतकारि खल्वपि शास्त्रं पर्जन्यवत्** " इति ॥ नच ' लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः ' इत्यत्र न मानमिति वाच्यम्, " **समो वा लोपमेके** " इति लोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वित्वेन च त्रिसकारस्य सिद्धौ "**समस्सुटि**" इति सूत्रस्यैव मानत्वात् ॥

' वार्णादाङ्गं बलीय ' इति न्यायात् परत्वाच्च । उङ्खति । ववखतुः । वङ्खति । मेखतुः । **खगि** कम्पने च ॥ ४४ ॥ **युगि जुगि वुगि** वर्जने । युङ्गति ॥ ४७ ॥ **घघ** हसने । घघति । जघाघ ॥ ४८ ॥ **मघि** मण्डने । मङ्घति ॥ ४९ ॥ **शिघि** आघ्राणे । शिङ्घति ॥ ५० ॥

**अथ चवर्गीयान्ताः ॥ तत्रानुदात्तेत एकविंशतिः ॥ वर्च** दीप्तौ । वर्चते ॥ १ ॥ **षच** सेचने सेवने च । सचते । सेचे । सचिता ॥ २ ॥ **लोचृ** दर्शने । लोचते । लुलोचे ॥ ३ ॥ **शच** व्यक्तायां वाचि । शेचे ॥ ४ ॥ **श्वच श्वचि** गतौ । श्वचते । श्वञ्चते ॥ ६ ॥ **कच** बन्धने । कचते ॥ ७ ॥ **कचि काचि** दीप्तिबन्धनयोः । चकञ्चे । चकाञ्चे ॥ ९ ॥ **मच मुचि** कल्कने । कल्कनं दम्भः शाठ्यं च । कथनमित्यन्ये । मेचे मुमुञ्चे ॥ ११ ॥ **मचि** धारणोच्छ्रायपूजनेषु । ममञ्चे ॥ १२ ॥ **पचि** व्यक्तीकरणे ॥ पञ्चते ॥ १३ ॥ **ष्टुच** प्रसादे । स्तोचते । तुष्टुचे ॥ १४ ॥ **ऋज** गतिस्थानार्जनोपार्जनेषु । अर्जते । नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते । तेन द्विहल्त्वान्नुट् । आनृजे ॥ १५ ॥ **ऋजि भृजी** भर्जने । ऋञ्जते । उपसर्गादृतीति वृद्धिः । प्रार्ञ्जते । ऋञ्जाचक्रे । आर्ञ्जिष्ट ॥ १६ ॥ भर्जते । बभृजे । अभर्जिष्ट ॥ १७ ॥ **एजृ भ्रेजृ भ्राजृ** दीप्तौ । एजांचक्रे ॥ २० ॥ **ईज** गतिकुत्सनयोः ॥ ईजांचक्रे ॥ २१ ॥

---

१ ननु ह्रस्वस्य पूर्वं प्रवृत्तौ " **आङ्गत्वात्** " इति हेतुरुपन्यस्तस्तत्राङ्गस्य बलवत्त्वे किं बीजमिति शङ्कायामाह-**वार्णेति** " अभ्यासस्यासवर्णे " इति सूत्रमस्यां ज्ञापकम् । न च " इयेष--इयाय " इत्यादावभ्यास इत्यंशश्चरितार्थ इति वाच्यम्, तत्रापि गुणवृद्धी बाधित्वा " द्विर्वचनेऽचि " इति सूत्रबलात् पूर्वं द्वित्वे पुनः प्राप्ते गुणवृद्धी बाधित्वाऽन्तरङ्गत्वात्सवर्णदीर्घस्यैव प्रवृत्तेः । " इयर्ति " इत्याद्यर्थमपि न, तावन्मात्रप्रयोजनकत्वे " नह्येकमुदाहरणं योगारम्भं प्रयोजयति " इति भाष्याद् "**उः**" इत्येव ब्रूयात् पाणिनिः । " **श्लोः** " इत्यनुवृत्त्या " अर्तेरिवर्णस्येयङ् इत्यर्थसम्भवात् । अत एव च " **आर** " इत्यत्र न दोषः । नचार्तेरव ग्रहणमित्यत्र किं मानम् " ऋवर्णान्तधातोः " इति किं न स्यादिति वाच्यम्, " **इणो यण्** " इत्येतत्साहचर्येण वर्णात्मकस्य धातुपाठपठितस्य ग्रहणात् । तेन ऋशब्दे च्यन्ते नातिप्रसङ्गः । अधिकं नागेशोक्ते ॥ २ नन्वनेन सूत्रेणान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यताम्, तावतैव सकलेष्टसिद्धिर्भविष्यतीतीयं परिभाषा नारब्धव्येति मतेनाह-**परत्वाच्चेति** । " **परत्वात्** " इत्यस्य " परकालप्राप्तिकत्वात् " इत्यर्थः । एवं च--अभ्यासविकारेषु बाध्यबाधकभावाभावेन. ह्रस्वहलादिःशेषयोर्युगपत्प्रवृत्तौ ततः परकालो दीर्घ इत्यन्तरङ्गत्वाद् दीर्घत्वं स्यादिति न वाच्यमिति भावः इति शेखरकृतः ॥ ह्रस्वस्य पूर्वं प्रवृत्तत्वात् विकारकृतलक्ष्यभेदाभावेन पुनर्ह्रस्वो न भविष्यतीति हृदयम् ॥ एतेन " आपाततोऽयं हेतुः, ह्रस्वस्याङ्गत्वेन बहिरङ्गत्वादन्तरङ्गं सवर्णदीर्घं प्रति परत्वोपन्यासस्यायुक्तत्वात् " इति वदन्तस्तत्त्वबोधिनीकाराः परास्ताः ॥ ३ " **यं पूरवो वृत्रहणं सचन्ते** " इत्यादौ " **सेवन्ते** " इत्याद्यर्थस्य शिष्टैर्व्याख्यातत्वेन सेवनार्थोऽप्ययमित्याशयेनाह-**सेवने चेति** । ४ अर्जनं प्राधान्येन, **उपार्जनं** तु प्रासङ्गिकम् ॥ ५ ननु " आ ऋज् ए " इति दशायां द्विहल्त्वाभावेन " **तस्मान्नुड्द्विहलः** " इति नुडागमो न स्यादित्याशङ्क्य समाधत्ते-**नुड्विधाविति** । अग्रहणे " **नुड्विधिलादेशविनामेषु ऋकारग्रहणम्** " इति वचनस्य प्रत्याख्यानाथ नुडादिविधिषु वर्णैकदेशस्य वर्णत्वेन ग्रहणस्वीकारादिति भावः ॥ ६ भ्राष्ट्रतप्तवालुकाभिः परिपाकविशेषो **भर्जनम्** ॥

अथ द्विसप्ततिर्व्रज्यन्ताः परस्मैपदिनः ॥ शुच शोके ॥ शोचति ॥ १ ॥ कुच शब्दे तारे । कोचति ॥ २ ॥ कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः । अनिदितामिति नलोपः। कुच्यात् ॥ ३ ॥ क्रुच्यात् ॥ ४ ॥ लुञ्च अपनयने । लुच्यात् ॥ ५ ॥ अञ्चु गतिपूजनयोः । अच्यात् । गतौ नलोपः । पूजायां तु अञ्च्यात् ॥ ॥ ६ ॥ वञ्चु चञ्चु तञ्चु त्वञ्चु म्रुञ्च म्लुञ्च म्रुचु म्लुचु गत्यर्थाः । वच्यात् । चच्यात् । तच्यात् । त्वच्यात् । अम्रुञ्चीत् । अम्लुञ्चीत् ॥ जृस्तम्भम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च । ३ । १।५८॥ एभ्यश्च्लेरङ् वा स्यात्॥ अम्रुचत् । अम्रोचीत् । अम्लुचत् । अम्लोचीत् ॥ १४ ॥ ग्रुचु ग्लुचु कुजु खुजु स्तेयकरणे । जुग्रोच । अग्रुचत् । अग्रोचीत् । जुग्लोच । अग्लुचत् । अग्लोचीत् । अकोजीत् । अखोजीत् ॥ १८ ॥ ग्लुञ्चु षस्ज गतौ । अङ् । अग्लुचत् । अग्लुञ्चीत् ॥१९॥ सस्य श्चुत्वेन शः । जश्त्वेन जः । सज्जति । अयमात्मनेपद्यपि । सज्जते ॥ २० ॥ गुजि अव्यक्ते शब्दे । गुञ्जति । गुञ्ज्यात् ॥ २१ ॥ अर्च पूजायाम् । आनर्च ॥ २२ ॥ म्लेच्छ अव्यक्ते शब्दे । अस्फुटेऽपशब्दे चेत्यर्थः । म्लेच्छति । मिम्लेच्छ ॥ २३ ॥ लच्छ लाछि लक्षणे । ललच्छ ॥ २४ ॥ ललाञ्छ ॥ २५ ॥ वाछि इच्छायाम् । वाञ्छति ॥ २६ ॥ आछि आयामे । आञ्छति । अत आदेरित्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थम् । तेन दीर्घाभावान्न नुट् । आञ्छ । तपरकरणं मुखसुखार्थमिति मते तु नुट् । आनाञ्छ ॥ २७ ॥ ह्रीच्छ लज्जायाम् । जिह्रीच्छ ॥ २८ ॥ हुर्छा कौटिल्ये । कौटिल्यमपसरणमिति मैत्रेयः । उपधायां चेति दीर्घः । हूर्छति ॥ २९ ॥ मुर्छा मोहसमुच्छाययोः । मूर्छति ॥ ३० ॥ स्फुर्छा विस्तृतौ । स्फूर्छति ॥ ३१ ॥ युच्छ प्रमादे । युच्छति ॥ ३२ ॥ उछि उञ्छे ॥ 'उञ्छः कणश

---

१ कुञ्चयादिति । कुञ्चेर्नलोपाभावस्य ऋत्विक्सूत्रे निपातनात् क्वापि नलोपो नेति भावः ॥ भाष्यमते तु चवर्गपञ्चमोपधत्वस्यैव "परश्च घाङ्कयोः" इति सूत्रेऽङ्गीकृतत्वान्न नलोपप्राप्तिरिति बोध्यम् । तत्र हि "शाङ्क लम्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि" इति वार्तिकव्याख्यावसरे "कुञ्चेत्यत्र चोः कुः झलीति कुत्वं प्राप्नोति, सङ्गेति वचनान्न भवति । एतदपि नास्ति प्रयोजनम् । निपातनादेतत्सिद्धम् । किं निपातनम् ? 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिकुञ्चाम्' इति प्रतिपादितम् । यद्ययं नकारोपधः स्यात् तदा अनुस्वारपरसवर्णयोरसिद्धत्वात् नकार एव कुत्वविधायकशास्त्रदृष्ट्याऽस्तीति कुत्वस्य प्राप्तिरेव नास्तीति कुत्वापादानपरभाष्यमसङ्गतमेव स्यादिति ञोपधोऽयं धातुरिति स्पष्टम् ॥ २ अञ्चु गतिपूजनयोरिति । ननु "अञ्चु गतिपूजनयोः" इत्यस्य स्थाने "अञ्चु गतौ" अचि पूजायाम् इत्येव सिद्धे "नाञ्चेः पूजायाम्" इति व्यर्थमिति चेन्न, अव्याकुलं गच्छतीत्यर्थके "अञ्चित गच्छति" इत्यादौ नलोपाभावाय तत्सूत्रस्यावश्यकत्वात् । अव्याकुलगमनेन च तत्र पूजा गम्यते नतत्स्वतैरेव सोऽर्थ इति 'अञ्चोऽनपादाने" इति सूत्रे भाष्यकैयटयोः स्पष्टत्वात् ॥ ३ अयमात्मनेपद्यपीति । "हेतुमति च" इति सूत्रे 'यदभिप्रायेषु सज्जते' इति भाष्यप्रयोगादिति भावः । ४ इति मते त्विति । इदमेव युक्तम्, तपरकरणफलस्य भाष्यानुक्तत्वात् ॥ ५ मुर्छा-इति । आकारो निष्ठायाम्-'आदितश्च" इतीण्निषेधार्थः । मूर्त इति ॥ ६ युच्छतीति । अन्तरङ्गत्वात्तुकि अलघूपधत्वान्न गुणः । "वार्णादाङ्गं बलीय" इति तु आङ्गवार्णयोर्युगपत्प्राप्तावेव ॥ ७ उञ्छः कणश आदानमिति । आपणादौ पतितकणानामेकशो ग्रहणमुञ्छः । क्षेत्रादौ स्वामित्यक्तकणिशार्जनं शिलम् । इत्यर्थः ॥

आदानं कणिशाद्यर्जनं शिलमिति यादवः ॥ उञ्छति । उञ्छांचकार ॥ ३९ ॥ **उच्छी** विवासे । विवासः समाप्तिः । प्रायेणायं विपूर्वः । व्युच्छति ॥ ३४ ॥ **ध्रज ध्रजि धृज धृजि ध्वज ध्वजि** गतौ । ध्रजति । ध्रञ्जति । धर्जति । धृञ्जति । ध्वजति । ध्वञ्जति ॥ ४० ॥ **कूज** अव्यक्ते शब्दे । चुकूज ॥ ४१ ॥ **अर्ज षर्ज** अर्जने । अर्जति । आनर्ज ॥ ४२ ॥ सर्जति । ससर्ज ॥ ४३ ॥ **गर्ज** शब्दे । गर्जति ॥ ४४ ॥ **तर्ज** भर्त्सने । तर्जति ॥ ४५ ॥ **कर्ज** व्यथने । चकर्ज ॥ ४६ ॥ **खर्ज** पूजने च । चखर्ज ॥ ४७ ॥ **अज** गतिक्षेपणयोः । अजति ॥ **अजेर्व्यघञपोः । २ । ४ । ५६ ॥** अजेर्वी इत्ययमादेशः स्यादार्धधातुकविषये घञमपं च वर्जयित्वा ॥ **वलादावार्धधातुके वेष्यते** * ॥ विवाय । विव्यतुः । विव्युः । अत्र वकारस्य हल्परत्वादुपधायां चेति दीर्घे प्राप्ते, अचः परस्मिन्निति स्थानिवद्भावेनाच्परत्वम् । न च नपदान्तेति निषेधः । स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदित्युक्तेः ॥ थलि एकाच इतीण्निषेधे प्राप्ते—॥**कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि । ७ । २ । १३ ॥** एभ्यो लिट इण्न स्यात् । क्रादीनां चतुर्णां ग्रहणं नियमार्थम् ॥ प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्य इति ।

---

१ **स्वरदीर्घेति** । ननु न पदान्तसूत्राप्रवृत्तावपि "पूर्वत्रासिद्धीये न स्थानिवत्" इत्यनेन स्थानिवद्भावनिषेधाद् "उपधायां च" इति दीर्घो दुर्वार एवेति चेन्न, "स्वरदीर्घ" इत्यस्य तस्यापि नियमेनादोषात् । "पूर्वत्रासिद्धीये" इत्यस्यापि नियम इत्यत्र च रिर्यतुः । रिर्युः । संविव्यतुः । संविव्युः । इत्यत्र स्थानिवद्भावस्यैव दीर्घवारकस्य स्वीकारपरभाष्यमेव मानम् ॥ २ ननु "कृसृभृ" एषां प्रकृत्याश्रय "एकाच उपदेशे" इति निषेधः सिद्धः, वृधातोश्च प्रत्ययाश्रयः "श्र्युकः किति" इति निषेधः सिद्ध इति किमर्थमत्र सूत्रे एषां ग्रहणमित्याशयेनाह—**क्रादीनां चतुर्णामिति** । ननु "**चतुर्णाम्**" इति कथनं नोपपद्यते "वृ" इत्यनेन वृञो वृङश्च बोधनेनाधिक्यसम्भवादिति चेन्न, कृत्वादिना चतुष्ट्वोपपत्तेः ॥ ३ नियमशरीरमाह—**प्रकृत्याश्रय इति** । 'एकाचः' इति क्रादिषु प्राप्तः । **प्रकृत्याश्रयत्वं च अव्यवहितोत्तरत्वसम्बन्धानवच्छिन्नधातुत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकप्रत्ययघटितशास्त्रत्वम्** । भाष्यसिद्धान्ते "**एकाचो विहित**" इत्यर्थे अव्यवहितोत्तरत्वसम्बन्धानवच्छिन्नत्वं बोध्यम् । **यावानिति** । "अनन्तरस्य" इति न्यायेन "नेड्वशि" इति प्रक्रमाद्वा नञ्प्रापितस्यैवाभावस्यायं नियमः, नतु विभाषाबललभ्यस्य । तेन "सिधू" इत्यस्य सिषेधिथ, सिषेद्ध । सिषिधिव, सिषिध्व । इत्याद्युभयं भवति । इति केचित् ॥ अन्ये तु यावान् कश्चिदिड्भावः प्रतिषेधनिबन्धनो विकल्पनिबन्धो वा सर्वो बाध्यते, तेन, "सिषेधिथ" इत्याद्येकमेव रूपम् । नत्वनिट्कमपि । अत एव "उपदेशेऽत्वतः" इति सूत्रे भाष्ये नित्यानिटः इत्यस्य "**अग्निचयावर्त्यः**" इत्युक्तम् । यदि च वाप्राप्तस्य नियमो न स्यात तदा तत्रापि—ऊदित्त्वप्रयुक्तविकल्पस्य सत्त्वेन तदसङ्गतिः स्यात्, मम तु क्रादिनियमेन नित्य इडिति न दोष इत्याहुः । इदमेव मतं युक्तमिति विदाङ्कुर्वन्तु सुधियः ॥ ४ **नान्येभ्य इति** । तेन "बभूविव" इत्यादिसिद्धम् । स्यादेतत्—अस्तु प्रकृत्याश्रयस्य नियमः, प्रत्ययाश्रयस्य तु न संभवति, वृग्रहणस्य "ववथ" इत्यत्राप्राप्तनिषेधप्रापकत्वात् । नह्यत्र प्रकृत्याश्रयः प्राप्नोति । वृञ उदात्तत्वात् । नापि प्रकृत्याश्रयः, थलोऽकित्त्वात् । एवं च "बभूविव" इत्यादौ "श्र्युकः किति" इति निषेधो दुर्वारः, इति चेन्नैवम् । "**बभूथाततन्थजगृम्भववर्थेति निगमे**" इति सूत्रेण छन्दसि "ववर्थ" इति निपातनात् । भाषायां वृञस्थल इटः स्वीकर्तव्यतया वृग्रहणस्य थल्विषयत्वायोगात् । वमादीनां च कित्त्वेन नियमस्य सुस्थत्वात् । इति मनोरमा ॥

ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम् ॥ **अचस्तास्वत्थल्यनिटो नित्यम् । ७ । २ । ६१॥** उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न स्यात् ॥ **उपदेशेऽत्वतः । ७ । २ । ६२ ॥** उपदेशे अकारवतस्तासौ नित्यानिटः परस्य थल इण्न स्यात् ॥ **ऋतो भारद्वाजस्य । ७ । २ । ६३ ॥** तासौ नित्यानिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन । तेनान्यस्य स्यादेव । अयमत्र संग्रहः ॥

अजन्तोऽकारवान्वा यास्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥ १ ॥

न चैं स्तुद्वादीनामपि थलि विकल्पः शङ्क्यः । अचस्तास्वदिति उपदेशेऽत्वत इति च योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्तकः । अनन्तरस्येति न्यायात् । विवयिथ । विवेथ । आजिथ । विव्यथुः । विव्य । विवाय । विवय । विव्यिव । विव्यिम । वेता । अजिता । वेष्यति । अजिष्यति । अजतु । आजत् । अजेत् । वीयात् ॥ **सिचि वृद्धिः परस्मैपदेषु । ७ । २ । १ ॥** इगन्ताङ्गस्य वृद्धिः स्यात्परस्मैपदपरे सिचि ॥ अवैषीत् । आजीत् । अवेष्यत् । आजिष्यत् ॥ ४८ ॥ **तेज** पालने । तेजति ॥ ४९ ॥ **खज** मन्थे । खजति ॥ ५० ॥ **खजि** गतिवैकल्ये । खञ्जति ॥ ५१ ॥ **एजृ** कम्पने । एजांचकार ॥ ५२ ॥ **टुओस्फूर्जा** वज्रनिर्घोषे । स्फूर्जति । पुस्फूर्ज ॥ ५३ ॥ **क्षि** क्षये । अकर्मकः । अन्तर्भावितण्यर्थस्तु सकर्मकः । क्षयति चिक्षाय । चिक्षियतुः । चिक्षियुः । चिक्षयिथ । चिक्षेथ । चिक्षियिव । चिक्षियिम । क्षेता ॥ **अकृत्सार्वधातुकयोर्दीर्घः ।**

---

१ ननु क्रादीनां चतुर्णां ग्रहणस्य नियमार्थतोक्ता सा नोचिता स्तुद्रुप्रभृतीनामप्यनुदात्तत्वात् तेष्वपि निषेधस्य प्राप्तेः "अष्टानाम्" इति वक्तुमुचितमित्याशङ्कां निराकर्तुमाह–**ततश्चतुर्णामिति** ॥ २ "**अचस्तास्वत्**" इत्येव सिद्धे नियमोऽयमत आह–**ऋदन्तादेवेति** ॥ विधेयमाह–**तेनान्यस्येति** । अत्रापि "**भारद्वाजस्य**" इति सम्बध्यते । "**अन्यस्य**" इत्यस्य "ऋकारान्तभिन्नस्य तासौ नित्यानिट उपदेशेऽजन्तस्य, अत्वतश्च" इत्यर्थः । एतेन "ययिथ" इत्यादावजन्तसन्निपातेन जात इट्, सन्निपातपरिभाषया आलोपनिमित्तं न स्यात्" इत्यपास्तम् ॥ ३ **अजन्त इति** । अस्य "**उपदेश**" इत्यादिः ॥ **आकारवान्**–ह्रस्वाकारवान् । **ईदृक्** = तासौ नित्यानिट् । य ऋदन्तः, स थलि नित्यानिडित्यर्थः ॥ ४ ननु स्तुद्रुस्रुश्रुवां थलि भारद्वाजनियमादिट् स्यात्, क्रादिसूत्रस्थस्त्वादिग्रहणेन तु 'येन नाप्राप्तिन्यायेन क्रादिनियमप्रापितस्यैव बाधौचित्यादित्याशयेन शङ्कते–**नचेति** ॥ समाधत्ते **योगद्वयेति** । "अयं भावः–"**थल्यनिटो नित्यम्**" इत्यस्यानुवृत्त्या "तत्पदसम्बन्धवान् य इण्निषेधः स भारद्वाजमते ऋकारान्तस्यैव" इति नियमेन क्रादिनियमस्य नायं निषेधः" इति । एतेन "भारद्वाजनियमो येन नाप्राप्तिन्यायेन "अचस्तास्वत्" इत्यस्यैव बाधक इति "जघनिथ इत्यादाविण् न स्यात्" इत्यपास्तम् ॥ ५ **विव्यिव विव्यिमेति** । क्रादिनियमान्नित्यमिट् । एवं च वमयोर्वलादित्वस्य क्रादिनियमेनेटः पर्यवसानान्न कदाचिदपि वलाद्यार्धधातुकव्यक्तिरिति नात्र "वलादावार्धधातुके वेष्यते" इत्यनेन विकल्पः किंतु नित्यमेव वीभावः । थलि तु भवत्येव विकल्पः । यतस्तत्रेड् विकल्पितः । अत एव मूले 'आजिथ' इति थल्युदाहृतम् "आजिव आजिम" इति नोदाहृतमिति केचित् ॥ ६ "**क्षि क्षये** । अजन्तेषु पठितव्ये इह पाठस्तु उत्तरधातुसाम्यात्" इति मैत्रेयः ॥ **सकर्मक इति** । "न क्षीयते इत्यक्षरम्" इति भाष्ये दर्शनात् ॥

७।४।२५॥ अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये परे न तु कृत्सार्वधातुकयोः। क्षीयात्। अक्षैषीत्॥ ५४॥ **क्षीज** अव्यक्ते शब्दे। कूजिना सहायं पठितुं युक्तः। चिक्षीज ॥५५॥ **लज लजि** भर्जने॥ ५७॥ **लाज लाजि** भर्त्सने च ॥ ५९॥ **जज जजि** युद्धे ॥ ६१॥ **तुज** हिंसायाम्। तोजति। तुतोज ॥ ६२॥ **तुजि** पालने ॥ ६३ ॥ **गज गजि गृज गृजि मुज मुजि** शब्दार्थाः॥ ६९॥ **गज** मदने च ॥ ७०॥ **वज व्रज** गतौ। वदव्रजेति वृद्धिः। अव्राजीत्॥ ७३॥ **अथ टवर्गीयान्ताः शाडयन्ता अनुदात्तेतः षट्त्रिंशत्॥ अट्ट** अतिक्रमहिंसयोः। दोपधोऽयम्। तोपध इत्येके ॥ अट्टते। आनट्टे॥ १॥ **वेष्ट** वेष्टने। विवेष्टे॥ २॥ **चेष्ट** चेष्टायाम्। अचेष्टिष्ट॥ ३॥ **गोष्ट लोष्ट** संघाते। जुगोष्टे॥ ४॥ लुलोष्टे॥ ५॥ **घट्ट** चलने। जघट्टे॥ ६॥ **स्फुटि** विकसने। स्फोटते। पुस्फुटे॥ ७॥ **अठि** गतौ। अण्ठते। आनण्ठे॥ ८॥ **वठि** एकचर्यायाम्। ववण्ठे॥ ९॥ **मठि कठि** शोके। शोक इह आध्यानम्। मण्ठते॥ १०॥ कण्ठते॥ ११॥ **मुठि** पालने। मुण्ठते॥ १२॥ **हेठ** विबाधायाम्। जिहेठे॥ १३॥ **एठ** च। एठांचक्रे॥ १४॥ **हिडि** गत्यनादरयोः। हिण्डते। जिहिण्डे॥ १५॥ **हुडि** संघाते। जुहुण्डे॥ १६॥ **कुडि** दाहे। चुकुण्डे॥ १७॥ **वडि** विभाजने। **मडि** च। ववण्डे॥ १९॥ **भडि** परिभाषणे। परिहासः सनिन्दोपालम्भश्च परिभाषणम्। बभण्डे॥ २०॥ **पिडि** संघाते। पिपिण्डे॥ २१॥ **मुडि** मार्जने। मार्जनं शुद्धिर्न्यग्भावश्च। मुण्डते॥ २२॥ **तुडि** तोडने। तोडनं दारणं हिंसनं च। तुण्डते॥ २३॥

---

१ **कूजिनेति**। अर्थसाम्यादेकत्र पाठस्य युक्तत्वादिति भावः॥ अप्रसिद्धत्वान्न पठित इति माधवः॥ २ **भर्त्सने चेति**॥ चाद् भर्जने। ३ **दोपधोऽयमिति**। तथा च "**न न्द्राः**" इति द्वित्वनिषेधाद् दकारं विहाय टिशब्दस्य द्वित्वे दकारस्य ष्टुत्वे चर्त्वे च, "अट्टिटिषते" "आट्टिट्" इत्यादि सिद्ध्यति। नच परत्वात् प्रागेव ष्टुत्वम्। असिद्धत्वात्। यदाहुः—"पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इति। नचान्तरङ्गत्वात् ष्टुत्वं स्यादेवेति वाच्यम्, सत्यपि तस्मिन् शास्त्रासिद्धतया दकार एवायमिति बुद्ध्या द्वित्वनिषेधात्। नच "पूर्वत्रासिद्धीयमद्विर्वचने" इति निषेधः शङ्क्यः, तस्य वचनस्य द्वित्वे कर्तव्ये प्रवृत्तिर्नतु द्वित्वे निषेधेऽपीत्यदोषात् इति भावः। न च यदि दकारस्य ष्टुत्वेन डकारे ततश्चर्त्वेन टकारे "अट्ट" इति श्रवणम्, तदा **नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजः शकारश्च षाट्टवर्गस्तवर्गजः**" इत्यभियुक्तोक्त्या तस्यासंग्रहः, अस्य टवर्गस्य षात् परत्वाभावादिति न्यूनतेति वाच्यम्, नेदं वचनमपूर्वं किंतु त्रैपादिककार्यप्रवृत्तिसिद्धार्थकथनमिति प्रकृतेऽपि तस्य प्रवृत्तौ बाधकाभावात्। अथवा "षाट्टवर्ग" इति "टवर्गयोगे श्रूयमाणटवर्गस्तवर्गजः" इत्यस्याप्युपलक्षणमिति न दोषः॥ षाट्टवर्गमुद्दिश्य तवर्गजत्वबोधनमेव विधेयम्। ननु टवर्गमात्रमुद्दिश्य षात्तवर्गजत्वबोधनं तवर्गजटवर्गमात्रमुद्दिश्य वा षनिमित्तजत्वबोधनमभिप्रेतमिति न दोष इति दाधिमथाः॥ ४ **तोपध इति**। अस्य मते "पूर्वत्रासिद्धीयमद्विर्वचने" इति ष्टुत्वस्य सिद्धत्वात् टकारद्वयसहितस्य द्वित्वे हलादिःशेषे "अटिट्टिषते" आटिट्ट इत्यादीनि रूपाणि भवन्ति। निमित्तापाये नैमित्तिकस्याप्यपाय इति त्वनित्यम्। नास्त्येव वा इति मनोरमा॥ ५ **वठि एकचर्यायाम्**। एकस्य = असहायस्य, चर्या = गमनम्, तस्यामित्यर्थः। गमनमत्र नोत्तरदेशसंयोगफलकव्यापार एव, किंतु स्थित्यनुकूलव्यापारोऽपि। तेनापत्यरहितायां विधवायां च "वण्ठा" इति प्रयोगसिद्धिः॥ ६ **हेठ विबाधायाम्। विबाधनं** शाठ्यम्।

हुडि वरणे। वरणं स्वीकारः। हरण इत्येके। हुण्डते ॥ २४ ॥ चडि कोपे ॥ चण्डते ॥ २५ ॥ शडि रुजायां संघाते च। शण्डते ॥ २६ ॥ तडि ताडने। तण्डते ॥ २७ ॥ पडि गतौ। पण्डते ॥ २८ ॥ कडि मदे। कण्डते ॥ २९ ॥ खडि मन्थे ॥ ३० ॥ हेडृ होडृ अनादरे। जिहेडे ॥ ३१ ॥ जुहोडे ॥ ३२ ॥ बाडृ आप्लाव्ये। बशादिः। आप्लाव्यमाप्लवः। बाडते ॥ ३३ ॥ द्राडृ[1] ध्राडृ विशरणे। द्राडते ॥ ३४ ॥ ध्राडते ॥ ३५ ॥ शाडृ[2] श्लाघायाम्। शाडते ॥ ३६ ॥ **अथ आटवर्गीयान्तसमाप्तेः परस्मैपदिनः** ॥ शौटृ गर्वे। शौटति। शुशौट ॥ १ ॥ यौटृ बन्धे। यौटति ॥ २ ॥ म्लेटृ मेडृ उन्मादे। द्वितीयो डान्तः। टान्तमध्ये पाठस्त्वर्थसाम्यान्नाथतिवत्। म्लेटति ॥ ३ ॥ म्रेडति ॥ ४ ॥ कटे[3] वर्षावरणयोः। चटे[4] इत्येके। चकाट। सिचि अतो हलादेर्लघोरिति वृद्धौ प्राप्तायाम्—॥ **ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्** । ७। २। ५॥ हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि ॥ अकटीत्॥ ६ ॥ अट पट गतौ। आट। आटतुः। आटुः॥ ७ ॥ पपाट। पेटतुः। पेटुः॥ ८ ॥ रट परिभाषणे। रराट ॥ ९ ॥ लट बाल्ये। ललाट ॥ १० ॥ शट रुजाविशरणगत्यवसादनेषु। शशाट ॥ ११ ॥ वट वेष्टने। ववाट। ववटतुः। ववटुः। ववटिथ ॥ १२ ॥ किट खिट त्रासे[5]। केटति ॥ १३ ॥ खेटति ॥ १४ ॥ शिट षिट अनादरे। शेटति। शिशेट ॥ १५ ॥ सेटति। सिषेट ॥ १६ ॥ जट झट संघाते ॥ १८ ॥ भट भृतौ ॥ १९ ॥ तट उच्छ्राये ॥ २० ॥ खट काङ्क्षायाम् ॥ २१ ॥ नट[6] नृत्तौ ॥ २२ ॥ पिट शब्दसंघातयोः ॥ २३ ॥ हट दीप्तौ ॥ २४ ॥ षट अवयवे ॥ २५ ॥ लुट विलोडने। डान्तोऽयमित्येके ॥ २७ ॥ चिट परप्रेष्ये ॥ २८ ॥ विट शब्दे ॥ २९ ॥ बिट आक्रोशे। बशादिः। हिटेत्येके ॥ ३१ ॥ इट किट कटी गतौ। एटति ॥ ३२ ॥ केटति ॥ ३३ ॥ कटति। ईकारः श्वीदितो निष्ठायामितीण्णिषेधार्थः ॥ ३४ ॥ केचित्तु[8] इदितं मत्वा नुमि कृते कण्टतीत्यादि वदन्ति। अन्ते च इ ई इति प्रश्लिष्य। अयति। इयाय। इयतुः[9]।

---

१ "द्राडृ" विशरणमवयवविभागः ॥ २ शाडृश्लाघायाम्। इदमुपलक्षणम्। शालधातुरप्यत्र बोध्यः। तेन "शालते" इत्यस्यापि सिद्धिः। डलयोरैक्यात् "शालते" इति काश्यपः। "लस्य" इत्यत्र भाष्यकैयटयोः "शाला" इति श्यतेर्लप्रत्यये व्युत्पादनीय इति माधवः ॥ ३ "कटे" वर्षो वृष्टिः। आवरणमाच्छादनम्। ४ "चटुः" "चाटुः" "चटुलः" "चटकाया ऐरक्" इत्यादिसिद्धये आह—चटे इत्येके इति ॥ ५ "किट खिट" त्रासो भयोत्पादनम् ॥ ६ "नट नृत्तौ" नोपदेशोऽयम्। णोपदेशपर्युदासवाक्ये "नाटि" इति दीर्घपाठाद् अस्यैव घटादिभिन्नत्वेन दीर्घोपधत्वादिति बोध्यम् ॥ डान्तोऽयमित्येके इति। अत एव डलयोरैक्यात् "लोलल्लुजाकारबृहत्तरङ्गम्" इति माघः सङ्गच्छते ॥ ८ "उदयति दिननाथे याति शीतांशुरस्तम्" इत्यादि प्रयोगसिद्धये आह—केचित्त्विति ॥ "केचित्तु" इत्यारभ्य "उदाहरन्ति" इत्यन्तमरुचिग्रस्तम्। इकारप्रश्लेषस्य प्रामाणिकत्वेऽप्येदित्त्वसम्भावना कर्तुं शक्या, तत्रैव मानाभावात्। इति केचित् ॥ ९ इयतुरिति। इकारोऽत्र ह्रस्वः, द्वित्वे कृते "एरनेकाचः" इति यण्. सवर्णदीर्घयोः प्राप्तयोः "वार्णादाङ्गम्" इति परिभाषया यण् इति बोध्यम् ॥

इयुः । इययिथ । इयेथ । इयाय । इयय । दीर्घस्य त्विजादेरित्यामि अयांचकारेत्याद्युदाहरन्ति ॥ ३५ ॥ **मडि** भूषायाम् ॥ ३६ ॥ **कुडि** वैकल्ये[1] । कुण्डति । कुण्डत इति तु दाहे गतम् ॥ ३७ ॥ **मुड प्रुड** मर्दने ॥ ३९ ॥ **चुडि** अल्पीभावे ॥ ४० ॥ **मुडि** खण्डने । मुण्डति ॥ ४१ ॥ **पुडि**[2] चेत्येके । पुण्डति ॥ ४२ ॥ **रुटि लुटि** स्तेये । रुण्टति ॥ ४३ ॥ लुण्टति ॥ ४४ ॥ **रुठि लुठि** इत्येके ॥ ४६ ॥ **रुडि लुडि** इत्यपरे ॥ ॥ ४८ ॥ **स्फुटिर्** विशरणे । इरित्त्वादङ्वा । अस्फुटत् । अस्फोटीत् ॥ ४९ ॥ **स्फुटि** इत्यपि केचित् । इदित्त्वान्नुम् । स्फुण्टति ॥ ५० ॥ **पठ** व्यक्तायां वाचि । पेठतुः । पेठिथ । अपठीत् । अपाठीत् ॥ ५१ ॥ **वठ** स्थौल्ये । ववठतुः । ववठिथ ॥ ५२ ॥ **मठ** मदनिवासयोः ॥ ५३ ॥ **कठ** कृच्छ्रजीवने ॥ ५४ ॥ **रट**[3] परिभाषणे ॥ ५५ ॥ **रठे**त्येके ॥ ५६ ॥ **हठ** प्लुतिशठत्वयोः । बलात्कार इत्येके । हठति । जहाठ ॥ ५७ ॥ **रुठ लुठ उठ** उपघाते । ओठति ॥ ६० ॥ **ऊठे**त्येके । ऊठति । ऊठांचकार ॥ ६१ ॥ **पिठ** हिंसासंक्लेशनयोः ॥ ६२ ॥ **शठ** कैतवे च[4] ॥ ६३ ॥ **शुठ** प्रतिघाते । शोठति ॥ ६४ ॥ **शुठी**ति स्वामी । शुण्ठति ॥ ६५ ॥ **कुठि च** । कुण्ठति ॥ ६६ ॥ **लुठि** आलस्ये प्रतिघाते च ॥ ६७ ॥ **शुठि** शोषणे ॥ ६८ ॥ **रुठि लुठि**[5] गतौ ॥ ७० ॥ **चुड्ड** भावकरणे । भावकरणमभिप्रायसूचनम् । चुड्डति । चुचुड्ड ॥ ७१ ॥ **अड्ड** अभियोगे[6] । अड्डति । आनड्ड ॥ ७२ ॥ **कड्ड** कार्कश्ये । कड्डति ॥ ७३ ॥ चुड्डादयस्त्रयो दोपधाः । तेन क्विपि—चुत् । अत् । कत् इत्यादि । **क्रीडृ** विहारे । चिक्रीड ॥७४॥ **तुडृ**[7] तोडने । तोडति । तुतोड ॥ ७५ ॥ **तूडृ** इत्येके ॥ ७६ ॥ **हुडृ हूडृ होडृ** गतौ । हुड्यात् । हूड्यात् । होड्यात् ॥ ७९ ॥ **रौडृ** अनादरे ॥ ८० ॥ **रोडृ लोडृ**[8] उन्मादे ॥ ८२ ॥ **अड** उद्यमे । अडति । आड । आडतुः । आडुः ॥ ८३ ॥ **लड** विलासे । लडति ॥ ८४ ॥ लडयोर्लरबोश्चैकत्वस्मरणाल्ललतीति स्वाम्यादयः ॥ **कड** मदे । कडति ॥ ८५ ॥ **कडि** इत्येके । कण्डति ॥ ८६ ॥ **गडि**[9] वदनैकदेशे । गण्डति ॥ ८७ ॥ **इति टवर्गीयान्ताः ॥ अथ पवर्गीयान्ताः । तत्रानुदात्तेतः स्तोभत्यन्ताश्चतुस्त्रिंशत् ॥ तिपृ तेपृ ष्टिपृ ष्टेपृ** क्षरणार्थाः । आद्योऽनुदात्तः । क्षीरस्वामी त्वयं सेडिति बभ्राम । तेपते । तितिपे । क्रादि-

---

१ कुडि । वैकल्यमविवेकः ॥ २ **पुडि चेत्येके इति** । अत एव "पुण्डरीकम्" इत्यादि सिद्धम् ॥ ३ **रट परिभाषणे रठेत्येके इति** । अत्र "रट परिभाषणे" इति द्वितीयटवर्गान्त एव पाठः साधीयान्, पूर्वोत्तरसन्दर्भात् । "रट परिभाषणे" इति प्रथमटवर्गान्तम्तु "अट पट गतौ" इत्यत्र गतः । रठेत्येके इति पाठस्तु केनचिद् विद्वद्वरेण पश्चाच्छोधित एवेति बोध्यम् ॥ ४ **शठ कैतवे चेति** । चकाराद् हिंसासंक्लेशनयोः ॥ ५ "**रुठि लुठि**" अर्थभेदात पुनः पाठो लुण्ठेरित्याहुः ॥ " ६ "**अड्ड**" "**अभियोगस्त्वभिग्रहः**" इत्यमरः । ७ "**तुडृ**" **तोडनं** दारणं हिंसनं च ॥ ८ "**रोडृ लोडृ**" **उन्मादश्चित्तविभ्रमः** ॥ ९ "**गडि**" टवर्गीयप्रकरणादिह पाठस्तु युक्तः । अन्तत्यादिषु तु "**पञ्चैते न तिङ्विषयाः**" इति बोधयितुं प्रसङ्गाल्लिखितः ॥

नियमादिट्। तितिपिषे। तेप्ता। तेप्स्यते ॥ **लिङ्सिचावात्मनेपदेषु। १। २। ११॥** इक्समीपाद्धलः परौ झलादी लिङ् आत्मनेपदपरः सिचेत्येतौ कितौ स्तः ॥ कित्त्वान्न गुणः ॥ तिप्सीष्ट। तिप्सीयास्ताम्। तिप्सीरन्। लुङि। झलो झलीति सलोपः। अतिप्त। अतिप्साताम्। अतिप्सत। तेपते। तितेपे। तिष्टिपे। तिष्टिपाते। तिष्टिपिरे। तिष्टेपे। तिष्टेपाते। तिष्टेपिरे ॥ **तेपृ** कम्पने च ॥ ४ ॥ **ग्लेपृ** दैन्ये। ग्लेपते ॥ ५ ॥ **टुवेपृ** कम्पने। वेपते ॥ ६ ॥ **केपृ गेपृ ग्लेपृ** च। चात्कम्पने गतौ च। सूत्रविभागादिति स्वामी। मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पने इत्यपेक्षत इत्याह। ग्लेपेरर्थभेदात्पुनः पाठः ॥ ८ ॥ **मेपृ रेपृ लेपृ** गतौ ॥ ११ ॥ **त्रपूष्** लज्जायाम्। त्रपते ॥ **तॄफलभजत्रपश्च। ६। ४। १२२॥** एषामत एकारोऽभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च ॥ त्रेपे। त्रेपाते। त्रेपिरे। ऊदित्त्वादिड्वा। त्रपिता। त्रप्ता। त्रपिषीष्ट। त्रप्सीष्ट ॥ १२ ॥ **कपि** चलने। कम्पते। चकम्पे ॥ १३ ॥ **रबि लबि अबि** शब्दे। ररम्बे। ललम्बे। आनम्बे ॥ **लबि** अवस्रंसने च ॥ १६ ॥ **कबृ** वर्णे। चकबे ॥ १७ ॥ **क्लीबृ** अधार्ष्ट्ये। चिक्लीबे ॥ १८ ॥ **क्षीबृ** मदे। क्षीबते ॥ १९ ॥ **शीभृ** कत्थने। शीभते ॥ २० ॥ **चीभृ** च ॥ २१ ॥ **रेभृ** शब्दे। रिरेभे ॥ २२ ॥ **अभि-रभी** क्वचित्पठ्येते। अम्भते ॥ २३ ॥ रम्भते ॥ २४ ॥ **ष्टभि स्कभि** प्रतिबन्धे। स्तम्भते। उत्तम्भते–उदः स्थास्तम्भोरिति पूर्वसवर्णः ॥ विस्तम्भते–'स्तन्भेरि'ति षत्वं तु न भवति। ष्टनुविधौ निर्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात्। तद्बीजं तु–उदःस्थास्तम्भोरिति पवर्गीयोपधपाठः स्तन्भेरिति तवर्गीयोपधपाठश्चेति माधवः ॥ केचिदस्य टकार औपदेशिक इत्याहुस्तन्मते–ष्टम्भते। टष्टम्भे ॥ २६ ॥ **जभि-जृभी** गात्रविनामे ॥ **रधिजभोरचि। ७। १। ६१॥** एतयोर्नुमागमः स्यादचि ॥ जम्भते। जजम्भे। जम्भिता। अजम्भिष्ट। जृम्भते। जजृम्भे ॥ २८ ॥ **शल्भ** कत्थने। शशल्भे ॥ २९ ॥ **वल्भ** भोजने। दन्त्योष्ठ्यादिः। ववल्भे ॥ ३० ॥ **गल्भ** धार्ष्ट्ये। गल्भते ॥ ३१ ॥ **श्रम्भु** प्रमादे। तालव्यादिर्दन्त्यादिश्च। श्रम्भते। स्रम्भते ॥ ३३ ॥ **ष्टुभु** स्तम्भे। स्तो-

---

१ चकारेण पूर्वोत्तरार्थावनुकृष्येते तदाह–**चादिति**। ननु चकारेण पूर्वार्थस्य संग्रहेऽपि उत्तरार्थसंग्रहे न मानमत आह–**सूत्रविभागादिति** "टुवेपृ केपृ गेपृ ग्लेपृ कम्पने" इत्येवमेकयोगे कर्तव्ये योगविभागसामर्थ्याच्चकारेण पूर्वोत्तरयोरर्थयोरनुकर्षापकर्षाविति स्वामिनो भावः ॥ २ **मैत्रेयस्त्विति**। वेपतिना सहैषामपाठोऽप्रसिद्धत्वज्ञापनायेति तस्याभिप्रायः ॥ ३ **तॄफलभजेति**। गुणशब्देन भाविताकारत्वाद् विरूपादेशादित्वाद् एकहल्मध्यस्थत्वाभावाच्च यथायथमप्राप्ते विधिरयम् ॥ ४ "**कबृ**" वर्णश्चात्र चित्ररूपम् ॥ ५ "**क्लीबृ**" **धृष्टो** निर्लज्जः, तस्य भावो **धार्ष्ट्यम्**। न धार्ष्ट्यम् अधार्ष्ट्यं सलज्जता ॥ ६ अम्भः, अम्भसी, बाह्वादिगणे "अम्भसः सलोपश्च" आम्भिः इत्यादिसिद्धये आह—**अभिरभी इति**॥ ७ "**ष्टभि स्कभि**" "प्रतिबन्धः प्रतिष्टम्भः" इत्यमरः। रोध इति यावत् ॥ ८ **तद्बीजं त्विति** ॥ पूर्वसवर्णप्रवृत्तिषत्वाप्रवृत्त्योर्बीजं त्वित्यर्थः ॥ ष्टुत्वविध्योर्नकारनिपातनेन नैवानुस्वारपरसवर्णौ। 'बाधकान्येव निपातनानि' इत्यङ्गीकारात् ॥ ९ "**जृभी**" **गात्रविनामो** गात्रखेदः ॥ १० "**शल्भ**" **कत्थनं** श्लाघा ॥ ११ '**गल्भ**' धृष्टो निर्लज्जस्तस्य कर्म ॥ १२ "**श्रम्भु**" **प्रमादो**ऽविमृश्यकृत्यम्। "प्रमादोऽनवधानता" इत्यमरः ॥ १३ "**ष्टुभु**" **स्तम्भो** निरोधः ॥

भते । विष्टोभते । तुष्टुभे । व्यष्टोभिष्ट ॥ ३४ ॥ **अथ परस्मैपदिनः ॥ गुपू** रक्षणे ॥ **गुपूधूपविच्छिपणिपनिभ्य आयः । ३ । १ । २८ ॥** एभ्य आयप्रत्ययः स्यात्स्वार्थे ॥ पुगन्तेति गुणः ॥ **सनाद्यन्ता धातवः । ३ । १ । ३२ ॥** सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः ॥ धातुत्वाल्लडादयः । गोपायति ॥ **आयादय आर्धधातुके वा । ३ । १ । ३१ ॥** आर्धधातुकविवक्षायामायादयो वा स्युः ॥ **कास्प्रत्ययादाममन्त्रे लिटि । ३ । १ । ३५॥** कास्धातोः प्रत्ययान्तेभ्यश्चाम् स्याल्लिटि न तु मन्त्रे॥ **कास्यनेकाज्ग्रहणं कर्तव्यम् * ॥** सूत्रे प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमित्यर्थः ॥ **आर्धधातुके । ६ । ४ । ४६ ॥** इत्यधिकृत्य ॥ **अतो लोपः । ६ । ४ । ४८ ॥** आर्धधातुकोपदेशकाले यदकारान्तं तस्याकारस्य लोपः स्यादार्धधातुके परे ॥ गोपायांचकार ॥ गोपायांबभूव । गोपायामास । जुगोप । जुगुपतुः । ऊदित्त्वाद्वेट् । जुगोपिथ । जुगोप्थ । गोपायिता । गोपिता । गोप्ता । गोपाय्यात् । गुप्यात् । अगोपायीत् । अगोपीत् । अगौप्सीत् ॥ १ ॥ **धूप** सन्तापे । धूपायति । धूपायांचकार । दुधूप । धूपायितासि । धूपितासि ॥ २ ॥ **जप जल्प** व्यक्तायां वाचि । जप मानसे च ॥ ४ ॥ **चप** सान्त्वने ॥ ५ ॥ **षप** समवाये । समवायः सम्बन्धः सम्यगवबोधो वा । सपति ॥ ६ ॥ **रप लप** व्यक्तायां वाचि ॥ ८ ॥ **चुप** मन्दायां गतौ । चोपति । चुचोप । चोपिता ॥ ९ ॥ **तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ त्रुफ त्रुम्फ** हिंसार्थाः । तोपति । तुतोप । तुम्पति । तुतुम्प । तुतुम्पतुः । संयोगात्परस्य लिटः कित्त्वाभावान्नलोपो न । किदाशिषीति कित्त्वान्नलोपः । तुप्यात् । **प्रात्तुम्पतौ गवि कर्तरीति** पारस्करादिगणे पाठात्सुट् । प्रस्तुम्पति गौः । श्तिपा निर्देशाद्यङ्लुकि न । प्रतोतुम्पीति । त्रोपति । त्रुम्पति । तोफति । तुम्फति । त्रोफति । त्रुम्फति । इहाद्यौ द्वौ पञ्चमषष्ठौ च नीरेफाः । अन्ये सरेफाः । आद्याश्चत्वारः प्रथमान्ताः । ततो द्वितीयान्ताः । अष्टावप्युकारवन्तः ॥ १७ ॥ **पर्प रफ रफि अर्ब पर्ब लर्ब बर्ब मर्ब कर्ब खर्ब गर्ब शर्ब षर्ब चर्ब** गतौ ॥ आद्यः प्रथमान्तः । ततो द्वौ द्वितीयान्तौ । तत एकादश तृतीयान्ताः । द्वितीयतृतीयौ मुक्त्वा सर्वे रोपधाः । पर्पति । पपर्प । रफति । रम्फति । अर्बति । आनर्ब । पर्बति । लर्बति । बर्बति ।

---

१ **गुपू धूप इति** । आयोऽकारान्तः । तत्फलं तु "**गोपायतम्**" इत्यादौ "गोपाय" इत्यस्य धातुस्वरेणान्तोदात्तत्वे शबकारेणैकादेशस्यापि "एकादेश उदात्तेनोदात्तः" इत्यन्तोदात्तत्वे "तम्" इत्यस्यादुपदेशात् परलसार्वधातुकत्वेन "तास्यनुदात्तेन्ङिददुपदेशा"—इत्यनुदात्तत्वे "उदात्तादनुदात्तस्य स्वरितः" इति स्वरितत्वम् ॥ २ **सनाद्यन्ता इति** । "सन्क्यच्काम्यच्क्यङ्क्यषोऽथाऽऽचारक्विब् णिज्यङौ तथा । यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः ॥ संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणनिषेधात् सूत्रेऽन्तग्रहणम् । "**यस्मात्स विहितस्तदादेः**" इत्यंशस्तु प्रवर्तत एव । तेन "देवदत्तश्चिकीर्षति" इत्यादौ देवदत्तादेः समुदायस्य नेति शेखरकृत् ॥ ३ **प्रत्ययान्तेभ्यश्चेति** । **धतुभ्य** इति शेषः ॥ ननु सति प्रत्ययग्रहणे चुलुम्पचकासृदरिद्रातिभ्य आम् न स्यात् प्रत्ययान्तत्वाभावादत आह—**कास्यनेकाजिति** । एतच्च हरदत्तग्रन्थे स्पष्टम् । अत्रत्यं तत्त्वं नामधातौ वक्ष्यामः । ४ "**धूप**" "सन्तापः संज्वरः समौ" इत्यमरः ॥ ५ "**जप**" "मानसं स्वान्तसरसोः" इति कोषः । **चेन पूर्वार्थसंग्रहः** ॥

पवर्गीयादिरयम् । मर्बति । कर्बति । खर्बति । गर्बति । शर्बति । सर्बति । चर्बति ॥ ३१ ॥ **कुवि** आच्छादने[1] । कुम्बति ॥ ३२ ॥ **लुबि तुबि** अर्दने[2] । लुम्बति । तुम्बति ॥ ३४ ॥ **चुबि** वक्त्रसंयोगे[3] । चुम्बति ॥ ३५ ॥ **षृभु षृम्भु** हिंसार्थौ । सर्भति । ससर्भ । सर्भिता। सृम्भति । ससृम्भ । सृभ्यात् ॥ ३७ ॥ **षिभु षिम्भु** इत्येके । सेभति । सिम्भति ॥ ३९ ॥ **शुभ शुम्भ** भाषणे[4] । भासने[5] इत्येके । हिंसायामित्यन्ये ॥ ४१ ॥ **अथानुनासिकान्ताः । तत्र कम्यन्ता अनुदात्तेतो दश । घिणि घुणि घृणि** ग्रहणे । नुम् । णुत्वम् । घिण्णते । जिघिण्णे । घुण्णते । जुघुण्णे । घृण्णते । जघृण्णे ॥ ३ ॥ **घुण घूर्ण**[6] भ्रमणे । घोणते। घूर्णते । इमौ तुदादौ परस्मैपदिनौ ॥ ५ ॥ **पण** व्यवहारे[7] स्तुतौ च । **पन** च । स्तुता[8]-वित्येव सम्बध्यते । पृथङ्निर्देशात् ॥ पनिसाहचर्यात्पणेरपि स्तुतावेवायप्रत्ययः । व्यवहारे[9] तु—पणते । पेणे । पणितेत्यादि । स्तुतावनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मने-पदम् । पणायति । पणायांचकार । पेणे । पणायितासि । पणितासे । पणाय्यात् । पनायति। पनायांचकार । पेने ॥ ७ ॥ **भाम** क्रोधे[10] । भामते । बभामे ॥ ८ ॥ **क्षमूष्** सहने[11] । क्षमते । चक्षमे । चक्षमिषे । चक्षंसे[12] । चक्षमिध्वे । चक्षन्ध्वे । चक्षमिवहे ॥ **म्वोश्च । ८ । २ । ६५ ॥** मान्तस्य धातोर्मस्य नकारादेशः स्यान्मकारे वकारे च परे ॥ णत्वम् । चक्षण्वहे । चक्षमिमहे । चक्षण्महे । क्षमिष्यते । क्षंस्यते । क्षमते । क्षमेत । आशिषि—क्षमिषीष्ट । क्षंसीष्ट । अक्षमिष्ट । अक्षंस्त ॥ ९ ॥ **कमु** कान्तौ । कान्तिरिच्छा[13] ॥ **कमेर्णिङ् । ३ । १ । ३० ॥** स्वार्थे ॥ ङित्त्वात्तङ् । कामयते[14] ॥ **अयामन्ताल्वाय्येत्न्विष्णुषु । ६ । ४ । ५५ ॥** आम् अन्त

---

१ "कुवि" "अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् । अपिधान-तिरोधान-पिधानाच्छादनानि च" इत्यमरः ॥ २ "**लुबि तुबि**" अर्दनं पीडा ॥ ३ "**चुबि**" वक्त्रसंयोगश्चुम्बनम् ॥ ४ "**शुभ**" भाषणं कथनम् ॥ ५ **भासनं** दीप्तिः ॥ ६ **घुण घूर्णेति** । अस्य दीर्घपाठः प्रक्रियालाघवार्थः । ह्रस्वं पठित्वा "उपधायाञ्च" इति दीर्घकरणे प्रक्रियागौरवात् ॥ नन्वस्माद्धातोः "अन्येभ्योऽपि दृश्यन्ते" इति क्वनिपि कृते "विड्वनोरनुनासिकस्य-" इत्यनेन णकारस्याऽऽकारे ह्रस्वपाठे "घुरावा" इति, दीर्घपाठे "घूरावा" इति फलभेदाय दीर्घोच्चारणमावश्यकम्—नच दीर्घे कर्तव्ये परनिमित्तकत्वेन बहिरङ्गस्यात्त्वस्याऽसिद्धत्वादादौ दीर्घे न फलभेद इति वाच्यम्, त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तिस्वीकारादिति चेन्न, कार्यकाल-पक्षे त्रिपाद्यामन्तरङ्गपरिभाषा प्रवर्तत इति प्राचीनसम्मतपक्षाभिप्रायेण प्रक्रियालाघवार्थ इत्यभिधानात् ॥ नव्य-मते तु ह्रस्वपाठः सुवच एव, तन्मते कार्यकालपक्षेऽपि तदप्रवृत्तिस्वीकारात् ॥ ७ "**पण**" **व्यहारः** कुसीदादिः ॥ "वि नानार्थेऽव सन्देहे हरणं हार उच्यते । नानासंदेहहरणाद् **व्यवहार** इति स्मृतः" इति **कात्यायनः** ॥ ८ **स्तुतावित्येवेति** । यद्यपि "पृथङ्निर्देशो यथासंख्यनिवृत्त्यर्थः" इत्यपि शक्यते वक्तुम्, तथापि सम्प्रदायानुरोधादेवमुक्तम् ॥ ९ **व्यवहारे त्विति** । भट्टिस्तु व्यवहारेप्यायप्रत्ययम् 'न चोपलेभे वणिजां पणायाम्' इति प्रायुङ्क्त ॥ १० "**भाम**" उत्कटद्वेषः **क्रोधः** ॥ ११ "**क्षमूष्**" अपराधे सत्यपि कोपानाविष्करणं **सहनम्** ॥ ऊकार इडर्थः । षकारः "षिद्भिदादिभ्योऽङ्" इत्यङर्थः । क्षमा ॥ १२ "**चक्षंसे**" इति । "अनुनासिकस्य" इति दीर्घस्तु न । क्विप्साहचर्येण तिङ्भिन्नस्यैव झलादेर्ग्रहणात् ॥ १३ ननु कान्तिशब्दस्य शोभायां शक्तत्वेन "पुत्रं कामयते" इत्यादिप्रयोगानुपपत्तिरत आह-**कान्तिरिच्छेति** । "**कान्तिः** शोभेच्छयोः स्त्रियाम्" इति कोशादिति भावः ॥ १४ **कामयते इति** । ङित्त्वपि 'क्ङिति च' इति इग्लक्षणत्वाभावादुपधावृद्धिनिषेधो न ॥

आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । वक्ष्यमाणलोपापवादः[1] ॥ कामयांचक्रे ॥ आयादय आर्धधातुके वा ॥ चकमे । कामयिता । कमिता । कामयिष्यते । कमिष्यते ॥ **णिश्रिद्रुस्रुभ्यः कर्तरि चङ् । ३ । १ । ४८ ॥** ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे ॥ काम् इ अ त इति स्थिते ॥ **णेरनिटि ।६।४।५१॥** अनिडादावार्धधातुके परे णेर्लोपः स्यात् । परत्वाद् एरनेकाच इति यणि प्राप्ते-॥ **ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति** वार्तिकम्[2]॥ णिलोपस्य[3] तु पाचयतेः पाक्तिरित्यादि क्तिजन्तमवकाश इति भावः। वस्तुतस्त्वनिटीति[4] वचनसामर्थ्यादार्धधातुकमात्रमस्य विषयः । तथा चेयङादेरपवाद एवायम् । इयङ्-अततक्षत । यण्-आटिटत् । गुणः-कारणा । वृद्धिः-कारकः । दीर्घः-कार्यते ॥ **णौ चङ्युपधाया ह्रस्वः । ७ । ४ । १ ॥** चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥ **चङि । ६ । १ । ११॥** चङि परे अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य ॥ **सन्वल्लघुनि चङ्परेऽनग्लोपे । ७ । ४ । ९३ ॥** चङ्परे इति बहुव्रीहिः । स चाङ्गस्येति च द्वयमप्यावर्तते । अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत् तत्परं यल्लघु तत्परो योऽङ्गस्याभ्यासस्तस्य सनीव कार्यं स्यात् णावग्लोपेऽसति । अथवाऽङ्गस्येति नावर्तते । चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यादि प्राग्वत् ॥ **सन्यतः । ७ । ४ । ७९ ॥** अभ्यासस्यात इकारः स्यात्सनि ॥ **दीर्घो लघोः । ७ । ४ । ९४ ॥** लघोरभ्यासस्य दीर्घः स्यात्सन्वद्भावविषये ॥ अचीकमत ॥ णिङभावपक्षे-" **कमेश्च्लेश्चङ्वक्तव्यः** * ॥ णेरभावान्न दीर्घसन्वद्भावौ । अचकमत ॥ १० ॥

संज्ञायाः[5] कार्यकालत्वादङ्गं यत्र द्विरुच्यते ॥ तत्रैव दीर्घः सन्वच्च नानेकाक्ष्विति माधवः ॥ चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते ॥ किं त्वस्यावयवः कश्चित्तस्मादेकाक्ष्विदं द्वयम् ॥"

---

१ **लोपापवाद इति** । णिलोपापवाद इत्यर्थः ॥ २ ननु परत्वादियङादिषु कृतेषु णिलोपो न स्यादित्यत आह-**ण्यल्लोपाविति** । इयङ्यण्गुणवृद्धिदीर्घेभ्यो णिलोपः वृद्धिदीर्घाभ्यामल्लोप इति विवेकः ॥ ३ ननु णिलोपस्यानवकाशत्वादेव प्रवृत्तिर्भविष्यति किं वार्तिकेनेत्यत आह-**णिलोपस्य त्विति** । "अप्रत्ययात्" इति निषेधेन क्तिनो दुर्लभत्वादाह-**क्तिजन्तमिति** । "**तितुत्र-**" इतीण्निषेधादिति भावः ॥ ४ वार्तिकं प्रत्याख्यातुकाम आह-**वस्तुतस्त्विति** ॥ **वचनसामर्थ्यादिति** । परत्वाद् गुणादीनां णिलोपबाधकत्वे इडादावपि गुणेन बाधसिद्धिरिति भावः ॥ तेन कारणादिसिद्धिः ॥ वस्तुतोऽनेकवचनकल्पनया तत्सामर्थ्ये तत्तद्बाधकल्पनापेक्षया पूर्वविप्रतिषेधकल्पनाया एव "**अनिटि**" इत्यस्यौचित्यमिति बोध्यम् ॥ ५ व्याकरणशास्त्रे जातिव्यक्तिपक्षवत् संज्ञापरिभाषायाविषये पक्षद्वयं विद्यते, तत्र कार्यकालपक्षपातिमाधवमतं तावदाह-**संज्ञाया इति** । अयं भावः-संज्ञाशास्त्राणां कार्यकालपक्षे पृथग् वाक्यार्थबोधाभावेन "**एकाचो द्वे**" इत्यनुवृत्तिसहितस्य "**पूर्वोऽभ्यासः**" इत्यस्य "**सन्वल्लघुनि-**" "**दीर्घो लघोः**" इति सूत्रद्वये संनिधानम् । "**उच्चारणे**" इति कृदन्तमध्याहृतम् । तद्योगाद् "**अङ्गस्य**" इति कर्मणि षष्ठी, कारकविभक्तेर्न्याय्यत्वात् । "**एकाचः**" इति च तत्समानाधिकरणं विशेषणम् । "**द्वे**" इति च विशेष्यसमर्पकम् । एवं च "अङ्गसंज्ञकाभिन्नैकाच्कर्मके ये द्वे उच्चारणे, तयोः पूर्वोऽभ्याससंज्ञः तस्य च सन्वद्भावदीर्घौ" इत्यर्थः ॥ एवं च एकाक्ष्वेव प्रवृत्तिरिति ॥

वस्तुतो'ऽङ्गस्यावयवो योऽभ्यास'इति वर्णनात् ॥ ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे ॥ चकास्तौ तूभयमिदं न स्यात्स्याच्च व्यवस्थया । णेर्विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा ॥ इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात् । णरग्लोपेऽपि संबन्धस्त्वगितामपि सिद्धये ॥ "

**अथ क्रम्यन्तास्त्रिंशत्परस्मैपादिनः ॥ अण रण वण भण मण कण क्वण व्रण भ्रण ध्वण** शब्दार्थाः। अणति । रणति । वणति । वकारादित्वादेत्वाभ्यासलोपौ न। ववणतुः। ववणिथ ॥१०॥**धणिरपि** कश्चित्पठ्यते । धणति ॥ **ओणृ** अपनयने । ओणति । ओणांचकार ॥११॥ **शोणृ** वर्णगत्योः । शोणति । शुशोण ॥ १२ ॥ **श्रोणृ** संघाते । श्रोणति ॥ १३ ॥ **श्लोणृ** च । शोणादयस्त्रयोऽमी तालव्योष्मादयः ॥ १४ ॥ **पैणृ** गतिप्रेरणश्लेषणेषु । **प्रैणृ** इति कश्चित्पठ्यते । पिपैण ॥ १५ ॥ **ध्रण शब्दे** । उपदेशे नान्तोऽयम् । रषाभ्यामिति णत्वम् । ध्रणति । नोपदेशफलं तु यङ्लुकि–दन्ध्रन्ति ॥ १६ ॥ **बणेत्यपि** केचित् । बेणतुः । बेणिथ॥ १७ ॥ **कनी** दीप्तिकान्तिगतिषु । चकान ॥ १८ ॥ **ष्टन वन** शब्दे । स्तनति । वनति ॥ २० ॥ **वन षण** संभक्तौ । वनेरर्थभेदात्पुनः पाठः । सनति । ससान । सेनतुः ॥ **ये विभाषा । ६ । ४ । ४३ ॥** जनसनखनामात्वं वा स्याद्यादौ क्ङिति ॥ सायात् । सन्यात्

---

१ इदं च "अजजागरत्" इत्यादौ सन्वद्भावापादनसमाधानपरभाष्यविरुद्धमत आह–**वस्तुत** इति । **उर्णौ दीर्घ** इति । तेन "**और्णूनवत्**" इति सिद्धम् ॥ **अर्थापयताविति** । तेन "**आर्तिथमत्**" इति सिद्धम् ॥ **चकास्ताविति** । तेन "**अचीचकासत्**" "**अचचकासत्**" इति सिद्धम् ॥ **न स्यादिति** । चङ्परलघोरभावादिति भावः ॥ **स्यादिति** । अभ्यासस्य लघुपरत्वेन विशेषणादिति भावः ॥ २ ननु कथमुभयार्थलाभ इत्यत आह–**णेर्विशेष्यमिति** । "**संनिहितम्**" इति हेतुगर्भविशेषणम् । "**लघुनि**" इत्येतद् णेर्विशेष्यं भवति, संनिहितत्वात् । 'श्रुतानुमितयोः श्रुतसंबन्धो बलीयान्' इति परिभाषाप्रवृत्तेरिति भावः ॥ **अङ्गमेव वेति** । "**चङ्परे**" इत्यस्याङ्गविशेषणत्वेऽङ्गत्वस्य प्रत्ययनिमित्तत्वेनैव निरूपविशेष्यलाभ इति भावः ॥ अयं च पक्षो भाष्य इत्युक्तप्रायम् ॥ ३ ननु स्वकपोलकल्पितत्वेनानादरणीयता स्यादिति तत्र प्रमाणमाह–**इति व्याख्येति** ॥ ४ "**चङ्परे**" इत्यस्यावृत्तिं विधाय अग्लोपिविशेषणतयापि संयोजितस्य फलमाचष्टे–**णेरिति** । **अगितामिति** । कमुप्रभृतीनामित्यर्थः ॥ **सिद्धये इति** । "**दीर्घसन्वद्भावयोः**" इति, "**कृतः**" इति चादावन्ते च शेषः ॥ ५ "**ओणृ**" **अपनयनं** दूरीकरणम् ॥ ६ "**शोणृ**" वर्णश्चात्र रक्त एव । "**शोणः**" कृशानौ स्योनाके लोहिताश्वे नदे पुमान् । त्रिषु कोकनदच्छाये" इति कोशात् । स्योनाकः–"टेण्टू" "अरलू" इति भाषया प्रसिद्धः । **कोकनदं** रक्तोत्पलम्, तद्वत् छाया यस्येति ॥ ७ **गतिर्गमनम्** ॥ ८ "**श्रोणृ**" **संघातः** समूहः । "**संघातः** पुंसि घाते च संहतौ नरकान्तरे" इति मेदिनी ॥ ९ "**पैणृ**" **प्रेरणं** प्रेषणं भृत्यादीनाम् ॥ १० **श्लेषणं** सम्बन्धः ॥ ११ **उपदेशे नान्तोऽयमिति** । अयं पाठः पूर्वोपस्थितत्वाद् "**रण**" धातावेव वक्तुं योग्यः, "**षाट्टवर्गस्तवर्गजः**" इत्यभियुक्तोक्तेस्तत्रापि समत्वात् ॥ **रषाभ्यामिति णत्वमिति** । "**रषाभ्यां परस्य नस्य णत्वम्**" इत्यर्थकेन "**अट्कुप्वाङ्–**" इति सूत्रेणेत्यर्थः । "**रषाभ्यां नो णः समानपदे**" इत्यस्य तु न प्राप्तिः, अटा व्यवधानादिति बोध्यम् ॥ १२ **दन्ध्रन्तीति** । "नुगतोऽनुनासिकान्तस्य" इति अभ्यासस्य नुक् ॥ परनकारस्य तु णत्वस्यासिद्धत्वात् "**नश्चापदान्तस्य**" इत्यनुस्वारे परसवर्णे च कृते तस्यासिद्धत्वान्न णत्वमिति प्रक्रिया ॥ १३ "**कनी**" **दीप्तिस्तेजः कान्तिः** शोभा शरीरादीनाम् ॥ १४ "**वन**" संभक्तिर्भजनम् ॥

॥ २१ ॥ **अम** गत्यादिषु । कनी दीप्तिकान्तिगतीत्यत्र गतेः परयोः शब्दसंभक्त्योरादिशब्देन संग्रहः । अमति । आम ॥ २२ ॥ **द्रम हम्म मीमृ** गतौ । द्रमति । दद्राम । ह्म्यन्तेति न वृद्धिः । अद्रमीत् । हम्मति । जहम्म । मीमति मिमीम । अयं शब्दे च ॥ २५ ॥ **चमु छमु जमु झमु** अदने ॥ **ष्ठिवुक्लमुचमां शिति । ७ । ३ । ७५ ॥** एषामचो दीर्घः स्याच्छिति ॥ **आङि चम इति वक्तव्यम् *** ॥ आचामति ॥ आङि किम् । चमति । विचमति । अचमीत् ॥ २९ ॥ **जिमिं** केचित्पठन्ति ॥ जेमति ॥ **क्रमु** पादविक्षेपे ॥ **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । ३ । १ । ७० ॥** एभ्यः श्यन्वा स्यात्कर्त्रर्थे सार्वधातुके परे ॥ **क्रमः परस्मैपदेषु । ७ । ३ । ७६ ॥** क्रमेर्दीर्घः स्यात्परस्मैपदपरे शिति ॥ क्राम्यति । क्रामति । चक्राम । क्राम्यतु । क्रामतु ॥ **स्नुक्रमोरनात्मनेपदनिमित्ते । ७ । २ । ३६ ॥** अत्रेरेट् । अक्रमीत् ॥ ३० ॥ **अथ रेवत्यन्ता अनुदात्तेतः ॥ अय वय पय मय चय तय णय** गतौ । अयते ॥ **दयायासश्च । ३ । १ । ३७ ॥** दय अय आस् एभ्य आम् स्याल्लिटि । अयांचक्रे । अयेत । अयिषीष्ट ॥ **विभाषेटः । ८ । ३ । ७९ ॥** इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्धन्यः स्यात् । अयिषीढ्वम् । अयिषीध्वम् । आयिष्ट । आयिढ्वम् । आयिध्वम् ॥ **उपसर्गस्यायतौ । ८ । २ । १९ ॥** अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् । प्लायते । पलायते । निसदुसो रुत्वस्यासिद्धत्वान्न लत्वम् । निरयते । दुरयते । निरदुरोस्तु-निलयते । दुलयते ॥ प्रत्यय इति त्विणो रूपम् ॥

---

१ **अयं शब्दे चेति** । " **इमे शब्दे** च " इति वक्तव्ये प्रत्येकाभिप्रायेणैकवचनम् ॥ केचित्तु अयमित्यस्य मीमृधातुरित्यर्थ इति व्याचक्षते ॥ २ " **चमु** " अदनं भक्षणम् ॥ ३ ननु " ष्ठिवुक्लमु " इति दीर्घः, चमतिविचमतीत्यादावपि स्यादत आह-**आङि चम इति** ॥ ४ **जिमिमिति** । अत एव **जेमनं** ब्राह्मणानामित्यादि सिद्धम् ॥ ५ " **क्रमु** " **पादविक्षेपः** पादविहरणम् । उकारः क्त्वि " उदितो वा " इतीड्विकल्पार्थः । क्रमित्वा क्रान्त्वा ॥ ६ **क्रामतीति** । ननु " **क्रमः परस्मैपदेषु** " इति सूत्रे " **परस्मैपदेषु** " इत्युपादानायत्र " **क्रामतु** " इत्यादौ परस्मैपदपरत्वं तत्रैव स्यादितिहेलुकि-**उत्क्राम** इत्यत्र न स्यात् "**न लुमता** " इति निषेधादिति चेन्न, " **क्रमः** " इति सूत्रेऽनुवृत्तस्याङ्गस्य परस्मैपदपरशिनिरूपितस्यैव ग्रहणात् । लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्ये एव निषेधप्रवृत्तेः ॥ ७ **स्नुक्रमोरिति** । "**स्नुक्रमोः**" इति प्रथमार्थे षष्ठी । " **अनात्मनेपदनिमित्ते** " इति प्रसज्यप्रतिषेधः । तथा च " **स्नुक्रमौ यत्रात्मनेपदनिमित्ते** न भवतस्तत्र प्रत्यासत्त्या ताभ्यां परस्यार्धधातुकस्येट् " इत्यर्थः ॥ ८ उदात्तत्वादिटि सिद्धे नियमोऽयम् । तदाह-**अत्रेति** ॥ ९ श्रुतत्वाद् " अयतौ " इत्युपसर्गविशेषणमत आह-**अयतिपरस्येति** । तेन " निलयते " " प्लायते " " पलायते " इत्यादौ सर्वत्र लत्वसिद्धिः । रेफविशेषणत्वे तु " निलयते " इत्यत्र श्रुतिकृताव्यवधान एव स्यादिति भावः ॥ १० **प्लायते इति** । " अचः परस्मिन् " इति स्थानिवत्त्वादयतिपरत्वम् " इति स्पष्टं भाष्ये ॥ ११ प्रादिषु पठितयोर्निर्निसोर्दुर्दुसोश्च सान्तरान्तत्वे फलभेदमाह-**निसदुसोरित्यादिना** ॥ १२ ननु प्रतिपूर्वादयधातोः पचाद्यचि घञर्थे के वा " **उपसर्गस्य** " इति लत्वे च " प्लयय " इति रूपे " **प्रत्ययः परश्च** " इत्यादिनिर्देशानुपपत्तिरत आह-**प्रत्यय इति त्विति** । " **इण् गतौ** " इत्यस्माद् " **एरच्** " इत्यचि गुणे यणि च रूपमिति भावः । प्लयय इति तु न, अनभिधानादिति कैयटः ॥

कथम् उदयति विततोर्ध्वरश्मिरज्जाविति माघः ? इटकिटकटी इत्यत्र प्रश्लिष्टस्य भविष्यति । यद्वा–अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् । चक्षिङो ङित्करणाज्ज्ञापकात् ॥ वादित्वात् ववये । पेये । मेये । चेये । तेये । प्रणयते । नेये ॥ ७ ॥ **दय** दानगतिरक्षणहिंसादानेषु । आदानं ग्रहणम् । दयांचक्रे ॥ ८ ॥ **रय** गतौ ॥ ९ ॥ **ऊयी** तन्तुसन्ताने । ऊयांचक्रे ॥ १० ॥ **पूयी** विशरणे दुर्गन्धे च । पूयते । पुपूये ॥ ११ ॥ **क्नूयी** शब्दे उन्दे च । चुक्नूये ॥१२॥ **क्ष्मायी** विधूनने । चक्ष्माये ॥ १३ ॥ **स्फायी ओप्यायी** वृद्धौ । स्फायते । पस्फाये । प्यायते ॥ **लिड्यङोश्च । ६ । १ । २९ ॥** लिटि यङि च प्यायः पीभावः स्यात् ॥ पुनः प्रसङ्गविज्ञानात्पीशब्दस्य द्वित्वम् ॥ 'एरनेकाच' इति यण् । पिप्ये पिप्याते । पिप्यिरे ॥ **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् । ३ ।१ ।६१॥** एभ्यश्च्लेश्चिण्वा स्यादेकवचने तशब्दे परे ॥ **चिणो लुक् । ६ । ४ । १०४ ॥** चिणः परस्य तशब्दस्य लुक् स्यात् ॥ अप्यायि । अप्यायिष्ट ॥ १५ ॥ **तायृ** सन्तानपालनयोः । सन्तानः प्रबन्धः । तायते । तताये । अतायि । अतायिष्ट ॥ १६ ॥ **शल** चलनसंवरणयोः ॥ १७ ॥ **वल वल्ल** संवरणे संचरणे च । ववले । ववल्ले ॥ १९ ॥ **मल मल्ल** धारणे । मेले । ममल्ले ॥ २१ ॥ **भल भल्ल** परिभाषणहिंसादानेषु । बभले । बभल्ले ॥ २३ ॥ **कल** शब्दसंख्यानयोः । कलते । चकले ॥ २४ ॥ **कल्ल** अव्यक्ते शब्दे । कल्लते । अशब्द इति स्वामी । अशब्दस्तूष्णीम्भाव इति च ॥ २५ ॥ **तेवृ देवृ** देवने । तितेवे । दिदेवे ॥ २७ ॥ **षेवृ गेवृ ग्लेवृ पेवृ मेवृ म्लेवृ** सेवने । परिनिविभ्य इति षत्वम् । परिषेवते । सिषेवे । अयं सोपदेशो·

---

१ **कथमुदयतीति** । आत्मनेपदित्वात् शानचा भाव्यमिति प्रश्नः ॥ २ समाधत्ते–**इटकिटेति** ॥ ३ इकारप्रश्लेषे मानाभाववादिनां मतेप्याह–**यद्वेति** । **अनुदात्तेत्त्वलक्षणमिति** । ननु ङित्वादिप्रयुक्तमात्मनेपदं क्वचिन्न ॥ ४ तत्रोपपत्तिमाह– **ङित्करणादिति** । नचेकारो नानुदात्त इति वाच्यम्, "विचक्षणः प्रथयन्" इत्यत्र "**अनुदात्तेतश्च हलादेः**" इति युजर्थमावश्यकत्वात् । नच ङकाराभावे "**इदितो नुम धातोः**" इति नुमापत्तिस्तत्सत्त्वे त्वन्तेदित्त्वविरहान्न नुमिति वाच्यम्, इकारस्य स्थानेऽकारस्य पाठेनापि नुमभावस्य सिद्धेरित्याशयात् ॥ परंतु भाष्यानुक्तज्ञापितार्थस्य साधुताया नियामकत्वाभावाच्चिन्त्यमेतत् ॥ ५ "**ऊयी**" **तन्तुसंतानः** सूत्रप्रबन्धः ॥ ६ "**क्नूयी**" उन्दः क्लेदनम्, आर्द्रीभाव इत्यर्थः ॥ ७ "**क्ष्मायी**" **विधूननं** कम्पनम् ॥ ८ ननु "प्याय् ए" इति दशायां परत्वाद् "**लिटि धातोरनभ्यासस्य**" इति द्वित्वं बाधित्वा पीभावे कृते "गतौ पूर्वपरयोर्युगपत्प्राप्तौ, यो विप्रतिषेधः=परेण पूर्वबाधः, तस्मिन् सति यत्सकृद्=एकवारं, बाधितं तद्बाधितमेव" इत्यर्थकया "**सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव**" इति परिभाषया पुनर्द्वित्वं न स्यादिति शङ्कमानं प्रत्याह–**पुनः प्रसङ्गेति** । द्वित्वे कृतेऽपि "क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता" इति स्वीकारेण पीभावस्य सावकाशतेत्यभिमानेनायं ग्रन्थः ॥ वस्तुतो लिण्निमित्तकपीभावस्यानवकाशत्वेन चारितार्थ्यस्य वक्तुमशक्यतया चिन्त्योऽयं समाधिः ॥ तस्मात् "**लिटि**" इति विषयसप्तमीति स्वीकार्यम् । एवं च लिडुत्पत्तेः पूर्वमेव पीभावे ततो द्वित्वमिति न दोषः ॥ "**पिप्य**" इत्यादौ "**पी**" इति दीर्घोच्चारणस्य फलाभावेऽपि "**प्यायः पी**" इति पूर्वसूत्रे फलमस्त्येव "पीनं मुखम्, पीनौ बाहू, पीनमुरः" इति । इति बोध्यम् ॥ ९ "**तेवृ देवृ**" **देवनं** क्रीडा ॥ १० **अयमिति** । षेवृ धातुः ॥ **तद्बाष्येति** । सोपदेशत्वं भाष्यविरुद्धम् । षोपदेशलक्षणवाक्ये स्त्यायतिरिवायं न पर्युदस्त इत्ययं दन्त्याजन्तसादित्वात् षोपदेश एव, अन्यथा भाष्यस्य न्यूनत्वापत्तिरिति सोपदेशत्ववादिनो भाष्यविरोध इति भावः ॥

ऽपीति न्यासकारादयः ॥ तद्भाष्यविरुद्धम् । गेवते । जिगेवे । जिग्लेवे । पिपेवे । मेवते । म्लेवते ॥ ३३ ॥ **शेवृ खेवृ केवृ** इत्यप्येके ॥ ३६ ॥ **रेवृ** प्लवगतौ । प्लवगतिः प्लुतगतिः । रेवते ॥ ३७ ॥ **अथावत्यन्ताः परस्मैपदिनः । मव्य** बन्धने । ममव्य ॥ १ ॥ **सूर्क्ष्य ईर्क्ष्य ईर्ष्य** ईर्ष्यार्थाः ॥ ४ ॥ **हय** गतौ । अहयीत् । यान्तत्वान्न वृद्धिः ॥ ५ ॥ **शुच्य** अभिषवे । अवयवानां शिथिलीकरणं सुरायाः सन्धानं वाऽभिषवः स्नानं च । शुशुच्य ॥ ६ ॥ **चुच्य** इत्येके ॥ ७ ॥ **हर्य** गतिकान्त्योः । जहर्य ॥ ८ ॥ **अल** भूषणपर्याप्तिवारणेषु । अलति । आल ॥ **अतो ल्रान्तस्य । ७ । २ । २ ॥** ल्रेति लुप्तषष्ठीकम् । अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः स्यात्परस्मैपदपरे सिचि । नेटीति निषेधस्य अतो हलादेरिति विकल्पस्य चापवादः ॥ मा भवानालीत् ॥अयं स्वरितेदित्येके । तन्मते—अलते इत्याद्यपि ॥ ९ ॥ **ञिफला** विशरणे । तॄफलेत्येत्त्वम् । फेलतुः । फेलुः । अफालीत् ॥ ॥ १० ॥ **मील श्मील स्मील क्ष्मील** निमेषणे । निमेषणं संकोचः । द्वितीयस्तालव्यादिः । तृतीयो दन्त्यादिः ॥ १४ ॥ **पील** प्रतिष्टम्भे । प्रतिष्टम्भो रोधनम् ॥ १५ ॥ **नील** वर्णे । निनील ॥ १६ ॥ **शील** समाधौ । शीलति ॥ १७ ॥ **कील** बन्धने ॥ १८ ॥ **कूल** आवरणे ॥ १९ ॥ **शूल** रुजायां संघोषे च ॥ २० ॥ **तूल** निष्कर्षे । निष्कर्षो निष्को-

---

१ **मव्य बन्धने** । रज्ज्वादिकरणकगत्यादिरोधहेतुसंयोगानुकूलव्यापारो **बन्धनम्** ॥ २ **ममव्येति** । अत्र "**यस्य हलः**" इति यशब्दस्य लोपो न, तत्र "**यस्य**" इति संघातस्य ग्रहणात् । आशिषि–मव्यात् । अत्र "हलो यमां यमि लोपः" इति वा यलोपः ॥ ३ "**सूर्क्ष्य**" **इत्यादि** । अनिष्टानुपेक्षणमीर्ष्या परोत्कर्षगोचरो द्वेष इति वा । लिटि 'सुषूर्क्ष्य' षोपदेशत्वादुत्तरस्य षः ॥ ४ **शिथिलीकरणमिति** । "सोममभिषुणोति" इत्यादौ तथा दर्शनात् । **सुराया इति** । तत्प्रकरणे-"सन्धानं स्यादभिषवः" इत्यमरोक्तेः । **स्नानमिति** । "वारांस्त्रीनभिषुण्वते" इत्यादौ तथा दर्शनात् ॥ ५ यद्यवयववचनेनान्तशब्देन बहुव्रीहिः, अङ्गं चान्यपदार्थस्तर्ह्यन्तग्रहणमनर्थकं विशेषणेनैव तदन्तविधेः सिद्धत्वात्, अन्तशब्दस्य पूर्वनिपातापत्तिश्च । अथ "ओदकान्तादावनान्तात् प्रियं प्रोथ(पान्थ) मनुव्रजेत्" इत्यादौ दृष्टेन समीपवाचिनाऽन्तशब्देन षष्ठीसमासः 'रेफलकारयोः समीपभूतस्यातो वृद्धिः" इति, तर्हि लपिरणिप्रभृतिष्वपि स्यात् अथ "ल्र् च तदन्तश्च" इति कर्मधारयस्तर्हि अन्तशब्दस्य विशेषणत्वात् पूर्वनिपातः स्यादत आह-**लुप्तषष्ठीकमिति** ॥ ६ ननु यदि येन नाप्राप्तिन्यायेन "अतो ल्रान्तस्य" इति सूत्रम् "अतो हलादेः" इति विकल्पस्यैव बाधकं स्यात् तर्हि "मा भवानालीत्" इत्यत्राहलादित्वेन विकल्पाप्राप्तौ "**नेटि**" इति निषेधो दुर्वारः, अथ पुरस्तादपवादन्यायेन "अतो ल्र" इति सूत्रं "**नेटि**" इत्यस्य बाधकं तर्हि "अफालीत्" इत्यादौ "अतो हलादेः" इति विकल्पो दुर्वार इत्याशङ्क्य बाध्यसामान्यचिन्तापक्षाश्रयेण समाधत्ते-**नेटीति** । स्वविषये प्राप्तं सर्वं बाध्यते बाध्यसामान्यचिन्तापक्षाश्रयणादिति भावः ॥ ७ **तॄफलेत्येत्त्वमिति** । यद्यपि "अभ्यासे चर्च" इत्यस्यासिद्धत्वाद् "अतः" इत्येव फलभज्योरेत्त्वाभ्यासलोपौ सिद्धौ तथापि तयोर्ग्रहणमेत्त्वविधिं प्रति सिद्धत्वज्ञापनार्थं, तेन बभणतुरित्यादि सिद्धम् ॥ नच "दिव औत्" इति सूत्र इवाप्रत्ययविधावपि निरनुबन्धकपरिभाषाप्रवृत्त्या "फल निष्पत्तौ" इति धातोरेव ग्रहणं युक्तमिति वाच्यम्, प्रकृतसूत्रस्थचकारेण "ञिफला" इत्यस्यापि ग्रहणात् ॥ ८ **संकोच इति** । नेत्रसंकोच इत्यर्थः, तत्रैव प्रचुरप्रयोगात् ॥ ९ "**नील**" **वर्णश्चात्र** नील एव । धातुस्वरूपतस्तथैव प्रतीतेः ॥ १० "**शील**" चित्तवृत्तिनिरोधः **समाधिः** । समाधीयते चित्तमनेनेति व्युत्पत्तेः "यत्समत्वं द्वयोरत्र जीवात्मपरमात्मनोः । स नष्टसर्वसंकल्पः समाधिरभिधीयते" ॥

षणम् । तच्चान्तर्गतस्य बहिर्निःसारणम् । तुतूल ॥ २१ ॥ पूल संघाते ॥ २२ ॥ मूल प्रतिष्ठायाम् ॥ २३ ॥ फल निष्पत्तौ । फेलतुः । फेलुः ॥ २४ ॥ चुल्ल भावकरणे । भावकरणमभिप्रायाविष्कारः ॥ २५ ॥ फुल्ल विकसने ॥ २६ ॥ चिल्ल शैथिल्ये भावकरणे च ॥ २७ ॥ तिल गतौ । तेलति ॥ २८ ॥ तिल्लेत्येके ॥ तिल्लति ॥ २९ ॥ वेल्ल चेल्ल केल्ल खेल्ल क्ष्वेल्ल वेल्ल चलने । पञ्च ऋदितः षष्ठो लोपधः ॥ ३५ ॥ पेल्ल फेल्ल शेल्ल गतौ ॥ ३८ ॥ षेल्ल इत्येके ॥ ३९ ॥ स्खल संचलने । चस्खाल । अस्खालीत् ॥ ॥ ४० ॥ खल संचये ॥ ४१ ॥ गल अदने । गलति । अगालीत् ॥ ४२ ॥ षल गतौ । सलति ॥ ४३ ॥ दल[1] विशरणे ॥ ४४ ॥ श्वल श्वल्ल आशुगमने । शश्वाल । अश्वालीत् । शश्वल्ल । अश्वल्लीत् ॥ ४६ ॥ खोल खोर्ऋ गतिप्रतिघाते । खोलति । खोरति ॥ ॥ ४८ ॥ धोर्ऋ[2] गतिचातुर्ये । धोरति ॥ ४९ ॥ त्सर[3] छद्मगतौ । तत्सार । अत्सारीत् ॥ ॥ ५० ॥ क्मर[4] हूर्च्छने । चक्मार ॥ ५१ ॥ अभ्र वभ्र मभ्र चर गत्यर्थाः । चरतिर्भक्षणेऽपि । अभ्रति । आनभ्र । मा भवानभ्रीत् । अङ्गान्त्यरेफस्यातः समीपत्वाभावान्न वृद्धिः ॥ ॥ ५५ ॥ ष्ठिवु[5] निरसने । ष्ठिवुक्लम्विति दीर्घः । ष्ठीवति । अस्य द्वितीयस्थकारठकारो वेति वृत्तिः । तिष्ठेव । तिष्ठिवतुः । तिष्ठिवुः । टिष्ठेव । टिष्ठिवतुः टिष्ठिवुः । हलि चेति दीर्घः । ष्ठीव्यात् ॥ ५६ ॥ जि जये । अयमजन्तेषु पठितुं युक्तः । जय उत्कर्षप्राप्तिः । अकर्मकोऽयम् । जयति ॥ सन्लिटोर्जेः । ७ । ३ । ५७ ॥ जयतेः सँन्लिण्निमित्तो[6] योऽभ्यासस्ततः परस्य कुत्वं स्यात् । जिगाय । जिग्यतुः । जिग्युः । जिगयिथ । जिगेथ । जिगाय । जिगय । जिग्यिव । जिग्यिम । जेता । जीयात् । अजैषीत् ॥ ५७ ॥ जीव प्राणधारणे । जिजीव ॥५८॥ पीव मीव तीव णीव स्थौल्ये । पिपीव । मिमीव । तितीव । निनीव ॥ ६२ ॥ क्षिवु क्षेवु निरसने ॥ ६४ ॥ उर्वी तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः । ऊर्वांचकार । उपधायां चेति दीर्घः । तुतूर्व ॥ ६९ ॥ गुर्वी उद्यमने । गूर्वति । जुगूर्व ॥ ७० ॥ मुर्वी बन्धने ॥ ७१ ॥ पुर्व पर्व मर्व पूरणे ॥ ७४ ॥ चर्व अदने ॥ ७५ ॥ भर्व हिंसायाम् ॥ ॥ ७६ ॥ कर्व खर्व गर्व दर्पे ॥ ७९ ॥ अर्व शर्व षर्व हिंसायाम् । आनर्व । शर्वति । सर्वति ॥ ८२ ॥ इवि व्याप्तौ । इन्वति । इन्वांचकार ॥ ८३ ॥ पिवि मिवि णिवि सेचने । तृतीयो मूर्धन्योष्मादिरित्येके । सेवन इति तरङ्गिण्याम् । पिन्वति । पिपिन्व ॥

---

१ “दल” विशरणमवयवानां विभागः । २ “धोर्ऋ” गतिचातुर्यमश्वीयं बोध्यम् ॥ ३ “त्सर” छद्मगतिः कपटगतिः ॥ ४ “क्मर” हूर्छनं कौटिल्यम् । ५ “ष्ठिवु” निरसनं थूत्करणम् ॥ ६ “सँल्लिटोः’ इति सप्तमी, अभ्यासविशेषणं चेत्याशयेनाह—सँल्लिण्निमित्तेत्यादि । “सँल्लिट्परो योऽभ्यासः” इति तु युक्तम्, लाघवात् ॥ नच “जिगीषति” इत्यत्र कुत्वं न स्यात् । अत्र हि द्वितीयाजवधिकस्य जिस्शब्दस्य द्वित्वेन सनः कार्यित्वादिति वाच्यम् । सन्ग्रहणसामर्थ्येन “कार्य्यमनुभवन्” इति न्यायस्येहाप्रवृत्तेरिति प्राञ्चः ॥ दाधिमथास्तु—प्रतीषिषतीत्यादौ सन एव द्वितीयैकाच्त्वेन द्वित्वकार्यित्वेपि प्रकृते सनः पूर्वस्य प्रकृतिभागस्य जिरूपस्य प्रथमैकाचः संभवेन तस्यैव द्वित्वमिति न सनः कार्यित्वमिति न कोऽपि दोष इति वदन्ति ॥

॥ ८९ ॥ **हिवि दिवि धिवि जिवि** प्रीणनार्थाः । हिन्वति । दिन्वति ॥ **धिन्विकृण्व्योर च । ३ । १ । ८० ॥** अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च शब्विषये । अतो लोपः । तस्य स्थानिवद्भावाल्लघूपधगुणो न । उप्रत्ययस्य पित्सु गुणः । धिनोति । धिनुतः । धिन्वन्ति ॥ **लोपश्चास्यान्यतरस्यां म्वोः । ६ । ४ । १०७ ॥** असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्याङ्गस्य लोपो वा स्यात् म्वोः परयोः । धिन्वः । धिनुवः । धिन्मः । धिनुमः । मिपि तु परत्वाद्गुणः । धिनोमि ॥ **उतश्च प्रत्ययादसंयोगपूर्वात् । ६ । ४ । १०६ ॥** असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात्परस्य हेर्लुक् स्यात् । धिनु । नित्यत्वादुकारलोपात्पूर्वमाट् । धिनवाव । धिनवाम । जिन्वति । इत्यादि ॥ ९० ॥ **रिवि रवि धवि** गत्यर्थाः । रिण्वति । रण्वति । धन्वति ॥ ९३ ॥ **कृवि** हिंसाकरणयोश्च । चकाराद्गतौ । कृणोतीत्यादि धिनोतिवत् । अयं स्वादौ च ॥ ९४ ॥ **मव** बन्धने । मवति । मेवतुः । मेवुः । अमवीत् । अमावीत् ॥ ९५ ॥ **अव** रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यालिङ्गनहिंसादानभागवृद्धिषु । अवति । आव । मा भवानवीत् ॥ ९६ ॥ **धावु** गतिशुद्ध्योः । स्वरितेत् । धावति । धावते । दधाव । दधावे ॥ ९७ ॥ **अथोष्मान्ता आत्मनेपदिनः ॥**

---

१ **अतो लोप** इति । "उप्रत्ययश्च" इति संनियोगशिष्टत्वेन अकारोपदेशकालस्य उप्रत्ययोपदेशकालस्य चैकत्वादार्धधातुकोपदेशकालेऽदन्तत्वादिति भावः ॥ २ ननु "धिन्विकृण्व्योर्लोपश्च" इत्येवं लोपविधानेनैव कार्यनिर्वाहेऽकारविधानमनर्थकमिति शङ्कमानं प्रत्याह-**तस्य स्थानिवद्भावादिति** । अल्लोपस्येत्यर्थः । लोपविधाने तु गुणापत्तिः, लोपस्याजादेशत्वाभावेन स्थानिवद्भावाप्रवृत्तेः । पूर्वसूत्रेण स्थानिवत्त्वे तु नैवादेशप्रयुक्तकार्यव्यावृत्तिरिति भावः ॥ नच लोपविधानेऽपि "न धातुलोप" इति निषेधेन गुणो न स्यादिति वाच्यम्, कात्यायनकरिष्यमाणमदीय 'न धातुलोप' इति सूत्रप्रत्याख्याने गुणापत्तिरिति पाणिनिनैवाकारविधानेन सूचनात् । तेन "यथोत्तरं मुनीनां प्रामाण्यम्" इति सिद्धम् ॥ ३ **धिन्वन्ति** इति । नन्वत्रोकारस्यार्धधातुकत्वेन तदादेशस्य यणो वस्यापि स्थानिवत्त्वेनार्धधातुकत्वादिडागमः कुतो नेति चेन्न, उकारवृत्त्यार्धधातुकत्वस्याल्धर्मत्वेन "**अनल्विधौ**" इति निषेधात् ॥ ४-४ अवध्यवधिमतोः साजात्यात् "असंयोगपूर्वात्" इत्यनेन उप्रत्यय एव विशेष्यते इत्याशयेनाह—**प्रत्ययोकार** इति । "असंयोगपूर्वो य उकारस्तदन्तो यः प्रत्ययः" इति तूचितम्, सामानाधिकरण्ये लाघवात् । "धिन्वन्ति" इत्यत्र तदन्तत्वं च व्यपदेशिवद्भावेन ॥ ५ **अयमिति** । कृणोत्यादिप्रयोग इत्यर्थः । कृञ् हिंसायामिति धातोस्तत्र सत्त्वात् ॥ ६ **अमवीत अमावीदिति** । अत्र "अतो हलादेः" इति विकल्पः ॥ यत्तु "इको गुणवृद्धी" इति सूत्रे भाष्ये "अतो ल्रान्तस्य" इति सूत्रे वकारप्रश्लेषमुक्त्वा "मा भवानवीन्मवीत्" इत्यत्र दोषमाशङ्क्य "ह्यन्त-" इत्यत्र "**अविमव्योर्न**" इत्युक्तेरत्र नित्यनिषेध एव लभ्यते इति । तन्न, मध्येऽपवादन्यायेन "**अविमव्योर्न**" इतिनिषेधस्य "**अतो ल्र**" इत्येतन्मात्रबाधकत्वात् ॥ जागर्तौ तु लक्ष्यानुरोधेन बाध्यसामान्यचिन्ताया आश्रयणान्न दोषः । हमयान्तादिविषये तु सामर्थ्याद् विकल्पस्यैव निषेध इति बोध्यम् । अत एव सूत्रभाष्ययोर्न विरोधः । अन्यथा "**सिच्यन्तरङ्गं नास्ति**" इत्यस्य णिश्रिग्रहणेन ज्ञापकेन सिद्धो "**अविमव्योर्न**" इत्यस्याभावेन विकल्पस्य दुर्वारतया विरोधः स्यादेव ॥ "इको गुणवृद्धी" इति सूत्रस्थं भाष्यं प्रौढयुक्तिरिति न दोष इति तु तत्त्वम् ॥ ७ "**अव**" **कान्तिरत्र** शोभा, इच्छा वा, दीप्तेः पृथग्ग्रहणात् । **दीप्तिस्तेजः** । **तृप्तिरिच्छानाशः** । **स्वाम्यर्थः** स्वामिधर्मः, स्वामित्वरूपः । प्राणवियोगानुकूलव्यापारो **हिंसा** हननम् । आदानं ग्रहणम् ॥

**धुक्ष धिक्ष** सन्दीपनक्लेशनजीवनेषु। धुक्षते। दुधुक्षे। धिक्षते। दिधिक्षे॥ २॥ **वृक्ष** वरणे। वृक्षते। ववृक्षे॥ ३॥ **शिक्ष** विद्योपादाने। शिक्षते॥ ४॥ **भिक्ष** भिक्षायाम् लाभे लाभे च। भिक्षते॥ ५॥ **क्लेश** अव्यक्तायां वाचि। बाधन इति दुर्गः। क्लेशते। चिक्लेशे॥ ६॥ **दक्ष** वृद्धौ शीघ्रार्थे च। दक्षते। ददक्षे॥ ७॥ **दीक्ष** मौण्ड्येज्योपनयननियमव्रतादेशेषु। दीक्षते। दिदीक्षे॥ ८॥ **ईक्ष** दर्शने। ईक्षांचक्रे॥ ९॥ **ईष** गतिहिंसादर्शनेषु। ईषांचक्रे॥ १०॥ **भाष** व्यक्तायां वाचि। भाषते॥ ११॥ **वर्ष** स्नेहने। दन्तोष्ठ्यादिः। ववर्षे॥ १२॥ **गेषृ** अन्विच्छायाम्॥ **ग्लेषृ** इत्येके॥ अन्विच्छा अन्वेषणम्। जिगेषे॥ १३॥ **पेषृ** प्रयत्ने। पेषते॥ १४॥ **जेषृ णेषृ एषृ प्रेषृ** गतौ। जेषते। नेषते। एषांचक्रे। पिप्रिये॥ १८॥ **रेषृ हेषृ ह्रेषृ** अव्यक्ते शब्दे। आद्यो वृकशब्दे। ततो द्वावश्वशब्दे। रेषते। हेषते। ह्रेषते॥ २१॥ **कासृ** शब्दकुत्सायाम्। कासांचक्रे॥ २२॥ **भासृ** दीप्तौ। बभासे॥ २३॥ **णासृ रासृ** शब्दे। नासते। प्रणासते॥ २५॥ **णस** कौटिल्ये। नसते॥ २६॥ **भ्यस** भये। भ्यसते। बभ्यसे॥ २७॥ **आङः शसि** इच्छायाम्। आशंसते। आशशंसे॥ २८॥ **ग्रसु ग्लसु** अदने। जग्रसे। जग्लसे॥ ३०॥ **ईह** चेष्टायाम्। ईहांचक्रे॥ ३१॥ **बहि महि** वृद्धौ। बंहते। बबंहे। मंहते॥ ३३॥ **अहि** गतौ। अंहते। आनंहे॥ ३४॥ **गर्ह गल्ह** कुत्सायाम्। जगर्हे। जगल्हे॥ ३६॥ **बर्ह बल्ह** प्राधान्ये। ओष्ठ्यादी॥ ३८॥ **वर्ह वल्ह** परिभाषणहिंसाच्छादनेषु। दन्तोष्ठ्यादी। केचित्तु पूर्वयोर्दन्तोष्ठ्यादितामनयोरोष्ठ्यादितां चाहुः॥ ४०॥ **प्लिह** गतौ। पिप्लिहे॥ ४१॥ **वेहृ जेहृ बाहृ** प्रयत्ने। आद्यो दन्तोष्ठ्यादिः। अन्त्यः केवलोष्ठ्यादिः। उभावप्योष्ठ्यादी इत्येके। दन्तोष्ठ्यादी इत्यपरे।

---

१ "**भिक्ष**" भिक्षा याच्ञा। स्वत्वोत्पत्तिरूपो व्यापारो लाभः। तदभावोऽलाभः। त्रयोऽर्थाः इति ध्येयम्॥ २ "**दीक्ष**" **मौण्ड्यम्** केशशून्यता, **उपनयनं** यज्ञोपवीतः। **इज्या** यागः। **नियमः** संकल्पविशेषः। **व्रतादेशो** व्रतधारणं तदाज्ञा वा। इत्थं पञ्चार्थाः॥ ३ "**भाष**" शुकादिविषये "सम्यग्भाषते" इत्यादिप्रयोगस्त्वारोपात्। अत एव "मृदङ्गशङ्खतूणवाः पृथङ्नदन्ति संसदि" इति प्रयोगस्याप्युपपत्तिः॥ ४ **आद्य** इति। **रेषृ** धातुः। यदाह केशवस्वामी "क्रोष्टे कर्दति पर्दतिर्गुदरवे रेषेत वार्के हसे। बुक्केच्च श्वरवे भषेच्च हयजे हेषेत ह्रेषेत वा" इति॥ ५ **ततो द्वाविति**। हेषृ ह्रेषृ धातू। **अश्वशब्दे** इति। अश्वप्रकरणे "हेषा ह्रेषा च निस्वने" इत्यमरोक्तेः॥ ६ "**कासृ**" शब्दकुत्सा पर्दनम्॥ ७ "**भासृ**" ऋकारोच्चारणमत्रात्मनेपदमात्रफलकम्। नतु "नाग्लोपि-" इत्यस्य प्रवृत्त्यर्थम्। "भ्राजभास-" इत्यनेनोपधाह्रस्वस्य विकल्पात्॥ अनुबन्धान्तराकरणमृकारान्तप्रकरणानुरोधात्॥ ८ **केचिदिति**। मैत्रेयादयः। अत्रारुचिर्बीजं तु देवासुरान् प्रवल्ह्य इति श्रौतप्रयोगविरोधः। "प्रवल्ह्य" इत्यस्य "अनृतं भाषित्वा" इत्यर्थ इति व्याख्यातारः॥ ९ **आद्य** इति। वेहृ धातुः। अत एव "वेहद्गर्भोपघातिनी" इत्यादि संगच्छते॥ १० **अन्त्य** इति। बाहृ धातुः। अत एव "बाहवः परिघोपमाः" इत्यस्योपपत्तिः। नचास्य धातोरात्मनेपदित्वाद् "बबाह स्कं पुरुषास्ततो जाताः सहस्रशः" इति प्रयोगस्यानुपपत्तिरिति वाच्यम्, आर्षत्वात्। "अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्" इति तु भाष्यानुक्तत्वादप्रमाणम्॥

जेहतिर्गत्यर्थोऽपि । बबाहे ॥ ४४ ॥ **द्राहृ** निद्राक्षये । निक्षेपे इत्येके ॥ ४५ ॥ **काशृ** दीप्तौ। चकाशे ॥ ४६ ॥ **ऊह** वितर्के । ऊहांचक्रे ॥ ४७ ॥ **गाहू** विलोडने । गाहते । जगाहे । जगाहिषे । जघाक्षे । जगाहिढ्वे । जगाहिध्वे । जघाढ्वे । गाहिता ॥ **ढो ढे लोपः । ८ । ३ । १३ ॥** ढस्य लोपः स्याड्ढे परे ॥ गाँढा । गाहिष्यते । घाक्ष्यते । गाहिषीष्ट । घाक्षीष्ट । अगाहिष्ट । अँगाढ । अघाक्षाताम् । अघाक्षत । अगाढाः । अघाढ्वम् । अघाक्षि ॥ ४८ ॥ **गृहूँ** ग्रहणे । गर्हते । जगृहे ॥ **ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन*॥** जगृहिषे । जघृक्षे । जघृढ्वे । गर्हिता । गर्ढा । गर्हिष्यते । घर्क्ष्यते । गर्हिषीष्ट । घृक्षीष्ट । लुङि—अगर्हिष्ट । इडभावे—॥ **शल इगुपधादनिटः क्सः । ३ । १ । ४५ ॥** इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् ॥ अघृक्षत॥ **क्सस्याचि । ७ । ३ । ७२ ॥** अजादौ तङि क्सस्य लोपः स्यात् ॥ **अलोऽन्त्यस्य** । अघृक्षाताँम् । अघृक्षन्त ॥ ४९ ॥ **ग्लह** च । ग्लहते ॥ ५० ॥ **घुषि** कान्तिकरणे । घुंषते । जुघुंषे । केचिषेत्यद्धदुपधं पठन्ति ॥ ५१ ॥ **अथार्हत्यन्ताः परस्मैपदिनः ॥ घुषिर्** अविशब्दने । विशब्दनं प्रतिज्ञानं ततोऽन्यस्मिन्नर्थे इत्येके । शब्दे इत्यन्ये पेठुः । घोषति जुघोष । घोषिता । इरित्त्वादङ् वा । अघुषत् । अघोषीत् ॥ १ ॥ **अक्षू** व्याप्तौ ॥ **अक्षोऽन्यतरस्याम् । ३ । १ । ७५ ॥** अक्षो वा श्नुप्रत्ययः स्यात्कर्त्रर्थे सार्वधातुके परे ॥ पक्षे शप् । अक्ष्णोति । अक्ष्णुतः । अक्ष्णुवन्ति । अक्षति । अक्षतः । अक्षन्ति । आनक्ष । आनक्षिथ । आनष्ठ । अक्षिता । अष्टा । अक्षिष्यति । स्कोरिति कलोपः । षढोः कः सि । अक्ष्यति । अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात् । अक्ष्यात् ॥ ऊदित्त्वाद्वेट् । नेटि । मा भवानक्षीत् । अक्षिष्टाम् । अक्षिषुः । इडभावे तु मा भवानाक्षीत् । आष्टाम् । आक्षुः ॥ २ ॥ **तक्षू त्वक्षू** तनूकरणे ॥ **तनूकरणे तक्षः । ३ । १ । ७६ ॥** श्नुः स्याद्वा शब्विषये ॥ तक्ष्णोति तक्षति वा काष्ठम् । ततक्षिथ । ततष्ठ । अतक्षीत् । अतक्षिष्टाम् । अताक्षीत् । अताष्टाम् ॥ तनूकरणे किम् ? वाग्भिः

---

१ " **काशृ** " आकारोपधप्रकरणादयमिह पठित इति मनोरमा ॥ २ " **ऊह** " अनेकधर्मप्रकारकं ज्ञानं वितर्कः । " अयुक्तमप्यूहति पण्डितो जनः " इति प्रयोगः प्रामादिकः ॥ ३ **गाढेति** । लोपे श्रुत्वासिद्धत्वं न, लोपविधानसामर्थ्यात् ॥ ४ **अगाढेति** । " झलो झलि " इति सलोपः । ढत्वधत्वष्टुत्वढलोपाः । सिज्लोपात् पूर्वं भष्भावस्तु न, असिद्धत्वात् ॥ ५ " **गृहू गर्हणे** " इति पाठः । **गर्हणं** निन्दा । "उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे" इत्यमरोक्तेः । "**ग्रहणे** " इति पाठस्तु प्रामादिक इति बोध्यम् ॥ ६ " **अनिटः** " इति स्वादेशसिज्निष्ठस्यानिट्त्वस्य स्थानिनि समारोपात् च्लेर्विशेषणमत आह—**अनिटश्च्लेरिति** । शेखरकृतस्तु—धातुविशेषणत्वे तु " अघुक्षत् " इत्यादौ क्सो न स्यात् , " गुह " इत्यस्य सेट्त्वात् । पाक्षिकानिट्त्वमादायानिट्त्वे तु क्सादेश एव नित्यं स्यात्, इत्याहुः ॥ नच गुहादेश्चव्यवस्थायां गुणः स्यात् इगुपधत्वाभावेऽपि क्सविधानं भूतपूर्वगत्या चरितार्थमिति वाच्यम्, क्सस्य कित्त्वसामर्थ्याद् गुणाप्रवृत्तेः ॥ गुणाभावाय हि तत् ॥ ७ **अघृक्षातामिति** । लोपाभावे "आतो ङितः " इति स्यादिति भावः ॥ एतेन क्सस्य लोपविधानं व्यर्थमजादावेव तस्य प्रवृत्त्या तत्र एतदभावेऽपि सवर्णदीर्घेण सिद्धेरित्यपास्तम् ॥ ८ **प्रतिज्ञानमिति** । तच्च शब्देन स्वाभिप्रायाविष्करणम् ॥

संतक्षति। भर्त्सयतीत्यर्थः॥ ४॥ **उक्ष** सेचने। उक्षांचकार॥ ५॥ **रक्ष** पालने॥ ६॥ **णिक्ष** चुम्बने। प्रणिक्षति॥ ७॥ **तृक्ष स्तृक्ष णक्ष** गतौ। तृक्षति। स्तृक्षति। नक्षति॥ १०॥ **वक्ष** रोषे। संघाते इत्येके॥ ११॥ **मृक्ष** संघाते। **म्रक्ष** इत्येके॥ १२॥ **तक्ष** त्वचने। त्वचनं संवरणं त्वचो ग्रहणं च। **पक्ष** परिग्रह इत्येके॥ १४॥ **सूर्क्ष** आदरे। सुषूर्क्ष॥ अनादर इति तु क्वचित्कोऽपपाठः। अवज्ञावहेलनमसूर्क्षणमित्यमरः॥ १५॥ **काक्षि वाक्षि माक्षि** काङ्क्षायाम्॥ १८॥ **द्राक्षि ध्राक्षि ध्वाक्षि** घोरवासिते च॥ २१॥ **चूष** पाने। चुचूष॥ २२॥ **तूष** तुष्टौ॥ २३॥ **पूष** वृद्धौ॥ २४॥ **मूष** स्तेये॥ २५॥ **लूष रूष** भूषायाम्॥ २७॥ **शूष** प्रसवे। प्रसवोऽभ्यनुज्ञानम्। तालव्योष्मादिः॥ २८॥ **यूष** हिंसायाम्। **जूष** च॥ ३०॥ **भूष** अलङ्कारे। भूषति॥ ३१॥ **ऊष** रुजायाम्। ऊषांचकार॥ ३२॥ **ईष** उञ्छे॥ ३३॥ **कष खष शिष जष झष शष वष मष रुष रिष** हिंसार्थाः। तृतीयषष्ठौ तालव्योष्मादी। सप्तमो दन्त्योष्ठ्यादिः। चकाष। चखाष। शिशेष। शिशेषिथ। शेष्टा। क्सः। अशिक्षत्। अशेक्ष्यत्। जेषतुः। जझषतुः। शेषतुः। ववषतुः। मेषतुः॥ **तीषसहलुभरुषरिषः। ७। २। ४८॥** इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात्॥ रोषिता। रोष्टा। रोषिष्यति। रेषिता। रेष्टा। रेषिष्यति॥ ४३॥ **भष** भर्त्सने। इह भर्त्सनं श्वरवः। भषति। बभाष॥ ४४॥ **उष** दाहे। ओषति॥ **उषविदजागृभ्योऽन्यतरस्याम्। ३। १। ३८॥** एभ्यो लिटयाम्वा स्यात्॥ ओषांचकार। उवोष। ऊषतुः। उवोषिथ॥ ४५॥ **जिषु विषु मिषु** सेचने। जिजेष। क्रादिनियमादिट्। विवेषिथ। विविषिव। वेष्टा। वेक्ष्यति। अविक्षत्॥ ४८॥ **पुष** पुष्टौ। पोषति। पोषिता। पोषिष्यति। अपोषीत्। अनिट्केषु पुष्येति श्यना निर्देशादयं सेट्। अतो न क्सः। अङ्विधौ दैवादिकस्य ग्रहणान्नाङ्॥ ४९॥ **श्रिषु श्लिषु प्रुषु प्लुषु** दाहे। श्रेषति। शिश्रेष। श्रेषिता। श्लेषति। शिश्लेष। श्लेषिता॥ अयमपि सेट्। अनि-

---

१ "णिक्ष" रागहेतुकोऽधरकरणकः संयोगानुकूलो व्यापारश्चुम्बनम्॥ २ **प्रणिक्षतीति।** "**उपसर्गादसमासेऽपि**" इति णत्वम्। "वानिंसनिक्ष–" इति तु "**कृति**" इत्यनुवर्तनात् कृत्येव॥ ३ "सूर्क्ष" सत्कारबोधको व्यापार **आदरः॥** ४ **सुषूर्क्ष इति।** दन्त्याजन्तसादित्वेन षोपदेशत्वादुत्तरस्य षः। "**सुसूर्क्ष**" इति त्वपपाठ इति बोध्यम्॥ ५ 'अनादरे' इत्यस्यापपाठत्वे **हेतुः** "**अवज्ञेत्यादि।** **सूर्क्षणमादरस्ततोऽन्यदसूर्क्षणमिति** असूर्क्षणशब्दार्थः। यदि "**अनादर**" इति पाठः स्यात् तदा अभावाभावस्य प्रतियोगिरूपतयाऽसूर्क्षणशब्दस्यावज्ञापर्यायत्वानुपपत्तिरिति **भावः॥** ६ **तीषसहेति** "**इषेस्तकारे श्यन्प्रत्ययात् प्रतिषेधः**" इति वार्तिकोक्तेरत्र सूत्रे इषग्रहणेन परिशेषादिच्छतोष्णात्योरेव ग्रहणम्॥ ७ नन्वत्रानुवृत्तस्यार्धधातुकशब्दस्य सप्तम्यन्तत्वाभावेन यत्रोभयोर्विशेष्यविशेषणयोः सप्तम्यन्तत्वं तत्रैव प्रवृत्तस्य "यस्मिन्–" इति वचनस्य प्रवृत्त्यभावात् कथं तदादिविधिरिति **चेत्,** प्रकारान्तरेणात्र तदादिविधिर्बोध्यः। तथाहि–पूर्वसूत्राद् "वलादेः" इत्यनुवर्त्यं विशेषणीभूतवल्पदार्थस्य तकारो विशेषणम्, तेन "तकाररूपवलादेः" इति वाच्योऽर्थः। तत्फलितमाह–**तादेरिति॥**

ट्सु दैवादिकस्यैव ग्रहणमिति कैयटादय[1]:। यत्त्वनिट्कारिकान्यासे[2] द्वयोर्ग्रहणमित्युक्तं तत्स्वोक्तिविरोधाद्ग्रन्थान्तरविरोधाच्चोपेक्ष्यम् । पुप्रोष । पुप्लोष ॥ ५४ ॥ **पृषु वृषु मृषु** सेचने । **मृषु** सहने च । इतरौ हिंसासंक्लेशनयोश्च । पर्षति । पृष्यात् ॥ ५६ ॥ **घृषु** संघर्षे ॥ ५७ ॥ **हृषु** अलीके ॥ ५८ ॥ **तुस ह्रस ह्लस रस** शब्दे । तुतोस । जह्रास । जह्लास । ररास ॥ ॥ ६२ ॥ **लस** श्लेषणक्रीडनयोः ॥ ६३ ॥ **घस्लृ** अदने । अयं[3] न सार्वत्रिकः, लिट्य[4]न्यतरस्यामित्यदेर्घस्लादेशविधानात् । ततश्च[5] यत्र लिङ्गं वचनं वास्ति तत्रैवास्य प्रयोगः । अ[6]त्रैव पाठः शपि परस्मैपदे लिङ्गम् । ऌदित्करण[7]मङि । अनिट्कारिकासु पाठो वलाद्यार्धधातुके । क्मरचि[8] तु विशिष्योपादानम् । घसति । घस्ता । **सः स्यार्धधातुके ।७।४।४९॥** सस्य तः स्यात्सादावार्धधातुके ॥ घत्स्यति । घसतु । अघसत् । घसेत् । लिङ्गाद्यभावादाशिष्य[9]स्याप्रयोगः ॥ **पुषादिद्युताद्यॢदितः परस्मैपदेषु । ३ । १ । ५५ ॥** श्यन्[10]विकरणपुषादेर्द्यु-

---

१ **कैयटादय इति**। "श्लिष आलिङ्गने" इति सूत्रस्था इति शेषः।आदिशब्दात् न्यासकार-हरदत्त-वर्धमान-स्वामि-सम्मताकाराः ॥ २ **अनिट्कारिकान्यासे**। काशिकालिखितानिट्कारिकाप्रकरणस्थो न्यासः काशिकाव्याख्याविशेषः ॥ ३ **अयमिति**। घस्लृ धातुः ॥ ४ **लिट्यन्यतरस्यामिति**। तद्धि "जघास" "आद" इति रूपद्वयनिष्पत्तये पाणिनिना व्यरचि, यदि चास्य सर्वत्र प्रयोगो भवेत् तर्हि घस्लृधातोः "जघास" इति, 'अद भक्षणे' इत्यस्य "आद" इति, रूपद्वयसिद्धौ सूत्रमिदं निष्फलमेव स्यादतो नास्य सर्वत्र प्रयोग इति बोधनाय तदिति भावः ॥ ५ ननु क्व तर्हि घस्लृधातोः प्रयोग इत्यत आह-**ततश्चेति**। सार्वत्रिकत्वाभावबोधनाच्च ॥ ६ **अत्रैव पाठ इति**। भ्वादौ परस्मैपदे पाठ इत्यर्थः । न च धातुसंज्ञार्थः पाठ इति वाच्यम्, द्युतात् पूर्वं पाठेनैव सिद्धेऽत्र पाठस्य ज्ञापकत्वात् । एतेनायं द्युतात् पूर्वं पाठ्यः, पुषादिसूत्रे "**घसादि**" इति पाठ्यम्, ऌदित्त्वं च न कार्यमिति मन्दोक्तमपास्तम्, पाठस्याङ्संपादकतया चारितार्थ्येन शपि परस्मैपदे प्रयोगानुपपत्तेः ॥ ७ **ऌदित्करणमिति**। यद्यपि लुङि घस्लादेशेन "अघसत्" इति रूपं सिद्धम्, तथापि स्वतन्त्रस्यास्य "अघात्सीत्" इति रूपवारणायास्य ऌदित्करणं बोध्यम् ॥ ८ **क्मरचीति**। "सृघस्यदः क्मरच्" इति सूत्रे ॥ ९ **आशिषीति**। आशिषीति कथनं चोपलक्षणया यङ्लुक्चिणोर्विषयेऽपि प्रयोगाभावस्य ज्ञापकम् । ननु "**आशिष्यप्रयोगः**" इति न्यूनमाशिषि यत्र लोट् तत्र शपि परस्मैपदे प्रयोगज्ञापकेनैव प्रयोगसंभवादिति चेन्न, "**आशिषि**" इत्यस्य "आशिषि लिङि" इत्यर्थात् ॥ परं तु "**लिट्यन्यतरस्याम्**" इत्येतत्सामर्थ्याल्लिटि मास्तु प्रयोगः, अन्यत्र तु भवत्येव ॥ "जघस्थ" इति रूपवारणे तत्सार्थक्यम् । "जघस्थ" इत्यस्येष्टत्वे हि असार्वत्रिकत्वबोधनेऽपि न कथमपि सार्थक्यम् । अत एव "**उपदेशेऽत्वतः**" इति सूत्रे "**घसेः प्रतिषेधो वक्तव्यो जघसिथ**" इति वार्तिकं तासौ नित्यानिट्त्वाभावात् प्रत्याख्यातं भाष्ये । अन्यथास्य प्रतिषेधार्थं वार्तिकं स्यादिति तत्प्रत्याख्यानासङ्गतिः । अप्प्रत्यये घस्लादेशविधानं तु "अदः" इत्येतद्रूपवारणार्थमित्याहुः इति शेखरकृत् ॥ १० अत्र पुषादयो न भ्वादिपठिता गृह्यन्ते । द्युतादीनां पुषादिपाठोत्तरं पाठेन पुषादिपाठेनैव सामञ्जस्ये द्युतादीनां पृथक्पाठसामर्थ्यात् । नापि चुरादिपठिताः । णिचा व्यवधानात् । नापि क्र्याद्यन्तर्गताः । तेषु पुषादिषु ऌकारपाठेनैव सामञ्जस्येऽत्र सूत्रे पुषादिग्रहणवैयर्थ्यापत्तेः । तेषु च ग्रहधातौ पठितव्यो ऌकारः स्वरितः पाठ्यः, तेनोभयपदं सिद्धम् । इति परिशेषादाह-**श्यन्विकरणेति**। प्रकृतिप्रत्यययोर्मध्ये यः पतितः स **विकरणः** । न च श्यन्विकरणपुषादिषु अत्र पठितेषु, द्युतादिषु चानुबन्धो ऌकारेण निमातव्यस्तेनैवाङः सिद्धौ सूत्रे पुषादिद्युतादिग्रहणवैयर्थ्यमिति वाच्यम्, ञिमिदाञिक्ष्विदाधात्ववयवाऽऽकारस्य "**आदितश्च**" इति सूत्रप्रवृत्त्यर्थमावश्यकतया, स्नस्वादीनामुदित्त्वस्यापि क्त्वायामिड्विकल्पार्थमावश्यकतया च, निमानासंभवात् । नच ञिकारस्यादौ पाठवदनयोर्मध्ये पाठोऽस्त्विति वक्तुं शक्यम्, विपरीतगौरवापत्तेः । एवं स्यन्दूधातोरूदित्त्वमपि न स्यादिति भैरवमिश्राः ॥

तादेर्लृदितश्च परस्य च्लेरङ् स्यात्परस्मैपदेषु ॥ अघसत् ॥ ६४ ॥ **जर्ज चर्च झर्झ** परिभाषणहिंसातर्जनेषु ॥ ६७ ॥ **पिसृ पेसृ** गतौ । पिपिसतुः । पिपेसतुः ॥ ६९ ॥ **हसे** हसने । एदित्त्वान्न वृद्धिः । अहसीत् ॥ ७० ॥ **णिश** समाधौ । तालव्योष्मान्तः । प्रणेशति ॥ ७१ ॥ **मिश मश** शब्दे रोषकृते च । तालव्योष्मान्तौ ॥ ७३ ॥ **शव गतौ** ॥ दन्तोष्ठ्यान्तस्तालव्योष्मादिः । शवति । अशवीत् । अशावीत् ॥ ७४ ॥ **शश** प्लुतगतौ ॥ तालव्योष्माद्यन्तः । शशाश । शेशतुः । शेशुः । शेशिथ ॥ ७५ ॥ **शसु** हिंसायाम् । दन्त्योष्मान्तः । न शसददेत्येत्त्वं न । शशसतुः । शशसुः । शशसिथ ॥ ७६ ॥ **शंसु स्तुतौ** अयं दुर्गतावपीति दुर्गः । 'नृशंसो घातुकः क्रूरः' इत्यमरः । शशंस । आशिषि नलोपः । शस्यात् ॥ ७७ ॥ **चह** परिकल्कने । कल्कनं शाठ्यम् । अचहीत् ॥ ७८ ॥ **मह** पूजायाम् । अमहीत् ॥ ७९ ॥ **रह** त्यागे ॥ ८० ॥ **रहि** गतौ । रंहति । रंह्यात् ॥ ८१ ॥ **दृह दृहि बृह बृहि** वृद्धौ । दर्हति । ददर्ह । ददृहतुः । दृंहति । बर्हति । बृंहति । **बृहि** शब्दे च । बृंहितं करिगर्जितम् ॥ ८५ ॥ **बृहिर्** इत्येके । अबृहत् । अबर्हीत् ॥ ८६ ॥ **तुहिर् दुहिर् उहिर्** अर्दने । तोहति । तुतोह । अतुहत् । अतोहीत् । दोहति । दुदोह । अदुहत् । अदोहीत् । अनिकारिकास्वस्य दुहेर्ग्रहणं नेच्छन्ति । ओहति । उवोह । ऊहतुः । ओहिता । मा भवानुहत् । औहीत् ॥ ८९ ॥ **अर्ह** पूजायाम् । आनर्ह ॥ ९० ॥ **अथ कृपूपर्यन्ता अनुदात्तेतः** ॥ **द्युत** दीप्तौ । द्योतते ॥ **द्युतिस्वाप्योः संप्रसारणम्। ७ । ४ । ६७ ॥** अनयोरभ्यासस्य संप्रसारणं स्यात् । दिद्युते । दिद्युताते । द्योतिता ॥ **द्युद्भ्यो लुङि । १ । ३ । ९१ ॥** द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् ॥ पुषादिसूत्रेण परस्मैपदेऽङ् । अद्युतत् । अद्योतिष्ट ॥ १ ॥ **श्विता** वर्णे । श्वेतते । शिश्विते । अश्वितत् । अश्वेतिष्ट ॥ २ ॥ **ञिमिदा** स्नेहने । मेदते ॥ **मिदेर्गुणः । ७ । ३ । ८२ ॥** मिदेरिको गुणः स्यादित्संज्ञकशकारादौ प्रत्यये ॥ एशं आदिशित्त्वाभावान्नानेन गुणः । मिमिदे । अमिदत् । अमेदिष्ट ॥ ३ ॥ **ञिष्विदा** स्नेहनमोचनयोः । मोहनयोरित्येके । स्वेदते । सिष्विदे । अस्विदत् । अस्वेदिष्ट ॥ ४ ॥ **ञिक्ष्विदा** चेत्येके । अक्ष्विदत् । अक्ष्वेदिष्ट ॥ ५ ॥ **रुच** दीप्तावभिप्रीतौ च । रोचते सूर्यः । हरये रोचते भक्तिः । अरुचत् । अरोचिष्ट ॥ ६ ॥ **घुट** परिवर्तने । घोटते । जुघुटे । अघुटत् । अघोटिष्ट ॥ ७ ॥ **रुट लुट लुठ** प्रतिघाते । अरुटत् । अरोटिष्ट ॥ १० ॥ **शुभ**

---

१ बहुवचनादाद्यर्थावगतिः । "लुङि" इति षष्ठ्यर्थे सप्तमी, तदाह-**द्युतादिभ्य** इति ॥ २ "**ष्ठिवुक्लमु**" इति सूत्रात् "शिति" इत्यनुवर्तते । सा च कर्मधारयात्सप्तमी । अङ्गाक्षिप्तश्च प्रत्ययो विशेष्यः । "**यस्मिन्**" इति तदादिविधिस्तदाह-**इत्संज्ञकशकारादा**विति ॥ ३ इत्थं व्याख्यायाः फलमाह-**एश इति** । बहुव्रीहौ तु "मिमिदे" इत्यत्र गुणः स्यादिति भावः ॥ ४ "**घुट**" इतस्ततो भ्रमणं **परिवर्तनम्** ॥

दीप्तौ ॥ ११ ॥ **क्षुभ** संचलने ॥ १२ ॥ **णभ तुभ** हिंसायाम् । आद्योऽभावेऽपि । नभन्तामन्यके समे । " मा भूवन्नन्यके सर्वे " । इति निरुक्तम् । अनभत् । अनभिष्ट । अतुभत् । अतोभिष्ट । इमौ दिवादी क्र्यादी च ॥ १४ ॥ **स्रंसु ध्वंसु भ्रंसु** अवस्रंसने । ध्वंसु गतौ च । अङि नलोपः । अस्रसत् । अस्रंसिष्ट । नास्रसत्करिणां ग्रैवमिति रघुकाव्ये । **भ्रंशु** इत्यपि केचित्पेठुः । अत्र तृतीय एव तालव्यान्त इत्यन्ये ॥ १७ ॥ **भृशु भ्रंशु** अधःपतन इति दिवादौ ॥ १९ ॥ **स्रम्भु** विश्वासे । अस्रभत् । अस्रम्भिष्ट । दन्त्यादिरयम् । तालव्यादिस्तु प्रमादे गतः ॥ २० ॥ **वृतु** वर्तने । वर्तते । ववृते ॥ **वृद्भ्यः स्यसनोः । १ । ३ । ९२ ॥** वृतादिभ्यः परस्मैपदं वा स्यात्स्ये सनि च ॥ **न वृद्भ्यश्चतुर्भ्यः । ७ । २ । ५९ ॥** एभ्यः सकारादेरार्धधातुकस्येण्न स्यात्तङानयोरभावे ॥ वर्त्स्यति । वर्तिष्यते । अवृतत् । अवर्तिष्ट । अवर्त्स्यत् । अवर्तिष्यत ॥ २१ ॥ **वृधु** वृद्धौ । **शृधु** शब्दकुत्सायाम् । इमौ वृतिवत् ॥ २३ ॥ **स्यन्दू** प्रस्रवणे[६] । स्यन्दते । सस्यन्दे । सस्यन्दिषे । सस्यन्त्से । सस्यन्दिध्वे । सस्यन्ध्वे । स्यन्दिता । स्यन्ता । वृद्भ्यः स्यसनोरिति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्न वृद्भ्य इति निषेधः । स्यन्त्स्यति । स्यन्दिष्यते । स्यन्त्स्यते । स्यन्दिषीष्ट । स्यन्त्सीष्ट । द्युद्भ्यो लुङीति परस्मैपदपक्षे अङ् । नलोपः । अस्यदत् । अस्यन्दिष्ट । अस्यन्त्त । अस्यन्त्साताम् । अस्यन्त्सत । अस्यन्त्स्यत् । अस्यन्दिष्यत । अस्यन्त्स्यत ॥ **अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु । ८ । ३ । ७२ ॥** एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा स्यात् । अनुष्यन्दते अनुस्यन्दते वा जलम् । अप्राणिषु किम् । अनुस्यन्दते हस्ती । अप्राणिष्विति पर्युदासान्मत्स्योदके अनुष्यन्देते इत्यत्रापि पक्षे षत्वं भवत्येव । प्राणिषु नेत्युक्तौ तु न स्यात् ॥ २४ ॥ **कृपू** सामर्थ्ये ॥ **कृपो रो लः । ८ । २ । १८ ॥**

---

१ "**क्षुभ**" **सञ्चलनं** प्रकृतिविपर्यासो मन्थनं च ॥ २ " **स्रंसु** " **अवस्रंसन**मधःपतनम् ॥ ३ "**स्रम्भु**" निर्दोषत्वेनाभिमानो **विश्वासः** ॥ ४ **न वृद्भ्य इति** । स्यन्दतेरूदित्त्वाद् विकल्पेऽन्येभ्यो नित्यमिटि प्राप्ते निषेधोऽयम् ॥ ५ "**गमेरिट्**" इत्यतोऽनुवर्तमानं परस्मैपदपदं तङानयोरभावं लक्षयति तदाह-**तङानयोरभावे इति** । तेन "जिगमिषिता" इत्यादौ तृचि सन इट्सिद्धिः ॥ ६ "**स्यन्दू**" द्रवहेतुकक्रियाविशेषः **प्रस्रवणम्** ॥ ७ **अन्तरङ्गमपीति** । सकारादिविशेषापेक्षत्वादात्मनेपदनिमित्तत्वाभावनिमित्तत्वाच्च निषेधस्य बहिरङ्गत्वमिति भावः ॥ **चतुर्ग्रहणसामर्थ्यादिति** । चतुर्ग्रहणेन हि सर्वेषु प्रत्येकं निषेधव्यापारो ध्वन्यते । अन्यथा "**न वृद्भ्यः**" इत्येतावता सूत्रेण सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । नच चतुर्ग्रहणाभावे कृपेरपि संग्रहापत्तिरिति तन्निवृत्तिरेव चतुर्ग्रहणस्य फलमिति वाच्यम्, "**तासि च**" इति चकारेण सार्वार्धधातुके तस्यापि निषेधसत्त्वात् । ननु यदि इड्विधायकशास्त्रदृष्ट्या प्रतिषेधस्य बहिरङ्गत्वं तदा प्रतिषेधवैयर्थ्यमिति चेन्न, येन नाप्राप्तिन्यायेन आर्धधातुकलक्षणेड्बाधेन "न वृद्भ्यः" इत्यस्य चारितार्थ्यात् । नच "**तासि च**" इति सूत्रस्यापि स्वरतीति सूत्रदृष्ट्या पूर्वोक्तरीत्या बहिरङ्गत्वं स्यादिति तत्राप्यूदित्त्वलक्षणेड्विकल्पापत्तिरिति वाच्यम्, "तासि च" इति सूत्रारम्भसामर्थ्यादेव तत्र विकल्पाप्रवृत्तेरिति भावः ॥ वस्तुतस्तु "अन्तरङ्गादुपजीव्यादपि निषेधा अतिशयेन बलवन्तः" इत्यर्थकया "निषेधाश्च बलीयांसः" इति परिभाषया "स्वरति" इति विकल्पाप्रवृत्तौ चतुर्ग्रहणं स्पष्टार्थमेव । "वृतादिभ्यो यद्यत् प्राप्नोति तत्तद् न" इत्यर्थेन सर्वेषां निषेधार्थेति ध्येयम् ॥

कृपे उः इति छेदः। कृपेति लुप्तषष्ठीकम्। तच्चावर्तते। कृपो यो रेफस्तस्य लः स्यात्। कृपेर्ऋकारस्यावयवो यो रेफसदृशस्तस्य च लकारसदृशः स्यात्। कल्पते। चक्लृपे। चक्लृपिषे। चक्लृप्से इत्यादि स्यन्दिवत्॥ **लुटि च क्लृपः। १।३।९३॥** लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा स्यात्॥ **तासि च क्लृपः। ७। २। ६०॥** क्लृपेः परस्य तासेः सकारादेरार्धधातुकस्य चेण्न स्यात्तङानयोरभावे। कल्प्तासि। कल्प्तास्थ। कल्पितासे। कल्प्तासे। कल्प्स्यति। कल्पिष्यते। कल्प्स्यते। कल्पिषीष्ट। क्लृप्सीष्ट। अक्लृपत्। अकल्पिष्ट। अक्लृप्त। अकल्प्स्यत्। अकल्पिष्यत। अकल्प्स्यत॥ **वृतु॥** वृत्तः संपूर्णो द्युतादिर्वृतादिश्चेत्यर्थः॥ २५॥

**अथ त्वरत्यन्तास्त्रयोदशानुदात्तेतः षितश्च। घट** चेष्टायाम्। घटते। जघटे। '**घटादयो मितः**' इति वक्ष्यमाणेन मित्संज्ञा। तत्फलं तु णौ मितां ह्रस्व इति चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति च वक्ष्यते। घटयति। विघटयति॥ कथं तर्हि कमलवनोद्घाटनं कुर्वते ये। प्रविघाटयिता समुत्पतन् हरिदश्वः कमलाकरानिवेत्यादि? शृणु। 'घट संघाते' इति चौ-

---

१ ननु "कृपो रो ल" इत्यर्थे कल्पते इत्यादिसिद्धावपि चक्लृपे इत्याद्यसिद्धिरत आह–**कृप उः इति च्छेद इति**॥ नन्वेवं च्छेदे यलोपस्यासिद्धत्वेन "आद्गुणः" इति गुणाप्रसिद्धिरत आह–**लुप्तेति**। नन्वेवं "कल्पते" इत्याद्यसिद्धिरत आह–**तच्चेति**। "कृप" इति पदञ्चेत्यर्थः॥ "सकृदुच्चरितः" इति न्यायाविरोधः सम्पूर्णसूत्रावृत्तिमन्तरा न संभवतीत्यतः "**तच्च**" इत्यस्य "सूत्रम्" इत्यर्थः इत्यन्ये॥ आवृत्तिफलं वाक्यभेद इति स्पष्टमेव॥ ननु "क्लृपू सामर्थ्ये" इति पाठेनैव "क्लृप्तः" इत्यादिरूपसिद्धौ गुणे लपरे च कृते "कल्पते" इत्यादिसिद्धौ "**कृपो रो लः**" इति सूत्रं व्यर्थम्। नचवं सति "**कृपणः**" "**कृपा**" इति न स्यादिति वाच्यम्, सूत्रारम्भपक्षेऽत्र लत्वाभावस्य बाहुलकेन सिद्धिवत् "क्लृप्" इति पाठेऽपि लृकारस्य स्थाने बाहुलकाद् ऋकारादेशेनेष्टसिद्धेरिति चेन्न, "**अचीक्लृपत्**" इत्यस्यासिद्ध्यापत्तेः। धातोर्ऋदुपधत्वे तु लत्वस्यासिद्धत्वाद् गुणे प्राप्ते "**उर्ऋत्**" इत्यनेन ऋकारादेशे ततो लत्वे कृते "अचीक्लृपत्" इति सिद्ध्यति। "क्लृपू" इति पाठे तु लृकारस्य "उर्ऋत्" इत्यनेन गुणबाधके ऋकारादेशे कृते "अचीकृपत्" इत्येव स्यात्। नच ऋकारेण सावर्ण्याद् लृकारोपस्थितावान्तरतम्याद् लृकारो भविष्यतीति वाच्यम्, "भाव्यमानेन सवर्णानां ग्रहणं न" इति परिभाषया "अचीकृतत्" इत्यत्र दीर्घऋकारवत् "अचीक्लृपत्" इत्यत्र लृकारस्याप्यप्राप्तेः। "चलीक्लृप्यते" इत्यस्यासिद्ध्यापत्तेश्च। ऋकारेण लृकारग्रहणाद् "रीगृदुपधस्य" इत्यनेन रीगागमे रीशब्दस्यैव श्रवणापत्तेरिति बोध्यम्॥ २ "**तासि च**" "**गमेरिट्**" इति सूत्रादनुवर्तमानं परस्मैपदपदमत्रापि तङानयोरभावे लाक्षणिकमत आह–**तङानयोरभावे इति**। तेन कृपूधातोः सन्नन्तात् तृचि "चिकल्पिषिता" "चिक्लृप्सिता" इति सिद्ध्यति॥ ३ "**वृतु**" इत्यत्र सम्पूर्तिबोधकाद् वृतधातोः कर्तरि क्विप्, ततो व्याचष्टे–**वृत्तः संपूर्ण इति**॥ ४ घटादिगणे ये अन्यविकरणा अनूद्यन्ते, तेषां तत्तत्प्रयुक्ता एव विकरणाः। ये तु भ्वादिस्था एवानूद्यन्ते, स्वतन्त्रा वा पठ्यन्ते, तेषां शबेव। ये अन्यत्राधीता इह पठ्यन्ते तेषामर्थनियमः। ये त्विहैव पठ्यन्ते तेषामुपसर्गादिनाऽर्थान्तरपरत्वेऽपि मित्त्वमस्त्येवेति ध्वनयन्नाह–**विघटयतीति**॥ ५ **कथमिति**। मित्त्वाद्ध्रस्वत्वेन भवितव्यमित्याक्षेपः॥ ६ समाधत्ते–**घट संघाते इतीति**॥ **नच तस्यैवेति**। एवं च विघटयति इत्यादौ मित्त्वं न स्यादिति भावः॥ **नान्ये मित इति**। अनुवादसामर्थ्येन तद्बाधकल्पनापेक्षया स्वातन्त्र्यकल्पनस्यैवौचित्यादिति भावः। नच षित्त्वार्थं चुरादेरयमनुवाद इति शङ्क्यम्, तत्रैव "**घटिष्**" इति पठितुं युक्तत्वात्। "**ण्यासश्रन्थ**" इति युच एव प्रवृत्त्या षित्त्वे फलाभावाच्च॥

रादिकस्येदम् । न च तस्यैवार्थविशेषे मित्त्वार्थमनुवादोऽयमिति वाच्यम् । नान्ये मितोऽहेताविति निषेधात् । अहेतौ स्वार्थे णिचि ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयो मितो नेत्यर्थः ॥ १ ॥ व्यथ भयसंचलनयोः । व्यथते ॥ **व्यथो लिटि । ७ । ४ । ६८ ॥** व्यथोऽभ्यासस्य संप्रसारणं स्याल्लिटि ॥ हलादिःशेषापवादः । थस्य हलादिःशेषेण निवृत्तिः । विव्यथे ॥ २ ॥ **प्रथ** प्रख्याने । पप्रथे ॥ ३ ॥ **प्रस** विस्तारे । पप्रसे ॥ ४ ॥ **म्रद** मर्दने ॥ ५ ॥ **स्खद** स्खदने । स्खदनं विद्रावणम् ॥ ६ ॥ **क्षजि** गतिदानयोः । मित्त्वेसामर्थ्यादनुपधात्वेऽपि चिण्णमुलोरिति दीर्घविकल्पः । अक्षञ्जि । अक्षाञ्जि । क्षञ्जंक्षञ्जम् क्षाञ्जंक्षाञ्जम् ॥ ७ ॥ **दक्ष** गतिहिंसनयोः । योऽयं वृद्धिशैघ्र्ययोरनुदात्तेत्सु पठितस्तस्येहार्थविशेषे मित्त्वार्थोऽनुवादः ॥ ८ ॥ **क्रप** कृपायां गतौ ॥ ९ ॥ **कदि क्रदि क्लदि** वैक्लव्ये । वैकल्य इत्येके । त्रयोऽप्यनिदित इति नन्दी । इदित इति स्वामी । कदिक्रदी इदितौ । क्रद क्लदेति चानिदिताविति मैत्रेयः । कदिक्रदिक्लदीनामाह्वानरोदनयोः परस्मैपदिषूक्तानां पुनरिह पाठौ मित्त्वार्थ आत्मनेपदार्थश्च ॥ १२ ॥ **ञित्वरा** संभ्रमे ॥ १३ ॥ घटादयः षितः । षित्त्वादङ् कृत्सु वक्ष्यते ॥

**अथ फणान्ताः परस्मैपदिनः** ॥ **ज्वर** रोगे । ज्वरति । जज्वार ॥ १ ॥ **गड** सेचने । गडति । जगाड ॥ २ ॥ **हेड** वेष्टने । हेडृ अनादर इत्यात्मनेपदिषु गतः स एवोत्सृष्टोऽनुबन्धोऽनूद्यते अर्थविशेषे मित्त्वार्थम् । परस्मैपदिभ्यो ज्वरादिभ्यः प्रागेवानुवादे कर्तव्ये तन्मध्येऽनुवादसामर्थ्यात्परस्मैपदम् । हेडति । जिहेड । हिडयति । अहिडि । अहीडि । अनादरे तु हेडयति ॥ ३ ॥ **वट भट** परिभाषणे । वट वेष्टने भट भृताविति पठितयोः परि-

---

१ **हलादिःशेषापवाद इति** । "यस्थानिकहलादिःशेषफलितनिवृत्त्यपवादः" इत्यर्थः । नच अभ्यासविकारे बाध्यबाधकभावादिदमयुक्तम्, एवं च वस्यैव संप्रसारणापत्तिरिति वाच्यम्, "लिट्यभ्यास-" इति सूत्रे उभयेषांग्रहणेन "उभयेषां संप्रसारणमेव यथा स्यात् यदन्यत् प्राप्नोति तन्न" इत्यर्थकल्पनया सामान्यत एव अभ्यासलोपाभ्याससंप्रसारणविषये तन्न्यायाप्रवृत्तेर्ज्ञापनेनादोषात् । "सम्प्रसारणं तदाश्रयं च कार्यं बलवत्" इति तु उभयेषांग्रहणवैयर्थ्यापत्त्या "लिट्यभ्यासस्य—" इति सूत्रे भाष्ये एव प्रत्याख्यातमिति तदुपन्यासः केषांचिदयुक्त एवेति दिक् ॥ २ **मित्त्वसामर्थ्यादिति** । असञ्जातविरोधिन्यायेनेति भावः ॥ **अक्षञ्जीति** । ण्यन्ताच्चिणि तशब्दस्य लुक् । **क्षाञ्जंक्षाञ्जमिति** । ण्यन्तादाभीक्ष्ण्ये णमुल् । क्रियासमभिहारे द्वित्वम् । एतत्सर्वं दक्षादिष्वपि बोध्यम् ॥ ३ "दक्ष" "गुरोश्च हलः" इत्यप्रत्ययेन सिद्धेः षित्त्वे फलाभाव इति मनसि निधायाऽऽह-**मित्त्वार्थ इति** ॥ ४ **मित्त्वार्थ आत्मनेपदार्थश्चेति** । चकारेण षित्त्वमप्युपलक्ष्यमनिदित्पाठे । इदित्पाठे तु क्षञ्जिवत् ॥ ५ **उत्सृष्टानुबन्ध इति** । त्यक्तानुबन्ध इत्यर्थः ॥ ६ **प्रागेवेति** । त्वरतेरग्रे इत्यर्थः । षित्त्वं त्रयोदशानामेव, अनुदात्तत्त्वन्त्वन्यथामप्यस्त्विति भावः । **परस्मैपदमिति** । नच परस्मैपदार्थे पाठस्य चारितार्थ्येन कथमर्थविशेषनियमलाभ इति वाच्यम्, घटादिषु पाठेन तत्प्रयुक्तकार्यस्याप्यावश्यकत्वेन विजातीयार्थपाठेन च, अर्थविशेषनियमस्यापि लाभात् ॥ ७ **अहिडि अहीडीति** । "चिण्णमुलोः" इति दीर्घविकल्पः । एतदर्थं तत्र ह्रस्व एव न विकल्पितः । "चिण्णमुलोः" इति सूत्रस्थदीर्घग्रहणप्रत्याख्यानपरभाष्यविरोधादत्रास्य पाठोऽसांप्रदायिकः इति केचित् ॥

भाषणे मित्त्वार्थोऽनुवादः ॥ ५ ॥ **नट** नृत्तौ । इत्थमेव पूर्वमपि पठितम् । तत्रायं विवेकः । पूर्वं पठितस्य नाट्यमर्थः । यत्कारिषु नटव्यपदेशः । वाक्यार्थाभिनयो नाट्यम् । घटादौ तु नृत्यं नृत्तं चार्थः । यत्कारिषु नर्तकव्यपदेशः । पदार्थाभिनयो नृत्यम् । गात्रविक्षेपमात्रं नृत्तम् । केचित्तु घटादौ नट नताविति पठन्ति । गतावित्यन्ये ॥ णोपदेशपर्युदासवाक्ये भाष्यकृता नाटीति दीर्घपाठाद् घटादिर्णोपदेश एव ॥ ६ ॥ **ष्टक** प्रतीघाते । स्तकति ॥ ७ ॥ **चक** तृतौ । तृप्तिप्रतिघातयोः पूर्वं पठितस्य तृप्तिमात्रे मित्त्वार्थोऽनुवादः । आत्मनेपदिषु पठितस्य परस्मैपदिष्वनुवादात्परस्मैपदम् ॥ ८ ॥ **कखे** हसने । एदित्त्वान्न वृद्धिः । अकखीत् ॥ ९ ॥ **रगे** शङ्कायाम् ॥ १० ॥ **लगे** सङ्गे ॥ ११ ॥ **ह्रगे ह्लगे षगे ष्ठगे** संवरणे ॥ १५ ॥ **कगे** नोच्यते । अस्यायमर्थ इति विशिष्य नोच्यते, क्रियासामान्यार्थत्वात् । अनेकार्थत्वादित्यन्ये ॥ १६ ॥ **अक अग** कुटिलायां गतौ ॥ १८ ॥ **कण रण** गतौ । चकाण । रराण ॥ २० ॥ **चण शण श्रण** दाने च । **शग** गतावित्यन्ये ॥ २३ ॥ **श्रथ श्लथ क्नथ क्लथ** हिंसार्थाः । जासिनिप्रहणेति सूत्रे क्राथेति मित्त्वेऽपि वृद्धिर्निपात्यते । क्राथयति ॥ मित्त्वं तु निपातनात्परत्वाच्चिण्णमुलोरिति दीर्घे चरितार्थम् । अक्रथि । अक्राथि । क्रथंक्रथम् क्राथंक्राथम् ॥ २७ ॥ **वन** च । हिंसायामिति शेषः ॥ २८ ॥ **वनु** च । नोच्यते । वनु इत्यपूर्व एवायं धातुर्नतु तानादिकस्यानुवादः । उदित्करणसामर्थ्यात् । तेन

---

१ "**णट नृत्तौ**" इति पाठः । "नट" इति त्वपपाठ इति बोध्यम् ॥ २ नाट्यादिपदानां भेदमाह—**तत्रायं विवेक इत्यादिना । वाक्यार्थाभिनय इति ।** हस्तादिचेष्टया वाक्यार्थसूचनमित्यर्थः । **यथा** "एतद्दृहमेतत्थणिहा" इत्यादिना काव्यप्रकाशे स्पष्टमभिहितम् । पदार्थाभिनयस्तु लोके प्रसिद्ध एव ॥ ३ ननु विशेषानालिङ्गितसामान्यस्याभावेन क्रियासामान्यार्थत्वमयुक्तमत आह—**अनेकार्थत्वादिति** ॥ ४ **निपात्यते इति** । तत्र णिप्रकृतिधातोरेव ग्रहणं न घञन्तस्य, पूर्वोत्तरसाहचर्यादिति भावः ॥ **निपातनं** नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम् ॥ ननु धातुषु दीर्घ एव पठनीयो निपातनापेक्षया लाघवादिति चेन्न, दीर्घणिचोरभावे ह्रस्वोच्चारणस्य चरितार्थत्वात् ॥ ५ ननु घटादिषु क्नथधातोः पाठवैयर्थ्यमत आह—**मित्त्वं त्विति** । निपातनं च चिण्णमुलतिरिक्तविषये चरितार्थम् । "चिण्णमुलोः" इति सूत्रविहितदीर्घस्य वैकल्पिकतया तदभावेऽपि न वृद्धिः, फले विशेषाभावेन दीर्घेण बाधस्य वैयर्थ्यापत्तेः । "चिण्णमुलोः" इति शास्त्रस्य वृद्ध्यभावेऽपि तात्पर्यादिति भावः ॥ ६ **उदित्करणसामर्थ्यादिति** । तानादिकानुवादे तनादेरुदित्त्वेन पुनरत्रोदित्त्वकरणं व्यर्थमित्यर्थः । ननु भौवादिकव्यावृत्त्यर्थमेवोदित्त्वमस्तु एवं चापूर्वत्वासिद्धिरिति चेन्न, "अस्मिन्नेवार्थे मित्त्वम्" इति नियमसत्त्वे उदित्त्वाभावे भ्वादिष्वर्थान्तरे पठितस्य "अर्थविशेषे मित्त्वार्थोऽनुवादः" इति वक्तुं शक्यम्, तत्तु न, "**विशिष्यार्थो नोच्यते**" इत्युक्त्या नियमस्य वक्तुमशक्यत्वादिति पूर्वत्र वनपाठसामर्थ्यादस्य भौवादिकानुवादत्वासम्भवे तानादिकानुवादत्वं वाच्यम्, एवं चोदित्त्वं व्यर्थमेवेत्याशयात् । क्रियासामान्यार्थत्वादेव पूर्वपठितवनोऽपि नानुवादः । "**विशिष्यार्थो नोच्यते**" इत्युक्त्याऽर्थनियमासंभवेन पूर्वत्र वनपाठस्य वैयर्थ्यापत्त्या तदनुवादासंभवात् । उदित्त्वफलं तु णिजभावे बोध्यम् ॥ **शेखरकृतस्तु** "परे तु पूर्वपाठः संभक्तौ शब्दे च "वनोति" इति रूपव्यावृत्त्यर्थः अन्यथाऽनेनैव "वनति" इत्यादिसिद्ध्या तत्रापि तद्वैयर्थ्यं तदवस्थमेव । तनादौ "वनु याचने" इति पाठः । अत्र तु "वन शब्दे" "वन षण संभक्तौ" इति । उदित्त्वमस्य तु 'तानादिकस्यैवात्रानुवादः' इत्यर्थबोधनाय । तेन पूर्वपठितस्य "प्रवानयति" इत्येव रूपम् । तानादिकस्योदित्त्वेन पूर्वपठितस्यानुदित्त्वेन निष्ठायां रूपद्वयं तवापीष्टमेवेत्याहुः" इति वदन्ति ॥

क्रियासामान्ये वनतीत्यादि । प्रवनयति । अनुपसृष्टस्य तु मित्त्वविकल्पो[1] वक्ष्यते ॥ २९ ॥ ज्वल दीप्तौ । णप्रत्ययार्थं पठिष्यमाण एवायं मित्त्वार्थमनूद्यते । प्रज्वलयति ॥ ३० ॥ ह्वल ह्मल चलने । प्रह्वलयति । प्रह्मलयति ॥ ३२ ॥ स्मृ आध्याने । चिन्तायां पठिष्यमाणस्य आध्याने मित्त्वार्थोऽनुवादः । आध्यानमुत्कण्ठापूर्वकं स्मरणम् ॥ ३३ ॥ दॄ भये । दृ विदारणे इति क्र्यादेरयं[2] मित्त्वार्थोऽनुवादः । दृणन्तं प्रेरयति दरयति । भयादन्यत्र दारयति । धात्वन्तरमेवेदमिति मते[3] तु दरतीत्यादि ॥ केचिद्घटादौ अत्स्मृदॄत्वरेति सूत्रे च दॄ इति दीर्घस्थाने ह्रस्वं पठन्ति । तन्नेति[4] माधवः ॥ ३४ ॥ नॄ नये । क्र्यादिषु पठिष्यमाणस्यानुवादः । नयादन्यत्र नारयति ॥ ३५ ॥ श्रा पाके । श्रै इति कृतात्त्वस्य श्रा इत्यादादिकस्य च सामान्येनानुकरणम् । लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य, लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषाभ्याम्[5] । श्रपयति । विक्लेदयतीत्यर्थः । पाकादन्यत्र श्रापयति । स्वेदयतीत्यर्थः ॥ ३६ ॥ मारणतोषणनिशामनेषु ज्ञा । निशामनं चाक्षुषज्ञानमिति माधवः । ज्ञापनमात्रमित्यन्ये । निशानेष्विति पाठान्तरम् । निशानं तीक्ष्णीकरणम् । एष्वेवार्थेषु जानातिर्मित् । ज्ञप मिच्चेति चुरादौ । ज्ञापनं मारणादिकं च तस्यार्थः । कथं[6] विज्ञापना भर्तृषु सिद्धिमेतीति । तज्ज्ञापयत्याचार्य इति च ? शृणु—माधवमतेऽचाक्षुषज्ञाने मित्त्वाभावात् । ज्ञापनमात्रे मित्त्वमिति मते तु ज्ञा नियोग इति चौरादिकस्य । धातूनामनेकार्थत्वात् । निशानेष्विति पठतां हरदत्तादीनां मते तु न काप्यनुपपत्तिः ॥ ३७ ॥ कम्पने चलिः[7] । चल कम्पने इति ज्वलादिः । चलयति शाखाम् । कम्पनादन्यत्र तु शीलं चालयति । अन्यथा करोतीत्यर्थः । हरतीत्यर्थ इति स्वामी । सूत्रं चालयति । क्षिपतीत्यर्थः ॥ ३८ ॥ छदिरूर्जने । छद अपवारण इति चौरादिकस्य स्वार्थे णिजभावे[8] मित्त्वार्थोऽयमनुवादः । अनेकार्थत्वादूर्जेऽर्थे वृत्तिः । छदन्तं प्रयुङ्क्ते छदयति । बलवन्तं प्राणवन्तं वा करोतीत्यर्थः । अन्यत्र छादयति । अपवारयन्तं प्रयुङ्क्ते इत्यर्थः । स्वार्थे णिचि[9] तु छादयति । बलीभवति, प्राणीभवति, अपवारयति वेत्यर्थः ॥ ३९ ॥ जिह्वोन्मथने लडिः । लड विलास इति पठितस्य मित्त्वा-

---

१ विकल्पो वक्ष्यते इति । "ग्लास्नावनुवमां च" इत्यनेनेति भावः ॥ २ क्र्यादेरिति । "दिवादेः" इत्यपि बोध्यम् । ताच्छीलिकप्रकरणान्तेऽस्य दिवादिताया अपि भाष्यसम्मतत्वात् । "क्र्यादेरयमनुवादः" इत्यस्य "भयरूपेऽर्थे मित्त्वार्थः" इत्यादिः । तदाह-भयादन्यत्रेति ॥ ३ इति मते इति । धात्वन्तरमेव युक्तमिति बोध्यम् ॥ ४ तन्नेति माधव इति । यद्ययं ह्रस्वान्तोऽभविष्यत्तदा धातुद्वयेन "दद्रतुः" "ददरतुः" इति रूपद्वयसिद्धौ "शॄदॄप्राम्" इति सूत्रे दॄग्रहणं सूत्रकारो नाकरिष्यदतो ह्रस्वान्तपाठः पाणिनेर्नाभिमत इति तदाशयः ॥ ५ परिभाषाभ्यामिति । द्वयोः परिभाषयोर्विरोधेऽनित्यत्वादुभयोरप्यप्रवृत्तिरिति भावः ॥ ६ कथमिति । माधवान्यमते आक्षेपस्तद् ध्वनयन्नाह-माधवेति । अत्र माधवमतं ज्यायः, "तज्ज्ञापयत्याचार्यः" इति भाष्यप्रयोगसंवादात् "ज्ञीप्स्यमानः" इति रूपं तु "ज्ञा नियोगे" इति चौरादिकस्य ॥ ७ कम्पने चलिरिति । कम्पनेऽर्थे चलधातुर्मिदित्यर्थः । एवं जिह्वोन्मथने इत्यत्रापि बोध्यम् ॥ ८ स्वार्थ णिजभाव इति । "आधृषाद्वा" इति वैकल्पिकत्वादित्यर्थः ॥ ९ स्वार्थे णिचि त्विति । तत्र "नान्ये मितोऽहेतौ" इत्यस्य प्रवृत्तेरिति भावः ॥

र्थोऽनुवादः। उन्मथनं ज्ञापनम्। जिह्वाशब्देन षष्ठीतत्पुरुषः। लडयति जिह्वाम्। तृतीयातत्पुरुषो वा। लडयति जिह्वया। अन्ये तु जिह्वाशब्देन तद्व्यापारो लक्ष्यते। समाहारद्वन्द्वोऽयम्। लडयति शत्रुम्। लडयति दधि। अन्यत्र लाडयति पुत्रम् ॥४०॥ **मदी** हर्षग्लेपनयोः। ग्लेपनं दैन्यम्। दैवादिकस्य मित्त्वार्थोऽयमनुवादः। मदयति। हर्षयति, ग्लेपयति वेत्यर्थः। अन्यत्र मादयति। चित्तविकारमुत्पादयतीत्यर्थः ॥ ४१ ॥ **ध्वन** शब्दे। भाव्ययं मित्त्वार्थमनूद्यते ॥ ध्वनयति घण्टाम्। अन्यत्र ध्वानयति। अस्पष्टाक्षरमुच्चारयतीत्यर्थः ॥ ४२ ॥ अत्र भोजः। **दलि, वलि, स्खलि, रणि, ध्वनि, त्रपि,** क्षपयश्चेति पपाठ। तत्र ध्वनि–रणी उदाहृतौ। दल विशरणे। वल संवरणे। स्खल संचलने। त्रपूष् लज्जायामिति गताः, तेषां णौ। दलयति। वलयति स्खलयति। त्रपयति। क्षि क्षये इति वक्ष्यमाण कृतात्त्वस्य पुका निर्देशः। क्षपयति ॥ ४९ ॥ **स्वन** अवतंसने। शब्द इति पठिष्यमाणस्यानुवादः। स्वनयति। अन्यत्र स्वानयति ॥ ५० ॥ घटादयो मितः ॥ मित्संज्ञा इत्यर्थः ॥ **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च ॥** मित इत्यनुवर्तते। जॄषिति षित्त्वनिर्देशाज्जीर्यतेर्ग्रहणम् ॥ जॄणातेस्तु जारयति। केचित्तु जनी जॄ क्नसु इति पठित्वा क्नसु निरसने इति दैवादिकमुदाहरन्ति ॥ ५४ ॥ **ज्वलह्वलह्मलनमामनुपसर्गाद्वा ॥** एषां मित्त्वं वा। प्राप्तविभाषेयम्[2]। ज्वलयति, ज्वालयति। उपसृष्टे तु नित्यं मित्त्वम्। प्रज्वलयति ॥ कथं तर्हि प्रज्वालयति। उन्नामयतीति? घञन्तात्तत्करोतीति[3] णौ ॥ कथं[4] संक्रामयतीति? 'मितां ह्रस्व' इतिसूत्रे 'वा चित्तविरागे' इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादिति वृत्तिकृत्[5]। एतेन 'रजो विश्रामयन् राज्ञाम्' 'धुर्यान्विश्रामयेति स' इत्यादि व्याख्यातम् ॥ ५८ ॥ **ग्लास्नावनुवमां च ॥** अनुपसर्गादेषां मित्त्वं वा स्यात्। आद्ययोरप्राप्ते इतरयोः प्राप्ते[6] विभाषा ॥ ६२ ॥ **न कम्यमिचमाम् ॥** अमन्तत्वात्प्राप्तं मित्त्वमेषां न स्यात्। कामयते। आमयति। चामयति ॥ ६५ ॥ **शमो** दर्शने ॥ शाम्यतिर्दर्शने मिन्न स्यात्। निशामयति रूपम्। अन्यत्र तु 'प्रणयिनो निशमय्य वधूः कथाः'। कथं तर्हि निशामय तदुत्पत्तिं विस्तराद्गदतो ममेति। शम आलोचन इति चौरादिकस्य। धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः शाम्यतिवत् ॥ ६६ ॥ **यमो**ऽपरिवेषणे ॥ यच्छतिर्भोजनतोऽन्यत्र मिन्न स्यात्। आयामयति। द्राघयति, व्यापारयति वेत्यर्थः। परिवेषणे तु यमयति ब्राह्मणान् भोजयतीत्यर्थः। पर्यवसितं नियमयन्नित्यादि तु नियमवच्छब्दात्तत्करोतीति[7] णौ बो-

---

१ **जिह्वामिति**। तां ज्ञापयतीत्यर्थः। **जिह्वयेति**। तया ज्ञापयतीत्यर्थः। **लडयति शत्रुमिति**। गालयतीत्यर्थः। **दधीति**। विलोडयतीत्यर्थः ॥ २ **प्राप्तविभाषेयमिति**। ज्वल्धातोः पूर्वं पाठात्, नम्धातोरमन्तत्वात् प्राप्तविभाषेत्यर्थः ॥ ३ **घञन्तादिति**। णौ टिलोपेन घञो लोपे तस्य स्थानिवत्त्वान्न "मितां ह्रस्वः" इति भावः ॥ ४ घञा सिद्धिर्न भवति "नोदात्तोपदेशस्य" इति निषेधादतः शङ्कते-**कथं संक्रामयतीति** ॥ ५ **वृत्तिकृदिति**। भाष्ये तु न दृश्यते इति भावः ॥ मूलोक्तप्रयोगेषु बाहुलकत्वाद् दीर्घ इति समाधेयमिति बोध्यम् ॥ ६ **प्राप्ते इति**। वनः पूर्वं पाठात, वमोऽमन्तत्वादित्वादिति भावः ॥ ७ **नियमवच्छब्दादिति**। न च मतुब्लोपे विन्मतोर्लुकष्टिलोपापवादत्वेन "टेः" इत्यस्याप्राप्तौ वृद्धौ पुगापत्तिरिति वाच्यम्, "नियमवत्" इत्यर्थकाद् "अर्शआद्यजन्तनियमशब्दात्" इत्यर्थेनादोषात् ॥

घ्यम् ॥ ६७ ॥ **स्खदिरवपरिभ्यां च** ॥ मित्त्वेत्येव । अवस्खादयति । परिस्खादयति । अपावपरिभ्य इति न्यासकारः । स्वामी तु न कमीति नञमुत्तरत्रिसूत्र्यामननुवर्त्य शम अदर्शने इति चिच्छेद । यमस्त्वपरिवेषणे मित्त्वमाह । तन्मते पर्यवसितं नियमयन्नित्यादि सम्यगेव । उपसृष्टस्य स्खदेश्चेदवादिपूर्वस्येति नियमात्प्रस्खादयतीत्याह । तस्मात् सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः फलितः । इदं च मतं वृत्तिन्यासादिविरोधादुपेक्ष्यम् ॥ ६९ ॥ **फण** गतौ ॥ नेति निवृत्तमसंभवात् । निषेधात्पूर्वमसौ न पठितः । फणादिकार्यानुरोधात् । **फणां च सप्तानाम्** । ६ । ४ । १२५ । एषां वा एत्त्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । फेणतुः । फेणुः । फेणिथ । पफणतुः । पफणुः । फणयति ॥ **वृत्** ॥ घटादिः समाप्तः ॥ फणेः प्रागेव वृदित्येके । तन्मते फाणयतीत्येव ॥ ७० ॥ **राजृ** दीप्तौ । स्वरितेत् । राजति । राजते । रेजतुः । रराजतुः । रेजे । रराजे । अत इत्यनुवृत्तावपि विधानसामर्थ्यादात एत्त्वम् ॥ ७१ ॥ **टुभ्राजृ टुभ्राशृ टुभ्लाशृ** दीप्तौ । अनुदात्तेतः । भ्राजतेरिह पाठः फणादिकार्यार्थः । पूर्वं पाठस्तु ञ्यश्चादिषत्वाभावार्थः । तत्र हि राजिसाहचर्यात् फणादेरेव ग्रहणम् । भ्रेजे । बभ्राजे । वा भ्राशेति श्यन्वा । भ्राश्यते । भ्राशते । भ्रेशे । बभ्राशे । भ्लाश्यते । भ्लाशते । भ्लेशे । बभ्लाशे । द्वावपीमौ तालव्यान्तौ ॥ ७४ ॥ **स्यमु स्वन ध्वन** शब्दे ॥ **स्यमादयः क्षरत्यन्ताः परस्मैपादिनः** । स्येमतुः । सस्यमतुः । अस्यमीत् । स्वेनतुः । सस्वनतुः । अस्वानीत् । अस्वनीत् । विष्वणति । अवष्वणति । सशब्दं भुङ्क्ते इत्यर्थः । वेश्च स्वन इति षत्वम् । फणादयो गताः । दध्वनतुः ॥ ३ ॥ **षम ष्टम** अवैकल्ये । ससाम । तस्ताम ॥ ५ ॥ ज्वल दीप्तौ । अज्वालीत् ॥ ६ ॥ **चल** कम्पने ॥ ७ ॥ **जल** घातने । घातनं तैक्ष्ण्यम् ॥ ८ ॥ **टल ट्वल** वैक्लव्ये ॥ १० ॥ **ष्ठल** स्थाने ॥ ११ ॥ **हल** विलेखने ॥ १२ ॥ **णल** गन्धे । बन्धन इत्येके ॥ १३ ॥ **पल** गतौ । पलति ॥ १४ ॥ **बल** प्राणने धान्यावरोधने च । बलति । बेलतुः । बेलुः ॥ १५ ॥ **पुल** महत्त्वे । पोलति ॥ १६ ॥ **कुल** संस्त्याने बन्धुषु च । संस्त्यानं संघातः । बन्धुशब्देन तद्व्यापारो गृह्यते । कोलति । चुकोल ॥ १७ ॥ **शल हुल पत्लृ** गतौ । शशाल । जुहोल । पपात । पेततुः । पतिता ॥ **पतः पुम्** । ७ । ४ । १९ ॥ अङि परे । अपप्तत् । नेर्गदेति णत्वम् । प्रण्यपप्तत् ॥ २० ॥ **क्वथे** निष्पाके । क्वथति ॥ चक्वाथ । अक्वथीत् ॥ २१ ॥ **पथे** गतौ । अपथीत् ॥ २२ ॥ **मथे** विलोडने । मेथतुः । अमथीत् ॥ २३ ॥ **टुवम** उद्गिरणे । इहैव निपा-

---

१ फणेः प्रागेवेति । "यो व्यर्तीरफाणयत् सुयुक्ताँउपदाशुषे" इत्यादिश्रौतप्रयोगोऽत्रानुकूलः ॥ २ तत्र हीति । षत्वविधौ ॥ ३ "टल ट्वल" वैक्लव्यं भयादिजनितोद्वेगः ॥ ४ तद्व्यापार इति । बन्धुत्वानुकूलो व्यापारः ॥ ५ ननु उत्पूर्वाद् गृधातोर्ल्युटि "इत्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन" इति गुणे "उद्गरण" इति स्यादत आह-इहैवेति ॥ सुधाकर इति । अस्यैवमर्थसहितपाठस्य पाणिनिनाऽपठितस्य प्रमाणस्याभाव इत्यत्रारुचिः ॥ तस्माद् "उद्गरण" इत्येव पाठः साधीयान् । उद्गरणमन्तर्गतस्य मुखेन निस्सारणम् । पृषोदरादित्वेन समादधति केचन ॥

तनाद्दत इत्त्वमिति सुधाकरः । ववाम । ववमतुः । वादित्वादेत्त्वाभ्यासलोपौ न । भागवृत्तौ तु वेमतुरित्याद्यप्युदाहृतं तद्भाष्यादौ न दृष्टम् ॥ २४ ॥ **भ्रमु चलने** । वा भ्राशेति श्यन्वा । भ्रम्यति । भ्रमति । भ्राम्यतीति तु दिवादेर्वक्ष्यते ॥ **वा जॄभ्रमुत्रसाम् । ६ । ४ । १२४ ॥** एषामेत्त्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च । भ्रेमतुः । बभ्रमतुः । अभ्रमीत् ॥ २५ ॥ **क्षर** संचलने । अक्षारीत् ॥ २६ ॥ **अथ द्वावनुदात्तेतौ** ॥ **षह** मर्षणे । परिनिविभ्य इति षत्वम् । परिषहते । सेहे । सहिता । तीषसहेति वा इट् । इडभावे ढत्वधत्वष्टुत्वढलोपाः ॥ **सहिवहोरोदवर्णस्य । ६ । ३ । ११२ ॥** अनयोरवर्णस्य ओत्स्याड्ढलोपे सति ॥ **सोढः । ८ । ३ । ११५ ॥** सोढ्रूपस्य सहेः सस्य षत्वं न स्यात् ॥ परिसोढा ॥ **सिवादीनां वाड्व्यवायेऽपि । ८ । ३ । ७१ ॥** परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि ॥ पर्यषहत । पर्यसहत ॥ १ ॥ **रमु** क्रीडायाम् । रेमे । रेमिषे । रन्ता । रंस्यते । रंसीष्ट । अरंस्त ॥ २ ॥ **अथ कसन्ताः परस्मैपादिनः** ॥ **षद्लृ** विशरणगत्यवसादनेषु ॥ **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । ७ । ३ । ७८ ॥** पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे । सीदति । ससाद । सेदतुः । सेदिथ । ससत्थ । सत्ता । सत्स्यति । लृदित्त्वादङ् । असदत् ॥ सदिरप्रतेः ॥ निषीदति । न्यषीदत् ॥ **सदेः परस्य लिटि । ८ । ३ । ११८ ॥** सदेरभ्यासात्परस्य षत्वं न स्याल्लिटि ॥ निषसाद । निषेदतुः ॥१॥ **शद्लृ** शातने । विशीर्णतायामयम् । शातनं तु विषयतया निर्दिश्यते ॥ **शदेः शितः । १ । ३ । ६० ॥** शिद्भाविनोऽस्मादात्मनेपदं स्यात् ॥ शीयते । शशाद । शेदतुः । शेदिथ । शशत्थ । शत्ता । अशदत् ॥ २ ॥ **क्रुश** आह्वाने रोदने च । क्रोशति । क्रोष्टा । च्लेः क्सः । अक्रुक्षत् ॥ ३ ॥ **कुच** संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । कोचति । चुकोच ॥ ४ ॥ **बुध** अवगमने । बोधति । बोधिता । बोधिष्यति ॥ ५ ॥ **रुह** बीजजन्मनि प्रादुर्भावे च । रोहति । रुरोह । रुरोहिथ । रोढा । रोक्ष्यति । अरुक्षत् ॥ ६ ॥ **कस** गतौ । अकासीत् । अकसीत् ॥ ७ ॥ **वृत्** ॥ ज्वलादिगणः समाप्तः ॥ **अथ गूहत्यन्ताः स्वरितेतः** ॥ **हिक्क**

---

१ **तद्भाष्यादाविति** । "वेमुश्च केचिद्रुधिरम्" इति त्वार्षम् ॥ २ सदिस्वञ्जोरित्यपाणिनीयः पाठः ॥ ३ **विशीर्णतायामिति** । विशरणे इत्यर्थः ॥ ४ ननु शातनं विशीर्णत्वानुकूलो व्यापारः, एवं च तेनार्थकथनमसङ्गतं सकर्मकत्वापत्तेरत आह-**शातनं त्विति** । **विषयतयेति** । विषयतात्र जनकतारूपा । एवं च शातनपदवाच्यो यो व्यापारस्तज्जन्यविशरणमात्रमर्थ इति भावः ॥ ५ शदेस्तिङुत्पत्तेः पूर्वं शितोऽसंभवात् "**शितः**" इत्यस्य शिद्विषये लक्षणा तदाह-**शिद्भाविन** इति । शिद्विशिष्टे लक्षणायां तु शितः शबादेः सार्वधातुकाश्रयत्वेन परस्मैपदे जाते "भुक्तवन्तम्" इति न्यायेनास्य सूत्रस्य वैयर्थ्यापत्तिरिति भावः ॥ ६ "**वृदिति**" । परे तु " ज्वलितिकसन्तेभ्यः " इति सूत्रादत्र वृत्करणमनार्षम् । अन्यथा "ज्वलादिभ्यो णः" इत्येव सूत्रयेदित्याहुः इति शेखरकृत् ॥

अव्यक्ते शब्दे । हिक्कति । हिक्कते ॥ १ ॥ **अञ्चु** गतौ याचने च । अञ्चति । अञ्चते ॥ २ ॥ **अचु** इत्येके ॥ ३ ॥ **अचि** इत्यपरे ॥ ४ ॥ **टुयाचृ** याच्ञायाम् । याचते ॥ ५ ॥ **रेटृ** परिभाषणे । रेटति । रेटते ॥ ६ ॥ **चते चदे** याचने । चचात । चेते । अचतीत् । चचाद । चेदे । अचदीत् ॥ ८ ॥ **प्रोथृ** पर्याप्तौ । पुप्रोथ । पुप्रोथे ॥ ९ ॥ **मिदृ मेदृ** मेधाहिंसनयोः । मिमेद । मिमिदे । थान्ताविमाविति स्वामी । मिमेथ । धान्ताविति न्यासः ॥ ११ ॥ **मेधृ** सङ्गमे च । मेधति । मिमेधे ॥१२॥ **णिदृ णेदृ** कुत्सासन्निकर्षयोः । निनेद । निनिदतुः । निनिदे । निनेदे ॥ १४ ॥ **शृधु मृधु** उन्दने । उन्दनं क्लेदनम् । शर्धति । शर्धते । शर्धिता । मर्धति । मर्धते ॥ १६ ॥ **बुधिर्** बोधने । बोधति । बोधते । इरित्त्वादङ् वा । अबुधत् । अबोधीत् । अबोधिष्ट । दीपजनेति चिण् तु न भवति । पूर्वोत्तरसाहचर्येण दैवादिकस्यैव तत्र ग्रहणात् ॥ १७ ॥ **उबुन्दिर्** निशामने । निशामनं ज्ञानम् । बुबुन्दे । अबुदत् । अबुन्दीत् ॥ १८ ॥ **वेणृ** गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । [1] वेणति । वेणते । नान्तोऽप्ययम् [2] ॥ १९ ॥ **खनु** अवदारणे । खनति । खनते ॥ **गमहनजनखनघसां लोपः क्ङित्यनङि । ६ । ४ । ९८ ॥** एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । चख्नतुः ॥ 'ये विभाषा' खायात् । खन्यात् ॥ २० ॥ **चीवृ** आदानसंवरणयोः । चिचीव । चिचीवे ॥ २१ ॥ **चायृ** पूजानिशामनयोः ॥ २२ ॥ **व्यय** गतौ । अव्ययीत् ॥ २३ ॥ **दाशृ** दाने । ददाश । ददाशे ॥ २४ ॥ **भेषृ** भये । गतावित्येके । भेषति । भेषते ॥ २५ ॥ **भ्रेषृ भ्लेषृ** गतौ ॥ २६ ॥ **अस** गतिदीप्त्यादानेषु । असति । असते । आस । आसे । अयं पान्तोऽपि ॥ २७ ॥ **स्पश** बाधनस्पर्शनयोः । स्पर्शनं ग्रन्थनम् । स्पशति । स्पशते ॥ २८ ॥ **लष** कान्तौ । वा भ्राशेति श्यन्वा । लष्यति । लषति । लेषे ॥ २९ ॥ **चष** भक्षणे ॥ ३० ॥ **छष** हिंसायाम् । चच्छषतुः । चच्छषे ॥ ३१ ॥ **झष** आदानसंवरणयोः ॥ ३२ ॥ **भ्लक्ष भ्रक्ष** अदने ॥ ३४ ॥ **भक्ष** इति मैत्रेयः ॥ ३५ ॥ **दासृ** दाने ॥ ३६ ॥ **माहृ** माने ॥ ॥ ३७ ॥ **गुहू** संवरणे ॥ **ऊदुपधाया गोहः । ६ । ४ । ८९ ॥** गुह उपधाया ऊत्स्याद् गुणहेतावजादौ प्रत्यये । गूहति । गूहते । ऊदित्वादिड्वा । गूहिता । गोढा । गूहिष्यति । घोक्ष्यति । गूहेत् । गुह्यात् । अगूहीत् । इडभावे क्सः । अघुक्षत् ॥ **लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये । ७ । ३ । ७३ ॥** एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि ॥ ढत्वधत्वष्टुत्वढलोपदीर्घाः । अगूढ । अघुक्षत । क्सस्याचीत्यन्तलोपः । अघुक्षाताम् । अघुक्षन्त ।

---

१ "वेणृ" गत्यादयः पञ्चार्थाः । वादनार्थं यत् तस्य ग्रहणं तत्रेत्यर्थः ॥ वादित्रस्य वाद्यभाण्डस्य, वादनार्थमादानं वादित्रग्रहणम् इति मनोरमा ॥ २ नान्तोऽपीति । "इह माता महिषमन्ववेनत" इति दर्शनादिति भावः ॥

अगुह्वहि । अघुक्षावहि । अघुक्षामहि ॥ ३८ ॥ **अथाजन्ता उभयपदिनः** ॥ **श्रिञ् सेवा-याम्** । श्रयति । श्रयते । शिश्रियतुः । श्रयिता । णिश्रीति चङ् । अशिश्रियत् ॥ १ ॥ **भृञ् भरणे** । भरति । बभार । बभ्रतुः । बभर्थ । बभृव । बभृषे । भर्ता ॥ **ऋद्धनोः स्ये** । ७ । २ । ७० ॥ ऋतो हन्तेश्च स्यस्य इट् स्यात् ॥ भरिष्यति ॥ **रिङ् शयग्लिङ्क्षु** ।

---

१ **अगुह्वहीति** । " लोपो यि " इत्यतः " लोपः " इत्यनुवर्तमाने पुनर्लुग्ग्रहणं सर्वादेशार्थम् " इति सर्वस्य क्सस्य "दन्तोष्ठ्यो वः स्मृतो बुधैः " इति शिक्षाप्रामाण्येन वकारस्य दन्त्यत्वमाश्रित्य लुगिति प्राञ्चः कैयटानुसारिणः ॥ वस्तुतस्तु " **न पदान्त** " सूत्रे भाष्ये " **पूर्वत्रासिद्धे न स्थानिवत्** " इत्यस्य प्रयोजननिरूपणावसरे " **क्सलोपः सलोपे** " इति वार्तिकस्य क्सलोपः सलोपे प्रयोजनम् । अदुग्ध, अदुग्धाः । " **लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये** " इति न कर्तव्यं भवति" इति भाष्यग्रन्थेन " **वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये** " इत्येवमेव सूत्रे कृते " **घोर्लोपो लेटि वा** " इत्यतो लोपपदमनुवर्त्य क्सस्यान्त्याकारस्य लोपे कृतेऽपि " **झलो झलि** " इति सलोपस्य त्रैपादिकत्वेन तस्मिन् कर्तव्ये क्ससम्बन्ध्यकारलोपस्य स्थानिवत्त्वनिषेधेन सिद्धत्वाल्लुग्ग्रहणं न कर्तव्यं भवति इत्यर्थकेन वहिप्रत्यये सलोपाप्राप्त्या फलभेदापत्त्या न भवत्येवात्र क्सलुक् । अन्यथा फलभेदे प्रत्याख्यानासंभवात् " **न कर्तव्यं भवति** " इति भाष्यमसङ्गतमेव स्यात् ॥ यद्यपि कैयटेन " **लुग्ग्रहणं न** " इति प्रयोजनग्रन्थस्य " **कर्तव्यं भवति** " इति निराकरणग्रन्थः, इति व्याख्यातत्वात् नैव भाष्यविरोधः, तथापि कैयटस्य सार्वत्रिक-भाष्यशैलीविरुद्धत्वेनानादरणीयत्वमेव । तथा हि–भाष्यकारस्य शैली=प्रत्याख्यानोत्तरं " **न तर्हीदानीमयं योगो वक्तव्यः** " इत्यनुयोगोत्तरमेव " **वक्तव्यश्च** " इत्युत्तरस्य " **किं प्रयोजनम्** " इत्यादिक " **षष्ठी स्थानेयोगा** " "**प्रत्ययलोपे**–" इत्यादिसूत्रेषूपलभ्यते । तथात्राभावान्न " **कर्तव्यं भवति** " इति च्छेदो भाष्यसम्मतः । एवं च दन्त्यपदेन वकारग्रहणे फलभेदस्तदवस्थ एव, लुक्पक्षे सकाराश्रवणम्, प्रत्याख्यानपक्षे सकारस्य लोपाप्राप्त्या सकारश्रवणमिति रूपभेदप्राप्तिः । तस्माल्लुग्विधायकसूत्रेऽपि दन्त्यपदेन केवल-दन्त्य एव गृह्यते न तु दन्तोष्ठ्योऽपि, इति कल्पनीयम् । वस्तुतस्तु " **सिद्धमेङः सस्थानत्वात्** " इति वार्तिकेन एङंशे कण्ठस्थानस्यैव लुग्ग्रहणप्रत्याख्यानपरभाष्येण वकारस्य दन्तस्थानस्यापि स्वीकाराभाव एव सूच्यते । किंच वकारोच्चारणे यथौष्ठव्यापारोऽनुभूयते । न तथा दन्तव्यापारः । शिक्षाकाराशयोऽपि " **उवोपोपध्मा ओष्ठे** " इति वकारस्य केवलोष्ठस्थानजत्ववर्णककात्यायनप्रातिशाख्यानुसारेणैव वर्णनीय इति न परस्परमृषिवाक्यविरोधसंभावना । ननु तत्र दन्तोष्ठ्यपदोपादानेन कथमेकवाक्यता करणीया परस्परमृषिकथनयोरिति चेत् । शृणु– ' शिवो भगवान्, भक्तिरस्य ' इति विग्रहे यथा शिवशब्दं पृथक्कृत्य भगवच्छब्दादेव ' शिवभागवतः ' इत्यत्र तद्धितवृत्तिर्भवति तथैव ' दन्तसंनिकृष्टावर्थाद् आभ्यन्तरभागावच्छिन्नावोष्ठौ दन्तोष्ठौ तयोर्भवः ' इति विग्रहे दन्तशब्दं पृथक्कृत्य केवलाद् ओष्ठशब्दादेव ' शरीरावयवाद्यत् ' इति यत्प्रत्यये निष्पन्नेन दन्तोष्ठ्यशब्देनापि केवलौष्ठस्थानताया एव प्रतीतेरेकवाक्यता संभवत्येवेति । नचैवं दन्तशब्दोपादान-मेव व्यर्थमिति वाच्यम् , अन्तस्थवकारस्य: दन्तसंनिकृष्टावोष्ठावेव स्थाने न तु स्पर्शवकारस्येव दन्तविप्रकृष्टौ बहिर्भागविशिष्टावोष्ठौ' इत्यनयोः परस्परवैलक्षण्यद्योतनाय दन्तपदोपादानसार्थक्यादिति नास्त्येव वकारे दन्त्यत्वमित्येव भाष्यकृतां सिद्धान्तः ॥ केवलतवर्गग्रहणे " **तौ** " इत्येव सिद्धौ दन्त्यपदेन वकारोऽपि गृह्यते" इति चेत् दन्त्यत्वाभावेन ग्रहणानापत्तेः " **यथोत्तरं मुनीनां प्रामाण्यम्** " इति वदन्ति प्रतिभाशालिनो धीमन्तः ॥ २ " **ऋद्धनोः** " इति । " एकाचः" इति निषेधे प्राप्ते इदम् । अत्र " वलादेः " इत्यनुवर्तते । तेन " वलादेः स्यस्येट् " इति सूत्रार्थः । फलमग्रे स्फुटीभविष्यति ॥

७ । ४ । २८ ॥ शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् ॥ रीङि[2] प्रकृते रिङ्विधिसामर्थ्याद्दीर्घो न । भ्रियात् ॥ **उश्च । १ । २ । १२ ॥** ऋवर्णात्परौ झलादी लिङ् तङ्-परः सिचेत्येतौ कितौ स्तः ॥ भृषीष्ट । भृषीयास्ताम् । अभार्षीत् । अभार्ष्टाम् । अभार्षुः ॥ **ह्रस्वादङ्गात् । ८ । २ । २७ ॥** सिचो लोपः स्याज्झलि ॥ अभृत । अभृषाताम् । अभरिष्यत् ॥ २ ॥ **हृञ् हरणे ।** हरणं प्रापणं स्वीकारः स्तेयं नाशनं च । जहर्थ । जह्रिव । जह्रिषे । हर्ता । हरिष्यति ॥ ३ ॥ **धृञ् धारणे ।** धरति । अधार्षीत् । अधृत ॥ ४ ॥ **णीञ् प्रापणे ।** निनयिथ । निनेथ । निन्यिषे ॥ ५ ॥ **अथाजन्ताः परस्मैपदिनः ॥ धेट् पाने ।** धयति ॥ **आदेच उपदेशेऽशिति । ६ । १ । ४५ ॥** उपदेशे एजन्तस्य धातोरात्त्वं स्यान्न तु शिति ॥ **आत औ णलः । ७ । १ । ३४ ॥** आदन्ताद्धातोर्णल औकारादेशः स्यात् ॥ दधौ ॥ **आतो लोप इटि च । ६ । ४ । ६४ ॥** अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात् ॥ द्वित्वात्परत्वाल्लोपे प्राप्ते द्विर्वचनेऽचीति निषेधः । द्वित्वे कृते आल्लोपः । दधतुः । दधुः । दधिथ । दधाथ । दधिव । धाता ॥ **दाधा घ्वदाप् । १ । १ । २० ॥** दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना ॥ **एर्लिङि । ६ । ४ । ६७ ॥** घुसंज्ञानां मास्थादीनां च एत्वं

---

१ **रिङ्शयग्लिङ्क्ष्विति ।** ननु रिङादेशापेक्षया लाघवाद् ऋदन्तानामिगागमविधानेनापीष्टसिद्धौ किं रिङादेशेनेति चेन्न, रेफोच्चारणस्य स्पष्टार्थत्वात् । एवं निर्दिश्यमानपरिभाषया सिद्धे ङकारोच्चारणमपि स्पष्टार्थमेव ॥ २ ननु रिङादेशे "भ्रि+यात्" इति दशायाम्-"अकृत्सार्व-" इति दीर्घः स्यादत आह-**रीङि प्रकृते इति ।** 'रीङ् ऋतः' इति पूर्वसूत्राद् "रीङ्" इत्यनुवर्तमाने पुनरत्र ह्रस्वरिङ्विधानं दीर्घाभावं ज्ञापयतीति भावः ॥ ३ **ह्रस्वादङ्गात् इति ।** अङ्गग्रहणमङ्गसंज्ञानिमित्तस्य लोपार्थम्, तच्च पूर्वापरसाहचर्यात् सिजेव । तदाह-**सिच इति ॥** ४ **हरणं प्रापणमिति ।** भारं हरति । अंशं हरति । स्वर्णं हरति । पापं हरति । इति क्रमेणोदाहरणानि । ५ **आदेच इति ।** "**उपदेशे**" इति षष्ठ्यर्थे सप्तमी । तेन "**एजन्तस्योपदिश्यमानस्य**" इत्यर्थः । कर्मव्युत्पन्नन "**उपदेश**" इति पदेन आद्योच्चारणविषय उच्यते । तेन "**ढौकिता**" इत्यादौ न दोषः । समुदायस्योपदिश्यमानत्वं नतु तदवयवस्य, तदुपदेशे तात्पर्याभावात् । तादृशश्च प्रायेण धातुरेवेत्यभिप्रेत्याह-**धातोरिति ।** धातोरित्यस्यानुवृत्तौ तु न दृढतरं मानम् 'अथापि निवृत्तम् । एवमपि न दोषः' इत्यग्रिमभाष्यात् ॥ अत एव "नानुबन्धकृतमनेजन्तत्वम्" इति परिभाषायाम्-"उदीचां माङः" इति निर्देशस्य ज्ञापकता सुस्थेति दिक् ॥ **नतु शितीति ।** अत्र "**शिति**" इति "शिति प्रत्यये" इत्येतद्वाक्यैकदेशः । तेन तदादिविधौ "**इत्संज्ञकशकारादौ न**" इत्यर्थः । एवं च "**जग्ले**" इत्यस्य सिद्धिः ॥ "**शिति**" इति विषयसप्तमी । तेन "ग्लायति" इत्यादौ शबुत्पत्तेः प्रागपि नात्वम् ॥ ६ "**आतो लोप इटि च**" इडागम एव, अन्यासंभवात् । "जगे" इत्यादौ त्वजादिकित्त्वादेव सिद्धम् ॥ इट आर्धधातुकत्वं तदवयवत्वाद् बोध्यम् । "क्ङिति" इत्यार्धधातुकस्यैव विशेषणं नत्विटः, इड्ग्रहणसामर्थ्यात् ॥ ७ "**दारूपाः**" इति । "प्रयोगे" इति । शेषः । प्रयोगस्थदाधारूपाणामेव सूत्रेऽनुकरणात् । दारूपाश्चत्वारः, "डुदाञ्" 'दाण्' "दो" "देङ्" इति धारूपौ द्वौ, "डुधाञ्" "धेट्" इति । एवं च दाश्च दाश्च दाश्च दाश्च दाः । धाश्च धाश्च धौ । दाश्च धौ च दाधा इति विग्रहः । यद्यपि लाक्षणिकत्वाद् दोदेङ्धेटां कृतात्वानां न प्राप्नोति, तथापि "गामादाग्रहणेष्वविशेषः" इति परिभाषया न दोषः । तस्यां च दैपः पित्त्वमेव ज्ञापकम् ॥ ८ "**धारूपा**" इति । प्रयोगबाहुल्येन बहुवचनम् । धारूपयोर्द्वित्वात् ॥

स्यादार्धधातुके किति लिङि ॥ धेयात् । धेयास्ताम् । धेयासुः ॥ **विभाषा धेट्श्व्योः । ३ । १ । ४९ ॥** आभ्यां च्लेश्चङ् स्यात्कर्तृवाचिनि लुङि परे ॥ चङीति द्वित्वम् । अदधत् । अदधताम् ॥ **विभाषा घ्राधेट्शाच्छासः । २ । ४ । ७८ ॥** एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे ॥ अधात् । अधाताम् । अधुः ॥ **यमरमनमातां सक् च । ७ । २ । ७३ ॥** एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु ॥ अधासीत् । अधासिष्टाम् । अधासिषुः ॥ १ ॥ **ग्लै म्लै** हर्षक्षये । हर्षक्षयो धातुक्षयः । ग्लायति । जग्लौ । जग्लिथ । जग्लाथ ॥ **वान्यस्य संयोगादेः । ६ । ४ । ६८ ॥** घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके किति लिङि ॥ ग्लायात् । ग्लेयात् । अग्लासीत् । म्लायति ॥ ३ ॥ **द्यै** न्यक्करणे । न्यक्करणं तिरस्कारः ॥ ४ ॥ **द्रै** स्वप्ने ॥ ५ ॥ **ध्रै** तृप्तौ ॥ ६ ॥ **ध्यै** चिन्तायाम् ॥ ७ ॥ **रै** शब्दे ॥ ८ ॥ **स्त्यै ष्ट्यै** शब्दसंघातयोः । स्त्यायति । षोपदेशस्यापि सत्वे कृते रूपं तुल्यम् । षोपदेशफलं तु तिष्ट्यासति । अतिष्ट्यपदित्यत्र षत्वम् ॥ १० ॥ **खै** खदने ॥ ११ ॥ **क्षै जै षै** क्षये । क्षायति । जजौ । ससौ । साता । घुमास्थेत्यत्र विभाषा घ्राधेडित्यत्र च स्यतेरेव ग्रहणं न त्वस्य । तेन एत्वसिज्लुकौ न । सायात् । असासीत् ॥ १४ ॥ **कै गै** शब्दे । गेयात् । अगासीत् ॥ १६ ॥ **शै श्रै** पाके ॥ १८ ॥ **पै ओवै** शोषणे । पायात् । अपासीत् । घुमास्थेतीत्वं तदपवाद एर्लिङीत्येत्वं गातिस्थेति सिज्लुक् च न । पारूपस्य लाक्षणिकत्वात् ॥ २० ॥ **ष्टै** वेष्टने । स्तायति ॥ २१ ॥ **ष्णै** वेष्टने । शोभायां चेत्येके । **शौच-** इत्यन्ये । स्नायति ॥ २२ ॥ **दैप्** शोधने । दायति । अघुत्वादेत्वसिज्लुकौ न । दायात् । अदासीत् ॥ २३ ॥ **पा** पाने । पाघ्राध्मेति पिबादेशोऽदन्तः।तस्यादन्तत्वान्नोपधागुणः।पिबति । पेयात् । अपात् ॥ २४ ॥ **घ्रा** गन्धोपादाने । जिघ्रति । घ्रायात् । घ्रेयात् । अघ्रासीत् । अघ्रात् ॥ २५ ॥ **ध्मा** शब्दाग्निसंयोगयोः । धमति ॥ २६ ॥ **ष्ठा** गतिनिवृत्तौ । तिष्ठति । स्थादिष्वभ्यासेनेति षत्वम् । अधितष्ठौ । उपसर्गादिति षत्वम् । अधिष्ठाता । स्थेयात् ॥ २७ ॥ **म्ना** अभ्यासे । मनति ॥ २८ ॥ **दाण्** दाने । प्रणियच्छति । देयात् । अदात् ॥ २९ ॥ **ह्वृ** कौटिल्ये । ह्वरति ॥ **ऋतश्च संयोगादेर्गुणः । ७ । ४ । १० ॥** ऋदन्तस्य संयोगादेरङ्गस्य

---

१ "पा पाने" द्रवद्रव्यस्य गलबिलाधःसंयोगानुकूलो व्यापारः पानम् । २ अङ्गवृत्तपरिभाषा न लक्ष्यसंस्कारिकेति मनसि निधायाऽऽह—पिबादेशोऽदन्त इति । अदन्त इत्युच्चलक्षणमाद्युदात्तत्वस्यापि ॥ ३ "ष्ठा" अकृतव्यूहपरिभाषया "निमित्तापाये नैमित्तिकस्याप्यपायः" इति परिभाषया वा "धात्वादेः" इति सत्वे कृते प्रकृतिस्तवर्गः स्यादिति प्राञ्चः ॥ नव्यमते तु अकृतव्यूहपरिभाषया, तन्मूलक "निमित्तापाये" इत्यस्य चाभावेन "स्थाता स्थानम्" इत्यादौ "धात्वादेः" इति सत्वे कृतेऽपि श्रूयमाणस्य ष्टुत्वस्य निवृत्त्युपायाभाव इति चेत् ॥ अत्रोच्यते—'षांष्टवर्गस्तवर्गजः' इत्युक्त्या संज्ञाशास्त्रदृष्ट्या लक्षणगतशसंनिहस्य ष्टुत्वस्यासिद्धत्वेन तद्विरहितस्यैव धातुसंज्ञाप्रवृत्त्या ष्टुत्वसहितस्य प्रयोगविषयताया दौर्लभ्यादिति ॥ ४ "ऋतश्च" इति । तपरत्वं स्पष्टार्थम् । दीर्घान्तेष्वस्याप्रवृत्तावपि 'ऋच्छत्यृृनाम्' इति गुणप्रवृत्तेरव्याहतत्वात् । अत्राकारविधानेन सिद्धे गुणग्रहणं 'तितीर्वान्' तितिराण. इत्यत्र "ऋच्छत्यृृताम्" इत्यस्यैगुलक्षणत्वेन "क्ङिति च" ति निषेधाय । क्वसोः कित्वसामर्थ्यान्निषेधविषयस्यापि तस्य गुणस्य निषेधाङ्गीकारात् ।

गुणः स्याल्लिटि ॥ किदर्थमपीदं परत्वाण्णल्यपि भवति । रपरत्वम् । उपधावृद्धिः । जह्वार । जह्वरतुः । जह्वरुः । जह्वर्थ । ह्वर्ता ॥ 'ऋद्धनोः स्ये' ह्वरिष्यति ॥ **गुणोऽर्तिसंयोगाद्योः ।७।४।२९॥** अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च ॥ ह्वर्यात् । अह्वार्षीत् । अह्वार्ष्टाम् ॥ ३० ॥ **स्वृ** शब्दोपतापयोः । स्वरतिसूतीति वेट् । सस्वरिथ । सस्वर्थ । वमयोस्तु ॥ **श्र्युकः किति । ७ । २ । ११ ॥** श्रिञ एकाच उगन्ताच्च परयोर्गित्किितोरिण्न स्यात् । परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सस्वरिव । सस्वरिम । परत्वाद् ऋद्धनोरिति नित्यमिट् । स्वरिष्यति । स्वर्यात् । अस्वारीत् । अस्वारिष्टाम् । अस्वार्षीत् । अस्वार्ष्टाम् ॥ ३१ ॥ **स्मृ** चिन्तायाम् ॥ ३२ ॥ **दृ** संवरणे ॥ ३३ ॥ **सृ** गतौ । क्रादित्वान्नेट् । ससर्थ । सस्रिव । स्रियात् । असार्षीत् । आसार्ष्टाम् ॥ **सर्तिशास्त्यर्तिभ्यश्च ।३।१।५६॥** एभ्यश्च्लेरङ् स्यात्कर्तरि लुङि ॥ इह लुसशपा शासिना साहचर्यात्सर्त्यर्ती जौहोत्यादिकावेव गृह्येते । तेन भ्वाद्योर्नाङ् । शीघ्रगतौ तु पाघ्राध्मेति धौरादेशः । धावति ॥ ३४ ॥ **ऋ** गतिप्रापणयोः । ऋच्छति ॥ **ऋच्छत्यॄताम् । ७ । ४ । ११ ॥** तौदादिकऋच्छेर्ऋधातोर्ॠतां च गुणः स्याल्लिटि ॥ णलि प्राग्वदुपधावृद्धिः । आर । आरतुः । आरुः ॥ **इडत्त्यर्तिव्ययतीनाम् । ७ । २ । ६६ ॥** अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आरिथ । अर्ता । अरिष्यति । अर्यात् । आर्षीत् । आर्ष्टाम् ॥ ३५ ॥ **गृ घृ** सेचने । गरति । जगार । जगर्थ । जग्रिव । रिङ् । ग्रियात् । अगार्षीत् ॥ ३७ ॥ **ध्वृ** हूर्छने ॥ ३८ ॥ **स्रु** गतौ । सुस्रोथ । सुस्रुव । स्रूयात् । णिश्रीति चङ् । लघूपधगुणादन्तरङ्गत्वादुवङ्-असुस्रुवत् ॥ ३९ ॥ **षु** प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । सुषोथ । सुषविथ । सुषुविव । सोता ॥

---

१ उपधावृद्धिरिति । ननु यदि गुणोत्तरं वृद्धिस्तदा "**जाग्रः**" इति सूत्रेण वृद्धिविषये गुणविधानवैयर्थ्यमिति चेन्न, "**जाग्रो वि**" इति गुणविधानस्य जागृधातावेव गुणोत्तरं वृद्ध्यभावबोधकत्वात् । अत एव ऋधात्वादौ भावकर्मणोः परत्वाद् गुणे उपदेशग्रहणाच्चिण्वत्त्वे "**कारिष्यते**" इत्यादावुपधावृद्धिरिति भावः ॥ २ "**स्वृ**" उपतापो रोगः ॥ ३ पुरस्तादिति । अत एव "**सनीवन्त—**" इति सूत्रे स्वृग्रहणं चरितार्थम् ॥ ४ ननु निषेधो यदि बलवांस्तदाऽस्यापि बाधकः स्यादत आह—**क्रादिनियमादिति** । एतस्य निषेधबाधकत्वं स्पष्टमेव ॥ ५ **परत्वादिति** । "स्वरति" इति विकल्पस्तु मध्येऽपवादन्यायान्नास्य बाधक इति भावः ॥ ६ "**ऋच्छत्यॄताम्**" इति सूत्रे बहुवचननिर्देशादृकारोऽपि प्रश्लिष्यते तदाह—**ऋधातोरिति** । ऋकारस्य प्रश्लेषाभावे ऋवर्णान्तधातुमात्रस्य तु न ग्रहणम्, "**ऋतश्च संयोगादेः**" इत्यस्य वैयर्थ्यापत्तेः । "ऋ अतुस्" इति स्थिते द्वित्वे उरदत्त्वेऽभ्यासलोपे "**अत आदेः**" इति दीर्घे, उत्तरखण्डे प्राप्तं यणं बाधित्वा परत्वाद् गुणे "अरतुः" इति स्यादिति भावः ॥ ७ "**इडत्त्यर्ति**" इति । "**गमेरिट्**" इति सूत्रादिड्ग्रहणानुवृत्त्यैव सिद्धे प्रकृतसूत्रे इड्ग्रहणं स्पष्टार्थम् । नच "**विभाषा सृजि—**" इति सूत्रतो विभाषापदासम्बन्धाय इड्ग्रहणमस्त्विति वाच्यम्, अर्तिव्ययत्योर्विषये भारद्वाजनियमेन विकल्पस्य सिद्धौ पुनरत्रैतयोरुपादानसामर्थ्याद् विकल्पस्य निवृत्तेः । नच "**न वृद्भ्यः**" इत्यतो नग्रहणानुवृत्त्यर्थमस्त्विति वाच्यम्, ऋग्रहणसामर्थ्यात्तन्निवृत्तेः ॥ ८ "**ध्वृ**" हूर्छनं कौटिल्यम् ॥ ९ "**स्रु**" इत्यत्र गतिरत्र विवक्षिता ॥ १० **प्रसवो**ऽभ्यनुज्ञानमिति । "देवस्य त्वा सवितुः प्रसवे" इत्यादावभ्यनुज्ञानार्थदर्शनात् । **अभ्यनुज्ञानमाज्ञा** ॥

**स्तुसुधूञ्भ्यः परस्मैपदेषु । ७ । २ । ७२ ॥** एभ्यः सिच इट् स्यात्परस्मैपदेषु ॥ असावीत् । पूर्वोत्तराभ्यां ञिद्भ्यां साहचर्यात्सुनोतेरेव ग्रहणमिति पक्षे असौषीत् ॥ ४० ॥ **श्रु** श्रवणे ॥ **श्रुवः शृ च । ३ । १ । ७४ ॥** श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च शब्विषये । शपोऽपवादः ॥ श्नोर्ङित्त्वाद्धातोर्गुणो न । शृणोति । शृणुतः ॥ **हुश्नुवोः सार्वधातुके । ६ । ४ । ८७ ॥** जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चासंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके । उवङोऽपवादः ॥ शृण्वन्ति । शृणोमि । शृण्वः । शृणुवः । शृण्मः । शृणुमः । शुश्रोथ । शुश्रुव । शृणु । शृणवानि । शृणुयात् । श्रूयात् । अश्रौषीत् ॥ ४१ ॥ **ध्रु** स्थैर्ये । ध्रवति । अयं कुटादौ गत्यर्थोऽपि ॥ ४२ ॥ **दु द्रु** गतौ । दुदोथ । दुदविथ । दुदुविव । दुद्रोथ । दुद्रुव । णिश्रीति चङ् । अदुद्रुवत् ॥ ४४ ॥ **जि ज्रि** अभिभवे । अभिभवो न्यूनीकरणं न्यूनीभवनं च । आद्ये सकर्मकः । शत्रून् जयति । द्वितीये त्वकर्मकः । अध्ययनात्पराजयते । अध्येतुं ग्लायतीत्यर्थः । विपराभ्यां जेरिति तङ् । 'पराजेरसोढः' इत्यपादानत्वम् ॥ ४६ ॥ **अथ ङीङन्ता ङितः ॥ ष्मिङ्** ईषद्धसने । स्मयते । सिष्मिये । सिष्मियिढ्वे । सिष्मियिध्वे ॥ १ ॥ **गुङ्** अव्यक्ते शब्दे । गवते । जुगुवे ॥ २ ॥ **गाङ्** गतौ । गाते । गाते । गाते । इट एत्वे कृते वृद्धिः । गे । लङ्, इटि । अगे । गेत । गेयाताम् । गेरन् । गासीष्ट । गाङ्कुटादिसूत्रे इङादेशस्यैव गाङो ग्रहणं न त्वस्य । तेनाङित्त्वाद् घुमास्थेतीत्वं न । अगास्त । आदादिकोऽयमिति हरदत्तादयः । फले तु न भेदः ॥ ३ ॥ **कुङ् घुङ् उङ् ङुङ्** शब्दे । अन्ये तु **उङ् कुङ् खुङ् गुङ् घुङ् ङुङ्** इत्याहुः । कवते । चुकुवे । घवते । अवते । ऊवे । वार्णादाङ्गं बलीय इत्युवङ् ।

---

१ "**श्रुवः शृ च**" इति श्रुवः स्वादौ पाठो युक्तः, तत्र पाठे हि "**स्वादिभ्यः**" इति सूत्रेण श्नुप्रत्यये सिद्धे पुनरनेन वाक्यभेदेन श्नुप्रत्ययविधानं न कार्यमिति लाघवात् । नच यदि " स्वादिभ्यः " इति सूत्रेण श्नुप्रत्ययस्तदा "श्तिपा शपानुबन्धेन " इति निषेधाद् यङ्लुकि न स्यादिति यङ्लुकि " शृणोति " इतिरूपार्थमत्रावश्यकमिति वाच्यम्, " शत्रादेशः श्यन्नाद्य " इति भाष्योक्तपक्षान्तरे श्नोः स्थानिवत्त्वेन शप्त्वात् तस्य लुकि सन्नियोगशिष्टन्यायेन आदेशनिवृत्तावुक्तरूपस्य दुर्लभत्वात् । तस्मादादेशाभावपक्षेऽपि अस्य "स्वादिभ्यः" इति सूत्रसाहचर्येण यङ्लुक्यप्रवृत्तिः । " चर्करीतं च " इत्यदादौ पाठाच्च ॥ केचित्तु गणकार्यस्यानित्यत्वबोधनायास्य स्वादावपाठ इति ब्रुवते ॥ २ " **हुश्नुवोः** " "एरनेकाचः " इत्यतः " असंयोगपूर्वस्य " इत्यनुवृत्तम्–"ओः सुपि " इत्यतोऽनुवृत्तस्य " ओः " इत्यस्य विशेषणं न प्रत्ययस्य तेन । " आप्नुवन्ति " इत्यत्र यण् न ॥ ३ **जि ज्रि अभिभवे इति** । जयति जिगाय इत्यादि जि जये इतिवत् ॥ ४ **इङादेशस्यैवेति** । स्थानिनो ङित्कार्यलाभे सिद्धे पुनः " गाङ्" इत्यत्र ङकारोच्चारणं गाङ्ग्रहणे इङादेशस्यैव ग्रहणार्थमिति व्याख्यानादिति भावः ॥ ५ **फले तु न भेद इति** । न च " गा+अ+आताम् " इति स्थिते " वार्णादाङ्गम्–"इति परिभाषया दीर्घात पूर्वमेव " आतो ङितः" इत्यस्य प्रवृत्त्या फलभेदः स्पष्ट एवेति वाच्यम्, "स्योनः" इति भाष्योदाहरणेनोक्तपरिभाषाया अनित्यत्वात् । न च शाग यङ सत्यपि सवर्णदीर्घे पञ्चमीसमासेन स्थानिवत्त्वाद् " आतो ङितः " इत्यस्य प्रवृत्तिदुर्वारैवेति वाच्यम्, तदनित्यत्वाभ्युपगमात । न च गाधातोः शानचि " आने मुक्" इति मुका फलभेद इति वाच्यम्, वार्णशास्त्रीयस्थानितासमानाधिकरणस्थानिताकत्वरूपसमानकार्यित्वे एव " वार्णादाङ्गम्–" इति परिभाषाप्रवृत्तिस्वीकारात् ॥

ततः सवर्णदीर्घः । ओता । ओष्यते । ओषीष्ट । औष्ट । ङवते । जुङुवे । ङोता ॥ ७ ॥ च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ ॥ ११ ॥ क्लुङ् इत्येके ॥ १२ ॥ रुङ् गतिरेषणयोः । रेषणं हिंसा । रुरुवे । रवितासे ॥ १३ ॥ धृङ् अवबन्धने । धरते । दध्रे ॥ १४ ॥ मेङ् प्रणिदाने । प्रणिदानं विनिमयः प्रत्यर्पणं च । प्रणिमयते[1] । नेर्गदेति णत्वम् । तत्र घुप्रकृतिमाङिति पठित्वा ङितो माप्रकृतेरपि ग्रहणस्येष्टत्वात् ॥ १५ ॥ देङ् रक्षणे । दयते ॥ **दयतेर्दिगि लिटि । ७ । ४ । ९ ॥** दिग्यादेशेन द्वित्वबाधनमिष्यत इति वृत्तिः[2] । दिग्ये ॥ **स्थाघ्वोरिच्च[3] । १ । २ । १७ ॥** अनयोरिदादेशः स्यात् सिच्च कित्स्यात्तङि ॥ अदित । अदिथाः । अदिषि ॥ १६ ॥ श्यैङ् गतौ । श्यायते । शश्ये ॥ १७ ॥ प्यैङ् वृद्धौ । प्यायते । पप्ये । प्याता ॥ १८ ॥ त्रैङ् पालने । त्रायते । तत्रे ॥ १९ ॥ पूङ् पवने । पवते । पुपुवे । पविता ॥ २० ॥ मूङ् बन्धने । मवते ॥ २१ ॥ डीङ् विहायसा गतौ[4] । डयते । डिड्ये । डयिता ॥ २२ ॥ तॄ प्लवनतरणयोः ॥ **ऋत इद्धातोः । ७ । १ । १०० ॥** ऋदन्तस्य धातोरङ्गस्य इत्स्यात् ॥ **इर्त्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन *॥** तरति । ऋच्छत्यॄतामिति गुणः । तॄफलेत्येत्त्वम् । तेरतुः । तेरुः । **वॄतो वा[5] । ७ । २ । ३८ ॥** वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि । तरीता । तरिता । अलिटीति किम् । तेरिथ । हलि चेति दीर्घः । तीर्यात् ॥ **सिचि च परस्मैपदेषु । ७ । २ । ४० ॥**

---

१ **प्रणिमयते इति** । नन्विह " नेर्गद- " इति णत्वं दुर्लभम्, शिद्विषये आत्त्वाभावेन मारूपत्वाभावात् । किंच-अशिद्विषये आत्त्वेऽपि तत्र णत्वं दुर्लभम्, लाक्षणिकत्वात् । न च " गामादाग्रहणेष्वविशेषः " इति वाच्यम्, " मीनातिमिनोति- " इत्यादिना कृतात्त्वयोरपि ग्रहणापत्तेरत आह-**तत्र घुप्रकृतिमाङिति** । तत्र-" नेर्गद " इति सूत्रे । " घुश्च प्रकृतिश्च माङ् च " इति द्वन्द्वे " **प्रकृतिश्च कस्य** " इत्याकाङ्क्षायां सन्निधानात् पूर्वोत्तरयोरेव, इति " **दाधा घ्वदाप्** " इति सूत्रे भाष्ये सिद्धान्तितम् । एवं च " प्रणिदयते " इत्यादाविव " प्रणिमयते " इत्यत्रापि सिद्धिरिति भावः ॥ २ **वृत्तिरिति** । इदमुपलक्षणं भाष्यस्यापि । अयं भावः-दयतेर्लिटि परे दिग्यादेशद्वित्वयोः प्राप्तौ येन नाप्राप्तिन्यायेन दिग्यादेशे पुनर्बाध्यस्य द्वित्वस्याप्रवृत्तिर्यासुड्विषये सीयुट इवेति ॥ नचैवम् " **अस्तेर्भूः** " इत्यनेनापि लिड्विषयकेण द्वित्वबाधः स्यादिति वाच्यम्, तत्र " आर्धधातुके " इत्यस्य विषयसप्तमीत्वात् । प्रकृते " लिटि " इति परसप्तम्येव लक्ष्यानुसारादिति ॥ ३ **स्थाघ्वोरिच्चेति** । तपरत्वमस्य मुखसुखार्थम् । ननु सवर्णस्याग्रहणाय । भाव्यमानत्वात् ॥ ४ **डीङ् विहायसा गतौ** । आकाशेन गमने । " पुंस्याकाशविहायसी " इत्यमरः ॥ ५ । " **वॄतो वा** " इति । अत्र यदि " **वृ वरणे** " इत्यस्य तसिला निर्देशः स्यात् तदा " व्रः " इत्येव, निर्दिश्येत यथा " भ्रोयङि " इति । अथ यदि तस्य ॠकारान्तानां च ग्रहणम्, तदा तस्य पृथग्ग्रहणमनर्थकम्, ऋकारान्तत्वात् । अस्यैवानुवृत्त्या सिद्धे " **ऋतश्च** " इति सूत्रे " ऋत " इत्यस्य वैयर्थ्यापत्त्या " तस्य ह्रस्वऋकारान्तानां च " इत्यपि वक्तुमशक्यम् । अथ यदि " वृङ्वृञोॠकारान्तानां च " तदा वृग्रहणमनर्थकम्, ऋकारान्तत्वात् । तस्माद् वृङ्वृञोर्दीर्घॠकारान्तानां चायं निर्देश इत्यभिप्रेत्याह-**वृङ्वृञ्भ्यामॄदन्ताच्चेति** । वा च वा च ॠच एतेषां समाहारः " वॄत् " तस्मात् " वॄतः " अथवा " वा च ॠच " अनयोः समाहारो " वॄत् " तस्मात् " वॄ " इत्यनेन " **स्वकानुबन्धग्रहणे सामान्यस्य ग्रहणम्** " इति वृङ्वृञोरुभयोर्ग्रहणमिति केचित् ॥

अत्र वृत इटो दीर्घो न । अतारिष्टाम् ॥ २३ ॥ अथाष्टावनुदात्तेतः ॥ गुप गोपने
॥ १ ॥ तिज निशाने ॥ २ ॥ मान पूजायाम् ॥ ३ ॥ बध बन्धने ॥ गुप्तिज्किद्भ्यः
सन्। ३ । १ । ५ ॥ मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य । ३ । १ । ६ ॥ सूत्रद्वयोक्त-
भ्यः सन् स्यान्मानादीनामभ्यासस्येकारस्य दीर्घश्च॥ गुपेर्निन्दायाम् * ॥ तिजेः क्षमायाम्*
॥ कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च * ॥ मानेर्जिज्ञासायाम्*॥
बधेश्चित्तविकारे * ॥ दानेरार्जवे * ॥ शानेर्निशाने * ॥ सनाद्यन्ता इति धातुत्वम् ॥
सन्यङोः । ६ । १ । ९ ॥ सन्नन्तस्य यङन्तस्य च प्रथमैकाचो द्वे स्तोऽजादेस्तु द्विती-
यस्य ॥ अभ्यासकार्यम् । गुपिप्रभृतयः किद्भिन्ना निन्दाद्यर्थका एवानुदात्तेतः । दानशानौ च
स्वरितेतौ । एते नित्यं सन्नन्ताः ॥ अर्थान्तरे त्वननुबन्धकाश्चुरादयः । अनुबन्धस्य केवले-
ऽचरितार्थत्वात्सन्नन्तात्तङ् । धातोरित्यविहितत्वात्सनोऽत्र नार्धधातुकत्वम् ॥ तेनेड्गुणौ न ।
जुगुप्सते । जुगुप्सांचक्रे । तितिक्षते । मीमांसते । भष्भावः । चर्त्वम् । बीभत्सते ॥ ४ ॥
रभ राभस्ये । आरभते । आरेभे । रब्धा । रप्स्यते ॥ ५ ॥ डुलभष् प्राप्तौ । लभते ॥ ६ ॥
ष्वञ्ज परिष्वङ्गे ॥ दंशसञ्जस्वञ्जां शपि । ६ । ४ । २५ ॥ रञ्जेश्च । ६ । ४ । २६ ॥

---

१ "मान्बध" "अभ्यासस्य" इति च्छेदः । अभ्यासविकार आभ्यासः, स चेत्त्वमेव
व्याख्यानात् तदाह-इकारस्येति । वस्तुतस्तु नास्ति तद्धितनिर्देशस्य प्रयोजनम्, अभ्यासविकाराणां
समावेशस्यैव वक्तव्यतया ह्रस्वोत्तरं दीर्घस्य सुलभत्वात् ॥ यद्यपि गुपादयः सामान्यत एव सूत्रे
निर्दिष्टास्तथापि सन्नन्तस्य "जुगुप्साविरामप्रमादार्थानाम्" इत्यत्रार्थविशेषे प्रयोगदर्शनेन "क्षेत्रियच्
परक्षेत्रे चिकित्स्यः" इति सौत्रप्रयोगेण "विचिकित्सा तु संशयः" इति कोशबलेन वृत्त्यादिप्रामाण्येन
विशेषार्थकेभ्य एव गुपादिभ्यः स्वार्थे सन् भवतीत्याशयेनाह-गुपेर्निन्दायामित्यादि । गोपनाद्यर्थकानां
निन्दादौ वृत्तिरनेकार्थत्वाद् बोध्या ॥ मानेर्जिज्ञासायामिति । तत्प्रयोज्ये विचारे इत्यर्थः । अत एव
"मानेर्विचारे" इति वृत्तिग्रन्थेन न विरोधः ॥ २ सन्नन्तस्येति । "सन्यङोः" इत्यस्य षष्ठीत्वादेव
पाणिनिना "सन्यङ्चङ्क्षु" इति नासूत्रि । अत एव यङ्लुकि प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वं सि-
ध्यति । परसप्तम्यां तु "न लुमता" इति निषेधान्न स्यात् ॥ ३ गुपिप्रभृतय इति । गुप्तिज्मान्-
बधा इत्यर्थः । किद्भिन्ना इति । " य एव विद्वान् चिकित्सति " इत्यादिप्रयोगात् कितधातुः परस्मैप-
दीति भावः । यद्यपि भाष्ये "गुप्तिज्कितमाना अनुदात्तेतः" इत्युक्तम्, तथापि "अनुक्रमदर्शनाय "कि-
तिः" पठितो नत्वयमनुदात्तेत" इति कैयटः । यथाश्रुतभाष्यस्वरसात् कितिरनुदात्तेत । "चिकित्सति" इति
तु छान्दसम् । बधिरपि भाष्ये नोक्त इति स परस्मैपदी इत्यपि केचित् ॥ ४ दानशानाविति । आर्जवनि-
शानार्थाविति भावः ॥ यद्यपि भाष्ये "दानशानौ च स्वरितेतौ" इति नोक्तम्, तथापि वृत्त्यनुसारादेवमु-
क्तम् ॥ ५ अर्थान्तरे त्विति । गोपनादौ धातुपाठोपात्ते इत्यर्थः । अत एव "गुपादिष्वनुबन्धकरणसामर्थ्याद्
सन्नन्तादात्मनेपदम्" इति भाष्योक्तं संगच्छते । अन्यथा सनोऽभिधानस्वभावादर्थविशेष एव साधुत्वेन अर्थान्तरे
सनभावे आत्मनेपदार्थं तस्य चारितार्थ्येन सामर्थ्योक्तिरसङ्गता स्यादिति भावः ॥ चुरादय इति । तथा चानु-
पूर्वीमात्रसाम्येऽपि चुरादिभ्यो भ्वाद्यो भिन्ना एवेत्यर्थः । एतच्च वृत्त्यनुरोधेन । शेखरकृतस्तु "दाधर्ति--"
इति सूत्रे तेतिक्ते इति किं निपात्यते तिजेर्यङ्लुगन्तादात्मनेपदम् इति भाष्योक्तेः "भ्वादौ शब्विकरणा
अधीते" अन्यथा णिजन्ताद् यङ्णिलोपयोरपि निपात्यता स्यात् । एतेन भ्वादौ गोपनाद्यर्थेषु गुपादेरनुदात्तपाठो
व्यर्थ इत्यपास्तम् । "गुपादिष्वनुबन्धकरणसामर्थ्यात्" इत्यस्य "सन्प्रकृतिभूतेष्वर्थविशेषविशिष्टेषु" इत्यर्थः ।
भाष्यद्वयप्रामाण्यात् तद्विशिष्टेष्वपि अनुदात्तपाठः पाणिनेरिति ज्ञायते इत्याहुः ॥

एषां शपि नलोपः । स्वजते । परिष्वजते ॥ **श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं** वेति व्याकरणान्तरम् ‘ देभतुः । सस्वजे’ इति भाष्योदाहरणादेकदेशानुमत्या इहाप्याश्रीयते । सदेः परस्य लिटीति सूत्रे—**स्वञ्जेरुपसंख्यानम्** * ॥ अतोऽभ्यासात्परस्य षत्वं न । परिषस्वजे । परिषस्वञ्जे । सस्वजिषे । सस्वञ्जिषे । स्वङ्क्ता । स्वङ्क्ष्यते । स्वजेत । स्वङ्क्षीष्ट । प्रत्यष्वङ्क्त । प्राक्सितादिति षत्वम् । परिनिविभ्यस्तु सिवादीनां वेति विकल्पः । एतदर्थमेव उपसर्गात्सुनोतीत्येव सिद्धे स्तुस्वञ्ज्योः परिनिवीत्यत्र पुनरुपादानम् । पर्यष्वङ्क्त । पर्यस्वङ्क्त ॥ ७ ॥ **हद** पुरीषोत्सर्गे । हदते । जहदे । हत्ता । हत्स्यते । हदेत । हत्सीष्ट । अहत्त ॥ ८ ॥ **अथ परस्मैपदिनः ॥ ञिष्विदा** अव्यक्ते शब्दे ॥ १ ॥ **स्कन्दिर्** गतिशोषणयोः । चस्कन्दिथ । चस्कन्थ । स्कन्ता । कन्त्स्यति । नलोपः । स्कद्यात् । इरित्त्वादङ् वा । अस्कदत् । अस्कान्त्सीत् । अस्कान्ताम् । अस्कान्त्सुः ॥ **वेः स्कन्देरनिष्ठायाम् । ८ । ३ । ७३ ॥** षत्वं वा स्यात् ॥ कृत्येवेदम् , अनिष्ठायामिति पर्युदासात् ॥ विष्कन्ता । विस्कन्ता । निष्ठायां तु । विस्कन्नः ॥ **परेश्च । ८ । ३ । ७४ ॥** अस्मात्परस्य स्कन्देः सस्य षो वा । योगविभागादनिष्ठायामिति न संबध्यते । परिष्कन्दति । परिस्कन्दति । परिष्कण्णः । परिस्कन्नः । षत्वपक्षे णत्वम् । न च पदद्वयाश्रयतया बहिरङ्गत्वात्षत्वस्यासिद्धत्वम् । धातूपसर्गयोः कार्यमन्तरङ्गमित्यभ्युपगमात् पूर्वं धातुरुपसर्गेण युज्यते, ततः साधनेनेति भाष्यम् । पूर्वं साधनेनेति मतान्तरे तु न णत्वम् ॥ २ ॥ **यभ** मैथुने । येभिथ । ययब्ध । यब्धा । यप्स्यति । अयाप्सीत् ॥ ३ ॥ **णम** प्रह्वत्वे शब्दे च । नेमिथ । ननन्थ । नन्ता । अनंसीत् । अनंसिष्टाम् ॥ ४ ॥ **गम्लृ सृप्लृ** गतौ ॥ **इषुगमियमां छः । ७ । ३ । ७७ ॥**

---

१ **भाष्योदाहरणादिति** । “देभतुः” इत्युदाहरणम् “अत एक–” इति सूत्रे । “सस्वजे” इत्युदाहरणम् “सदेः परस्य लिटि” इति सूत्रे इति बोध्यम् ॥ २ “**वेः स्कन्देः**” दन्त्याजन्तसादित्वाभावान्नायं षोपदेश इति षत्वाप्राप्तेरप्राप्तविभाषेयम् ॥ ‘ अनिष्ठायाम् ” इति न प्रसज्यप्रतिषेधः, वाक्यभेदासमर्थसमासादिदोषापत्तेः, किंतु पर्युदास एव लाघवात् । पर्युदासत्वे निष्ठाभिन्न कृत्त्वेन निष्ठासदृशे कृत्प्रत्यये एव षत्वं न तिङि, इत्यभिप्रेत्याह—**कृत्येवेदमिति** । **विष्कन्तेति** तृच्युदाहरणम् ॥ परे त्वत्र न भाष्यानुग्रहः । अत एव “अनुविपर्यभिनिभ्यः” इति सूत्र इवात्र भगवता पर्युदासप्रसज्यप्रतिषेधयोः फलभेदविचारो न कृतः । “कृत्येव” इति भवदुक्तार्थे विपूर्वस्यास्य तिङन्तस्यापि प्रयोगे पर्युदासपक्षे षत्वाभावस्य, प्रसज्यप्रतिषेधे षत्वस्य च प्राप्तेः फलभेदस्य सत्त्वादत्रापि तथाविचारस्यावश्यकतया भाष्यकृतो न्यूनतापत्तिः स्यात् । तस्माद्विपूर्वस्यास्य तिङि नैव प्रयोग इत्याहुः ॥ ३ **योगविभागादिति** । अन्यथा “परिविभ्यां स्कन्देरनिष्ठायाम्” इत्येव सूत्रयेदिति भावः ॥ **न संबध्यते इति** । तथाच पर्युदासाविषयत्वात्परेरुत्तरस्य तिङन्तेऽपि षत्वं भवत्येवेति भावः ॥ अत एवाह—**परिष्कन्दतीति** ॥ ४ **भाष्यमिति** । ‘सम्प्रसारणाच्च” इत्यादिसूत्रेषु इति शेषः ॥ ५ **मतान्तरे त्विति** । ‘सुट्कात् पूर्वः’ इति सूत्रभाष्यसिद्धान्तिते इत्यादिः ॥ इदमेव सारमित्यन्यत्र विस्तरः ॥ अत्रारुचिर्बीजं तु त्रपादिकेऽन्तरङ्गे परिभाषाया भाष्यनयेऽप्रवृत्तिरिति । तस्मादत्रापि पक्षे णत्वं भवत्येव । अत एव “अभिषिषेणयिषति, अभिषुणु” इति भाष्यप्रयोगाः सङ्गच्छन्ते इति शेखरकृत् ॥ बहिरङ्गपरिभाषायास्त्रिपाद्यां प्रवृत्तिस्वीकारेऽपि णत्वं नैव वारयितुं शक्यमिति भाष्यमर्मविदो दाधिमथाः ॥

एषां छः स्याच्छिति परे ॥ गच्छति । जगाम । जग्मतुः । जग्मुः । जगमिथ । जगन्थ । गन्ता । **गमेरिट् परस्मैपदेषु** । ७ । २ । ५८ ॥ गमेः परस्य सकारादेरिट् स्यात् ॥ गमिष्यति । लृदित्त्वादङ् । अनङीति पर्युदासान्नोपधालोपः । अगमत् । सर्पति । ससर्प ॥ **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** । ६ । १ । ५९ ॥ उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति परे ॥ स्रप्ता । सर्प्ता । स्रप्स्यति । सर्प्स्यति । असृपत् ॥ ६ ॥ **यम** उपरमे । यच्छति । येमिथ । ययन्थ । यन्ता । अयंसीत् । अयंसिष्टाम् ॥ ७ ॥ **तप** सन्तापे । तप्ता । अताप्सीत् ॥ **निसस्तपतावनासेवने** । ८ । ३ । १०२ ॥ षः स्यात्, आसेवनं पौनःपुन्यं ततोऽन्यस्मिन्विषये ॥ निष्टपति ॥ ८ ॥ **त्यज** हानौ । तत्यजिथ । तत्यक्थ । त्यक्ता । अत्याक्षीत् ॥ ९ ॥ **षञ्ज** सङ्गे । दंशसञ्जस्वञ्जां शपीति नलोपः । सजति । सङ्क्ता ॥ १० ॥ **दृशिर्** प्रेक्षणे । पश्यति ॥ **विभाषा सृजिदृशोः** । ७ । २ । ६५ ॥ आभ्यां थल इड्वा ॥ **सृजिदृशोर्झल्यमकिति** । ६ । १ । ५८ ॥ अनयोरमागमः स्याज्झलादावकिति ॥ दद्रष्ठ । ददर्शिथ । द्रष्टा । द्रक्ष्यति । दृश्यात् । इरित्त्वादङ् वा ॥ **ऋदृशोऽङि गुणः** । ७ । ४ । १६ ॥ ऋवर्णान्तानां दृशेश्च गुणः स्यादङि ॥ अदर्शत् । अङभावे ॥ **न दृशः** । ३ । १ । ४७ ॥ दृशश्च्लेः क्सो न ॥ अद्राक्षीत् ॥ ११ ॥ **दंश** दशने । दशनं दंष्ट्राव्यापारः । पृषोदरादित्वादनुनासिकलोपः । अत एव निपातनादित्येके । तेषामप्यत्रैव तात्पर्यम् । अर्थनिर्देशस्याधुनिकत्वात् । दंशसञ्जेति नलोपः । दशति । ददंशिथ । ददंष्ठ । दंष्टा । दङ्क्ष्यति । दश्यात् । अदाङ्क्षीत् ॥ १२ ॥ **कृष** विलेखने । विलेखनमाकर्षणम् । क्रष्टा । कर्ष्टा । क्रक्ष्यति । कर्क्ष्यति ॥ **स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः*** ॥ अक्राक्षीत् । अक्राष्टाम् । अकार्क्षीत् । अकार्ष्टाम् । अकार्क्षुः । पक्षे क्सः । अकृक्षत् । अकृक्षताम् । अकृक्षन् ॥ १३ ॥ **दह** भस्मीकरणे । देहिथ । ददग्ध । दग्धा ।

---

१ "**इषगमि**" इति । अत्र सूत्रे "शमामष्टानाम्–" इत्यत्रासम्बन्धान्मण्डूकप्लुत्या "क्सस्याचि" इत्यतः "अचि" इत्यनुवर्तते । तस्य च "शिति" इति विशेषणम् । तेन "**अज्रूपे शिति**" इत्यर्थाद् इष्णार्तीष्यत्योर्नातिप्रसङ्गः । एवं च प्रकृतसूत्रे तुदादौ च "इषु" इत्युदित्पाठोऽनार्षः । उदित्पाठो हि दिवादिक्र्याद्योश्छ्वव्यावृत्त्यर्थो वाच्यः, तयोर्व्यावृत्तिस्त्वेवमेव जातेति तथा पाठो व्यर्थ एवेति तात्पर्यम् ॥ "अचि" इत्यस्य सम्बन्धे च "**इषेश्छत्वमहलि**" इति वार्तिकप्रत्याख्यानपरभाष्यमेव मानम् । "अचि" इत्यनुवर्त्यं हि तस्य प्रत्याख्यानं भगवताकारि । "**गमि**" इत्यत्र इका निर्देशेन कित्त्वेऽपि सौत्रत्वादुपधालोपाभावः ॥ २ "**गमेरिट्**" इति । अत्र परस्मैपदपदमात्मनेपदाभावे लाक्षणिकम् "न वृद्भ्यः" इति सूत्रवत् । तेन सन्नन्तात् तृचि "संजिगमिषिता" इत्यत्रेट्सिद्धिः ॥ ३ **अनुनासिकलोप इति** । पृषोदरादित्वादनुनासिकलोपकथनमपि न सर्वत्र किन्तु–"दंष्ट्राव्यापारार्थके एव" "तनुत्रं वर्म दंशनम्" इत्यमस्वरसात् ॥ ४ **आधुनिकत्वादिति** । सर्वधातुष्वर्थनिर्देशस्य "पाणिनीयत्वाभावाद्" इत्यर्थः । अत एव भूवादिसूत्रे भाष्ये "परिमाणग्रहणं कर्तव्यम्, कुतो ह्येतत् ? भूशब्दो धातुसंज्ञो भविष्यति, न पुनर्भ्वेधशब्दः" इत्युक्तं "चुट्" इति सूत्रे च "यदयमिरितः कांश्चिन्नुमनुषक्तान् पठति–उबुन्दिर् निशामने, स्कन्दिर् गतिशोषणयोः" इत्युक्तं, च संगच्छते ॥

धक्ष्यति । अधाक्षीत् । अदाग्धाम् । अधाक्षुः ॥ १४ ॥ **मिह** सेचने । मिमेह । मिमेहिथ । मेढा । मेक्ष्यति । अमिक्षत् ॥ १५ ॥ **कित** निवासे रोगापनयने च । चिकित्सति । संशये प्रायेण विपूर्वः । विचिकित्सा तु संशय इत्यमरः । अस्यानुदात्तेत्त्वमाश्रित्य चिकित्सते इत्यादि कश्चिदुदाजहार । निवासे तु केतयति ॥ १६ ॥ **दान** खण्डने । **शान** तेजने । **इतो वहत्यन्ताः स्वरितेतः ॥** दीदांसति । दीदांसते । शीशांसति । शीशांसते । अर्थविशेषे सन् । अन्यत्र दानयति ॥ २ ॥ **डुपचष्** पाके । पचति । पचते । पेचिथ । पपक्थ । पेचे । पक्ता । पक्षीष्ट ॥ ३ ॥ **षच** समवाये । सचति । सचते ॥ ४ ॥ **भज** सेवायाम् । भेजतुः । भेजुः । भेजिथ । बभक्थ । भक्ता । भक्ष्यति । भक्ष्यते । अभाक्षीत् । अभक्त ॥ ५ ॥ **रञ्ज** रागे । नलोपः । रजति । रजते । अराङ्क्षीत् । अरङ्क्त ॥ ६ ॥ **शप** आक्रोशे । आक्रोशो विरुद्धानुध्यानम् । शशाप । शेपे । अशाप्सीत् । अशप्त ॥ ७ ॥ **त्विष** दीप्तौ । त्वेषति । त्वेषते । तित्विषे । त्वेक्ष्यति । त्विक्षीष्ट । अत्विक्षत । अत्विक्षाताम् ॥ ८ ॥ **यज** देवपूजासङ्गतिकरणदानेषु ॥ यजति । यजते ॥ **लिट्यभ्यासस्योभयेषाम् । ६ । १ । १७ ॥** वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि ॥ इयाज ॥ **वचिस्वपियजादीनां किति । ६ । १ । १५ ॥** वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात्किति ॥ पुनः प्रसङ्गविज्ञानाद्द्वित्वम् । ईजतुः । ईजुः । इयजिथ । इयष्ठ । ईजे । यष्टा । यक्ष्यति । इज्यात् । यक्षीष्ट । अयाक्षीत् । अयष्ट ॥ ९ ॥ **डुवप्** बीजसन्ताने । बीजसन्तानं क्षेत्रे विकिरणं गर्भाधानं च । अयं छेदनेऽपि । केशान्वपति । उवाप । ऊपे । वप्ता । उप्यात् । वप्सीष्ट । प्रण्यवाप्सीत् । अवप्त ॥ १० ॥ **वह** प्रापणे । उवाह । उवहिथ ॥ सहिवहोरोदवर्णस्य ॥ उवोढ । ऊहे । वोढा । वक्ष्यति । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवोढ्वम् ॥ ११ ॥ **वस** निवासे । परस्मैपदी । वसति । उवास ॥

---

१ "**यज देवपूजा**" इह देवतोद्देशेन द्रव्यत्यागः पूजा ॥ २ उपस्थितत्वाद् "वचिस्वपि-". "ग्रहिज्या" इति सूत्रोपात्तयोरेवोभयेषांग्रहणेन ग्रहणमित्याह—**वच्यादीनामिति** ॥ ३ "**वचिस्वपि**" इति । वचिरदादिश्चुरादिश्च । "वचिस्वपियज" इत्येषां त्रयाणां द्वन्द्वोत्तरम्-आदिशब्देन समासे आदिशब्दस्य वचिस्वपिभ्यां सम्बन्धस्तु न भवति, वचिना सम्बन्धे स्वपेर्वच्यादित्वेनैव ग्रहणे सिद्धे स्वपेः पृथगुपादानसामर्थ्यात् । नच स्वपिना सम्बन्धोऽस्तु, तथा सति श्वसेर्ग्रहणं भविष्यतीति वाच्यम्, त्रयाणां द्वन्द्वस्यादिशब्देन समासेन "द्वन्द्वान्ते श्रूयमाणम्" इति न्यायेन सहविवक्षामूलकेन सर्वत्रैव सम्बन्ध उचितो नत्वेकत्र तत्परित्यागोऽन्यत्र तत्सम्बन्धो युक्तस्तथा स्वीकारे द्वन्द्वस्यैवासाधुतायाः प्रसक्तेः । ननु चुरादिपठितवच्यादिग्रहणार्थं वचिनापि सम्बन्धोऽस्त्विति चेन्न, चुरादौ सम्प्रसारणयोग्यवच्यादेरभावात् । वचधातोराधृषीयत्वाण्णिजभावे किति परे संप्रसारणयोग्यतासत्त्वेऽपि तदन्येषां यण्घटितानामभावादित्यत्र तात्पर्यं ज्ञेयम् । नच वदादयस्तत्र सन्त्येवेति वाच्यम्, तेषामदन्तत्वादाधृषीयत्वाभावाच्च सम्प्रसारणयोग्यताया अभावात् । "वचिस्वपि—" इत्यत्रैकानिर्देशेन कित्त्वेऽपि सौत्रः संप्रसारणाभावः । **यजादिः** । श्वयत्यन्तः । "यजिर्वपिर्वहिश्चैव वसिर्वेञ्व्येञ इत्यपि । ह्वेञ्वदी श्वयतिश्चैव यजाद्या स्युरिमे नव" इत्युक्तेः ॥ ४ परत्वात्संप्रसारणे कृते सकृद्गतिन्यायेन द्वित्वाप्राप्तेराह--**पुनरिति** ॥

**शासिवसिघसीनां च । ८ । ३ । ६० ॥** इण्कुभ्यां परस्यैषां सस्य षः स्यात् ॥ ऊषतुः । ऊषुः । उवसिथ । उवस्थ । वस्ता ॥ **सः स्यार्धधातुके । ७ । ४ । ४९ ॥** सस्य तः स्यात्सादावार्धधातुके । वत्स्यति । उष्यात् । अवात्सीत् । अवात्ताम् ॥ १२ ॥ **वेञ्** तन्तुसन्ताने । वयति । वयते ॥ **वेञो वयिः । २ । ४ । ४१ ॥** वा स्याल्लिटि ॥ इकार उच्चारणार्थः । उवाय ॥ **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । ६ । १ । १६ ॥** एषां किति ङिति च संप्रसारणं स्यात् ॥ इति यकारस्य प्राप्ते—॥ **लिटि वयो यः । ६ । १ । ३८ ॥** वयो यस्य संप्रसारणं न स्याल्लिटि ॥ ऊयतुः । ऊयुः ॥ **वश्चास्यान्यतरस्यां किति । ६ । १ । ३९ ॥** वयो यस्य वो वा स्यात्किति लिटि ॥ ऊवतुः । ऊवुः । वयेस्तासावभावात्थलि नित्यमिट् । उवयिथ । स्थानिवद्भावेन ञित्वात्तङ् । ऊये । ऊवे । वयादेशाभावे—॥ **वेञः । ६ । १ । ४० ॥** वेञो न संप्रसारणं स्याल्लिटि ॥ ववौ । ववतुः । ववुः । वविथ । ववाथ । ववे । वाता । ऊयात् । वासीष्ट । अवासीत् ॥ १३ ॥ **व्येञ्** संवरणे । व्ययति ॥ **न व्यो लिटि । ६ । १ । ४६ ॥** व्येञ आत्त्वं न स्याल्लिटि ॥ वृद्धिः । परमपि हलादिःशेषं बाधित्वा यस्य संप्रसारणम् । उभयेषांग्रहण-

---

१ "**शासिवसि**" आदेशप्रत्ययत्वाभावादप्राप्ते विधिरयम् ॥ 'शासु अनुशिष्टौ' 'आङः शासु इच्छायाम्' इत्येतद्द्वयमपि गृह्यते "आशिषि लिङ्" इत्यादिनिर्देशात् ॥ २ **अवात्तामिति** । सिज्लोपस्यासिद्धत्वात् पूर्वं "सः सि" इति धातोः सस्य तकारे जाते वर्णसमाम्नाये एतदर्थमेवाकृतिग्रहणस्य भाष्ये सिद्धान्तितत्वेन द्वयोरपि तकारयोर्झल्त्वात् झलो झलीति सिज्लोपः ॥ ३ **इकार इति** । नत्वित्संज्ञको नुमापत्तेरिति भावः । "उच्चारणार्थानामपीत्संज्ञकत्वम्" इति भाष्यमते भावि स्थानिगतं वा धातुत्वमादायैकनिर्देशोऽयमिति न नुमिति बोध्यम् ॥ ४ **उवायेति** । ननु संप्रसारणयोग्यस्य द्वितयस्य यत्र सत्त्वं तत्र परस्य यणः पूर्वं संप्रसारणेन भाव्यमिति "उवाय" इत्यनुपपन्नमिति चेन्न, "लिटि वयो यः" इति यस्य निषेधाद् वस्यैव संप्रसारणप्रवृत्तेः ॥ ५ **ग्रहिज्यावयीति** । अत्र सूत्रे वयिग्रहणं न कार्यम् । स्थानिवद्भावेनास्य वेञ्त्वाद् "वचिस्वपि" इत्येव सिद्धेः । नच "वेञः" इति निषेधे प्राप्ते प्रतिप्रसवविधिरयमस्त्विति वाच्यम्, "लिटि वयो यः" इति निषेधारम्भसामर्थ्येन "वेञः" इति निषेधस्यात्राप्रवृत्तेः । नच "लिटि वयः" इति सूत्रं "वयेर्यस्यैव संप्रसारणं न" इति नियमार्थमस्त्विति वाच्यम्, एवमपि वयादेशस्य यो यकारस्तस्य नियमेन संप्रसारणाभावे वकारस्य परिशेषाद् "वचिस्वपि" इत्यनेन सिद्धे "ग्रहिज्या" इति सूत्रे वयिग्रहणवैयर्थ्यस्य तदवस्थत्वात् । "वेञः" इत्यत्र "किति" इत्यनुवृत्त्या "कित्येव निषेधः" इति तु न वाच्यम्, अविशेषेण लिटि प्रतिषेधस्येष्टत्वात् । अत एव "ववौ" "ववथ" इत्यत्र सिद्धिः । तदुक्तं भाष्ये—"अविशेषेण प्रतिषेधः । निवृत्तं तत्र किति" इति । आतश्चाविशेषेण । वेञोऽपि हि पित्सु वचनेष्वभ्यासस्य संप्रसारणं नेष्यते" इति । इति बोध्यम् ॥ ६ **ऊवतुरिति** । नन्वत्र वकारे कृते वकारस्य संप्रसारणापत्तिः ॥ "वेञः" इति निषेधस्तु न भविष्यति, "लिटि वयो यः" इति सूत्रारम्भसामर्थ्यादिति चेन्न, "उश्चास्य" इत्येव सिद्धे वादेशविधानसामर्थ्येन वस्य संप्रसारणाप्रवृत्तेः ॥ ७ स्थान्युपदेशेऽजन्तत्वादादेशस्यादन्तत्वाच्च थलि नियममाशङ्क्याऽऽह—**वयेस्तासाविति** । "यस्तासावस्ति नित्यानिट् च" इति भाष्योक्तेः । नहि तासौ सता स्थानिवद्भावसहस्रेणापि अतिदेष्टुं शक्याऽशास्त्रीयत्वादिति भावः ॥

सामर्थ्यात् । अन्यथा वच्यादीनां ग्रह्यादीनां आनुवृत्त्येव सिद्धे किं तेन । विव्याय । विव्यतुः । विव्युः । ईडत्त्यर्तीति नित्यमिट् । विव्ययिथ । विव्याय । विव्यय । विव्ये । व्याता । वीयात् व्यासीष्ट । अव्यासीत् । अव्यास्त ॥ १४ ॥ ह्वेञ् स्पर्धायां शब्दे च ॥ **अभ्यस्तस्य च । ६ । १ । ३३ ॥** अभ्यस्तीभविष्यतो ह्वेञः संप्रसारणं स्यात् । ततो द्वित्वम् । जुहाव । जुहुवतुः । जुहुवुः । जुहोथ । जुहविथ । जुहुवे । ह्वाता । हूयात् । ह्वासीष्ट ॥ **लिपि-सिचिह्वश्च । ३ । १ । ५३ ॥** एभ्यश्च्लेरङ् स्यात् ॥ **आत्मनेपदेष्वन्यतरस्याम् । ३ । १ । ५४ ॥** अतो लोपः । अह्वत् । अह्वताम् । अह्वन् । अह्वत । अह्वास्त ॥ २५ ॥ **अथ द्वौ परस्मैपदिनौ ॥ वद** व्यक्तायां वाचि । अच्छ वदति । उवाद । ऊदतुः । उवदिथ । वदिता । उद्यात् । वदव्रजेति वृद्धिः । अवादीत् ॥ १ ॥ **टुओश्वि** गति-वृद्ध्योः । श्वयति ॥ **विभाषा श्वेः । ६ । १ । ३० ॥** श्वयतेः संप्रसारणं वा स्याल्लिटि यङि च ॥ शुशाव । शुशुवतुः ॥ **श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः *** ॥ तेन लिट्यभ्यासस्येति संप्रसारणं न । शिश्वाय । शिश्वियतुः । श्वयिता । श्वयेत् । शूयात् । जॄस्तम्भ्वित्यङ् वा ॥ **श्वयतेरः । ७ । ४ । १८ ॥** श्वयतेरिकारस्य अकारः स्यादङि ॥ पररूपम् । अश्वत् । अश्वताम् ।

---

१ **सामर्थ्यादिति** । तत्सामर्थ्यात् पुनर्विधानम्, तेन विध्यन्तराणां बाध इति भावः ॥ एतेन उभयेषां-ग्रहणेनाभ्यासावयवस्य "हलादिः शेषः" इत्यनेन प्राप्ता या निवृत्तिस्तस्या बाध इत्युक्तं तल्लाभोऽक्षरमर्यादया न लभ्यते इत्यपास्तम् ॥ इदमेव च "अभ्यासलोपाभ्याससंप्रसारणविषये" "अभ्यासविकारे बाध्यबाधक-भावो न" इति न प्रवर्तते इति सामान्यतो ज्ञापयति" । अत एव "**व्यथो लिटि**" इत्यस्य यलोपं बाधित्वा प्रवृत्तिः सिद्धा । "सम्प्रसारणं तदाश्रयं च कार्यं बलवत्" इति तूभयेषांग्रहणवैयर्थ्यापत्त्या भाष्ये प्रत्याख्यातम् ॥ २ **इडत्त्यर्तीति** । अन्यथा "**ऋतो भारद्वाजस्य**" इति विकल्पः स्यादिति भावः ॥ ३ "अभ्यस्तस्य ह्वेञः सम्प्रसारणम्" इति सूत्रार्थे "जुहूषति जोहूयते" इति न सिद्ध्यति । "जिह्वाययिषति" इत्यत्र सम्प्रसारणाभावाय "अभ्यस्तनिमित्ते परे सम्प्रसारणम्" इत्यर्थो वक्तव्यः । एवं च "द्वित्वे भ्यस्तसंज्ञाया-मुत्तरखण्डस्य संप्रसारणे अभ्यासस्य "न संप्रसारणे" इति निषेधः स्यादत आह–**अभ्यस्तीभविष्यत इति** । नच "जिह्वायकीयिषति" इत्यादावपि संप्रसारणापत्तिरिति वाच्यम् "**अभ्यस्तीभविष्यतः**" इत्यस्य "**अभ्यस्तप्रकृतिभूतस्य ह्वेञः**" इत्यर्थेनादोषात् । अत्र हि क्यजन्तः सन्नन्तो वा अभ्यस्तप्रकृतिः । यद्गतं धातुत्वं निमित्तीकृत्य अवयवस्यैकाचो द्वित्वं स हि तत्प्रकृतिरित्युच्यते ॥ ४ **जुहुवतुरिति** । "ह्वा अतुस्" इति दशायामालोपापेक्षया "अभ्यस्तीभविष्यतः" इति व्याख्यानेनानुत्पन्न एवाभ्यस्तप्रत्यये संप्रसारण-विधानादनैमित्तिकत्वेनान्तरङ्गत्वात्संप्रसारणे वार्णपरिभाषाया अनित्यत्वाश्रयणेनान्तरङ्गत्वात् पूर्वरूपे ततो द्वित्वे उवङ् । उवङादेशे कर्तव्ये "अचः परस्मिन्–" इति पूर्वरूपस्य स्थानिवत्त्वं तु न, अजादेशाधिकरणत्वपर्याप्त्य-धिकरणस्य यत्र परस्मिन्निति शब्दबोध्यपरत्वेन ग्रहणं तत्रैव स्थानिवद्भावस्य प्रवृत्त्या आकारैकादेशस्याकारात्परी-भूतनिमित्तकत्वाभावात् स्थानिवत्त्वाप्रवृत्तेः ॥ ५ "**शुशाव**" **इति** । नन्वत्र द्वित्वात् परत्वादुवङ्वृद्ध्यायादेशे च रूपासिद्धिरिति चेन्न, कृताकृतप्रसङ्गित्वमात्रेण नित्यत्वात्संप्रसारणेऽन्तरङ्गत्वात् पूर्वरूपे द्वित्वे उवङ्वायादेशयो रूपसिद्धेः सुगमत्वात् ॥ ६ ननु "विभाषा श्वेः" इत्यस्य वैकल्पिकत्वेन तदभावपक्षे "लिट्यभ्यासस्य" इति दुर्वारम्, तथा च "शिश्वाय" इत्यस्यासिद्धिरत आह–**श्वयतेर्लिटीति** ॥ "श्वयतेर्लिटि" इति वचन-सामर्थ्यात् श्वयत्यभ्यासविषयकलक्षणानुपप्लव एवेति भावः ॥ ७ **पररूपमिति** । आर्धधातुकोपदेशेऽदन्तत्वा-भावान्नातो लोपः ॥

अश्वन्[1]। विभाषा धेट्श्व्योरिति चङ्। इयङ्। अशिश्वियत्। ह्म्यन्तेति न वृद्धिः। अश्वयीत्॥ २॥ वृत्॥ यजादयो वृत्ताः। भ्वादिस्त्वाकृतिगणः। तेन चुलुम्पतीत्यादिसंग्रहः॥ ॥

इति भ्वादिप्रकरणम्।

## अथादादिप्रकरणम्।

**ऋतेरीयङ्। ३। १। २९॥** ऋतिः सौत्रः, तस्मादीयङ् स्यात्स्वार्थे॥ जुगुप्सायामयं धातुरिति बहवः। कृपायां चेत्येके[3]। सनाद्यन्ता इति धातुत्वम्। ऋतीयते। ऋतीयांचक्रे। आर्धधातुकविवक्षायां तु आयादय आर्धधातुके वेतीयङभावे। शेषात्कर्तरीति परस्मैपदम्। आनर्त। अर्तिष्यति। आर्तीत्॥ १॥ **अद** भक्षणे। **द्वौ परस्मैपदिनौ॥ अदिप्रभृतिभ्यः शपः। २। ४। ७२॥** लुक् स्यात्॥ अत्ति। अत्तः। अदन्ति॥ **लिट्यन्यतरस्याम्। २। ४। ४०॥** अदो घस्लृ वा स्याल्लिटि॥ जघास। गमहनेत्युपधालोपः। तस्य चर्विधिं प्रति स्थानिवद्भावनिषेधाद्घस्य चर्त्वम्। शासिवसीति षत्वम्। जक्षतुः। जक्षुः। घसस्तासावभावात्थलि नित्यमिट्। जघसिथ। आद। आदतुः। इडत्त्यर्तीति नित्यमिट्। आदिथ। अत्ता। अत्स्यति। **हुझल्भ्यो हेर्धिः[4]। ६। ४। १०१॥** होर्झलन्तेभ्यश्च हेर्धिः स्यात्॥ अद्धि। अत्तात्[5]। अदानि॥ **अदः सर्वेषाम्। ७। ३। १००॥** अदः परस्याप्रृक्तसार्वधातुकस्य अडागमः स्यात्सर्वमतेन॥ आदत्। आत्ताम्। आदन्। आदः। आत्तम्। आत्त। आदम्। आद्व। आद्म। अद्यात्। अद्याताम्। अद्युः। अद्यास्ताम्। अद्यासुः॥ **लुङ्सनोर्घस्लृ। २। ४। ३७॥** अदो घस्लृ स्यात् लुङि सनि च॥ लृदित्त्वादङ्। अघसत्॥ २॥ **हन** हिंसागत्योः। प्रणिहन्ति॥ **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति। ६। ४। ३७॥** अनुनासिकेति

---

१ **अश्वयीदिति।** नन्वत्र परस्मैपदसिज्निमित्तकत्वेन वृद्धेर्बहिरङ्गत्वात्, सिज्मात्रापेक्षत्वेनान्तरङ्गे गुणे कृते इगन्तत्वाभावाद् वृद्ध्यप्राप्त्याऽयादेशे यान्तत्वादेव हलन्तलक्षणाया वृद्धेर्निषेधे सिद्धे किं "ह्म्यन्त" इत्यत्र णिश्विग्रहणेनेति चेन्न,सिचि वृद्धेर्येन नाप्राप्तिन्यायेनान्तरङ्गापवादत्वादिति संक्षेपः। येन नाप्राप्तिन्यायमूलक एव "**न सिच्यन्तरङ्गमस्ति**" इत्युद्घोषः॥ इति भ्वादयः॥ २ "**ऋतेरीयङ्**" इति। "ऋतेङ्यः" इत्येव न्यासे ङ्यप्रत्यये "अकृत्सार्व–" इति दीर्घेण सिद्धे ईयङ्करणात् तान्तोऽयं धातुर्नत्विकारान्तः। "ऋतेश्छङ्" इत्येवं न्यासे छङ्प्रत्यये "आयनेय्–" इतीयादेशेन सिद्धौ ईयङ्विधिः–"धातुविहितानामायन्नादयो न भवन्ति" इति ज्ञापयतीति दाधिमथाः॥ ३ **इत्येके इति।** "ऋतीयते स्याद् घृणयोः" इति कोशादर्थद्वयमपि। घृणयोः इत्यस्य 'जुगुप्साकरुणयोः' इत्यर्थः॥ ४ **हुझल्भ्य इति।** "हुझल्भ्यः परस्य निर्दिश्यमानस्य हेर्धिः स्यात्" इति सूत्रार्थः। तेन "रुदिहि" इत्यादौ न दोषः॥ ५ **अत्तादिति।** धित्वात् परत्वात् तातङि स्थानिवत्त्वेन पुनर्धित्वं तु न, "सकृद्गतौ" इति न्यायात्॥ नचासम्भवरूपविरोधाभावात् कथं परत्वेन व्यवस्थेति वाच्यम्,युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्याभावरूपासम्भवसत्त्वात्। तादृशासम्भव एव च विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी। स्थानिवत्त्वं तु कार्यप्रवृत्त्युत्तरं न प्रवृत्तिकाले इति युगपदसंभवः स्पष्ट एवेति दिक् इति शब्दरत्नकृत्॥

लुप्तषष्ठीकं वनतीतरेषां विशेषणम् । अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे ॥ यमि रमि नमि गमि हनि मन्यतयोऽनुदात्तोपदेशाः । तनु षणु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः ॥ हतः । घ्नन्ति ॥ **वमोर्वा । ८ । ४ । २३ ॥** उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्याद्वमयोः परयोः ॥ प्रहण्मि । प्रहन्मि । प्रहण्वः । प्रहन्वः । हो हन्तेरिति कुत्वम् । जघान । जघ्नतुः । जघ्नुः ॥ **अभ्यासाच्च । ७ । ३ । ५५ ॥** अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् ॥ जघनिथ । जघन्थ । हन्ता । ऋद्धनोरितीट् । हनिष्यति । हन्तु । हतात् । घ्नन्तु ॥ **हन्तेर्जः । ६ । ४ । ३६ ॥** हौ परे ॥ आभीयतयाऽस्यासिद्धत्वाद्धेर्न लुक् । जहि । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहनम् ॥ **आर्धधातुके । २ । ४ । ३५ ॥** इत्यधिकृत्य ॥ **हनो वध लिङि । २ । ४ । ४२ ॥ लुङि च । २ । ४ । ४३ ॥** वधादेशोऽदन्तः । आर्धधातुक इति विषयसप्तमी । तेनार्धधातुकोपदेशे आकारान्तत्वादतो लोपः । वध्यात् । वध्यास्ताम् । आर्धधातुके किम् ? विध्यादौ हन्यात् । हन्तेरिति णत्वम् । प्रहण्यात् । अल्लोपस्य स्थानिवत्त्वाद् 'अतो हलादे-रिति न वृद्धिः । अवधीत् ॥ २ ॥ **अथ चत्वारः स्वरितेतः ॥ द्विष** अप्रीतौ । द्वेष्टि । द्विष्टे । द्वेष्टा । द्वेक्ष्यति । द्वेक्ष्यते । द्वेष्टु । द्विष्टात् । द्विड्ढि । द्वेषाणि । द्वेषै । द्वेषावहै । अद्वेट् ॥ **द्विषश्च । ३ । ४ । ११२ ॥** लङो झेर्जुस् वा स्यात् ॥ अद्विषुः । अद्विषन् । अद्वेषम् । द्विषीत । द्विक्षीष्ट । अद्विक्षत् ॥ १ ॥ **दुह** प्रपूरणे । दोग्धि । दुग्धः । धोक्षि । दुग्धे । धुक्षे । धुग्ध्वे । दोग्धु । दुग्धि । दोहानि । धुक्ष्व । धुग्ध्वम् । दोहै । अधोक् । अदोहम् । अधुग्ध्वम् । अधुक्षत् । अधुक्षत । लुग्वा दुहेति लुक्पक्षे तथासूध्वंवहिषु लङ्वदपि ॥ २० ॥ **दिह** उपचये । प्रणिदेग्धि ॥ ३ ॥ **लिह** आस्वादने । लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिक्षे । लीढ्वे । लेढु । लीढि । लेहानि । अलेट् । अलिक्षत् । अलिक्षत । अलीढ । अलिक्षावहि । अलिह्वहि ॥ ४ ॥ **चक्षिङ्** व्यक्तायां वाचि । अयं दर्शनेऽपि । इकारोऽनुदात्तो युजर्थः । विचक्षणः प्रथयन् । नुम् तु न । 'अन्तेदित' इति व्याख्यानात् । ङकारस्तु अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थः । तेन स्फायन्निर्मोकसन्धीत्यादि सिध्यति । चष्टे चक्षाते । 'आर्धधातुके' इत्यधिकृत्य ॥ **चक्षिङः ख्याञ् । २ । ४ ।**

---

१ ननु "एतेषामनुनासिकस्य लोपः" इति व्याख्याने मुचनहप्रभृतिष्वनन्त्यस्यापि लोपः स्यादत आह--**लुप्तषष्ठीकमिति** । सौत्रत्वाल्लुप्तविभक्तिकमित्यर्थः । **वनतीतरेति** । वनतेरन्य भचाराम्न विशेषणमिति भावः । तेन मुचादौ न दोषः ॥ २ **अनुदात्तोपदेशा इति** । "अनुनासिकान्ताः" इति शेषः ॥ एतेन मृशनुदादीनामप्यनुदात्तोपदेशत्वादिदं न्यूनमित्यपास्तम् ॥ ३ "जघनिथ" इत्यादौ नकारञ्णित्परत्वाभावादाह--**अभ्यासाच्चेति** । अभ्याससंज्ञानिमित्तद्विर्वचननिमित्तप्रत्ययस्य हन्तिनिष्ठाङ्गसंज्ञानिमित्तत्व एवास्य प्रवृत्तिः । तेन "जिहननीयिषति" इत्यादौ न ॥ ४ **अयं दर्शनेऽपीति** । "विश्वा रूपाभिचष्टे शचीभिः" इत्यादौ तथा दर्शनात् । **युजर्थ इति** । "अनुदात्तेतश्च हलादेः" इति युजर्थ इत्यर्थः ॥ विचक्षणश्चित्स्वरादन्तोदात्तः ॥ ५ **ज्ञापनार्थ इति** । इदं माधवानुरोधेन । स्फायन्नित्याद्यसाध्वेव ॥

५४ ॥ **वा लिटि** २ । ४ । ५५ ॥ अत्र भाष्ये "ख्शादिरयमादेशः । असिद्धकाण्डे शस्य यो वा" इति स्थितम् ॥ ञित्त्वात्पदद्वयम् । **चख्यौ** । चख्ये । चक्शौ । चक्शे । 'चयो द्वितीया' इति तु न । चर्त्वस्यासिद्धत्वात् । चचक्षे । ख्याता । क्शाता । ख्यास्यति । ख्यास्यते । क्शास्यति । क्शास्यते । अचष्ट । चक्षीत । ख्यायात् । ख्येयात् । क्शायात् । क्शेयात् ॥ **अस्यतिवक्तिख्यातिभ्योऽङ्** । ३ । १ । ५२ ॥ एभ्यश्च्लेरङ् ॥ अख्यत् । अख्यत । अक्शासीत् । आक्शास्त ॥ **वर्जने ख्शाञ् नेष्टः** * ॥ समचक्षिष्टेत्यादि ॥ ५ ॥

**अथ पूच्यन्ता अनुदात्तेतः** ॥ **ईर** गतौ कम्पने च । ईर्ते । ईरांचक्रे । ईर्ताम् । ईर्ष्व । ईर्ध्वम् । ऐरिष्ट ॥ १ ॥ **ईड** स्तुतौ । ईट्टे ॥ **ईशः से** । ७ । २ । ७७ ॥ **ईडजनोर्ध्वे च** । ७ । २ । ७८ ॥ ईशीडजनां सेध्वेशब्दयोः सार्वधातुकयोरिट् स्यात् ॥ योगविभागो वैचित्र्यार्थः। ईडिषे । ईडिध्वे । एकदेशविकृतस्यानन्यत्वात् । ईडिष्व। ईडिध्वम् । विकृतिग्रहणेन प्रकृतेरग्रहणात् । ऐड्ढ्वम् ॥ २ ॥ **ईश** ऐश्वर्ये । ईष्टे । ईशिषे । ईशिध्वे ॥ ३ ॥ **आस** उपवेशने । आस्ते । दयायासश्च । आसांचक्रे । आस्स्व । आध्वम् । आसिष्ट ॥ ४ ॥ **आङः शासु** इच्छायाम् । आशास्ते ॥ आशासाते । आङ्पूर्वत्वं प्रायिकम् । तेन 'नमोवाकं प्रशास्महे' इति सिद्धम् ॥ ५ ॥ **वस** आच्छादने । वस्ते । वस्से । वध्वे । ववसे । वसिता ॥ ६ ॥ **कसि** गतिशासनयोः । कंस्ते । कंसाते । कंसते । अयमनिदिदित्येके । कस्ते । तालव्यान्तोऽप्यनिदित् । कष्टे । कशाते । कक्षे । कड्ढ्वे ॥ ७ ॥ **णिसि** चुम्बने । निंस्ते । दन्त्यान्तोऽयम् । आभरणकारस्तु तालव्यान्त इति बभ्राम ॥ ८ ॥ **णिजि** शुद्धौ । निङ्क्ते । निङ्क्षे । निञ्जिता ॥ ९ ॥ **शिजि** अव्यक्ते शब्दे । शिङ्क्ते ॥ १० ॥ **पिजि** वर्णे । संपर्चने इत्येके । उभयत्रेत्यन्ये । अवयवे इत्यपरे । अव्यक्ते शब्दे इतीतरे । पिङ्क्ते ॥ ११ ॥ **पृजि** इत्येके । पृङ्क्ते ॥ १२ ॥ **वृजी** वर्जने । दन्त्योष्ठ्यादिः । ईदित् । वृक्ते । वृजाते । वृक्षे । इदिदित्यन्ये । वृङ्क्ते ॥ १३ ॥ **पृची** संपर्चने । पृक्ते ॥ १४ ॥ **षूङ्** प्राणिगर्भविमोचने । सूते । सुषुवे । सोता । सविता ।

---

१ "वा लिटि" "लिड्यङोश्च" इतिवत् विषयसप्तमीयं तेन द्वित्वसिद्धिः ॥ २ असिद्धकाण्डे इति। "णत्वप्रकरणानन्तरम्" इति शेषः । असिद्धकाण्डे पाठेन सुप्रख्येन निर्वृत्तं सौप्रख्यम्, तत्र भवः "सौप्रख्यीयः" इत्यत्र यत्वस्यासिद्धत्वेन योपधत्वाभावात् "धन्वयोपधाद् वुञ्" इति वुञ् न, किं तु "वृद्धाच्छः" इति छ एव ॥ णत्वानन्तरपाठेन "पर्याख्यानम्" इत्यत्र "कृत्यचः" इति णत्वं न, "कृत्यचः" इति सूत्रस्थस्य "ख्शाञः शस्य यो वा" इत्यस्यासिद्धतयाऽडादिभिन्नेन शकारेण व्यवधानात् ॥ ३ "अस्यतिवक्ति" अस्यतेः पुषादित्वात्सिद्धे तङर्थं ग्रहणम् । "व्यत्यसत" इति ॥ "वक्ति" इत्यनेन वच्यादेशस्य तन्त्रयोरुभयोर्ग्रहणम् । "ख्याति" इति प्रयोगस्थानामनुकरणम् ॥ ४ "ईशीडजनां सेध्वयोः" इत्येव सिद्धे किमर्थो योगविभागस्तत्राह–वैचित्र्यार्थ इति । "ध्वे" इत्यस्य पूर्वत्रापकर्षः, "से" इत्यस्योत्तरत्रानुवृत्तिः" इति वैचित्र्यम् ॥ ५ विकृतिग्रहणेनेति । विकृतेश्चारणवैयर्थ्यापत्तः "क्वचिद् विकृतिः प्रकृतिं गृह्णाति" इति तु भाष्यानुक्तत्वादप्रमाणमिति भावः ॥ ६ नमोवाकमिति । 'नमस्ते रुद्र मन्यव' इत्यादिवचनम्, नमस्कारमिति यावत्, प्रशास्महे=कुर्महे इत्यर्थः । वाक इत्यत्र वचेर्भावे घञ् । "चजोः" इति कुत्वम् ॥

भूसुवोरिति गुणनिषेधः । सुवै । सविषीष्ट । सोषीष्ट । असविष्ट । असोष्ट ॥ १५ ॥ **शीङ्** स्वप्ने ॥ **शीङः सार्वधातुके गुणः । ७ । ४ । २१ ॥** क्ङिति चेत्यस्यापवादः । शेते । शयाते ॥ **शीङो रुट् । ७ । १ । ६ ॥** शीङः परस्य झादेशस्यातो रुडागमः स्यात् ॥ शेरते । शेषे । शेध्वे । शये । शेवहे । शिश्ये । शयिता । अशयिष्ट ॥ १६ ॥ **अथ कौत्यन्ताः परस्मैपदिनः** ॥ ऊर्णुस्तूभयपदी ॥ **यु** मिश्रणेऽमिश्रणे च ॥ **उतो वृद्धिर्लुकि हलि । ७ । ३ । ८९ ॥** लुग्विषये उकारस्य वृद्धिः स्यात्पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य ॥ यौति । युतः । युवन्ति । युयाव । यविता । युयात् । इह[1] उतो वृद्धिर्न । भाष्ये[2] पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानात् । विशेष[3]विहितेन ङित्त्वेन पित्त्वस्य बाधात् । यूयात् । अयावीत् ॥ १ ॥ **रु** शब्दे ॥ **तुरुस्तुशम्यमः सार्वधातुके । ७ । ३ । ९५ ॥**[4] एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड्वा स्यात ॥ नाभ्यस्तस्येत्यतोऽनुवृत्तिसंभवे पुनः सार्वधातुकग्रहणमपिदर्थम् । रवीति । रौति । रुवीतः । रुतः । हलादेः किम् ? रुवन्ति । तिङः किम् । शाम्यति । सार्वधातुके किम् ? आशिषि–रूयात् । विध्यादौ तु–रुयात् । रुवीयात् । अरावीत् । अरविष्यत् ॥ २ ॥ **तु** इति सौत्रो धातुर्गतिवृद्धिहिंसासु । अयं च लुग्विकरण इति स्मरन्ति[5] । तवीति । तौति । तुवीतः । तुतः । तोता । तोष्यति ॥ ३ ॥ **णु** स्तुतौ । नौति । नविता ॥ ४ ॥ **टुक्षु** शब्दे । क्षौति । क्षविता ॥ ५ ॥ **क्ष्णु** तेजने । क्ष्णौति । क्ष्णविता ॥ ६ ॥ **ष्णु** प्रस्रवणे । स्नौति । सुष्णाव । स्नविता । स्नुयात् । स्नूयात् ॥ ७ ॥ **ऊर्णुञ्** आच्छादने ॥ **ऊर्णोतेर्विभाषा । ७ । ३ । ९० ॥** वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके ॥ ऊर्णौति । ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते ॥ **ऊर्णोतेराम् नेति[6] वाच्यम् ॥ * ॥ न न्द्राः संयोगादयः । ६ । १ । ३ ॥** अचः[7] पराः संयोगादयो नदरा द्विर्न भवन्ति ॥ नुशब्दस्य[8]

---

१ ननु "युयात्" इत्यत्र तिपः पित्त्वेन तदागमस्य यासुटोऽपि यदागमपरिभाषया पित्त्वाद् "उतो वृद्धिः इति वृद्धया भाव्यमिति शङ्कमानं प्रत्याह–**इहेति** ॥ २ **भाष्ये पिच्चेति** । "सार्वधातुकमपित्" इत्यस्यानुवृत्त्येदं लभ्यते इति "यासुट् परस्मैपदेषु" इति सूत्रेऽवोचाम ॥ ३ ननु पूर्ववाक्येन ङित्त्वमपि दुर्लभमत आह–**विशेषेति** ॥ ४ "तुरुस्तु" इति । शम्यमोः "बहुलं छन्दसि" इति विकरणलुकि वेदे उदाहरणम् । शमीध्वम् । अभ्यमीति, अभ्यन्ति । इति ॥ ५ **स्मरन्तीति** । न्यासकारवर्धमानादयः । अव्यवहिततिङ ईड्विधानं रुसाहचर्यं चात्र बीजम् ॥ ६ **आम् नेतीति** । ऊर्णोतेर्नुवद्भावेन "इजादेः" इति, "अनेकाच" इति वाऽऽमोऽभावस्यातिदेशादिति भावः ॥ एतेन ऊर्णोतेरनेकाच्त्वाद् वार्तिकमते आम् स्यादेवेत्यपास्तम् ॥ ७ "अजादेः" इति कर्मधारयात् पञ्चमी तदाह–**अचः परा** इति । आदिभूतादचः परा इत्यर्थः । तेन "इन्दिद्रीयिषति" इत्यस्य सिद्धिः ॥ ८ ननूत्तरखण्डेऽपि णकारश्रवणं स्यादत आह–**नुशब्दस्येति** । "रषाभ्याम्" इति विहितणत्वस्य "लिटि धातोः" इति द्वित्वविधायकसूत्रदृष्ट्याऽसिद्धतया नुबुद्ध्यैव द्वित्वकरणात् ॥ ननु असिद्धेऽपि जायमानकार्यस्य यत्रारोपस्तस्यैव प्रसक्त्या प्रयोगे णकारश्रवणं दुर्वारमेवेति चेन्न, यद्बुद्ध्या शास्त्रप्रवृत्तिस्तदीयद्वितीयप्रयोगस्यैव साधुत्वान्वाख्यानान्नोत्तरखण्डे णकारश्रवणम्, पूर्वोच्चारितेन नकारेण व्यवधानाच्च न शास्त्रेण तत्प्रसङ्ग इत्यभिप्रायात् ॥

द्वित्वम् । णत्वस्यासिद्धत्वात् । 'पूर्वत्रासिद्धीयमद्विर्वचने' इति त्वनित्वम् । उभौ साभ्यासस्येति लिङ्गात् । ऊर्णुनाव: । ऊर्णुनुवतुः । ऊर्णुनुवुः ॥ **विभाषोर्णोः । १ । २ । ३ ॥** इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुनुविथ । ऊर्णुनविथ । ऊर्णुविता । ऊर्णविता । ऊर्णोतु । ऊर्णोतु । ऊर्णवानि । ऊर्णवै ॥ **गुणोऽपृक्ते । ७ । ३ । ९१ ॥** ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः ॥ और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुयाः । इह वृद्धिर्न–ङिच्च पिन्नेति भाष्यात् । उर्णूयात् । ऊर्णविषीष्ट । ऊर्णुविषीष्ट । और्णुवीत् । और्णुविष्टाम् । **ऊर्णोतेर्विभाषा । ७ । २ । ६ ॥** इडादौ सिचि परस्मैपदे परे वा वृद्धिः स्यात् ॥ पक्षे गुणः । और्णावीत् । और्णाविष्टाम् । और्णाविषुः । और्णवीत् ॥ ८ ॥ **द्यु** अभिगमने । द्यौति । द्योता ॥ ९ ॥ **षु** प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । सोता । असौषीत् ॥ १० ॥ **कु** शब्दे । कोता ॥ ११ ॥ **ष्टुञ्** स्तुतौ । स्तौति । स्तवीति । स्तुतः । स्तुवीतः । स्तुते । स्तुवीते । स्तुसुधूञ्भ्य इती । अस्तावीत् । प्राक्सितादिति षत्वम् । अभ्यष्टौत् । सिवादीनां वा । पर्यष्टौत् । पर्यस्तौत् ॥ १२ ॥ **ब्रूञ्** व्यक्तायां वाचि ॥

---

१ ननु "णत्वस्यासिद्धत्वात्" इत्यनुपपन्नम्, "पूर्वत्रासिद्धीयमद्विर्वचने" इति परिभाषया द्वित्वभिन्न एवासिद्धत्वबोधनादत । आह–**पूर्वत्रासिद्धीयमिति** । पूर्वत्रासिद्धशब्दोऽधिकारपरः । ततो गहादेराकृतिगणत्वाद् भवार्थे छप्रत्ययः । ततश्च "पूर्वत्रासिद्धम्" इत्यधिकारे यच्छास्त्रं तत्र "अद्वित्वे" इत्युपतिष्ठते इत्यक्षरार्थः ॥ "द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धम्" इति प्रदेशेषु तादृशाधिकारे चैकवाक्यतया लब्धोऽर्थः । अस्यां च परिभाषायाम्–षाष्ठं धातुद्वित्वमाष्टमिकं पदद्वित्वं वर्णद्वित्वश्च गृह्यते विनिगमनाविरहादिति स्पष्टं प्रदीपोद्द्योतयोः । अत एव "वाक्क् वाक्" इति भाष्योक्तं द्वित्वोदाहरणं संगच्छते । अन्यथा चर्त्वस्यासिद्धत्वाद् गकारस्य द्वित्वे परस्यावसानिकचर्त्वेन ककारेऽपि पूर्वत्र गकारश्रवणापत्त्या तदसङ्गतिरेव । "खरि च" इत्यनेन तु न निर्वाहः । तद्दृष्ट्या "वावसाने" इत्यस्यासिद्धत्वात् । नच वर्णद्वित्वेऽप्यस्याः प्रवृत्त्यङ्गीकारे "द्वित्वे परसवर्णस्य सिद्धत्वं वक्तव्यम्" इति वार्तिकवैफल्यमिति वाच्यम्, तादृशवार्तिकस्यापूर्वत्वकल्पनापेक्षया प्रकृतपरिभाषैकदेशविशेषानुवादरूपत्वे लाघवात् । "कृष्णर्द्धिः" इत्यादौ जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषाभावेन नास्याः प्रवृत्तिः, यत्र सिद्धत्वासिद्धत्वयोः फले विशेषस्तत्रैव प्रवृत्त्यङ्गीकारात् । अस्यां च परिभाषायाम्–"अणुदित्–" इति ग्राहकसूत्रस्थमणग्रहणं ज्ञापकम्, परणकारेण प्रत्याहाराश्रयणं हि "सय्यँन्ता" "विद्वाँल्लिखति" इत्यादावनुनासिकयवलानां यत्वेन द्वित्वार्थम् । प्रकृतपरिभाषाया अभावे द्वित्वात्पूर्वं परसवर्णस्य दौर्लभ्यात् तद्वैयर्थ्यमेवेति ज्ञापकत्वसम्भवः । यदि तु जातिपक्षावलम्बेन ग्राहकसूत्रस्थमणग्रहणं भगवता भाष्यकारेण प्रत्याख्यायत इति विभाव्यते तदा वाचनिक्येवैषा परिभाषेति निष्कर्षः ॥ २ अनित्यत्वे प्रमाणमुपन्यस्यति–**उभौ साभ्यासस्येति** । तद्धि "प्राणिणत्" इत्यादौ उभयोरपि नकारयोर्णत्वार्थं सूत्रकृता व्यरचि, प्रकृतपरिभाषावशाद् "अनितेः" इत्यस्य प्रवृत्त्युत्तरमेव द्वित्वे व्यर्थमेव तत्स्यादित्येतदनित्यत्वं ज्ञापयतीति भावः ॥ नच ज्ञापितेऽपि प्रकृतपरिभाषाया अनित्यत्वे व्यर्थं तत्रोभौग्रहणम्, आरम्भसामर्थ्यादेव द्वयोर्नकारयोर्णत्वसिद्धेरिति वाच्यम् । अभ्यासस्यानर्थक्यादुत्तरखण्डस्य च सुतरामप्राप्तस्य "प्राणिणत्" इत्यादौ क्वचित्समर्पणे कृतार्थस्य उभयत्र तत्संपादने सामर्थ्यायोगेनोभौग्रहणस्यावश्यकत्वादिति संक्षेपः । एवं च णत्वविधावस्यानुपस्थानमिति भावः ॥ ३ "**विभाषोर्णोः**" ॥ "विज इट्" इति सूत्राद् "इट्" इत्यनुवर्तते, सचागम एव "विज इट्" इत्यत्र तस्यैव संभवेनार्थाधिकारादत आह–**इडादिप्रत्यय इति** । तेन "प्रोर्णुवि" इत्यत्र न विकल्पः । अन्यथा "निषेधाश्च बलीयांसः" इति परिभाषया परमपि "सार्वधातुकमपित्" इति बाधित्वा विकल्पापत्तिर्दुरुद्धरैव ॥

**ब्रुवः पञ्चानामादित आहो ब्रुवः । ३ । ४ । ८४ ॥** ब्रुवो लटः परस्मैपदानामादितः पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । अकार उच्चारणार्थः । आह । आहतुः । आहुः ॥ **आहस्थः । ८ । २ । ३५ ॥** झलि परे ॥ चर्त्वम्[1] । आत्थ । आहथुः ॥ **ब्रुव ईट् । ७ । ३ । ९३ ॥** ब्रुवः परस्य हलादेः पित ईट् स्यात्[2] ॥ आत्थेत्यत्र स्थानिवद्भावात्प्राप्तोऽयं झलीति थत्वविधानान्न भवति । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते ॥ आर्धधातुकाधिकारे —॥ **ब्रुवो वचिः । २ । ४ । ५३ ॥**[3] उवाच । ऊचतुः । ऊचुः । उवचिथ । उवक्थ । ऊचे । वक्ता । ब्रवीतु । ब्रूतात् । ङिच्च पिन्नेत्यपित्त्वादीण्न । ब्रवाणि । ब्रवै । ब्रूयात् । उच्यात् । अस्यतिवक्तीत्यङ् ॥ **वच उम् । ७ । ४ । २० ॥** अङि परे ॥ अवोचत् । अवोचत ॥ १३ ॥

**॥ अथ शास्यन्ताः परस्मैपदिनः ।** इङ् त्वात्मनेपदी ॥ **इण्** गतौ । एति । इतः ॥ **इणो यण् । ६ । ४ । ८१ ॥** अजादौ प्रत्यये परे । इयङोपवादः ॥ यन्ति । इयाय[4] ॥ **दीर्घ इणः किति । ७ । ४ । ६९ ॥** इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि ॥ ईयतुः[5] । ईयुः । इययिथ । इयेथ । एता । इतात् । इहि । अयानि । ऐत् । ऐताम् । आयन्[6] । इयात् । ईयात् ॥ **एतेर्लिङि । ७ । ४ । २४ ॥**[7] उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि ॥ निरियात् ॥ उभयत आश्रयणे नान्तादिवत्[8] । अभीयात् ॥ अणः किम् ?

---

१ **चर्त्वमिति** । ननु प्रक्रियालाघवाय "आहस्तः" इत्येव सूत्र्यतां किं चर्त्वावलम्बनेनेति चेन्न, "होढः" इत्यादिमहाप्राणादेशप्रकरणात् तथा वक्तुमशक्यत्वात् ॥ २ **हलादेः पित इति** । "सार्वधातुकस्य" इत्यपि पूरणीयम् ॥ तेन "उवक्थ" इत्यत्र नेट् । "लिट् च" इत्यनेनास्यार्धधातुकत्वात् । "अपृक्त" इत्यनुवृत्त्या निस्तारस्तु वक्तुमशक्यः, "ब्रवीति" इत्यस्यासिद्ध्यापत्तेः ॥ ३ **ब्रुवो वचिरिति** । एतत्सूत्रारम्भसामर्थ्याद् "वच परिभाषणे" इति धातोरार्धधातुके प्रयोगाभावः, इतरथा "वक्ता" इत्यादीनि रूपाणि स्वतन्त्रस्यैव धातोर्भविष्यन्ति किमनेन । एवम्--"अस्तेर्भूः" इति सूत्रारम्भसामर्थ्याद् "भू सत्तायाम्" इति धातोर्नार्धधातुके प्रयोग इति केचित् ॥ ४ **इयाय इति** । अत्र इशब्दस्य द्वित्वे "वार्णादाङ्गम्" इति न्यायेन सवर्णदीर्घं बाधित्वा परस्य वृद्धौ पूर्वस्य "अभ्यासस्यासवर्णे" इतीयङादेशः ॥ ५ **ईयतुरिति** । ननु "इ इ अतुस्" इति स्थितेऽभ्यासदीर्घे यण्यपि स्थानिवत्त्वेन सवर्णदीर्घेऽभ्यासदीर्घविधानसामर्थ्यात् पुनर्यणभावे-'ई अतुः' इति प्राप्नोति "अनन्तरस्य" इति न्यायेन तत्सामर्थ्येन यण एव बाधो नतु दीर्घस्येति चेन्न, पूर्वस्यैव विधौ स्थानिवत्त्वेन यणि दीर्घाप्रवृत्तेरिति नागेशः ॥ ६ **आयन्निति** । यण आभीयासिद्धत्वादाट् ॥ ७ "**एतेर्लिङि**" इति सूत्रवृत्तौ "आर्धधातुके" इति स्वरूपकथनम् । "किति लिङि" इत्येतावतैव सिद्धेः ॥ ८ ननु "अभीयात्" इत्यत्र पूर्वान्तवद्भावेनोपसर्गत्वात् परादिवद्भावेन चेणोऽणत्वाद् "**एतेर्लिङि**" इति ह्रस्वापत्तिरत आह· **उभयत इति** । पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्यां च पुरःस्फूर्तिकत्वाद् विरुद्धातिदेशद्वयस्य युगपदसम्भवः । यथा द्वयोरेको भृत्यो भवति, स तयोः पर्यायेण कार्यं करोति । यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवतस्तदा सोऽविरोधार्थी कस्यापि कार्यं न करोति तद्वदिति भावः ॥ नच "अभीयात्" इत्यत्र "एकदेशविकृतमनन्यवत्" इति परिभाषया भान्तस्योपसर्गत्वादीकारस्य परादिवद्भावेनेणत्वाद् ह्रस्वो दुर्वार इति वाच्यम्, उपसर्गसंज्ञायाः परिच्छिन्नपरिमाणप्रादिगतत्वेन परिच्छिन्नपरिमाणे प्रकृतपरिभाषाप्रवृत्त्यनङ्गीकारेणोपसर्गत्वस्य दुर्वचत्वात् । नचैवमपि "अभीयात्" इत्यत्रैकादेशोत्तरमेकदेशविकृतन्यायेन भान्तस्य पदत्वाद्ध्रस्वापत्तिर्दुर्वारैवेति वाच्यम्, लक्ष्यानुरोधेन क्वचिन्न्यायाप्रवृत्तेः "प्रथमयोः पूर्वसवर्णः" इति सूत्रे कैयटेन दर्शितत्वात् ॥ वस्तुतस्तु "अभीयात्" इत्यत्र "वार्णादाङ्गम्" इति परिभाषया ह्रस्वे कृते "लक्ष्ये लक्षणम्" इति न्यायेन पुनर्ह्रस्वाप्रवृत्तेः "उभयत आश्रयणे" इत्यस्य नोपयोग इति बोध्यम् ॥ अधिकं नागेशीये ॥

संमेयात् । समीयादिति प्रयोगस्तु भौवादिकस्य ॥ **इणो गा लुङि । २ । ४ । ४५ ॥** गातिस्थेति सिचो लुक् । अगात् । अगाताम् । अगुः ॥ १ ॥ **इङ्** अध्ययने । नित्यमधिपूर्वः । अधीते । अधीयाते । अधीयते ॥ **गाङ् लिटि । २ । ४ । ४९ ॥** इङो गाङ् स्यालिटि । लावस्थायां विवक्षिते वा ॥ अधिजगे । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अध्यये । गुणायादेशयोः कृतयोरुपसर्गस्य यण् । पूर्वं धातुरुपसर्गेणेति दर्शनेऽन्तरङ्गत्वाद्गुणात्पूर्वं सवर्णदीर्घः प्राप्तः, णेरध्ययने वृत्तमिति निर्देशान्न भवति ॥ अध्यैत ॥ परत्वादियङ् । तत आट् । वृद्धिः । अध्यैयाताम् । अध्यैयि । अध्यैवहि । अधीयीत । अधीयीयाताम् । अधीयीध्वम् । अधीयीय । अध्येषीष्ट ॥ **विभाषा लुङ्लृङोः । २ । ४ । ५० ॥** इङो गाङ् वा स्यात् ॥ **गाङ्कुटादिभ्योऽञ्णिन्ङित् । १ । २ । १ ॥** गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः ॥ **घुमास्थागापाजहातिसां हलि । ६ । ४ । ६६ ॥** एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके ॥ अध्यगीष्ट । अध्यैष्ट । अध्यगीष्यत । अध्यैष्यत ॥ २ ॥ **इक्** स्मरणे । अयमप्यधिपूर्वः । अधीगर्थदयेशामिति लिङ्गात् । अन्यथा हि इगर्थेत्येव ब्रूयात् ॥ **इण्वदिक इति वक्तव्यम्** *॥ अधियन्ति । अध्यगात् ॥ केचित्तु आर्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः । तन्मते यणन । तथा च भट्टिः—ससीतयोराघवयोरधीयन्निति ॥ ३ ॥ **वी** गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । प्रजनं गर्भग्रहणम् । असनं क्षेपणम् । वेति । वीतः । वियन्ति । वेषि । वेमि । वीहि । अवेत् । अवीताम् । अवियन् । अडागमे सत्यनेकाच्त्वाद्यणिति केचित् । अव्यन् ॥ ४ ॥ अत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यते । एति । ईतः । इयन्ति । ईयात् । ऐषीत् ॥ ५ ॥ **या** प्रापणे । प्रापणमिह गतिः । प्रणियाति । यातः । यान्ति ॥ **लङः शाकटायनस्यैव । ३ । ४ । १११ ॥** आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः । अयान् । यायात् । यायाताम् । यायास्ताम् ॥ ६ ॥ **वा** गतिगन्धनयोः । गन्धनं सूचनम् ॥ ७ ॥ **भा** दीप्तौ ॥ ८ ॥ **ष्णा** शौचे ॥ ९ ॥ **श्रा** पाके ॥ १० ॥ **द्रा** कुत्सायां गतौ ॥ ११ ॥ **प्सा** भक्षणे ॥ १२ ॥ **पा** रक्षणे । पायास्ताम् । अपासीत्

---

१ अत्र आङ्प्रश्लेषो बोध्यः ॥ २ ननु "समीयात्" इत्यत्राण्त्वाद्ध्रस्वत्वं दुर्वारमत आह–**भौवादिकस्येति।** "इट किट कटी" इत्यत्र प्रश्लिष्टस्याशीर्लिङीति भावः ॥ अस्य तु समियादित्येव भवतीति बोध्यम् ॥ ३ **नित्यमधिपूर्व इति ।** धातुसंज्ञा तु पाठापेक्षणादधिरहितस्यैव । क्रियावाचकत्वं तु काल्पनिकं तस्यास्त्येव ॥ ४ ननु "द्विर्वचनेऽचि" इति निषेधादिङ एव द्वित्वे, उत्तरखण्डस्य गादेशे "अधीगे" इति स्यादत आह–**लावस्थायामित्यादि ।** एवं च द्वित्वनिमित्ताज्निमित्तत्वाभावेन "द्विर्वचनेऽचि" इत्यस्याप्रवृत्तिरिति भावः ॥ "लिटि" इति परसप्तमी, इति वार्तिकमतेन "लावस्थायाम्" इति ॥ "लिटि" इति विषयसप्तमी, इति भाष्यमतेन "विवक्षिते" इति चोक्तमिति विवेकः ॥ ५ **गुणायादेशयोरिति ।** "पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण" इति भाष्यसिद्धान्तादिति भावः ॥ ६ **दर्शन इति ।** अनेनारुचिर्बोधिता, तद्बीजं तु "नैतत्सारम्" इति भाष्योक्तिः ॥ ७ **केचित्त्विति ।** आर्धधातुकाधिकारोक्तकार्यातिदेशस्येष्टत्वादेव च भाष्ये "इणो गा लुङि" इति प्रकरणे इदमपाठि ॥ ८ **केचिदिति ।** अत्रारुचिबीजं तु अट आभीयतयाऽसिद्धित्वेनानेकाच्त्वाभावः ॥

॥ १३ ॥ रा दाने ॥ १४ ॥ **ला** आदाने । द्वावपि दाने इति चन्द्रः ॥ १५ ॥ **दाप्** लवने । प्रणिदाति । प्रनिदाति । दायास्ताम् । अदासीत् ॥ १६ ॥ **ख्या** प्रकथने । अयं सार्वधातुकमात्रविषयः । "सस्थानत्वं नमः ख्यात्रे" इति वार्तिकं तद्भाष्यं चेह लिङ्गम्[1] । सस्थानो जिह्वामूलीयः स नेति ख्याञादेशस्य खशादित्वे प्रयोजनमित्यर्थः । संपूर्वस्य[2] ख्यातेः प्रयोगो नेति न्यासकारः ॥ १७ ॥ **प्रा** पूरणे ॥ १८ ॥ **मा** माने । अकर्मकः । 'तनौ ममुस्तत्र न कैटभद्विषः' इति माघः ॥ उपसर्गवशेनार्थान्तरे सकर्मकः-'उदरं परिमाति मुष्टिना' । नेर्गदेत्यत्र नास्य ग्रहणम् । प्रनिमाति । प्रणिमाति ॥ १९ ॥ **वच** परिभाषणे । वक्ति । वक्तः । अयमन्तिपरो[3] न प्रयुज्यते । बहुवचनपर इत्यन्ये । झिपर इत्यपरे । वग्धि । वच्यात् । उच्यात् । अवोचत् ॥ २० ॥ **विद** ज्ञाने ॥ **विदो लटो वा । ३ । ४ । ८३ ॥** वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः ॥ वेद । विदितुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे । वेत्ति । वित्तः । इत्यादि । विवेद । विविदतुः । उषविदेत्याम्पक्षे विदेत्यकारान्तनिपातनान्न[4] लघूपधगुणः । विदांचकार । वेदिता ॥ **विदांकुर्वन्त्वित्यन्यतरस्याम् । ३ । १ । ४१ ॥** वेत्तेर्लोट्याम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते ॥ पुरुषवचने[5] न विवक्षिते इतिशब्दात् ॥ **तनादिकृञ्भ्य उः । ३ । १ । ७९ ॥** तनादेः कृञश्च उप्रत्ययः स्यात् । शपोऽपवादः ॥ तनादित्वादेव सिद्धे कृञ्ग्रहणं गणकार्य[6]-

---

१ सस्थानत्वशब्दे सस्थानशब्दो जिह्वामूलीयवाची पूर्वाचार्याणां तथैव व्यवहारात् । तदाह- **सस्थानो जिह्वामूलीय इति** । खशाञादेशाङ्गीकारे "नमः ख्यात्रे" इत्यत्र सस्थानप्रतिषेधो न वक्तव्यो भवति "शर्परे विसर्जनीयः" इत्यनेन विसर्गस्य जिह्वामूलीयबाधकत्वादिति वार्तिकाशयः ॥ यद्ययमार्धधातुकेऽपि प्रयुज्येत, तर्हि तृजन्तेऽस्मिन् "शर्परे विसर्जनीयः" इत्यस्याप्राप्तौ जिह्वामूलीयाबाधे तद्वारणाय यत्ने करणीये "सस्थानत्वं न भवति" इति मुधैव स्याद् भाष्यवार्तिकोक्तिरिति भावः ॥ नच "शर्परे विसर्जनीय" इत्यस्य "कुप्वोः-" इत्येतदपवादत्वमजानतो वार्तिककारस्येयमुक्तिरिति वाच्यम्, ख्याञादेशस्य खशादित्वप्रयोजनगणनावसर एव तदुक्तेः । वार्तिकवैयर्थ्यान्यथानुपपत्त्या "असति बाधके प्रमाणानां सामान्ये पक्षपातः" इति न्यायाच्च सामान्यापेक्षज्ञापकाश्रयणेनार्धधातुकमात्रे प्रयोगाभावः । एवं हि "न ध्याख्यापॄमूर्च्छि" इति सूत्रे ख्याग्रहणं न कार्यम्, यत्वस्यासिद्धतया यण्वत्ताविरहादिति लाघवमप्यस्यां कल्पनायामस्तीति बोध्यमिति भैरवमिश्राः ॥ "नटः ख्याति" इत्यादौ तु जिह्वामूलीयो भवत्येव ॥ २ **संपूर्वस्येति** । सार्वधातुकेऽपि नेति भावः ॥ "संख्या" प्रयोगस्तु चक्षिङ एव ॥ ३ **अयमन्तिपर इति** । अत्र "अयम्" इत्यनेनादादिकस्यैव तत्राप्रयोगः, यस्तु चुरादिपठित आधृषीयस्तस्य णिजभावेऽपि तत्र प्रयोगो भवत्येवेति सूचितम् । "शिष्टैः" इति शेषः । अत्रार्थे न भाष्यानुग्रहः ॥ ४ **अकारान्तनिपातनादिति** । "आमुसन्नियोगेन" इति शेषः । तदुक्तं भाष्ये-"निपातनादगुणत्वम्" इति ॥ ५ "विदाङ्कुर्वन्तु" इति सूत्रे इतिशब्दः प्रकारे "एवंजातीयकम्" इत्यर्थस्तदाह-**पुरुषवचने इति** । तयोर्नान्तरीयकमुच्चारणमिति भावः ॥ ६ "गणनिर्देशप्रयुक्तं कार्यमनित्यम्" इति "गणकार्यमनित्यम्" इति परिभाषार्थः । "नविश्वसेत्" इत्यत्र आदादिकत्वप्रयुक्तस्य शब्लुकः प्रवृत्त्यभावः ॥ ननु कृञ्ग्रहणेन "कृञ् हिंसायाम्" इत्यस्य स्वादौ पठितस्य ग्रहणमिति वक्तुं शक्यमिति कथं कृञ्ग्रहणस्य गणकार्यानित्यत्वज्ञापकत्वमिति चेन्न, तनादिसाहचर्येण तद्गणस्थस्यैव कृञो ग्रहणेन ज्ञापकत्वस्य सुस्थत्वात् ॥ भाष्ये कृञ्ग्रहणस्य प्रत्याख्यानादत्रार्थे तात्पर्यमयुक्तम् । "न विश्वसेत्" इत्याद्यार्षमेव । ज्ञापितेऽपि तच्चारितार्थ्याभावाच्चेति शेखरकृत् ॥

स्यानित्यत्वे लिङ्गम् । तेन न विश्वसेदविश्वस्तमित्यादि सिद्धम् ॥ विदांकरोतु ॥ **अत उत्सार्वधातुके । ६ । ४ । ११० ॥** उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति ॥ उदिति तपरकरणसामर्थ्यान्न गुणः । विदांकुरुतात् । विदांकुरुताम् । उतश्चेति हेर्लुक् । आभीयत्वेन लुकोऽसिद्धत्वादुत्त्वम् । विदांकुरु । विदांकरवाणि । अवेत् । अविताम् । सिजभ्यस्तेति झेर्जुस् । अविदुः ॥ **दश्च । ८ । २ । ७५ ॥** धातोर्दस्य पदान्तस्य सिपि परे रुः स्याद्वा । अवेः । अवेत् ॥ २१ ॥ **अस्** भुवि । अस्ति ॥ **श्नसोरल्लोपः । ६ । ४ । १११ ॥** श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति ॥ स्तः । सन्ति । तासस्त्योरिति सलोपः । असि । स्थः । स्थ । अस्मि । स्वः । स्मः । आर्धधातुके इत्यधिकृत्य ॥ **अस्तेर्भूः ।२।४।५२ ॥** बभूव । भविता । अस्तु । स्तात् । स्ताम् । सन्तु ॥ **घ्वसोरेद्धावभ्यासलोपश्च । ६ । ४ । ११९ ॥** घोरस्तेश्च एत्त्वं स्याद्धौ परे अभ्यासलोपश्च ॥ आभीयत्वेन एत्त्वस्यासिद्धत्वाद्धेर्धिः । श्नसोरित्यल्लोपः । एधि ॥ तातङ्पक्षे एत्त्वं न । परेण तातङा बाधात्, सकृद्गताविति न्यायात् । स्तात् । स्तम् । स्त । असानि । असाव । असाम ॥ 'अस्ति सिच' इतीट् । आसीत् । श्नसोरित्यल्लोपस्याभीयत्वेनासिद्धत्वादाट् । आस्ताम् । आसन् । स्यात् । भूयात् । अभूत् । सिचोऽस्तेश्च विद्यमानत्वेन विशेषणादीण्न ॥ **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । ८ । ३ । ८७ ॥** उपसर्गेणः प्रादुसश्च परस्यास्तेः सस्य षः स्याद्यकारेऽचि च परे ॥ निष्यात् । प्रादुःष्यात् । निषन्ति । प्रादुःषन्ति । यच्परः किम् ? अभिस्तः ॥ २२ ॥ **मृजू** शुद्धौ ॥ **मृजेर्वृद्धिः । ७ । २ । ११४ ॥** मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे ॥ **क्ङित्यजादौ वेष्यते*** ॥ व्रश्चेति षः । मार्ष्टि । मृष्टः । मृजन्ति । मार्जन्ति । ममार्ज । ममार्जतुः । ममृजतुः । ममार्जिथ । ममार्ष्ठ । मार्जिता । मार्ष्टा । मृड्ढि । अमार्ट् । अमार्जम् । अमार्जीत् । अमार्क्षीत् ॥ २३ ॥ **रुदिर्** अश्रुविमोचने ॥ **रुदादिभ्यः सार्वधातुके । ७ । २ । ७६ ॥** रुद् स्वप् श्वस् अन् जक्ष् एभ्यो वलादेः सार्वधातुकस्येट् स्यात् । रोदिति । रुदितः । हौ परत्वादिटि धित्वं न । रुदिहि ॥ **रुदश्च पञ्चभ्यः । ७ । ३ । ९८ ॥** हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात् ॥ **अड्गार्ग्यगालवयोः । ७ । ३ । ९९ ॥** अरोदीत् । अरोदत् । अरुदिताम् । अरु-

---

१ भाव्यमानत्वेन सवर्णाग्राहकतया तपरत्वमत्र व्यर्थमिति तस्योत्तरकालिकविकाराभावार्थत्वमस्त्विति आशयेनाह-**उदिति तपरकरणसामर्थ्यादिति** ॥ २ "अन्तरङ्गानपि–" इति परिभाषया हेर्लुकि कृते सार्वधातुकपरत्वाभावात् कथमुत्त्वमत आह-**आभीयत्वेन लुक इति** ॥ ३ 'धातोः कार्यमुच्यमानम्' इति परिभाषालब्धमर्थमाह--**धातुप्रत्यय इति** । तेन "परिमृड्भ्याम्" इत्यादौ न ॥ ४ **क्ङित्यजादाविति** । "अजादौ" इत्यंशः "यस्मिन् विधिः–" इति परिभाषालाभ्यार्थानुवादः । "वा" इति तु "**इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते । तदिहापि साध्यम्**" इत्युपादानाल्लब्धः ॥ इदम्--"इको गुणवृद्धी" इति सूत्रे भाष्ये टिप्पण्यां स्फुटम् ॥ ५ **परत्वादिति** । युगपत्प्रवृत्तौ द्वयोः स्वस्वनिमित्तानन्तर्यासम्भवरूपविरोधोऽस्तीति भावः ॥

दन्। अरोदीः । अरोदः । [1]प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुट् । रुद्यात्। अरुदत्। अरोदीत्॥ १॥ ञिष्वप् शये । स्वपिति । स्वपितः । सुष्वाप । सुषुपतुः । सुषुपुः । सुष्वपिथ । सुष्वप्थ ॥ सुविनिर्दुर्भ्यः सुपिसूतिसमाः । ८ । ३ । ८८॥ एभ्यः सुप्यादेः सस्य षः स्यात् ॥ [2]पूर्वं धातुरुपसर्गेण युज्यते । किटि लिटि परत्वात्संप्रसारणे षत्वे च कृते द्वित्वम्। पूर्वत्रासिद्धीयमद्विर्वचने ॥ सुषुषुपतुः । सुषुषुपुः । अकिति तु द्वित्वेऽभ्यासस्य संप्रसारणम्। षत्वस्यासिद्धत्वात्ततः पूर्वं हलादिः शेषः । नित्यत्[3]वाच ॥ ततः सुपिरू[4]पाभावान्न षः । सुसुष्वाप । सुस्वप्ता । अस्वपीत् । अस्वपत् । स्वप्यात् । सुप्यात् । सुषुप्यात् । अस्वाप्सीत् ॥ २ ॥ श्वस प्राणने । श्वसिति । श्वसिता । अश्वसीत् । अश्वसत् । श्वस्याताम् । श्वस्यास्ताम्। ह्म्यन्तक्षणेति न वृद्धिः । अश्वसीत् ॥ ३ ॥ अन च । अनिति । आन । अनिता । आनीत् । आनत्॥ अनितेः । ८ । ४ । [5]१९॥ उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् ॥ प्राणिति ॥ ४ ॥ जक्ष भक्षहसनयोः । जक्षिति । जक्षितः ॥ अदभ्य[6]स्तात् । ७ । १ । ४ ॥ झस्य अत्स्यात् । अन्तापवादः ॥ जक्षति । सिजभ्यस्तेति जुस् । अजक्षुः ।

---

१ प्रकृतिप्रत्ययविशेषेति । प्रत्ययविशेषापेक्षयामुडपेक्षया ऽन्तरङ्गत्वाद् "इतश्च" इति लोपे यासुडीटोः प्राप्तयोरन्तरङ्गत्वाद् यासुडित्यर्थः । "सामान्यधर्मापेक्षशास्त्रापेक्षया कश्चिद् विशेषधर्मोऽधिको निमित्तकोटौ यत्र विशेषापेक्षशास्त्रेऽस्ति तत् ततो बहिरङ्गम्" इति तदर्थः । "रुदादिभ्यः सार्वधातुके" इत्यत्र रुदादित्वं सार्वधातुकत्वं च । तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति यासुडन्तरङ्गः ॥ धात्वधिकारीयतया यासुटो धातुसामान्यापेक्षत्वादन्तरङ्गत्वम्, ईटस्तु सार्वधातुकाक्षिप्ततथाविधसामान्यावरुद्धरुदादित्वरूपविशेषधर्मसापेक्षत्वाद् बहिरङ्गत्वम् इति निष्कर्षः । वस्तुतस्तु एतादृशबहिरङ्गत्वस्य भाष्ये काप्यनाश्रयणेन चिन्त्यमिदम्। अत्रत्यं तत्त्वं परिभाषेन्दुशेखरे स्पष्टम्, विस्तरभिया विरम्यतेऽधिकप्रपञ्चेन ॥ तस्मात्–नित्यत्वादत्र यासुटि कृतेऽपृक्तत्वाभावेन नाडीटोः प्राप्तिरिति समाधिर्युक्तः ॥ २ द्वित्वात् पूर्वं षत्वप्रवृत्तये आह-पूर्वं धातुरुपसर्गेणेति । षत्वे कृते इति । "सुपिभूतो द्विरुच्यते" इति भाष्यादिति भावः ॥ वस्तुतस्तु "पूर्वं धातुः साधनेन युज्यते तत उपसर्गेण" इत्येव सिद्धान्तत्वेन "सुपिसम्बन्धिसस्य" इति सूत्रार्थे अभ्याससोऽपि सुपिसम्बन्धी विद्यत एव, तदीयद्वितीयप्रयोगसम्बन्धित्वात् । एवं च षत्वात् पूर्वं सत्यपि द्वित्वे न क्षतिः । भाष्येऽपि "सुपिभूतो द्विरुच्यते" इत्येव प्रचुरः पाठः । इतरथाऽभ्यासस्याऽऽनर्थक्यात् तत्सम्बन्धिनः षत्वमेव दुर्लभम्" इत्येव ज्यायान् पन्था नागेशोक्तः ॥ ३ नित्यत्वाच्चेति । अभ्यासविकारे बाध्यबाधकाभावादभ्युच्चयोऽयम् ॥ ४ सुपिरूपाभावादिति । अर्थवत्सुपिरूपाभावादित्यर्थः । अर्थवत्त्वविशेषणघटितव्याख्यानाभावे हि "एकदेशविकृतमनन्यवत्" इति परिभाषया सुपित्वं दुर्वारमेव । अभ्यासस्य नार्थवत्त्वम्, नापि समुदायस्य, इति "दयतेः" इति "सुट्कात्" इति च सूत्रे भाष्ये स्फुटम् ॥ ५ "अनितेः" इति । अत्र अन्तपदमपकृष्यते, तच्च समीपार्थकम्, सप्तम्या विपरिणम्यते । अपकर्षसामर्थ्यात् । सामीप्यं चात्राव्यवहितमेव । तथा च-" अनितेरव्यहितसमीपे यो रेफस्तस्मान्नस्य णत्वम्" इति सूत्रार्थः । तेन "पर्यनिति" इत्यादौ यकारेण व्यवधानान्न । "प्राणिति" इत्यत्र तु परादिवद्भावेन रेफस्य विद्यतेऽनन्तरता । स्थानिवत्त्वं तु न, पञ्चमीसमासानित्यत्वात् ॥ ६ अदभ्यस्तादिति । अत्र "अनतः" इत्यपकृष्यते । तेन "ईर्संन्ति प्रतीषिषन्ति" इत्यादौ न । "अपवादो यद्यन्यत्र चरितार्थः-" इति न्यायस्य तु नात्र विषयता, अन्तादेशप्राप्तियोग्ये चारितार्थ्यविरहात् ॥

अग्रमन्तःस्थादिरित्युज्ज्वलदत्तो बभ्राम ॥ ५ ॥ रुदादयः पञ्च गताः ॥ **जागृ निद्राक्षये ।** जागर्ति । जागृतः । जाग्रति । उषविदेत्याम्वा । जागरांचकार । जजागार ॥ **जाग्रोऽविचिण्णल्ङित्सु । ७ । ३ । ८५ ॥** जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च । जजागरतुः । अजागः । अजागृताम् । अभ्यस्तत्वाज्जुस् ॥ **जुसि च । ७ । ३ । ८३ ॥** अजादौ जुसीगन्ताङ्गस्य गुणः स्यात् ॥ अजागरुः ॥ अजादौ किम् ? जागृयुः । आशिषि तु । जागर्यात् । जागर्यास्ताम् । जागर्यासुः । लुङि । अजागरीत् । जागृ इस् इत्यत्र यण् प्राप्तः तं सार्वधातुकगुणो बाधते । तं सिचि वृद्धिः । तां जागर्ति गुणः । तत्र कृते हलन्तलक्षणा प्राप्ता नेटीति निषिद्धा । ततोऽतो हलादेरिति बाधित्वा अतोल्रान्तस्येति प्राप्ता ह्म्यन्तेति निषिध्यते । तदाहुः–

> गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् ।
> पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नवेति ॥ १ ॥

**दरिद्रा** दुर्गतौ । दरिद्राति ॥ **इद्दरिद्रस्य । ६ । ४ । ११४ ॥** दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके । दरिद्रितः ॥ **श्नाभ्यस्तयोरातः । ६ । ४ । ११२ ॥** अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके ॥ दरिद्रति । अनेकाच्त्वादाम् । दरिद्रांचकार । 'आत औ णल' इत्यत्र ओ इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम् । अत एव ज्ञापकादाम्नेत्येके । ददरिद्रौ । ददरिद्रतुरित्यादि । यत्तु णलि ददरिद्रेति तन्निर्मूलमेव ॥ **दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः ॥ लुङि वा ॥ सनि ण्वुलि ल्युटि च न* ॥** दरिद्रिता । अदरिद्रात् । अदरिद्रिताम् । अदरिद्रुः । दरिद्रियात् । दरिद्यात् । अदरिद्रीत् । इट्सकौ । अदरिद्रासीत् ॥ २ ॥ **चकासृ**

---

१ **"बभ्राम"** इति । "जक्षन् क्रीडन् रममाणः" इत्युपनिषदि तथा दर्शनात् । "जक्षन्" इत्यत्र नुमागमश्छान्दसः ॥ २ **निषिध्यते इति** । ननु यदि "जाग्रोऽविचिण्–" इति गुणोत्तरं वृद्धिप्राप्तिस्तदा "जागरकः" इत्यत्र णितं निमित्तीकृत्य गुणोत्तरम्–"अत उपधायाः" इत्युपधावृद्धया भवितव्यमिति चेन्न, चिण्णल्प्रतिषेधवैयर्थ्यापत्त्या जागर्तेर्गुणे उपधावृद्ध्यभावकल्पनात् ॥ ३ **"इद्दरिद्रस्य" इति** । सौत्रो ह्रस्वः । "ई हल्यघोः" इत्यस्यापवादोऽयम् । अत्र "श्नाभ्यस्तयोरातः" इति सूत्राद् "आतः" इत्यनुवर्तते । तेन कृते लोपे "दरिद्रति" इत्यादौ न । आर्धधातुके लोपप्रवृत्त्या पारिशेषात्सार्वधातुके एवास्य प्रवृत्तिः ॥ ४ **श्नाभ्यस्तयोरात इति** । श्नासाहचर्येणाभ्यस्तस्यापि सार्वधातुक एव लोप इत्याशयेनाह–**सार्वधातुक इति** । श्नासाहचर्येणाभ्यस्तेप्यन्तस्यैव ग्रहणात् "जाग्रति" इत्यादौ लोपो न ॥ ५ **ओ इत्येवेति** । नन्वोकारौकारयोर्द्विमात्रत्वाविशेषात् कथं ज्ञापकत्वमिति चेन्न, ओकारस्य विवृततरत्वेन यत्नलाघवादित्याशयात् । ६ **आलोपे इति** । नन्वालोपे कृते आकारान्तत्वविरहाद् "आत औ णलः" इत्यस्य प्राप्तिर्दुर्लभेति चेन्न, आर्धधातुके विवक्षिते लोपेऽपि औत्वविधानसामर्थ्यादेव भूतपूर्वगतेराश्रयणेन णल आदेशस्य सुलभत्वात् ॥ ७ **आम् नेति** । "कास्प्रत्ययात्" इति सूत्रे भाष्ये 'दरिद्रांचकार' इत्युदाहृतत्वात्, "वस्वेकाजाद्घसाम्" इति सूत्रभाष्ये ध्वनितस्य 'ददरिद्रौ' इति प्रयोगस्य कैयटेन स्पष्टीकृतत्वात् पक्षे नाम् इति मूलाशयः ॥ ८ **सनि ण्वुलीति** "अनन्तरस्य–" इति न्यायेन 'दरिद्रातेरार्धधातुके' इति वार्तिकप्राप्तलोपस्यैवायं निषेधः ॥ नेन. "दिदरिद्रिषति" इत्यत्र स्यादेव 'आतोलोप इति' इत्याकारलोपः ॥

दीप्तौ। चकास्ति । झस्य अत् । चकासति । चकासांचकार । धि चेति सलोपः । सिच एवेत्येके[1] । चकाद्धि ॥ चकाधीत्येव भाष्यम्[2] ॥ **तिप्यनस्तेः । ८ । २ । ७३ ॥** पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः । अचकात् । अचकाद् । अचकासुः ॥ **सिपि धातोरुर्वा । ८ । २ । ७४ ॥** पदान्तस्य धातोः सस्य रुः स्याद्वा । पक्षे दः । अचकाः । अचकात् ॥ ३ ॥ **शासु** अनुशिष्टौ । शास्ति ॥ **शास इदङ्हलोः । ६ । ४ । ३४ ॥** उपधाया इत्स्यादङि हलादौ क्ङिति च । शासिवसीति षः । शिष्टः । शासति । शशासतुः । शास्तु । शिष्टात् । शिष्टाम् । शासतु ॥ **शा हौ । ६ । ४ । ३५ ॥** शास्तेः शादेशः स्याद्धौ परे । तस्याभीयत्वेनासिद्धत्वाद्धेर्धिः । शाधि । अशात् । अशिष्टाम् । अशासुः । अशाः । अशात् । शिष्यात् । सर्तिशास्तीत्यङ् । अशिषत् । अशासिष्यत् ॥ ४ ॥ **दीधीङ्** दीप्तिदेवनयोः ॥ एतद्दादयः पञ्च धातवश्छान्दसाः ॥ दीधीते । एरनेकाच इति यण् । दीध्याते ॥ **यीवर्णयोर्दीधीवेव्योः । ७ । ४ । ५३ ॥** एतयोरन्त्यस्य लोपः स्याद्यकारे इवर्णे च परे ॥ इति लोपं बाधित्वा नित्यत्वाट्टेरेत्वम् । दीध्ये । दीधीवेवीटामिति गुणनिषेधः । दीध्यांचक्रे । दीधिता । दीधिष्यते ॥ १ ॥ **वेवीङ्** वेतिना तुल्ये । वीगतीत्यनेन तुल्येऽर्थे वर्तते इत्यर्थः ॥ २ ॥ **अथ त्रयः परस्मैपदिनः ॥ षस सस्ति** स्वप्ने । सस्ति । सस्तः । ससन्ति । ससास । सेसतुः । सस्तु । सधि ॥ पूर्वत्रासिद्धमिति सलोपस्यासिद्धत्वादतो हेरिति लुक् न ॥ असत् । असस्ताम् । असः । असत् । सस्यात् । असासीत् । अससीत् ॥ १ ॥ संस्ति । सन्तः । संस्तन्ति ॥ बहूनां समवाये द्वयोः संयोगसंज्ञा नेत्याश्रित्य स्कोरिति लोपाभावात् । संस्ति । संस्तः । इत्येके ॥ **वश** कान्तौ । कान्तिरिच्छा । वष्टि । उष्टः । उशन्ति । वक्षि । उष्ठः । उवास । ऊशतुः । वशिता । वष्टु उष्टात् । उड्ढि । अवट् । औष्टाम् । औशन् । अवशम् । उश्यात।म् । उश्यास्ताम् । अवाशीत् । अवशीत् ॥ ३ ॥

---

१ **इत्येके इति** । "धि च" इत्यत्र "धिसकारे सिचो लोपश्चकाद्धीति प्रयोजनम्" इति वार्तिकोक्तेरत्याशयः ॥ २ **भाष्यमिति** । "इष्टमेवैतच्चकाधि" इति भाष्योक्तेः ॥ ३ **"शा हौ" इति** । इत्वापवादः ॥ ४ **यीवर्णयोरिति** । यिश्च इवर्णश्च" इति द्वन्द्वः । "यि" इत्यत्रेकार उच्चारणार्थस्तदाह-**यकार इति** । ५ **नित्यत्वाट्टेरेत्वमिति** । अन्तरङ्गत्वादित्यपि बोध्यम् ॥ ननु "नित्यत्वाट्टेरेत्वम्" इत्यसङ्गतम् । कृतेऽप्येत्वे भूतपूर्वगत्या लोपप्रवृत्तेः सुस्थत्वात् । "यीवर्णयोः" इत्यत्र "यि-इवर्णयोः" इति च्छेदात् द्विवचननिर्देशेन इवर्णान्तरपरिग्रहसामर्थ्याद् भूतपूर्वगतिरिहाश्रीयते । अत एव दीधीङो णिजन्तात् ण्वुलि णिलोपेऽपि कृतेऽनेनान्त्यलोप इति चेन्न, "अचः परस्मिन्-" इति सूत्रस्थन "आदीध्ये" इति भाष्यप्रयोगेण विरोधापत्तेः । ण्वुलि तु णिलोपात्पूर्वमेवान्तरङ्गत्वाल्लोप इति "आदीधकः" इति सिद्ध्यति ॥ ६ **सन्तीति** । इदित्वाभ्नुमि "सन् स्त् ति" इत्यवस्थायां बहूनां समवाये द्वयोः संयोगसंज्ञायां झलि तकारे परे सकारतकारसंयोगस्यादेः सकारस्य लोपे 'झरो झरि-' इति तकारस्य पाक्षिके लोपे 'सन्ति' इत्यादिरूपाणां सिद्धिरिति भावः ॥ ७ **इत्येके इति** । अत्रारुचिबीजं तु "हलोऽनन्तराः" इति सूत्रभाष्यविरोधः । तत्र हि 'बहूनां समवाये बहूनामेव संयोगसंज्ञा' इति सिद्धान्तिमते मस्जिधाताविवात्र दोषाप्रदानाद्भाष्ये न्यूनता स्यादिति ॥ भाष्ये मस्जिधातोरुपलक्षणत्वे न न्यूनतेति स्वीकारे तु 'इत्येके' इत्युक्तिः प्रधानार्थिकैवेति दाधिमथः ॥

चर्करीतं च ॥ यङ्लुगन्तमदादौ बोध्यम् * ॥ ह्नुङ् अपनयने । ह्नुते । जुह्नुवे । ह्नुवीत । ह्नोषीष्ट। अह्नोष्ट ॥ ४ ॥

इत्यदादिप्रकरणम् ।

## अथ जुहोत्यादिप्रकरणम्।

हु दानादनयोः ॥ आदाने चेत्येके । प्रीणनेऽपीति भाष्यम् । दानं चेह प्रक्षेपः । स च वैधे आधारे हविषश्चेति स्वभावाल्लभ्यते ॥ **इतश्चत्वारः परस्मैपदिनः ॥ जुहोत्यादिभ्यः श्लुः । २ । ४ । ७५ ॥** शपः श्लुः स्यात् ॥ **श्लौ । ६ । १ । १० ॥** धातोर्द्वे स्तः ॥ जुहोति । जुहुतः । अदभ्यस्तादित्यत् । हुश्नुवोरिति यण् । जुह्वति ॥ **भीह्रीभृहुवां श्लुवच्च । ३ । १ । ३९ ॥** एभ्यो लिट्याम्वा स्यादामि श्लाविव कार्यं च ॥ जुहवांचकार । जुहाव । होता । होष्यति । जुहोतु । जुहुतात् । हेर्धिः । जुहुधि ॥ आटि परत्वाद्गुणः । जुहवानि । परत्वाज्जुसि चेति गुणः । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् ॥ १ ॥ ञिभी भये । बिभेति ॥ **भियोऽन्यतरस्याम् । ६ । ४ । ११५ ॥** इकारः स्याद्धलादौ क्ङिति सार्वधातुके ॥ बिभितः । बिभीतः । बिभ्यति । बिभयांचकार । बिभाय । भेता ॥ ॥ २ ॥ ह्री लज्जायाम् ॥ जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रियांचकार । जिह्राय ॥ ३ ॥ पॄ पालनपूरणयोः ॥ **अर्तिपिपर्त्योश्च । ७ । ४ । ७७ ॥** अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ ॥ **उदोष्ठ्यपूर्वस्य । ७ । १ । १०२ ॥** अङ्गावयवौष्ठ्यपूर्वो य ॠत्तदन्तस्याङ्गस्य उत्स्यात् ॥ गुणवृद्धी परत्वादिमं बाधेते । पिपर्ति ॥ उत्त्वम् । रपरत्वम् । 'हलि चेति दीर्घः । पिपूर्तः । पिपुरति । पपार ॥ किति लिटि ॠच्छत्यॄतामिति गुणे प्राप्ते—॥ **शॄदॄप्रां ह्रस्वो वा । ७ । ४ । १२ ॥** एषां किति लिटि ह्रस्वो वा स्यात् ॥ पक्षे गुणः । पप्रतुः । पप्रुः । पपरतुः । पपरुः । परिता । परीता । अपिपः । अपिपूर्ताम् । अपिपरुः । पिपूर्यात् । पूर्यात् । अपारीत् । अपारिष्टाम् ॥ ह्रस्वान्तोऽयमिति केचित् । पिपर्ति । पिपृतः । पिप्रति । पिपृयात् । आशिषि—प्रियात् । अपार्षीत् । पाणिनीयमते तु तं रोदसी पिपृतमित्यादौ छान्दसत्वं शरणम् ॥ ४ ॥ डुभृञ् धारणपोषणयोः ॥ **भृञामित् । ७ । ४ । ७६ ॥** भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ ॥ बिभर्ति । बिभृतः । बिभ्रति । बिभृध्वे ॥ श्लुवद्भा-

---

१ **चर्करीतं चेति** । "चर्करीतम्" इति यङ्लुकः संज्ञा, "चर्करीति" इति प्रयोगो यस्मिन् तदिति व्युत्पत्तेः, न तु तदन्तस्य संज्ञा । "किरतिं चर्करीतान्तम्" इति भाष्योक्तेः, तेन तदन्तग्रहणं सामर्थ्यात् । **अदादाविति**। तेन यङ्लुगन्ताच्छबेव, न तु तत्तद्गणप्रयुक्तः श्यन्नादिः । शपो लुक् च । परस्मैपदिन उपक्रम्यास्य पाठाद् यङ्लुगन्तस्य परस्मैपदित्वमेवेति ज्ञेयम् ॥ **इत्यदादयः** ॥ २ प्रसिद्धस्य दानस्य ग्रहणं चद् "विप्राय जुहोति" इत्यपि स्यादत आह-**प्रक्षेप इति** । **वैधे इति** । आहवनीयाग्न्यादिरूपे ॥ वैधे आधारे प्रज्वालनाय प्रक्षिप्यमाणकाष्ठादावतिप्रसङ्गवारणायाऽऽह-**हविषश्चेति** ॥ ३-४ **परत्वादिति** । "हुश्नुवोः" इत्यपेक्षयेति भावः ॥

वाद् द्वित्वेऽत्त्वे । बिभरामास ॥ बभार । बभर्थ । बभृव । बिभृहि । बिभराणि । अबिभः । अबिभृताम् । अबिभरुः । बिभृयात् । भ्रियात् । भृषीष्ट । अभार्षीत् । अभृत ॥ ५ ॥ **माङ् माने शब्दे च** ॥ **ई हल्यघोः । ६ । ४ । ११३** ॥ श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि न तु घुसंज्ञकस्य ॥ मिमीते । श्नाभ्यस्तयोरित्यालोपः । मिमाते । मिमते । प्रण्य-मास्त ॥ ६ ॥ **ओहाङ् गतौ** । जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते ॥ ७ ॥ **ओहाक् त्यागे** । परस्मैपदी । जहाति ॥ **जहातेश्च । ६ । ४ । ११६** ॥ इत्स्याद्वा हलादौ क्ङिति सार्वधातुके ॥ पक्षे ईत्वम् । जहितः । जहीतः । जहति । जहौ ॥ **आ च हौ । ६ । ४ । ११७** ॥ जहातेर्हौ परे आ स्यात् चादिदीतौ ॥ जहाहि । जहिहि । जहीहि । अजहात् । अजहुः ॥ **लोपो यि । ६ । ४ । ११८** ॥ जहातेरालोपः स्याद्यादौ सार्वधातुके । जह्यात ॥ ' एर्लिङि ' । हेयात् ॥ अहासीत् ॥ ८ ॥ **डुदाञ् दाने** ॥ प्रणिददाति । दत्तः ॥ ददति । दत्ते । ददौ ॥ घ्वसोरित्येत्त्वाभ्यासलोपौ—देहि । अददात् । अदत्ताम् । अददुः । दद्यात् । देयात् । अदात् । अदाताम् । अदुः । अदित ॥ ९ ॥ **डुधाञ् धारणपोषणयोः** । दानेऽप्येके । प्रणिदधाति ॥ **दधस्तथोश्च । ८ । २ । ३८** ॥ द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथयोः स्ध्वोश्च परतः ॥ [१]वचनसामर्थ्यादालोपो न स्थानिवदिति वामनमाधवौ । वस्तुतस्तु ' पूर्वत्रासिद्धीये न स्थानिवत् ' । धत्तः । दधति । धत्थः । धत्थ । दध्वः । धत्ते । धत्से । धद्ध्वे । धेहि । अधित ॥ १० ॥ * ॥ **अथ त्रयः स्वरितेतः** ॥ **णिजिर् शौचपोषणयोः** ॥ **निजां त्रयाणां[३] गुणः श्लौ । ७ । ४ । ७५** ॥ निज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ ॥ नेनेक्ति । नेनिक्तः । नेनिजति । निनेज । नेक्ता । नेक्ष्यति । नेनेक्तु ।

---

१ नन्वाल्लोपस्य स्थानिवत्त्वाद् "धत्तः" इत्यादावपि न स्यादत आह-**वचनेति** ॥ २ "वामनमाधवौ" इत्यनेन सूचितामरुचिं प्रकटयन्नाह-**वस्तुत इति** ॥ **पूर्वत्रासिद्धीय इति** । पूर्वत्रासिद्धीये गहादित्वाच्छः ॥ एवं च वामनादीनां वचनसामर्थ्याश्रयणं वृथेति भावः ॥ अत्र च " नाग्लोपि-" इति सूत्रे अग्लोपिप्रतिषेधो ज्ञापकः । स हि मालामाख्यत् " अममालत् " इत्यत्र ह्रस्ववारणाय । यदि स्थानिवद्भावः स्यात्तदाऽनुपधात्वादाकारस्य ह्रस्वाप्राप्तेरनर्थकः स्यादिति केचित् ॥ अन्ये तु " यीवर्णयोः-" इति सूत्रे वर्णग्रहणमस्या ज्ञापकम् । तद्धि ण्यन्तात् ण्वुलि "आदीधकः" इत्यत्र नित्यत्वात्प्रथमं णिलोपे पश्चाद् भूतपूर्वगत्या इवर्णपरत्वमाश्रित्य लोपाय । स्थानिवत्त्वे णिलोपस्य तदानर्थक्यं स्पष्टमेवेति ब्रुवते ॥ वाचनिकमेवेतीतरे । "अचः परस्मिन्-" इति स्थानिवद्भावं प्रति त्रिपाद्या असिद्धत्वेन तत्र स्थानिवद्भावाप्रवृत्तेर्न्यायसिद्धमिदमिति परे ॥ ३ **निजां त्रयाणामिति** । कपिञ्जलाधिकरणन्यायस्यात्र शास्त्रेऽनाश्रयणबोधनाय " त्रयाणाम् " इति " भृञामित् " इत्युत्तरार्थम् । अत्र तु नोपयोगः, गणान्ते पाठेन त्रयाणामेव निजादित्वस्य वक्तुं शक्यत्वात् कपिञ्जलः, तित्तिराख्यः पक्षिविशेषः । " कपिञ्जल इति प्राज्ञैः कथितो गौरतित्तिरः" इत्युक्तेः, अधिकरणं नाम वेदविचारग्रन्थात्मिका मीमांसा " विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः । निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्" इत्युक्तेः, एवं क्रमेण विवेचनमत्राधिक्रियते इत्यधिकरणमिति व्युत्पत्तेः । ततः षष्ठीतत्पुरुषः । इति कपिञ्जलाधिकरणन्यायार्थः । यत्र बहुवचनस्य त्रित्वे पर्यवसानं तत्रायं प्रवर्तते । यथा-"कपिञ्जलानालभेत" इति । आङ्पूर्वकस्य "डुलभष् प्राप्तौ" इति धातोर्हिंसार्थकत्वाद् " आलभेत इत्यस्य " हिंस्यात् " इत्यर्थः । अत्र "कपिञ्जलान्" इति बहुवचनेन त्र्यादयः परार्द्धावधिकाः कपिञ्जलाः, त्रयो वा, चत्वारो वा, पञ्च वा, इत्यादि कपिञ्जलत्वावच्छिन्ना वा, इति संशये बहुत्वं त्रित्वे पर्यवसितमिति सिद्धान्तः ।

नेनिग्ध ॥ **नाभ्यस्तस्याचि पिति सार्वधातुके । ७ । ३ । ८७ ॥** लघूपधगुणो न स्यात् ॥ नेनिजानि । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । नेनिज्यात् । निज्यात् । अनिजत् । अनैक्षीत् । अनिक्त ॥ १ ॥ **विजिर्** पृथग्भावे । वेवेक्ति । वेविक्ते । विवेजिथ । अत्र विज इडिति ङित्वं न । ओविजी इत्यस्यैव तत्र ग्रहणात् ॥ णिजिविजी रुधादावपि ॥ २ ॥ **विष्लृ** व्याप्तौ । वेवेष्टि । वेविष्टे । लृदित्वादङ् । अविषत् । तङि क्सः । अजादौ क्सस्याचीति अल्लोपः । अविक्षत । अविक्षाताम् । अविक्षन्त ॥ ३ ॥ **अथ आगणान्ताः परस्मैपदिनश्छान्दसाश्च ॥ घृ** क्षरणदीप्त्योः । 'जिघर्म्यग्निं हविषा घृतेन' ॥ भृञामित् । बहुलं छन्दसीति इत्त्वम् ॥ १ ॥ **हृ** प्रसह्यकरणे ॥ 'अयं स्रुवो अभिजिहर्ति होमान्' ॥ २ ॥ **ऋ सृ** गतौ । बहुलं छन्दसीत्येव सिद्धे अर्तिपिपर्त्योश्चेतीत्त्वविधानादयं भाषायामपि । अभ्यासस्यासवर्णे इतीयङ् । इयर्ति । इयृतः । इय्रति । आर । आरतुः । इडत्त्यर्तीति नित्यमिट् । आरिथ । अर्ता । अरिष्यति । इयराणि । ऐयः । ऐयृताम् । ऐयरुः । इयृयात् । अर्यात् । आरत् । ससर्ति ॥ ४ ॥ **भस** भर्त्सनदीप्त्योः । बभस्ति । घसिभसोर्हलि चेत्युपधालोपः । झलो झलीति सलोपः । बब्ध । बप्सति ॥ ५ ॥ **किट्** ज्ञाने । चिकेत्ति ॥ ६ ॥ **तुर** त्वरणे । तुतोर्ति । तुतूर्तः । तुतुरति ॥ ७ ॥ **धिष** शब्दे । दिधेष्टि । दिधिष्टः ॥ ८ ॥ **धन** धान्ये । दधन्ति । दधन्तः । दधनति ॥ ९ ॥ **जन** जनने । जजन्ति ॥ **जनसनखनां सञ्झलोः । ६ । ४ । ४२ ॥** एषामाकारोऽन्तादेशः स्याज्झलादौ सनि झलादौ क्ङिति च ॥ जजातः । जज्ञति । जजंसि । जजान । जजन्यात् । जजायात् । जन्यात् । जायात् ॥ १० ॥ **गा** स्तुतौ । 'देवाञ्जिगाति सुम्नयुः' । जिगीतः । जिगति ॥ ११ ॥

इति जुहोत्यादिप्रकरणम् ।

१ **नाभ्यस्तस्येति** । "अनन्तरस्य-" इति न्यायेन लघूपधगुणस्यैवायं प्रतिषेधस्तदाह-**लघूपधेति** ॥ "पिति" इति "उतो वृद्धिः-" इत्युत्तरसूत्रार्थम्, अपिति ङित्वादेव गुणाभावस्य सिद्धेः ॥ २ **ओविजीत्यस्यैवेति** । श्रूयमाणविकरणकस्य तौदादिकस्य रौधादिकस्य चैव विज्धातोर्ग्रहणमित्यत्र व्याख्यानमेव शरणमित्याशयः ॥ ३ **णिजिविजी रुधादावपीति** । रुधादौ णिज्धातोः पाठाभावेन "णिजि" इत्यस्यानन्तरं पठितो यो विज्धातुः स रुधादावपि बोध्य इत्यर्थः ॥ अथवा "बहुलमेतन्निदर्शनम्" इति चुरादौ वक्ष्यमाणत्वेन तस्य तत्र पाठ इति स्थितस्य गतिश्चिन्तनीया । अत एव द्विवचननिर्देशसङ्गतिः । "णिजिविजी द्वौ रुधादौ च" इति माधवीयधातुवृत्तौ द्वयोरपि तत्र पाठसत्तायाः स्पष्टमुक्तत्वाच्चेदमेव युक्तम् ॥ ४ **अभिजिहर्तीति** । छान्दसत्वादित्त्वम् ॥ ५ **इय्रतीति** । "अचः परस्मिन्-" इति यणः स्थानिवद्भावाद् "लोपो व्योः-" इति यकारलोपो न । यलोपे "न पदान्त-" इति निषेधस्तु न, "स्वरदीर्घयलोपेषु लोपाजादेश एव" इति पूर्वमुक्तत्वेन लोपरूपाजादेशस्यैवाभिमतत्वात् ॥ ६ **ऐय इति** । आटि द्वित्वेऽभ्यासस्येत्त्वे इयङि उत्तरखण्डे गुणे रपरत्वे हल्ङ्यादिलोपे विसर्गे "आटश्च" इति वृद्धिः ॥ ७ **दधन्तीति** । "चक्षसे" इतिवन्न दीर्घः ॥ ८ **जिगीत इति** । "बहुलं छन्दसि" इत्यभ्यासस्येत्त्वम् । "ई हल्यघोः" इति वा ॥ इति जुहोत्यादयः ॥

## अथ दिवादिप्रकरणम् ।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ **भूषन्ताः परस्मैपदिनः ॥ दिवादिभ्यः श्यन् । ३ । १ । ६९ ॥** शपोऽपवादः । हलि चेति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् ॥ १ ॥ **षिवु** तन्तुसन्ताने । परिषीव्यति । परिषिषेव । न्यषेवीत् । न्यसेवीत् ॥ २ ॥ **स्रिवु** गतिशोषणयोः ॥ ३ ॥ **ष्ठिवु** निरसने । केचिदिहेमं न पठन्ति ॥ ॥ ४ ॥ **ष्णसु** अदने । आदान इत्येके । अदर्शन इत्यपरे । स्नुस्यति । सुष्णोस ॥ ५ ॥ **ष्णसु** निरसने । स्नस्यति । सस्नास ॥ ६ ॥ **क्नसु** ह्वरणदीप्त्योः । ह्वरणं कौटिल्यम् । चक्नास ॥ ७ ॥ **व्युष** दाहे । वुव्योष ॥ ८ ॥ **प्लुष** च ॥ ९ ॥ **नृती** गात्रविक्षेपे । नृत्यति । ननर्त ॥ **सेऽसिचि कृतचृतछृदतृदनृतः । ७ । २ । ५७ ॥** एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा स्यात् । नर्तिष्यति । नर्त्स्यति । नृत्येत् । नृत्यात् । अनर्तीत् ॥ ॥ १० ॥ **त्रसी** उद्वेगे । वा भ्राशेति श्यन्वा । त्रस्यति । त्रसति । त्रेसतुः । तत्रसतुः ॥ ॥ ११ ॥ **कुथ** पूतीभावे । पूतीभावो दौर्गन्ध्यम् ॥ १२ ॥ **पुथ** हिंसायाम् ॥ १३ ॥ **गुध** परिवेष्टने ॥ १४ ॥ **क्षिप** प्रेरणे । क्षिप्यति । क्षेप्ता ॥ १५ ॥ **पुष्प** विकसने । पुष्प्यति । पुपुष्प ॥ १६ ॥ **तिम ष्टिम ष्टीम** आर्द्रीभावे । तिम्यति । स्तिम्यति । स्तीम्यति ॥ १९ ॥ **व्रीड** चोदने लज्जायां च । व्रीड्यति ॥ २० ॥ **इष** गतौ । इष्यति ॥ २१ ॥ **षह षुह** चक्यर्थे । चक्यर्थस्तृप्तिः । सह्यति । सुह्यति ॥ २३ ॥ **जॄष् झॄष्** वयोहानौ । जीर्यति । जजरतुः । जेरतुः[३] । जरिता । जरीता । जीर्येत् । जीर्यात् । 'जॄस्तम्भ्वित्यङ्वा । 'ऋदृशोऽङि गुणः' । अजरत् । अजारीत् । अजारिष्टाम् ॥ झीर्यति । जझरतुः । अझारीत् ॥ २५ ॥ **षूङ्** प्राणिप्रसवे । सूयते । सुषुवे । स्वरतिसूतीति[४] विकल्पं बाधित्वा श्र्युकः कितीति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सुषुविषे । सुषुविवहे । सोता । सविता ॥ २६ ॥ **दूङ्** परितापे । दूयते ॥ २७ ॥ **दीङ्** क्षये । दीयते ॥ **दीङो युडचि क्ङिति । ६ । ४ । ६३ ॥** दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात् ॥ **वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ॥ * ॥** दिदीये ॥ **मीनातिमिनोतिदीङां ल्यपि च ।६।१।५०॥** एषामात्त्वं स्यात् ल्यपि चकारादशित्येज्निमित्ते ॥ दाता । दास्यते । अदास्त । अदास्थाः ॥ २८ ॥ **डीङ्** विहायसा गतौ । डीयते । डिड्ये ॥ २९ ॥ **धीङ्** अधारे । धीयते ।

---

१ "**नृती**" इति । ईदित्करणं निष्ठायाम्–"श्वीदितः" इतीण्निषेधाय । यद्यपि "सेऽसिचि–" इतीटो विकल्पितत्वात् "यस्य विभाषा" इत्यनेनैव सिद्ध्यतीडभावस्तथापि तदनित्यत्वज्ञापनाय तत् । तेन "धावितमिभराजधिया" इत्यादि निष्पद्यते ॥ २ ऋत इद्धातोरितीत्त्वम् ॥ ३ **जेरतुरिति** । "ऋच्छत्यृताम्" इति गुणे "वा जॄभ्रमु–" इत्येत्त्वविकल्पः । ४ युटि कृतेऽपि तस्य "असिद्धवदत्राभात्" इत्यसिद्धत्वेन "एरनेकाचः–" इति यणू प्राप्तिमाशङ्क्याह–वुग्युटाविति । उवङ्यणोः कर्तव्ययोः सतोस्तौ सिद्धाविति तदर्थः ॥

दिध्ये । धेता ॥ ३० ॥ **मीङ्** हिंसायाम् । हिंसात्र प्राणवियोगः । मीयते ॥ ३१ ॥ **रीङ्** श्रवणे । रीयते ॥ ३२ ॥ **लीङ्** श्लेषणे ॥ **विभाषा लीयतेः । ६ । १ । ५१ ॥** लीयतेरिति [1]यका निर्देशो न तु श्यना । लीलीङोरात्त्वं वा स्यादेज्विषये ल्यपि च ॥ लेता । लाता । लेष्यते । लास्यते । एज्विषये किम् ? लीयते । लिल्ये ॥ ३३ ॥ **व्रीङ्** वृणोत्यर्थे । व्रीयते । विव्रिये ॥ [2]**स्वादय ओदितः ।** तत्फलं तु निष्ठानत्वम् ॥ ३४ ॥ **पीङ्** पाने । पीयते ॥ ३५ ॥ **माङ्** माने । मायते । ममे ॥ ३६ ॥ **ईङ्** गतौ । ईयते । अयांचक्रे ॥ ३७ ॥ **प्रीङ्** प्रीतौ । [3]सकर्मकः । प्रीयते । पिप्रिये ॥ ३८ ॥ **अथ परस्मैपादिनश्चत्वारः ॥ शो** तनूकरणे ॥ **ओतः श्यनि । ७ । ३ । ७१ ॥** लोपः स्यात् श्यनि ॥ श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शाता । शास्यति । विभाषा घ्राधेडिति सिचो वा लुक् । लुगभावे यमरमे-तीट्सकौ । अशात् । अशाताम् । अशुः । अशासीत् । अशासिष्टाम् ॥ १ ॥ **छो** छेदने । छ्यति ॥ २ ॥ **षो**[4]ऽन्तकर्मणि । स्यति । ससौ । अभिष्यति । अभ्यष्यत् । अभिससौ ॥ ३ ॥ **दो** अवखण्डने । द्यति । ददौ । प्रणिदाता । देयात् । अदात् ॥ ४ ॥ **अथा-त्मनेपदिनः पञ्चदश ॥ जनी** प्रादुर्भावे ॥ **ज्ञाजनोर्जा । ७ । ३ । ७९ ॥** अनयोर्जा-देशः स्याच्छिति ॥ जायते । जज्ञे । जज्ञाते । जज्ञिरे । जनिता । जनिष्यते ॥ दीपजनेति वा चिण् ॥ **जनिवध्योश्च । ७ । ३ । ३५ ॥** अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च ॥ अजनि । अजनिष्ट ॥ १ ॥ **दीपी** दीप्तौ । दीप्यते । दिदीपे । अदीपि । अदीपिष्ट ॥ ॥ २ ॥ **पूरी** आप्यायने । पूर्यते । अपूरि । अपूरिष्ट ॥ ३ ॥ **तूरी** गतित्वरणहिंसनयोः । तूर्यते । तुतूरे ॥ ४ ॥ **धूरी गूरी** हिंसागत्योः । धूर्यते । दुधूरे । गूर्यते । जुगूरे ॥ ६ ॥ **घूरी जूरी** हिंसावयोहान्योः ॥ ८ ॥ **शूरी** हिंसास्तम्भनयोः ॥ ९ ॥ **चूरी** दाहे ॥ १० ॥ **तप** ऐश्वर्ये वा । अयं धातुरैश्वर्ये वा तङ्श्यनौ लभते । अन्यदा तु शब्विकरणः परस्मैपदी-त्यर्थः ॥ केचित्तु वाग्रहणं वृतुधातोरायत्रयत्रमिच्छन्ति । तप्यते । तप्ता । तप्स्यते ॥ पतेति [5]व्यत्यासेन पाठान्तरम् । 'द्युतद्यामानियुतः पत्यमानः' ॥ ११ ॥ **वृतु** वरणे । वृत्यते ॥ [6]पक्षा-

१ "लीयतेः" इति निर्देशेन "लीङ् श्लेषणे" इति दैवादिकस्यैव ग्रहणं स्यादिति भ्रमवारणायाऽऽह-**यका निर्देश इति** । न च "सार्वधातुके यक्" इति विहितो यक् धात्वर्थफले आश्रयान्वयविवक्षायां भवति, प्रकृते च न तद्द्योत्यार्थसद्भाव इति कथं यगिति वाच्यम्, सौत्रत्वेन यकः साधुत्वात् ॥ न च "वि-भाषा लियः" इत्येव सूत्र्यतां तावतैव सर्वेषां ग्रहणं भविष्यति किं सर्वसंग्राहकयग्निर्देशेनेति वाच्यम्, **क्र्यादौ** आधृषीये च क्रमेण "ली श्लेषणे" "ली द्रवीकरणे" इति निरनुबन्धपाठेन निरनुबन्धकपरिभाषया तयोरेव ग्रहणापत्तेः । "लिङः" इति निर्देशे त्वस्यैव ग्रहणापत्तिरिति यका निर्देशेन निरनुबन्धकपरिभाषाया बाधा-त्सर्वेषां ग्रहणं सिध्यतीति भावः ॥ २ **स्वादय इति** । गणसूत्रमेतत् । "षूङ्" इत्यारभ्य व्रीङन्ता इत्यर्थः । "ओदितः" इत्यतिदेशः ॥ ३ **सकर्मक इति** । "रुच्यर्थानां प्रीयमाणः" इति निर्देशस्य दर्शनेन मूलकृता **सकर्मक** इत्युक्तम् । "अत्र मानं तु चिन्त्यम्" इति शेखरकृत् ॥ ४ 'षोऽन्तकर्मणि' **अन्तकर्म** नाशनम् ॥ ५ "पत" इति पाठे प्रमाणं प्रयोगमाह–**द्युतद्यामेति** ॥ ६ **पक्षान्तर इति** भाष्यस्वरसस्त्वत्र पक्षे न, वावृत्यमानेति भट्टिकाव्ये तु वाशब्दस्येवार्थत्वेन कामयमानेव इत्यर्थः ॥ '**वृत्तेः** तु वृत्तवावृत्तौ' इति कोशप्रयोगे तु पृषोदरादित्वकल्पने सर्वं सुसमञ्जसमेव । विस्तरभिया नाधिकं प्रपञ्चितम् ॥

न्तरे तु वावृत्यते । ततो वावृत्यमाना सा रामशालां न्यविक्षतेति भट्टिः ॥ १२ ॥ **क्लिश** उपतापे । क्लिश्यते । क्लेशिता ॥ १३ ॥ **काशृ** दीप्तौ । काश्यते ॥ १४ ॥ **वाशृ** शब्दे । वाश्यते । ववाशे ॥ १५ ॥ **अथ पञ्च स्वरितेतः ॥ मृष** तितिक्षायाम् । मृष्यति । मृष्यते । ममर्ष । ममृषे ॥ १ ॥ **ईशुचिर्** पूतीभावे । पूतीभावः क्लेदः । शुच्यति । शुच्यते । शुशोच । शुशुचे । अशुचत् । अशोचीत् । अशोचिष्ट ॥ २ ॥ **णह** बन्धने । नह्यति । नह्यते । ननाह । ननद्ध । नेहिथ । नेहे । नद्धा । नत्स्यति । अनात्सीत् ॥ ३ ॥ **रञ्ज** रागे । रज्यति । रज्यते ॥ ४ ॥ **शप** आक्रोशे । शप्यति । शप्यते ॥ ५ ॥ **अथैकादशानुदात्तेतः ॥ पद** गतौ । पद्यते । पेदे । पत्ता पद्येत पत्सीष्ट ॥ **चिण् ते पदः । ३ । १ । ६० ॥** पदश्च्लेश्चिण् स्यात्तशब्दे परे ॥ प्रण्यपादि । अपत्साताम् । अपत्सत ॥ १ ॥ **खिद** दैन्ये । खिद्यते । चिखिदे । खेत्ता । अखित्त ॥ २ ॥ **विद** सत्तायाम् । विद्यते । वेत्ता ॥ ३ ॥ **बुध** अवगमने । बुध्यते । बुबुधे । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि । अबुद्ध । अभुत्साताम् ॥ ४ ॥ **युध** संप्रहारे । युध्यते । युयुधे । योद्धा । अयुद्ध ॥ [1]कथं युध्यतीति ? युधमिच्छतीति क्यच् । अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति वा ॥ ५ ॥ **अनो रुध** कामे । अनुरुध्यते ॥ ६ ॥ **अण** प्राणने । अण्यते । आणे अणिता ॥ ७ ॥ **अनेति** दन्त्यान्तोऽयमित्येके ॥ **मन** ज्ञाने । मन्यते । मेने । मन्ता ॥ ८ ॥ **युज** समाधौ । समाधिश्चित्तवृत्तिनिरोधः । [2]अकर्मकः । युज्यते । योक्ता ॥ ९ ॥ **सृज** विसर्गे अकर्मकः । 'संसृज्यते सरसिजैररुणांशुभिन्नैः' । ससृजिषे । स्रष्टा । स्रक्ष्यते । लिङ्सिचाविति कित्त्वान्न गुणो नाप्यम् । सृक्षीष्ट । असृष्ट । असृक्षाताम् ॥ १० ॥ **लिश** अल्पीभावे । लिश्यते । लेष्टा । लेक्ष्यते । लिक्षीष्ट । अलिक्षत । अलिक्षाताम् ॥ ११ ॥ **अथागणान्ताः परस्मैपदिनः ॥** [3]राधोऽकर्मकाद्वृद्धावेव । एवकारो भिन्नक्रमः । राधोऽकर्मकादेव श्यन् । उदाहरणमाह—वृद्धाविति ॥ यन्मह्यमपराध्यति । द्रुह्यतीत्यर्थः । '[4]विराध्यन्तं क्षमेत कः' । द्रुह्यन्तमित्यर्थः । राध्यत्योदनः। सिध्यतीत्यर्थः । कृष्णाय राध्यति । दैवं पर्यालोचयतीत्यर्थः । दैवस्य धात्वर्थेऽन्तर्भावाज्जीवत्यादिवदकर्मकत्वम् । रराध । रराधतुः । रराधिथ । राधो हिंसायामित्येत्त्वाभ्यासलोपाविह न, हिंसार्थस्य सकर्मकतया दैवादिकत्वायोगात् । राद्धा । रात्स्यति । अयं स्वादि[5]श्चुरादिश्च ॥ १ ॥ **व्यध** ताडने । 'ग्रहिज्येति संप्रसारणम् । विध्यति ।

१ **कथं युध्यतीति** । युधधातोरनुदात्तेत्त्वात् परस्मैपदानुपपत्तिरिति भावः । 'व्यत्ययो बहुलम्" इति सूत्रभाष्ये तु "प्रतीपमन्युर्युध्यति" इत्यत्र व्यत्ययेन परस्मैपदम्" इत्युक्तम् । व्यत्ययेन परस्मैपदप्रतिपादनपरभाष्यविरोधादनुदात्तेत्त्वप्रयुक्तात्मनेपदानित्यत्वमपि चिन्त्यमेवेति शेखरकृत् ॥ २ **अकर्मक इति** । अकर्मकोऽपि" इत्यर्थः । अतः "सृजियुज्योः सकर्मकयोः कर्मवद्भावः" इति कर्मवत्सूत्रस्थवार्तिकेन न विरोधः ॥ ३ **राधोऽकर्मकादिति** । अन्तर्गणसूत्रमेतत् । ननु एवकारादर्थान्तरे राधः श्यन् न स्यादत आह—**भिन्नेति** । अत एव "अकर्मकात्" इति सार्थकम् । अन्यथा वृद्धिप्रतिपादकस्याकर्मकत्वाव्यभिचाराद् "अकर्मकात्" इति व्यर्थमेव स्यात् ॥ **उदाहरणमिति** । तथा च "वृद्धो" इत्युपलक्षणम् । अत एव राध्यत्योदनः स्वयमेव" इति भाष्यप्रयोगसङ्गतिः ॥ ४ **हिंसार्थस्येति** । शत्रुमपराध्नोति" इत्यादौ "हिनस्ति" इत्यर्थदर्शनात् ॥ ५ **चुरादिश्चेति** । "ज्ञेयः" इति शेषः । तथाप्रयोगदर्शनादिति भावः ॥

विव्यधिव । विविधितुः । विव्यद्ध । विव्यधिथ । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् ॥ २ ॥ **पुष पुष्टौ** । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । पुषादीत्यङ् । अपुषत् ॥ ३ ॥ **शुष शोषणे** । अशुषत् ॥ ४ ॥ **तुष प्रीतौ** ॥ ५ ॥ **दुष वैकृत्ये** ॥ ६ ॥ **श्लिष आलिङ्गने** । श्लिष्यति । शिश्लेष । श्लेष्टा । श्लेक्ष्यति ॥ **श्लिषः । ३ । १ । ४६ ॥** अस्मात्परस्यानिटश्च्लेः क्सः स्यात् । पुषाद्यङोऽपवादो न तु चिणः । पुरस्तादपवादन्यायात् ॥ **आलिङ्गने । ३ । १ । ४६ ॥** श्लिषश्च्लेरालिङ्गन एव क्सो नान्यत्र । योगविभागसामर्थ्याच्छल इगुपधादित्यस्याप्ययं नियमः । अश्लिक्षत्कन्यां देवदत्तः ॥ आलिङ्गन एवेति किम् ? समश्लिषज्जतु काष्ठम् । अङ् । प्रत्यासत्ताविह श्लिषिः ॥ कर्मणि अनालिङ्गने सिजेव, न तु क्सः । एकवचने चिण् । अश्लेषि । अश्लिक्षाताम् । अश्लिक्षत । अश्लिष्ठाः । अश्लिड्ढ्वम् ॥ ७ ॥ **शक विभाषितो मर्षणे** । विभाषित इत्युभयपदीत्यर्थः । शक्यति । शक्यते हरिं द्रष्टुं भक्तः । शशाक । शेकिथ । शशक्थ । शेके । शक्ता । शक्ष्यति । शक्ष्यते । अशकत् । अशक्त । सेट्कोऽयमित्येके । तन्मतेनानिट्कारिकासु लृदित्पठितः । शकिता । शकिष्यति ॥ ८ ॥ **ष्विदा गात्रप्रक्षरणे** । घर्मस्रुतावित्यर्थः । अयं ञीदिति न्यासकारादयः । नेति हरदत्तादयः । स्विद्यति । सिष्वेद । सिष्वेदिथ । स्वेत्ता । अस्विदत् ॥ ९ ॥ **क्रुध क्रोधे** । क्रोद्धा । क्रोत्स्यति ॥ १० ॥ **क्षुध बुभुक्षायाम्** । क्षोद्धा । कथं क्षुधित इति ? संपदादिक्विबन्तात्तारकादित्वादितजिति माधवः । वस्तुतस्तु वसतिक्षुधोरितीट् वक्ष्यते ॥ ११ ॥ **शुध शौचे** । शुध्यति । शुशोध । शोद्धा ॥ १२ ॥ **षिधु संराद्धौ** । ऊदित्पाठः प्रामादिकः । सिध्यति । सेद्धा । सेत्स्यति । असिधत् ॥ १३ ॥ **रध हिंसासंराद्ध्योः** । संराद्धिर्निष्पत्तिः । रध्यति । रधिजभोरचीति नुम् । ररन्धतुः ॥ **रधादिभ्यश्च । ७ । २ । ४५ ॥** रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात् । ररन्धिथ । ररद्ध । ररन्धिव । रेध्व ॥ **नेट्यलिटि रधेः । ७ । ६२ ॥** लिडर्जे इटि रधेर्नुम्न स्यात् । रधिता । रद्धा । रधिष्यति । रत्स्यति । अङि । नुम् । अनिदितामिति नलोपः । अरधत् ॥ १४ ॥ **णश अदर्शने** । नश्यति । ननाश । नेशतुः । नेशिथ ॥ **मस्जिनशोर्झलि । ७ । १ । ६० ॥** नुम् स्यात् । ननंष्ठ । नेशिव । नेश्व । नेशिम । नेश्म । नशिता । नंष्टा । नशिष्यति । नङ्क्ष्यति । नश्येत् । नश्यात् । अनशत् । प्रणश्यति ॥ **नशेः षान्तस्य । ८ । ४ । ३६ ॥** णत्वं न स्यात् । प्रनंष्टा ।

---

१ 'श्लिष आलिङ्गने' इति सूत्रं विभज्य द्विधा पठितम् ॥ २ सिच्फलं दर्शयति--"**अश्लिक्षत**--" **अश्लिष्ठाः**" इति । अत्रादादेश "झलो झलि" इति लोपयोः सिद्धिरिति भावः ॥ **अश्लिड्ढ्वमिति** ॥ 'झलो झलि' इति सिचो लोपे 'ष्टुना ष्टुः' इति ध्वमः ष्टुत्वे 'झलां जश् झशि' इति षस्य जश्त्वमिति **भावः** ॥ ३ **ररन्धतुरिति** । कित्त्वापेक्षया परत्वान्नुमि सति संयोगात्परत्वेनाकित्त्वान्न नकारलोपः ॥

अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम्। प्रनङ्क्ष्यति। नशिष्यति॥१५॥ **तृप** प्रीणने। प्रीणनं तृप्तिस्तर्पणा च। 'नाग्निस्तृप्यति काष्ठानाम्'। पितॄनताप्र्सीदिति भट्टिः। इत्युभयत्र दर्शनात्। ततर्पिथ। तत्रप्थ। ततर्प्थ। तर्पिता। तर्प्ता। त्रप्ता। स्पृशमृशकृषेति सिज्वा। अताप्र्सीत्। अत्राप्सीत्। अतर्पीत्। अतृपत्॥ १६॥ **दृप** हर्षमोहनयोः। मोहनं गर्वः। दृप्यतीत्यादि। रधादित्वादिमौ वेट्कावमर्थमनुदात्तता॥ १७॥ **द्रुह** जिघांसायाम्। वा द्रुहमुहेति वा घः। पक्षे ढः। दुद्रोग्ध। दुद्रोढ। दुद्रोहिथ। द्रोहिता। द्रोग्धा। द्रोढा। द्रोहिष्यति। ध्रोक्ष्यति। ढत्वघत्वयोस्तुल्यं रूपम्। अद्रुहत्॥ १८॥ **मुह** वैचित्ये। वैचित्यमविवेकः। मुह्यति। मुमोहिथ। मुमोग्ध। मुमोढ। मोग्धा। मोढा। मोहिता। मोहिष्यति। मोक्ष्यति। अमुहत्॥ १९॥ **ष्णुह** उद्गिरणे। स्नुह्यति। सुष्णोह। सुष्णोहिथ। सुष्णोग्ध। सुष्णोढ। सुष्णुहिव। सुष्णुह्व। स्नोहिता। स्नोग्धा। स्नोढा। स्नोहिष्यति। स्नोक्ष्यति। अस्नुहत्॥ २०॥ **ष्णिह** प्रीतौ। स्निह्यति। सिष्णेह॥ वृत्॥ **रधादयः समाप्ताः॥** पुषादयस्तु आगणान्तादिति सिद्धान्तः॥ २१॥ **शमु** उपशमे॥ **शमामष्टानां दीर्घः श्यनि। ७। ३। ७४॥** शमादीनामित्यर्थः। प्रणिशाम्यति। शेमतुः। शेमिथ। शमिता। अशमत्॥ १॥ **तमु** काङ्क्षायाम्। ताम्यति। तमिता। अतमत्॥ २॥ **दमु** उपशमे। उपशमे इति ण्यन्तस्य। तेन सकर्मकोऽयम्। न तु शमिवदकर्मकः। अदमत्॥ ३॥ **श्रमु** तपसि खेदे च। श्राम्यति। अश्रमत्॥४॥ **भ्रमु** अनवस्थाने। वा भ्राशेति श्यन्वा। तत्र कृते शमामष्टानामिति दीर्घः। भ्राम्यति। लुङ्यङ्। अभ्रमत्। शेषं भ्वादिवत्॥ ५॥ **क्षमू** सहने। क्षाम्यति। चक्षमिथ। चक्षन्थ। चक्षमिव। चक्षण्व। चक्षमिम। चक्षण्म। क्षमिता। क्षन्ता। अयमषित्। भ्वादिस्तु षित्। 'अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा'॥ ॥ ६॥ **क्लमु** ग्लानौ। क्लाम्यति। क्लामति। शपीव श्यन्यपि ष्ठिवुक्लम्वित्येव दीर्घे सिद्धे शमादिपाठो घिनुणर्थः। अङ्। अक्लमत्॥ ७॥ **मदी** हर्षे। माद्यति। अमदत्। **शमादयोऽष्टौ गताः॥ ८॥ असु** क्षेपणे। अस्यति। आस। असिता॥ **अस्यतेस्थुक्। ७। ४। १७॥** अङि परे। आस्थत्। अस्य पुषादित्वादङि सिद्धे अस्यतिवक्तीति वचनं तङर्थम्। तङ् तु उपसर्गादस्यत्यूह्योरिति वक्ष्यते। पर्यास्थत॥ १॥ **यसु** प्रयत्ने॥ **यसो-**

---

१ ननु "नशेः षस्य" इत्युक्तेऽपि "पदस्य" इत्यस्य विशेषणेन "षान्तस्य" इति लाभेऽन्तग्रहणं व्यर्थमत आह–**भूतपूर्वेति**। "साम्प्रतिकाभावेऽपि भूतपूर्वगतिः" इति परिभाषाज्ञापनाय तदिति भावः। सम्प्रति भवं साम्प्रतिकम्। कालाट्ठञ्। साम्प्रतिकस्य=अभिप्रेततत्तत्कालिकलक्षणप्रवृत्तियोग्यस्य लक्ष्यस्य विशेषणस्य वा, अभावे=अनुपलम्भे, भूतपूर्वस्य=पूर्वकालिकतादृशबुद्धिविषयस्य, गतिः=ग्रहणम्। इति परिभाषार्थः। २ नवा प्रापितनिषेधस्यैव क्रादिपूत्रेण नियम इति मतेनाह–**दुद्रोहिथ दुद्रोढेति**। वस्तुतो नशब्देन वाशब्देन वा यत्प्राप्तं तस्य सर्वस्य क्रादिनियमेन बाध इति सिद्धान्ताद् "दुद्रोहिथ" इत्येकमेव रूपं न्याय्यमिति बोध्यम्॥ ३ **आगणान्तादिति**। यत्तु "अस्यतेस्थुक्" इति सूत्रमत्र लिङ्गमिति तन्न, "अस्यतिवक्ति–" इत्यनेनात्मनेपदे तङि थुकश्चारितार्थ्यात्॥

ऽनुपसर्गात् । ३ । १ । ७१ ॥ संयसश्च ।३।१।७२॥ श्यन्वा स्यात् ॥ यस्यति । यसति । संयस्यति । संयसति । अनुपसर्गात्किम् ? प्रयस्यति ॥ २ ॥ जसु मोक्षणे । जस्यति ॥ ३ ॥ तसु उपक्षये । दसु च । तस्यति । अतसत् । दस्यति । अदसत् ॥ ५ ॥ वसु स्तम्भे । वस्यति । ववास । ववसतुः—न शसददेति निषेधः । बशादिरयमिति मते तु—बेसतुः । बेसुः ॥ ६ ॥ व्युष विभागे । अयं दाहे पठितः । अर्थभेदेन त्वङर्थं पुनः पठ्यते । अव्युषत् । ओष्ठ्यादिर्दन्त्यान्तोऽयं—प्युस इत्यन्ये । अपकारो युस इत्यपरे ॥ ७ ॥ प्लुष दाहे । अप्लुषत् । पूर्वत्र पाठः सिजर्थ इत्याहुः । तद् भ्वादिपाठेन गतार्थमिति सुवचम् ॥ ८ ॥ बिस प्रेरणे । बिस्यति । अबिसत् ॥ ९ ॥ कुस संश्लेषणे अकुसत् ॥ १० ॥ बुस उत्सर्गे ॥ ११ ॥ मुस खण्डने ॥ १२ ॥ मसी परिणामे । परिणामो विकारः । समी इत्येके ॥ १३ ॥ लुठं विलोडने ॥ १४ ॥ वच समवाये । उच्यति । उवोच । ऊचतुः । मा भवानुचत् ॥ ॥ १५ ॥ भृशु भ्रंशु अधःपतने । बभर्श । अभृशत् ॥ अनिदितामिति नलोपः । भ्रश्यति । अभ्रशत् ॥ १७ ॥ वृश वरणे । वृश्यति । अवृशत् ॥ १८ ॥ कृश तनूकरणे । कृश्यति ॥ १९ ॥ ञितृषा पिपासायाम् ॥ २० ॥ हृष तुष्टौ । श्यन्नङौ भौवादिकाद्विशेषः ॥ २१ ॥ रुष रिष हिंसायाम् । तीषसहेति वेट् । रोषिता । रोष्टा । रेषिता । रेष्टा ॥ ॥ २३ ॥ डिप क्षेपे ॥ २४ ॥ कुप क्रोधे ॥ २५ ॥ गुप व्याकुलत्वे ॥ २६ ॥ युप रुप लुप विमोहने । युप्यति । रुप्यति । लुप्यति । लोपिता । लुप्यतिः सेट्कः । अनिट्कारिकासु लिपिसाहचर्यात्तौदादिकस्यैव ग्रहणात् ॥ २९ ॥ लुभ गार्ध्ये । गार्ध्यमाकाङ्क्षा । तीषसहेति वेट् । लोभिता । लोब्धा । लोभिष्यति । लुभ्येत् । लुभ्यात् । अलुभत् । भ्वादेरवृत्कृतत्वाल्लोभतीत्यपीत्याहुः ॥ ३० ॥ क्षुभ संचलने । क्षुभ्यति ॥ ३१ ॥ णभ तुभ हिंसायाम् । क्षुभिनभितुभयो द्युतादौ क्र्यादौ च पठ्यन्ते । तेषां द्युतादित्वादङ् सिद्धः । क्र्यादित्वात्पक्षे सिज्भवत्येव । इह पाठस्तु श्यनर्थः ॥ ३३ ॥ क्लिदू आर्द्रीभावे । क्लिद्यति । चिक्लेदिथ । चिक्लेत्थ । चिक्लिदिव । चिक्लिद्व । चिक्लिदिम । चिक्लिद्म । क्लेदिता । क्लेत्ता ॥ ३४ ॥ ञिमिदा स्नेहने । 'मिदेर्गुणः' । मेद्यति । अमिदत् । द्युतादिपाठादेवामिदत् अमेदिष्टेति सिद्धे इह पाठोऽमेदीदिति मा भूदिति । द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः । ॥ ३५ ॥ ञिक्ष्विदा स्नेहनमोचनयोः ॥ ३६ ॥ ऋधु वृद्धौ । आनर्ध आर्धत् ॥ ३७ ॥ गृधु अभिकाङ्क्षायाम् । अगृधत् ॥ ३८ ॥ वृत् ॥ पुषादयो दिवादयश्च वृत्ताः ॥ केचित्तु पुषादिसमाप्त्यर्थमेव वृत्करणम् । दिवादिस्तु भ्वादिर्वेदाकृतिगणः । तेन क्षीयते मृग्यतीत्यादिसिद्धिरित्याहुः ॥

इति दिवादिप्रकरणम् ।

---

१ दिवादौ गणे "त्रुट च्छेदने" इति पठन्ति, चुरादौ च, चुरादेर्नित्यण्यन्तत्वात् "त्रोटति" इत्यस्य सिद्ध्ये "वा भ्राश" इत्यत्र त्रुटिग्रहणम् । "ददत् दणतेर्दीर्यतेर्वा" इति भाष्याद् दधातुरप्यत्र बोध्यस्तदाह-भ्वादिर्वदाकृतिगण इति ॥ इति नागेशभैरवौ ॥ इति दिवादयः ॥

## अथ स्वादिप्रकरणम् ।

**षुञ्** अभिषवे । अभिषवः स्नपनं पीडनं स्नानं सुरासंधानं च । तत्र स्नानेऽकर्मकः ॥ **स्वादिभ्यः श्नुः । ३ । १ । ७३ ॥** सुनोति । सुनुतः ॥ हुश्नुवोरिति यण्–सुन्वन्ति । सुन्वः । सुनुवः । सुन्वहे । सुनुवहे । सुषाव । सुषुवे । सोता । सुनु । सुनवानि । सुनवै । सुनुयात् । सूयात् । 'स्तुसुधूञ्भ्य' इतीट्–असावीत् । असोष्ट । अभिषुणोति । अभ्यषुणोत् । अभिसुषाव ॥ **सुनोतेः स्यसनोः । ८ । ३ । ११७ ॥** स्ये सनि च परे सुञः षो न स्यात् ॥ विसोष्यति ॥ १ ॥ **षिञ्** बन्धने । सिनोति । विसिनोति । सिषाय । सिष्ये । सेता ॥ २ ॥ **शिञ्** निशाने । तालव्यादिः । शेता ॥ ३ ॥ **डुमिञ्** प्रक्षेपणे । मीनातिमिनोतीत्यात्त्वम् । ममौ । ममिथ । ममाथ । मिम्ये । माता । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त ॥ ४ ॥ **चिञ्** चयने । प्रणिचिनोति ॥ **विभाषा चेः । ७ । ३ । ५८ ॥** अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि लिटि च ॥ प्रणिचिकाय । चिचाय । चिक्ये । चिच्ये । अचैषीत् । अचष्ट ॥ ५ ॥ **स्तृञ्** आच्छादने । स्तृणोति । स्तृणुते । गुणोर्तीति गुणः–स्तर्यात् ॥ **ऋतश्च संयोगादेः । ७ । २ । ४३ ॥** ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि । स्तरिषीष्ट । स्तृषीष्ट । अस्तरिष्ट । अस्तृत ॥ ६ ॥ **कृञ्** हिंसायाम् । कृणोति । कृणुते । चकार । चकर्थ । चक्रे । क्रियात् । कृषीष्ट । अकार्षीत् । अकृत ॥ ७ ॥ **वृञ्** वरणे ॥ **बभूथाततन्थजगृभ्मववर्थेति निगमे । ७ । २ । ६४ ॥** एषां वेदे इडभावो निपात्यते ॥ तेन भाषायां थलीट् । ववरिथ । ववृव । ववृवहे । वरिता । वरीता ॥ **लिङ्सिचोरात्मनेपदेषु । ७ । २ । ४२ ॥** वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि ॥ **न लिङि । ७ । २ । ३९ ॥** वॄतो लिङ इटो दीर्घो न स्यात् । वरिषीष्ट । वृषीष्ट । अवारीत् । अवरिष्ट । अवरीष्ट । अवृत ॥ ८ ॥ **धुञ्** कम्पने । धुनोति । धुनुते । अधौषीत् । अधोष्यत ॥ ९ ॥ दीर्घान्तोऽप्ययम् । धूनोति । धूनुते । स्वरतिसूतीति वेट्–दुधविथ । दुधोथ । किति लिटि तु श्र्युक इति निषेधं बाधित्वा क्रादिनियमान्नित्यमिट् । दुधुविव । 'स्तुसुधूञ्भ्यः' इति नित्य-

---

१. **सुरासन्धानमिति । सुरासन्धानं** सुरानिष्पादनप्रकारः ॥ २ **सुनवानीति** । 'हुश्नुवोः–' इति यणं बाधित्वा परत्वाद्गुणः ॥ ३ **असोष्टेति** । "पूर्वत्रासिद्धम्" इत्यनेन त्रैपादिकस्य "ह्रस्वादङ्गात्" इत्यस्य सपादसप्ताध्यायीस्थ–"सार्वधातुकार्धधातुकयोः" इति सूत्रदृष्ट्याऽसिद्धत्वेन न सिचो लोप इति बोध्यम् ॥ ४ "चिञ्" **चयनं** संग्रहविशेषः ॥ ५ क्रादिनिषेधादेव सिद्धे ववर्थग्रहणं "निगम एव" इति नियमार्थं तदाह–**तेनेति** । ६ **दीर्घान्तोऽप्ययमिति** । एवं च "स्वरतिसूति–" इति सूत्रे धूञ्ग्रहणं व्यर्थमेव ह्रस्वान्तस्य "धोता" इत्यादीनां, दीर्घान्तस्य "धविता" इत्यादीनामन्तरेणैव धूञ्ग्रहणं सिद्धेरिति केचित् ॥ तन्मन्दम्, सूत्रे सति धूञ्ग्रहणे विकल्पितेट्त्वाभिष्ठायाम् "यस्य विभाषा" इतीण्निषेधो भवति । इदानीं दीर्घान्तस्य निष्ठायामिट्प्रसङ्गात् ॥ यदि तु निष्ठायां "श्र्युकः किति" इति निषेधादेवेडभावो भविष्यतीति विभाव्यते तदा स्वादावेव ह्रस्वान्तपाठेन क्र्यादौ तुदादौ दीर्घधूञ्धातोर्विकल्पेट्त्वाय सूत्रे धूञ्ग्रहणमिति स्वीक्रियताम् ॥

भिद्—अबाबीत्। अधविष्ट। अधोष्ट ॥ १० ॥ **अथ परस्मैपदिनः** ॥ **टुदु** उपतापे। दुनोति ॥ १ ॥ **हि** गतौ वृद्धौ च ॥ **हिनुमीना। ८। ४। १५ ॥** उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात्॥ प्रहिणोति ॥ **हेरचङि। ७। ३। ५६ ॥** अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्नतु चङि॥ जिघाय ॥ २ ॥ **पृ** प्रीतौ। पृणोति। पर्ता ॥ ३ ॥ **स्पृ** प्रीतिपालनयोः। प्रीतिचलनयोरित्यन्ये। चलनं जीवनमिति स्वामी। स्पृणोति। पस्पार ॥४॥ **स्मृ** इत्येके। स्मृणोति। पृणोत्यादयस्त्रयश्छान्दसा इत्याहुः ॥ ५ ॥ **आप्लृ** व्याप्तौ। आप्नोति। आप्नुतः। आप्नुवन्ति। आप्नुवः। आप। आप्ता। आप्नुहि। लृदित्त्वादङ्। आपत् ॥ ६ ॥ **शक्लृ** शक्तौ ॥ अशकत् ॥ ७ ॥ **राध साध** संसिद्धौ। राध्नोति ॥ **राधो हिंसायाम्। ६। ४। १२३ ॥** एत्त्वाभ्यासलोपौ स्तः क्किति लिटि सेटि थलि च ॥ अपरेधतुः। रेधुः। रेधिथ। राद्धा। साध्नोति। साद्धा। असात्सीत्। असाद्धाम् ॥ ९ ॥ **अथ द्वावनुदात्तेतौ** ॥ **अशू** व्याप्तौ संघाते च। अश्नुते ॥ **अश्नोतेश्च। ७। ४। ७२ ॥** दीर्घादभ्यासावर्णात्परस्य नुट् स्यात्। आनशे। अशिता। अष्टा। अशिष्यते। अक्ष्यते। अश्नुवीत। अक्षीष्ट। अशिषीष्ट। आशिष्ट। आष्ट। आक्षाताम् ॥ १ ॥ **ष्टिघ** आस्कन्दने। स्तिघ्नुते। तिष्टिघे। स्तेघिता ॥ २ ॥ अथ **आगणान्तात्परस्मैपदिनः** ॥ **तिक तिग** गतौ च। चादास्कन्दने। तिक्नोति। तिग्नोति ॥ २ ॥ **षघ** हिंसयाम्। सघ्नोति ॥ **ञिधृषा** प्रागल्भ्ये ॥ धृष्णोति। दधर्ष। धर्षिता ॥ ४ ॥ **दम्भु** दम्भने। दम्भनं दम्भः। दभ्नोति। ददम्भ ॥ **श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वेति** व्याकरणान्तरमिहाप्याश्रीयत इत्युक्तम्। अनिदितामिति नलोपः। तस्याभीयत्वेनासिद्धत्वादेत्त्वाभ्यासलोपयोरप्राप्तौ॥ **दम्भेश्च*** ॥

---

१ प्रहिणोतीति। गुणस्य स्थानिवत्त्वाद् हिनुशब्दोऽत्र बोध्यः ॥ "पूर्वत्रासिद्धे न स्थानिवत्" इति तु न, "तस्य दोषः संयोगादिलोप" इत्यादिना निषेधात्॥ २ "**हेरचङि**" इति। "अचङि" इति पर्युदासो न्याय्यः, इति शेखरकृत्। ण्यन्तस्य हिनोतिग्रहणेनाग्रहणाद् "अजीहयत्" इत्यत्र कुत्वाप्राप्ते "अचङि" इति प्रतिषेध **एव प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्** " इति परिभाषां ज्ञापयति ॥ ननु "हिनोतेरभ्यासात्परस्य कुत्वम्" इति खलु सूत्रार्थः। ततश्च ण्यन्तेऽपि "अजीहयत्" इत्यत्र हिनोतेरेवाभ्यासो नान्यस्य। चङ्परकधात्ववयवस्यैकाच एव द्वित्वविधानात्। एवं च कुत्वप्राप्तेरव्याघातात् कथं प्रतिषेधानर्थक्यमिति चेन्न, ण्वुलन्तप्रकृतिकाचक्षाणण्यन्तात्सनि "जिहायकयिषति" इत्यत्र कुत्ववारणाय हि "धातुनिष्ठाङ्गसंज्ञानिमित्तभूतप्रत्ययप्रयुक्तद्वित्वनिमित्तकाभ्यासात् परस्य कुत्वम्" इत्यर्थस्य प्रत्यासत्तिमूलकस्य अवश्यमभ्युपेयतया प्रकृते द्वित्वनिमित्तभूतस्य चङ्प्रत्ययस्य णिजन्तनिष्ठाङ्गसंज्ञानिमित्तत्वेऽपि हिधातुनिष्ठाङ्गसंज्ञानिमित्तत्वाभावेन कुत्वाप्राप्तेः प्रतिषेधानर्थक्यमित्याशयात्। इयं च कुत्वविषयैव। तदुक्तं भाष्ये—"हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात्" ज्ञापकं तु "चङोऽन्यत्र ण्यन्तेऽपि कुत्वभावस्य" इति ॥ ३ "**अश्नोतेः**" **इति**। "अशेः" इति वक्तव्येऽश्नातिव्यावृत्त्यर्थं श्नुनिर्देशः ॥ ४ **इहाप्याश्रीयत इति**। "सदेः परस्य लिटि" इति सूत्रस्थः "परिषस्वजे" इति भाष्यप्रयोगः, "देभतुः" इति "अत एक—" इति सूत्रस्थभाष्यप्रयोगश्चेह मानम् ॥
५ "**दम्भेश्च**" **इति**। "अत एक—" इति सूत्रे भाष्ये वार्तिकम् ॥

एत्त्वाभ्यासलोपौ वक्तव्यौ । देभतुः । ददम्भतुः ॥ इदं कित्त्वं पिदपिद्विषयकमिति सुधाकरादयः[1] । तन्मते तिप्सिप्मिप्सु-देभ । देभिथ । देभेति रूपान्तरं बोध्यम् ॥ अपिद्विषयकमिति न्यासकारादिमते तु-ददम्भ । ददम्भिथ । ददम्भेत्येव । दभ्यात् ॥ ५ ॥ **ऋधु वृद्धौ** ॥ ६ ॥ **तृप** प्रीणन इत्येके ॥ क्षुभ्नादित्वाण्णत्वं न । तृप्नोति ॥ ७ ॥ **छन्दसि**[2] ॥ आगणान्तादधिकारोऽयम् । **अह व्याप्तौ** । अह्नोति ॥ १ ॥ **दघ** घातने पालने च । दघ्नोति ॥ २ ॥ **चमु** भक्षणे । चम्नोति ॥ ३ ॥ **रि क्षि चिरि जिरि दाश दृ** हिंसायाम् ॥ रिणोति । क्षिणोति । अयं भाषायामपीत्येके । 'न तद्यशः शस्त्रभृतां क्षिणोति' ॥ ऋक्षीत्येक एवाजादिरित्यन्ये । ऋक्षिणोति । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति ॥ ९ ॥ **वृत्** ॥

इति स्वादिप्रकरणम् ।

## अथ तुदादिप्रकरणम् ।

**तुद** व्यथने[3] ॥ **इतः षट् स्वरितेतः** ॥ **तुदादिभ्यः शः । ३ । १ । ७७** ॥ तुदति[4] । तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत् । अतुत्त ॥ १ ॥ **णुद** प्रेरणे । नुदति । नुदते । नुनोद । नुनुदे । नोत्ता ॥ २ ॥ **दिश** अतिसर्जने । अतिसर्जनं दानम्[5] । देष्टा । दिक्षीष्ट । अदिक्षत् । अदिक्षत ॥ ३ ॥ **भ्रस्ज** पाके । ग्रहिज्येति संप्रसारणम् । सस्य श्चुत्वेन शः । शस्य जश्त्वेने जः । भृज्जति भृज्जते ॥ **भ्रस्जो रोपधयो रमन्यतरस्याम् । ६ । ४ । ४७** ॥ भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके ॥ मित्त्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः[6] । बभर्ज । बभर्जतुः । बभर्जिथ । बभर्ष्ठ बभर्जे । रमभावे । बभ्रज्ज । बभ्रज्जतुः[7] । बभ्रज्जिथ । स्कोरिति सलोपः । व्रश्चेति षः । बभ्रष्ठ । बभ्रज्जे । भ्रष्टा । भर्ष्टा । भ्रक्ष्यति । भर्क्ष्यति । क्ङिति रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन[8] ॥ भृज्ज्यात् । भृज्ज्यास्ताम् । भर्क्षीष्ट । भ्रक्षीष्ट । अभार्क्षीत् । अभ्राक्षीत् ।

---

१ **सुधाकरादय इति** । अत्रारुचिबीजं तु "श्रन्थिग्रन्थि-" इत्यत्र लिट्पदस्य कित्पदस्य च कर्तव्यतापत्त्या गौरवमिति । मम तु व्याकरणान्तरेऽपि "असंयोगात्" इति कित्प्रकरण एवैतदिति तयोरकर्तव्यता स्पष्टैव । २ "**छन्दसि**" **इति** । गणसूत्रमेतत् ॥ इति स्वादयः ॥ ३ "**तुद**" व्यथनं पीडा ॥ ४ **तुदतीति** । लघूपधगुणं बाधित्वा नित्यत्वाच्छे ततः "सार्वधातुकमपित्" इति ङित्त्वे "क्ङिति च" इति निषेधाद् गुणाभावः ॥ ५ **अतिसर्जनं दानमिति** । धातूनामनेकार्थत्वात् "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति सूत्रे "दिशिरुच्चारणक्रियः" इति व्याख्याप्यविरुद्धा ॥ ६ "रम्" इत्यस्यान्त्यादचः परत्वे "रोपधयोः" इति षष्ठीनिर्देशस्य वैयर्थ्यमाशङ्क्याह-**निवृत्तिरिति** ॥ "वरीभृज्यते" इत्यत्र रीको रेफस्य न निवृत्तिरभ्यासस्य नैरर्थक्यात् । समुदायस्य तु न भ्रस्जित्वं द्विष्प्रयोगपक्षे दुरुपपादत्वात् ॥ ७ **बभ्रज्जतुरिति** । संयोगात्परत्वेन कित्त्वाभावात्संप्रसारणाभावः ॥ ८ ननु आशीर्लिङि सम्प्रसारणं बाधित्वा परत्वाद् रमि सकृद्गतिन्यायेन सम्प्रसारणाभावे पुनःप्रसङ्गविज्ञानेन सम्प्रसारणेऽप्याद्गुणे "भर्ज्यात्" इति स्यादत आह-**पूर्वविप्रतिषेधेनेति** । सम्प्रसारणरमोः "भृज्जति" भर्ष्टा" इति क्रमेणावकाशौ ॥ कृताकृतप्रसङ्गित्वमात्रेण सम्प्रसारणस्य नित्यत्वात् पूर्वविप्रतिषेधो नाङ्गीकार्य इति केचित् । नच ऋकारान्तर्गतरेफमादाय रमपि नित्य इति वाच्यम्, सिद्धान्ते वर्णग्रहणे वर्णैकदेशाग्रहणात् । इति स्पष्टं भाष्ये ॥

अभर्ष्ट । अभ्रष्ट ॥ ४ ॥ **क्षिप** प्रेरणे । क्षिपति । क्षिपते । क्षेप्ता । अक्षैप्सीत् । अक्षिप्त ॥ ५ ॥ **कृष** विलेखने । कृषति । कृषते । क्रष्टा । कृष्यात् । कृक्षीष्ट । स्पृशमृशकृषेति सिज्वा । पक्षे क्सः । सिचि अम्वा । अक्राक्षीत् । आकार्क्षीत् । अकृक्षत् । तङि लिङ्सिचाविति कित्त्वादम्न । अकृष्ट । अकृक्षाताम् । अकृक्षत । अकृक्षत । अकृक्षाताम् । अकृक्षन्त ॥ ६ **ऋषी** गतौ । परस्मैपदी । ऋषति । आनर्ष ॥ ७ ॥ **जुषी** प्रतिसेवनयोः ॥ •**आत्मनेपदिनश्चत्वारः** । जुषते ॥ १ ॥ **ओविजी** भयचलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते । **विज इट्** । १ । २ । २ ॥ विजेः पर इडादिः प्रत्ययो ङिद्वत् । उद्विजिता । उद्विजिष्यते ॥ २ ॥ **ओलजी ओलस्जी** व्रीडायाम् । लजते । लेजे । लज्जते । ललज्जे ॥४॥ **अथ परस्मैपदिनः** ॥ **ओव्रश्चू** छेदने । ग्रहिज्या । वृश्चति । वव्रश्च । वव्रश्चतुः । वव्रश्चिथ । वव्रष्ठ । लिट्यभ्यासस्येति सम्प्रसारणम् । रेफस्य ऋकारः । 'उरत्' । तस्य अचः परस्मिन्निति स्थानिवद्भावाद् 'न संप्रसारणे' इति वस्योत्वं न । व्रश्चिता । व्रष्टा । व्रश्चिष्यति । व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत् । अव्राक्षीत् ॥ १ ॥ **व्यच** व्याजीकरणे । विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत् । अव्यचीत् । "**व्यचेः कुटादित्वमनसीति** तु नेह प्रवर्तते । अनसीति पर्युदासेन कृन्मात्रविषयत्वात् ॥ २ ॥ **उछि** उञ्छे । उञ्छति ॥ ३ ॥ **उच्छी** विवासे । उच्छति ॥ ४ ॥ **ऋच्छ** गतीन्द्रियप्रलयमूर्तिभावेषु । ऋच्छत्यॄतामिति गुणः । द्विहल्ग्रहणस्यानेकहल्उपलक्षणत्वान्नुट् । आनर्छ । आनर्छतुः । ऋच्छिता ॥ ५ ॥ **मिच्छ** उत्क्लेशे । उत्क्लेशः पीडा । मिमिच्छ । अमिच्छीत् ॥ ६ ॥ **जर्ज चर्च झर्झ** परिभाषणभर्त्सनयोः ॥ ९ ॥ **त्वच** संवरणे । तत्वाच ॥ १० ॥ **ऋच** स्तुतौ । आनर्च ॥ ११ ॥ **उब्ज** आर्जवे ॥ १२ ॥ **उज्झ** उत्सर्गे ॥ १३ ॥ **लुभ** विमोहने । विमोहनमाकुलीकरणम् । लुभति । लोभिता । लोब्धा । लोभिष्यति ॥ १४ ॥

---

१-१ **अकृक्षतेति** । क्सादेशे तङेकवचने, सिच्पक्षे बहुवचने च "अनतः" इत्यदादेशे एतदेव रूपम् ॥ २ **अकृक्षन्तेति** । क्सादेशे "अनतः" इत्युक्तेरदादेशो न ॥ ३ **वव्रष्ठेति** । इडभावे "स्कोः-" इति सलोपे चकारस्य "व्रश्च-" इति षत्वे "ष्टुना-" इति ष्टुत्वम् । न च सकाराभावात् कथं "स्कोः-" इति लोप इति वाच्यम् । धातुपाठे सकारस्य पाठात् । तदाहुः-"**नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्चे षाट्टवर्गस्तवर्गजः** ॥" इति । अस्यार्थः-धातुषु झलि परतो यौ अनुस्वारपञ्चमान्त्यतमौ दृश्येते तौ नकारजौ ज्ञेयौ । नकाराज्जातौ नकारजौ नकारस्थानिकौ । यथा "बृंहु स्रंसु अञ्चु मन्थ" इत्यादि । "नश्चापदान्तस्य" इत्यनुस्वारः । "अनुस्वारस्य ययि-" इति परसवर्ण इति तत्त्वम् ॥ तथा चे चकारे परे शकारजो ज्ञेयः । यथा प्रकृतधातौ । "स्तोः श्चुना-" इत्यनेनेति तत्त्वम् ॥ एवञ्च श्चुत्वस्यासिद्धत्वात् सकारलोपः सुलभ एव प्रकृते इति भावः ॥ तथा षात् रेफषकारात् परो दृश्यमानष्टवर्गस्तवर्गजो ज्ञेयः । यथा "ऊर्णु-ष्टा" प्रभृतिधातुषु । "रषाभ्यां नो णः" "ष्टुना ष्टुः" इति सूत्राभ्यामिति तत्त्वम् ॥ ४ **कृन्मात्रेति** । अवधारणे मात्रशब्दः । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः ॥ ५ "**उच्छी**" **विवासः** समाप्तिः ॥ ६ नन्वस्य तुकि तस्य श्चुत्वेन चकारे लिटि द्वित्वेऽभ्यासकार्ये "ऋच्छत्यॄताम्" इति गुणे त्रिहल्त्वान्नुट् न स्यादत आह-**अनेकहलिति** ॥

**रिफ** कत्थनयुद्धनिन्दाहिंसादानेषु । रिफति । रिरेफ ॥ **रिहे**त्येके । '[1] शिशुं न विप्रा मतिभी रिहन्ति ' ॥ १५ ॥ **तृप तृम्फ** तृप्तौ । आद्यः प्रथमान्तः । द्वितीयो द्वितीयान्तः । द्वावपि द्वितीयान्तावित्यन्ये । तृपति । ततर्प । तर्पिता ॥ स्पृशमृशेति सिज्विकल्पः पौषादिकस्यैव । [2]अङ्पवादत्वात् । तेनात्र नित्यं सिच् । अतर्पीत् । तृम्फति । शस्य ङित्वादनिदितामिति न-लोपे ॥ **शे तृम्फादीनां नुम्वाच्यः** * ॥ [3]आदिशब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । तृम्फति । ततृम्फ । तृफ्यात् ॥ १७ ॥ **तुप तुम्प तुफ तुम्फ** हिंसायाम् । तुपति । तुम्पति । तुफति । तुम्फति ॥ २१ **दृप दृम्फ** उत्क्लेशे । प्रथमः प्रथमान्तः । द्वितीयो द्वितीन्तः । प्रथमो द्वितीयान्त इत्येके । दृपति । दृम्फति ॥ २३ ॥ **ऋफ ऋम्फ** हिंसायाम् । ऋफति । आनर्फ । ऋम्फति । ऋम्फांचकार ॥ २६ ॥ **गुफ गुम्फ** ग्रन्थे । गुफति । जुगोफ । गुम्फति । जुगुम्फ ॥ २७ ॥ **उभ उम्भ** पूरणे । उभति । उवोभ । उम्भति । उम्भांचकार ॥ २९ ॥ **शुभ शुम्भ** शोभार्थे । शुभति । शुम्भति ॥ ३१ ॥ **दृभी** ग्रन्थे । दृभति ॥ ३२ ॥ **चृती** हिंसाग्रन्थनयोः । चर्तिता । सेसिचीति वेट् ॥ चर्तिष्यति । चर्त्स्यति । अचर्तीत् ॥ ३३ ॥ **विध** विधाने । विधति । वेधिता ॥ ३४ ॥ **जुड** गतौ । जुडति ॥ तवर्गपञ्चमान्त इत्येके । ' मरुतो जुनन्ति ' ॥ ३५ ॥ **मृड** सुखने । मृडति । मर्डिता ॥ ३६ ॥ **पृड** च । पृडति ॥ ३७ ॥ **पृण** प्रीणने । पृणति । पपर्ण ॥ ॥ ३८ ॥ **वृण** च । वृणति ॥ ३९ ॥ **मृण** हिंसायाम् ॥ ४० ॥ **तुण** कौटिल्ये । तु-तोण ॥ ४१ ॥ **पुण** कर्मणि शुभे । पुणति ॥ ४२ ॥ **मुण** प्रतिज्ञाने ॥ ४३ ॥ **कुण** शब्दोपकरणयोः ॥ ४४ ॥ **शुभ** गतौ ॥ ४५ ॥ **द्रुण** हिंसागतिकौटिल्येपु ॥ ४६ ॥ **घुण घूर्ण** भ्रमणे ॥ ४८ ॥ **षुर** ऐश्वर्यदीप्त्योः । सुरति । सुषोर । आशिषि--सूर्यात् ॥४९॥ **कुर** शब्दे । कुरति । कूर्यात् । अत्र न भकुर्छुरामिति निषेधो न । [4]करोतेरेव तत्र ग्रहणा-

१ रिहधातोः सद्भावे वेदवाक्यं प्रमाणयति-**शिशुं न विप्रा** इति । अत्र "न" इत्युपमार्थीयः । "**नेति प्रतिषेधार्थीयो भाषायाम् ।** " भाषायां=लोके । यथा घटो नास्ति पटो नास्ति इत्यत्र नशब्दोऽस्तित्वं प्रतिषेधति ॥ "**उभयमन्वध्यायम्**" । अन्वध्यायम्=छन्दसि वेदे, उभयम्=प्रतिषेधार्थीय उपमार्थीयश्च इत्यर्थः । " प्रतिषेधार्थीयः पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति । " यो हि प्रतिषेधार्थीयो भवति, तस्य पुरस्तात=प्रथमम्, उपाचारः=प्रयोगो भवति । कस्मात् यत्प्रतिषेधति तस्मादित्यर्थः । यथा-"नेन्द्रं देवममंसत" इति । निषेधार्थीयः प्रथमं पाठात् । "**उपमार्थीय उपरिष्टादुपाचारस्तस्य येनोपमिमीते** । " येन=अर्थेन, उपमेयमर्थमुपमिमीते स उपमार्थीयः । तस्य उपरिष्टात्=उपरि, उपाचारः=पाठ इत्यर्थः यथा प्रकृते । इति यास्कोक्तेः ॥ विप्राः=मेधाविनो ब्राह्मणा ( इमं सोमम् ) इति शेषः ॥ शिशुं न=शिशुमिव बालमिव, मतिभिः=मतिपूर्वाभिर्वाग्भिः, रिहन्ति=स्तुवन्ति । यथा बालं कश्चिल्लालयति तथा सोमं स्तोत्रशस्त्ररूपाभिर्वाग्भिः स्तुवन्तीति वेदवाक्यार्थः ॥ २ **अङ्पवादत्वादिति** । "उत्सर्गसमानदेशा अपवादाः" इति न्यायादिति भावः ॥ ३ **आदिशब्दः प्रकारे इति** । "आदिशब्दं तु मेधावी चतुर्ष्वर्थेषु भाषते । 'सामीप्ये च व्यवस्थायां प्रकारेऽवयवे तथा" इत्यभियुक्तोक्तेरिति भावः । "**प्रकारो** भेदसादृश्ये" इत्यमरोक्तेरत्र प्रकारत्वेन सादृश्यं गृह्यते तदाह **तेनेति** ॥ ४ **करोतेरेवेति** । ननु करोतेः "कुर" इति स्वरूपस्य लाक्षणिकत्वात् प्रतिपदोक्तत्वे "**कुर शब्दे**" इत्यस्यैव तत्र ग्रहणमुचितमिति चेन्न, "विदाङ्कुर्वन्त्वित्यन्यतरस्याम्" इति निर्देशात् करोतेरेव तत्र ग्रहणमित्याशयात् ॥

दित्याहुः ॥ ५० ॥ **खुर** छेदने ॥ ५१ ॥ **मुर** संवेष्टने ॥ ५२ ॥ **क्षुर** विलेखने ॥ ५३ ॥ **घुर** भीमार्थशब्दयोः ॥ ५४ ॥ **पुर** अग्रगमने ॥ ५५ ॥ **वृहू** उद्यमने । दन्तोष्ठ्यादिः । पवर्गीयादिरित्यन्ये ॥ ५६ ॥ **तृहू स्तृहू तृंहू** हिंसार्थाः । तृहति । ततर्ह । स्तृहति । तस्तर्ह । स्तर्हिता । स्तर्ढा । अतृंहीत् । अताङ्क्षीत् । आतार्ण्ढाम् ॥ ५९ ॥ **इष** इच्छायाम् । इषुगमीति छः । इच्छति । एषिता । एष्टा । एषिष्यति । इष्यात् । ऐषीत् ॥ ६० ॥ **मिष** स्पर्धायाम् । मिषति । मेषिता ॥ ६१ ॥ **किल** श्वैत्यक्रीडनयोः ॥ ६२ ॥ **तिल** स्नेहने ॥ ॥ ६३ ॥ **चिल** वसने ॥ ६४ ॥ **चल** विलसने ॥ ६५ ॥ **इल** स्वप्नक्षेपणयोः ॥ ६६ ॥ **विल** संवरणे । दन्तोष्ठ्यादिः ॥ ६७ ॥ **बिल** भेदने । ओष्ठ्यादिः ॥ ६८ ॥ **णिल** गहने ॥ ६९ ॥ **हिल** भावकरणे ॥ ७० ॥ **शिल पिल** उञ्छे ॥ ७२ ॥ **मिल** श्लेषणे ॥ ७३ ॥ **लिख** अक्षरविन्यासे । लिलेख ॥ ७४ ॥ **कुट** कौटिल्ये । 'गाङ्कुटादिभ्य' इति ङित्त्वम् । चुकुटिथ । चुकोट । चुकुट । कुटिता ॥ ७५ ॥ **पुट** संश्लेषणे ॥७६॥ **कुच** संकोचने ॥ ७७ ॥ **गुज** शब्दे ॥ ७८ ॥ **गुड** रक्षायाम् ॥ ७९ ॥ **डिप** क्षेपे ॥ ॥ ८० ॥ **छुर** छेदने ॥ न भकुर्छुरामिति न दीर्घः–छुर्यात् ॥ ८१ ॥ **स्फुट** विकसने । स्फुटति । पुस्फोट ॥ ८२ ॥ **मुट** आक्षेपमर्दनयोः ॥ ८३ ॥ **त्रुट** छेदने । वा भ्राशेति श्यन्वा । त्रुट्यति । त्रुटति । तुत्रोट । त्रुटिता ॥ ८४ ॥ **तुट** कलहकर्मणि । तुटति । तुतोट । तुटिता ॥ ८५ ॥ **चुट छुट** छेदने ॥ ८७ ॥ **जुड** बन्धने ॥ ८८ ॥ **कड**[1] मदे ॥ ॥ ८९ ॥ **लुट** संश्लेषणे ॥ ९० ॥ **कृड** घनत्वे ॥ घनत्वं सान्द्रता । चकर्ड । कृडिता ॥ ॥ ९१ ॥ **कुड** बाल्ये ॥ ९२ ॥ **पुड** उत्सर्गे ॥ ९३ ॥ **घुट** प्रतिघाते ॥ ९४ ॥ **तुड** तोडने । तोडनं भेदः ॥ ९५ ॥ **थुड स्थुड** संवरणे । थुडति । तुथोड । तुस्थोड ॥ ९७ ॥ **खुड छुड** इत्येके ॥ ९९ ॥ **स्फुर स्फुल** संचलने ॥ १०१ ॥ **स्फुर** स्फुरणे । **स्फुल** संचलन इत्येके ॥ **स्फुरतिस्फुलत्योर्निर्निविभ्यः । ८ । ३ । ७६ ॥** षत्वं वा स्यात् ॥ निःष्फुरति । निःस्फुरति[2] ॥ **स्फर** इत्यकारोपधं केचित्पठन्ति । पस्फार ॥ १०२ ॥ **स्फुड चुड ब्रुड** संवरणे ॥ १०५ ॥ **क्रुड भृड** निमज्जन इत्येके ॥ १०७ ॥ **गुरी** उद्यमने । अनुदात्तेत् । गुरते । जुगुरे । गुरिता ॥ १०८ ॥ **णू** स्तवने । दीर्घान्तः । 'परिणूतगुणोदयः' ॥ १०९ ॥ **इतश्चत्वारः परस्मैपदिनः ॥** नुवति । अनुवीत् ॥ १ ॥ **धू** विधूनने । धुवति ॥ २ ॥ **गु** पुरीषो-

---

१ **कड मदे इति** । अस्य कुटादित्वसामर्थ्याद् "अतो हलादेः–" इति प्राप्ताया अनिग्लक्षणवृद्धेरपि निषेध इति केचित् ॥ अन्ये तु अशोकवनिकान्यायेनात्र पाठ इति ब्रुवते । यथा रावणो लङ्कायां सीतां नीत्वा राक्षसीभ्य आज्ञप्तवान्–"अशोकवनिकायामियं स्थाप्या" इति । ताश्च तत्र बह्व्यः सन्ति, । तत्रैकस्य स्थीयते चेत् तावतैव तदाज्ञायाः परिपालितत्वात् सर्वत्र स्थापयितुमशक्यत्वाच्चान्यत्र स्थापनं स्वयमेव निवर्तते । इत्यशोकवनिकान्यायार्थः । प्रकृते स्वयमूहनीयम् ॥ २ **निःस्फुरतीति** । निष्फुरति । निःष्फुरति । निःष्फुरति । निःस्फुरति । निस्स्फुरति । निस्फुरति । एवं षड् रूपाणि भवन्ति । "खर्परे शरि वा विसर्गलोपो वक्तव्यः" 'वा शरि ।' इति पूर्वोक्तादिशाऽवसेयानि ॥

त्सर्गे । जुगुविथ । जुगुथ । गुता । गुप्यति । अगुषीत् । 'ह्रस्वादङ्गात्' । अगुताम् । अगुषुः ॥ ॥ ३ ॥ ध्रु गतिस्थैर्ययोः ॥ ध्रुव इति पाठान्तरम् । आद्यस्य ध्रुवतीत्यादि गुवतिवत् । द्वितीयस्तु सेट् । दुध्रुविथ । ध्रुविता । ध्रुविष्यति । ध्रूयाम् । अध्रुवीत् । अध्रुविष्टाम् ॥ ४ ॥ कूङ् शब्दे । दीर्घान्त इति कैयटादयः । कुविता । अकुविष्ट । ह्रस्वान्त इति न्यासकारः । कुता । अकुत ॥ १ ॥ वृत् ॥ कुटादयो वृताः ॥ पृङ् व्यायामे । प्रायेण व्याङ्पूर्वः । रिङ् । इयङ् । व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । व्यापृत । व्यापृषाताम् ॥ १ ॥ मृङ् प्राणत्यागे ॥ म्रियतेर्लुङ्लिङोश्च । १ । ३ । ६१ ॥ लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र[1] । ङित्त्वं स्वरार्थम्[2] । म्रियते । ममार । ममर्थ । मम्रिव । मर्तासि । मरिष्यति । मृषीष्ट । अमृत ॥ २ ॥ अथ परस्मैपदिनः सप्त ॥ रि पि गतौ । अन्तरङ्गत्वादियङ्[3] । रियति । पियति । रेता । पेता ॥ २ ॥ धि धारणे ॥ ३ ॥ क्षि निवासगत्योः ॥४ ॥ षू प्रेरणे । सुवति । सविता ॥ ५ ॥ कृ विक्षेपे । किरति । किरतः । चकार । चकरतुः । करिता । करीता । कीर्यात् । अकारीत् । किरतौ लवने । ६ । १ । १०४ ॥ उपात्किरतेः सुडागमः स्याच्छेदेऽर्थे । उपस्किरति । अडभ्यासव्यवायेऽपि [ सुट् कात्पूर्वं ] इति वक्तव्यम्[4]* ॥ उपास्किरत् । उपचस्कार ॥ हिंसायां प्रतेश्च । ६ । १ । १४१ ॥ उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायाम् ॥ उपस्किरति । प्रतिस्किरति ॥ ६ ॥ गॄ निगरणे ॥ अचि विभाषा । ८ । २ । २१ ॥ गिरते रेफस्य लत्वं वा स्यादजादौ ॥ गिरति । गिलति । जगार । जगाल । जगरिथ । जगलिथ । गरिता । गरीता । गलिता । गलीता ॥ ७ ॥ दृङ् आदरे । आद्रियते । आद्रियेते । आदद्रे । आदद्रिषे । आदर्ता । आदरिष्यते । आदृषीष्ट । आदृत । आदृषाताम् ॥ १ ॥ धृङ् अवस्थाने । ध्रियते ॥ २ ॥ अथ परस्मैपदिनः षोडश ॥ प्रच्छ ज्ञीप्सायाम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छिथ । पप्रष्ठ । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् ॥ १ ॥ वृत् ॥ किरादयो वृत्ताः ॥ सृज विसर्गे । 'विभाषा सृजिदृशोः' । ससर्जिथ । सस्रष्ठ । स्रष्टा । स्रक्ष्यति । सृजिदृशोर्झल्यमकितीत्यमागमः । सृजेत् । सृज्यात् । अस्राक्षीत् ॥ २ ॥

---

१ मृङ्धातोर्ङित्त्वादेवात्मनेपदे सिद्ध "म्रियतेः" इति सूत्रं नियमार्थम् । तदाह-नान्यत्रेति । "तङ्" इत्यानस्याप्युपलक्षणम् ॥ २ ननु "म्रियतेः" इति सूत्रस्य विध्यर्थत्वमेवास्तु धातोर्ङित्त्वं माऽस्त्वित्याशङ्कायामाह--ङित्त्वं स्वरार्थमिति । "मा हि मृत" इत्यत्र तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः" इत्यनेन ङितः परस्य लादेशसार्वधातुकस्यानुदात्तत्वे कृते धातुरुदात्तः । ङित्त्वाभावे तु प्रत्ययस्योदात्तत्वे धातुरनुदात्तः स्यादिति भावः ॥ न च सिज्लोपस्य स्वरे कर्तव्येऽसिद्धत्वापत्तिरिति वाच्यम्, अस्य ङित्वसामर्थ्येनासिद्धत्वस्य बाधात् ॥ ३ अन्तरङ्गत्वादिति । 'लघूपधगुणापेक्षया' इत्यादिः ॥ तदुक्तं भाष्ये--"शचङन्तस्यान्तरङ्गलक्षणत्वात्" इति । "नाजानन्तर्ये" इति तु न, उत्तरकालप्रवृत्तिकेऽन्तरङ्गे यत्राचोऽनान्तर्यम्, तत्रैवैतत्प्रवृत्तौ प्रकृते समकालप्रवृत्तिकत्वात् । नव्यमते नाजानन्तर्यपरिभाषाया असत्त्वाच्च ॥ ४ इदं वार्तिकं सूत्रेषु कैश्चित्प्रक्षिप्तम् ॥

**टुमस्जो** शुद्धौ । मज्जति । ममज्ज । मस्जिनशोर्झलीति नुम्[1] ॥ **मस्जेरन्त्यात्पूर्वो नुम्वाच्यः** *॥ संयोगादिलोपः । ममङ्क्थ । ममज्जिथ । मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षीत् । अमाङ्क्ताम् । अमाङ्क्षुः ॥ ३ ॥ **रुजो** भङ्गे । रोक्ता । रोक्ष्यति । अरौक्षीत् । अरौक्ताम् ॥ ४ ॥ **भुजो** कौटिल्ये । रुजिवत् ॥ ५ ॥ **छुप** स्पर्शे । छोप्ता । अच्छौप्सीत् ॥ ६ ॥ **रुश रिश** हिंसायाम् । तालव्यान्तौ । रोष्टा । रोक्ष्यति । रेष्टा । रेक्ष्यति ॥ ८ ॥ **लिश** गतौ । अलिक्षत । ॥ ९ ॥ **स्पृश** संस्पर्शने । स्प्रष्टा । स्पर्ष्टा । स्प्रक्ष्यति । स्पर्क्ष्यति । अस्प्राक्षीत् । अस्पार्क्षीत् । अस्पृक्षत् ॥ १० ॥ **विच्छ** गतौ । गुपूधूपेत्यायः । आर्धधातुके वा । विच्छायति । विच्छायांचकार । विविच्छ ॥ ११ ॥ **विश** प्रवेशने । विशति । वेष्टा ॥ १२ ॥ **मृश** आमर्शने । आमर्शनं स्पर्शः । अम्राक्षीत् । अमार्क्षीत् । अमृक्षत् ॥ १३ ॥ **णुद** प्रेरणे । कर्त्रभिप्रायेऽपि फले परस्मैपदार्थः पुनः पाठः ॥ १४ ॥ **षद्लृ** विशरणगत्यवसादनेषु । सीदतीत्यादि भौवादिकवत् । इह पाठो नुम्विकल्पार्थः । सीदती । सीदन्ती । ज्वलादौ पाठस्तु णार्थः । सादः । स्वरार्थश्च । शबनुदात्तः । शस्तूदात्तः ॥१५॥ **शद्लृ** शातने॥ स्वरार्थ एव पुनः पाठः । शता तु नास्ति । 'शदेः शितः' इत्यात्मनेपदोक्तेः ॥ १६ ॥ **अथ षट् स्वरितेतः ॥ मिल** सङ्गमे । 'मिल संश्लेषणे' इति पठितस्य पुनः पाठः कर्त्रभिप्रायं तदर्थः । मिलति । मिलते । मिमेल । मिमिले ॥ १ ॥ **मुच्लृ** मोक्षणे॥ **शे मुचादीनाम् । ७ । १ । ५९ ॥** नुम् स्यात् ॥ मुञ्चति । मुञ्चते । मोक्ता । मुच्यात् । मुक्षीष्ट । अमुचत् । अमुक्त । अमुक्षाताम् ॥ २ ॥ **लुप्लृ** छेदने । लुम्पति । लुम्पते । अलुपत् । अलुप्त ॥ ३ ॥ **विद्लृ** लाभे । विन्दति । विन्दते । विवेद । विविदे । व्याघ्रभूत्यादिमते **सेट्कोऽयम्** । वेदिता । भाष्यादिमतेऽनिट्कः । वेत्ता । परिवेत्ता । परिवेर्जने । ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः । तृन्तृचौ ॥ ४ ॥ **लिप** उपदेहे । उपदेहो वृद्धिः । लिम्पति । लिम्पते । लेप्ता । लिपिसिचीत्यङ् । तङि तु वा । अलिपत् । अलिपत । अलिप्त ॥ ५ ॥ **षिच** क्षरणे । सिञ्चति । सिञ्चते । असिचत् । असिचत । असिक्त । अभिषिञ्चति । अभ्यषिञ्चत् । अभिषिषेच ॥ ६ ॥ अथ **त्रयः परस्मैपदिनः ॥ कृती** छेदने । कृन्तति । चकर्त । कर्तिता । कर्तिष्यति । कर्त्स्यति । अकर्तीत् ॥१॥ **खिद** परिघाते । खिन्दति । चिखेद । खेत्ता । अयं दैन्ये दिवादौ रुधादौ च ॥ २ ॥ **पिश** अवयवे । पिंशति । पेशिता । अयं दीपनायामपि । त्वष्टा रूपाणि पिंशतु ॥ ३ ॥ **वृत्** ॥ मुचादयो वृत्ताः । तुदादयश्च ॥

इति तुदादिप्रकरणम् ।

---

१ ननु "ममस्ज् थ" इति दशायां "मस्जिनशोर्झलि" इति नुमि "मिदचोऽन्त्यात् परः" इत्यन्त्यादचः परे सति "ममन्स्ज्थ" इति स्थिते संयोगादित्वाभावेन "स्कोः–" इति सकारलोपो न स्यादत आह- **मस्जेरन्त्यादिति** । एवं च संयोगादित्वात्सकारलोपः सुलभस्तदाह- **संयोगादिलोप** इति ॥ इति तुदादयः ॥

## अथ रुधादिप्रकरणम् ।

**रुधिर्** आवरणे । **नव स्वरितेत इरितश्च** ॥ **रुधादिभ्यः श्नम्** । ३ । १ । ७८ ॥ शपोऽपवादः ॥ मित्त्वादन्त्यादचः परः । नित्यत्वाद्गुणं बाधते । रुणद्धि । श्नसोरल्लोपः । नत्वस्यासिद्धत्वादनुस्वारः परसवर्णः । तस्यासिद्धत्वाण्णत्वं न । न पदान्तेति सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवत् । रुन्धः । रुन्धन्ति । रुन्धे । रोद्धा । रोत्स्यति । रोत्स्यते । रुणद्धु । रुन्धात् । रुन्धि । रुणधानि । रुणधै । अरुणत् । अरुन्धाम् । अरुणत् । अरुणः । अरुणधम् । अरुधत् । अरौत्सीत् । अरुद्ध ॥ १ ॥ **भिदिर्** विदारणे । भिनत्ति । भिन्ते । भेत्ता । भेत्स्यति । भेत्स्यते । अभिनत् । अभिन्ताम् । अभिनदम् । अभिन्त । अभिदत् । अभैत्सीत् । अभित्त ॥ २ ॥ **छिदिर्** द्वैधीकरणे । अच्छिदत् । अच्छैत्सीत् । अच्छित्त ॥३॥ **रिचिर्** विरेचने ॥ रिणक्ति । रिङ्क्ते । रिरेच । रिरिचे । रेक्ता । अरिणक् । अरिचत् । अरैक्षीत् । अरिक्त ॥ ४ ॥ **विचिर्** पृथग्भावे । विनक्ति । विङ्क्ते ॥ ५ ॥ **क्षुदिर्** संपेषणे । क्षुणत्ति । क्षुन्ते । क्षोत्ता । अक्षुदत् । अक्षौत्सीत् । अक्षुत्त ॥ ६ ॥ **युजिर्** योगे । योक्ता ॥ ७ ॥ **उच्छृदिर्** दीप्तिदेवनयोः । छृणत्ति । छृन्ते । चच्छर्द । सेसिचीति वेट्—चच्छृदिषे । चच्छृत्से । छर्दिता । छर्दिष्यति । छर्त्स्यति । अच्छृदत् । अच्छर्दीत् । अच्छर्दिष्ट ॥ ८ ॥ **उतृदिर्** हिंसानादरयोः॥ तृणत्तीत्यादि छृणत्तिवत् ॥ ९ ॥ **कृती** वेष्टने । **परस्मैपदी** । कृणत्ति । आर्धधातुके तौदादिकवत् ॥ १ ॥ ञि **इन्धी** दीप्तौ ॥ अथ **आत्मनेपदिनः** ॥ **श्नान्नलोपः** । ६ । ४।२३॥ श्नमः परस्य नस्य लोपः स्यात् ॥ श्नसोरल्लोपः ॥ इन्धे । इन्त्से । इन्धिता । इनधै । ऐन्ध । ऐन्धाः ॥ १ ॥ **खिद** दैन्ये । खिन्ते । खेत्ता ॥ २ ॥ **विद** विचारणे । विन्ते । वेत्ता ॥ ३ ॥ **अथ परस्मैपदिनः** ॥ **शिष्लृ** विशेषणे । शिनष्टि । शिंष्टः । शिंषन्ति । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । जश्त्वम् । ष्टुत्वम् । झरो झरीति वा डलोपः । अनुस्वारपरसवर्णौ । शिण्ढि । शिण्ड्ढि । शिनषाणि । अशिनट् । लृदित्त्वादङ् । अशिषत् ॥ १ ॥ **पिष्लृ** संचूर्णने । शिषिवत् । पिनष्टि ॥२॥ **भञ्जो** आमर्दने । भनक्ति । बभञ्जिथ । बभङ्क्थ । भङ्क्ता ॥ ३ ॥ **भुज** पालनाभ्यवहारयोः । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् ॥ ४ ॥ तृह

---

१ आवरणं प्रवृत्तिविघातकमाच्छादनम् ॥ २ **रुधादिभ्य** इति । अन्तर्वर्तिविभक्त्या पदत्वेऽपि सौत्रत्वाज्जश्त्वाभावः ॥ अस्य मित्त्वेऽपि प्रत्ययाधिकारात्प्रत्ययत्वमपि, अत एव शस्येत्त्वम् ॥ एवं च "रुधादिभ्यो धातुभ्योऽन्त्यादचः परः श्नम्प्रत्ययो भवति" इति वाक्यार्थः ॥ ३ "रिचिर्" इति । विरेचनं मलादेर्निःसारणम् । अधोदेशसंयोगानुकूलो व्यापार इति यावत् ॥ ४ "शिष्लृ" इति । विद्यमानं सद् व्यावर्तकं विशेषणम् ॥ ५ काशिकासम्मताष्टाध्यायीपाठमभिप्रेत्याह–"शिण्ड्ढि" इति । "दीर्घादाचार्याणाम्" "अनुस्वारस्य ययि–" "वा पदान्तस्य" "तोर्लि" "उदः स्था–" "झयो हो–" "शश्छोऽटि" "झलां जश् झशि" "अभ्यासे चर्च" "खरि च" "वावसाने" "अणोऽप्रगृह्यस्य–" "हलो यमां यमि लोपः" "झरो झरि सवर्णे" "उदात्तादनुदात्तस्य–" इति भाष्यसम्मताष्टाध्यायीपाठपक्षे तु परसवर्णदृष्ट्या "झरो झरि" इत्यस्य "झलां जश् झशि" इत्यस्य चासिद्धत्वेन ययपरत्वाभावात् परसवर्णाप्राप्तेः "शिं [ ड् ] ढि" इति सानुस्वार एव पाठः । इति बोध्यम् ॥

**हिसि** हिंसायाम् ॥ **तृणह इम् । ७ । ३ । ९२ ॥** तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति ॥ तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । हिनस्ति । जिहिंस । हिंसता ॥ ६ ॥ **उन्दी** क्लेदने । उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम् । औन्दन् । औनः । औनत् । औनदम् ॥ ७ ॥ **अञ्जू** व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ आनङ्क्थ । अङ्क्ता । अञ्जिता । अङ्ग्धि । अनजानि । आनक् ॥ **अञ्जेः सिचि । ७ । २ । ७१ ॥** अञ्जेः सिचो नित्यमिट् स्यात् ॥ आञ्जीत् ॥ ८ ॥ **तञ्चू** सङ्कोचने । तनक्ति । तङ्क्ता । तञ्चिता ॥ ९ ॥ **ओविजी** भयचलनयोः । विनक्ति । विङ्क्तः । विज इडिति ङित्त्वम् । विविजिथ । विजिता । अविनक् । अविजीत् ॥ १० ॥ **वृजी** वर्जने । वृणक्ति । वर्जिता ॥ ११ ॥ **पृची** संपर्के । पृणक्ति । पपर्च ॥ १२ ॥

इति रुधादिप्रकरणम् ।

## अथ तनादिप्रकरणम् ।

अथ **सप्त स्वरितेतः ॥ तनु** विस्तारे ॥ 'तनादिकृञ्भ्य उः' । तनोति । तन्वः । तनुव । तनुते । ततान । तेने । तनु । अतनीत् । अतानीत् ॥ **तनादिभ्यस्तथासोः । २ । ४ । ७९ ॥** तनादेः सिचो वा लुक् स्यात्तथासोः परतः ॥ थासा साहचर्यादेकवचनं तशब्दो गृह्यते । तेनेह न—यूयमतनिष्ट ॥ अनुदात्तोपदेशेत्यनुनासिकलोपः । तङि । अतत । अतनिष्ट । अतथाः । अतनिष्ठाः ॥ १ ॥ **षणु** दाने । सनोति । सनुते । 'ये विभाषा' । सायात् । सन्यात् । जनसनेत्यात्त्वम् । असात । असनिष्ट । असाथाः । असनिष्ठाः ॥ २ ॥ **क्षणु** हिंसायाम् । क्षणोति । क्षणुते । ह्म्यन्तेति न वृद्धिः । अक्षणीत् । अक्षत । अक्षणिष्ट । अक्षथाः । अक्षणिष्ठाः ॥ ३ ॥ **क्षिणु** च । उप्रत्यनिमित्तो लघूपधगुणः 'संज्ञापूर्वको विधिरनित्यः' इति न भवतीत्यात्रेयादयः । भवत्येवेत्यन्ये । क्षिणोति । क्षेणोति । क्षेणितासि । क्षेणितासे । अक्षेणीत् । अक्षित । अक्षेणिष्ट ॥ ४ ॥ **ऋणु** गतौ । ऋणोति । अर्णोति । अर्णुतः । अर्ण्वन्ति । आनर्ण । आनृणे । अर्णितासि । आर्णीत् । आर्त । आर्णिष्ट । आर्थाः । आर्णिष्ठाः ॥ ५ ॥ **तृणु** अदने । तृणोति । तर्णोति । तृणुते । तर्णुते ॥ ६ ॥ **घृणु** दीप्तौ । जघर्ण । जघृणे ॥ ७ ॥ **अथ द्वावनुदात्तेतौ ॥ वनु** याचने । वनुते । ववने । चान्द्रमते परस्मैपदी । वनोति । ववान ॥ १ ॥ **मनु** अवबोधने । मनुते । मेने ॥ २ ॥ **डुकृञ्** करणे ।

---

१ "**तृणह**–" **इति** । श्नमि कृते इम् यथा स्यादिति श्नमा निर्देशः, अन्यथा येन नाप्राप्तिन्यायेन इम् श्नमो बाधकः स्यात् । तदाह-श्नमि **कृते इति** । २ "**अञ्जू**" **इति** । **व्यक्ति**-विवेचनम् । **म्रक्षणं** स्निग्धता ॥ ३ **अञ्जेः सिचि** । ऊदिल्लक्षणविकल्पापवादः । **इति** रुधादयः । ४ **आत्रेयादय इति** । अत्रारुचिबीजं तु तदनित्यत्वे भाष्यानुक्तत्वम् । "क्षिणु" इत्यादिप्रयोगास्तु "बहुलमेतन्निदर्शनम्" इति रीत्या क्षिधातुं स्वादावप्यङ्गीकृत्य निर्वाह्याः । **इति** वस्तुस्थितिः ॥

करोति । 'अत उत्सार्वधातुके' । कुरुतः । यण् । न भकुर्छुरामिति न दीर्घः । कुर्वन्ति ॥ **नित्यं करोतेः । ६ । ४ । १०८ ॥** करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यान्म्वोः परयोः ॥ कुर्वः । कुर्मः । चकर्थ । चकृव । चकृषे । कर्ता । करिष्यति । **ये च । ६ । ४ । १०९ ॥** कृञ उ-लोपः स्याद्यादौ प्रत्यये परे ॥ कुर्यात् । आशिषि क्रियात् । कृषीष्ट । अकार्षीत् । 'तनादिभ्य' इति लुकोऽभावे ह्रस्वादङ्गादिति सिचो लोपः । अकृत । अकृथाः ॥ **संपरिभ्यां करोतौ भूषणे । ६ । १ । १३७ ॥ समवाये च । ६ । १ । १३८ ॥** संपरिपूर्वस्य करोतेः सुट् स्याद्भूषणे संघाते चार्थे । संस्करोति । अलंकरोतीत्यर्थः । संस्कुर्वन्ति । सङ्घीभवन्तीत्यर्थः । संपूर्वस्य क्वचिदभूषणेऽपि सुट् । 'संस्कृतं भक्षा' इति ज्ञापकात् । 'परिनिविभ्य' इति षः । परिष्करोति ॥ सिवादीनां वा ॥ पर्यष्कार्षीत् । पर्यस्कार्षीत् ॥ **उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च । ६ । १ । १३९ ॥** उपात्कृञः सुट् स्यादेष्वर्थेषु चात्प्रागुक्तयोरर्थयोः ॥ प्रतियत्नो गुणाधानम् । विकृतमेव वैकृतं विकारः । वाक्यस्याध्याहार आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या । अलंकृतेत्यर्थः । उपस्कृता ब्राह्मणाः । समुदिता इत्यर्थः । एधो दकस्योपस्कुरुते । गुणाधानं करोतीत्यर्थः । उपस्कृतं भुङ्क्ते । विकृतमित्यर्थः । उपस्कृतं ब्रूते । वाक्याध्याहारेण ब्रूत इत्यर्थः ॥ **सुट्कात्पूर्वः । ६ । १ । १३५ ॥ अड्भ्यासव्यवायेऽपीत्युक्तम्** । संचस्कार । कात्पूर्व इत्यादि भाष्ये प्रत्याख्यातम् । तथा हि । पूर्वं धातुरुपसर्गेण युज्यते । अन्तरङ्गत्वात्सुट् । ततो द्वित्वम् । एवं च 'ऋतश्च संयोगादेर्गुणः' । संचस्करतुः ॥ कृसृभृ इति सूत्रे ऋतो भारद्वाजस्येति सूत्रे च **'कृञोऽसुट इति वक्तव्यम् * ॥'** तेन ससुट्कात्परस्येट् । संचस्करिथ ।

---

१ "**नित्यं करोतेः**" । आरम्भसामर्थ्यान्नित्यत्वे लब्धे नित्यग्रहणं स्पष्टार्थम् ॥ २ **समवाये चेति** । समवायः सम्बन्धः, समूहश्च ॥ ३ **सुट् कात् पूर्व इति** । अत्र "सुट् कात् पूर्वः" इति सूत्रम् । "**अड्भ्यसव्यवायेऽपि**" इति वार्तिकम् । अभ्यासस्यानर्थकत्वेन उत्तरखण्डस्यैवार्थवत्तया करोतित्वेन च तस्य समोऽभ्यासेन व्यवधानाद्, अड्विषये विकरणान्तभक्ततयाऽटस्तेन व्यवधानात् सुटोऽप्राप्तौ "अड्भ्यासव्यवायेऽपि" इत्यारब्धम् । "अड्भ्यासव्यवायेऽपि सुड् भवति, स च कात्पूर्वः" इत्यर्थः । भाष्यकृता तु "अड्भ्यासव्यवायेऽपि" इति प्रत्याख्यातम्, तथा हि—"अत्र कात् पूर्वग्रहणं कालावधारणार्थम्, तदा सुड् भवति यदा कृतः कात् पूर्वो भवति" इति । तेनान्तरङ्गमपि द्वित्वादिकं बाधित्वा पूर्वं सुट् इति तस्यात्तावश्यकत्वात् ॥ ४ "कात् पूर्वः" इत्यपि प्रत्याख्यातमित्याह—**पूर्वं धातुरिति** । "**उपसर्गेण**" इत्यस्य "तदर्थेन" इत्यर्थः । अत एव "अनुभूयते" इति कर्मणि लकारः । एवं च—अन्तरङ्गतरार्थकोपसर्गनिमित्तकत्वाद् द्वित्वाद्यपेक्षया सुडन्तरङ्ग इत्याशयः ॥ "सुट्" इत्यंशस्तु "सम्परिभ्याम्--" इत्यत्रैव पाठ्य इति तदाशयः । ५ **ऋतश्च संयोगादेरिति** । ननु द्वित्वे समुदायस्यैवाङ्गत्वेन संयोगादित्वं दुरुपपादम्, नित्यत्वेन गुणात् पूर्वं "शर्पूर्वाः खयः" इत्यस्य प्रवृत्तेरिति चेन्न, प्रत्ययोत्पत्तिवेलायां संयोगादित्वस्य विवक्षणेनादोषात् । अत एव "सस्वरतुः" इत्यादिसिद्धिः । सूत्रं च सार्थकम् । सुट् तु सम्परिभ्यां परत्वयोग्यस्य सुड्विधानात् प्रत्ययोत्पत्तेः पूर्वमेव ।

संचस्करेव । गुणोर्तीति सूत्रे नित्यं छन्दसीति सूत्रान्नित्यमित्यनुवर्तते । नित्यं यः संयोगादिस्तस्येत्यर्थात्सुटि गुणो न । संस्क्रियात् । ऋतश्च संयोगादेरिति लिङ्सिचोर्नेट् । एकाच उपदेश इति सूत्रादुपदेश इत्यनुवर्त्य उपदेशे यः संयोगादिरिति व्याख्यानात् । संस्कृषीष्ट । समस्कृत स्कृषाताम् ॥ १ ॥

इति तनादिप्रकरणम् ।

## अथ क्र्यादिप्रकरणम् ।

डुक्रीञ् द्रव्यविनिमये ॥ **क्र्यादिभ्यः श्ना । ३ । १ । ८१ ॥** क्रीणाति । ई हल्यघोः । क्रीणीतः । ईत्वात्पूर्वं झेरन्तादेशः । परत्वान्नित्यत्वादन्तरङ्गत्वाच्च । एवं झस्याद्भावः । ततः आभ्यस्तयोरित्याल्लोपः । क्रीणन्ति । क्रीणीते । क्रीणाते । क्रीणते । चिक्राय । चिक्रियतुः । चिक्रयिथ । चिक्रेथ । चिक्रियिव । चिक्रियिषे । क्रेता । क्रेष्यति । क्रीयात् । क्रेषीष्ट । अक्रैषीत् । अक्रेष्ट ॥ १ ॥ **प्रीञ्** तर्पणे कान्तौ च । कान्तिः कामना । प्रीणाति । प्रीणीते ॥ २ ॥ **श्रीञ्** पाके ॥ ३ ॥ **मीञ्** हिंसायाम् ॥ 'हिनुमीना' । प्रमीणाति । प्रमीणीतः । मीनातिमिनोतीत्येज्विषये आत्त्वम् । ममौ । मिम्यतुः । ममिथ । ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त ॥ ४ ॥ **षिञ्** बन्धने । सिनाति । सिनीते । सिषाय । सिष्ये । सेता ॥ ५ ॥ **स्कुञ्** आप्रवणे ॥ **स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च । ३ । १ । ८२ ॥** चात् श्ना । स्कुनोति । स्कुनुते । स्कुनाति । स्कुनीते । चुस्काव । चुस्कुवे । स्कोता । अस्कौषीत् । अस्कोष्ट ॥ ६ ॥ स्तन्भ्वादयश्चत्वारः सौत्राः । सर्वे रोधनार्था इत्येके । माधवस्तु प्रथमतृतीयौ स्तम्भार्थौ द्वितीयो निष्कोषणार्थश्चतुर्थो धारणार्थ इत्याह । **सर्वे परस्मैपदिनः** । नलोपः । विष्टभ्नोति । विष्टभ्नाति । अवष्टभ्नोति । अवष्टभ्नाति । अवतष्टम्भ । जुस्तन्भिवत्यङ्वा । व्यष्टभत् । व्यष्टम्भीत् । स्तुभ्नोति । स्तुभ्नाति । **वेः स्कभ्नातेर्नित्यम् । ८ । ३ । ७७ ॥** वेः परस्य स्कभ्नातेः सस्य षः स्यात् ॥ विष्कभ्नोति । विष्कभ्नाति । स्कुभ्नोति । स्कुभ्नाति ॥ **हलः श्नः शानज्झौ** ।

---

१ **नित्यमित्यनुवर्तते इति** । इदं चिन्त्यम् । तस्यातिदूरत्वात् । विच्छिन्नत्वाच्च । नित्यग्रहणस्य "नित्यं छन्दसि" इति सूत्रे "उर्ऋत्" इति सूत्रानन्तरं पाठेन विधेयविशेषणत्वाच्च । (ऋकारस्य विशेषणत्वादित्यर्थः) ॥ किंच--"नित्यं संयोगादित्वं न प्रयोगमात्रावच्छेदेन, "सस्वरतुः सस्वरिथ" इत्यादौ तदभावात् । "यगादिघटितप्रयोगमात्रावच्छेदेन नित्यं संयोगादित्वम्" इत्यपि न, "अस्तर्यत, तरीस्तर्यात्" इत्यादावभावात् । नित्यग्रहणासम्बन्धादेव च "प्रत्येकं संयोगसंज्ञा" इति पक्षे "संहृषीष्ट संह्वृषते" इत्यादौ इड्गुणापादानपरं "हलोऽनन्तराः—" इति सूत्रस्थं भाष्यं सङ्गच्छते । प्रत्येकं संयोगसंज्ञापक्षे "संहृषीष्ट" इत्यत्रेडापादानपरभाष्यप्रामाण्येन इड्विधावुपदेशग्रहणानुवृत्तिरपि न युक्ता । तस्मादिड्गुणयोः "असुटः" इति प्रतिषेधवचनारम्भ एव ज्यायानिति वदन्ति प्रतिभाशालिनो भाष्यतत्त्वविदो नूतनाः ॥ इति तनादयः ॥

२ **विष्कभ्नोतीति** । ननु "वेः स्कभ्नातेर्नित्यम्" इति सूत्रे श्नाप्रत्ययनिर्देशाद् यदा श्नाप्रत्ययस्तदैव षत्वं न्याय्यमिति कथमत्र श्नुप्रत्ययपक्षे षत्वमिति चेन्न, धातुनिर्देशे श्तिप्प्रत्यये कृते विकरणस्यावश्यकतया शबपवादयोः श्नुश्नाप्रत्यययोः प्रवृत्तिरवश्यमभ्युपेया, तत्रान्यतरोच्चारणं साधुत्वार्थमेव, न त्वितरव्यावृत्त्यर्थमिति स्वीकारात् ॥

**३ । १ । ८३ ॥** हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान । स्तुभान । स्कभान । स्कुभान । पक्षे—स्तभ्नुहीत्यादि ॥ ६ ॥ **युञ्** बन्धने । युनाति । युनीते । योता ॥ ७ ॥ **क्नूञ्** शब्दे । क्नूनाति । क्नूनीते । क्नविता ॥८॥ **द्रूञ्** हिंसायाम् । द्रूणाति । द्रूणीते ॥ ९ ॥ **पूञ्** पवने ॥ **प्वादीनां ह्रस्वः । ७ । ३ । ८० ॥** शिति परे । पुनाति । पुनीते । पविता ॥१०॥ **लूञ्** छेदने । लुनाति । लुनीते ॥ ११ ॥ **स्तॄञ्** आच्छादने । स्तृणाति । स्तृणीते । तस्तार । तस्तरतुः । स्तरिता । स्तरीता । स्तृणीयात् । स्तृणीत । आशिषि—स्तीर्यात् । लिङ्सिचोरिति वेट् ॥ **न लिङि । ७ । २ । ३९ ॥** वॄत इटो लिङि दीर्घो न स्यात् । स्तरिषीष्ट । उश्चेति कित्त्वम् । स्तीर्षीष्ट । सिचि च परस्मैपदेष्विति न दीर्घः । अस्तारीत् । अस्तारिष्टाम् । अस्तरिष्ट । अस्तरीष्ट । अस्तीर्ष्ट ॥ १२ ॥ **कॄञ्** हिंसायाम् । कृणाति । कृणीते । चकार । चकरे ॥ १३ ॥ **वॄञ्** वरणे । वृणाति । वृणीते । ववार । ववरे । वरिता । वरीता । आशिषि 'उदोष्ठ्यपूर्वस्य' वूर्यात् । वरिषीष्ट । वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट । अवरीष्ट । अवूर्ष्ट ॥ १४ ॥ **धूञ्** कम्पने । धुनाति । धुनीते । दुधविथ । दुधोथ । दुधुविव । धोता । धविता । 'स्तुसुधूञ्भ्य' इतीट् । अधावीत् । अधविष्ट । अधोष्ट ॥ १५ ॥ **अथ बध्नात्यन्ताः परस्मैदिनः ॥ शॄ** हिंसायाम् । शॄदॄप्रां ह्रस्वो वेति ह्रस्वपक्षे यण् । अन्यदा ऋच्छत्यॄतामिति गुणः । शश्रतुः । शशरतुः । श्र्युकः कितीति निषेधस्य क्रादिनियमेन बाधः । शशरिव । शश्रिव । शरिता । शरीता । शृणीहि । शीर्यात् । अशारिष्टाम् ॥ १ ॥ **पॄ** पालनपूरणयोः । पप्रतुः । पपरतुः । आशिषि—पूर्यात् ॥ २ ॥ **वॄ** वरणे॥ भरण इत्येके ॥ ३ ॥ **भॄ** भर्त्सने । भरणेप्येके ॥ ४ ॥ **मॄ** हिंसायाम् । मृणाति । ममार ॥ ५ ॥ **दॄ** विदारणे । ददरतुः । दद्रतुः ॥ ६ ॥ **जॄ** वयोहानौ ॥ ७ ॥ **झॄ** इत्येके ॥ ८ ॥ **धॄ** इत्यन्ये ॥ ९ ॥ **नॄ** नये ॥ १० ॥ **कॄ** हिंसायाम् ॥ ११ ॥ **ॠ** गतौ । ऋणाति । अरांचकार । अरिता । अरीता । आर्णात् । आर्णीताम् । ईर्यात् । आरीत् । आरिष्टाम् ॥ १२ ॥ **गॄ** शब्दे ॥ १३ ॥ **ज्या** वयोहानौ । प्रहिज्या ॥ **हलः । ६ । ४ । २ ॥** अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्ताङ्गस्य दीर्घः स्यात् ॥ इति दीर्घे कृते । 'प्वादीनां ह्रस्वः' । जिनाति । जिज्यौ । जिज्यतुः ॥ १४ ॥ **री** गतिरेषणयोः । रेषणं वृकशब्दः ॥ १५ ॥ **ली** श्लेषणे । विभाषा लीयतेरित्येज्विषये आत्त्वं वा । ललौ । लिलाय । लाता । लेता ॥ १६ ॥ **व्ली** वरणे । व्लिनाति ॥ १७ ॥ **प्ली** गतौ ॥ १८ ॥ **वृत् ॥** ल्वादयो वृत्ताः । प्वादयोऽपीत्येके ॥ **व्री** वरणे ॥ १९ ॥ **भ्री** भये ॥ **भरण** इत्येके ॥ २० ॥ **क्षीष्** हिंसायाम् । एषां त्रयाणां ह्रस्वः । केचिन्मते तु न ॥ २१ ॥ **ज्ञा** अवबोधने । 'ज्ञाजनोर्जा' ।

---

१ "हलः" "अङ्गस्य" इत्यावर्तते, तत्रैकं हलो विशेषणम्, अवयवसम्बन्धे षष्ठी । द्वितीयं च सम्प्रसारणस्य विशेष्यम्, तदन्तविधिस्तदाह--अङ्गावयवादिति । तेन "निरुतम्" इत्यादौ न ॥

जानाति । दीर्घनिर्देशसामर्थ्यान्न ह्रस्वः ॥ २२ ॥ **बन्ध** बन्धने । बध्नाति । बबन्धिथ । बन्द्धा । बन्धारौ । भन्त्स्यति । बधान । अभान्त्सीत् । पूर्वत्रासिद्धमिति भष्भावात्पूर्वं झलो झलीति सिज्लोपः । प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न । प्रत्ययलक्षणं प्रति सिज्लोपस्यासिद्धत्वात् । अबान्धाम् । अभान्त्सुः ॥ २३ ॥ **वृङ्** संभक्तौ । वृणीते । वव्रे । ववृषे । ववृढ्वे । वरिता । वरीता । अवरिष्ट । अवरीष्ट । अवृत ॥ १ ॥ **श्रन्थ** विमोचनप्रतिहर्षयोः ॥ इतः **परस्मैपदिनः** ॥ श्रथ्नाति । श्रन्थिग्रन्थीत्यादिना कित्त्वपक्षे एत्त्वाभ्यासलोपावप्यत्र वक्तव्यौ इति हरदत्तादयः । श्रेथतुः । श्रेथुः ॥ इदं कित्त्वं पितामपीति सुधाकरमते । श्रेथिथ । अस्मिन्नपि पक्षे णलि । शश्राथ । उत्तमे तु—शश्राथ शश्रथेति माधवः । तत्र मूलं मृग्यम् ॥ १ ॥ **मन्थ** विलोडने ॥ २ ॥ **श्रन्थ ग्रन्थ** सन्दर्भे ॥ अर्थभेदाच्छ्रन्थेः पुनः पाठः । रूपं तूक्तम् ॥ ४ ॥ **कुन्थ** संश्लेषणे । संक्लेशे इत्येके । कुथ्नाति । चुकुन्थ ॥५॥ कुथ्यति । दुर्गः । चुकोथ ॥ ६ ॥ **मृद** क्षोदे । मृद्नाति । मृदान ॥ ७ ॥ **मृड** च । अयं सुखेऽपि । ष्टुत्वम् । मृड्णाति ॥ ८ ॥ **गुध** रोषे । गुध्नाति ॥ ९ ॥ **कुष** निष्कर्षे । कुष्णाति । कोषिता ॥ **निरः कुषः । ७ । २ । ४६ ॥** निरः परात्कुषो वलादेरार्धधातुकस्य इड्वा स्यात् ॥ निष्कोषिता । निष्कोष्टा । निरकोषीत् । निरकुक्षत् ॥ १० ॥ **क्षुभ** संचलने ॥ **क्षुभ्नादिषु च । ८ । ४ । ३९ ॥** क्षुभ्नाति । क्षुभ्नीतः । क्षोभिता । क्षुभाणं ॥ ११ ॥ **णभ तुभ** हिंसायाम् । नभ्नाति । तुभ्नाति । नभते तोभते इति शपि । नभ्यति तुभ्यतीति श्यनि ॥ १३ ॥

---

१ **दीर्घनिर्देशेति** । "जा" इति दीर्घनिर्देशेत्यर्थः । अङ्गवृत्तपरिभाषा निष्फलेत्यनेन सूचयति । तथाहि-अथ किमेतस्या ज्ञापने प्रयोजनम् । न च "यूयं वयम्" इत्यत्र अमादेशस्य स्थानिवत्त्वेन जस्त्वमाश्रित्य प्रसक्तस्य शीभावस्य प्रवृत्त्यभावः प्रयोजनमिति वाच्यम्, "ङे प्रथमयोः" इत्यत्र मकारान्तरप्रश्लेषेण "अम् मान्त एवावतिष्ठते" इति व्याख्यानेन दोषात् । "जसः शी" इत्यत्र सकारप्रश्लेषेण सान्तस्यैव शीभावविधानाच्च । न च "पिबति" इत्यत्र "पाघ्रा-" इति पिबादेशे गुणाभावः प्रयोजनमिति वाच्यम्, पिबादेशस्यादन्तत्वाभ्युपगमेनादोषात् । न च "युष्मभ्यमस्मभ्यम्" इत्यत्र "शेषे लोपोऽन्त्यलोपः" इति पक्षे "भ्यम्" इति च्छेदे भ्यमादेशोत्तरं "बहुवचने झल्येत्" इत्येत्त्वस्याप्रवृत्तिः प्रयोजनमिति वाच्यम्, "अभ्यम्" इति च्छेदमाश्रित्य अभ्यमादेशविधानेन तदप्राप्तेः । तदुक्तं भाष्यकृता "नचादेशो हलादिरस्तीति" न च "क्रियात्" इत्यादौ रिङादेशोत्तरम्-"अकृत्सार्व-" इति दीर्घाभावः प्रयोजनमिति वाच्यम्, रीङि प्रकृते रिङ्विधानसामर्थ्यादेव तदप्रवृत्तेः । न च "श्रीपाय" इत्यत्र "सुपि च" इति दीर्घोत्तरमातो लोपाभावः प्रयोजनमिति वाच्यम्, सन्निपातपरिभाषयैव तदप्रवृत्तेः । तस्मादनन्यथासिद्धप्रयोजनराहित्यादयुक्तैवैषा परिभाषा । अत एव "ज्ञाजनोर्जा" "ज्यादादीयसः" इति सूत्रयोरेनां ज्ञापयित्वा "किमेतस्या ज्ञापने प्रयोजनम्" इति प्रश्ने-"पिबतेर्गुणप्रतिषेध उक्तः, स न वक्तव्यो भवति" इत्येव प्रयोजनमुक्तम्, न तु लक्ष्यसिद्धिरूपमिति हृदयम् ॥

२ **सिज्लोपस्येति** । प्रत्ययलक्षणसूत्रं विध्यर्थम्, "एकाचो बशः"-इति सूत्रे ध्वसाहचर्यात्सादिः प्रत्यय एव गृह्यते इति मतेनेदम् । यदा तु प्रत्ययलक्षणसूत्रं नियमार्थम्, स्थानिवत्सूत्रदृष्टया च त्रिपादी नासिद्धा, तदाऽल्विधित्वान्न स्थानिवत्त्वमिति बोध्यम् ॥ ३ **तत्र मूलमिति** । "एत्त्वाभ्यासलोपावप्यत्र--" इत्यारभ्य यदुक्तं तत्र मूलं मृग्यमित्यर्थः । संयुक्तहल्मध्यस्थत्वात्, ग्रन्थेरादेशादित्वाच्च सूत्रेणाप्राप्तेर्वार्तिकादर्शनाच्चेति भावः ॥ ४ "क्षुभ्नादिषु च" इति निषेधो यत्र भकारनकारयोरव्यवहितसंयोगस्तत्रैवेति णकारघटितमुदाहरति-**क्षुभाणेति** । नकारघटितोऽपपाठ इति बोध्यम् ॥

**क्लिशू** विबाधने। शादिति श्चुत्वनिषेधः। क्लिश्नाति। क्लेशिता। क्लेष्टा। अक्लेशीत्। अक्लिक्षत्॥ १४॥ **अश** भोजने। अश्नाति। आश॥ १५॥ **उध्रस** उञ्छे। उकार इत्। ध्रस्नाति॥ १६॥ उकारो धात्ववयव इत्येके। उध्रसांचकार॥ १७॥ **इष** आभीक्ष्ण्ये। पौनःपुन्यं भृशार्थो वा आभीक्ष्ण्यम्। इष्णाति। तीषसहेत्यत्र सहिना साहचर्यादकारविकरणस्य तौदादिकस्यैव इषेर्ग्रहणं नतु इष्यतीष्णात्योरित्याहुः। एषिता। वस्तुतस्तु इष्णातेरपि इड्विकल्प उचितः। तथा च वार्तिकम्-॥ **इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः इति** *॥ १८॥ **विष** विप्रयोगे। विष्णाति। वेष्टा॥ १९॥ **प्रुष प्लुष** स्नेहनसेवनपूरणेषु॥ प्रुष्णाति। प्लुष्णाति॥२१॥ **पुष** पुष्टौ। पोषिता॥ २२॥ **मुष** स्तेये। मोषिता॥ २३॥ **खच** भूतप्रादुर्भावे। भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः। खच्नाति। वान्तोऽयमित्येके। **च्छ्वोः शूडनुनासिकके च। ६। ४। १९॥** सतुक्कस्य छस्य वस्य च क्रमाच्छ ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति॥ खौनाति। चखाव। खविता। शानचः परत्वादूठि कृते हलन्तत्वाभावान्न शानच्। खौनीहि॥ २३॥ **हिठ** च। ष्टुत्वम्। हिठ्णाति॥२५॥ **ग्रह** उपादाने। **स्वरितेत्**। ग्रहिज्या। गृह्णाति। गृह्णीते॥ **ग्रहोऽलिटि दीर्घः। ७। २। ३७॥** एकाचो ग्रहेर्विहितस्येटो दीर्घः स्यान्नतु लिटि। ग्रहीता। लिटि तु जग्रहिथ। गृह्यात्। ग्रहीषीष्ट। ह्म्यन्तेति न वृद्धिः। अग्रहीत्। अग्रहीष्टाम्। अग्रहीष्ट। अग्रहीषाताम्। अग्रहीषत॥ २६॥

इति क्र्यादिप्रकरणम्।

## अथ चुरादिप्रकरणम्।

**चुर** स्तेये॥ **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्। ३। १। २५॥** एभ्यो णिच् स्यात्। चूर्णान्तेभ्यः प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम्। चुरादिभ्यस्तु स्वार्थे। पुगन्तेति गुणः। सनाद्यन्ता इति धातुत्वम्। तिप्शबादि। गुणायादेशौ। चोरयति॥ **णिचश्च। १। ३। ७४॥** णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले॥ चोरयते। चोरयामास। चोरयिता। चोर्यात्। चोरयिषीष्ट। णिश्रीति चङ्। णौ चङीति ह्रस्वः। द्वित्वम्। 'हलादिः शेषः' 'दीर्घो

---

१ श्यन्प्रत्ययादिति। श्यन् प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः॥ २ एकाच इति। एतच्च हरदत्तानुरोधेन। अग्रहीष्टाम्" इत्यादौ "लावस्थायामट्" इति दीर्घानापत्त्या चिन्त्यमिदम्॥ इति क्र्यादयः॥ ३ प्रपञ्चार्थमिति। न च "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" इति स्वार्थे विधानार्थमस्त्विति वाच्यम्, "सत्यस्य कृञ्यापुक्" इति भाष्यविरोधात्। ( सत्यशब्दस्य कृञर्थे णिचि आपुगिति भाष्यार्थः ) नचापुग्निपातार्थं सत्यापग्रहणमावश्यकमिति वाच्यम्, "अर्थवेदयोरापुक्" इति वार्तिक एव सत्यस्य पाठेन सिद्धेरिति भावः॥ ४ स्वार्थ इति। "करणे" इत्यस्य तु विच्छिन्नत्वान्नानुवृत्तिरिति भावः॥

लघोरित्यभ्यासदीर्घः । अचूचुरत् । अचूचुरत ॥ १ ॥ **चिति** स्मृत्याम् । चिन्तयति । अचिचिन्तत् । चिन्तेति पठितव्ये इदित्करणं[1] णिचः पाक्षिकत्वे लिङ्गम् । तेन चिन्त्यात् चिन्त्यते इत्यादौ नलोपो न । चिन्तति । चिन्तेत् । एतच्च ज्ञापकं सामान्यापेक्षमित्येके[2] । अत एकहलित्यत्र वृत्तिकृता जगाण जगणतुरित्युदाहृतत्वात्[3] ॥ विशेषापेक्षमित्यपरे[4] । अत एव आधृषाद्वेत्यस्य न वैयर्थ्यम् ॥ २ ॥ **यत्रि** संकोचे । यन्त्रयति । यन्त्रेति पठितुं शक्यम् । यत्तु इदित्करणाद्यन्त्रतीति माधवेनोक्तं तच्चिन्त्यम्[5] । एवं कुद्रितत्रिमत्रिषु ॥ ३ ॥ **स्फुडि** परिहासे । स्फुण्डयति । इदित्करणात्—स्फुण्डति ॥ **स्फुटीति** पाठान्तरम् । स्फुण्टयति ॥ ४ ॥ **लक्ष** दर्शनाङ्कनयोः ॥ ५ ॥ **कुद्रि** अनृतभाषणे । कुन्द्रयति ॥ ६ ॥ **लड** उपसेवायाम् । लाडयति ॥ ७ ॥ **मिदि** स्नेहने । मिन्दयति । मिन्दति ॥ ८ ॥ **ओलडि** उत्क्षेपणे । ओलण्डयति । ओलण्डति ॥ ओकार इदित्येके । लण्डयति । लण्डति ॥ १० ॥ उकारादिरयमित्यन्ये । उलण्डयति ॥ ११ ॥ **जल** अपवारणे ॥ १२ ॥ **लज** इत्येके ॥ १३ ॥ **पीड** अवगाहने । पीडयति ॥ **भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्** । ७ । ४ । ३ । एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ । अपीपिडत् । अपिपीडत् ॥ १४ ॥ **नट** अवस्कन्दने । अवस्कन्दनं नाट्यम् ॥ १५ ॥ **श्रथ** प्रयत्ने । प्रस्थान इत्येके ॥ १६ ॥ **बध** संयमने ॥ बाधयति । बन्धेति चान्द्रः ॥ १७ ॥ **पॄ** पूरणे । पारयति । दीर्घोच्चारणं णिचः पाक्षिकत्वे लिङ्गम् । तद्धि सेट्कत्वाय । एवं च पृणातिपिपर्तिभ्यां परितेत्यादिसिद्धावपि परति परत इत्यादिसिद्धिः फलम् ॥ १८ ॥ **ऊर्ज** बलप्राणनयोः ॥ १९ ॥ **पक्ष** परिग्रहे ॥ २० ॥ **वर्ण चूर्ण** प्रेरणे ॥ वर्ण वर्णन इत्येके ॥ २२ ॥ **प्रथ** प्रख्याने । प्राथयति । नान्ये मितोऽहेताविति वक्ष्यमाणत्वान्नास्य मित्त्वम् ॥ **अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्** । ७ । ४ । ९५ ॥ एषामभ्यासस्य अकारोऽन्तादेशः स्याच्चङ्परे णौ ॥ इत्वापवादः । अपप्रथत् ॥ २३ ॥ **पृथ** प्रक्षेपे । पर्थयति ॥ **ॠदृत्** । ७ । ४ । ७ ॥ उपधाया ऋवर्णस्य स्थाने ॠत्स्याद्वा चङ्परे णौ । इररारामपवादः । अपीपृथत् । अपपर्थत् ॥ २४ ॥ **पथ** इत्येके । पाथयति ॥ २५ ॥ **षम्ब** संबन्धने । सम्बयति । अससम्बत् ॥ २६ ॥ **शम्ब** च । अशशम्बत्

---

१ **इदित् करणमिति** । णिचो नित्यत्वे हि तेन व्यवधानान्नलोपाप्रसक्त्या किमिदित्त्वेनेति भावः । न च णिजन्तात्क्विपि नलोपाभावाय इदित्त्वं चरितार्थं, स्थानिवत्त्वं तु क्वौ विधौ निषिद्धमिति वाच्यम्, "असिद्धवदत्र -" इति णिलोपस्यासिद्धत्वात् । "क्वौ विधिम् --" इत्यस्य 'लक्षणप्रतिपदोक्तपारिभाषया क्विशब्दमुच्चार्य विहितविधिविषयत्वाच्च । "क्वौ लुप्तम् -" इति तु न सार्वत्रिकमित्याशयः । णिचः पाक्षिकत्वस्य भाष्यानुक्तत्वाच्चिन्त्यमिदमिति नव्याः ॥ २ **सामान्यापेक्षमिति** । "चुरादिभ्यो णिज् वैकल्पिकः" इत्यर्थे एतज् ज्ञापकमित्यर्थः । "आधृषाद्वा" इति तु ज्ञापकसिद्धस्यासार्वत्रिकत्वबोधनाय. "आधृषीयाणामेव सर्वत्र विकल्पोऽन्येषां तु लक्ष्यानुरोधेन" इति बोधनाय चेति भावः ॥ ३ **जगणतुरिति** । गणधातोरनेकाच्त्वेऽपि मन्त्रत्वादाम् नेति तदाशयः । "णेरणौ–" इति सूत्रस्थभाष्यविरुद्धत्वाच्चिन्त्यमिति नवीनाः ॥ ४ **विशेषेति** । असंयोगोपधेकारान्तरूपविशेषेत्यर्थः ॥ ५ **तच्चिन्त्यमिति** । नस्योपधात्वाभावेन नलोपाप्रसक्त्या ज्ञापितेऽपि चारितार्थ्याभावादिति भावः ॥

॥ २७ ॥ **साम्ब** इत्येके ॥ २८ ॥ **भक्ष** अदने ॥ २९ ॥ **कुट्ट** छेदनभर्त्सनयोः । पूरण इत्येके । कुट्टयति ॥ ३० ॥ **पुट्ट चुट्ट** अल्पीभावे ॥ ३२ ॥ **अट्ट षुट्ट** अनादरे । अट्टयति । अयं दोपधः । ष्टुत्वस्यासिद्धत्वाद् ' न न्द्राः ' इति निषेधः । आट्टिटत् ॥ ३४ ॥ **लुण्ठ** स्तेये । लुण्ठयति । लुण्ठतीति ' लुठि स्तेये ' इति भौवादिकस्य ॥ ३६ ॥ **शठ श्वठ** असंस्कार-गत्योः ॥ ३७ ॥ **श्वठि** इत्येके ॥ ३८ ॥ **तुजि पिजि** हिंसाबलादाननिकेतनेषु । तुञ्जयति । पिञ्जयति । इदिकरणात्तुञ्जति । पिञ्जति ॥ ४० ॥ **तुज पिजेति** केचित् ॥४२॥ **लजि लुजि** इत्येके ॥ ४४ ॥ **पिस** गतौ । पेसयति । पेसतीति तु शपि गतम् ॥ ४५ ॥ **षान्त्व** सामप्रयोगे ॥ ४६ ॥ **श्वल्क वल्क** परिभाषणे ॥ ४८ ॥ **ष्णिह** स्नेहने । **स्फिट** इत्येके ॥ ५० ॥ **स्मिट** अनादरे ॥ अषोपदेशत्वान्न षः । असिस्मिटत् ॥ ५१ ॥ **स्मिङ्** अनादर इत्येके । ङित्त्वस्यावयवेऽचरितार्थत्वाण्णिजन्तात्तङ्[1] । स्माययते ॥ ५२ ॥ **श्लिष** श्लेषणे ॥ ५३ ॥ **पथि** गतौ ॥ पन्थयति । पन्थति ॥ ५४ ॥ **पिच्छ** कुट्टने ॥ ५५ ॥ **छदि** संवरणे । छन्दयति । छन्दति ॥ ५६ ॥ **श्रण** दाने ॥ प्रायेणायं विपूर्वः । विश्राणयति ॥ ५७ ॥ **तड** आघाते । ताडयति ॥ ५८ ॥ **खड खडि कडि** भेदने । खाडयति । खण्डयति । खण्डति । कण्डयति । कण्डति ॥ ६१ ॥ **कुडि** रक्षणे ॥ ६२ ॥ **गुडि** वेष्टने । रक्षण इत्येके । **कुठि** इत्यन्ये ॥ अवकुण्ठयति । अवकुण्ठति ॥ **गुठि** इत्यपरे ॥ ६५ ॥ **खुडि** खण्डने ॥ ६६ ॥ **वठि** विभाजने ॥ **वडि** इत्येके ॥ ६८ ॥ **मडि** भूषायां हर्षे च ॥ ६९ ॥ **भडि** कल्याणे ॥ ७० ॥ **छर्द** वमने ॥ ७१ ॥ **पुस्त बुस्त** आदरानादरयोः ॥ ७३ ॥ **चुद** संचोदने ॥ ७४ ॥ **नक्क धक्क** नाशने । णोपदेशलक्षणे पर्युदस्तोऽयम् । प्रनक्कयति ॥ ७६ ॥ **चक्क चुक्क** व्यथने ॥ ७८ ॥ **क्षल** शौचकर्मणि ॥ ७९ ॥ **तल** प्रतिष्ठायाम् ॥ ८० ॥ **तुल** उन्माने । तोलयति । तोलयामास । अतूतुलत् ॥ कथं तुल-यति तुलना इत्यादि । अतुलोपमाभ्यामिति निपातनादङन्तस्य तुलाशब्दस्य सिद्धौ ततो णिच् ॥ ८१ ॥ **दुल** उत्क्षेपणे । दोलयति । दोलयामास । अदूदुलत् ॥ ८२ ॥ **पुल** महत्त्वे ॥ ८३ ॥ **चुल** समुच्छ्राये ॥ ८४ ॥ **मूल** रोहणे मूलयति । मूलयामास ॥ ८५ ॥ **कल विल** क्षेपे । कालयति ॥ ८७ ॥ **बिल** भेदने ॥ ८८ ॥ **तिल** स्नेहने ॥ ८९ ॥ **चल** भृतौ ॥ ९० ॥ **पाल** रक्षणे ॥ ९१ ॥ **लूष** हिंसायाम् ॥ ९२ ॥ **शुल्ब** माने ॥ ९३ ॥ **शूर्प** च ॥ ९४ ॥ **चुट** छेदने ॥ ९५ ॥ **मुट** संचूर्णने ॥ ९६ ॥ **पडि पसि** नाशने । पण्डयति । पण्डति । पंसयति । पंसति ॥ ९८ ॥ **व्रज मार्ग** संस्कारगत्योः ॥ १०० ॥ **शुल्क** अतिस्पर्शने ॥ १०१ ॥ **चपि** गत्याम् । चम्पयति । चम्पति ॥ १०२ ॥ **क्षपि** क्षान्त्याम् । क्षम्पयति । क्षम्पति ॥ १०३ ॥ **क्षजि** कृच्छ्रजीवने ॥ १०४ ॥ **श्वर्त** गत्याम्

---

१ **णिजन्तात्तङीति** । ननु " ङित्त्वाण्णिज्विकल्पः " इत्येव कुतो नोक्तमिति चेन्न, चित्रङादौ " अवयवेऽचरितार्थस्य समुदायोपकारकत्वम् " इति न्यायस्य क्लृप्तत्वात् । शास्त्रबाधस्यान्याय्यत्वाच्च ॥

॥ १०५ ॥ **श्वभ्र** च ॥ १०६ ॥ **ज्ञप** मिच्च ॥ अयं ज्ञाने ज्ञापने च वर्तते ॥ **मितां ह्रस्वः । ६ । ४ । ९२ ॥** मितामुपधाया ह्रस्वः स्याण्णौ परे । ज्ञपयति ॥ १०७ ॥ **यम** च परिवेषणे । चान्मित् । परिवेषणमिह वेष्टनम्। न तु भोजनं नापि वेष्टना । यमयति चन्द्रम्। परिवेष्टत इत्यर्थः ॥ १०८ ॥ **चह** परिकल्कने । चहयति । अचीचहत् । कथादौ वक्ष्यमाणस्य तु अदन्तत्वेनाग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचचहत् ॥ **चप** इत्येके ॥ चपयति। **रह** त्याग इत्येके । अरीरहत् । कथादेस्तु—अररहत् ॥ १११ ॥ **बल** प्राणने ॥ बलयति ॥ ११२ ॥ **चिञ** चयने ॥ **चिस्फुरोर्णौ । ६ । १ । ५४ ॥** आत्त्वं वा स्यात् ॥ **अर्तिह्री-व्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ । ७ । ३ । ३६ ॥** चपयति । चययति । ञित्करणसामर्थ्या-दस्य णिजिवकल्पः । चयति । चयते । प्रणिचययति । प्रनिचययति । प्रणिचयते । प्रनिचयते ॥ **नान्ये मितोऽहेतौ ॥** अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः । तेन शमादी-नाममन्तत्वप्रयुक्तं मित्त्वं न ॥ ११३ ॥ **घट्ट** चलने ॥ ११४ ॥ **मुस्त** संघाते ॥ ११५ ॥ **खट्ट** संवरणे ॥ ११६ ॥ **षट्ट स्फिट्ट चुबि** हिंसायाम् ॥ ११९ ॥ **पूल** संघाते ॥ १२० ॥ **पूर्ण** इत्येके **पुणे**त्यन्ये ॥ १२१ ॥ **पुंस** अभिवर्धने ॥ १२२ ॥ **टकि** बन्धने । टङ्कयति । टङ्कति ॥ १२३ ॥ **धूस** कान्तिकरणे । धूसयति । दन्त्यान्तः । मूर्धन्यान्त इत्येके । तालव्यान्त इत्यपरे ॥ १२४ ॥ **कीट** वर्णे ॥ १२५ ॥ **चूर्ण** सङ्कोचने ॥ १२६ ॥ **पूज** पूजायाम् ॥ १२७ ॥ **अर्क** स्तवने । **तपन** इत्येके ॥ १२८ ॥ **शुठ** आलस्ये ॥ १२९ ॥ **शुठि** शोषणे । शुण्ठयति । शुण्ठति ॥ १३० ॥ **जुड** प्रेरणे

---

१ **वेष्टनमिति** । अण्यन्तपरिविषेर्ल्युडिति भावः ॥ २ नन्वण्यन्ततत्प्रकृतिकल्युडन्तेनादनीयवस्तुनो भोजनार्थं भोजनपात्रे निक्षेपोऽप्युच्यते तत्राह—**न तु भोजनेति** । अदनीयवस्तुनो भोजनार्थं भोजनपात्रे निक्षेपरूपा भोजना ॥ भुज्यर्थयमधातोर्हेतुमण्णौ " यमोऽपरिवेषणे " इत्युक्तत्वादस्मिन्नर्थे तस्य निषेधस्याप्र-वृत्त्याऽमन्तत्वेन मित्त्वसिद्धेरिति भावः ॥ ३ ननु ण्यन्ताल्ल्युटि वेष्टनापि परिवेषणशब्देनोच्यते तत्रापि मित्त्वं स्यादत आह—**नापि वेष्टनेति** । अमन्तत्वेनैव सिद्धेः । " यमोऽपरिवेषणे " इत्यत्र तु विनिगमनावि-रहाद् भोजनावद् वेष्टनापि गृह्यते इति भावः । घटादिपठितवचने वेष्टनं तु न परिवेषणशब्देन गृह्यते, घटादि-पठितवचनस्य पूर्वोत्तरसाहचर्येण हेतुमण्णावेव प्रवृत्तेः फलाभावादिति "यम च" इत्यस्य न वैयर्थ्यमिति भावः ॥ ४ **चिस्फुरोरिति** । अत्र सूत्रे-णिशब्देन चुरादिणिच एव ग्रहणम्, साक्षाच्चुरादित्वसिद्धणिश-ब्दानुवादेन विहितत्वेन प्रतिपदोक्तत्वात् । अत एव स्वादेश्चेरन्यस्य स्फुरश्चात्र न ग्रहणम् ॥ ५ नन्वेवमस्य चिञो ञित्त्वं व्यर्थमात्मनेपदस्य "णिचश्च" इत्येव सिद्धेः, न च चिशब्देन सामान्यग्रहणार्थं ञित्त्वमस्त्विति वाच्यम्, सामान्यग्रहणस्य तवानिष्टत्वादत आह—**ञित्करणेति** । इदं माधवाद्यनुसारेण । अन्ये तु ञित्त्वं सामान्यग्रहणार्थमेव । णिशब्देन चिशब्देन चोभयोरपि ग्रहणम् । एवं स्फुरशब्देनापि ईदृशरीत्या । प्रतिपदो-क्तपरिभाषा त्वसार्वत्रिकी । एवं च स्वादेर्हेतुमण्णावात्त्वं भवत्येव ॥ ननु स्थानषष्ठीनिर्देशेन "अलोऽन्त्यस्य" इति सूत्रप्रवृत्त्या च्यंशे दोषाभावेऽपि स्फुरंशेऽनिष्टापत्तिरिति चेन्न, "आदेच उपदेशे-" इत्यत एच्पदानु-वृत्त्या एचो विधानेन रेफस्यात्त्वाप्रवृत्तेः ॥ केचित्तु "स्फुर उः स्फुरुः, चिश्च स्फुरुश्चानयोः समाहारः "चि-स्फुरुः" तस्य "चिस्फुरोः" इति षष्ठ्येकवचनम् । सौत्रत्वाच्च पुंस्त्वम् । एवं च "स्फुरधातोरुवर्णस्यात्त्वम्" इत्यर्थेन न रेफस्यात्त्वम् । गुणं बाधित्वा च पूर्वमात्त्वमिति वदन्ति ॥ तदपरे न क्षमन्ते, अनेकक्लिष्टकल्पनापेक्षया अनुवृत्तेरेव लघीयस्त्वात् ॥

॥ १३१ ॥ **गज मार्ज** शब्दार्थौ । गाजयति । मार्जयति ॥ १३३ ॥ **मर्च** च ॥ मर्चयति ॥ १३४ ॥ **घृ** प्रस्रवणे । स्रावण इत्येके ॥ १३५ ॥ **पचि** विस्तारवचने । पञ्चयति । पञ्चति । पञ्चते इति व्यक्तार्थस्य शपि गतम् ॥ १३६ ॥ **तिज** निशाने । तेजयति ॥ १३७ ॥ **कृत** संशब्दने ॥ **उपधायाश्च । ७ । १ । १०१ ॥** धातोरुपधाभूतस्य ॠत इत्स्यात् ॥ रपरत्वम् । उपधायां चेति दीर्घः । कीर्तयति । 'उत्कृत्' । अचीकृतत् । अचिकीर्तत् ॥ १३८ ॥ **वर्ध** छेदनपूरणयोः ॥ १३९ ॥ **कुबि** आच्छादने । कुम्बयति । कुम्बति । **कुभि** इत्येके ॥ १४१ ॥ **लुबि तुबि** अदर्शने । अर्दने इत्येके ॥ १४३ ॥ **ह्लप** व्यक्तायां वाचि ॥ **क्लप** इत्येके ॥ १४५ ॥ **चुटि** छेदने ॥ १४६ ॥ इल प्रेरणे । एलयति । ऐलिलत् ॥ १४७ ॥ **म्रक्ष** म्लेच्छने ॥ १४८ ॥ **म्लेछ** अव्यक्तायां वाचि ॥ १४९ ॥ **ब्रूस बर्ह** हिंसायाम् ॥ १५१ ॥ केचिदिह **गर्ज गर्द** शब्दे । **गर्ध** अभिकाङ्क्षायामिति पठन्ति ॥ १५४ ॥ **गुर्द पुर्व** निकेतने ॥ १५६ ॥ **जसि** रक्षणे । मोक्षण इति केचित् । जंसयति । जंसति ॥ १५७ ॥ **ईड** स्तुतौ ॥ १५८ ॥ **जसु** हिंसायाम् ॥ १५९ ॥ **पिडि** संघाते ॥ १६० ॥ **रुष** रोषे ॥ **रुट** इत्येके ॥ १६२ ॥ **डिप** क्षेपे ॥ १६३ ॥ **ष्टुप** समुच्छ्राये ॥ १६४ ॥ **आकुस्मादात्मनेपदिनः** ॥ 'कुस्म नाम्नो वा' इति वक्ष्यते तमभिव्याप्येत्यर्थः । अकर्तृगामिफलार्थमिदम् ॥ **चित** संचेतने । चेतयते । अचीचितत ॥ १ ॥ **दशि** दंशने । दंशयते । अददंशत । इदित्त्वाण्णिजभावे दंशति । आकुस्मीयमात्मनेपदं णिच्संनियोगेनैवेति व्याख्यातारः ॥ नलोपे संज्ञिसाहचर्याद् भ्वादेरेव ग्रहणम् ॥ २ ॥ **दसि** दर्शनदंशनयोः । दंसयते । दंसति **दसे**त्यप्येके ॥ ४ ॥ **डप डिप** संघाते ॥ ६ ॥ **तत्रि** कुटुम्बधारणे । तन्त्रयते । चान्द्रास्तु धातुद्वयमिति मत्वा कुटुम्बयते इत्युदाहरन्ति ॥ ८ ॥ **मत्रि** गुप्तपरिभाषणे ॥ ९ ॥ **स्पश** ग्रहणसंश्लेषणयोः ॥ ॥ १० ॥ **तर्ज भर्त्स** तर्जने ॥ १२ ॥ **बस्त गन्ध** अर्दने । बस्तयते । गन्धयते ॥ १४ ॥ **विष्क** हिंसायाम् । **हिष्के**त्येके ॥ १६ ॥ **निष्क** परिमाणे ॥ १७ ॥ **लल** ईप्सायाम् ॥ १८ ॥ **कूण** संकोचने ॥ १९ ॥ **तूण** पूरणे ॥ २० ॥ **भ्रूण** आशाविशङ्कयोः ॥ २१ ॥ **शठ** श्लाघायाम् ॥ २२ ॥ **यक्ष** पूजायाम् ॥ २३ ॥ **स्यम** वितर्के ॥ २४ ॥ **गूर** उद्यमने ॥ २५ ॥ **शम लक्ष** आलोचने ॥ 'नान्ये मित' इति मित्त्वनिषेधः । शामयते ॥ २७ ॥ **कुत्स** अवक्षेपणे ॥२८॥ **त्रुटि** छेदने ॥२९॥ **कुट** इत्येके ॥३०॥

---

१ **अचिकीर्तदिति** । "उपधायाश्च" इतीत्वम् । ततो द्वित्वम् । एवञ्चाभ्यासस्य संयोगपरत्वेन लघुपरत्वाभावात् सन्वद्भावाभावे "दीर्घो लघोः" इति दीर्घत्वं न भवति । यथात्र "णिच्यच आदेशो न द्वित्वे कर्तव्ये" इत्यस्य प्रवृत्तिर्न, तथाग्रे ऊनधातोरुपरि स्फुटीभविष्यति मूले ॥ २ **आकुस्मादिति** । गणसूत्रमिदमात्मनेपदविधायकं तदाह-**अकर्तृगेति** । परगामिक्रियाफले परस्मैपदबाधनार्थमित्यर्थः ॥ ३ **णिच्संनियोगेनैवेति** । अत एव दंशिप्रभृतिभ्य इदित्त्वाण्णिजभावपक्षे "दंशति" इत्यत्रात्मनेपदं न ॥

**गल** स्रवणे ॥ ३१ ॥ **भल** आभण्डने ॥ ३२ ॥ **कूट** आप्रदाने । अवसादने इत्येके ॥ ३३ ॥ **कुट्ट** प्रतापे ॥ ३४ ॥ **वञ्चु** प्रलम्भने ॥ ३५ ॥ **वृष** शक्तिबन्धने । शक्तिबन्धनं प्रजननसामर्थ्यं शक्तिबन्धश्च । वर्षयते ॥ ३६ ॥ **मद** तृप्तियोगे । मादयते ॥ ३७ ॥ **दिव** परिकूजने ॥ ३८ ॥ **गृ** विज्ञाने । गारयते ॥ ३९ ॥ **विद** चेतनाख्याननिवासेषु । वेदयते ॥ ४० ॥ सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे । विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात् ॥ **मान** स्तम्भे । मानयते ॥ ४१ ॥ **यु** जुगुप्सायाम् । यावयते ॥ ४२ ॥ **कुस्म** नाम्नो वा ॥ कुस्मेति धातुः कुत्सितस्मयने वर्तते । कुस्मयते । अचुकुस्मत ॥ ४३ ॥ अथवा कुस्मेति प्रातिपदिकं ततो धात्वर्थे णिच् ॥ इत्याकुस्मीयाः ॥ ॥ **चर्च** अध्ययने ॥ १ ॥ **बुक्क** भषणे ॥ २ ॥ **शब्द** उपसर्गादाविष्कारे च । चाद्भषणे । प्रतिशब्दयति । प्रतिश्रुतमाविष्करोतीत्यर्थः ॥ **अनुपसर्गाच्च** ॥ आविष्कारे इत्येव । शब्दयति ॥ ३ ॥ **कण** निमीलने ॥ काणयति ॥ ' णौ चङ्युपधाया ह्रस्वः ' ॥ काण्यादीनां वेति विकल्प्यते । अचीकणत् । अचकाणत् ॥ ४ ॥ **जभि** नाशने । जम्भयति । जम्भति ॥ ५ ॥ **षूद** क्षरणे । सूदयति । असूषुदत् ॥ ६ ॥ **जसु** ताडने । जासयति । जसति ॥ ७ ॥ **पश** बन्धने । पाशयति ॥ ८ ॥ अम रोगे आमयति । ' नान्ये मितः ' इति निषेधः । **अम** गत्यादौ शपि गतः । तस्माद्धेतुमण्णौ न कम्यमिचमामिति निषेधः । आमयति ॥ ९ ॥ **चट स्फुट** भेदने । विकासे शशपोः स्फुटति स्फोटते इत्युक्तम् ॥ ११ ॥ **घट** संघाते । घाटयति ॥ १२ ॥ **हन्त्यर्थाश्च** ॥ नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्त इत्यर्थः ॥ **दिवु** मर्दने ॥ उदित्त्वाद्देवतीत्यपि ॥ १३ ॥ **अर्ज** प्रतियत्ने । अयमर्थान्तरेऽपि ।

---

१ **भल आभण्डने इति** । आभण्डनमत्र लक्षणस्वरूपप्रामाण्यादिप्रकारकज्ञानानुकूलव्यापाररूपम् ॥ २ आप्रवणे इति पाठान्तरम् ॥ ३ " नाम्नो वा " इत्यंशं व्याचष्टे-**अथवेति** ॥ नामत्वमस्य नाव्युत्पन्नत्वेन । किं तु कुशब्दपूर्वकस्मयतेः " अन्येभ्योऽपि " इति डप्रत्यये कुगति-" इति समासे बोध्यम् ॥ **धात्वर्थे इति** । करोतीत्यर्थे आचष्टे इत्यर्थे वेत्यर्थः । " धात्वर्थे " इत्यस्य लाभस्तु " प्रातिपदिकाद्धात्वर्थे बहुलम्-" इत्यस्य व्यापारसत्त्वात् ॥ ४ **शब्द उपसर्गादिति** । यद्यपि शब्दशब्दात् " तत्करोति " इति णिचि " शब्दयति प्रतिशब्दयति " इत्यादि सिद्धम्, तथापि " शब्दवैर-" इति क्यङा बाधाभावाय ग्रहणम्, अन्यथा " शब्दवैरकलह-" इत्यत्र शब्दशब्दस्य विशिष्योपादानात् क्यङा णिचो बाधः स्यात् ॥ ५ **नान्ये मित इति** । " न कम्यमि-" इति निषेधस्तु चमिसाहचर्यात् पूर्वोत्तरसाहचर्याच्च हेतुमण्णावेवेति भावः ॥ ६ **तस्माद्धेत्विति** । " न कम्यमि-" इति निषेधाद् वृद्धिर्भवत्येवेति भावः ॥ ७ **हन्त्यर्थाश्चेति** । तेषां तत्तद्गणे पाठसामर्थ्याद् णिज् वा । एवं " कृपेश्च " इत्यनेन स्वार्थेऽत्र णिज्विधानात् कृपुधातोर्भ्वादौ पाठसामर्थ्यात् कृपेरपि णिज्विकल्पः । " हन्त्यर्थाश्च " इत्येतद्वचनसामर्थ्यात् " **निवृत्तप्रेषणात्** " इत्यसार्वत्रिकम् । अन्यथा हन्त्यर्थेभ्योऽपि धातुभ्यो निवृत्तप्रेषणेभ्यो हेतुमण्णौ, स्वार्थे णिचि योऽर्थस्तस्य लाभे " हन्त्यर्थाश्च " इति स्वार्थे णिज्विधायकं वचनं व्यर्थमेव स्यात् ॥ ८ **उदित्त्वादिति** । तद्धि क्त्वायाम्-" उदितो वा " इतीड्विकल्पार्थं क्रियते । यदि चास्माद् णिज् विकल्पेन न भवेत्, तर्हि णिचा व्यवधानाद् इडागमप्राप्तिरेव नेति कृत्वा उदित्करणं व्यर्थमेव स्यात् । तस्मादस्माद् णिजनित्य इति भावः ॥

द्रव्यमर्जयति ॥ १४ ॥ **घुषिर्** विशब्दने । घोषयति । 'घुषिरविशब्दने' इति सूत्रेऽविशब्दन इति निषेधाल्लिङ्गादनित्योऽस्य णिच् । घोषति । इरित्त्वादङ्वा । अघुषत् । अघोषीत् । ण्यन्तस्य तु अजूघुषत् ॥ १५ ॥ आङः **क्रन्द** सातत्ये । भौवादिकः क्रन्दधातुराह्वानाद्यर्थे उक्तः स एवाङ्पूर्वो णिचं लभते सातत्ये । आक्रन्दयति । अन्ये तु 'आङ्पूर्वो घुषिः क्रन्दसातत्ये' इत्याहुः । आघोषयति ॥ १६ ॥ **लस** शिल्पयोगे ॥ १७ ॥ **तसि भूष** अलङ्करणे । अवतंसयति । अवतंसति । भूषयति ॥ १९ ॥ **मोक्ष** असने । मोक्षयति ॥ २० ॥ **अर्ह** पूजायाम् ॥ २१ ॥ **ज्ञा** नियोगे । आज्ञापयति ॥ २२ ॥ **भज** विश्राणने ॥ २३ ॥ **शृधु** प्रहसने । अशशर्धत् । अशीशृधत् ॥ २४ ॥ **यत** निकारोपस्कारयोः ॥ २५ ॥ **रक लग** आस्वादने ॥ **रघ** इत्येके । **रगे**त्यन्ये ॥ २९ ॥ **अञ्चु** विशेषणे । अञ्चयति । उदित्त्वमिड्विकल्पार्थम् । अत एव विभाषितो णिच् । अञ्चति । एवं शृधुजसुप्रभृतीनामपि बोध्यम् ॥ ३० ॥ **लिगि** चित्रीकरणे । लिङ्गयति । लिङ्गति ॥ ३१ ॥ **मुद** संसर्गे । मोदयति सक्तून् घृतेन ॥ ३२ ॥ **त्रस** धारणे । ग्रहण इत्येके । वारण इत्यन्ये ॥ ३३ ॥ **उध्रस** उञ्छे ॥ उकारो धात्ववयव इत्येके । नेत्यन्ये । ध्रासयति । ध्रसति । उध्रासयति ॥ ३५ ॥ **मुच** प्रमोचने मोदने च ॥ ३६ ॥ **वस** स्नेहच्छेदापहरणेषु ॥ ३७ ॥ **चर** संशये ॥ ३८ ॥ **च्यु** सहने । हसने चेत्येके । च्यावयति ॥ **च्युसे**त्येके । च्योसयति ॥ ४० ॥ **भुवो**ऽवकल्कने । अवकल्कनं मिश्रीकरणमित्येके । चिन्तनमित्यन्ये । भावयति ॥ ४१ ॥ **कृपे**श्च । कल्पयति ॥ ४२ ॥ **आ स्वदः सकर्मकात्** ॥ स्वदिमभिव्याप्य संभवत्कर्मभ्य एव णिच् । **ग्रस** ग्रहणे । ग्रासयति फलम् ॥ १ ॥ **पुष** धारणे । पोषयत्याभरणम् ॥ २ ॥ **दल** विदारणे । दालयति ॥ ३ ॥ **पट पुट लुट तुजि मिजि पिजि लुजि भजि लघि त्रसि पिसि कुसि दशि कुशि घट घटि बृहि बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु** भाषार्थाः ॥ पाटयति । पोटयति । लोटयति । तुञ्जयति । तुञ्जति । एवं परेषाम् । घाटयति । घण्टयति ॥ **नाग्लोपिशास्वृदिताम् । ७ । ४ । २ ॥** णिच्यग्लोपिनः शास्तेरृदितां च उपधाया ह्रस्वो न स्याच्चङ्परे णौ । अलुलोकत् । अलुलोचत् । वर्तयति । वर्धयति । उदित्त्वाद्वर्तति । वर्धति । ॥ ३४ ॥ **रुट लजि अजि दसि भृशि रुशि शीक नट पुटि जिवि रघि लघि अहि रहि महि** च ॥ ४९ ॥ **लडि तड नल** च ॥ ५२ ॥ **पूरी** आप्यायने ॥

---

१ घुषिर् विशब्दने इति । विशब्दनेऽर्थे घुषिरेति चुरादौ द्रष्टव्यः ॥ २ निषेधाल्लिङ्गादिति । अस्माण्णिचो नित्यत्वेऽस्मात् परा निष्ठा नास्तीति स प्रतिषेधो व्यर्थः स्यादिति भावः । न च भ्वादिपठिताद् यदा निष्ठा तदा तद्व्यावृत्त्यर्थं तदस्त्विति वाच्यम्, भ्वादौ "घुषिरविशब्दने" इत्युक्तत्वेन तस्य विशब्दने वृत्त्यभावात् । न च चुरादिण्यन्तात्क्विपि णिलोपे तत आचारे क्विपि निष्ठायां संभवोऽस्तीति वाच्यम्, हलन्तेभ्य आचारे क्विपोऽभावात् । णिलोपस्य स्थानिवत्त्वाच्च । "क्वौ लुप्तम्-" इति त्वसार्वत्रिकम् । एवमिड्विकरणमपि णिचः पाक्षिकत्वे ज्ञापकं बोध्यम् ॥

ईदित्त्वं निष्ठायामिण्निषेधाय । अत एव णिज्वा । पूरयति । पूरति ॥ ५३ ॥ **रुज** हिंसायाम् ॥ ५४ ॥ **ष्वद** आस्वादने । **स्वाद** इत्येके ॥ असिष्वदत् । दीर्घस्य त्वषोपदेशत्वात् । असिस्वदत् ॥ ५६ ॥ इत्यास्वदीयाः ॥ **आ धृषाद्वा** ॥ इत ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य ॥ **युज पृच** संयमने । योजयति । योजति । अयौक्षीत् । पर्चयति । पर्चति । पर्चिता । अपर्चीत् ॥ २ ॥ **अर्च** पूजायाम् ॥ ३ ॥ **षह** मर्षणे । साहयति । 'स एवायं नागः सहति कलभेभ्यः परिभवम्' ॥ ४ ॥ **ईर** क्षेपे ॥ ५ ॥ **ली** द्रवीकरणे । लाययति । लयति । लेता ॥ ६ ॥ **वृजी** वर्जने । वर्जयति । वर्जति ॥ ७ ॥ **वृञ्** आवरणे । वारयति । वरति । वरते । वरिता । वरीता ॥ ८ ॥ **जॄ** वयोहानौ । जारयति । जरति । जरिता । जरीता ॥ ९ ॥ **ज्रि** च । ज्राययति । ज्रयति । ज्रेता ॥ १० ॥ **रिच** वियोजनसंपर्चनयोः । रेचयति । रेचति । रेक्ता ॥ ११ ॥ **शिष** असर्वोपयोगे । शेषयति ॥ शेषति । शेष्टा । अशिक्षत् । अयं विपूर्वोऽतिशये ॥ १२ ॥ **तप** दाहे । तापयति । तपति । तप्ता ॥ १३ ॥ **तृप** तृप्तौ । सन्दीपन इत्येके । तर्पयति । तर्पति । तर्पिता ॥ १४ ॥ **छृदी** सन्दीपने । छर्दयति । छर्दति । छर्दिता । छर्दिष्यति । सेसिचीति विकल्पो न । साहचर्यात्तत्र रौधादिकस्यैव ग्रहणात् ॥ १५ ॥ **चृप छृप तृप दृप** सन्दीपन इत्येके । चर्पयति । छर्पयति ॥ १९ ॥ **दृभी** भये । दर्भयति । दर्भति । दर्भिता ॥ २० ॥ **दृभ** सन्दर्भे । अयं तुदादावीदित् ॥ २१ ॥ **श्रथ** मोक्षणे । हिंसायामित्येके ॥ २२ ॥ **मी** गतौ । माययति । मयति । मेता ॥ २३ ॥ **ग्रन्थ** बन्धने । ग्रन्थयति । ग्रन्थति ॥ २४ ॥ **शीक** आमर्षणे ॥ २५ ॥ **चीक** च ॥ २६ ॥ **अर्द** हिंसायाम् । स्वरितेत् । अर्दयति । अर्दति । अर्दते ॥ २७ ॥ **हिंसि** हिंसायाम् । हिंसयति । हिंसति । हिनस्तीति श्नमि गतम् ॥ २८ ॥ **अर्ह** पूजायाम् ॥ २९ ॥ आङः **षद** पद्यर्थे ॥ आसादयति । आसीदति । पाघ्रेति सीदादेशः । आसत्ता । आसात्सीत् ॥ ३० ॥ **शुन्ध** शौचकर्मणि । शुन्धिता । अशुन्धीत् । अशुन्धिष्टाम् ॥ ३१ ॥ **छद** अपवारणे । स्वरितेत् ॥ ३२ ॥ **जुष** परितर्कणे । परितर्कणमूहो हिंसा वा । परितर्पण इत्यन्ये । परितर्पणं परितृप्तिक्रिया । जोषयति । जोषति ।

१ **असिष्वददिति** । षोपदेशलक्षणे स्वञ्जिसाहचर्येण भ्वादेः, निरनुबन्धकपरिभाषयाऽस्य च प्रणादिति भावः ॥ २ **अर्च पूजायामिति** । अस्य भ्वादौ पाठोऽनार्षः, अनेनैव सिद्धेः । एवं तप धातोर्वदधातोश्च भ्वादौ पाठोऽनावश्यकः, आधृषीयत्वेन णिजभावे समीहितरूपसिद्धेः । षहधातोस्तु तदर्थे भ्वादौ पाठोऽन्यथासिद्धिशून्य एवेति बोध्यम् ॥ ३ **लाययतीति** । णिचि वृद्धावायादेशः । "लीलोः–" इति नुक् तु न, लासाहचर्याद्धेतुमण्णावेव तस्य प्रवृत्तेः ॥ ४ **लेतेति** । "विभाषा लीयतेः" इत्यात्त्वं तु न, "लिनातिलीयत्योर्यका निर्देशः" इति भाष्यात् । इदं भाष्यं लाययतीत्यत्राप्युन्नेयम् ॥ ५ **छृदीति** । अस्य धृषादिपाठे फलं चिन्त्यम् । ईदित्करणादेव णिज्विकल्पसिद्धेः । तद्धीदित्करणं "श्वीदितो निष्ठायाम्" इति निष्ठायामिण्निषेधार्थं क्रियते, यदि चास्माद् णिज् विकल्पो न स्यात् तर्हि णिचा व्यवधानाद् अनन्तरा निष्ठा नास्त्येवेति व्यर्थमेव तत्स्यात् । एवं दृभीतनुमृजधातूनां पाठो व्यर्थ एवेति बोध्यम् ॥

प्रीतिसेवनयोर्जुषते इति तुदादौ ॥ ३३ ॥ **धूञ्** कम्पने । णावित्यधिकृत्य ॥ **धूञ्प्रीञोर्नुग्वक्तव्यः** *॥ धूनयति । धवति । धवते । केचित्तु धूञ्प्रीणोरिति पठित्वा: प्रीणातिसाहचर्याद्धुनातेरेव नुकमाहुः[1] । धावयति ॥ ३४ ॥ अयं स्वादौ क्र्यादौ तुदादौ च । स्वादौ ह्रस्वश्च । तथा च कविरहस्ये–॥ 'धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् ॥ वायुर्विधूनयति चम्पकपुष्परेणून्यत्कानने धवति चन्दनमञ्जरीश्च ॥ १ ॥ **प्रीञ्** तर्पणे । प्रीणयति । धूञ्प्रीणोरिति हरदेत्तोक्तपाठे[2] तु । प्राययति । प्रयति । प्रयते ॥ ३५ ॥ **श्रन्थ ग्रन्थ** सन्दर्भे ॥ ३७ ॥ **आप्लृ** लम्भने । आपयति । आपिपत् । आपति । आप्ता । आपत् । स्वरितेदयमित्येके । आपते ॥ ३८ ॥ **तनु** श्रद्धोपकरणयोः । उपसर्गाच्च दैर्घ्ये ॥ तानयति । वितानयति । तनति । वितनति ॥ ३९ ॥ **चन** श्रद्धोपहननयोरित्येके । चानयति । चनति ॥ ४० ॥ **वद** सन्देशवचने । वादयति । स्वरितेत् । वदति । वदते । अनुदात्तेदित्येके । ववदतुः । ववदिथ । ववदे । वद्यात् ॥ ४१ ॥ **वच** परिभाषणे । वाचयति । वचति । वक्ता । अवाक्षीत् ॥ ४२ ॥ **मान** पूजायाम् । मानयति । मानति । मानिता । विचारणे तु भौवादिको नित्यसन्नन्तः । स्तम्भे मानयते ॥ इत्याकुस्मीयाः । मन्यते इति दिवादौ । मनुते इति तनादौ च ॥ ४३ ॥ **भू** प्राप्तावात्मनेपदी । भावयते । भवते । णिचूसन्नियोगेनैवात्मनेपदमित्येके । भवति ॥ ४४ ॥ **गर्ह** विनिन्दने ॥ ४५ ॥ **मार्ग** अन्वेषणे ॥ ४६ ॥ **कठि** शोके ॥ उत्पूर्वोऽयमुत्कण्ठायाम् । कण्ठते इत्यात्मनेपदी गतः ॥ ४७ ॥ **मृजू** शौचालंकारयोः । मार्जयति । मार्जति । मार्जिता । मार्ष्टा ॥ ४८ ॥ **मृष** तितिक्षायाम्, स्वरितेत् । मर्षयति । मर्षति । मर्षते । मृष्यति । मृष्यते इति दिवादौ ॥ सेचने शपि मर्षति ॥ ४९ ॥ **धृष** प्रहसने । धर्षयति । धर्षति ॥ ५० ॥ इत्याधृषीयाः ॥ **अथादन्ताः** ॥ **कथ** वाक्यप्रबन्धे । अल्लोपस्य स्थानिवद्भावान्न वृद्धिः । कथयति । अग्लोपित्वान्न दीर्घसन्वद्भावौ । अचकथत् ॥ १ ॥ **वर** ईप्सायाम् । वरयति । वारयतीति गतम् ॥ २ ॥ **गण** संख्याने । गणयति ॥ **ई च गणः । ७ । ४ । ९७ ॥** गणेरभ्यासस्य ईत्स्याच्चङ्परे णौ ॥ अजीगणत् । अजगणत् ॥ ३ ॥ **श्वठ शठ** सम्यगवभाषणे ॥ ५ ॥ **पठ वठ** ग्रन्थे ॥ ७ ॥ **रह** त्यागे । अररहत् ॥ ८ ॥ **स्तन गदी**[3] देवशब्दे । स्तनयति । गदयति । अजगदत् ॥ १० ॥ **पत** गतौ वा ॥ वा णिजन्तः । वाऽदन्त इत्येके । आद्ये । पतयति । पतति ।

---

१ **नुकमाहुरिति** । "शाच्छासा–" इति सूत्रे भाष्ये "धूञ्प्रीञोः" इत्यस्य पाठात् तत्साहचर्येण हेतुमण्णावेवास्य प्रवृत्तिः । "वायुर्विधूनयति" इति च हेतुमण्ण्यन्तस्यैव रूपम् । एवं प्रीञ् धातोः "प्राययति" इत्येव रूपमिति केचित् ॥ २ **हरदत्तेति** । अनेन भाष्यासम्मतत्वं सूचितम् ॥ ३ **स्तनगदी इति** । इगन्ताद् द्विवचनम् । प्रकरणाच्चादन्तत्वम् । "स्तन–गद–देव–" शब्दे इति भ्रममपाकर्तुमिका निर्देश इति केचित् । तन्मन्दम्, तथाभीष्टत्वे त्वसन्देहाय "देवस्तनगद" इत्येव ब्रूयात् पाणिनिः, दी–वे–धी–वीटामिति–सूत्रवत् । व्याख्यानान्निर्णय इति चेत् तथापाठेऽपि निर्णयसम्भव इति तत्त्वम् ॥

पतांचकार । अपतीत् । द्वितीये । पातयति । अपीपतत् ॥ ११ ॥ **पष** अनुपसर्गात् । गताविर्त्येव । पषयति ॥ १२ ॥ **स्वर** आक्षेपे । स्वरयति ॥ १३ ॥ **रच** प्रतियत्ने ॥ रचयति ॥ १४ ॥ **कल** गतौ संख्याने च ॥ १५ ॥ **चह** परिकल्कने । परिकल्कनं दम्भः शाठ्यं च ॥ १६ ॥ **मह** पूजायाम् । महयति । महतीति शपि गतम् ॥ १७ ॥ **सार कृप श्रथ** दौर्बल्ये । सारयपि । कृपयति । श्रथयति ॥ २० ॥ **स्पृह** ईप्सायाम् ॥ २१ ॥ **भाम** क्रोधे । अबभामत् ॥ २२ ॥ **सूच** पैशुन्ये । सूचयति । अषोपदेशत्वान्न षः । असूसुचत् ॥ २३ ॥ **खेट** भक्षणे । तृतीयान्त इत्येके ॥ **खोट** इत्यन्ये ॥ २६ ॥ **क्षोट** क्षये ॥ २७ ॥ **गोम** उपलेपने । अजुगोमत् ॥ २८ ॥ **कुमार** क्रीडायाम् । अचुकुमारत् ॥ २९ ॥ **शील** उपधारणे । उपधारणमभ्यासः ॥ ३० ॥ **साम** सान्त्वप्रयोगे । अससामत् । साम सान्त्वने इत्यतीतस्य तु—असीषमत् ॥ ३१ ॥ **वेल** कालोपदेशे । वेलयति ॥ ३२ ॥ **काल** इति पृथग्धातुरित्येके । कालयति ॥ ३३ ॥ **पल्पूल** लवनपवनयोः ॥ ३४ ॥ **वात** मुखसेवनयोः । गतिसेवनयोरित्येके । वातयति । अववातत् ॥ ३५ ॥ **गवेष** मार्गणे । अजगवेषत् ॥ ३६ ॥ **वास** उपसेवायाम् ॥ ३७ ॥ **निवास** आच्छादने । अनिनिवासत् ॥ ३८ ॥ **भाज** पृथक्कर्मणि ॥ ३९ ॥ **सभाज** प्रीतिदर्शनयोः । प्रीतिसेवनयोरित्यन्ये । सभाजयति ॥ ४० ॥ **ऊन** परिहाणे ॥ ऊनयति । ओः पुयण्जीति सूत्रे पर्ययोरिति वक्तव्ये वर्गप्रत्या-

---

१ "पल्पूल" इति, ओष्ठ्यद्वयवान् । पल्पूलनं शोधनद्रव्यम् । इति तत्तिरीयसंहिताभाष्यम् । शोधनद्रव्यम्–"सावण" इति प्रसिद्धम् । यकारघटितः पाठोऽसाधुः ॥ २ ननूनधातोर्णिचि चङि न शब्दस्येष्टं द्वित्वं दुर्लभम्, द्वित्वात्पूर्वमेव–आर्धधातुकोपदेशकाल एव लोपविधानेनाल्लोपस्य प्रथमत एव प्रवृत्त्याऽन्तरङ्गत्वादल्लोपप्रवृत्तेः । "द्विर्वचनेऽचि" इति निषेधस्तु नाशङ्क्यः, णिचो द्वित्वनिमित्तत्वाभावादत आह–**ओः पुयण्जीति** । "विभावयिषति" "अबीभवत्" इत्यादावन्तरङ्गत्वाद् वृद्धावावादेशे "सन्यतः" इतीत्त्वेनैव सिद्धौ सम्पूर्णसूत्रस्यैव ज्ञापकता युक्तेति भ्रान्तिमपाकर्तुमाह–**पययोरिति** । पूङो यौतेश्च सनि "स्मिपूङ्रञ्ज्वशां सनि" "सनीवन्तर्द्धभ्रस्जदम्भुश्रिस्वृयूर्णु" इति सूत्राभ्यामिटि द्वित्वनिमित्तसत्त्वेन "द्विर्वचनेऽचि" इत्यस्य प्रवृत्त्या द्वित्वात् पूर्वं गुणाभावे पूयुशब्दयोरेव द्वित्वेऽभ्यासे उकारसत्त्वेन "यियविषति पिपविषते" इत्यत्रेत्त्वविधानार्थं "पययोः" इत्येव वाच्यं किं वर्गप्रत्याहाराश्रयणेन । न च "पिपविषते" इत्यादौ गुणावादेशयोः "अचः परस्मिन्–" इति स्थानिवत्त्वेनावर्णपरकयकारादिपरत्वाभाव इति वाच्यम्, "पययोः" इत्युपादानसामर्थ्येनैव स्थानिवत्त्वाभावात् । एवं च वर्गादिग्रहणं व्यर्थीभूय णिचो द्वित्वनिमित्तत्वाभावेऽपि द्वित्वे कर्तव्ये णिज्निमित्तकाजादेशस्य निषेधं ज्ञापयति । तथा च "द्वित्वे कर्तव्ये णिज्निमित्तकादेशो न भवति" इति वचनव्यक्त्या निषेधस्य बलवत्त्वात्तद्विषयेऽन्तरङ्गस्यापि कार्यस्य पूर्वमप्रवृत्तिरिति भावः ॥ ज्ञाप्यांशस्वरूपमाह–**णिचीति** । णिज्निमित्तक इत्यर्थः । "णिचि परतः" इत्यर्थस्तु न युक्तः, "पुस्फारयिषति" इत्यादौ रेफेण व्यवधानात् निषेधप्रवृत्त्यनुपपत्तेः । अत्र णिज्ग्रहणं णिसामान्योपलक्षणम् । तेन आस्यशब्दात् "णिङङ्गान्निरसने" इति णिङ्प्रत्ययेऽपि निषेधप्रवृत्त्या "आसस्यत" इत्यत्र प्रक्रियादशायामुत्तरखण्डेऽवर्णसत्त्वेन निषेधसिद्धिः । न च "णिचि" इत्यस्य सूत्रेऽभावेन कथं तल्लाभ इति वाच्यम्, नानेनापूर्वो निषेधो ज्ञाप्यते किं तु "द्वित्वनिमित्तेऽजादौ प्रत्यये परेऽजादेशो न" इत्यर्थकस्य "द्विर्वचनेऽचि" इति सूत्रस्य एकव्यवधाने प्रवृत्तिरित्येव "येन नाव्यवधानम्" इति नान्येन ज्ञाप्यते इति तल्लाभसम्भवात् । तेन "दिदवनीयिषति" इत्यादौ नातिप्रसङ्गः, अनेकव्यवधात् । एतन्मूलकमेव "अचः" इति स्वरूपकथनम् । एवं–

हारजग्रहो लिङ्गं 'णिच्यच आदेशो न स्याद्द्वित्वे कार्ये, इति । यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठिते रूपे वाऽवर्णो लभ्यते तत्रैवायं निषेधः । ज्ञापकस्य सजातीयापेक्षत्वात् । तेनाचिकीर्तदिति सिद्धम् । प्रकृते तु नशब्दस्य द्वित्वं तत उत्तरखण्डेऽल्लोपः । औननत् । मा भवानूननत् ॥ ४१ ॥ **ध्वन** शब्दे । अदध्वनत् ॥ ४२ ॥ **कूट** परितापे । परिदाहे इत्यन्ये ॥ ४३ ॥ **सङ्केत ग्राम कुण गुण** च आमन्त्रणे ॥ चात्कूटोऽपि । कूटयति । सङ्केतयति । ग्रामयति । कुणयति । गुणयति ॥ पाठान्तरम्-**केत** श्रावणे निमन्त्रणे च । केतयति । अभिकेतयति । **कुण गुण** चामन्त्रणे ॥ चकारात्केतने । **कूण** सङ्कोचने इति ॥ ४७ ॥ **स्तेन** चौर्ये । अतिस्तेनत् ॥ ४८ ॥ **आ गर्वादात्मनेपदिनः** ॥ **पद** गतौ । पदयते । अपपदत ॥ १ ॥ **गृह** ग्रहणे । गृहयते ॥ २ ॥ **मृग** अन्वेषणे । मृगयते । मृग्यतीति कण्ड्वादिः ॥ ३ ॥ **कुह** विस्मापने ॥ ४ ॥ **शूर वीर** विक्रान्तौ ॥ ६ ॥ **स्थूल** परि बृंहणे ॥ स्थूलयते । अतुस्थूलत ॥ ७ ॥ **अर्थ** उपयाच्ञायाम् । अर्थयते । आर्तथत ॥ ८ ॥ **सत्र** सन्तानक्रियायाम् । अससत्रत ॥ अनेकाच्त्वान्न षोपदेशः । सिसत्रयिषते ॥ ९ ॥ **गर्व** माने । गर्वयते । अदन्तत्वसामर्थ्याण्णिज्विकल्पः[1] । धातोरन्त उदात्तो

---

-च "द्वित्वनिमित्तेऽजादौ प्रत्यये एकप्रत्ययातिरिक्ताव्यवहिते परे द्वित्वनिमित्तप्रत्ययव्यवधायकैकप्रत्ययनिमित्तकादेशो न" इति "द्विर्वचनेऽचि" इति सूत्रस्यार्थः सम्पद्यते ॥ **इतीति** । इत्यत्रेत्यर्थः । "वर्गादिग्रहो लिङ्गम्" इति पूर्वेणान्वयः ॥ नन्वेवम्-"अचिकीर्तत्" इत्यत्र पूर्वम् "उपधायाश्च" इतीत्वमपि न स्यादत आह-**यत्र द्विरुक्ताविति** । यद्यपि "अचिकीर्तत्" इत्यत्र "त" इत्यवर्णपरत्वमस्ति तथापि चङ्सहितस्योत्तरखण्डत्वाभावान्न दोषः ॥ **आद्योऽजिति** स्पष्टार्थम् । ननु यद्यवर्णपरत्वं परिनिष्ठितरूपे गृह्येत तदा "औननत्" इत्याद्यसिद्धिरत आह-**प्रक्रियायामिति** । द्वित्वप्रवृत्तिवेलायामित्यर्थः ॥ ननु यदि द्वित्वप्रवृत्तिवेलायामेवावर्णपरत्वं गृह्यते तदा "चुक्षावयिषति" इत्याद्यसिद्ध्यापत्तिरत आह-**परिनिष्ठितेति** । नत्वत्रैवेत्याग्रह इति भावः ॥ ननु कथमस्य लाभ इत्यत आह-**ज्ञापकस्य सजातीयेति** । पुयण्जा ह्यभ्यासोत्तरखण्डे अवर्णपरा भवन्ति । अतस्तथैव ज्ञापकम् । "अचिकीर्तत्" इत्यत्र तु प्रक्रियायां परिनिष्ठितरूपे वाऽभ्यासोत्तरखण्डस्याऽऽद्यचोऽवर्णरूपत्वाभावान्न दोष इति भावः ॥ ननु "प्रक्रियादशायां परिनिष्ठिते वा" इति स्वीकारे "हलिकल्योरदन्तत्वनिपातनं कृतायां वृद्धौ टिलोपज्ञापकम्" इति भाष्यासङ्गतिः, ण्यन्ताभ्यामाभ्यां चङि "यथेष्टं नामधातुषु" इत्यनेन द्वितीयस्य लकारस्य द्वित्वे "अहलल्त्" इत्यादौ अभ्यासेऽकारश्रवणेन चारितार्थ्यादिति वाच्यम्, "कृतायां वृद्धौ टिलोपः" इत्यत्र हलिकल्योरदन्तत्वनिपातनस्य ज्ञापकत्वप्रतिपादनपरभाष्यप्रामाण्येन-"कण्ड्वादेस्तृतीयस्य" इत्युत्तरं "यथेष्टम्" इत्यस्य पाठेन च-त्र्येकाचामेव तत्र भाष्ये उदाहृतत्वेन च-द्वित्वप्रवृत्तियोग्यैकाच्त्रयसंनिधाने एव "यथेष्टम्" इत्यस्य प्रवृत्तेरदोषात् । तद्ध्वनयन्नाह-**औननदिति** । ननु यथा "कथ" इत्यत्राकारोच्चारणं वृद्ध्यभावार्थम्, तथा "ऊन" इत्यत्राकारोच्चारणं नोपधाकार्यप्रतिबन्धार्थं दीर्घोकारस्य सत्त्वादित्यदन्तत्वसामर्थ्यादल्लोपविकल्पोऽस्त्विति चेन्न, शास्त्रबाधस्यान्याय्यत्वात् । मम तु न कस्यापि शास्त्रस्य बाधः । एतेन णिज्विकल्पार्थं तदित्यपास्तम् । अभ्यासेऽकारस्य श्रवणेनाकारोच्चारणस्य चारितार्थ्यात्सामर्थ्यस्यैवाभावात् । किञ्च अस्यादन्तत्वमग्लोपित्वसम्पादनेन ह्रस्वाभावार्थम् । तद् ध्वनयन्नाह-**मा भवानूननदिति** । खण्डनप्रकारस्तु विस्तरभिया नेह प्रपञ्चि ॥

[1] **णिज्विकल्प इति** । "स्थूलसत्रसूत्र" इति धातूनामदन्तत्वं तु अनेकाच्त्वेनाषोपदेशत्वार्थमिति न तेभ्यो णिज्विकल्प इति भावः ॥

लिख्याम् च फलम् । एवमग्रेऽपि ॥ १० ॥ इत्यागर्वीयाः ॥ सूत्र वेष्टने । सूत्रयति । असु-सूत्रत् ॥ १ ॥ मूत्र प्रस्रवणे । मूत्रयति । मूत्रति ॥ २ ॥ रूक्ष पारुष्ये ॥ ३ ॥ पार तीर कर्मसमाप्तौ । अपपारत् । अतितीरत् ॥ ५ ॥ पुट संसर्गे ॥ पुटयति ॥ ६ ॥ धेक दर्शने इत्येके ॥ अदिधेकत् ॥ ७ ॥ कत्र शैथिल्ये । कत्रयति । कत्रति ॥ कर्तेत्यप्येके । कर्तयति । कर्तति ॥ ९ ॥ प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च ॥ प्रातिपदिकाद्धात्वर्थे णिच् स्यादिष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः । पटुमाचष्टे पटयति । परत्वाद्वृद्धौसत्यां टिलोपः । अपीपटत् ॥ णौ चङीत्यत्र भाष्ये तु वृद्धेर्लोपो बलीयानिति स्थितम् । अपपटत् ॥ तत्करोति तदाचष्टे ॥ पूर्वस्य प्रपञ्चः ॥ करोत्याचष्ट इति धात्वर्थमात्रं णिजर्थः ॥ लडर्थस्त्वविवक्षितः ॥ तेनातिक्रामति ॥ अश्वेनातिक्रामति अश्वयति । हस्तिनातिक्रामति हस्तयति ॥ धातुरूपं च ॥ णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते चशब्दोऽनुक्तसमुच्चयार्थः । तथा च वार्तिकम् ॥ आख्यानात्कृतस्तदा-

---

१ चुराद्यन्तर्गणसूत्रमाह-प्रातिपदिकादिति । " णौ " इत्युपमेये सप्तमीदर्शनात् सप्तम्यन्ताद् वतिरित्याह-इष्ठे यथेति । एवं च इष्ठन्निमित्तककार्यस्यैवायमतिदेशः । अत एव " भावयति " इत्यादौ "इष्टस्य यिट् च " इति यिडागमो न ॥ २ परत्वाद् वृद्धाविति । अत एव " मुण्डमिश्र-" इत्यत्र " हलकल" इति हलिकल्योरदन्तत्वनिपातनं भाष्योक्तं सङ्गच्छते । वृद्धेः पूर्वं लोपे तु इकारलोपेऽप्यग्लोपित्वमस्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति इदमेवात्र ज्ञापकं बोध्यम् ॥ न च लोपस्य नित्यत्वात् " परत्वात् " इत्यसङ्गतमिति वाच्यम्, शब्दान्तरप्राप्त्या लोपस्याप्यनित्यत्वात् । एवं चोभयोरनित्ययोः परत्वाद् वृद्धौ आवादेशात्पूर्वं परत्वादाङ्गत्वाच्च लोप इत्यनग्लोपित्वाद् " अपीपटत् " इत्यत्र सन्वत्त्वं भवत्येवेति भावः । नचास्मिन् पक्षे वारि आख्यत-" अवीवरत " इत्यादौ वृद्धौ कृतायां कृतस्यापि टिलोपस्य स्थानिवत्त्वाद्ध्रस्वत्वं न स्यादिति वाच्यम्, चङ्परनिर्ह्रासे स्थानिवद्भावनिषेधात् । इदं " मुण्डमिश्र-" इति सूत्रे भाष्यकैयटयोः स्पष्टम् ॥ ३ वृद्धेर्लोप इति । अत एव " नाग्लोपि " इति सूत्रे " अग्लोपि " इत्यत्र " अक् " इति प्रत्याहाराश्रयणं सार्थकम् । तद्धि यत्रैको लोपप्राप्तिस्तत्र वृद्धेः पूर्वं यदि लोपः स्यात् तदा चरितार्थं भवेत्, वृद्धौ सत्यां लोपे तु अनग्लोप इति अग्लोपित्वमकारलोपेनैव सम्पादनीयमिति अलोपिनो व्यावृत्तये " नालोपि " इत्येव वदेत् सूत्रकृदिति हृदयम् ॥ ननु " स्वामिनमाख्यत् असस्वामत् " " गोदुहमाख्यत् अजुगोदत् " इत्यत्र वृद्धेः प्राप्त्यभावात् प्रत्याहाराश्रयणं चरितार्थमिति कथमस्य पक्षस्य सम्भव इति वाच्यम्, भाष्यप्रामाण्येन इदुदुपधेभ्यो णिजन्तेभ्यो लुङोऽनभिधानकल्पनेनादोषात् । इदमेव ज्यायः । " मुण्डमिश्र " इति सूत्रस्थन्त्वेकदेश्युक्तिः । " अचकलत् " इत्यादौ वृद्धेरपि नित्यत्वमाशङ्क्य शब्दान्तरप्राप्त्या अनित्यत्वप्रतिपादकस्य " मुण्ड-" इति सूत्रस्थभाष्यस्य एकदेश्युक्तित्वावश्यकत्वात् । तथाहि-लोपस्य स्थानिवद्भावेन " अत उपधायाः " इत्यस्याप्राप्तेः " अचो ञ्णिति " इत्यस्य स्थान्यभावेनाप्राप्तेश्च । " अत उपधायाः " इत्यस्य भिन्नलक्षणत्वाद् भिन्नस्थानिकत्वाच्च । इति संक्षेपः ॥ ४ " तत्करोति " इति । गणसूत्रम् ॥ ५ तेनातिक्रामति । गणसूत्रम् ॥ ६ धातुरूपं च । गणसूत्रम् ॥ ७ चकारस्यानुक्तसमुच्चयार्थकत्वे साधकमाह-तथा चेति । वार्तिकमित । " हेतुमति च " इति सूत्रे इति शेषः ॥ आख्यानवाचककृदन्तात् तदाचष्टे इत्यर्थे णिच्, णिच्प्रकृत्यवयवकृतो लुक्, तस्यैव कृतो या प्रकृतिः " हन् " इत्यादिः, तस्या विकारपरित्यागेन स्वेन रूपेणावस्थानम् " इत्यर्थः । प्रकृतिवच्चेति । कृत्प्रकृतिकणिजन्तवदित्यर्थस्तदाह-हेतुमण्णिच इत्यादिना । अत एव " पुष्ययोगं जानाति पुष्येण योजयति " इत्यादौ तृतीयासिद्धिः । अन्यथा " प्रकृतिवच्च कारकम् " इत्यनङ्गीकारे प्रत्ययलक्षणेन कृदन्ततया कृत्प्रकृत्यर्थकर्मत्वेन षष्ठी स्यादिति भावः ॥

चष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमिति *॥ कंसवधमाचष्टे कंसं घातयति। इह कंसं हन् इ इति स्थिते-॥ **हनस्तोऽचिण्णलोः। ७।३।३२॥** हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञिति णिति ॥ नन्वत्राङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता। ततश्चाड्द्वित्वयोर्दोषः। किंच कुत्वतत्वे न स्याताम्। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्। सत्यम्। प्रकृतिवच्चेति चकारो भिन्नक्रमः कारकं च चात्कार्यम्। हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं कारकं धातावनन्तर्भूतं द्वितीयान्तं यादृशं च कार्यं कुत्वतत्वादि तदिहापीत्यर्थः। कंसमजीघतत्॥ **कर्तृकरणाद्धात्वर्थे**॥ कर्तुर्व्यापारार्थं यत्करणं न तु चक्षुरादिमात्रमित्यर्थः। असिना हन्ति असयति॥ **बष्क दर्शने** ॥ १ ॥ **चित्र** चित्रीकरणे ॥ आलेख्यकरण इत्यर्थः। **कदाचिद्दर्शने**॥ चित्रेत्ययमद्भुतदर्शने णिचं लभते। चित्रयति॥ २ ॥ **अंस** समाघाते॥ ३॥ **वट** विभाजने॥ ४॥ **लज** प्रकाशने॥ **वटि लजि** इत्येके ॥ वण्टयति। लञ्जयति। अदन्तेषु पाठबलाददन्तत्वे वृद्धिरित्यन्ये। वण्टापयति। लञ्जापयति॥ ७॥ शाकटायनस्तु कथादीनां सर्वेषां पुकमाह। तन्मते कथापयति। गणापयतीत्यादि॥ **मिश्र** सम्पर्के॥ ८॥ **संग्रामं युद्धे**॥ अयमनुदात्तेत्, अकारप्रश्लेषात्। अससंग्रामत॥ ९॥ **स्तोम** श्लाघायाम्॥ अतुस्तोमत्॥ १०॥ **छिद्र** कर्णभेदने॥ करणभेदन इत्यन्ये। **कर्णे**ति धात्वन्तरमित्यन्ये॥ १२॥ **अन्ध** दृष्ट्युपघाते॥ उपसंहार इत्यन्ये॥ आन्दधत्॥ १३॥ **दण्ड** दण्डनिपातने॥ १४॥ **अङ्क** पदे लक्षणे च। आञ्चकत्॥ **अङ्ग** च। आञ्जगत॥ १६॥ **सुख दुःख** तत्क्रियायाम्॥ १८॥ **रस** आस्वादनस्नेहनयोः॥ १९॥ **व्यय** वित्तसमुत्सर्गे। अवव्ययत्॥ २०॥ **रूप** रूपक्रियायाम्॥ रूपस्य दर्शनं करणं वा रूपक्रिया॥ २१॥ **छेद** द्वैधीकरणे। अचिच्छेदत्॥ २२॥ **छद** अपवारण इत्येके। छदयति॥ २३॥ **लाभ** प्रेरणे॥ २४॥ **व्रण** गात्रविचूर्णने॥ २४॥ **वर्ण** वर्णक्रियाविस्तारगुणवचनेषु। वर्णक्रिया वर्णकरणम्। सुवर्णं वर्णयति। कथां वर्णयति। विस्तृणातीत्यर्थः। हरिं वर्णयति। स्तौतीत्यर्थः॥ २६॥ **बहुलमेतन्निदर्शनम्**॥ अदन्तधातुनिदर्शनमित्यर्थः। बाहुलकादन्येऽपि बोध्याः॥ तद्यथा॥ **पर्ण** हरितभावे। अपपर्णत्॥ **विष्क** दर्शने॥ **क्षप** प्रेरणे॥ **वस** निवासे॥ **तुत्थ** आवरणे॥ एवम्-आन्दोलयति। प्रेङ्खोलयति।

---

१ **कंसवधमाचष्टे** इति। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् कंसवधशब्दः कृदन्तः। ततो णिच्। अपूप्रत्ययस्य लुक्। तस्यैव या प्रकृतिः "हन्" इति, तस्या विकारपरित्यागेन स्वेन रूपेणावस्थानम् तदाह-**कंसं हन् इ इति स्थिते इति**॥ २ कर्तृकरणादिति न द्वन्द्वः, "तेनातिक्रामति" इत्यतः "तेन" इत्यनुवृत्त्येव सिद्धे 'कर्तृकरणादित्युपादानसामर्थ्यादित्याशयेनाह--**कर्तुर्व्यापारार्थमिति**॥ ३ '**चित्र चित्रीकरणे**' गणसूत्रम्। अत्र "चित्र" इति लुप्तपञ्चम्यन्तम्॥ ४ **शाकटायन इति** अत्रारुचिस्तु सर्वत्राल्लोपबाधे मानाभाव इति॥ ५ **संग्राम युद्धे इति**। युद्धे वर्तमानं संग्रामेति प्रातिपदिकं णिचं लभते धात्वर्थे। प्रातिपदिकपदानुवृत्त्या "प्रातिपदिकम्" इति लब्धम्। **अनुदात्तेदिति**। अनुदात्तेत्त्वं च केवलसंग्रामशब्दस्य क्रियावाचकत्वाभावेनाधातुत्वात् तत्राचरितार्थमिति ण्यन्ते उपकरोति॥ **अकारप्रश्लेषादिति**। अदन्तप्रकरणगतत्वेनाग्लोपित्वादुपधाह्रस्वो नेति भावः॥

विडम्बयति। अवधीरयतीत्यादि। अन्ये तु दशगणीपाठो बहुलमित्याहुः। तेनापठिता अपि सौत्रलौकिकवैदिका बोध्याः। अपरे तु नवगणीपाठो बहुलमित्याहुः। तेनापठितेभ्योऽपि कचित्स्वार्थे णिच्। रामो राज्यमचीकरदिति यथेत्याहुः। चुरादिभ्य एव बहुलं णिजित्यवर्थ इत्यन्ये। सर्वे पक्षाः प्राचां ग्रन्थे स्थिताः॥ **णिङङ्गान्निरसने**॥ अङ्गवाचिनः प्रातिपदिकान्निरसने णिङ् स्यात्। हस्तौ निरस्यति हस्तयते। पादयते॥ **श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च**॥ श्वेताश्वादीनां चतुर्णामश्वादयो लुप्यन्ते णिङ् च धात्वर्थे। श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते। अश्वतरमाचष्टे अश्वयते। गालोडितं वाचां विमर्शः तत्करोति गालोडयते। आह्वरयते। केचित्तु णिचमेवानुवर्तयन्ति, तन्मते परस्मैपदमपि॥ **पुच्छादिषु धात्वर्थ इत्येव सिद्धम्**॥ णिजन्तादेव बहुलवचनादात्मनेपदमस्तु। मास्तु पुच्छभाण्डेति णिङ्विधिः। सिद्धशब्दो ग्रन्थान्ते मङ्गलार्थः॥

इति चुरादिप्रकरणम्।

## अथ ण्यन्तप्रकरणम्।

**तत्प्रयोजको हेतुश्च। १। ४। ५५॥** कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात्॥ **हेतुमति च। ३। १। २६॥** प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात्॥ भवन्तं प्रेरयति भावयति। णिचश्चेति कर्तृगे फले आत्मनेपदम्। भावयते। भावयांबभूव॥ **ओः पुँयण्ज्यपरे। ७। ४। ८०॥** सनि परे यदङ्गं तदवयवाभ्यासोकारस्येत्त्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः॥ अबीभवत्। अपीपवत्। मूङ्। अमीमवत्। अयीयवत्। अरीरवत्। अलीलवत्। अजीजवत्॥ **स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा। ६। ४। ८१॥** एषामभ्यासोकारस्येत्त्वं वा स्यात्सन्यवर्णपरे धात्वक्षरे परे॥ असिस्रवत्। असुस्रवत्। नाग्लोपीति ह्रस्वनिषेधः। अशशासत्। अडुढौकत्। अचीचकासत्। मतान्तरे—अचचकासत्।

---

१ **णिङङ्गादिति**। निरसनमत्र प्रक्षेपः॥ २ **श्वेताश्वेति**। गणसूत्रम्॥ "नानर्थकेऽलोऽन्त्यविधिः" इति निषेधान्नात्रालोऽन्त्यपरिभाषाप्रवृत्तिः। प्रत्याख्याने तु "श्वेताश्वादीनां लोपः" इत्येव सिद्धावश्वतरादीनां पृथक्करणेन सर्वादेशत्वाक्षतिरिति बोध्यम्॥ इति शम्। इति चुरादयः॥ ३ **ओः पुयण्ज्गीति**। नन्वत्र सूत्रे "ओः" इति व्यर्थम्। तथाहि—अवर्णपरपवर्गादिपरकाभ्यासावयवाकारस्य "यियक्षति पिपक्षति" इत्यादावित्त्वप्रवृत्तिरिष्टैव। तादृशश्चेकारो नास्त्येव। उकारस्य चेत्त्वमिष्टमेव। तादृशयोर्ऋकारतृकारयोरपि संभवो नास्ति। वेञ्, रै, पै, व धातुभ्यो यत्र सन्ति तत्रापि प्रथमत आत्त्वप्रवृत्त्याऽभ्यासेऽकारस्यैव सत्त्वमिति नैज्व्यावृत्तिः फलमिति पारिशेष्यादुकारस्यैव भविष्यतीति चेन्न, "पापचिषते वावचिषते" इत्यादौ यङन्तात्सनि यङ्निमित्ताभ्यासावयवाकारस्यान्तरङ्गत्वाद् "दीर्घोऽकितः" इति दीर्घे कृतेऽप्यनेनेकारः स्यादिति तद्व्यावृत्त्यर्थत्वात्। नचैतदपि "सनि परे सन्निमित्ताभ्यासावयवस्यैव" इति प्रत्यासत्तिकल्पनेन वारयितुं शक्यमिति वाच्यम्, एवं तर्हि "द्विर्वचननिमित्ताङ्गाभ्यासावयवस्य द्विर्वचननिमित्तकं कार्यं तन्निमित्तकाभ्यासस्यैव भवति" इति प्रत्यासत्तिलभ्य एवार्थे तस्य प्रकृतसूत्रस्थस्य "ओः" इति पदस्य ज्ञापकत्वमस्त्विति कल्पनसंभवात्। तत्फलं तु जङ्गम्यादिभ्यो यङन्तेभ्यः सनि "जङ्गमिषते" इत्यादौ "सन्यतः" इतीत्त्वाभावः॥ ४ **अचीचकासदिति**। "चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः" इत्यर्थे सन्वद्भावादयः॥ ५ **मतान्तरे इति**। भाष्यसिद्धमते "चङ्परे णौ यल्लघु" इत्याद्यर्थे सन्वद्भावाभावः॥

अग्लोपीति सुब्धातुप्रकरणे उदाहरिष्यते । ण्यन्ताण्णिच् । पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णिलोपः । चोरयति । 'णौ चङीति ह्रस्वः, दीर्घो लघोः' । न चाग्लोपित्वाद्द्वयोरप्यसंभवः । ण्याकृतिनिर्देशात् । अचूचुरत् ॥ **णौ च संश्चङोः । ६ । १ । ३१ ॥** सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वा स्यात् ॥ **संप्रसारणं तदाश्रयं च कार्यं बलवदिति** आदौ संप्रसारणं पूर्वरूपम् । अशूशवत् । अलघुत्वान्न दीर्घः । अशिश्वयत् ॥ **स्तम्भुसिवुसहां चङि । ८ । ३ । ११६ ॥** उपसर्गस्थान्निमित्तादेषां सस्य षो न स्याच्चङि ॥ अभ्यतस्तम्भ । पर्यसीषिवत् । न्यसीषहत् । आटिटत् । आशिशत् ॥ 'बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात्प्रागेव' ओणेर्ऋदित्करणाल्लिङ्गात् । मा भवानिदिधत् । एजादावेधतौ विधानान्नेह वृद्धिः । मा भवान्प्रेदिधत् ॥ 'न न्द्राः' इति नदराणां न द्वित्वम् । औन्दिदत् । आड्डिडत् । आर्चिचत् । उब्ज आर्जवे ।

---

१ **द्वयोरिति** । ह्रस्वदीर्घयोरित्यर्थः । "नाग्लोपि-" इति निषेधेन ह्रस्वाप्राप्तिः । दीर्घाप्राप्तिस्तु सन्वद्भावाभावेनेति विवेकः । स्वार्थणिज्रूपस्याको लुप्तत्वेनाग्लोपित्वादिति भावः ॥ २ समाधत्ते-**ण्याकृतीति** । एवं च णित्वजात्याश्रयानेकणिचो ग्रहणेनादोषः । न च वर्णग्रहण एव जातिनिर्देशस्य भाष्यसिद्धतया इदमयुक्तमिति वाच्यम्, "ते प्राग् धातोः" इत्यत्र गत्याद्याकृतिनिर्देशस्य सम्मतत्वात् । वृत्तिमतेऽन्यत्राप्याश्रयणाच्च । वस्तुतस्तु जातेः पौर्वापर्यव्यवहाराभावेनाऽऽकृतिनिर्देशोऽयुक्तः । अत एव जातेः पौर्वापर्यव्यवहाराभावमाशङ्क्य "आर्धधातुके इति सूत्रे "आर्धधातुके" इति विषयसप्तमी" इति भाष्येण व्यक्तिद्वारकं न पौर्वापर्यम्" इति बोधितम् । किञ्च-णिनिमित्तकणिलोपस्यापि णित्वजातिनिमित्तकत्वेनाग्लोपित्वं दुर्वारमेव, तस्माद् "अवीवदत्" इति भाष्येण-"णेर्णिच्युपसंख्यानम्" इति सन्वत्सूत्रे "णौ चङि" इति सूत्रस्थवार्तिकेन च "अचूचुरत्" इति प्रकृतप्रयोगः साधुः । इत्येव कल्प्यम् ॥ ३ नन्वन्तरङ्गत्वाद् वृद्ध्यायादेशयोः कृतयोः पश्चात् संप्रसारणेऽपि "अशूशवत्" इति न स्यादत आह-**सम्प्रसारणं तदाश्रयं चेति** । "सम्प्रसारणं तदाश्रयं "सम्प्रसारणाच्च" इति पूर्वरूपं च यणाद्यपेक्षया प्रबलम्" इति परिभाषार्थः । "णिच्यच आदेशो न" इति निषेधस्तु नाशङ्क्यः, "अशूशवत्" इति भाष्यप्रयोगेण तदनित्यत्वज्ञापनात् । सूत्रवैयर्थ्यादिति समाधानं तु न युक्तिकरम्, द्वित्वे कृतेऽपि चारितार्थ्यसम्भवादिति भावः ॥ वस्तुतः फलानामन्यथासिद्ध्या प्रत्याख्याता परिभाषेयं भाष्ये । तथाहि-न च परिभाषाभावे "मृष्टः" "मृष्टवान्" इत्यत्र सम्प्रसारणं बाधित्वा परत्वादमागमः स्यादिति वाच्यम्, "भ्रस्जो रोपधयोः" इति सूत्रे "वरीमृज्यते" इत्यादावागमसम्बन्धिनं रेफमादाय प्रसक्तातिप्रसङ्गवारणाय "अनुदात्तोपदेश-" इति सूत्रादुपदेशसम्बन्धस्यावश्यकतया कृते संप्रसारणे वर्णैकदेशानां वर्णग्रहणेन ग्रहणेऽपि तदन्तर्गतरेफमाश्रित्य रमागमप्रवृत्त्ययोगेन नित्यत्वादेव रमागमात् पूर्वं संप्रसारणसिद्धेः । एवं "जुहुवतुः" इत्यत्र ह्वेञः संप्रसारणं बाधित्वा परत्वादातो लोपः स्यादित्यपि न वाच्यम्, नित्यत्वात् संप्रसारणस्यैव प्रवृत्तेः, आतो लोपयणादेशाभ्यां प्रागन्तरङ्गत्वात् पूर्वरूपस्यैव प्रवृत्तेः । न च परिभाषाभावे "णौ च संश्चङोः" इति प्रकृतसूत्रेण विधीयमानात् सम्प्रसारणात् पूर्वं णिज्मात्रनिमित्तकत्वेनान्तरङ्गत्वाद् वृद्ध्यायादेशयोः "अशूशवत्" इति न सिध्येदिति वाच्यम्, प्रकृतसूत्रे "संश्चङोः" इत्यस्य विषयसप्तमीत्वेन वृद्ध्यादेः पूर्वमन्तरङ्गत्वात् सम्प्रसारणस्यैव प्रवृत्त्या दोषाभावात् । एवं "स्वपिस्यमिव्येञां यङि" इत्यत्र "यङि" इति विषयसप्तमी बोध्या । अन्यथा संप्रसारणात् पूर्वमपरनिमित्तिकत्वेनान्तरङ्गत्वाद् द्वित्वे "वेवीयते" इत्यादावुत्तरखण्डे संप्रसारणे पूर्वस्य "न संप्रसारणे" इति निषेधप्रसङ्गः । स हि निषेधो "यूनस्तिः" इति निर्देशाद् व्यवहितेऽपि प्रवर्तत इत्यन्यत्र विस्तरः ॥ ४ **ऋदित्करणादिति** । अन्यथा पूर्वं णिशब्दस्य द्वित्वे उपधात्वाभावेन ह्रस्वत्वाप्राप्तौ किं निषेधार्थतत्करणेनेति भावः ॥

उपदेशे दकारोपधः। भुजन्युब्जौ पाण्युपतापयोरिति सूत्रे निपातनाद्दस्य बः। स चान्तरङ्गोऽपि द्वित्वविषये 'न न्द्राः' इति निषेधाज्जिशब्दस्य द्वित्वे कृते प्रवर्तते न तु ततः प्राक्। दकारोच्चारणसामर्थ्यात्। औब्जिजत्॥ अजादेरित्येव। नेह। अदिद्रपत्॥ **रभेरशब्लिटोः। ७।१।६३॥** रभेर्नुम् स्यादचि न तु शब्लिटोः॥ **लभेश्च। ७।१।६४॥** अररम्भत्। अललम्भत्। हेरचङीति सूत्रे अचङीत्युक्तेः कुत्वं न। अजीह्यत्॥ 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्'। असस्मरत्। अददरत्। तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः॥ **विभाषा वेष्टिचेष्ट्योः। ७।४।९६॥** अभ्यासस्यात्त्वं वा स्याच्चङ्परे णौ॥ अववेष्टत्। अविवेष्टत्। अचचेष्टत्। अचिचेष्टत्। भ्राजभासेत्यादिना वोपधाह्रस्वः। अबिभ्रजत्। अबभ्राजत्॥ **काण्यादीनां वेति वक्तव्यम् *॥** ण्यन्ताः कणरणभणश्रणलुपहेठाः काण्यादयः षड् भाष्ये उक्ताः। ह्वायिवाणिलोटिलोचयश्चत्वारोऽधिका न्यासे। वाणिलोठी अप्यन्यत्र। इत्थं द्वादश। अचीकणत्। अचकाणत्॥ **स्वापेश्चङि। ६।१।१८॥** ण्यन्तस्य स्वापेश्चङि संप्रसारणं स्यात्॥ असूषुपत्॥ **शाच्छासाह्वाव्यावेपां युक्। ७।३।३७॥** णौ परे॥ पुकोऽपवादः॥ शाययति। ह्वाययति॥ **ह्वः संप्रसारणम्। ६।१।३२॥** सन्परे चङ्परे च णौ ह्वः संप्रसारणं स्यात्॥ अजूहवत्। अजुहावत्॥ **लोपः पिबतेरीच्चाभ्यासस्य। ७।४।४॥** पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ॥ अपीप्यत्॥ अर्तिह्रीति पुक्। अर्पयति। ह्रेपयति।

---

१ **उपदेशे इति**। धातूपदेशे इत्यर्थः॥ २ **दकारोच्चारणसामर्थ्यादिति**। तद्धि "न न्द्राः-" इति निषेधप्रवृत्त्यर्थमेव क्रियते। यदि निपातनेन बकारोऽन्तरङ्गो द्वित्वात् प्राक् स्यात्, तदा दकारोच्चारणं व्यर्थमिति स्पष्टमेव॥ नन्विदं "भुजन्युब्जौ" इति सूत्रव्याख्यानकालिकग्रन्थविरुद्धम्, तत्र हि "पाण्युपतापयोः" इत्यस्याभावे "भोगः समुद्रः" इत्युक्तम्। अत्र "समुद्रः" इत्यत्र दकारस्य श्रवणं यथा स्यादित्येवमर्थं दकारोच्चारणस्य चारितार्थ्याद् "दकारोच्चारणसामर्थ्यात्" इति सामर्थ्योक्त्यसङ्गतेरिति चेन्न, दकारोच्चारणमभ्युद्रः समुद्र इत्यत्र दकारश्रवणार्थं न, तयोरुपधायां तकारस्य थकारस्य वोच्चारणेन सिद्धिसम्भवादिति दकारोच्चारणं "न न्द्राः-" इति निषेधप्रवृत्त्यर्थमेवेत्याशयेन पूर्वापरग्रन्थविरोधाभावात्॥ ३ **अदिद्रपदिति**। ननु "लावस्थायामट्" इति पक्षेऽजादित्वेन दोषानुद्धार एवेति चेन्न, "एकाचो द्वे प्रथमस्य" इति सूत्रवत् "न न्द्राः-" इति सूत्रस्याधिकारत्वाङ्गीकारेण "चङि" इति सूत्रे तदुपस्थितौ तत्र "धातोः" इति सत्त्वेन "धातुसंज्ञाकालिकादादेरचः पराः संयोगादयो नदरा द्विर्न भवन्ति" इत्यर्थेन दोषाभावात्॥ अपि च विधिशास्त्रैकवाक्यतया निषेधस्यान्तर्भूतचङ्निमित्तकत्वेनैतद्दृष्ट्या बहिर्भूतलकारनिमित्तकस्याटोऽसिद्धत्वेन निषेधाभाव एवेति केचित्॥ ४ "**स्वापेश्चङि**" "चङि" इति विषयसप्तमी। तेन पूर्वं संप्रसारणे ततो द्वित्वम्॥ ५ **ह्वः संप्रसारणम्। णौ च संश्चङोः**" इति विषयसप्तमी॥ ६ **अजूहवदिति**। "शाच्छासा-" इति सूत्रे "अर्तिह्री-" इति सूत्रत "आतः" इत्यस्यानुवर्तनात् युगागमाभावः॥ एतेन एकदेशविकृतन्यायेन युगागमो विहितेऽपि सम्प्रसारणे दुर्वार इति मन्दोक्तमपास्तम्॥ ७ **अपीप्यदिति**। अभ्यासेकारसंनियोगशिष्टत्वाद् द्वित्वे कृते उपधालोपः॥ ८ **अर्पयतीति**। वृद्धिं बाधित्वा नित्यत्वात् पुकि "पुगन्त-" इति गुणः। "अर्तिह्री" इति सूत्रे ह्रीसाहचर्याद् अर्तिर्जौहोत्यादिरेव गृह्यते, तेन भौवादिकस्य 'आरयति' इत्यादीनि पुग्रहितानि रूपाणि सिध्यन्ति॥ अत एव च काष्ठार-कुम्भार-चर्मार लोहार-स्वर्णारप्रभृतयः सिद्धाः॥

व्लेपयति। रेपयति ॥ यलोपः । क्नोपयति । क्ष्मापयति। स्थापयति ॥ **तिष्ठतेरित्** । ७ । ४ । ५ ॥ उपधाया इदादेशः स्याच्चङ्परे णौ ॥ अतिष्ठिपत् ॥ **जिघ्रतेर्वा** । ७ । ४ । ६ ॥ अजिघ्रिपत् । अजिघ्रपत् ॥ उर्ऋत् ॥ अचीकृतत् । अचिकीर्तत् । अवीवृतत् । अववर्तत् । अमीमृजत् । अममार्जत् ॥ **पातेर्णौ लुग्वक्तव्यः** * ॥ पुकोऽपवादः । पालयति ॥ **वो विधूनने जुक्** । ७ । ३ । ३८ ॥ वातेर्जुक् स्याण्णौ कम्पेऽर्थे ॥ वाजयति ॥ कम्पे किम् ? केशान्वापयति ॥ विभाषा लीयतेः ॥ **लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने** । ७ । ३ । ३९ ॥ लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ वा स्तो णौ स्नेहद्रवे ॥ विलीनयति । विलाययति । विलालयति । विलापयति वा घृतम् ॥ ली ई इति ईकारप्रश्लेषादात्त्वपक्षे नुक् न ॥ स्नेहद्रवे किम् ? लोहं विलापयति।विलालयति॥**प्रलम्भनाभिभवपूजनासु लियो नित्यमात्वमशिति वाच्यम्***॥ **लियः संमाननशालीनीकरणयोश्च** । १ । ३ । ७० ॥ लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्तृगेऽपि फले पूजाभिवयोः प्रलम्भने चार्थे ॥ जटाभिर्लापयते । पूजामधिगच्छतीत्यर्थः । श्येनो वर्तिकामुल्लापयते । अभिभवतीत्यर्थः । बालमुल्लापयते । वञ्चतीत्यर्थः ॥ **बिभेतेर्हेतुभये** । ६ । १ । ५६ ॥ बिभेतेरेच आत्वं वा स्यात्प्रयोजकाद्भयं चेत् ॥ **भीस्म्योर्हेतुभये** । १ । ३ । ६८ ॥ ण्यन्ताभ्यामाभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्मयौ ॥ सूत्रे भयग्रहणं धात्वर्थोपलक्षणम् । मुण्डो भापयते ॥ **भियो हेतुभये षुक्** । ७ । ३ । ४० ॥ भी ई इतीकारः प्रश्लिष्यते। ईकारान्तस्य भियः षुक् स्यात् णौ हेतुभये ॥ भीषयते ॥ **नित्यं स्मयतेः** । ६ । १ । ५७ ॥ स्मयतेरेचो नित्यमात्त्वं स्याण्णौ हेतोः स्मये ॥ जटिलो विस्मापयते ॥ हेतोश्चेद्भयस्मयावित्युक्तेर्नेह । कुञ्चिकयैनं भाययति । विस्माययति ॥ कथं तर्हि विस्मापयन् विस्मितमात्मवृत्ताविति । मनुष्यवाचेति करणादेव हि तत्र स्मयः । अन्यथा शानजपि स्यात् । सत्यम् । विस्माययन्नित्येव पाठ इति साम्प्रदायिकाः ॥ यद्वा । मनुष्यवाक् प्रयोज्यकर्त्री विस्मापयते तया सिंहो विस्मापयन्निति ण्यन्ताण्णौ शतेति व्याख्येयम् ॥ **स्फायो वः** । ७ । ३ । ४१ ॥ णौ ॥ स्फावयति ॥ **शदेरगतौ तः** । ७ । ३ । ४२ ॥ शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ ॥ शातयति । गतौ तु गाः शादयति गोविन्दः । गमयतीत्यर्थः ॥ **रुहः पोऽन्यतरस्याम्** । ७ । ३ । ४३ ॥ णौ ॥

---

१ लुगित्यागमोऽयम् ॥ २ **केशान् वापयतीति** । सुगन्धीकरोति ॥ ३ **लीलोरिति** । विपातनं द्रवीकरणम् ॥ ननु कृतात्त्वस्यापि स्थानिवत्त्वेन लीत्वानपायान्नुग् दुर्वार एवात आह–**ली ई इति** ॥ ४ **लियः सम्माननेति** । शालीनीकरणमभिभवः । ५ ननु " हेतुभये " इत्युक्तेर्वृत्तौ " भयस्मयौ " इत्यनुपपन्नमत आह–**सूत्रे इति** ॥ ६ ननु आत्त्वपक्षे भापयते इत्यत्रापि षुगागमः स्यादत आह–**भी ई इति** ॥ ७ **कथं तर्हीति** । आत्त्ववदात्मनेपदस्यावश्यकत्वेन तत्त्यागे मानाभाव इति प्रश्नः ॥ आत्त्वात्मनेपदे उभे अपि न, हेतुभयस्याभावात् । उभौ यकारावेवेति समाधानम् ॥ ८ बहुपुस्तकसम्मतपाठे आह–**यद्वेति** । एवं च ण्यन्ताण्णिचि आत्मनेपदं दुर्लभम्, भीस्मिप्रकृतिकण्यन्तादेव तद्विधानात् । राजा विस्मयते, तं मनुष्यवाक् प्रेरयते इति मनुष्यवाग् राजानं विस्मापयते । प्रथमणिचि आत्त्वपुकौ । तां सिंहः प्रेरयति इति । द्वितीये णिचि तु स्मिप्रकृतिकण्यन्तत्वाभावेनात्मनेपदाभावे " सिंहो मनुष्यवाचा राजानं विस्मापयति " इति रूपम्, ततः शतृप्रत्ययः ॥

रोपयति । रोहयति ॥ **क्रीङ्जीनां णौ । ६ । १ । ४८ ॥** एषामेच आत्त्वं स्याण्णौ ॥ क्रापयति । अध्यापयति । जापयति ॥ **णौ च संश्चङोः । २ । ४ । ५१** ॥ सन्परे चङ्परे च णौ इङो गाङ्वा स्यात् ॥ अध्यजीगपत् । अध्यापिपत् ॥ **सिध्यतेरपारलौकिके । ६ । १ । ४९ ॥** ऐहलौकिकेऽर्थे विद्यमानस्य सिध्यतेरेच आत्त्वं स्याण्णौ ॥ अन्नं साधयति । निष्पादयतीत्यर्थः ॥ अपारलौकिके किम् ? तापसः सिद्धयति । तत्त्वं निश्चिनोति । तं प्रेरयति सेधयति तापसं तपः ॥ **प्रजने वीयतेः । ६ । १ । ५५ ॥** अस्यैच आत्त्वं वा स्याण्णौ प्रजनेऽर्थे ॥ वापयति वाययति वा गाः पुरोवातः । गर्भं ग्राहयतीत्यर्थः ॥ 'ऊदुपधाया गोहः' । गूहयति ॥ **दोषो णौ । ६ । ४ । ९० ॥** दुष इति सुवचम् । दुष्यतेरुपधाया ऊत्स्याण्णौ ॥ दूषयति । **वा चित्तविरागे । ६।४।९१ ॥** विरागोऽप्रीतता । चित्तं दूषयति दोषयति वा कामः ॥ 'मितां ह्रस्वः' । भ्वादौ चुरादौ च मित उक्ताः । घटयति ॥ 'जनीजॄष्' । जनयति ॥ जरयति । जॄणातेस्तु ।[2] जारयति ॥ **रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः * ॥** मृगरमणमाखेटकम्[3] । रजयति मृगान् । [ मृगेति किम् । रञ्जयति पक्षिणः ॥ रमणादन्यत्र तु रञ्जयति मृगान् तृणदानेन] चुरादिषु ज्ञपादिश्चित्र ॥ चिस्फुरोरिति वा आत्त्वम् । चपयति । चययतीत्युक्तम् । चिनोतेस्तु—चापयति । चाययति । स्फारयति । स्फोरयति । अपुस्फरत् । अपुस्फुरत् ॥ **उभौ साभ्यासस्य । ८ । ४ । २१ ॥** साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति ॥ प्राणिणत् ॥ **णौ गमिरबोधने[4] । २ । ४ । ४६ ॥** इणो गमिः स्याण्णौ ॥ गमयति ॥ बोधने तु प्रत्याययति । 'इण्वदिकः' । अधिगमयति । 'हनस्तोऽचिण्णलोः' । हो हन्तेरिति कुत्वम् । घातयति । ईर्ष्ययति ॥ **ईर्ष्यतेस्तृतीयस्येति वक्तव्यम् * ॥** तृतीयव्यञ्जनस्य[5] तृतीयैकाच इति वार्थः । आद्ये षकारस्य द्वित्वं वारयितुमिदम् । द्वितीये तु अजादेर्द्वितीयस्येत्यपवादतया सन्नन्ते प्रवर्तते । ऐर्ष्ययत् । ऐर्षिष्यत् ॥ द्वितीयव्याख्यायां[6] णिजन्ताच्चङि षकार एवाभ्यासे श्रूयते । हलादिःशेषात् । द्वित्वं तु द्वितीयस्यैव । तृतीयाभावेन प्रकृतवार्तिकाप्रवृत्तेः ॥ निवृत्तप्रेषणाद्धातोर्हेतु-[7]

---

१ "णौ च संश्चङोः" इति । अत्र "आर्धधातुके" इत्यधिक्रियते । तत्सामानाधिकरण्यात् "णौ" इति विषयसप्तमी । एवं च "अध्यजीगपत्" इत्यत्र गाङादेशे कर्तव्ये "णिच्यच आदेशो न" इति निषेधो न प्रवर्तते, णिवृद्धिनिमित्तकत्वेऽपि साक्षात्तदभावात् । एवम्-अशूशवदित्यादावपि बोध्यम् ॥ २ **जॄणातेस्त्विति** । पित्त्वाभावेन मित्त्वाभावादिति भावः ॥ ३ **आखेटकमिति** । 'मृगरमण इति किमर्थम् ? रञ्जयति वस्त्राणि' इति भाष्यपर्यालोचने तु यथाश्रुतमेव मृगरमणम् । [मृगाणां विश्वासदानेन पाशबन्धेन वा समीपीकरणमिति त्वन्यत् ] तेन 'रजयांचकार विरजाः स मृगान्' इति भारविप्रयोगोऽप्युपपन्नः ॥ ४ **णौ गमिरिति** । "णौ" इति विषयसप्तमी । **बोधनं** शब्दज्ञानम् ॥ ५ वार्तिकस्य "तृतीयव्यञ्जनस्य" इति व्याख्याने फलमाह-**ऐर्ष्ययदिति** ॥ ६ नन्वेवम्-"ऐर्षिष्यत्" इत्यस्यासाधुत्वं स्यादत आह-**द्वितीयव्याख्यामिति** । "ईर्ष्यतिप्रकृतिकप्रत्ययान्तधातोः" इत्यर्थे ण्यन्ते सन्नन्ते च विनिगमनाविरहात् प्रवृत्तिः । **तृतीयस्येति** । "तृतीयव्यञ्जनाज्विशिष्टस्य" इत्यर्थः ॥ ७ नन्वर्थधातोरागर्वीयत्वादात्मनेपदेन भाव्यमिति "प्रार्थयन्ति" इति कथं प्रयोग इत्यत आह-**निवृत्तप्रेषणेति** ॥ इति ण्यन्तप्रक्रिया ॥

मण्णौ शुद्धेन तुल्योऽर्थः । तेन 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादि सिद्धम् । एवं सकर्मकेषु सर्वेषूह्यम् ॥

इति ण्यन्तप्रकरणम् ।

## अथ सन्नन्तप्रकरणम् ।

**धातोः कर्मणः समानकर्तृकादिच्छायां वा । ३ । १ । ७ ॥** इषिकर्मण: इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम् ॥ धातोर्विहितत्वादिह सन आर्धधातुकत्वम् । इट् । द्वित्वम् । 'सन्यतः' । पठितुमिच्छति पिपठिषति ॥ कर्मणः किम् ? गमनेनेच्छतीति करणान्मा भूत् ॥ समानकर्तृकात्किम् ? शिष्याः पठन्त्वितीच्छति गुरुः ॥ वाग्रहणात्पक्षे वाक्यमपि । 'लुङ्सनोर्घस्लृ' । 'एकाच उपदेश' इति नेट् । सस्य तत्वम् । अत्तुमिच्छति—जिघत्सति । 'ईर्ष्यतेस्तृतीयस्येति यिसनोर्द्वित्वम् । ईर्ष्यियिषति । ईर्ष्यिषिषति ॥ **रुदविदमुषग्रहिस्वपिप्रच्छः संश्च । १ । २ । ८ ॥** एभ्यः सन् क्त्वा च कितौ स्तः ॥ रुरुदिषति । विविदिषति । मुमुषिषति ॥ **सनि ग्रहगुहोश्च । ७ । २ । १२ ॥** ग्रहेर्गुहेरुगन्ताच्च सन इण्न स्यात् ॥ ग्रहिज्येति संप्रसारणम् । सनः षत्वस्यासिद्धत्वाद्भष्भावः । जिघृक्षति । सुषुप्सति ॥ **किरश्च पञ्चभ्यः । ७ । २ । ७५ ॥** कॄ गॄ दृङ् धृङ् प्रच्छ एभ्यः सन इट् स्यात् ॥ पिपृच्छिषति । चिकरिषति । जिगरिषति । जिगलिषति । अत्रेटो दीर्घो नेष्टः ॥ दिदरिषते । दिधरिषते ॥ कथमुदिधीर्षुरिति ? भौवादिकयोर्धृङ्धृञोरिति गृहाण ॥ **इको झल् । १ । २ । ९ ॥** इगन्ताज्झलादिः सन् कित्स्यात् ॥ बुभूषति ॥ दीङ् । दातुमिच्छति दिदीषते । एज्विषयत्वाभावाद् मीनातिमिनोतीत्यात्वं न । अत एव सनि मीमेति सूत्रे माधातोः पृथङ्मीग्रहणं कृतम् ॥ **हलन्ताच्च । १ । २ । १० ॥** इक्समीपाद्धलः परो झलादिः सन् कित्स्यात् ॥ गुहू । जुघुक्षति । बिभित्सति ॥ इकः किम् ? यियक्षते ॥ झल्किम् ? विवर्धिषते ॥ हल्ग्रहणं जातिपरम् । तृन्हू । तितृक्षति । तितृंहिषति ॥ **अज्झनगमां सनि । ६ । ४ । १६ ॥** अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि ॥ 'सन्लिटोर्जेः' । जिगीषति ॥ 'विभाषा चेः' । चिकीषति । चिचीषति ॥ जिघांसति ॥ **सनि च । २ । ४ । ४७ ॥** इणो गमिः स्यात्सनि न तु बोधने । जिगमिषति ॥ बोधने प्रतीषिषति । 'इण्वदिकः' । अधिजिगमिषति ॥ कर्मणि तङ् । 'परस्मैपदेष्वित्युक्तेर्नेट् । झलादौ सनीति दीर्घः । जिगांस्यते । अधिजिगांस्यते । अजादेशस्येत्युक्तेर्ग-

---

१ इषिकर्मण इति । इषिकर्मवाचकादित्यर्थः । तेन "पठितुम्" इत्यादितुमुन्नन्तेभ्यो न सन् ॥ २ इच्छाया नियतकर्माकाङ्क्षतया प्रत्यासत्त्या प्रकृत्यर्थकर्मिकायामेव विधानं स्यादित्याशयेन शङ्कते-कर्मणः किमिति । प्रत्यासत्तिः सर्वैर्दुर्विज्ञेयेत्युत्तराशयः ॥ ३ यिसनोरिति । "तृतीयव्यञ्जनस्य" इति पक्षे यीत्यस्य, "तृतीयस्यैकाचः" इति पक्षे सन इति विवेकः ॥ ४ ननु कत्वे षत्वे च परत्वात्कृते भष्भावो न स्यादत आह—षत्वस्येति । ५ यियक्षते इति । सति कित्वे संप्रसारणापत्तिः स्यादिति भावः । ६ ननु "तितृक्षति" इत्यादाविक्समीपनकारादव्यवहितसनोऽभावेन कित्वाप्रवृत्तौ नलोपानुपपत्तिरत आह—जातिपरमिति । हल्त्वजात्याक्रान्तैकानेकव्यक्तिपरमित्यर्थः । सामीप्यमव्यवहित एवेति भावः ॥

च्छतेर्न दीर्घः । जिगंस्यते । संजिगंसते ॥ **इङश्च । २ । ४ । ४८ ॥** इङो गमिः स्यात्सनि । अधिजिगांसते ॥ **रलो व्युपधाद्धलादेः संश्च । १ । २ । २६ ॥** उश्च इश्च वी ते उपधे यस्य तस्माद्धलादेरलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः ॥ 'द्युतिस्वाप्योः संप्रसारणम्' । दिद्युतिषते । दिद्योतिषते । रुरुचिषते । रुरोचिषते । लिलिखिषति । लिलेखिषति ॥ रलः किम् ? दिदेविषति ॥ व्युपधात्किम् ? विवर्तिषते ॥ हलादेः किम् ? एषिषिषति । इह नित्यमपि द्वित्वं गुणेन बाध्यते । उपधाकार्यं हि द्वित्वात्प्रबलम् । ओणेर्ऋदित्करणस्य सामान्यापेक्षज्ञापकत्वात् ॥ **सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् । ७ । २ । ४९ ॥** इवन्तेभ्य ऋधादिभ्यश्च सन इड्वा स्यात् ॥ इडभावे हलन्ताच्चेति कित्त्वम् । च्छ्वोरिति वस्य ऊठ् । यण् द्वित्वम् । दुद्यूषति । दिदेविषति स्तौतिण्योरेवेति वक्ष्यमाणनियमान्न षः । सुस्यूषति । सिसेविषति ॥ **आप्ज्ञप्यृधामीत् । ७ । ४ । ५५ ॥** एषामच ईत्स्यात्सादौ सनि ॥ **अत्र लोपोऽभ्यासस्य । ७ । ४ । ५८ ॥** सनिमीमेत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात् ॥ आप्तुमिच्छति ईप्सति । अर्धितुमिच्छति रपरत्वम् । चर्त्वम् । ईर्त्सति । अर्दिधिषति । बिभ्रज्जिषति । बिभर्जिषति । बिभ्रक्षति ॥ बिभर्क्षति ॥ **दम्भ इच्च । ७ । ४ । ५६ ॥** दम्भेरच इत्स्यादीच्च सादौ सनि । अभ्यासलोपः । हलन्ताच्चेत्यत्र हल्ग्रहणं जातिपरमित्युक्तम् । तेन सनः कित्त्वान्नलोपः । धिप्सति । धीप्सति । दिदम्भिषति ॥ शिश्रीषति । शिश्रयिषति । 'उदोष्ठ्यपूर्वस्य' । सुस्वूर्षति । सिस्वरिषति । युयूषति । यियविषति । ऊर्णुनूषति । ऊर्णुनुविषति । ऊर्णुनविषति । न च परत्वाद्गुणावादेशयोः सतोरभ्यासे उकारो न श्रूयेतेति वाच्यम् । द्विर्वचनेऽचीति सूत्रेण द्वित्वे कर्तव्ये स्थानिरूपातिदेशादादेशनिषेधाद्वा । न च सन्नन्तस्य द्वित्वं प्रति कार्यित्वान्निमित्तता कथमिति वाच्यम् । कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते न त्वननुभवन्नपि । न चेह सन् द्वित्वमनुभवति । बुभूर्षति । बिभरिषति । ज्ञपिः पुगन्तो मित्संज्ञकः पकारान्तश्चौरादिकश्च । इडभावे इको झलिति कित्त्वान्न गुणः । अज्झनेति दीर्घः परत्वाण्णिलोपेन बाध्यते । आप्ज्ञपीति ईत् । ज्ञीप्सति । जिज्ञपयिषति । अमितस्तु । जिज्ञापयिषति ॥ जनसनेत्यात्त्वम् । सिषासति । सिसनिषति ॥ **तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः *॥ तनोतेर्विभाषा । ६ । ४ । १७ ॥** अस्योपधाया दीर्घो वा स्याज्झलादौ सनि । तितांसति । तितंसति । तितनिषति ॥ **आशङ्कायां सन्वक्तव्यः *॥**

---

१ **ओणेर्ऋदित्करणस्येति** । यदि नित्यत्वाद् द्वित्वमुपधाकार्यात् पूर्वं प्रवर्तेत तदा णिशब्दस्य द्वित्वे सति उपधाह्रस्वस्याप्रवृत्तेस्तत्प्रतिषेधार्थं क्रियमाणमृदित्करणं व्यर्थं स्यादतोऽभिमतेऽर्थे **ज्ञापकमेवेति** भावः ॥ वस्तुतः सामान्यापेक्षज्ञापकत्वमस्य चिन्त्यम्, "णौ चङि-" इति सूत्रे भाष्ये--यदयमोणिमृदितं करोति तज्ज्ञापयति "द्विर्वचनादह्रस्वत्वं बलीयः" इत्युक्तेः । तस्माद् गुणस्य स्वतोऽनित्यत्वेन, द्वित्वस्य च शब्दान्तरप्राप्त्याऽनित्यत्वेन द्वयोरनित्ययोः परत्वादिटि ततोऽपि पूर्वं परत्वाद् गुणे रूपसिद्धिरित्येव ज्यायान् पन्थाः ॥

२ **आदेशनिषेधाद्वेति** । उभयपक्षस्य भाष्यसिद्धत्वेऽपि स्थानिरूपातिदेशपक्षे नोशब्दे नवशब्दे वा नुशब्दबुद्ध्या कार्यप्रवृत्तावपि मूलोक्तदोषस्य तादवस्थ्यात् निषेधपक्ष एव श्रेयान् । अत एव मूले भाष्ये चा निषेधपक्ष एव सिद्धान्तित इत्यन्यत्सर्वं सुगमम् ॥

श्वा मुमूर्षति । कूलं पिपतिषति ॥ **सनि मीमाघुरभलभशकपतपदामच इस् । ७ । ४ । ५४॥** एषामच इस् स्यात्सादौ सनि ॥ अभ्यासलोपः । स्कोरिति सलोपः । पित्सति ॥ दिदरिद्रिषति । दिदरिद्रासति ॥ डुमिञ् मीञ् आभ्यां सन् । कृतदीर्घस्य मिनोतेरपि मीरूपत्वाविशेषादिस् । सः सीति तः । मित्सति । मित्सते । मा माने–मित्सति । माङ्मेङोः–मित्सते । दोदाणोः–दित्सति । देङ्–दित्सते । दाञ्–दित्सति । दित्सते । धेट्–धित्सति । धाञ्–धित्सति । धित्सते । रिप्सते । लिप्सते । शक्ऌ–शिक्षति । शक मर्षण इति दिवादिः । स्वरितेत् । शिक्षति । शिक्षते । पित्सते ॥ **राधो हिंसायां सनीस् वाच्यः** * ॥ रित्सति ॥ हिंसायां किम् ? आरिरात्सति ॥ **मुचोऽकर्मकस्य गुणो वा । ७ । ४ । ५७ ॥** सादौ सनि । अभ्यासलोपः । मोक्षते मुमुक्षते वा वत्सः स्वयमेव ॥ अकर्मकस्य किम् ? मुमुक्षति वत्सं कृष्णः । 'न वृद्भ्यश्चतुर्भ्यः' । विवृत्सति । तङि तु–विवर्तिषते । सेसिचीति वेट् । निनर्तिषति । निनृत्सति ॥ **इट् सनि वा । ७ । २ । ४१ ॥** वृङ्वृञ्भ्यामॄदन्ताच्च सन इड्वा स्यात् ॥ तितरिषति । तितरीषति । तितीर्षति । विवरिषति । विवरीषति । वुवूर्षति । वृङ् । वुवूर्षते । विवरिषते । दुध्वूर्षति ॥ **स्मिपूङ्रञ्ज्वशां सनि । ७ । २ । ७४ ॥** स्मि पूङ् ऋ अञ्जू अशू एभ्यः सन इट् स्यात् ॥ सिस्मयिषते । पिपविषते । अरिरिषति । इह रिस्शब्दस्य द्वित्वम् । इस् इति सनोऽवयवः कार्यभागिति कार्यिणो निमित्तत्वायोगाद्विर्वचनेऽचीति न प्रवर्तते ॥ अञ्जिजिषति । अशिशिषते । 'उभौ साभ्यासस्य' । प्राणिणिषति । उच्छेस्तुक् चुत्वम् । 'पूर्वत्रासिद्धीयमद्विर्वचन' इति च्छाभ्यां सहितस्येटो द्वित्वम् । हलादिःशेषः । उचिच्छिषति । 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति त्वनित्यम् । च्छ्वोरिति सतुक्ग्रहणाज्ज्ञापकात् । प्रकृतिप्रत्यापत्तिवचनाद्वा । णौ च संश्चङोरिति सूत्राभ्यामिङो गाङ् श्वयतेः संप्रसारणं च वा । अधिजिगापयिषति । अध्यापिपयिषति । शिश्वाययिषति शुशावयिषति ॥ 'ह्वः संप्रसारणम्' जुहावयिषति । णौ द्वित्वात्प्रागच आदेशो नेत्युक्तत्वादुकारस्य द्वित्वम् । पुस्फारयिषति । चुक्षावयिषति ॥ 'ओः पुयण्ज्यपरे' । पिपावयिषति । बिभावयिषति । यियावयिषति । रिरावयिषति । लिलावयिषति । जिजावयिषति ॥ पुयण्जि किम् ? नुनावयिषति ॥ अपरे किम् ? बुभूषति ॥ स्रवतीतीत्वं वा । सिस्रावयिषति । सुस्रावयिषतीत्यादि ॥ अपर इत्येव । शुश्रूषते ॥ **स्तौतिण्योरेव षण्यभ्यासात् । ८ । ३ । ६१ ॥** अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य

---

१ **प्रकृतिप्रत्यापत्तिवचनाद्वेति** । "पुष्ययोगं जानाति पुष्येण योजयति" इत्येतत्साधनाय "पुष्ययोगे ज्ञि" इति सूत्रे भाष्यकृता प्रकृतिप्रत्यापत्तेरनुवृत्तिः कृता । अन्यथा क्लोपे "चजोः कुः" इति विहितकुत्वस्योक्तपरिभाषयैव निवृत्तौ तद् वैयर्थ्यं स्पष्टमेव । किं च "आख्यानात्कृतस्तदाचष्टे" इत्यादिवार्तिकविहितप्रकृतिप्रत्यापत्तिवचनेनानित्यत्वं बोध्यम् । तद्धि "कंसं घातयति" इत्यादौ "हनश्च वधः" इति विहितस्यापो लुकि "हन्" इति प्रकृत्यवस्थापनाय क्रियते, यदि चायं न्यायो नित्यः स्यात् तदासंनियोगेन जायमानत्वात् वधादेशस्याब्निमित्तकत्वेन तल्लुकि तस्यापि विनाशः प्रकृतन्यायेनैव स्यात् किं तेन । वस्तुत एतैः परिभाषाभाव एव बोध्यते इति नव्याः ॥ २ **पुस्फारयिषतीति** । व्यवधानाद "ओः पुयण्–" इति न ॥ इति सन्नन्ताः ॥

षः स्यात्प्रभूते सनि नान्यस्य ॥ तुष्टूषति ॥ द्युतिस्वाप्योरित्युत्वम् । सुष्वापयिषति । सिषाधयिषति ॥ स्तौतिण्योः किम् ? सिसिक्षति ॥ उपसर्गात्तु स्थादिष्वभ्यासेन चेति षत्वम् । परिषिषिक्षति ॥ षणि किम् ? तिष्ठासति । सुषुप्सति ॥ अभ्यासादित्युक्तेर्नेह निषेधः । इण् । प्रतीषिषति । इक् । अधीषिषति ॥ **सः स्विदिस्वदिसहीनां च । ८ । ३ । ६२ ॥** अभ्यासेणः परस्य ण्यन्तानामेषां सस्य स एव न षः षणि परे ॥ सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति ॥ स्थादिष्वभ्यासस्येति नियमान्नेह—अभिसुसूषति ॥

शैषिकान्मतुवर्थीयाच्छैषिको मतुबर्थिकः ।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥

शैषिकाच्छैषिकः सरूपो न । तेन शालीये भव इति वाक्यमेव । न तु छान्ताच्छः ॥ सरूपः किम् ? अहिच्छत्रे भव आहिच्छत्रः । आहिच्छत्रे भव आहिच्छत्रीयः । अणन्ताच्छः ॥ तथा मत्वर्थात्सरूपः स न । धनवानस्यास्ति । इह मतुबन्तान्मतुप् न । विरूपस्तु स्यादेव । दण्डिमती शाला ॥ सरूप इत्यनुषज्यते । अर्थद्वारा सादृश्यं तस्यार्थः । तेन इच्छासन्नन्तादिच्छासन्न । स्वार्थसन्नन्तात्तु स्यादेव । जुगुप्सिषते । मीमांसिषते ॥

इति सन्नन्तप्रकरणम् ।

---

## अथ यङन्तप्रकरणम् ।

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ् । ३ । १ । २२ ॥** पौनः पुन्यं भृशार्थश्च क्रियासमभिहारस्तस्मिन् द्योत्ये यङ् स्यात् ॥ **गुणो यङ्लुकोः । ७ । ४ । ८२ ॥** अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च ॥ 'सनाद्यन्ता' इति धातुत्वाल्लडादयः । ङिदन्तत्वादात्मनेपदम् । पुनःपुनरतिशयेन वा भवति बोभूयते[1] । बोभूयांचक्रे । अबोभूयिष्ट ॥ धातोः किम् । आर्धधातुकत्वं यथा स्यात् । तेन ब्रुवोवचिरित्यादि ॥ एकाचः किम् ? पुनःपुनर्जागर्ति ॥ हलादेः किम् ? भृशमीक्षते[2] ॥ भृशं रोचते शोभते इत्यत्र यङ् नेति भाष्यम् । पौनःपुन्ये तु स्यादेव । रोरुच्यते । शोशुभ्यते ॥ **सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः * ॥** आद्यास्त्रयश्चुरादावदन्ताः[3] । सोसूच्यते । सोसूत्र्यते । अनेकाच्त्वेनाषोपदेशत्वात्षत्वं न । मोमूत्र्यते ॥ **यस्य हलः । ६ । ४ । ४९ ॥** यस्येति संघातग्रहणम् । हलः परस्य यशब्दस्य

---

१ बोभूयते इति । "क्रिया समभिहारे द्वे" इति द्वित्वं तु न, तस्य लोड्विषयत्वात् ॥ २ ईक्षते इति । यत्तु एकाज्ग्रहणाभावे "सूचिसूत्रि–" इति वार्तिकं नियमार्थं स्यात् "अनेकाज्भ्योऽजादिभ्यश्च यङ् चेद् वार्तिकपठितेभ्य एवेति" एवं च जागर्ति ईक्षते इत्यादौ दोषाभावेन तयोर्ग्रहणं निष्फलमेवेत्याहुः । तन्न, वार्तिकमदृष्ट्वैव प्रागुजातत्वेन सूत्रकृतः प्रवृत्त्या तदाश्रित्य तत्प्रत्याख्यानस्यानुचितत्वात् ॥ ३ अट्प्रभृतिभ्यो हलादित्वाभावेन यङोऽप्राप्तावपि सूचीत्यादिभ्यस्तु स्यादेव यङ् हलादित्वादिति तेषां वार्तिके उपादानं व्यर्थमेवेति शङ्कां वारयितुमाह अदन्ता इति । एवं च एकाच्त्वाभावान्न पूर्वसूत्रप्रवृत्तिरिति भावः ॥ ऊर्णोतिग्रहणं तु न कर्तव्यं नुवद्भावेन सिद्धेरिति बोध्यम् ॥

लोपः स्यादार्धधातुके ॥ 'आदेः परस्य' । 'अतो लोपः' ॥ सोसूचांचक्रे । सोसूचिता । सोसूत्रिता । मोमूत्रिता ॥ **दीर्घोऽकितः । ७ । ४ । ८३ ॥** अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च । अटाट्यते ॥ **यङि च । ७ । ४ । ३० ॥** अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि ॥ **यकारपररेफस्य न द्वित्वनिषेधः** । 'अरार्यते' इति भाष्योदाहरणात् । अरारिता । अशाशिता । ऊर्णोनूयते ॥ बेभिद्यते । अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः–बेभिदिता ॥ **नित्यं कौटिल्ये गतौ । ३ । १ । २३ ॥** गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे ॥ कुटिलं व्रजति वाव्रज्यते ॥ **लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् । ३ । १ । २४ ॥** एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् ॥ गर्हितं लुम्पति लोलुप्यते । सासद्यते ॥ **चरफलोश्च । ७ । ४ । ८७ ॥** अनयोरभ्यासस्यातो नुक् स्याद्यङ्यङ्लुकोः ॥ नुगित्यनेनानुस्वारो लक्ष्यते ॥ **स च पदान्तवद्वाच्यः * ॥** वा पदान्तस्येति यथा स्यात् ॥ **उत्परस्यातः । ७ । ४ । ८८ ॥** चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्यङ्लुकोः। हलि चेति दीर्घः । चञ्चूर्यते । चंचूर्यते। पम्फुल्यते। पंफुल्यते ॥ **जपजभदहदशभञ्जपशां च । ७ । ४ । ८६ ॥** एषामभ्यासस्य नुक् स्याद्यङ्यङ्लुकोः ॥ गर्हितं जपति जञ्जप्यते इत्यादि ॥ **ग्रो यङि । ८ । २ । २० ॥** गिरते रेफस्य लत्वं स्याद्यङि ॥ गर्हितं गिलति जगिल्यते ॥ घुमास्थेतीत्त्वम् । गुणः । देदीयते । पेपीयते । सेषीयते ॥ 'विभाषा श्वेः' । शोशूयते । शेश्वीयते ॥ 'यङि च' । सास्मर्यते ॥ 'रीङ् ऋतः' । चेक्रीयते । सुट् । संचेस्क्रीयते ॥ **सिचो यङि । ८ । ३ । ११२ ॥** सिचः सस्य षो न स्याद्यङि ॥ सेसिच्यते ॥ **न कवतेर्यङि । ७ । ४ । ६३ ॥** कवतेरभ्यासस्य चुत्वं न स्याद्यङि । कोकूयते । कौतिकुवत्योस्तु चोकूयते ॥ **नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् । ७।४ । ८४॥** एषामभ्यासस्य नीगागमः स्याद्यङ्यङ्लुकोः । अकित इत्युक्तेर्न दीर्घः । नलोपः । वनीवच्यते । सनीस्रस्यते इत्यादि ॥ **नुगतोऽनुनासिकान्तस्य । ७ । ४ । ८५ ॥** अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात् ॥ नुकानुस्वारो लक्ष्यत इत्युक्तम् । यँय-

---

१ "न न्द्राः–" इति निषेधमाशङ्क्याऽऽह-**यकारपरेति** । यकारः परो यस्मादसौ यकारपरः, ततः स चासौ रेफश्चेति कर्मधारयः ॥ २ तत्रोपपत्तिमाह--**अरार्यते इति** । उक्तोदाहरणस्य यशब्दाद्विधमन्तरा सिद्धिसम्भवो न । "नचोदाहरणमादरणीयम्" इति भाष्योक्तिस्तु "सुद्ध्युपास्यः" इति प्रयोगादेव यणू सेत्स्यति इति यण्विधायकसूत्रवैयर्थ्यमेवेत्यादिकुकल्पनाप्रसङ्गावसरे संघटते इति न विरोधसंभावना ॥ ३ **संचेस्क्रीयते इति** । न च "संकृ" इति दशायां द्वित्वनिमित्तयङः पूर्वमन्तरङ्गत्वात्सुटि कृते ततो यङि द्वित्वात् परत्वाद् "यङि च" इति गुणः स्यादिति वाच्यम्, "यङि च" इत्यत्र "असुट इति वक्तव्यम्" इत्यङ्गीकारेणादोषात् ॥ ४ "कवतेः" इति शपा निर्देशस्य फलमाह-**कौतीत्यादि** ॥ ५ **अकित इत्युक्तेरिति** । ननु "अजन्ताभ्यासस्य दीर्घः" इति सूत्रार्थेन नुगागमादौ कृते न सूत्रप्राप्तिरजन्तत्वविरहात्, नीकि च विशेषाभावः, रिकि विधानसामर्थ्यादेव दीर्घाभावः सिद्ध इति किम्--"अकितः" इत्यनेनेति चेन्न, अभ्यासविकारविधौ वैयधिकरण्यान्वयबोधनाय तस्यावश्यकत्वात् । तेन "चिच्छासति" इति सिद्धम् । नन्वेवमपि अपवादत्वान्नीगादिभिर्दीर्घबाधे सिद्धे "अकितः" इति व्यर्थमेवेति वाच्यम्, 'अभ्यासविकारेषु बाध्यबाधकभावो नास्ति" इति परिभाषाज्ञापनार्थत्वात् ॥

ण्यते । यंयम्यते ॥ तपरत्वसामर्थ्याद्भूतपूर्वदीर्घस्यापि न । भाम क्रोधे । बाभाम्यते ॥ 'ये वि-भाषा' । जाजायते । जञ्जन्यते ॥ **हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः*** ॥ जेघ्नीयते ॥ हिंसायां किम् ? जङ्घन्यते ॥ **रीगृदुपधस्य च । ७ । ४ । ९० ॥** ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्यङ्लुकोः । वरीवृत्यते । क्षुभ्नादित्वान्न णः–नरीनृत्यते । जरीगृह्यते । उभयत्र लत्वम् । चलीक्लृप्यते ॥ **रीगृत्वत इति वक्तव्यम् ***॥ वरीवृश्च्यते । परीपृच्छ्यते॥ **स्वपिस्यमिव्येञां यङि । ६ । १ । १९ ॥** संप्रसारणं स्याद्यङि ॥ सोषुप्यते । सेसिम्यते ॥ वेवीयते ॥ **न वशः । ६ । १ । २० ॥** वावश्यते ॥ **चायः की । ६ । १ । २१॥** चेकीयते ॥ **ई घ्राध्मोः । ७ । ४ । ३१ ॥** जेघ्रीयते । देध्मीयते ॥ **अयङ् यि क्ङिति । ७ । ४ । २२ ॥** शीङोऽयङादेशः स्याद्यादौ क्ङिति परे ॥ शाशय्यते । अभ्यासस्य ह्रस्वः । ततो गुणः । डोढौक्यते । तोत्रौक्यते॥

इति यङन्तप्रकरणम् ।

## अथ यङ्लुगन्तप्रकरणम् ।

**यङोऽचि च । २ । ४ । ७४ ॥** यङोऽच्प्रत्यये लुक् स्याच्चकारात्तं विनापि बहुलं लुक् स्यात् ॥ अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः । शेषात्कर्तरीति परस्मैपदम् । 'अनुदात्तङित' इति तु न । ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः । यत्र हि प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत् । अत एव सुदृषत्प्रासाद इत्यत्र अत्वसन्तस्येति दीर्घो न । येऽपि स्पर्धशीङादयोऽनुदात्तङितस्तेभ्योऽपि न । 'अनुदात्तङित' इत्यनुबन्धनिर्देशात् तत्र च श्तिपा शपेति

---

१ **घ्नीभाव इति** । अत्र " यङि " इति विषयसप्तमी । तेन " पिप्ये " इतिवद् द्वित्वात् पूर्वमेव घ्नीभावः । यद्यपि " ह्नी " इत्येतावतापि " अभ्यासाच्च " इति कुत्वे जेघ्नीयते इत्यादि सिध्यति, तथापि प्रक्रियालाघवाय घ्नीभाव एव कृतः । यङ्घ्येयोपसंख्यानाद् यङ्लुकि न, " न लुमता–" इति निषेधात् । दीर्घोच्चारणं तु प्रक्रियालाघवाय । अत एव श्तिपा निर्देश–चरितार्थः ॥ २ " ई घ्राध्मोः " दीर्घोच्चारणम् " अस्य च्वौ " इत्युत्तरार्थम् ॥ ३ " **अयङ् यि** " " यि **क्ङिति** " इति विषयसप्तमी । तेन द्वित्वादन्तरङ्गत्वात् पूर्वमयङि द्वित्वम्, न तु दिग्यादेशवत् द्वित्व-बाध इति बोध्यम् ॥ इति यङन्तप्रक्रिया ॥ ४ **अन्तरङ्गत्वादिति** । अत्रान्तरङ्गत्वं प्राक्प्रासिकत्वरूपम् । लुक्त्वाच्चेत्यपि बोध्यम् । सर्वविधिभ्यो लुको बलवत्त्वात् ॥ ५ **धातुत्वादिति** । यथोद्देशपक्षे यङन्ते प्रवृत्ताया धातुसंज्ञाया एकदेशविकृतन्यायेनावस्थितत्वात् कार्यकालपक्षेऽपि **चर्करीतम्** " इत्यस्यादादौ पाठेन यङ्लुगन्तस्य भ्वादित्वाद् भूवादिसूत्रप्रवृत्तेश्च धातुत्वं सुलभमिति भावः ॥ ६ **तदिति** । प्रत्ययलक्षणमित्यर्थः । एतच्च स्थानिवत्सूत्रेणैव सिद्धे नियमार्थं प्रत्ययलक्षणसूत्रमित्यभिप्रायेण ॥ नियमार्थत्वमेव सूत्रस्य युक्तमिति ध्वनयन्नाह–**अत एवेति** । प्रत्ययस्यासाधारणरूपाश्रयण एव प्रत्ययलक्षणप्रवृत्तिरित्यत्रैव ज्ञीकारादेवेत्यर्थः ॥ ७ **तत्र चेति** । अनुबन्धनिर्देशे च । वस्तुतः–" तेतिक्ते इति किं निपात्यते ? अत्रैव यङ्लुगन्तस्यात्मनेपदं भवति नान्यत्र । क्व मा भूत् ? बेभिदीति चेच्छिदीति " इति भाष्योक्तनियमेनैवात्मनेपदव्यावृत्तेः परस्मैपदसिद्धिरिति बोध्यम् ॥

निषेधात् ॥ अत एव श्यन्नादयो न । गणेन निर्देशात् । किंतु शबेव ॥ 'चर्करीतं चेत्यदादौ पाठाच्छपो लुक् ॥ **यङो वा। ७ । ३ । ९४ ॥** यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड्वा स्यात् । भूसुवोरिति गुणनिषेधो यङ्लुकि भाषायां न । 'बोभूतु तेतिक्ते' इति छन्दसि निपातनात् । अत एव यङ्लुग्भाषायामपि सिद्धः । न च यङ्लुकि अप्राप्त एव गुणाभावो निपात्यतामिति वाच्यम् । प्रकृतिग्रहणेन यङ्लुगन्तस्यापि ग्रहणात् । द्विष्प्रयोगो द्विर्वचनं षाष्ठमिति सिद्धान्तात् । बोभवीति । बोभोति । बोभूतः । बोभुवति । बोभवांचकार । बोभविता । अबोभवीत् । अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयास्ताम् । गातिस्थेति सिचो लुक् । यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत् । अबोभोत् । अबोभूताम् । अभ्यस्ताश्रयो जुस्, नित्यत्वाद्वुक् । अबोभूवुः । अबोभविष्यदित्यादि ॥ पास्पर्धीति । पास्पर्धि । पास्पर्धः । पास्पर्धति । पास्पर्त्सि । 'हुझल्भ्यो हेर्धिः' । पास्पर्धि । लङ् । अपापास्पर्त् । अपास्पर्द् । सिपि दश्चेति रुत्वपक्षे 'रोरि' । अपास्पाः ॥ जागाढि । जागा-

---

१ **अत एवेति** । "शितपा शपा" इत्यस्य प्रवृत्तेरेव । वस्तुतो "यङोऽचि च" इति सूत्रे "बहुलं छन्दसि" इत्यतः छन्दःपदानुवृत्त्या यङ्लुकश्छान्दसत्वे छन्दसश्च दृष्टानुविधित्वेन तत्तत्कार्यनिष्पत्तौ निष्फलमिति वदन्ति प्रतिभाशालिनो नूतनाः ॥ एकाज्ग्रहणस्य वधिन्यावृत्त्यर्थत्वेन आवश्यकतया ज्ञापकाभावान्निर्मूलं चेत्यधिकं नागेशीये ॥ २ **अत एवेति** । पूर्वोक्तनियमादेवेत्यर्थः । "बोभूतु इति किं निपात्यते ? भवतेर्यङ्लुगन्तस्यागुणत्वं निपात्यते । नैतदस्ति प्रयोजनम् । सिद्धमत्रागुणत्वं "भूसुवोस्तिङि" इति । एवं तर्हि नियमार्थं भविष्यति–अत्रैव यङ्लुगन्तस्य गुणो न भवति, नान्यत्र । क्व मा भूत् ? बोभवीति' इति ।" इति भाष्ये "**अत्रैव**" इत्यस्य "छन्दस्येव" इत्यर्थाङ्गीकारे "**अन्यत्र**" इत्यस्य "भाषायाम्" इत्यर्थाङ्गीकारावश्यकत्वेन गुणाभावव्यावर्त्यत्वेन भाषायामपि प्रयोगाङ्गीकारो ध्वनित इति भावः ॥ वस्तुतस्तु—"**अत्रैव**" इत्यस्य "लोटयेव" इत्यर्थसंभवे "**अन्यत्र**" इत्यस्य "लोड्भिन्ने" इत्यर्थसंभवेन लोटयेव गुणसाधकताप्रतीतौ नास्य भाष्यस्य भाषायां यङ्लुकप्रयोगसाधकत्वमिति ॥" एवं तर्हि सिद्धे सति यत् हुश्नुग्रहणं करोति तज्ज्ञापयत्याचार्यो "भाषायामपि यङ्लुग् भवति" इति । किमेतस्य ज्ञापने प्रयोजनम् ? 'बेभिदीति चेच्छिदीति इत्येतत्सिद्धं भवति भाषायामपि इति" इति । "हुश्नुवोः सार्वधातुके" इति सूत्रस्थं भाष्यमेव यङ्लुको भाषायां मानम्, इति यदि विभाव्यते तर्हि "क्ङिति च" इति सूत्रभाष्ये "**रोरवीति**" इत्यस्य छान्दसत्वकथनेन "किमेतस्य ज्ञापने प्रयोजनम्" इति प्रश्नस्य 'बेभिदीति चेच्छिदीति इत्येतत्सिद्धं भवति भाषायामपि' इत्युत्तरे "**इत्येतत्**" इत्युक्त्या सर्वधातुप्रकृतिकयङ्लुको भाषाविषयत्वाङ्गीकारे मानाभावः । एतद्भाष्यस्यैकदेशित्वमेव भाष्यकृता सर्वत्र यङ्लुग्विषये वैदिकोदाहरणस्यैव दानादिति नैतद् भाष्यमपि यङ्लुको भाषायां सर्वधातुविषयकत्वसाधकमिति शम् ॥ अप्रयुक्ते लक्षणप्रवृत्त्यभावस्य "**यथालक्षणमप्रयुक्ते**" इति ग्रन्थेन तत्र तत्रोक्तत्वान्नैव स्वकल्पनयाऽप्रयुक्तप्रयोगवर्णनं सम्यगिति दाधिमथाः ॥ ३ **अप्राप्त एवेति** । समुदायस्य शब्दान्तरत्वेन "बोभू" इति यङ्लुगन्तस्य भूत्वाभावादिति भावः ॥ ४ "प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्" इति परिभाषायां मानमाह **द्विष्प्रयोग इति** । वस्तुत इदं चिन्त्यम् । "भूसुवोः" इत्यस्य "तदन्ताङ्गस्य" इत्यर्थेन निषेधप्राप्त्या नियमसंभवात् । अत एव अस्तेर्भूआदेशे स्थाने द्विर्वचनपक्षे "सर्वादेशो भूभावः प्राप्नोति । अथ द्विष्प्रयोगो द्विर्वचनं तदा परस्य भूभावे कृते पूर्वस्य श्रवणं प्राप्नोति" इति भाष्ये उक्तमिति दिक् ॥ ५ **अपास्पा इति** । ढ्रलोपसूत्रे ढ्रलोपग्रहणेन "अजर्घाः" इति भाष्योदाहरणेन च "पूर्वत्र–" इति सूत्रे पूर्वग्रहणेन ढ्रलोपसूत्राग्रहणबोधनेन दीर्घे कर्तव्ये "सिपि धातोः–" इति रुत्वं 'रो रि' इति च नासिद्धम् ॥

धीति । जाघात्सि । अजाघात् । सिपि रुत्वपक्षे अजाघाः ॥ नाथृ । नानात्ति । नानात्तः ॥ दध । दादद्धि । दादद्धः । दाधत्सि । अदाधत् । अदादद्धाम् । अदादधुः । अदाधः । अदाधत् । लुङि । अदादाधीत् । अदादधीत् ॥ चोस्कुन्दीति । चोस्कुन्ति । अचोस्कुन् । अचोस्कुन्ताम् । अचोस्कुन्दुः ॥ मोमुदीति । मोमोत्ति । मोमोदांचकार । मोमोदिता । अमोमुदीत् । अमोमोत् । अमोमुत्ताम् । अमोमुदुः । अमोमुदीः । अमोमोः । अमोमोत् । लुङि गुणः । अमोमोदीत् ॥ चोकूर्त्ति । चोकूर्दीति । लङ् तिप् । अचोकूर्त् । अचोकूर्दीत् । सिप् । रुपक्षे अचोकूः । अचोखूः । अजोगूः ॥ वनीवञ्चीति । वनीवङ्क्ति । वनीवक्तः । वनीवचति । अवनीवञ्चीत् । अवनीवन् ॥ जङ्गमीति । जङ्गन्ति । अनुदात्तोपदेशेत्यनुनासिकलोपः । जङ्गतः । जङ्ग्मति । 'म्वोश्च' । जङ्गन्मि । जङ्गन्वः । एकाज्ग्रहणेनोक्तत्वान्नेण्निषेधः । जङ्गमिता । अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक् । जङ्गहि ॥ ' मो नो धातोः' । अजङ्गन् । अनुबन्धनिर्देशान्न च्लेरङ् । ह्मयन्तेति न वृद्धिः । अजङ्गमीत् । अजङ्गमिष्टाम् ॥ हन्तेर्यङ्लुक् । अभ्यासाच्चेति कुत्वं यद्यपि हो हन्तेरित्यतो हन्तेरित्यनुवर्त्य विहितं तथापि यङ्लुकि भवत्येवेति न्यासकारः । श्तिपा शपेति निषेधस्त्वनित्यः । गुणो यङ्लुकोरिति सामान्यापेक्षज्ञापकादिति भावः । जङ्घनीति । जङ्घन्ति । जङ्घतः । जङ्घ्नति । जङ्घनिता । श्तिपा निर्देशाज्जादेशो न । जङ्घहि । अजङ्घनीत् । अजङ्घन् । जङ्घन्यात् । आशिषि तु—वध्यात् । अवधीत् । अवधिष्टामित्यादि ॥ वधादेशस्य द्वित्वं तु न भवति स्थानिवत्त्वेनानभ्यासस्येति निषेधात् । तद्धि समानाधिकरणं धातोर्विशेषणम् । बहुव्रीहिबलात् । आङ्पूर्वात्तु 'आङो यमहनः' इत्यात्मनेपदम् । आजङ्घते इत्यादि ॥ उत्परस्येति तपरत्वान्न गुणः । हलि च तिदीर्घस्तु स्यादेव । तस्यासिद्धत्वेन तपरत्वनिवर्त्यत्वायोगात् । चञ्चुरीति । चञ्चूर्ति । चञ्चूर्तः । चञ्चुरति । अचञ्चुरीत् । अचञ्चूः । चङ्खनीति । चङ्खन्ति । जनसनेत्यात्त्वम् । चङ्खातः । गमहनेत्युपधालोपः—चङ्ख्नति । चङ्खाहि । चङ्खनानि । अचङ्खनीत् । अचङ्खन् । अचङ्खाताम् ।

---

१ **वनीवञ्चीतीति** । "नीग् वञ्चु—" इत्यनुबन्धनिर्देशान्नीग् दुर्लभ इति तु नाशङ्क्यम्, "यङ्लुकोः" इत्यनुवृत्तिसामर्थ्येनादोषात् । प्रत्ययलक्षणेन यङ्निमित्तः "अनिदिताम्—" इति नलोपः स्यादित्यपि नाशङ्क्यम्, लुका लुप्तत्वेन "न लुमता—" इति निषेधात् ॥ २ **वनीवक्ति इति** । ईकारोच्चारणसामर्थ्याद् "गुणो यङ्लुकोः" इति नीगादेर्गुणो न ॥ ३ **सामान्यापेक्षेति** । एकाचो द्वित्वं विधीयते तत्र च "श्तिपा शपा—" इति निषेधादभ्यासत्वाभावेन विधानवैयर्थ्यं स्पष्टमेवेति भावः ॥ ४ **आशिषि तु वध्यादिति** । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणादिति भावः ॥ कृतद्विर्वचनस्य वधादेशे पुनर्द्वित्वाभावे हेतुमाह—**स्थानिवत्त्वेनेति** । " दयतेः-" इति सूत्रस्थेन बभूवेत्यत्र द्वित्वोत्तरं परस्य भूभावे पूर्वस्य श्रवणापादकभाष्येण उत्तरखण्डस्यैव वधादेशे "जंवध्यात्" इत्येव रूपमिति बोध्यम् ॥ 'लिङि' ' लुङि' इति सप्तम्या विषयसप्तमीत्वसिद्धान्ते तद्विवक्षायामेव वधादेशे यङ्लुकोर्द्वित्वे वावध्यादित्यादीन्येव रूपाणि भवन्तीति प्रतिभाशालिन उच्छृङ्खलाः ॥ छान्दसेषु दर्शनमन्तरा आपाद्यमानरूपाभाव एव मन्तव्य इति दाधिमथाः ॥ ५ **धातोर्विशेषणमिति** । अशास्त्रीयस्याप्यतिदेश इति मतेनेदम् ॥ ६ **असिद्धत्वेनेति** । तत्वञ्च त्रिपादीस्थत्वेन । वस्तुत इदञ्चिन्त्यम्, अपरनिमित्तकस्य तपरसूत्रस्यान्तरङ्गत्वेन तद्दृष्ट्या गुणस्य बहिरङ्गत्वात् ॥

अचङ्क्नुः । 'ये विभाषा'–चङ्कायात् । चङ्कन्यात् । अचङ्कनीत् । अचङ्कानीत् ॥ उतो वृद्धिरित्यत्र नाभ्यस्तस्येत्यनुवृत्तेरुतो वृद्धिर्न--योयोति । योयवीति । अयोयवीत् । अयोयोत् । योयुयात् । आशिषि दीर्घः–योयूयात् । अयोयावीत् ॥ नोनवीति । नोनोति ॥ जाहेति । जाहाति । 'ई हल्यघोः'- जाहीतः । इह 'जहातेश्च' 'आ च हौ' 'लोपो यि' 'घुमास्था' 'एर्लिङीत्येते पञ्चापि न भवन्ति । श्तिपा निर्देशात् । जाहति । जाहासि । जाहेषि । जाहीथः । जाहीथ । जाहीहि । अजाहेत् । अजाहात् । अजाहीताम् । अजाहुः । जाहीयात् । आशिषि । जाहायात् । अजाहासीत् । अजाहासिष्टाम् । अजाहिष्यत् ॥ लुका लुप्ते प्रत्ययलक्षणाभावात् स्वपिस्यमीत्युत्वं न । 'रुदादिभ्यः' इति गणनिर्दिष्टत्वादिण्न । सास्वपीति । सास्वप्ति । सास्वप्तः । सास्वपति । असास्वपीत् । असास्वप् । सास्वप्यात् । आशिषि तु वचिस्वपीत्युत्वम् । सासुप्यात् । असास्वापीत् । असास्वपीत् ॥ **रुग्रिकौ च लुकि । ७ । ४ । ९१ ॥** ऋदुपधस्य धातोरभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युर्यङ्लुकि ॥ **ऋतश्च । ७ । ४ । ९२ ॥** ऋदन्ताद्धातोरपि तथा ॥ वर्वृतीति । वरिवृतीति । वरीवृतीति । वर्वर्ति । वरिवर्ति । वरीवर्ति । वर्वृतः ३ । वर्वृतति ३ । वर्वर्तामास ३ । वर्वर्तिता ३ । गणनिर्दिष्टत्वाद् 'न वृद्भ्यश्चतुर्भ्यः' इति न । वर्वर्तिष्यति ३ । अवर्वृतीत् ३ । वर्वर्वर्त् ३ । सिपि दश्चेति रुत्वपक्षे 'रो रि' । अवर्वाः ३ । गणनिर्दिष्टत्वादङ् न–अवर्वर्तीत् ३ ॥ चर्करीति ३ । चर्कर्ति । चरिकर्ति । चरीकर्ति । चर्कृतः ३ । चर्क्रति ३ । चर्करांचकार ३ । चर्करिता ३ । अचर्करीत् ३ । अचर्कः ३ । चर्कृयात् ३ । आशिषि रिङ् । चार्क्रियात् ३ । अचर्कारीत् ऋतश्चेति तपरत्वान्नेह । कॄ विक्षेपे । चाकर्ति । तातर्ति । तातीर्तः । तातिरति । तातीर्हि । तातराणि । अतातरीत् । अतातः । अतातीर्ताम् । अतातरुः । अतातारीत् । अतातारिष्टामित्यादि ॥ अर्तेर्यङ्लुकि द्वित्वेऽभ्यासयोरदत्त्वं रपरत्वम् लादिः शेषः' । रुक् । रिग्रीकोस्तु 'अभ्यासस्यासवर्णे' इतीयङ् । अरर्ति । अरियर्ति । अररीति । अरियरीति । अर्ऋतः । अरियृतः । झि अत् । यण् । रुको रो रीति लोपः । न च तस्मिन् कर्तव्ये यणः स्थानिवत्त्वम् । पूर्वत्रासिद्धीये तन्निषेधात् । आरति । अरियूति । लिङि श्तिपा निर्देशाद् गुणोर्तीति गुणो न । रिङ । रलोपः । दीर्घः । आरियात् । अरियियात् । आरारीत् । आरियारीत् ॥ गॄ ग्रहणे । जर्गृहीति ३ । जर्गर्ढि ३ ।

---

१ **जाहेतीति** । ननु "अकितः–" इत्यस्य "न किदकित् तस्य" इत्यर्थे हाकः कित्त्वाद् दीर्घनिषेधः स्यादिति चेन्न, "न विद्यते किद् यस्मिन्" इति बहुव्रीहिगर्भबहुव्रीह्याश्रयणेनादोषात् । तादृशसमासाश्रयणसामर्थ्यादेव व्यपदेशिवद्भावोऽपि न ॥ २ **अवर्वादिति** । वस्तुतः "रात्सस्य" इत्यत्र तकारप्रश्लेषे तकारलोपप्राप्त्या सूत्रमते चाप्राप्त्या फलभेदापत्तावस्यानभिधानमेव ज्यायः ॥ ३ **आरतीति** । ऋधातोर्यङ्लुगन्ताल्लटि टेरदादेशे रुगागमस्योत्तरखण्डादेशस्य यणि "रोरि" इति लोपे "ढ्रलोपे" इति दीर्घः । नच दीर्घे "अचः परस्मिन्–" इति यणः स्थानिवत्त्वं स्यादिति वाच्यम्, दीर्घविधौ तन्निषेधात् ॥ ४ **अरियृतीति** । परत्वादन्तरङ्गत्वाच्च यणः पूर्वमेवेयङ् ॥ ५ **अरियियादिति** । ऋधातोर्यङ्लुगन्ताल्लिङि । तिबादेशे यासुटि रिङादेशेऽपि तस्य स्थानिवद्भावेनाच्त्वादभ्यासावयवस्य रिगागमस्येयङादेशः । नचास्मिन् कृतेऽपि वलि परतो लोपः स्यादिति वाच्यम्, रिङादेशस्य बहिरङ्गत्वेनासिद्धत्वात् स्थानिवद्भावाच्च ॥

जर्गृढः ३ । जर्गृहति ३ । अजर्घर्ट् ३ ॥ गृह्णातेस्तु जाग्रहीति । जाग्राढि ॥ तसादौ ङिन्निमित्तं संप्रसारणम् । तस्य बहिरङ्गत्वेनासिद्धत्वान्न रुगादयः । जागृढः । जागृहति । जाग्रहीषि । जाग्रक्षि । लुटि–जाग्रहिता । ग्रहोलिटीति दीर्घस्तु न । तत्रैकाच इत्यनुवृत्तेः ॥ माधवस्तु दीर्घमाह तद्भाष्यविरुद्धम्॥ जर्गृधीति ३ । जर्गार्द्धि ३ । जर्गृद्धः ३ । जर्गृधति ३ । जर्गृधीषि ३ । जर्धर्त्सि ३ । अजर्गृधीत् ३ । इडभावे गुणः । हल्ङ्यादिलोपः । भष्भावः । जश्त्वचर्त्वे । अजर्घर्त् ३। अजर्गृद्धाम् ३ । सिपि दश्चेति पक्षे रुत्वम् । अजर्घाः ३ । अजर्गर्धीत् ३ । अजर्गर्धिष्टाम् ३ ॥ पाप्रच्छीति । पाप्रष्टि । तसादौ ग्रहिज्येति संप्रसारणं न भवति । श्तिपा निर्देशात् । छ्वोः शूडिति शः । व्रश्चेति षः । पाप्रष्टः । पाप्रच्छति । पाप्रश्मि । पाप्रच्छ्वः । पाप्रश्मः । यकारवकारान्तानां तूठ्भाविनां यङ्लुङ् नास्तीति च्छ्वोरिति सूत्रे भाष्ये ध्वनितम् । कैयटेन च स्पष्टीकृतम् । इदं च्छोरिति यत्रोठ् तद्विषयकम् । ज्वरत्वरेत्यूठ्भाविनोः स्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यम् । माधवादिसंमतं च । मव बन्धने । अयं यान्त ऊठ्भावी । तेवृ देवृ देवने इत्यादयो वान्ताः । हय गतौ । जाहयीति । जाहति । जाहतः । जाहयति । जाहयीषि । जाहसि । वलि लोपे यञादौ दीर्घः । जाहामि । जाहावः । जाहामः । हर्य गतिकान्त्योः । जाहर्यीति । जाहर्ति । जाहर्तः । जाहर्यति । लोटि । जाहर्हि । अजाहः । अजाहर्ताम् । अजाहर्युः । मव बन्धने ॥ ज्वरत्वरस्रिव्यविमवामुपधायाश्च । ६ । ४ । २० ॥ ज्वरादीनामुपधावकारयोरूठ् स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये ॥ अत्र क्ङितीति नानुवर्तते । अवतेस्तुनि कृते ओतुरिति दर्शनात् । अनुनासिकग्रहणं चानुवर्तते । अवतेर्मन्प्रत्यये तस्य टिलोपे ओमिति दर्शनात् । इडभावे ऊठि पिति गुणः । मामोति । मामवीति ॥ मामूतः । मामवति । मामोषि । मामोमि । मामावः । मामूमः । मामूहि । मामवानि । अमामोत् । अमामोः । अमामवम् । अमामाव । अमामूम । तुर्वी हिंसायाम् । तोतूर्वीति ॥ राल्लोपः । ६ । ४ । २१ ॥ रेफात्परयोश्छ्वोर्लोपः स्यात् क्वौ झलादावनुनासिकादौ च प्रत्यये ॥ इति वलोपः । लघूपधगुणः ॥ न धातुलोप आर्धधातुके । १ । १ । ४ ॥ धात्वंशलोपनिमित्ते

---

१ **तद्भाष्यविरुद्धमिति** । वस्तुत एकाज्ग्रहणानुवृत्तिरेव भाष्यविरुद्धा । तथा हि–अस्माद् यङ्लुक्सत्त्वेऽपि दीर्घस्य प्राप्तिरेव नास्ति, भाष्यकृता द्वित्वेऽभ्यासविशिष्टस्यैवाङ्गत्वाङ्गीकारवत् "प्रत्ययग्रहणे यस्माद्–" इति न्यायेन विशिष्टस्यैव यङन्तत्वाद् धातुत्वाङ्गीकारः, नतु तस्य ग्रहित्वमिति इड्योग्यप्रत्ययस्य ग्रहेर्विहितत्वाभावात्, तदनुवृत्तेर्निष्फलत्वात् ॥ २ **अजर्घा इति** । "गृधेर्यङ्लोपे लङ्सिरिलोपे हल्ङ्यादिलोपे रपरे गुणे च । भष्भावजश्त्वे च रु रो रिलोपे ढ्लोपदीर्घे च भवेदजर्घाः" ॥ ३ **भाष्ये ध्वनितमिति** । तत्र हि "च्छ्वोः" इति सूत्रे "ङिद्ग्रहणमनुवर्तते उताहो न" इति विचारे "एतावानेव विशेषः, अनुवर्तमाने ङिद्ग्रहणे छः षत्वं वक्तव्यम्, अननुवर्तमाने तु छः शादेशे शान्तत्वादेव "अष्टा" इत्यादिरूपसिद्धौ "व्रश्च–" इति सूत्रे छग्रहणं न कार्यम् ॥" इति भाष्यम् । अत्र "एतावानेव" इति वदता भाष्यकारेण "ऊड्भाविभ्यो यङ्लुग् नास्ति" इति ध्वनितम् । अन्यथा दिवेर्यङ्लुगन्तस्य इडभावपक्षे अनुवर्तमाने क्ङिति "देदेति" अननुवर्तमाने च "देद्योति" इति ऊठो भावाभावाभ्यां रूपे विशेषस्य स्पष्टतया "एतावानेव" इत्येवकारो विरुध्येत । इति शम् ॥

आर्धधातुके परे इको गुणवृद्धी न स्तः ॥ इति नेह निषेधः । तिबादीनामनार्धधातुकत्वात् । तोतोर्ति । हलि चेति दीर्घः । तोतूर्तः । तोतूर्वति । तोथोर्ति । दोदोर्ति । दोधोर्ति । मुर्च्छा । मोमूर्च्छीति । मोमोर्ति । मोमूर्तः । मोमूर्च्छतीत्यादि ॥आर्धधातुक इति विषयसप्तमी । तेन यङि विवक्षिते अजेर्वी । वेवीयते । अस्य यङ्लुङ् नास्ति । लुकापहारे विषयत्वाभावेन[1] वीभावस्याप्रवृत्तेः॥

इति यङ्लुगन्तप्रकरणम् ।

## अथ नामधातुप्रकरणम् ।

**सुप आत्मनः क्यच् । ३ । १ । ८ ॥** इषिकर्मण: एषितृसंबन्धिनः सुबन्तादिच्छायामर्थे **क्यच्** प्रत्ययो वा स्यात् ॥ धात्ववयवत्वात्सुब्लुक् ॥ **क्यचि च । ७ । ४ । ३३ ॥** अस्य ईत्स्यात्[2] ॥ आत्मनः पुत्रमिच्छति पुत्रीयति । 'वान्तो यि प्रत्यये' । गव्यति नाव्यति । लोपः शाकल्यस्येति तु न । अपदान्तत्वात । तथा हि ॥ **नः क्ये । १ । ४ । १५ ॥** क्यचि क्यङि च नान्तमेव पदं स्यान्नान्यत् ॥ संनिपातपरिभाषया[3] क्यचो यस्य लोपो न । गव्यांचकार । गव्यिता । नाव्यांचकार । नाव्यिता ॥ न लोपः । राजीयति[4] ॥ प्रत्ययोत्तरपदयोश्च । त्वद्यति । मद्यति । एकार्थयोरित्येव । युष्मद्यति । अस्मद्यति ॥ 'हलि च' । गीर्यति । पूर्यति । धातोरित्येव । नेह । दिवमिच्छति दिव्यति । इह पुरमिच्छति पुर्यतीति माधवेनोक्तं प्रत्युदाहरणं चिन्त्यम्[5] । पुर्गिरोः साम्यात् । दीव्यतीति दीर्घस्तु प्राचः प्रामादिक[6] एव ॥ अदर्यति । 'रीङ् ऋतः' । कर्त्रीयति ॥'क्यच्व्योश्च' । गार्गीयति ॥ वाच्यति[7] ॥ अकृत्सार्वेति दीर्घः। कवीयति । समिध्यति ॥ **क्यस्य विभाषा । ६ । ४ । ५० ॥** हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्धधातुके ॥ आदेः परस्य । अतो लोपः । तस्य स्थानिवत्त्वाल्लघूपधगुणो न । समिधिता । समिध्यिता ॥ **मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच् न*[8]** ॥ किमिच्छति । इदमिच्छति । स्वरिच्छति ॥ **अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु[9] । ७ । ४ । ३४ ॥** क्य-

---

१ **विषयत्वाभावेनेति** । लुकापहारे विषये विषयत्वस्याप्यपहारे " न लुमताङ्गस्य" इति प्रत्ययलक्षणनिषेधवैयर्थ्यं स्यात ॥ तस्माच्छन्दसि दृष्टानुविधानशरणमेव वरम् इति दाधिमथाः ॥ इति यङ्लुगन्तप्रक्रिया ॥ २ **अस्य ईदिति** । अवर्णान्तस्याङ्गस्येत्यर्थः ॥ ३ " यस्य हलः " इति लोपं निवर्तयति—**सन्निपातेति** ॥ ४ **राजीयतीति** । " न लोपः सुप्स्वर–" इति नियमादीत्त्वे कर्तव्ये नलोपो नासिद्धः ॥ ५ **चिन्त्यमिति** । "पुर्शब्दमिच्छति " इत्यर्थेऽपि "प्रकृतिवदनुकरणम् " इत्यनेन धातुत्वानपायादिति भावः ॥ ६ **प्रामादिक इति** । " दिवेर्डिविः " इति डिविप्रत्यये धातुत्वाभावादिति भावः ॥ ७ **वाच्यतीति** । "धातोः कार्यमुच्यमानम्–"इति सम्प्रसारणाभावः ॥ ८ क्यज्विधायकसूत्रे " **मान्ताव्ययानां प्रतिषेधः** " इत्येव वार्तिकं यथाश्रुतमसङ्गतम्, " पुत्रमिच्छति " इत्यत्रापि प्रतिषेधापत्तेः, सूत्रे तु द्विवचनबहुवचनान्तात् प्रत्ययविधायकत्वेन चरितार्थमतः शेषपूरणेन व्याचष्टे **मान्तप्रकृतिकेति** ॥ ९ **अशनायोदन्यधनाया इति** । एते समुदाया बुभुक्षादिष्वर्थेषु निपात्यन्ते । प्रकृत्यर्थोऽत्र न विवक्षितः॥ " उदन्या तु पिपासा तृट् " इति कोशात् । अशनशब्दः कर्मल्युडन्तः । कालान्तरोपयोगार्थं योऽशनमिच्छति, स्नानायोदकमिच्छति, दारिद्र्यपीडितः सन् यो धनमिच्छति, तत्र न प्रत्ययः । किं तु धने सत्यपि धनेच्छारूपगार्द्ध्यं एव ॥

जन्ता निपात्यन्ते । अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् ? अशनीयति । उदकीयति । धनीयति ॥ **अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि । ७ । १ । ५१ ॥** एषां क्यचि असुगागमः स्यात् ॥ **अश्ववृषयोर्मैथुनेच्छायाम् * ॥** अश्वस्यति वडवा । वृषस्यति गौः ॥ **क्षीरलवणयोर्लालसायाम् * ॥** क्षीरस्यति बालः । लवणस्यति उष्ट्रः ॥ **सार्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ * ॥** दधिस्यति । दध्यस्यति । मधुस्यति । मध्वस्यति ॥ **काम्यच्च । ३ । १ । ९ ॥** उक्तविषये काम्यच् स्यात् ॥ पुत्रमात्मनः इच्छति पुत्रकाम्यति । इह यस्य हल इति लोपो न । अनर्थकत्वात् । यस्येति संघातग्रहणमित्युक्तम् । यशस्काम्यति । सर्पिष्काम्यति । मान्ताव्ययेभ्योऽप्ययं स्यादेव । किंकाम्यति । स्वःकाम्यति ॥ **उपमानादाचारे । ३ । १ । १० ॥** उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्यात् ॥ पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति द्विजम् ॥ **अधिकरणाच्चेति वक्तव्यम् ॥** प्रासादीयति कुट्यां भिक्षुः । कुटीयति प्रासादे ॥ **कर्तुः क्यङ् सलोपश्च । ३ । १ । ११ ॥** उपमानात्कर्तुः सुबन्तादाचारे क्यङ् वा स्यात् सान्तस्य तु कर्तृवाचकस्य लोपो वा स्यात् ॥ क्यङ् वेत्युक्तेः पक्षे वाक्यम् । सान्तस्य लोपस्तु क्यङ्सन्नियोगशिष्टः । स च व्यवस्थितः ॥ **ओजसोऽप्सरसो नित्यमितरेषां विभाषया ॥** कृष्ण इवाचरति कृष्णायते । ओजः शब्दो वृत्तिविषये तद्वति । ओजायते । अप्सरायते । यशायते । यशस्यते । विद्वस्यते । त्वद्यते । मद्यते । अनेकार्थत्वे तु युष्मद्यते । अस्मद्यते ॥ क्यङ्मानिनोश्च ॥ कुमारीवाचरति—कुमारायते ॥ हरिणीवाचरति—हरिणायते । गुर्वीव गुरूयते ॥ सपत्नीव सपत्नायते । सपतीयते । सपत्नीयते । युवतिरिव युवायते । पट्वीमृद्व्याविव पट्वीमृदूयते ॥ न कोपधायाः-पाचिकायते ॥ **आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः * ॥** वाग्रहणात् क्यङपि । अवगल्भादयः पचाद्यजन्ताः । क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते । तेन तङ । अवगल्भते । क्लीबते । होडते । भूतपूर्वादप्यनेकाच आम् । एतद्वार्तिकारम्भसामर्थ्यात् । न च अवगल्भते इत्यादिसिद्धिस्तत्फलम् । केवलानामेवाचारेऽपि वृत्तिसंभवात् । धातूनामनेकार्थत्वात् । अवगल्भांचक्रे । क्लीबांचक्रे । होडांचक्रे । वार्तिकेऽवेप्युपसर्गविशिष्टपाठात्केवलादुपसर्गान्तरविशिष्टाच्च क्यङेवेति माधवादयः ।

---

१ "अश्वक्षीर--" इत्यनेन प्रकृतिविशेषोपादानेऽपि "वृषस्यन्ती तु कामुकी" इति कोशात् प्रकृत्यर्थोऽत्रापि न विवक्षितः । तथा च मानुष्यामपि "वृषस्यन्ती" इति प्रयोगः ॥ २ **लालसायामिति । लालसा** उत्कटेच्छा ॥ ३ **कर्तुः क्यङ् इति** । अत्र चकारोऽन्वाचये । "स" इति लुप्तषष्ठीकं पृथक्पदम् । तच्च "कर्तुः" इत्यस्य विशेषणम् ॥ ४ **सपत्नीवेति** । शत्रुपर्यायसपत्नशब्दात् शार्ङ्गरवादिङीनन्ताद् भाषितपुंस्कात् "क्यङ्मानिनोश्च" इति पुंवत्त्वे **"सपत्नायते"** इति रूपम् ॥ विवाहनिबन्धनसंस्कारविशिष्टे रूढो यः सपत्नीशब्दस्तस्मात् क्यङि भाषितपुंस्कत्वाभावान्न पुंवत्त्वमिति **"सपत्नीयते"** इति रूपम् । समानस्वामिकाभिधायिनो "नित्यं सपत्न्यादिषु" इति **नादेशे** "ऋन्नेभ्यः--" इति ङीपि क्यङि **पुंवद्भावे** दीर्घे च **"सपतीयते"** इति रूपम् ॥ ५ **वाग्रहणादिति** । अन्यथा विशेषविहितत्वात् क्विपा क्यङो बाधः स्यादिति भावः ॥ ६ **क्विपि** सति प्रत्ययान्तत्वादाम् भवति, यदा त्वनेकाज्ग्रहणं क्रियते तदा तु तत्संनियोगेनाच्प्रत्ययस्यानुदात्तत्वानुनासि-

तङ् नेति तूचितम् ॥ **सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः** * ॥ पूर्ववार्तिकं तु अनुबन्धासञ्जनार्थम् । तत्र क्विबनूद्यते । प्रातिपदिकग्रहणादिह सुप इति न संबध्यते । तेन पदकार्यं न । कृष्ण इवाचरति कृष्णति । 'अतो गुणे' इति शपा सह पररूपम् ॥ अ इवाचरति अति । अतः । अन्ति । प्रत्ययग्रहणमपनीय 'अनेकाच' इत्युक्तेर्नाम् । औ । अतुः । उः । द्वित्वम् । 'अतो गुणे' । अत आदेरिति दीर्घः । णल् औ वृद्धिः । अतुसादिषु तु आतो लोप इटि चेत्यालोपः ॥ मालेवाचरति मालाति । लिङ्गविशिष्टपरिभाषाया एकादेशस्य पूर्वान्तत्वाद्वा क्विप् । मालांचकार । लङि अमालात् । अत्र हल्ङ्यादिलोपो न । ङीसाहचार्यादापोऽपि सोरेव लोप-

---

-कत्वप्रतिज्ञाकरणादित्संज्ञया तस्य निवृत्तौ "गल्भ्" इति नानेकाजिति कथमेभ्य आमिति शङ्कावारणायाऽऽह-**भूतपूर्वादपीति** । तत्र प्रमाणयति-**एतद्वार्तिकेति** । क्विपः "सर्वप्रातिपदिकेभ्यः-" इत्यनेनैव सिद्धेरिति भावः । नच "अव" इत्यस्य पृथक्करणाद् गल्भशब्दात्सनि "गल्भ" इत्यस्य द्वित्वे "अवजिगल्भिषते" इत्यादावाचारक्विबन्तात्सनि "यथेष्टं नामधातुषु" इत्यस्य प्रवृत्त्यर्थमिदं वार्तिकमावश्यकमिति वाच्यम्, "नमन्ति=आख्यातार्थं प्रति विशेषणीभवन्ति, इति नामानि" इति व्युत्पत्त्या तत्र नामशब्दस्य सुबन्तपरतया सुबन्तप्रकृतिक एव "यथेष्टम्-" इत्यस्य प्रवृत्तेः । वार्तिकं सफलीकर्तुं शङ्कते-**नचेति** ॥ **तत्फलमिति** । वार्तिकफलमित्यर्थः । वार्तिकफलं विघटयति-**केवलानामिति** । गणे शुद्धपठितानामित्यर्थः । **वृत्तिसम्भवादिति** । नचाचारेऽर्थे "सर्वप्रातिपदिकेभ्यः-" इत्यनेनाजन्तात्क्विपि "अवगल्भति" इत्यादिवारणायानुबन्धासञ्जनार्थं विद्यते वार्तिकावश्यकतेति वाच्यम्, "सर्वप्रातिपदिकेभ्यः-" इत्यनेन क्विपि तथा प्रयोगे इष्टापत्तिरित्यभिमानात् ॥

१ वस्तुत इदं सर्वं हरदत्तानुरोधेनेति ध्वनयन्नाह-**पूर्ववार्तिकन्त्विति**। आचारेऽजन्तात् क्विपि 'अवगल्भति' इति प्रयोगवारणाय "सर्व-" इत्येतत्क्विबनुवादेनानुदात्तासङ्ग एषां बोध्यत इत्यर्थः । अत्र चातिरिक्तोऽकारः पररूपेण प्रश्लिष्टोऽनुनासिक आसज्यते इत्यनेकाच्त्वप्रयुक्तस्यामः सिद्धिरिति भावः ॥ २ **प्रत्ययग्रहणमपनीयेति** । एतच्च हरदत्तानुरोधेनेति पूर्वमुक्तम् । वस्तुतस्तदपनये न मानम्, एवं प्रत्ययान्तत्वादेवात्रामुसिद्धिर्बोध्या । किंच तदपनयवादिना एकाज्भ्योऽनभिधानात् क्विबनुत्पत्तिर्वाच्या, अन्यथा सूत्रवार्तिकयोः फलभेदापत्तिः । यत्र भिन्नफलार्थमेवोत्तरस्य प्रवृत्तिस्तत्र फलभेदेऽपि प्रत्याख्यानमस्तु "वसेस्तव्यत्" इत्यस्य फलभेदेऽपि प्रत्याख्यानदर्शनात्, नचात्र तथा । तथा सति "अनेकाज्ग्रहणं चुलुम्पाद्यर्थम्" इतिवद् "एकाज्व्यावृत्त्यर्थम्" इति वदेत् । किञ्चैवं सति "न क्तादेः" इत्यादौ "अनर्थकः प्रतिषेधो निष्ठायामनिटः कुत्वविधानात्" इतिवत "प्रत्ययादित्यनर्थकम् अनेकाच आम्विधानात्" इतिवदेदिति दिक् ॥ ३ तत्र हरदत्तोक्तमङ्गीकृत्य माधवेनोक्तं प्रक्रियाक्रममाह-**अतो गुणे अत आदेरिति** । अतो लोपम् "अत आदेः" इति दीर्घं च बाधित्वाऽन्तरङ्गत्वात् पररूपम् । "वार्णादाङ्गम्-" इति तु नानित्यत्वादिति माधवाभिप्रायः । एतेन "अत आदेः पररूपापवादः" इति ग्रन्थेनास्य नामधातुस्थग्रन्थस्य विरोध इति मन्दोक्तमपास्तम् ॥ **दीर्घ इति** । परत्वादतो लोपं बाधित्वा पूर्वान्तत्वेनाभ्यासत्वादिति भावः ॥ ४ **मालातीति** । "आतोऽनापः" "आतो धातोः" इति न्यासयोः फलैक्यायाबन्तेभ्य आचारक्विपोऽनभिधानमेव अन्यथा सति क्विपि धातुग्रहणसत्त्वे लोपप्राप्त्या "अनाप" इत्युक्ते तु नेति फलभेदे प्रत्याख्यानासङ्गतिः स्यात ॥ ५ घटघटीग्रहणेन लिङ्गविशिष्टपरिभाषा अनित्या इति मतेनाप्याह-**एकादेशस्येति** । ६ ननु "अमालात्" इत्यत्रावन्तात् परत्वेन हल्ङ्यादिलोपो दुर्वार इति शङ्कायामाह-**अत्रेति** ॥ हेतुमाह-**साहचर्यादिति** । ईकाररूपङ्यन्तात् तिस्योरसम्भव इति भावः ॥ एतेन कस्य स्त्री की । तस्मादाचारक्विबन्ताद् यङ्लुकि लङि "अचेकेत् इत्यत्र सम्भवेनेदमयुक्तमित्यपास्तम् ॥

विधानात् । इट्सकौ । अमालासीत् ॥ कविरिव कवयति । आशीर्लिङि कवीयात् । सिचि[1] वृद्धिरित्यत्र धातोरित्यनुवर्त्य धातुरेव यो धातुरिति व्याख्यानान्नामधातोर्न वृद्धिरिति कैयटादयः । अकवयीत् । माधवस्तु नामधातोरपि वृद्धिमिच्छति । अकवायीत् ॥ विरिव[2] वयति । विवाय । विव्यतुः । अवयीत् । अवायीत् ॥ श्रीरिव श्रयति । शिश्राय । शिश्रियतुः ॥ पितेव पितरति । आशिषि रिङ् । पित्रियात् ॥ भूरिव भवति । गातिस्थेति, भुवो वुगिति, भवतेरः, इति च न भवन्ति । अभिव्यक्तत्वेन[3] धातुपाठस्थस्यैव तत्र ग्रहणात् । बुभाव । अभावीत् ॥ द्रुरिव द्रवति । णिश्रीति चङ् न । अद्रावीत् ॥ **अनुनासिकस्य क्विझलोः क्ङिति । ६ । ४ । १५ ॥** अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति ॥ इदमिवाचरति इदामति[4] । राजेव राजानति । पन्था इव पथीनति[5] । मथीनति । ऋभुक्षीणति ॥ द्यौरिव देवतीति माधवः । अत्र ऊठि द्यवतीत्युचितम् ॥ कं इव[6] कति । चकाविति हरदत्तः । माधवस्तु[7] ण्यल्लोपाविति वचनात् णलि वृद्धिं बाधित्वाऽतो लोपाच्चक इति रूपमाह ॥ स्व इव स्वति । सस्वौ । सस्व । यत्तु स्वामी स्वांचकारेति तदनाकरमेव[8] ॥ **भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः । ३ । १ । १२ ॥** अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्यात् हलन्तानामेषां लोपश्च ॥ अभृशो भृशो भवति । भृशायते । अच्वेरिति[9] पर्युदासबलादभूततद्भाव इति लभ्यम् । तेनेह न । क्व दिवा भृशा भवन्ति । ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थः ॥ सुमनस् अस्य सलोपः । सुमनायते ॥ चुरादौ ' संग्राम युद्धे ' इति पठ्यते तत्र संग्रामेति प्रातिपदिकम् । तस्मात्तत्करोतीति णिच् सिद्धः । तत्सन्नियोगेनानुबन्ध आसज्यते । युद्धे योऽयं ग्रामशब्द इत्युक्तेऽपि सामर्थ्यात्संग्रामशब्दे लब्धे विशिष्टपाठो ज्ञापयति–' उपसर्गसमानाकारं[10] पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते ' इति । तेन मनश्शब्दात्प्रागट् । स्वमनायत ॥ उन्मनायते । उदमनायत । एवं चावागल्भत अवागल्भिष्टेत्यादावप्यवेत्यस्य पृथक्करणं बोध्यम् । ज्ञापकं च सजातीयविषयम् । तेन यत्रो-

---

१ ननु " अकवयीत् " इत्यत्र "सिचि वृद्धिः परस्मैपदेषु" इति वृद्धिः स्यादत आह–**सिचि वृद्धिरित्यत्रेति । कैयटादय इति ।** इदं च गोशब्दादाचारक्विपि " अगवीत्" इत्युपक्रम्य "इको गुण" इति सूत्रे कैयटेनोक्तम् । वस्तुतस्तु "न वै सन्ध्यक्षरमन्त्यमस्ति" इति "इको गुणवृद्धी" इति सूत्रस्थभाष्यप्रामाण्यादेङन्तेभ्य आचारक्विपोऽभाव एवेत्यत्रारुचिः ॥ २ **विरिवेति ।** विः=पक्षी ॥ ३ **अभिव्यक्तत्वेनेति ।** "अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्य उक्तेषु न तदुक्तिषु " इति भाष्यादिति भावः ॥ ४ **इदामतीति ।** हलन्तेभ्य अचारक्विब्भावादिदमयुक्तम् ॥ ५ **पथीनतीति ।** इदमप्ययुक्तम्, हलन्तेभ्य आचारक्विपोऽनभिधानात् । क्विब्ग्रीकारेऽपि इन्हन्पूषेति नियमेन दीर्घाप्रवृत्तेः " पथेनति " इत्येवेति बोध्यम् ॥ ६ **क इवेति ।** को ब्रह्मा ॥ ७ हरदत्त इत्यत्रारुचिं दर्शयति–**माधवस्त्विवाति** ॥ ८ **अनाकरमेवेति ।** सूत्रवार्तिकयोः फलैक्यायैकाज्भ्यः क्विपोऽनभिधानस्यैव पूर्वमुक्तत्वेनेदं चिन्त्यमेवेति वस्तुस्थितिः ॥ ९ " अभूततद्भावग्रहणं कर्तव्यम् " इति वार्तिककृतोक्तम्, तदन्यथासिद्धिमाह–**अच्वेरिति** ॥ १० **उपसर्गसमानाकारमिति ।** संग्रामशब्दघटकसंशब्दस्य क्रियायोगाभावेनोपसर्गत्वाभावाज्ज्ञापकानुपपत्तिरिति समानाकारत्वम् । उपसर्गस्यापि प्रयोगभेदेन समानाकारत्वम् ॥

पसर्गरूपं सकलं श्रूयते, न त्वादेशेनापहृतं, तत्रैव पृथक्कृतिः । एवं च आ ऊढः ओढः स इवाचर्य 'ओढायित्वा' । अत्र उन्मनाय्य अगवल्भ्येतिवन्न ल्यप् । ज्ञापकस्य विशेषविषयत्वे षाष्ठं वार्तिकं तद्भाष्यं च प्रमाणम् ॥ तथाहि—**उस्योमाङ्क्ष्वाटः प्रतिषेधः** * ॥ उसि ओमाङोश्च परयोराटः पररूपं नेत्यर्थः । उस्रामैच्छत् औस्रीयत् । औङ्कारीयत् । औढीयत् । आटश्चेति चशब्देन पुनर्वृद्धिविधानादिदं सिद्धमिति षाष्ठे स्थितम् ॥ **लोहितादिडाज्भ्यः क्यष्** । ३ । १ । १३ ॥ लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात्॥ **वा क्यषः** । १ । ३ । ९० ॥ क्यषन्तात्परस्मैपदं वा स्यात् । लोहितायति । लोहितायते । अत्राच्वेरित्यनुवृत्त्याऽभूततद्भावविषयत्वं लब्धं तच्च लोहितशब्दस्यैव विशेषणम् । न तु डाचोऽसंभवात् । नाप्यादिशब्दग्राह्याणाम् । तस्य प्रत्याख्यानात् । तथा च वार्तिकम् ॥ **लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणीति** * ॥ न चैवं काम्यच इव क्यषोऽपि ककारः श्रूयेत उच्चारणसामर्थ्यादिति वाच्यम्, तस्यापि भाष्ये प्रत्याख्यानात् । पटपटायति । पटपटायते । कृभ्वस्तियोगं विनापीह डाच् । डाजन्तात् क्यषो विधानसामर्थ्यात् ॥ यत्तु—

' लोहितश्यामदुःखानि हर्षगर्वसुखानि च ।
मूर्छानिद्राकृपाधूमाः करुणा जिह्मचर्मणी ॥ '

इति पठित्वा श्यामादिभ्योऽपि क्यषि पदद्वयमुदाहरन्ति ॥ तद्भाष्यवार्तिकविरुद्धम् । तस्मात्तेभ्यः क्यङेव । श्यामायते ॥ दुःखादयो वृत्तिविषये तद्वति वर्तन्ते ॥ लिङ्गविशिष्टपरिभाषया लोहिनीशब्दादपि क्यष् । लोहिनीयति । लोहिनीयते ॥ **कष्टाय क्रमणे** । ३ । १ । १४॥ चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् ॥ कष्टाय क्रमते कष्टायते । पापं कर्तुमुत्सहत इत्यर्थः॥ **सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्** * ॥ कण्वं पापम् । सत्रादयो वृत्तिविषये पापार्थाः । तेभ्यो द्वितीयान्तेभ्यश्चिकीर्षायां क्यङ् । पापं चिकीर्षतीत्य-

---

१ **आटः प्रतिषेध इति** । उस्यपदान्तात्, ओमाङोश्चेति प्राप्तस्य पररूपस्य प्रतिषेध इत्यर्थः । एतन्निषेधसामर्थ्यात् प्रकृते 'अर्थवद्ग्रहणे' इति परिभाषायाः प्रतिपदोक्तपरिभाषयाश्चाप्रवृत्तिरिति बोध्यम् । विशेषापेक्षज्ञापकाभावे तु प्रकृतवार्तिकोदाहरणविषयेऽप्याङः पृथक्कृतिः स्यादिति क्यच्प्रत्यय ऊढशब्दात् स्याद् तदन्ताल्लुङि कृते आडागमः आङः परो जायेत ततश्च " ओमाङोश्च " इत्यस्य प्राप्तिरेव नास्तीति वार्तिकस्योक्तिसंभवो न स्यादिति भावः ॥ २ **उस्रामैच्छदिति** । उस्रा=गौः ॥ ३ **तस्येति** । आदिशब्दस्य ॥ ४ **तस्यापीति** । ककारस्यापि । नच ककारो " नः क्ये, क्यस्य विभाषा "? इत्यत्र विशेषणार्थोऽस्त्विति वाच्यम्, लोहितडाज्भ्य एव क्यष्विधानेन फलाभावात् । " वा क्यषः " इत्यत्रापि " वा यषः " इत्येवास्तु ॥ ५ **तद्भाष्येति** । " लोहितडाज्भ्यः क्यष्वचनम् " " भृशादिष्वितराणि " इति वार्तिकभाष्येत्यर्थः । ६ **कष्टाय क्रमण इति** । अत्र सूत्रे मण्डूकप्लुत्या क्यङ्ग्रहणमनुवर्तते तदाह-**क्यङ् स्यादिति** । नच " लोहितादिडाच् " इति सूत्रे क्यष्ग्रहणमकृत्वा " लोहितादिडाज्भ्यो ञिच्च " इति पठनीयम्, क्यङस्तत्राप्यनुवृत्तिः कार्या प्रकृतसूत्रे च मण्डूकप्लुतिर्न स्वीकार्या, " वा क्यषः " इति सूत्रं च न कार्यं ञित्त्वादेवोभयपदसिद्धेरिति वाच्यम्, लोहिनीशब्दात् क्यङि " क्यङ्मानिनोश्च " इति पुंवद्भावापत्तेः । कर्तृगामिक्रियाफलविवक्षायां परस्मैपदाभावापत्तेश्च ॥

स्वपदविग्रहः । सत्रायते । कक्षायते इत्यादि ॥ **कर्मणो रोमन्थतपोभ्यां वर्तिचरोः । ३ । १ । १५ ॥** रोमन्थतपोभ्यां कर्मभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् स्यात् । रोमन्थं वर्तयति रोमन्थायते ॥ **हनुचलन इति वक्तव्यम् * ॥** चर्वितस्याकृष्य पुनश्चर्वण इत्यर्थः । नेह कीटो रोमन्थं वर्तयति । अपानप्रदेशान्निःसृतं द्रव्यमिह रोमन्थः । तदश्नातीत्यर्थ इति कैयटः । वर्तुलं करोतीत्यर्थ इति न्यासकारहरदत्तौ ॥ **तपसः परस्मैपदं च * ॥** तपश्चरति तपस्यति ॥ **बाष्पोष्मभ्यामुद्वमने । ३ । १ । १६ ॥** आभ्यां कर्मभ्यां क्यङ् स्यात् । बाष्पमुद्वमति बाष्पायते । ऊष्मायते । **फेनाच्चेति वाच्यम् * ॥** फेनायते ॥ **शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे । ३ । १ । १७ ॥** एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते । पक्षे तत्करोतीति णिजपीष्यत इति न्यासः । शब्दयति ॥ **सुदिनदुर्दिननीहारेभ्यश्च * ॥** सुदिनायते ॥ **सुखादिभ्यः कर्तृवेदनायाम् । ३ । १ । १८ ॥** सुखादिभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्याद्वेदनाकर्तुरेव चेत्सुखादीनि स्युः । सुखं वेदयते सुखायते । कर्तृग्रहणं किम् ? परस्य सुखं वेदयते ॥ **नमोवरिवश्चित्रङः क्यच् । ३ । १ । १९ ॥** करणे इत्यनुवृत्तेः क्रियाविशेषे पूजायां परिचर्यायामाश्चर्ये च ॥ नमस्यति देवान् । पूजयतीत्यर्थः । वरिवस्यति गुरून् । शुश्रूषत इत्यर्थः । चित्रीयते । विस्मयत इत्यर्थः । विस्मापयत इत्यन्ये ॥ **पुच्छभाण्डचीवराण्णिङ् । ३ । १ । २० ॥ पुच्छादुदसने व्यसने पर्यसने च * ॥** विविधं विरुद्धं वोत्क्षेपणं व्यसनम् । उत्पुच्छयते । विपुच्छयते । परिपुच्छयते ॥ **भाण्डात्समाचयने * ॥** संभाण्डयते । भाण्डानि समाचिनोति । राशीकरोतीत्यर्थः । समबभाण्डत ॥ **चीवरादर्जने परिधाने च * ॥** सञ्चीवरयते भिक्षुः । चीवराण्यर्जयति परिधत्ते वेत्यर्थः ॥ **मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो**

---

१ **नमो वरिवश्चित्रङ इति** । वरिवस्शब्दोऽव्युत्पन्नं प्रातिपदिकं सेवार्थकम् ॥ २ यद्यप्यत्र क्रियासामान्यार्थकं करणपदमनुवर्तते तथापि भाष्यीयव्याख्यानात् क्रियाविशेषः क्रमेण विवक्षित इत्याशयेनाह--**पूजायामित्यादि** । तदुक्तं भाष्ये--" **नमसः पूजायाम्** " "**वरिवसः परिचर्यायाम्**" " **चित्रङ आश्चर्ये** " इति ॥ परिचर्या सेवा ॥ **नमस्यति देवानिति** । अत्र नमःशब्दयोगेऽपि वृत्तिघटकस्यानर्थकत्वान्न तद्योगे " नमःस्वस्ति " इति चतुर्थी । " स एवायम् " इति प्रत्यभिज्ञयाऽर्थवत्त्वमेवेति चेद् " उपपदविभक्तेः कारकविभक्तिर्बलीयसी " इति द्वितीयेति भाष्य उक्तम् । चतुर्थी तु " नमोऽस्तु देवेभ्यः " इत्यत्र चारितार्था । यत्र तु " नारायणं नमस्कृत्य " इति प्रयुज्यते, तत्रापि "उपपद--" इति न्यायेन द्वितीयैव, नमःशब्दस्य निपातस्य द्योतकतया करोतेरत्र स्वनिष्ठाऽपकृष्टत्वप्रकारकज्ञानानुकूलव्यापारवाचितया देवानां कर्मत्वात् ॥ ३ **चित्रीयते इति** । " अवयवे ह्यचरितं लिङ्गं समुदायोपकारकम् " इति न्यायेन तङानौ ॥ ४ **पुच्छादुदसने इति । उदसनमुत्क्षेपणम्** । **पर्यसनं** परितः क्षेपणम् । **उत्पुच्छयते इति** । पुच्छमुदस्यतीत्यर्थः । ननु यथाऽऽचारे क्यङि विहिते आङः प्रयोगो न भवति, आङ्विशिष्टस्यैव चरत्यर्थस्य क्यङाभिधानात् एवमिहाप्युत्क्षेपणे णिङो विधानादुदः प्रयोगो न प्राप्नोति इति चेन्न, अत्र विशेषात् । तथा हि पर्यसनेऽप्ययं विधीयते तत्रोदसनं द्योतयितुमुच्छब्दः, पर्यसनं द्योतयितुं परिशब्दश्च प्रयोक्तव्यः ॥ ५ **समाचयनं** राशीकरणम् ॥ ६ **चीवरादर्जन इति । अर्जनं** द्रव्यलाभोपायो याच्ञादि ॥

**णिच्** । ३ । १ । २१ ॥ कृञर्थे । मुण्डं करोति मुण्डयति ॥ **व्रताद्भोजनतन्निवृत्त्योः** * ॥ पयः शूद्रान्नं वा व्रतयति ॥ **वस्त्रात्समाच्छादने** * ॥ संवस्त्रयति ॥ **हल्यादिभ्यो ग्रहणे** * ॥ **हलिकल्योरदन्तत्वं च** *॥ निपात्यते । हलिं कलिं वा गृह्णाति । हलयति । कलयति । महद्धलं हलिः । परत्वाद्वृद्धौ सत्यामपीष्ठद्भावेन अगेव लुप्यते । अतः सन्वद्भावदीर्घौ न । अजहलत् । अचकलत् ॥ कृतं गृह्णाति कृतयति ॥ तूस्तानि विहन्ति वितूस्तयति । तूस्तं केशा इत्येके । जटीभूताः केशा इत्यन्ये । पापमित्यपरे ॥ मुण्डादयः सत्यापपाशेत्यत्रैव पठितुं युक्ताः ॥ 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे केषांचिद्ग्रहणं सापेक्षेभ्योऽपि णिजर्थम् । मुण्डयति माणवकम् । मिश्रयत्यन्नम् । श्लक्ष्णयति वस्त्रम् । लवणयति व्यञ्जनमिति । हलिकल्योरदन्तत्वार्थम् । सत्यस्य आपुगर्थम् । केषांचित्तु प्रपञ्चार्थम् । सत्यं करोत्याचष्टे वा सत्यापयति ॥ **अर्थवेदयोरप्यापुग्वक्तव्यः** ॥ * ॥ अर्थापयति । वेदापयति । पाशं विमुञ्चति विपाशयति । रूपं पश्यति रूपयति । वीणयोपगायत्युपवीणयति । तूलेनानुकुष्णात्यनुतूलयति । तृणाग्रं तूलेनानुघट्टयतीर्थः । श्लोकैरुपस्तौति उपश्लोकयति । सेनया अभियाति अभिषेणयति— उपसर्गात्सुनोतीति षः । अभ्यषेणयत्— प्राक्सितादिति षः । अभिषिषेणयिषति—'स्थादि-

---

१ **संवस्त्रयतीति** । वस्त्रैः समाच्छादयतीत्यर्थः ॥ २ **परत्वादिति** । नच नित्यो लोपः, शब्दान्तरप्राप्त्या तस्याप्यनित्यत्वात् ॥ **अत इति** । अग्लोपात् ॥ ३ **सापेक्षेभ्योऽपीति** । अन्यथा "सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यते" इति "सुप आत्मनः क्यच्" इति भाष्योक्तन्यायेन प्रत्ययोत्पत्तिर्न स्यादिति भावः।प्राचीना अप्याहुः-"सापेक्षे प्रत्ययो न स्यात् समासो वा कथञ्चन । सापेक्षं तद्विजानीयादसमस्तविशेषणम्" इति । अत्रायमभिसन्धिः-"समर्थः पदविधिः" इति सूत्रम् । अत्र सामर्थ्यं द्विविधम्,-व्यपेक्षावत्त्वम्, एकार्थीभावश्च । तत्र "स्वार्थपर्यवसायिपदानामाकाङ्क्षादिवशाद् यः परस्परं सम्बन्धः सा व्यपेक्षा । परस्परनिरूप्यनिरूपकभावापन्नविषयताप्रयोजकत्वे सति एकार्थोपस्थित्यजनकत्वम् । "राज्ञः पुरुषः" इत्यादौ वाक्ये,-सत्यामाकाङ्क्षायाम्,-यो यो यस्मिन् संनिहितो योग्यश्च स तेन तेन सम्बध्यते' यथा राज्ञः पुरुषोऽश्वश्च, राज्ञो देवदत्तस्य च पुरुषः, ऋद्धस्य राज्ञोऽश्वो धनं च इत्यादि । वृत्तौ तु नैवम्, वृत्तावेकार्थीभावात् । एकार्थीभावस्तु विशेष्यविशेषणभावावगाह्येकोपस्थितिजनकत्वम् । तथा च राजादिशब्देन विशिष्टैकार्थबोधकतया न तदेकदेशे ऋद्धादेरन्वयः, पुरुषांशे विशेषणतयोपस्थितानां नाश्वादिसम्बन्धिता राजादीनाम्, जनितान्वयाच्च । निराकाङ्क्षतया न देवदत्तादेः स्वामितया पुरुषादावन्वयः । "देवदत्तस्य गुरुकुलम्" इत्यादौ देवदत्तादेस्तु प्रधानीभूतकुलादिनैवान्वयः । सम्बन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थः । अथवा सम्बन्धिशब्दार्थस्य पदार्थैकदेशत्वेऽपि भवत्येव केन चित् सम्बन्धान्वयः, तदुक्तं भर्तृहरिणा-"सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । वाक्यवत् सा व्यपेक्षापि वृत्तावपि न हीयते" इति । वाक्य प० ॥ इति नवीनाः ॥ ४ **सत्यापयतीति** । आपुकः प्रातिपदिकावयवत्वात् प्राप्तेऽपि टिलोपो विधानसामर्थ्यान्निवर्तते । एषां लुङ्यनभिधानमेव । अत एव "णेरापुट्" इति भाष्यं सङ्गच्छते । तत्र हि सत्यस्यापुगागमे टिलोपस्य प्राप्तिमाशङ्क्य "एवं तर्ह्यापुट् करिष्यते" इत्युक्तम् । आपुटो णिज्भक्तत्वात् तस्मिन् टिलोपेऽपि "सत्यापयति" इति भविष्यतीत्यभिप्रायः । तदुत्तरम्-"अथवा पुनरस्तु आपुगेव" ननु चोक्तं "टिलोपः प्राप्नोति" इति । "आपुग्वचनान्न भविष्यति" इत्युक्तम् । अत्र णिच आपुडागमपक्षे टिलोपे च सति ततो लुङि चङि द्विर्वचने "अससत्यापत्" इति रूपम्, आपुगागमपक्षे तु "णौ चङि—" इति ह्रस्वत्वे "अससत्यपत्" इति स्यादिति लुङ्यापुट्पक्षेऽनभिधानमावश्यकम्, अन्यथा "अथवा पुनरस्तु" इति कथनस्य भङ्गः स्यात् ॥

ष्वभ्यासेन चेति षः ॥ लोमान्यनुमार्ष्टि अनुलोमयति ॥ त्वच संवरणे । घः । त्वचं गृह्णाति त्वचयति ॥ वर्मणा संनह्यति संवर्मयति । वर्णं गृह्णाति वर्णयति । चूर्णैरवध्वंसते अवचूर्णयति ॥ इष्ठवदित्यतिदेशात्पुंवद्भावादयः । एनीमाचष्टे एतयति । दरदमाचष्टे दारदयति ॥ पृथुं प्रथयति । वृद्धौ सत्यां पूर्वं वा टिलोपः । अपिप्रथत् ॥ अपप्रथत् ॥ मृदुं म्रदयति । अमिम्रदत् । अमम्रदत् । भृशं कृशं दृढम् । भ्रशयति । क्रशयति । द्रढयति । अबभ्रशत् । अचक्रशत् । अदद्रढत् । परिव्रढयति । पर्यवव्रढत् । ऊढिमाख्यत् । औजिढत् । ढत्वादीनामसिद्ध-त्वात् हतिशब्दस्य द्वित्वम् । 'पूर्वत्रासिद्धीयमद्वित्वे' इति त्वनित्यमित्युक्तम् ॥ ढि इत्यस्य द्वित्वमित्यन्ये । औडिढत् ॥ ऊढमाख्यत् औजढत् । औडढत् । ओः पुयण्जीतिसूत्रे वर्गप्रत्याहारजग्रहो लिङ्गम्--द्वित्वे कार्ये णावच आदेशो नेति ऊनयतावुक्तम् ॥ 'प्रकृत्यैकाच्' । वृद्धिपुकौ । स्वापयति । त्वां मां वाऽऽचष्टे त्वापयति । मापयति । मपर्यन्तस्य त्वमौ । पररूपात्पूर्वं नित्यत्वाट्टिलोपः । वृद्धिः पुक् ॥ त्वादयति मादयतीति तु न्याय्यम् । अन्तरङ्गत्वात्पररूपे कृते प्रकृत्यैकाजिति प्रकृतिभावात् । न च प्रकृतिभावो भाष्ये प्रत्याख्यात इति भ्रमितव्यम् । भाष्यस्य प्रेष्ठाद्युदाहरणविषयेऽन्यथासिद्धिपरत्वात् ॥ युवामावां वा युष्मयति । अस्मयति ॥ श्वानमाचष्टे शावयति । 'नस्तद्धित' इति टिलोपः । प्रकृतिभावस्तु न । येन नाप्राप्तिन्यायेन टेरित्यस्यैव बाधको हि सः । भत्वात्संप्रसारणम् ॥ अन्ये तु 'नस्तद्धित' इति नेहातिदिश्यते। इष्ठनि तस्यादृष्टत्वात् ।प्रश्विष्ठ इत्यादौ परत्वात् "टेः" इत्यस्यैव प्रवृत्तेः।तेन शुनयतीति

---

१ घ इति । कर्मण्ययम् । "चजोः कु घिण्ण्यतोः" इति कुत्वं तु "त्वच" इति निपातनादेवापनीयते ॥ २ एतयतीति । नचातिदिश्यमानकार्याणामुत्पत्तिदेशदेशत्वस्यैत्र स्वीकारात् परत्वाट्टिलोपः स्यादिति वाच्यम्, पुंवत्त्वातिदेशसामर्थ्याद् "भस्याढे–" इत्यस्य प्रत्ययचिकीर्षायामेव प्रवृत्त्यान्तरङ्गत्वाद् "एतयति" इति भाष्योदाहरणाच्च "टेः" इत्यस्याप्रवृत्तेरिति दिक् ॥ ३ दारदयतीति । दरदोऽपत्यं स्त्री दरद् । "द्व्यञ्मगध–" इत्यणः "अतश्च" इति स्त्रियां लुक् प्रत्ययचिकीर्षायां पुंवद्भावेन स्त्रीत्वाभावान्नैव भवतीत्यणः श्रवणेन तन्निमित्तिका वृद्धिः ॥ पुंवद्भावाभावे तु स्त्रीत्वनिमित्तकलुकश्चिकीर्षितत्वाद् वृद्धिनिमित्ताभावाद् "दरदयति" इति स्यात् ॥ ४ पर्यवव्रढदिति । "प्रभौ परिवृढः" इति निपातनेन ढत्वस्य प्रवृत्त्या तत्र यथा वृढशब्दद्वित्वं तथोढिशब्दस्य न" इति ध्वनयितुमेतदुपादानम् । उपसर्गसमानाकारस्य परिशब्दस्य पृथक्कृतिरत्र द्रष्टव्या ॥ ५ असिद्धत्वादिति । द्वित्वे तदसिद्धत्वेन हकारघटितबुद्धया द्वित्वेऽभ्यासे शिष्टस्य हकारस्य चुत्वसिद्धिः ॥ ६ औडिढदिति । ननु ढिशब्दद्वित्वेऽपि अभ्यासावयवस्य चुत्वे कर्तव्ये ढत्वस्यासिद्धत्वाद् "औजिढत्" इति स्यादिति चेन्न, द्वित्वे कृते तदाश्रयस्य कार्यान्तरे कर्तव्येऽप्यसिद्धत्वनिषेधान्नाभ्यासे चुत्वादीत्याशयात् ॥ ७ अन्यथासिद्धिपरत्वादिति । वृत्तिकृता "प्रकृत्यैकाच्" इति सूत्रस्य प्रेयान् प्रेष्ठ इत्याद्युदाहरणमदायि, तत्र चान्तरेणापि प्रकृतिभावं प्रस्थाद्यादेशविधायकशास्त्रस्य "असिद्धवदत्र–" इत्यनेनासिद्धत्वात्, प्रस्थादावकारोच्चारणाच्च लोपाभावः साधितो भाष्ये, स्रग्विन्स्रजिष्ठ इत्यादावपि लोपापवादस्य विन्मतोर्लुकः प्रवृत्त्या टिलोपो नेति दिक् ॥ ८ टेरित्यस्यैवेति । इदं चिन्त्यम्, "प्रकृत्यैकाच्" इति सूत्रे "नैकाच्" इत्येव सिद्धे प्रकृतिग्रहणेन येन नेति न्यायाप्रवृत्तिज्ञापनात् । एवं च "नस्तद्धित" इत्यस्यापि निषेधेन प्रकृतिभावे "श्वानयति" इत्येव रूपम् । किं च सत्यपि टिलोपे सम्प्रसारणं दुर्लभम् "श्वयुव–" इति शास्त्रस्य श्रूयमाणनान्त एव प्रवृत्तेरिति दिक् ॥ ९ शुनयतीति । नचात्र सम्प्रसारणे कृते "वार्णादाङ्गम्–" इति परिभाषया पूर्वरूपं बाधित्वा टिलोपे रूपासिद्धिरिति वाच्यम्, शुशुवतुरिति भाष्योदाहरणेन पूर्वरूपविषये तन्न्यायाप्रवृत्तिज्ञापनादिति दिक् ॥

रूपमाहुः[1] ॥ विद्वांसमाचष्टे विद्वयति । अङ्गवृत्तपरिभाषया संप्रसारणं नेत्येके[2] ॥ संप्रसारणे वृद्धावावादेशे च विदावयतीत्यन्ये[3] ॥ नित्यत्वाट्टिलोपात्प्राक्संप्रसारणम् । अन्तरङ्गत्वात्पूर्वरूपम् । टिलोपः । विदयतीत्यपरे ॥ उदञ्चमाचष्टे उदीचयति[4] । उदैचिचत् । प्रत्यञ्चम् । प्रतीचयति । प्रत्यचिचत् । 'इकोऽसवर्णे[5]' इति प्रकृति भावपक्षे–प्रतिअचिचत् ॥ सम्यञ्चमाचष्टे समीचयति । सम्यचिचत् । समिअचिचत् ॥ तिर्यञ्चमाचष्टे तिराययति[6] । अञ्चेष्टिलोपेनापहारेऽपि बहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः[7] । असिद्धवदत्रेति चिणोलुङ्न्यायेन[8] प्रथमटिलोपोऽसिद्धः । अतः पुनष्टिलोपो न । अङ्गवृत्तपरिभाषया वा । चङ्यग्लोपित्वादुपधाह्रस्वो न । अतितिरायत् । सध्र्यञ्चमाचष्टे सध्रायति । अससध्रायत् । विष्वद्र्यञ्चम् । अविविष्वद्रायत् । देवद्र्यञ्चम्[9] । देवद्राययति । अदिदेवद्रायत् । अदद्र्यञ्चम् । अददद्रायत् । अदमुयञ्चम् । अदमुआययति । आददमुआयत् । अमुमुयञ्चम् । अमुमुआययति । चङ् । आमुमुमुआयत् ॥ भुवम् । भावयति । अबीभवत् ॥ भ्रुवम् । अबुभ्रवत् ॥ श्रियम् । अशिश्रयत् ॥ गाम् । अजूगवत् ॥ रायम् । अरीरयत् ॥ नावम् । अनूनवत् ॥ स्वश्वम् । स्वाशश्वत् ॥ स्वः । 'अव्ययानां भमात्रे टिलोपः' । स्वयति[10] । असिस्वत् ॥ बहून् । भावयति । बहयतीत्यन्ये ॥ विन्मतोरिति लुक् । स्रग्विणम् । स्रजयति । संज्ञापूर्वकत्वान्न वृद्धिः ॥ श्रीमतीं[11] श्रीमन्तं वा । श्राययति । अशिश्रयत्[12] ॥ पयस्विनीम् । पयसयति । इह टिलोपो न, तदपवादस्य लुकः प्रवृत्तत्वात् ॥ स्थूलम् । स्थवयति ॥ दूरम् । दवयति । कथं तर्हि 'दूरयत्यवनते विवस्वति' इति ? दूरमतति अयते वा दूरात् । दूरातं कुर्वतीत्यर्थः ॥ युवानम् । यवयति[13] । कनयति[14] । युवाल्पयोरिति वा कन् ॥ अन्तिकम् । नेदयति । बाढम् । साधयति ॥ प्रशस्यम् । प्रशस्ययति । इह श्रज्यौ न । उपसर्गस्य[15] पृथक्कृतेः ॥ वृद्धम् । ज्यापयति ।

---

१ आहुरिति । इदमत्रारुचिबीजम्–भाष्यमते "टेः" इत्यपेक्षया "नस्तद्धिते" इत्यस्यैव परत्वात् ॥ किञ्च केवलाद्गुणवचनत्वेनेष्ठनोऽभावे ब्रह्मवच्छन्दादेवेष्ठनो विधाने मतुपो लुगुत्तरं "टेः" इत्यस्याप्राप्तौ "नस्तद्धिते" इत्यस्यैव प्रवृत्तेर्दृष्टत्वादिति दिक् ॥ २ नेत्येके इति । इदमत्राकूतम् । टिलोपेनासो लोपे सम्प्रसारणाप्राप्तेऽङ्गवृत्तपरिभाषोपन्यासो वृथा, तस्या असत्त्वाच्चेति ॥ ३ अन्ये इति । पूर्ववदेवारुचिबीजम् । एवं च "विद्वयति" इत्येवम् रूपम् ॥ ४ उदीचयतीति । उद उपसर्गत्वेन पृथक्करणादेकाच्त्वात् प्रकृति भावः ॥ ५ इकोऽसवर्ण इति । "न समासे" इति तु न, पृथक्करणेन समासनिवृत्तेः ॥ ६ तिरायतीति । तिरसोऽनुपसर्गत्वेन पृथक्करणाभावेनैकाच्त्वाभावात् प्रकृतिभावाप्राप्तेष्टिलोपः ॥ ७ वहिरङ्गत्वेनासिद्धत्वादिति । बहिर्भूतणिनिमित्तकत्वादिति भावः ॥ ८ चिणोलुङ्न्यायेनेति । अपाचितरामित्यादौ प्रथमकृततलोपस्यासिद्धत्वात् पुनस्तरलोपाभाववदिति भावः ॥ ९ देवद्र्यञ्चमिति । "विष्वग्देवयोः" इत्यद्र्यादेशः ॥ १० स्वयतीति । "अव्ययानाम्" इति टिलोपः । अतिदेशेन, भत्वात् ॥ ११ श्रीमतीमिति । णिचि पुंवत्त्वे मतोर्लुक् ॥ १२ अशिश्रयदिति । "णावच आदेशो न" इति श्रीशब्दस्य द्वित्वे उत्तरखण्डे वृद्ध्यायोः कृतयोर्नञ्घटितानित्यत्वेन "नाग्लोपि-" इति निषेधाभावे ह्रस्वत्वमिति भावः ॥ १३ यवयतीति । "स्थूलदूर-" इति यणादिलोपगुणौ । अङ्गवृत्तपरिभाषयाऽभन्तत्वाभावेन वा सम्प्रसारणं न ॥ १४ कनयतीति । अत्र स्रजयतीतिवदुपधावृद्ध्यभावः ॥ १५ उपसर्गस्येति । तत्पृथक्करणेन विशिष्टस्य प्रातिपदिकत्वाभावात् तत्रातिदेशाप्रवृत्तिरिति भावः ॥ इति नामधातुप्रक्रिया ॥

वर्षयति । प्रियम् । प्रापयति । स्थिरम् । स्थापयति । स्फिरम् । स्फापयति । उरुम् । वरयति वारयति । बहुलम् । बंहयति । गुरुन् । गरयति । तृप्रम् । त्रापयति । दीर्घम् । द्राघयति । वृन्दारकम् । वृन्दयति ॥

इति नामधातुप्रकरणम् ।

---

## अथ कण्ड्वादिप्रकरणम् ।

**कण्ड्वादिभ्यो यक्** । ३ । १ । २७ ॥ एभ्यो धातुभ्यो नित्यं यक् स्यात् स्वार्थे ॥ धातुभ्यः किम् ? प्रातिपदिकेभ्यो मा भूत् । द्विधा[1] हि कण्ड्वादयः । धातवः प्रातिपदिकानि च ॥ **कण्डूञ्** गात्रविघर्षणे ॥ कण्डूयति । कण्डूयते ॥ १ ॥ **मन्तु** अपराधे ॥ रोष इत्येके । मन्तूयति ॥ चन्द्रस्तु ञितमाह । मतूयते ॥ २ ॥ **वल्गु** पूजामाधुर्ययोः ॥ वल्गूयति ॥ ३ ॥ असु उपतापे ॥ **असू असूञ्** इत्येके ॥ अस्यति । असूयति । असूयते ॥ ५ ॥ **लेट् लोट्** धौर्त्ये पूर्वभावे स्वप्ने च ॥ दीप्तावित्येके । लेट्यति । लेटिता । लोट्यति । लोटिता ॥७॥ **लेला** दीप्तौ ॥ ८ ॥ **इरस् इरज् इरञ्** ईर्ष्यायाम् ॥ इरस्यति । इरज्यति । हलि चेति दीर्घः । ईर्यति ईर्यते ॥ ११ ॥ **उषस्** प्रभातीभावे ॥ १२ ॥ **वेद** धौर्त्ये स्वप्ने च ॥ १३ ॥ **मेधा** आशुग्रहणे ॥ मेधायति ॥ १४ ॥ **कुषुभ** क्षेपे ॥ कुषुभ्यति ॥ १५ ॥ **मगध** परिवेष्टने ॥ नीचदास्य इत्यन्ये ॥ १६ ॥ **तन्तस् पम्पस्** दुःखे ॥ १८ ॥ **सुख दुःख** तत्क्रियायाम् ॥ सुख्यति । दुःख्यति । सुखं दुःखं चानुभवतीत्यर्थः ॥ २० ॥ **सपर** पूजायाम् ॥ २१ ॥ **अरर** आराकर्मणि[2] ॥ २२ ॥ **भिषज्** चिकित्सायाम् ॥ २३ ॥ **भिष्णज्** उपसेवायाम् ॥ २४ ॥ **इषुध** शरधारणे ॥ २५ ॥ **चरण वरण** गतौ ॥ २७ ॥ **चुरण** चौर्ये ॥ २८ ॥ **तुरण** त्वरायाम् ॥ २९ ॥ **भुरण** धारणपोषणयोः ॥ ३० ॥ **गद्गद** वाक्स्खलने ॥ ३१ ॥ **एला केला खेला** विलासे ॥ इलेत्यन्ये ॥ **लेखा** स्खलने च ॥ अदन्तोऽयमित्यन्ये । लेख्यति ॥ ३६ ॥ **लिट** अल्पकुत्सनयोः । लिट्यति ॥ ३७ ॥ **लाट** जीवने ॥ ३८ ॥ **हृणीङ्** रोषणे लज्जायां च ॥ ३९ ॥ **महीङ्** पूजायाम् । महीयते । पूजां लभत इत्यर्थः ॥ ४० ॥ **रेखा** श्लाघासादनयोः ॥ ४१ ॥ **द्रवस्** परितापपरिचरणयोः ॥ ४२ ॥ **तिरस्** अन्तर्धौ ॥ ४३ ॥ **अगद** नीरोगत्वे ॥ ४४ ॥ **उरस्** बलार्थः । उरस्यति । बलवान् । भवतीत्यर्थः ॥ ४५ ॥ **तरण** गतौ ॥

---

१ **द्विधा इति** । यकः कित्वं धातुत्वे नियामकम्, तद्धि गुणनिषेधाय क्रियते, । धातुत्वाभावे गुणाप्रवृत्त्या तद्वैयर्थ्यं स्पष्टमेव । ''कण्डूञ्'' इति दीर्घान्तपाठश्च प्रातिपदिकत्वसद्भावे मानम्, सति हि धातुत्वमात्रे ''अकृत्सार्व–'' इति दीर्घेणैव कार्यनिष्पत्त्या दीर्घान्तपाठो विफल एव स्यादिति भावः ॥ तथा-चाहुर्भाष्यकाराः–''धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि । आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः'' इति ॥ २ ''अरर'' इति । आरा=प्रतोदः, तत्करणकं कर्म आराकर्म तस्मिन् ॥

॥ ४६ ॥ **पयस्** प्रसृतौ[1] ॥ ४७ ॥ **संभूयस्** प्रभूतभावे[2] ॥ ४८ ॥ **अम्बर सम्बर** संवरणे ॥ ५० ॥ आकृतिगणोऽयम्[3] ॥

इति कण्ड्वादिप्रकरणम् ।

---

## अथ प्रत्ययमालाप्रकरणम् ।

कण्डूयतेः सन् ॥ सन्यङोरिति प्रथमस्यैकाचो द्वित्वे प्राप्ते–॥ **कण्ड्वादेस्तृतीयस्येति वाच्यम्** * ॥ कण्डूयियिषति ॥ क्यजन्तात्सन् ॥ **यथेष्टं नामधातुषु*** ॥ आद्यानां त्रयाणामन्यतमस्य द्वित्वमित्यर्थः । अजादेस्त्वाद्येतरस्य । पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति । अशिश्वीयिषति । अश्वीयियिषति । नदराणां संयुक्तानामचः परस्यैव द्वित्वनिषेधः । इन्द्रीयतेः सन् । द्रीशब्दयिशब्दयोरन्यतरस्य द्वित्वम् । इन्दिद्रीयिषति । इन्द्रीयियिषति । चिचन्द्रीयिषति । चन्दिद्रीयिषति । चन्द्रीयियिषति ॥ प्रियमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छति । पिप्रापयिषति । प्रापिपयिषति । प्रापयियिषति ॥ ऊरुम् । विवारयिषति । वारिरयिषति । वारयियिषति ॥ बाढम् । सिसाधयिषतीत्यादिरूपत्रयम् । षत्वं तु नास्ति[4] । आदेशो यः सकार इत्युक्तेः ॥ यङ् सन् ण्यन्तात्सन् । बोभूयिषयिषति ॥ यङ् णिच् सन्नन्ताण्णिच् । बोभूययिषयतीत्यादि ॥

इति प्रत्ययमालाप्रकरणम् ।

---

## अथात्मनेपदप्रकरणम् ।

'अनुदात्तङित आत्मनेपदम्' । आस्ते । शेते ॥ **भावकर्मणोः । १ । ३ । १३** ॥ बभूवे । अनुबभूवे ॥ **कर्तरि कर्मव्यतिहारे[5] । १ । ३ । १४** ॥ क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् ॥ व्यतिलुनीते । अन्यस्य योग्यं लवनम् अन्यः करोतीत्यर्थः । 'श्नसोरल्लोपः' । व्यतिस्ते । व्यतिषाते । व्यतिषते । तासस्त्योरिति सलोपः । व्यतिसे । 'धि च' । व्यतिध्वे । 'ह एति' । व्यतिहे । व्यत्यसै । व्यत्यास्त । व्यतिषीत ॥ व्यतिराते ३ । व्यतिभाते ३ । व्यति-

---

१ **प्रसृताविति** । प्रसृतिः परिमाणविशेषः ॥ २ **प्रभूतभाव इति** । बाहुल्य इत्यर्थः । ३ **आकृतिगण इति** । तेन "दुवस् संदीपने" इत्यादीनां संग्रहेण "समिधाग्निं दुवस्यत" इत्यादीनामुपपत्तिः ॥ इति कण्ड्वादिप्रक्रिया ॥ ४ **षत्वं तु नास्तीति** । आदेशावयवत्वादिति भावः ॥ इति प्रत्ययमाला ॥ ५ **कर्तरि कर्मेति** । कर्मात्र क्रिया, "उभयगतिरिह भवति" इति परिभाषणात्, व्यतिहारो विनिमयः, व्यत्यास इति यावत् तदाह–**क्रियाविनिमय इति** । परस्परकरणमपि कर्मव्यतिहारः 'सम्प्रहरन्ते राजान' इत्यादौ तथा दृष्टत्वात् ॥ नन्वस्मिन् सूत्रे कर्तृग्रहणं व्यर्थम्, भावकर्मनिवृत्त्यर्थत्वं तु न, तत्र "भावकर्मणोः" इत्यनेनात्मनेपदस्येष्टत्वात् व्यतिगम्यन्ते ग्रामा व्यतिहन्यन्ते दस्यव इति । नच "न गति--" इति सूत्रेणात्मनेपदस्य कर्मव्यतिहारे निषेधेन न स्यादिति वाच्यम्, "अनन्तरस्य--" इति न्यायेन "कर्तरि कर्मव्यतिहारे" इति प्राप्तस्यैव तेन निषेधात्, इति चेन्न, "शेषात् कर्तरि--" इत्युत्तरार्थं कर्तृग्रहणस्यावश्यकत्वात् । तत्र हि "कर्तैव यः कर्ता" इत्यर्थ इष्यते ॥

बभे ॥ **न गतिहिंसार्थेभ्यः । १ । ३ । १५ ॥** व्यतिगच्छन्ति । व्यतिघ्नन्ति ॥ **प्रतिषेधे हसादीनामुपसंख्यानम् *** ॥ हसादयो हसप्रकाराः शब्दक्रियाः । व्यतिहसन्ति । व्यतिजल्पन्ति । **हरतेरप्रतिषेधः *** ॥ संप्रहरन्ते राजानः ॥ **इतरेतरान्योन्योपपदाच्च । १ । ३ । १६ ॥ परस्परोपपदाच्चेति वक्तव्यम् *** ॥ इतरेतरस्यान्योन्यस्य परस्परस्य वा व्यतिलुनन्ति ॥ **नेर्विशः । १ । ३ । १७ ॥** निविशते ॥ **परिव्यवेभ्यः क्रियः । १।३।१८ ॥** अकर्त्रभिप्रायार्थमिदम् । परिक्रीणीते । विक्रीणीते । अवक्रीणीते ॥ **विपराभ्यां जेः । १ । ३ । १९ ॥** विजयते । पराजयते ॥ **आङो दोऽनास्यविहरणे । १ । ३ । २० ॥** आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थे वर्तमानादात्मनेपदं स्यात् ॥ विद्यामादत्ते ॥ अनास्येति किम् ? मुखं व्याददाति ॥ आस्यग्रहणमविवक्षितम् । विपादिकां व्याददाति । 'पादस्फोटो विपादिका' । नदी कूलं व्याददाति ॥ **पराङ्गकर्मकान्न निषेधः *** ॥ व्याददते पिपीलिकाः पतङ्गस्य मुखम् ॥ **क्रीडोऽनुसम्परिभ्यश्च । १ । ३ । २१ ॥** चादाङः । अनुक्रीडते । संक्रीडते । परिक्रीडते । आक्रीडते । अनोः कर्मप्रवचनीयान्न । उपसर्गेण समा साहचर्यात् । माणवकमनुक्रीडति । तेन सहेत्यर्थः । 'तृतीयार्थे' इत्यनोः कर्मप्रवचनीयत्वम् ॥ **समोऽकूजने *** ॥ संक्रीडते । कूजने तु संक्रीडति चक्रम् ॥ **आगमेः क्षमायाम् *** ॥ ण्यन्तस्येदं ग्रहणम् । आगमयस्व तावत् । मा त्वरिष्ठा इत्यर्थः ॥ **शिक्षेर्जिज्ञासायाम् *** ॥ धनुषि शिक्षते । धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः ॥ **आशिषि नाथः*** ॥ आशिष्येवेति नियमार्थं वार्तिकमित्युक्तम् ।

---

१ **नेर्विश इति** । ननु " न्यविशत " इत्यादौ " पूर्वं धातुः साधनेन युज्यते " इति न्यायेन साधनबोधके लकारे तस्यापरनिमित्तकत्वेनान्तरङ्गत्वात् " तिप्तसझि- " इति सूत्रेण सामान्यत आदेशे उपसर्गयोगेऽपि कृताकृतप्रसङ्गित्वेन नित्यत्वाद् विकरणे विकरणान्ताङ्गस्याटि कृते तस्य समुदायभक्ततया धातोर्नेः परत्वासम्भवादात्मनेपदं न स्याद् ' उदः स्थात ' इत्यत्र पूर्वसवर्णवदिति चेन्न, "उपसर्गनियमे अड्व्यवाये उपसंख्यानम् " इति वार्तिकोक्त्या दोषाभावात, " नेः " इत्यस्य षष्ठीत्वेन शङ्कानवकाशाच्च । षष्ठीपक्षे च " नेरर्थसम्बन्धिनस्तद्द्योत्यार्थकस्य विशेः " इत्यर्थः । एवं " परिव्यवेभ्यः- " इत्यादावपि षष्ठ्यर्थेऽवसेया पञ्चमी । " उदः स्था- " इत्यत्र 'उदः' इति तु पञ्चम्येव व्याख्यानादिति नैव दोषः ॥ द्योतकन्यादीनां ग्रहणेन न्यादीनामुपसर्गाणामेव ग्रहणम्, तेन ' मधूनि विशन्ति भ्रमराः ' इत्यादौ न ॥ २ **विपराभ्यामिति** । विशब्देन साहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहणम्, तेन " परा जयति सेना " इत्यत्र आबन्तेन उत्कृष्टा इत्यर्थकेन पराशब्देन योगे न । " पक्षिवाचकस्य विशब्दस्य सम्भवेऽपि परस्परसाहचर्यादुपसर्गग्रहणं व्याख्येयम् " इति कैयटः ॥ ३ **आङो द इति** । अकर्त्रभिप्रायेऽप्यात्मनेपदार्थमिदम् ॥ **आस्यग्रहणमिति** । विहरणशब्दस्य क्रीडापादविहरणाद्यर्थत्वाभावबोधनपूर्वकं विकासार्थमात्रे तात्पर्यग्राहकमास्यग्रहणमिति भावः ॥ ४ **विद्यामादत्ते इति** । गृह्णातीत्यर्थः ॥ ५ **मुखं व्याददातीति** । विस्तारयतीत्यर्थः ॥ ६ अत्र भाष्ये " स्वाङ्गकर्मकाच्च " इत्युक्तम्, तस्य " स्वाङ्गकर्मकादेव प्रतिषेधः " इत्यर्थः, तदभिप्रायेणाह-**पराङ्गकर्मकान्न निषेध इति** ॥ ७ **समोऽकूजने इति** । कूजनमव्यक्तशब्दः ॥ ८ **ण्यन्तस्यैति** । भाष्ये " माणवक आगमयस्व तावत् " इति ण्यन्तस्यैवोदाहरणा भावः । **क्षमा** प्रतीक्षा । **मा त्वरिष्ठा इति** । सहस्व कञ्चित्कालमित्यर्थः ॥ ९ **शिक्षेरिति** । सन्नन्तस्य शकेर्ग्रहणम्, ननु ' शिक्ष विद्योपादाने ' इत्यस्य, अनुदात्तत्त्वादेव सिद्धेः ॥ १० इदं वार्तिकं सूत्रेषु कैश्चित्प्रक्षिप्तम् ॥ ११ **नियमार्थमिति** । नचैतादृशनियमस्वीकारेऽस्यानुदात्तत्त्वं व्यर्थमिति वाच्यम्, युजर्थे तत्सत्त्वात् । "अनुदात्तेतश्च हलादेः" नाथन इति ॥

सर्पिषो नाथते । स्यादित्याशास्ते इत्यर्थः । कथं तर्हि नाथसे किमु पतिं न भूभृतामिति ? नाधसे इति पाठ्यम् ॥ **हरतेर्गतताच्छील्ये** * ॥ गतं प्रकारः । पैतृकमश्वा अनुहरन्ते । मातृकं गावः ॥ पितुर्मातुश्च गतं प्रकारं सततं परिशीलयन्तीत्यर्थः ॥ ताच्छील्ये किम् ? मातुरनुहरति ॥ **किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्** * ॥ हर्षादयो विषयाः । तत्र हर्षो विक्षेपस्य कारणम् । इतरे फले ॥ **अपाच्चतुष्पाच्छकुनिष्वालेखने । ६ । १ । १४२ ॥** अपात्किरतेः सुट् स्यात् ॥ **सुडपि हर्षादिष्वेव वक्तव्यः** * ॥ अपस्किरते वृषो हृष्टः । कुक्कुटो भक्षार्थी । श्वा आश्रयार्थी च ॥ हर्षादिष्विति किम् । अपकिरति कुसुमम् । इह तङ्सुटौ न । हर्षादिमात्रविवक्षायां यद्यपि तङ् प्राप्तस्तथापि सुडभावान्नेष्यत इत्याहुः । गजोऽपकिरति ॥ **आङि नुप्रच्छ्योः** * ॥ आनुते । आपृच्छते ॥ **शप उपालम्भे** * ॥ आक्रोशार्थात्स्वरितेतोऽकर्तृगेऽपि फले शपथरूपेऽर्थे आत्मनेपदं वक्तव्यमित्यर्थः । कृष्णाय शपते ॥ **समवप्रविभ्यः स्थः । १ । ३ । २२ ॥** सन्तिष्ठते । स्थाघ्वोरिच्च । समस्थित । समस्थिषाताम् । समस्थिषत । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते ॥ **आङः प्रतिज्ञायामुपसंख्यानम्** * ॥ शब्दं नित्यमातिष्ठते । नित्यत्वेन प्रतिजानीते इत्यर्थः ॥ **प्रकाशनस्थेयाख्ययोश्च । १ । ३ । २३ ॥** गोपी कृष्णाय तिष्ठते । आशयं प्रकाशयतीत्यर्थः । संशय्य कर्णादिषु तिष्ठते यः । कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः ॥ **उदोऽनूर्ध्वकर्मणि । १ । ३ । २४ ॥** मुक्तावुत्तिष्ठते । अनूर्ध्वेति किम् ? पीठादुत्तिष्ठति ॥ **ईहायामेव** * ॥ नेह । ग्रामाच्छतमुत्तिष्ठति । उपान्मन्त्र-

---

१ **प्रकार** इति । गुणक्रियादिधर्म इत्यर्थः । **ताच्छील्यं** नियततत्स्वभावता ॥ २ **मातुरनुहरतीति** । अत्र सादृश्यमात्रप्रतीतिर्नतु मातृवृत्तिगुणस्य सततं परिशीलनमिति नात्मनेपदम् ॥ ३ **किरतेर्हर्षेति** । यद्यपि " कुलायो नीडमस्त्रियाम् " इति कोशान्नीडवाची कुलायशब्दस्तथापि " अपस्किरते श्वाऽऽश्रयार्थी " इति भाष्ये उदाहरणदानादत्र कुलायशब्दो वासस्थानमात्रपरः ॥ ४ **विषया इति** । समभिव्याहृतपदान्तरगम्या इत्यर्थः ॥ ५ **आलेखनं** खननम् । **अपस्किरते इति** । अत्र कृधातोः खननपूर्वके धूल्यादिविक्षेपे वृत्तिः ॥ ६ **अपकिरति कुसुममिति** । इहालेखनाभावात्सुडभावः ॥ ७ **नेष्यत इति** । किरतेरिति वार्तिकोदाहरणानां ससुट्कानामेव भाष्यकृतोदाहरणात् सुडभावे नेष्यते इति भावः ॥ ८ **गजोऽपकिरतीति** । स्वभावाख्यानमत्र ॥ ९ **आनुते इति** । शृगाल उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थ इति कैयटः । णु स्तुतौ अदादिः ॥ १० **आपृच्छते इति** । प्रच्छ ज्ञीप्सायां तुदादिः । " ग्रहिज्या-" इति सम्प्रसारणम् ॥ ११ **शपथरूपेऽर्थ इति** । त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येवं वाचा शरीरस्पर्शनं शपथः ॥ १२ **कृष्णाय शपते इति** । त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येवं शपथेन कृष्णस्य स्वाभिप्रायं प्रकाशयतीत्यर्थः । " श्लाघह्नुङ्-" इति सम्प्रदानसंज्ञा ॥ १३ **आङः प्रतिज्ञायामिति** । प्रज्ञापनोयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा । ' अङ्गीकारः प्रतिज्ञा ' इति तु सुगमः पन्थाः ॥ १४ **शब्दं नित्यमिति** । नित्यमिति शब्दस्य विशेषणम् । शब्दो नित्य इति प्रतिज्ञां करोतीत्यर्थः ॥ १५ **प्रकाशनेति** । **प्रकाशनं** ज्ञापनम् । **स्थेयो** विवादपदनिर्णेता ॥ १६ **संशय्येति** । संशयं विधायेत्यर्थः ॥ १७ **मुक्तावुत्तिष्ठते इति** । मुक्त्यर्थं घटते इत्यर्थः ॥ १८ **ईहायामेवेति** । कायपरिस्पन्दरूपो व्यापार ईहा । ईहात्मकं यदनूर्ध्वकर्म तत्रेत्यर्थः ॥ १९ **ग्रामाच्छतमुत्तिष्ठतीति** । उत्पद्यत इत्यर्थः । शतस्य कर्तुश्चेष्टाया अभावान्नात्मनेपदम् ॥ २० **उपान्मन्त्रेति** । मन्त्रः करणं यस्य तादृशेऽर्थे वर्तमानादित्यर्थः । करणमत्र पारिभाषिकं गृह्यते ॥

करणे । १ । ३ । २५ ॥ [1]आग्नेय्याऽऽग्नीध्रमुपतिष्ठते ॥ मन्त्रकरणे किम् ? भर्तारमुपतिष्ठति यौवनेन ॥ [2]**उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्** * ॥ [3]आदित्यमुपतिष्ठते । कथं तर्हि—[4]स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वतीति ? देवतात्वारोपात्[5] । नृपस्य[6] देवतांशत्वाद्वा । गङ्गा यमुनामुपतिष्ठते । उपश्लिष्यतीत्यर्थः । रथिकानुपतिष्ठते । मित्रीकरोतीत्यर्थः । पन्थाः स्रुघ्नमुपतिष्ठते । प्राप्नोतीत्यर्थः ॥ [7]**वा लिप्सायामिति वक्तव्यम्** * ॥ भिक्षुकः प्रभुमुपतिष्ठते उपतिष्ठति वा । लिप्सया उपगच्छतीत्यर्थः ॥ **अकर्मकाच्च**[8] । १ । ३ । २६ ॥ उपात्तिष्ठतेरकर्मकादात्मनेपदं स्यात् ॥ भोजनकाले उपतिष्ठते । सन्निहितो भवतीत्यर्थः ॥ **उद्विभ्यां तपः** । १ । ३ । २७ ॥ अकर्मकादित्येव ॥ उत्तपते । वितपते । दीप्यत इत्यर्थः ॥ **स्वाङ्गकर्मकाच्चेति वक्तव्यम्** * ॥ स्वमङ्गं स्वाङ्गं नतु अद्रवमिति परिभाषितम्[9] । उत्तपते वितपते वा पाणिम् । नेह—सुवर्णमुत्तपति । सन्तापयति विलापयति वेत्यर्थः । चैत्रो मैत्रस्य पाणिमुत्तपति । सन्तापयतीत्यर्थः ॥ **आङो यमहनः** । १ । ३ । २८ ॥ [10]आयच्छते । आहते । अकर्मकात्स्वाङ्गकर्मकादित्येव । नेह परस्य शिर आहन्ति ॥ [11]कथं तर्हि 'आजघ्ने विषमविलोचनस्य वक्षः' इति भारविः, आहध्वं मा रघूत्तममिति भट्टिश्च ? प्रमाद[12] एवायमिति भागवृत्तिः । प्राप्ये-[13]

---

१ **आग्नेय्येति** । अग्निर्देवता यस्याः सा आग्नेयी तया, अग्निदेवताकया ऋचा, आग्नीध्रम्=अग्निविशेषम्, उपतिष्ठते स्तौतीत्यर्थः । अग्निमिन्धे इति अग्नीत्=ऋत्विग्विशेषः । "क्विप् च" इति क्विप् । अग्नीध. स्थानमाग्नीध्रम् । तत्स्थोऽप्याग्नीध्रः । निपातनात्तद्धितो रण्प्रत्ययः ॥ इह मन्त्रकरणकोऽर्थः स्तुतिरूपः ॥ २ **उपादिति** । अमन्त्रकरणार्थमिदम् । देवानां पूजेति समासः, गौरवप्रयुक्तप्रीत्यवच्छिन्नक्रिया पूजा । **सङ्गतिकरण**मुपश्लेषः, **मित्रकरण**मनुपश्लिष्टस्यापि मैत्रीसम्बन्धः । मित्रस्य करणमिति विग्रहः । **पन्था** मार्गः, स च कर्तृत्वेन सम्बध्यते ॥ ३ **आदित्यमुपतिष्ठते इति** । पूजयतीत्यर्थः ॥ ४ **स्तुत्यमिति** । "स्तुत्यं स्तोत्रार्हं तं रघुं सरस्वती अर्थ्यादिभिः अर्थादनपेताभिः स्तुतिभिः स्तोत्रैः उपतस्थे पूजितवती" इति पद्यार्थः ॥ ५ समाधत्ते-**आरोपादिति** । स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्व-स्वप्रतियोगिनिष्ठत्व-स्वावच्छिन्नत्व-एतत्त्रितयसम्बन्धेन सम्बन्धविशिष्टान्यप्रकारताशालिज्ञानत्वमारोपः । अत्र स्वपदार्थस्तु विशेष्यविशेषणयोर्भासमानः सम्बन्धो ज्ञेयः । आहार्यज्ञानमारोप इति वस्तुस्थितिः । बाधसमानकालीनेच्छाजन्यज्ञानमाहार्यारोप उच्यते ॥ ६ आरोपस्य भ्रमरूपत्वात्सिद्धान्तमाह-**नृपस्येति** । तथाच मनुः-"अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥" इति ॥ ७ **वा लिप्सायामिति** । लब्धुमिच्छा लिप्सा लाभेच्छेति यावत् ॥ तस्यां गम्यमानायामित्यर्थः ॥ ८ **अकर्मकाच्चेति** । व्यापारसमानाधिकरणफलवाचकोऽकर्मकः । व्यापाराधिकरणेतरावृत्ति यत् फलं तद्वाचक इत्यर्थः । तेन गम्यादौ फलस्य द्विष्ठत्वेन व्यापाराधिकरणकर्तृनिष्ठत्वेऽपि नातिव्याप्तिः ॥ ९ **परिभाषितमिति** । स्वशास्त्रसंकेतः परिभाषा । सा सञ्जातास्येति परिभाषितम् ॥ १० **आयच्छते इति** । दीर्घो भवतीत्यर्थः । **आहते इति** । पीडितो भवतीत्यर्थः ॥ ११ "आङो यमहन" इत्यस्य यद्यकर्मके स्वाङ्गकर्मकेऽर्थे वा प्रवृत्तिः- तर्हि "आजघ्ने विषमविलोचनस्य वक्षः" इत्यत्र तु न तथेति कथमात्मनेपदमित्याशयेन शङ्कते-**कथन्तर्हीति** । यदि स्वाङ्गकर्मकादेव तर्हि कथमित्यन्वयः । **आजघ्ने इति** । गाण्डीवी अर्जुनो विषमविलोचनस्य त्र्यम्बकस्य, वक्षः हृदयम्, भुजाभ्याम्, आजघ्ने ताडितवान् इति पद्यार्थः ॥ १२ **प्रमाद इति** । पूर्वमकर्तव्यतया निश्चितेऽपि कर्तव्यताधीः प्रमादः ॥ १३ "तुष्यतु दुर्जनः" इति न्यायेन समाधत्ते-**प्राप्येति** । एवं चाकर्मकत्वादात्मनेपदं सिद्ध्यति ॥

त्यध्याहारो वा । ल्यब्लोपे[1] पञ्चमीति तु ल्यबन्तं विनैव तदर्थावगतिर्यत्र तद्विषयकम् । भेत्तुमित्यादि[2] तुमुन्नन्ताध्याहारो वा । समीपमेत्येति[3] वा ॥ **आत्मनेपदेष्वन्यतरस्याम् । २ । ४ । ४४ ॥** हनो वधादेशो वा लुङि आत्मनेपदेषुपरेषु ॥ अवधिष्ट । अवधिषाताम् ॥ **हनः सिच् । १ । २ । २४ ॥** कित्स्यात् ॥ अनुनासिकलोपः । आहत । आहसाताम् । आहसत ॥ **यमो गन्धने । १ । २ । १६ ॥** सिच् कित्स्यात् ॥ गन्धनं सूचनं परदोषाविष्करणम् । उदायते ॥ गन्धने किम् ? उदायंस्त पादम् । आकृष्टवानित्यर्थः ॥ **समो गम्यृच्छिभ्याम् । १ । ३ । २९ ॥** अकर्मकाभ्यामित्येव[4] ॥ संगच्छेते[5] ॥ **वा गमः । १ । २ । १३ ॥** गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः ॥ संगसीष्ट । संगंसीष्ट । समगत । समगंस्त । समृच्छिष्यते । अकर्मकाभ्यां किम् ? ग्रामं संगच्छति ॥ **विदिप्रच्छिस्वरतीनामुपसंख्यानम् * ॥** वेत्तेरेव[6] ग्रहणम् । संवित्ते । संविदाते ॥ **वेत्तेर्विभाषा । ७ । १ । ७ ॥** वेत्तेः[6] परस्य झादेशस्यातो रुडागमो वा स्यात् ॥ संविद्रते । संविदते । संविद्रताम् । संविदताम् । समविद्रत । समविदत । संपृच्छते । संस्वरते ॥ **अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम् *** ॥ अर्तीति द्वयोर्ग्रहणम्[7] । अङ्विधौ त्वियर्तेरेवेत्युक्तम् । मा समृत । मा समृषाताम् । मा समृषतेति । समार्त । समार्षाताम् । समार्षतेति च भ्वादेः । इयर्तेस्तु मा समरत । मा समरेताम् । मा समरन्त । समारत । समारेताम् । समारन्तेति च । संशृणुते । संपश्यते । अकर्मकादित्येव । अत एव ' रक्षांसीति पुरापि संशृणुमहे' इति मुरारिप्रयोगः प्रामादिक इत्याहुः । अध्याहारो वा 'इति कथयद्भ्यः' इति ॥ अथास्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मकतेति चेत् शृणु—

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ १ ॥

---

१ ननु "प्राप्य" इत्यध्याहारे "ल्यब्लोपे कर्मण्यधिकरणे च" इति पञ्चमीप्रसङ्गस्तत्राह—**ल्यब्लोप इति । ल्यबन्तं विनैवेति** । "ल्यबर्थो दृश्यते यत्र ल्यबन्तं नैव दृश्यते तदेव हि ल्यब्लोपित्वं ज्ञातव्यं च सदा बुधैः ॥ " इति शिष्टोक्तेरिति भावः । " उच्चरितः शब्दः प्रत्यायको नानुच्चारितः" इति भाष्योक्तेः कथन्तदर्थावगतिरिति तु न शङ्क्यम्, वाक्ये वाक्यैकदेशप्रयोगन्यायेन अत्र शब्दाध्याहारात् ॥ २ ननु शब्दाध्याहारेऽपि लोपोऽप्रयोगोऽस्त्येवेतीदमयुक्तमिति मन्यमान आह—**भेत्तुमित्यादीति** । तुमुनन्तघटितवाक्यस्यैकदेशोऽयमित्यर्थः ॥ ३ अकर्मकत्वेन समाधाय स्वाङ्गकर्मत्वेन समाधातुमाह—**समीपमिति** । विषमविलोचनस्य समीपमेत्य आगत्य स्ववक्ष आजघ्ने इत्यन्वय इति भावः ॥ ४ "अकर्मकाच्च" इत्यनुवर्तमानं द्विवचनान्तानुरोधेन द्विवचनान्तत्वेन विपारिणम्यते इत्याशयेनाह—**अकर्मकाभ्यामित्येवेति** ॥ ५ **संगच्छते इति** । सङ्गतं भवतीत्यर्थः ॥ ६ **वेत्तेरेवेति** । "संवित्ते" इति भाष्यीयोदाहरणदर्शनमूलकाद् " वेत्तेर्विभाषा " इति झादेशानुवादेन रुडागमविधानदर्शनमूलकाच्च व्याख्यानादिति भावः ॥ ७ **द्वयोरिति** । साहचर्यानाश्रयणमूलकाद् व्याख्यानादिति भावः । तदाश्रयणे तु श्रुदृशसाहचर्यादलुग्विकरणस्यैव भवेद् ग्रहणमिति बोध्यम् ॥ ८ **धातोरिति** । सकर्मकधातोरपि क्रिया अकर्मिका भवति, कुत इत्याकाङ्क्षायां चतुर्भिर्हेतुभिरकर्मकत्वं साधयति-**धातोरिति** । **अर्थान्तरे** अन्योऽर्थोऽर्थान्तरम्, तत्र वृत्तेः वर्तनात् । यदा प्रकृतमर्थं विहाय नानार्थत्वादन्यस्मिन्नर्थे धातुर्वर्तते तदा स धातुरकर्मक इति भावः ॥ पुनः कर्मणो धात्वर्थेनोपसंग्रहादकर्मकः किमित्याकाङ्क्षा यत्र धात्वर्थेनैव पूर्यंत तत्र नैराकाङ्क्ष्येण कर्मणोऽनुपस्थितो धातुरकर्मक इति भावः ॥ कर्मणो यत्र-

वहति भारम् । नदी वहति । स्यन्दत इत्यर्थः ॥ जीवति । नृत्यति । प्रसिद्धेर्यथा—मेघो वर्षति । कर्मणोऽविवक्षातो यथा—'हितान्न यः संशृणुते स किंप्रभुः'॥**उपसर्गादस्यत्यूह्योर्वेति वाच्यम् *** ॥ अकर्मकादिति निवृत्तम् । बन्धं निरस्यति । निरस्यते । समूहति । समूहते ॥ **उपसर्गाद्ध्रस्व ऊहतेः । ७ । ४ । २३ ॥** यादौ क्ङिति ॥ व्रह्म समुह्यात् । अग्निं समुह्य ॥ **निसमुपविभ्यो ह्वः । १ । ३ । ३० ॥** निह्वयते ॥ **स्पर्धायामाङः । १।३।३१॥** कृष्णश्चाणूरमाह्वयते ॥ स्पर्धायां किम् ? पुत्रमाह्वयति ॥ **गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः । १ । ३ । ३२ ॥** गन्धनं हिंसा । उत्कुरुते । सूचयतीत्यर्थः । सूचनं हि प्राणवियोगानुकूलत्वाद्धिंसैव ॥ अवक्षेपणं भर्त्सनम् । श्येनो वर्तिकामुदाकुरुते । भर्त्सयतीत्यर्थः ॥ हरिमुपकुरुते । सेवते ॥ परदारान्प्रकुरुते । तेषु सहसा प्रवर्तते ॥ एधो दकस्योपस्कुरुते । गुणमाधत्ते ॥ गाथाः प्रकुरुते । प्रकथयति ॥ शतं प्रकुरुते । धर्मार्थं विनियुङ्क्ते ॥ एषु किम् ? कटं करोति ॥ **अधेः प्रसहने । १ । ३ । ३३ ॥** प्रसहनं क्षमाभिभवश्च । षह मर्षणेऽभिभवे चेति पाठात् । शत्रुमधिकुरुते । क्षमत इत्यर्थः । अभिभवतीति वा ॥ **वेः शब्दकर्मणः । १।३ । ३४ ॥** स्वरान्विकुरुते । उच्चारयतीत्यर्थः ॥ शब्दकर्मणः किम्? चित्तं

---

–प्रसिद्धत्वं तत्राप्यकर्मकत्वव्यवहारः, कर्मविषयकोत्थिताकाङ्क्षाऽविषयत्वं हि तत्त्वमित्याशयः । किमित्याकाङ्क्षासत्त्वेऽपि कर्मान्तरासत्त्वेन तस्यैव लाभः सुतरामिति ज्ञातप्रयोगोऽनुचित इति यावत् । कर्मणोऽविवक्षायामपि धातुरकर्मकः, किमित्याकाङ्क्षायां वक्तुरधीनत्वेन तथा कल्पनेति भावः ॥ एवं च प्रकृतेरर्थान्तरवृत्तित्वाद्धनिगम्यादीनामकर्मकत्वमिति भावः ॥ **वहति भारमिति** । प्रापणे सकर्मको वहिः ॥ **नदी वहतीति** । स्यन्दने त्वकर्मक इति भावः ॥ **जीवतीति** । प्राणविशिष्टं धारणं जीवतिराह ॥ तत्र प्राणानां धातुनैवोपात्तत्वान्न तेन कर्मणा सकर्मकत्वम् । नच प्राणकर्मके धारणेऽन्यस्य कर्मत्वमिति जीवतिरकर्मकः ॥ एवं नृत्यतिः गात्रविशिष्टं विक्षेपमाह ॥ **मेघो वर्षतीति** । अत्र अनुपात्ते कर्मान्तरे नियमेन जलं प्रतीयत इति न तेन कर्मणा सकर्मकत्वम् ॥ **हितादिति** । यः प्रभुः हिताद् वचनं न संशृणुते स किंप्रभुः कुत्सितः प्रभुरिति पद्यार्थः । वचनमिति कर्माविवक्षितमत्र ॥

. १ **निवृत्तमिति** । सोपसर्गास्यत्यूह्योः सकर्मकत्वेनाकर्मकादित्येतत्सम्बन्धस्य वक्तुमशक्यत्वादिति भावः ॥ २ **निसमुपविभ्यो ह्व इति** । अत्र "ह्व" इत्येकारान्तानुकरणं, लक्षणवशसम्पन्नमात्त्वम् । तेन "निह्वयते" इत्यत्रात्मनेपदं भवति । कृतात्त्वानुकरणे तु यत्रात्त्वविषयतास्ति तत्रैव स्यात् ॥ **स्पर्धायामिति** । स्पर्धा पराभिभवेच्छा ॥ ३ **चाणूरमाह्वयते इति** । स्पर्धमानस्तस्याह्वानं करोतीत्यर्थः ॥ ४ **आह्वयतीति** । आकारयतीत्यर्थः ॥ ५ **गन्धनं हिंसेति** । सूचनमपि वधबन्धादिकरणत्वाद्धिंसैवेति भावः ॥ **सेवनमनुवृत्तिः** ॥ सहसा वर्तते साहसिकस्तस्य कर्म **साहसिक्यम्,** बलात्कारेणाविचारेण वा यः कर्म करोति तत्कर्तृका क्रियेत्यर्थः ॥ **प्रतियत्नः** असतो गुणान्तरस्याधानम् । **प्रकथनं** प्रकर्षेण कथनम् । उपयोगो धर्माद्यर्थं द्रव्यविनियोगः ॥ ६ **एधो दकस्येति** । एधः काष्ठम् अशुष्कत्वात् दकस्य पानीयस्य असाध्यज्वालनादिगुणानामाधानं करोतीत्यर्थः । "कृञः प्रतियत्ने" इति षष्ठी ॥ ७ **एषु किं कटं करोतीति** । एषामर्थानामनुपादाने "कृञः" इत्येतावता सूत्रेण सर्वत्रात्मनेपदाङ्गीकारे कृञो ञकारो विफल एव स्यादिति स गन्धनादिष्वर्थेष्वेव आत्मनेपदं ज्ञापयिष्यतीति तेषां ग्रहणं निष्फलमेवेति तु न शङ्क्यम्, "विधिनियमसंभवे विधिरेव ज्यायान्" इति परिभाषणात ॥ ८ **वेरिति** । शब्दः कर्म कारकं यस्य ततः कृञो विपूर्वादात्मनेपदमित्यर्थः ॥

विकरोति कामः ॥ **अकर्मकाच्च । १ । ३ । ३५ ॥** वेः कृञः इत्येव । छात्रा विकुर्वते । विकारं लभन्ते इत्यर्थः ॥ **संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः । १ । ३ । ३६ ॥** अत्रोत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्याः । इतरे प्रयोगोपाधयः । तथा हि । शास्त्रे नयते । शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः । तेन च शिष्यसंमाननं फलितम् । उत्सञ्जने । दण्डमुन्नयते । उत्क्षिपतीत्यर्थः । माणवकमुपनयते । विधिना आत्मसमीपं प्रापयतीत्यर्थः । उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्यत्वं क्रियते । ज्ञाने । तत्त्वं नयते । निश्चिनोतीत्यर्थः । कर्मकारानुपनयते । भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः । विगणनमृणादेर्निर्यातनम् । करं विनयते । राज्ञे देयं भागं परिशोधयतीत्यर्थः । शतं विनयते । धर्मार्थं विनियुङ्क्ते इत्यर्थः ॥ **कर्तृस्थे चाशरीरे कर्मणि । १ । ३ । ३७ ॥** नियः कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्ने एव स्यात् ॥ सूत्रे शरीरशब्दे न तदवयवो लक्ष्यते । क्रोधं विनयते । अपगणयति । तत्फलस्य चित्तप्रसादस्य कर्तृगत्वात्स्वरितञित इत्येव सिद्धे नियमार्थमिदम् । तेनेह न । गडुं विनयति । कथं तर्हि विगणय्य नयन्ति पौरुषमिति? कर्तृगामित्वाविवक्षायां भविष्यति ॥ **वृत्तिसर्गतायनेषु क्रमः । १ । ३ । ३८ ॥** वृत्तिरप्रतिबन्धः । ऋचि क्रमते बुद्धिः । न प्रतिहन्यत इत्यर्थः ॥ सर्ग उत्साहः । अध्ययनाय क्रमते । उत्सहते इत्यर्थः ॥ क्रमन्तेऽस्मिन् शास्त्राणि । स्फीतानि भवन्तीत्यर्थः ॥ **उपपराभ्याम् । १ । ३ । ३९ ॥** वृत्त्यादिष्वाभ्यामेव क्रमेर्न तूपसर्गान्तरपूर्वात् ॥ उपक्रमते । पराक्रमते । नेह संक्रामति ॥ **आङ उद्गमने । १ । ३ । ४० ॥** आक्रमते सूर्यः । उदयत इत्यर्थः ॥ **ज्योतिरुद्गमन इति वाच्यम् *** ॥ नेह—आक्रामति धूमो हर्म्यतलात् ॥ **वेः पादविहरणे । १ । ३ । ४१ ॥** साधु विक्रमते वाजी ॥ पादविहरणे किम्? विक्रामति सन्धिः । द्विधा भवति । स्फुटतीत्यर्थः ॥ **प्रोपाभ्यां समर्थाभ्याम् ।१।३।४२ ॥** समर्थौ तुल्यार्थौ । शकन्ध्वादि-

---

१ **विकरोतीति** । अन्यथा करोतीत्यर्थः ॥ २ **सम्माननेति** । नयतेर्ञित्त्वात् परगामिक्रियाफलविवक्षायामात्मनेपदार्थं वचनम् ॥ ३ **प्रयोगोपाधय इति** । शब्दानां यथायोगं समभिव्याहृतत्वेनोच्चारणं प्रयोगः । उप समीपवर्तिनि आदधाति संक्रामयति स्वीयं धर्ममित्युपाधिः । एवञ्च प्रयोगनियामका इत्यर्थः ॥ तत्र **सम्माननं** पूजनम् । **उत्सञ्जनमुत्क्षेपणम्** । **आचार्यकरणमाचार्यक्रिया** । ज्ञानं प्रमेयनिश्चयः । **भृतिर्वेतनम्** । **व्ययो** धर्मादिषु विनियोगः ॥ ४ **कर्तृस्थे चाशरीर इति** । शीर्यते इति शरीरम् । प्रतिक्षणं क्षीयमाणं देहं शरीरम् ॥ **शरीरशब्देनेति** । शरीरतादात्म्यापन्नस्यैव कर्तृत्वेन शरीरस्य तत्स्थत्वासम्भवः अवयवानान्तु सम्बन्धविशेषेण तत्स्थत्वसम्भव इति भावः ॥ ५ **गडुमिति** । "गडुः पृष्ठगुडे कुब्जे" इति विश्वः ॥ ६ **उत्साह इति** । उत्साहश्चित्तवृत्तिविशेषः, तद्विषयकविलक्षणज्ञानजन्यसुखविशेषो वा ॥ ७ **उद्गमन इति** । ऊर्ध्वदेशसंयोगानुकूलव्यापारः । कथं तर्हि "नभः समाक्रामति चन्द्रमाः क्रमात्" इति । उच्यते । व्याप्ताविह क्रमिर्वर्तते । नतूद्गमने ॥ ८ **वेः पादेति** । पादविहरणं पादविक्षेपः॥ धातूनामनेकार्थत्वं बोधयितुं सूत्रे पादविहरण इत्युक्तम् ॥ ९ **प्रोपाभ्यामिति** । समस्तुल्योऽर्थो ययोरिति विग्रहे शकन्ध्वादित्वात् पररूपम् ॥

स्वात्पररूपम् । प्रारम्भेऽनयोस्तुल्यार्थता । प्रक्रमते । उपक्रमते । समर्थाभ्यां किम् ? प्रक्रामति । गच्छतीत्यर्थः । उपक्रामति । आगच्छतीत्यर्थः ॥ **अनुपसर्गाद्वा ।१।३।४३॥** क्रामति । क्रमते । अप्राप्तविभाषेयम् ॥ वृत्त्यादौ तु नित्यमेव ॥ **अपह्नवे ज्ञः ।१।३।४४॥** शतमपजानीते । अपलपतीत्यर्थः ॥ **अकर्मकाच्च ।१।३।४५॥** सर्पिषो जानीते । सर्पिषा उपायेन प्रवर्तते इत्यर्थः ॥ **संप्रतिभ्यामनाध्याने ।१।३।४६॥** शतं संजानीते । अवेक्षत इत्यर्थः । शतं प्रतिजानीते । अङ्गीकरोतीत्यर्थः । 'अनाध्याने' इति योगो विभज्यते । तत्सामर्थ्याद् 'अकर्मकाच्च' इति प्राप्तिरपि वार्यते । मातरं मातुर्वा संजानाति । कर्मणः शेषत्वविवक्षायां षष्ठी ॥ **भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ।१।३।४७॥** उपसंभाषोपमन्त्रणे धातोर्वाच्ये । इतरे प्रयोगोपाधयः । शास्त्रे वदते । भासमानो ब्रवीतीत्यर्थः । उपसंभाषोपसान्त्वनम् । भृत्यानुपवदते । सान्त्वयतीत्यर्थः । ज्ञाने । शास्त्रे वदते । यत्ने । क्षेत्रे वदते । विमतौ । क्षेत्रे विवदन्ते । उपमन्त्रणमुपच्छदनम् । उपवदते । प्रार्थयत इत्यर्थः ॥ **व्यक्तवाचां समुच्चारणे ।१।३।४८॥** मनुष्याणां संभूयोच्चारणे वदेरात्मनेपदं स्यात् ॥ संप्रवदन्ते ब्राह्मणाः । नेह । संप्रवदन्ति खगाः ॥ **अनोरकर्मकात् ।१।३।४९॥** व्यक्तवाग्विषयादनुपूर्वादकर्मकाद्वदेरात्मनेपदं स्यात् ॥ अनुवदते कठः कलापस्य ॥ अकर्मकात्किम् ? उक्तमनुवदति ॥ व्यक्तवाचां किम् ? अनुवदति वीणा ॥ **विभाषा विप्रलापे ।१।३।५०॥** विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणे उक्तं वा स्यात् । विप्रवदन्ते विप्रवदन्ति वा वैद्याः ॥ **अवाद्ग्रः ।१।३।५१॥** अवगिरते । गृणातिस्त्ववपूर्वो न प्रयुज्यते एवेति भाष्यम् ॥ **समः प्रतिज्ञाने ।१।३।५२॥** शब्दं नित्यं संगिरते । प्रतिजानीत इत्यर्थः । प्रतिज्ञाने

---

१ **प्रक्रमते उपक्रमते इति** । आरभत इत्यर्थः ॥ २ **नित्यमेवेति** । पूर्वविप्रतिषेधेनेति भावः ॥ ३ **अपह्नव इति** । अपह्नवोऽपह्नुतिरपलापः । अबाधितपरोक्तविपरीतबोधनाय तदुपपादकाभावप्रतिपादनेच्छा अपह्नव इति हृदयम् ॥ ४ **सम्प्रतिभ्यामिति** । उत्कण्ठापूर्वकं स्मरणमाध्यानम् । झटितिझटित्युद्बुद्धसंस्कारजन्यस्मरणमुत्कण्ठा ॥ **मातुः सञ्जानातीति** । उत्कण्ठापूर्वं स्मरतीत्यर्थः ॥ ५ **भासनेति** । भासनं दीप्तिः । **ज्ञानं** सम्यगवबोधः । **यत्न** उत्साहः । **विमतिर्नानामतिः**, विविधा मतिरिति विग्रहात् । **शास्त्रे वदते इति** । बोधोत्तरं शास्त्रविषयकज्ञानवत्त्वं मनसा बुध्यते इत्यर्थः ॥ **क्षेत्रे वदत इति** । क्षेत्रविषयकमुत्साहमाविष्करोतीत्यर्थः ॥ **क्षेत्रे विवदन्ते इति** । वैमत्यहेतुकं नानाविधं भाषन्ते इत्यर्थः ॥ ६ **व्यक्तवाचामिति** । व्यक्ता परिस्फुटा वाणी अर्थावगतिहेतुश्च वाग् येषां ते व्यक्तवाचस्तेषाम् । यद्यपि वदधातुर्व्यक्तायामेव पठ्यते, तथापि "व्यक्तवाचाम्" इत्युपादानसामर्थ्याद्येषां प्रसिद्धतरं व्यक्तवाक्त्वं त एवेह गृह्यन्ते । तेन शुकसारिकादीनां समुच्चारणे न भवति ॥ ७ **अनुवदते कठः कलापस्येति** । शाखावचनावपि कठकलापशब्दौ तदध्येतरि वर्तेते । कलापेन सदृशं कठोऽधीयानो वदतीत्यर्थः । अनुः सादृश्ये, तेन कलापस्येति तुल्यार्थयोगे शेषलक्षणा षष्ठी ॥ ८ युगपत् परस्परविरोधेन कथनं **विप्रलापः** । "विप्रलापो विरुद्धोक्तिः" इति कोशादाह—**विरुद्धोक्तिरूप इति** ॥ **विप्रवदन्तीति** । युगपत् परस्परविरोधेन वदन्तीत्यर्थः ॥ ९ **इति भाष्यमिति** । तत्र हि—"गिरतेरिति वक्तव्यं गृणातेर्माभूत् । तर्हि वक्तव्यम् । न वक्तव्यम्, प्रयोगाभावात् । नचावपूर्वस्य गृणातेः प्रयोगोऽस्ति" इत्युक्तम् ॥ १० **सम इति**—प्रतिज्ञानमभ्युपगम इति वृत्तिः ॥

किम्? संगिरति ग्रासम् ॥ **उदश्चरः सकर्मकात् । १ । ३ । ५३ ॥** धर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः । सकर्मकात्किम्? बाष्पमुच्चरति । उपरिष्टाद्गच्छतीत्यर्थः ॥ **समस्तृतीयायुक्तात् । १ । ३ । ५४ ॥** रथेन संचरते ॥ **दाणश्च सा चेच्चतुर्थ्यर्थे । १ । ३ । ५५ ॥** संपूर्वाद्दाणस्तृतीयान्तेन युक्तादुक्तं स्यात् तृतीया चेच्चतुर्थ्यर्थे । दास्या संयच्छते । पूर्वसूत्रे 'सम' इति षष्ठी । तेन सूत्रद्वयमिदं व्यवहितेऽपि प्रवर्तते । रथेन समुदाचरते । दास्या संप्रयच्छते ॥ **उपाद्यमः स्वकरणे । १ । ३ । ५६ ॥** स्वकरणं स्वीकारः । भार्यामुपयच्छते ॥ **विभाषोपयमने । १ । २ । १६ ॥** यमः सिच् किद्वा स्याद्विवाहे । रामः सीतामुपायत उपायंस्त वा । उदवोढेत्यर्थः । बन्धनाङ्ग उपयमे तु पूर्वविप्रतिषेधान्नित्यं कित्त्वम् ॥ **ज्ञाश्रुस्मृदृशां सनः । १ । ३ । ५७ ॥** सन्नन्तानामेषां प्राग्वत् ॥ धर्मं जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते ॥ **नानोर्ज्ञः । १ । ३ । ५८ ॥** पुत्रमनुजिज्ञासति । पूर्वसूत्रस्यैवायं निषेधः । अनन्तरस्येति न्यायात् । तेनेह न--सर्पिषोऽनुजिज्ञासते । सर्पिषा प्रवर्तितुमिच्छतीत्यर्थः । 'पूर्ववत्सनः' इति तङ् । अकर्मकाच्चेति केवलाद्विधानात् ॥ **प्रत्याङ्भ्यां श्रुवः । १ । ३ । ५९ ॥** आभ्यां सन्नन्ताच्छ्रुव उक्तं न स्यात् । प्रतिशुश्रूषति । आशुश्रूषति ॥ कर्मप्रवचनीयात्स्यादेव-देवदत्तं प्रतिशुश्रूषते ॥ **शदेः शितः । १ । ३ । ६० ॥ म्रियतेर्लुङ्लिङोश्च । १ । ३ । ६१ ॥** व्याख्यातम् ॥ **पूर्ववत्सनः । १ । ३ । ६२ ॥** सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् ॥ एदिधिषते । शिशयिषत । निविविक्षते ॥ पूर्ववत्किम्? बुभूषति ॥ शदेरित्यादिसूत्रद्वये सनो नेत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेनेह न--शिशत्सति । मुमूर्षति ॥ **आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य । १ । ३ । ६३ ॥** एधांचक्रे ॥ **प्रोपाभ्यां युजेरयज्ञपात्रेषु । १ । ३ । ६४ ॥** प्रयुङ्क्ते । उपयुङ्क्ते ॥ "स्वराद्यन्तोपसर्गादिति वक्तव्यम् * ॥ उद्युङ्क्ते । नियुङ्क्ते ॥ अयज्ञपात्रेषु किम् । द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति ॥ **समः क्ष्णुवः । १ । ३ । ६५ ॥** संक्ष्णुते शस्त्रम् ॥ **भुजोऽनवने । १ । ३ । ६६ ॥** ओदनं भुङ्क्ते । अभ्यवहरतीत्यर्थः । "बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् । वृद्धो जनो दुःखशतानि भुङ्क्ते" । इहोपभोगो भुजेरर्थः । अनवने किम् । महीं भुनक्ति ॥ **णेरणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने । १ । ३ । ६७ ॥**

---

१ **दास्या संयच्छते इति** । कामुकः संस्तस्यै ददातीत्यर्थः । "अशिष्टव्यवहारे चतुर्थ्यर्थे तृतीया वक्तव्या" इति तृतीया ॥ २ "समः" इति पञ्चमीनिर्देशाद् व्यवहिते न स्यादिति शङ्कामपाकरोति-**पूर्वसूत्र इति** । **सूत्रद्वयमिति** ॥ सर्वस्यास्य प्रकरणस्योपलक्षणमिति 'शदेः शितः' इति भाष्ये ध्वनितमिति बोध्यम् ॥ ३ प्रत्यासत्त्या श्रुधात्वर्थविशेषकावेव प्रत्याङौ गृह्येते तौ चोपसर्गावेवेत्याशयेनाह-**कर्मप्रवचनीयात्स्यादेवेति** । ते हि सम्बन्धपरिच्छेदका, न क्रियाविशेषका इति स्पष्टमेव ॥ ४ ननु शिशत्सतीत्यादौ शिदादिविषयशदिम्रियत्योरात्मनेपदविधानाच्छिद्विषयसन्नन्तादपि प्राप्नोतीत्यत आह-**वाक्यभेदेनेति** ॥ ५ **स्वराद्यन्तेति** । स्वरोऽच् आदिरन्तो वा यस्य, स चासावुपसर्गस्तस्मात् । स्वराद्युपसर्गात् स्वरान्तोपसर्गाच्चेत्यर्थः । सम् निस् निर् दुस् दुर् एतद्भिन्नाः सर्वेऽप्युपसर्गाः संगृहीताः ॥ ६ **द्वन्द्वं न्यञ्चीति** । न्यञ्चि न्युब्जीकृतानि, पात्राणि द्वन्द्वं प्रयुनक्तीत्यर्थः ॥ ७ **उपभोग इति** । विषयसेवनजन्यसुखविशेष उपभोगः ॥

ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव चेत् ण्यन्तेनोच्येत अणौ यत्कर्म कारकं स चेण्णौ कर्ता स्यादनाध्याने ॥ णिचश्चेति सिद्धेऽकर्त्रभिप्रायार्थमिदम् । कर्त्रभिप्राये तु विभाषोपपदेति विकल्पे अणावकर्मकादिति परस्मैपदे च परत्वात्प्राप्ते पूर्वविप्रतिषेधेनेदमेवेष्यते ॥ कर्तृस्थभावकाः कर्तृस्थक्रियाश्चोदाहरणम् । तथा हि । पश्यन्ति भवं भक्ताः । चाक्षुषज्ञानविषयं कुर्वन्तीत्यर्थः । प्रेरणांशत्यागे—पश्यति भवः । विषयो भवतीत्यर्थः । ततो हेतुमण्णिच् । दर्शयन्ति भवं भक्ताः । पश्यन्तीत्यर्थः । पुनर्ण्यर्थस्याविवक्षायां दर्शयते भवः । इह प्रथमतृतीययोरवस्थयोर्द्वितीयचतुर्थ्योश्च तुल्योऽर्थः । तत्र तृतीयकक्षायां न तङ् । क्रियासाम्येऽप्यणौ कर्मकारकस्य णौ कर्तृत्वाभावात् ॥ चतुर्थ्यां तु तङ् । द्वितीयामादाय क्रियासाम्यात् । प्रथमायां कर्मणो भवस्येह कर्तृत्वाच्च । एवमारोहयते हस्तीत्यप्युदाहरणम् । आरोहन्ति हस्तिनं हस्तिपकाः । न्यग्भावयन्तीत्यर्थः । तत आरोहति हस्ती । न्यग्भवतीत्यर्थः। ततो णिच् । आरोहयन्ति । आरोहन्तीत्यर्थः । तत आरोहयते । न्यग्भवतीत्यर्थः ॥ यद्वा पश्यन्त्यारोहन्तीति प्रथमकक्षा प्राग्वत् । ततः कर्मण एव हेतुत्वारोपाण्णिच् । दर्शयति भवः। आरोहयति हस्ती । पश्यत आरोहतश्च प्रेरयतीत्यर्थः । ततो णिज्भ्यां तत्प्रकृतिभ्यां च उपात्तयोर्द्वयोरपि प्रेषणयोस्त्यागे । दर्शयते । आरोहयते । इत्युदाहरणम् ॥ अर्थः प्राग्वत् । अस्मिन् पक्षे द्वितीयकक्षायां न तङ् । समानक्रियत्वाभावाण्णिजर्थस्याधिक्यात् । अनाध्याने किम्? स्मरति वनगुल्मं कोकिलः । स्मरयति वनगुल्मः । उत्कण्ठापूर्वकस्मृतौ विषयो भवतीत्यर्थः ॥ **भीस्म्योर्हेतुभये । १ । ३ । ६८ ॥** व्याख्यातम् ॥ **गृधिवञ्च्योः प्रलम्भने । १ । ३ । ६९ ॥** प्रतारणेऽर्थे ण्यन्ताभ्यामाभ्यां प्राग्वत् । माणवकं गर्धयते वञ्चयते वा । प्रलम्भने किम्? श्वानं गर्धयति । अभिकाङ्क्षामस्योत्पादयतीत्यर्थः । अहिं वञ्चयति । वर्जयतीत्यर्थः ॥ **लियः संमाननशालीनीकरणयोश्च । १ । ३ । ७० ॥** व्याख्यातम् ॥ **मिथ्योपपदात्कृञोऽभ्यासे । १ । ३ । ७१ ॥** णेरित्येव । पदं मिथ्या कारयते । स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः । मिथ्योपपदात्किम्? पदं सुष्ठु कारयति ॥ अभ्यासे किम्? सकृत्पदं मिथ्या कारयति ॥ **स्वरितञितः कर्त्रभिप्राये क्रियाफले । १ । ३ । ७२ ॥** यजते । सुनुते ॥ कर्त्रभिप्राये किम्?

---

१ **पूर्वविप्रतिषेधेनेति** । अत्र च मानं दर्शयते राजेति भाष्योदाहरणम् ॥ २ "कर्मवत्कर्मणा—" इत्यनेन गतार्थत्वशङ्कां निरस्यति—**कर्तृस्थभावका इति** । अपरिस्पन्दसाधनसाध्यो **भावः** । सपरिस्पन्दसाधनसाध्या **क्रिया** ॥ ३ पश्यन्तीत्यादिना निवृत्तप्रेषणक्रियां व्युत्पाद्य अध्यारोपितप्रेषणप्रक्रियामाह—**यद्वेति** । **हेतुत्वारोपादिति** । अत्रापि सौकर्यविवक्षैव वीजम्, प्रेषणांशत्यागेन प्रेषणान्तरारोपेणापि सौकर्यप्रतीतेरनुभवसिद्धत्वादिति भावः ॥ ४ **अर्थः प्राग्वदिति** । उदाहरणीभूतयोश्चरमकक्षयोः पक्षद्वयेन प्रेषणांशभानाभावादिति भावः ॥ ५ **आधिक्यादिति** । अस्मिन् पक्षे "णौ चेत्सा क्रिया" इत्यनेनाधिक्यमात्रं व्यवच्छिद्यते नतु न्यूनत्वमपि, अन्यथा तृतीयकक्षायामपि न स्यात्, प्रकृत्युपात्तप्रेषणांशत्यागेन न्यूनताध्रौव्यादिति भावः । इति संक्षेपः ॥ ६ **गृधिवञ्च्योरिति** । प्रलम्भनं विसंवादनं मिथ्याफलाख्यानम् ॥ ७ **लिय इति** । सम्माननं पूजनम् । शालीनीकरणं न्यग्भावनम् ॥ ८ **मिथ्योपपदादिति** । अभ्यासः पुनःपुनःकरणमावृत्तिः ॥

ऋत्विजो यजन्ति । सुन्वन्ति ॥ **अपाद्वदः । १ । ३ । ७३ ॥** न्यायमपवदते । कर्त्रभिप्राय इत्येव । अपवदति ॥ **णिचश्च । १ । ३ । ७४ ॥** कारयते ॥ **समुदाङ्भ्यो यमो ग्रन्थे । १ । ३ । ७५ ॥** अग्रन्थे इतिच्छेदः । व्रीहीन्संयच्छते । भारमुद्यच्छते । वस्त्रमायच्छते । अग्रन्थे किम् ? उद्यच्छति वेदम् । अधिगन्तुमुद्यमं करोतीत्यर्थः । कर्त्रभिप्राये इत्येव । **अनुपसर्गाज्ज्ञः । १।३।७६ ॥** गां जानीते । अनुपसर्गात्किम् ? स्वर्गं लोकं न प्रजानाति ॥ कथं तर्हि भट्टिः— इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्येति ? कर्मणि लिट् । नृपेणेति विपरिणामः ॥ **विभाषोपपदेन प्रतीयमाने । १ । ३ । ७७ ॥** 'स्वरितञित' इत्यादिपञ्चसूत्र्या यदात्मनेपदं विहितं तत्समीपोच्चारितेन पदेन क्रियाफलस्य कर्तृगामित्वे द्योतिते वा स्यात् । स्वं यज्ञं यजति यजते वा । स्वं कटं करोति कुरुते वा । स्वं पुत्रमपवदति अपवदते वा । स्वं यज्ञं कारयति कारयते वा । स्वं व्रीहिं सयच्छति संयच्छते वा । स्वां गां जानाति जानीते वा ॥

इत्यात्मनेपदप्रकरणम् ।

---

## अथ परस्मैपदप्रकरणम् ।

**शेषात्कर्तरि परस्मैपदम् ।१। ३ । ७८ ॥** अत्ति ॥ **अनुपराभ्यां कृञः । १ । ३ । ७९ ॥** कर्तृगेऽपि फले गन्धनादौ च परस्मैपदार्थमिदम् । अनुकरोति । पराकरोति । कर्तरीत्येव ॥ भावकर्मणोर्मा भूत् । न चैवमपि कर्मकर्तरि प्रसङ्गः । कार्यातिदेशपक्षस्य मुख्यतया तत्र कर्मवत्कर्मणेत्यात्मनेपदेन परेणास्य बाधात् । शास्त्रातिदेशपक्षे तु कर्तरि कर्मेत्यतः शेषादित्यतश्च कर्तृग्रहणद्वयमनुवर्त्य कर्तैव यः कर्ता न तु कर्मकर्ता तत्रेति व्याख्येयम् । **अभिप्रत्यतिभ्यः क्षिपः । १ । ३ । ८० ॥** 'क्षिप प्रेरणे' । स्वरितेत् । अभिक्षिपति ॥ **प्राद्वहः । १ । ३ । ८१ ॥** प्रवहति ॥ **परेर्मृषः । १ । ३ । ८२ ॥** परिमृष्यति । भौवादिकस्य तु परिमर्षति । इह परेरिति योगं विभज्य वहेरपीति केचित् ॥ **व्याङ्परिभ्यो रमः । १ । ३ । ८३ ॥**

---

१ **ऋत्विजो यजन्तीति** । दक्षिणादि तु न फलम् । उक्तं हि हरिणा—" यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः । तत्प्रधानफलं तेषां न लाभादि प्रयोजनम् " इति ॥ २ **व्रीहीन् संयच्छत इति** । धान्यानि स्वीकरोतीत्यर्थः । **भारमुद्यच्छते इति** । भारं वहतीत्यर्थः । **वस्त्रमायच्छते इति** । वस्त्रमादधातीत्यर्थः ॥ ३ **विभाषेति** । उपपदं चेह समीपे श्रूयमाणं पदं न तु पारिभाषिकम्, असम्भवात् ॥ इत्यात्मनेपदप्रक्रिया ॥ ४ **कर्तरीत्येवेति** । एतच्च प्रत्ययनियमपक्षे बोध्यम् ॥ ५ **कार्यातिदेशपक्षस्य मुख्यतयेति** । शास्त्रातिदेशस्य कार्यसम्पत्तिफलकत्वात् कार्यातिदेशस्य मुख्यत्वम् । एवं च प्रकृते आत्मनेपदविधायकं " **कर्मवत्कर्मणा**--" इत्येव । तच्च " अनुपराभ्याम्—" इत्यतः परमिति कर्मकर्तरि न भविष्यतीति भावः ॥ ६ " यादेशस्य सुप्त्वात् " सुपि च " इति दीर्घः " इतिवत् प्रकृते कार्ये " भावकर्मणोः " इत्यनेनैवेत्याश्रीयते, तदाप्याह--**शास्त्रातिदेशपक्षे त्विति** ॥ **कर्तैव यः कर्तेति** । ननु पदार्थावच्छेदकभेदाभावाद् " घटो घटः " इतिवत् कथं शाब्दबोध इति चेन्न, एकश्च कर्तृशब्दः कर्त्रतिरिक्ताभावपरः, स्वतन्त्रपरो वा, एकश्च व्यापाराश्रयपरः, तथा च "स्वतन्त्राभिन्नव्यापाराश्रयः" इत्यर्थे पदार्थावच्छेदकभेदान्न दोष इति बोध्यम् ॥

विरमति ॥ **उपाच्च । १ । ३ । ८४** ॥ यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ॥ **विभाषाऽकर्मकात् । १ । ३ । ८५** ॥ उपाद्रमेरकर्मकात्परस्मैपदं वा ॥ उपरमति । उपरमते वा । निवर्तत इत्यर्थः ॥ **बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः । १ । ३ । ८६** ॥ एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् ॥ णिचश्चेत्यस्यापवादः । बोधयति पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् । अध्यापयति वेदम् । प्रावयति । प्रापयतीत्यर्थः । द्रावयति । विलापयतीत्यर्थः । स्रावयति । स्यन्दयतीत्यर्थः । **निगरणचलनार्थेभ्यश्च । १ । ३ । ८७** ॥ निगारयति । आशयति । भोजयति । चलयति । कम्पयति ॥ **अदेः प्रतिषेधः** * ॥ आदयते देवदत्तेन । गतिबुद्धीति कर्मत्वम् आदिखाद्योर्नेति प्रतिषिद्धम् । निगरणचलनेति सूत्रेण प्राप्तस्यैवायं निषेधः । शेषादित्यकर्त्रभिप्राये परस्मैपदं स्यादेव । आदयत्यन्नं बटुना ॥ **अणावकर्मकाच्चित्तवत्कर्तृकात् । १ । ३ । ८८** ॥ ण्यन्तात्परस्मैपदं स्यात् । शेते कृष्णस्तं गोपी शाययति ॥ **न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः । १ । ३ । ८९** ॥ एभ्यो ण्यन्तेभ्यः परस्मैपदं न ॥ पिबतिर्निगरणार्थः । इतरे चित्तवत्कर्तृका अकर्मकाः । नृतिश्चलनार्थोऽपि । तेन सूत्रद्वयेन प्राप्तिः । पाययते । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । वादयते । वासयते ॥ **धेट उपसंख्यानम्** । 'धापयेते शिशुमेकं समीची' । अकर्त्रभिप्राये शेषादिति परस्मैपदं स्यादेव । वत्सान् पाययति पयः । 'दमयन्ती कमनीयतामदम्' । भिक्षां वासयति ॥ **वा क्यषः । १ । ३ । ९०** ॥ लोहितायति । लोहितायते ॥ **द्युद्भ्यो लुङि । १ । ३ । ९१** ॥ अद्युतत् । अद्योतिष्ट ॥ **वृद्भ्यः स्यसनोः । १ । ३ । ९२** ॥ वर्त्स्यति । वर्तिष्यते । विवृत्सति । विवर्तिषते ॥ **लुटि च क्लृपः । १ । ३ । ९३** ॥ कल्प्तासि । कल्पितासे । कल्प्तासे । कल्प्स्यति । कल्पिष्यते । कल्प्स्यते । चिक्लृप्सति । चिकल्पिषते । चिक्लृप्सते ॥

इति परस्मैपदप्रकरणम् ।

---

## अथ भावकर्मप्रकरणम् ।

अथ भावकर्मणोर्लडादयः । भावकर्मणोरिति तङ् ॥ **सार्वधातुके यक् । ३ । १ । ६७** ॥ धातोर्यक् प्रत्ययः स्याद्भावकर्मवाचिनि सार्वधातुके परे। भावो भावना उत्पादना क्रिया। सा च

---

१ **उपाच्चेति** । उत्तरत्र "उप" इत्यस्यैवानुवृत्तये योगविभागः ॥ २ **प्राप्तस्यैवायमिति** "अनन्तरस्य-" इति न्यायादिति भावः ॥ ३ **इतरे इति** । दमिरकर्मकोऽपि एतत्प्रामाण्यात् । अत एव "दमिः सकर्मकः" इति दिवादिस्थग्रन्थेनाविरोधः ॥ ४ **धापयेते-समीची इति** । "समीची" इत्यत्र प्रथमाद्विवचने "वा छन्दसि" इति पूर्वसवर्णदीर्घः ॥ ५ **परस्मैपदं स्यादेवेति** । "अनन्तरस्य-" इति न्यायेन योगद्वयप्रापितपरस्मैपदस्यैव निषेधादिति भावः ॥ इति परस्मैपदप्रक्रिया ॥ ६ **भाव इति** । साध्यरूपा सिद्धरूपा वा क्रिया भावः । अत्र साध्यत्वं च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम् । यथा "पचति करोति" इत्यादिक्रिया ॥ क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकधर्मवत्त्वं सिद्धत्वम् । यथा पाक इति ॥ भावशब्दे णिजन्ताद् भवतेः कर्मणि-

धातुत्वेन सकलधातुवाच्या भावार्थकलकारेणानूद्यते । युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमपुरुषः । तिङ्वाच्यभावनाया असत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि । किंत्वेकवचनमेव । तस्यौत्सर्गिकत्वेन संख्यानपेक्षत्वात् । अनभिहिते कर्तरि तृतीया । त्वया मयाऽन्यैश्च भूयते । बभूवे ॥ **स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च । ६ । ४ । ६२ ॥** उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु परेषु भावकर्मणोर्गम्यमानयोः स्यादीनामिडागमश्च ॥ अयमिट् चिण्वद्भावसन्नियोगशिष्टत्वात्तदभावे न । इह 'आर्धधातुके' इत्यधिकृतं सीयुटो विशेषणं, नेतरेषामव्यभिचारात् । चिण्वद्भावाद्वृद्धिः । भाविता । भविता । भाविष्यते । भविष्यते । भूयताम् । अभूयत ।

---

–करणे वा घञ् इति दर्शयितुं पर्यायान्तरेण व्याचष्टे–**भावनेति** । धातुवाच्यो व्यापारो भावना । उक्तं हि भर्तृहरिणा–"व्यापारो भावना सैवोत्पादना सैव च क्रिया । कृञोऽकर्मकतापत्तेर्नहि यत्नोऽर्थ इष्यते ॥" इति ॥ यथा पचतीत्यादावधःसन्तापन–फूत्कार–चुल्ल्युपरिधारण–यत्नादिरूपव्यापारोऽपि धात्वर्थः ॥ **उत्पादनेति** । फलोत्पत्त्यनुकूलो व्यापार उत्पादना । फलत्वं च कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थविशेषणत्वे सति तद्धात्वर्थत्वम् । यथा करोतीति ॥ **क्रियेति** । साध्यत्वसाधनत्व–एतदन्यतररूपेण प्रतीयमानोऽर्थः क्रिया । अत्रोच्यते–क्रिया द्विविधा साध्या सिद्धा च । तत्र धातुवाच्या क्रिया साध्या । सैवासत्त्वरूपेत्युच्यते । यथा पचति, करोतीत्यादौ क्रिया साध्या । घञादिप्रत्ययप्रतिपाद्या तु क्रिया सिद्धा । यथा पाक इत्यादिः । तदुक्तम्–"यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥ गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥" इति । साध्यत्वं च निष्पाद्यत्वमेव ॥ केचित्तु पूर्वापरीभूतावयवत्वसमानाधिकरणं कारकान्वयादियोग्यतावच्छेदकं क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं च यत् वैजात्यं तद्रूपं साध्यत्वम् । सिद्धत्वं तु क्रियाकाङ्क्षोत्थापकतावच्छेदकं यत् वैजात्यं तद्रूपम् । यथा पाक इत्युक्ते अस्ति भवतीत्यादिक्रियाकाङ्क्षोत्थानात् सिद्धत्वम् । पचतीत्युक्ते तु तदनुत्थानात् साध्यत्वम् । इत्याहुः ॥ अत्र सिद्धत्वं च यद्धर्मवत्ताज्ञानात् क्रियान्तराकाङ्क्षोदयः, तादृशज्ञाने प्रकारतयाऽवच्छेदकं यत् तत् । तद्भिन्नत्वं, ज्ञाननिष्ठतादृशाकाङ्क्षोत्थापकत्वाभावावच्छेदकं वा साध्यत्वम् । ( वै० सा० द० ) ॥ अनेकपर्यायोपादानं चेतनाचेतनवृत्तिफूत्कारयत्नादीनां क्रियात्वं धात्वर्थत्वं च बोधयितुम् ॥

१ **धातुत्वेनेति** । तथाप्यपचित्वादिनेत्यर्थः । **सकलेति** । अकर्मकाणामपि फलव्यापाररूपांशद्वयाभिधायकत्वादिति भावः । **धातुवाच्येति** । करोति, कर्तेत्यादौ तथा क्लृप्तत्वादिति भावः ॥ २ **सामानाधिकरण्याभावादिति** । समानम्=एकम्, अधिकरणम्=आश्रयः, ययोः तयोर्भावः इति व्युत्पत्तिः । विभिन्नविभक्तिराहित्ये सति, अभेदेनैकार्थबोधजनकत्वं समानाधिकरणत्वम् । यथा नीलो घटः, परमराज्यम्, महानवमी, इत्यादौ,–नीलपदादिघटपदाद्योरेकधर्मिबोधकपदत्वरूपं समानाधिकरणत्वम् । प्रकृते असत्त्वभूतक्रियायाः सत्त्वार्थकयुष्मदस्मदादिसामानाधिकरण्यासंभवादिति भावः ॥ ३ **असत्त्वरूपत्वेनेति** । असत्त्वं च लिङ्गाद्यनन्वयित्वं सर्वनामपरामर्शायोग्यत्वं वा । सत्त्वलक्षणमाह–भर्तृहरिः–"वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते । द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः" इति ॥ ४ **औत्सर्गिकत्वेनेति** । "एकवचनम्" "द्विबह्वोर्द्विवचनबहुवचने" इति भाष्योक्तन्यासे "एकवचनम्" इत्यस्यानैमित्तिकत्वेनौत्सर्गिकत्वं बोध्यम् ॥ वस्तुतस्तु–"एका क्रिया" इति भाष्यात् क्रियायामेकत्वमस्त्येव, तस्य च प्रकृत्यर्थेऽन्वयादेकवचनम् । द्वित्वादिकं तु स्वोत्तरतिङ्वाच्यकारकगतं तत्रारोप्यते, इति कर्तृकर्मतिङ्क्षु द्विवचनादि सिध्यति । तस्याप्यन्वयः प्रकृत्यर्थ एव । यथा–हतशायिकाः शय्यन्ते, उष्ट्रासिका आस्यन्ते, इत्यादौ "हतशयनसदृशानि शयनानि" इत्याद्यर्थके उपमाने बहुत्वोपादानसामर्थ्येन उपमेये तिङर्थक्रियारूपे उपमानगतबहुत्वारोपेण बहुवचनं तद्वदिति दिक् ॥

भूयेत । भाविषीष्ट । भविषीष्ट ॥ **चिण् भावकर्मणोः । ६ । १ । ६६ ॥** च्लेश्चिण् स्याद्भावकर्मवाचिनि तशब्दे परे ॥ अभावि । अभाविष्यत । अभविष्यत ॥ तिङोक्तत्वात्कर्मणि न द्वितीया । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते ॥ त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम् । अन्वभविषाताम् ॥ णिलोपः । भाव्यते । भावयांचक्रे । भावयांबभूवे ॥ भावयामासे । इह तशब्दस्य एशि इट एत्वे च कृते ह एतीति हत्वं न । तासिसाहचर्यादस्तेरपि व्यतिहे इत्यादौ सार्वधातुके एव ह एतीति हत्वप्रवृत्तेरित्याहुः ॥ भाविता । चिण्वदिट आभीयत्वेनासिद्धत्वाण्णिलोपः । पक्षे भावयिता । भाविष्यते । भावयिष्यते । भाव्यताम् । अभाव्यत । भाव्येत । भाविषीष्ट । भावयिषीष्ट । अभावि । अभाविषाताम् । अभावयिषाताम् ॥ बुभूष्यते । बुभूषांचक्रे । बुभूषिता । बुभूषिष्यते ॥ बोभूय्यते ॥ यङ्लुगन्तात्तु—बोभूयते । बोभवांचक्रे । बोभाविता । बोभविता ॥ अकृत्सार्वेति दीर्घः । स्तूयते विष्णुः । तुष्टुवे । स्ताविता । स्तोता । स्ताविष्यते । स्तोष्यते । अस्तावि । अस्ताविषाताम् । अस्तोषाताम् ॥ गुणोर्तीति गुणः । अर्यते । स्मर्यते । सस्मरे । परत्वान्नित्यत्वाच्च गुणे रपरे कृतेऽजन्तत्वाभावेऽप्युपदेशग्रहणाच्चिण्वदिट् । आरिता । अर्ता । स्मारिता । स्मर्ता॥ गुणोर्तीत्यत्र नित्यग्रहणानुवृत्तेरुक्तत्वान्नेह गुणः । संस्क्रियते ॥ अनिदितामिति नलोपः । स्रस्यते । इदितस्तु नन्द्यते ॥ संप्रसारणम् । इज्यते ॥ 'अयङ्यि क्ङिति' । शय्यते ॥ **तनोतेर्यकि । ६ । ४ । ४४ ॥** आकारोऽन्तादेशो वा स्यात् ॥ तायते । तन्यते ॥ 'ये विभाषा' । जायते । जन्यते ॥ **तपोऽनुतापे च । ३ । १ । ६५ ॥** तपश्च्लेश्चिण्न स्यात्कर्मकर्तर्यनुतापे च ॥ अन्वतप्त पापेन । पापं कर्तृ । तेनाभ्याहत इत्यर्थः । कर्मणि लुङ् । यद्वा पापेन पुंसा कर्त्रा अशोचीत्यर्थः ॥ घुमास्थेतीत्त्वम् । दीयते । धीयते॥ 'आदेच' इत्यत्राशितीति कर्मधारयादित्संज्ञकशकारादौ निषेधः । एश आदिशित्त्वाभावात्तस्मिन् आत्वम् । जग्ले ॥ **आतो युक् चिण्कृतोः । ७ । ३ । ३३ ॥** आदन्तानां युगागमः स्याच्चिणि ञिति णिति कृति च ॥ दायिता । दाता । दायिषीष्ट । दासीष्ट । अदायि । अदायिषाताम् ॥ 'स्थाघ्वोरिच्च' । अदिषाताम् । अधायिषाताम् । अधिषाताम् । अग्लायिषाताम् । अग्लासाताम् ॥ हन्यते । अचिण्णलोरित्युक्तेर्हनस्तो न । हो हन्तेरिति कुत्वम् । घानिता । हन्ता । घानिष्यते । हनिष्यते । आशीर्लिङि वधादेशस्यापवादश्चिण्वद्भावः—आर्धधातुके सीयुटीति विशेषविहितत्वात् । घानिषीष्ट । पक्षे वधिषीष्ट ॥ अघानि । अघानिषाताम् । अहसाताम् । पक्षे वधादेशः । अवधि । अव-

---

१ घानिष्यते इति । नित्यत्वाच्चिण्वदिट् "ऋद्धनोः स्ये" इति सूत्रे "वलि" इत्यनुवर्तनेन नात्रेडागमस्य नित्यत्वम् ॥ २ ननु "आर्धधातुके" इति विषयसप्तमी तेनान्तरङ्गत्वाच्चिण्वद्भावात् पूर्वं वधादेशः कुतो नेत्यत आह—आशीर्लिङि वधादेशस्येति । अपवाद इति । चिण्वद्भाववाक्यार्थबोधकाले सीयुट सह हन्तेरपि सम्बन्धसत्त्वेन निरवकाशत्वात् तस्यापवादत्वम् । भाष्ये तु "वधिभावात् सीयुटि चिण्वत्त्वं विप्रतिषेधेन" इत्युक्तम्, एवं चापवादत्वोपवर्णनं निर्युक्तिकमिति दिक् ॥

धिषाताम् । अघानिष्यत । अहनिष्यत । न च स्यादिषु चिण्वदित्यतिदेशाद्वधादेशः स्यादिति वाच्यम् । अङ्गस्येत्यधिकारादङ्गस्यैवातिदेशात् ॥ गृह्यते । चिण्वदिटो न दीर्घत्वम् । प्रकृतस्य वलादिलक्षणस्यैवेटो ग्रहोऽलिटीत्यनेन दीर्घविधानात् । ग्राहिता । ग्रहीता । ग्राहिष्यते । ग्रहीष्यते । ग्राहिषीष्ट । ग्रहीषीष्ट । अग्राहि । अग्राहिषाताम् । अग्रहीषाताम् ॥ दृश्यते । अदर्शि । अदर्शिषाताम् । सिचः कित्त्वादम् । अदृक्षाताम् ॥ गिरतेर्लुङि ध्वमि चतुरधिकं शतम् । तथा हि । चिण्वदिटो दीर्घो नेत्युक्तम् । अगारिध्वम् । द्वितीये त्विटि वॄतो वेति वा दीर्घः । अगरीध्वम् । अगरिध्वम् । एषां त्रयाणां लत्वं ढत्वं द्वित्वत्रयं चेति पञ्च वैकल्पिकानि । इत्थं षण्णवतिः । लिङ्सिचोरिति विकल्पत्वादिडभावे उश्चेति कित्त्वम् । इत्त्वं रपरत्वं हलि चेति दीर्घः । इणः षीध्वमिति नित्यं ढत्वम् । अगीर्ढ्वम् । ढवमानां द्वित्वविकल्पे अष्टौ । उक्तषण्णवत्या सह सङ्कलने उक्ता संख्येति ॥

इड् दीर्घश्चिण्वदिट् लत्वं ढत्वं द्वित्वत्रिकं तथा ।
इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम् ॥

हेतुमण्ण्यन्तात्कर्मणि लः । यक् णिलोपः । शम्यते मोहो मुकुन्देन ॥ **चिण्णमुलोर्दीर्घोऽन्यतरस्याम् । ६ । ४ । ९३॥** चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात् ॥ प्रकृतो 'मितां ह्रस्व' एव तु न विकल्पितः । ण्यन्ताण्णौ ह्रस्वविकल्पस्यासिद्धेः । दीर्घविधौ हि णिचो लोपो न स्थानिवदिति दीर्घः सिध्यति । ह्रस्वविधौ तु स्थानिवत्त्वं दुर्वारम् । भाष्ये तु पूर्वत्रासिद्धीये न स्थानिवदित्यवष्टभ्य द्विर्वचनसवर्णानुस्वारदीर्घजश्चरः प्रत्याख्याताः । णाविति जातिपरो निर्देशः "दीर्घग्रहणं चेदं मास्तु" इति तदाशयः ॥ शामिता । शमिता । शमयिता । शामिष्यते । शमिष्यते । शमयिष्यते ॥ यङन्ताण्णिच् । शंशम्यते । शंशामिता । शंशमिता । शंशमयिता ॥

---

१ ननु चिण्वद्भावेन चिणि दृष्टं यत् कार्यं तद्विधीयते एवञ्च "अवधि" इत्यादौ चिणि वधादेशस्य दृष्टतयाऽत्रापि तदतिदेशेन भाव्यमत आह-**नचेत्यादि** ॥ २ **आङ्गस्यैवेति**। 'अङ्गस्य' इत्यधिकारविहितस्यैवातिदेशः । अङ्गसंबन्धिकार्यातिदेशपक्षेपि चिण्निमित्तकं यदङ्गसंबन्धिकार्यं तदेव भवति, "अवधि" इत्यादौ चिण्निमित्तको वधादेशो न किंतु लुङ्निमित्तक इत्याशयः। अत्र च लक्ष्यानुसारि व्याख्यानमेव शरणमिति बोध्यम्॥ ३ **लत्वं ढत्वं द्वित्वत्रयश्चेति** । 'अचि विभाषा' । 'विभाषेटः' । द्वित्वत्रयम्=मस्य ढधयोश्च अनचीति । मस्य "यणो मयः" इति त्रयम् ॥ **ढवमानामिति**। 'अचो रहाभ्याम्' 'यणो मयः' 'अनचि चे'त्यतैः ॥ ४ ननु ह्रस्वपदानुवृत्त्या तद्विकल्पविधानेन सिद्धे "चिण्णमुलोः" इति सूत्रे दीर्घग्रहणं व्यर्थमित्याशयेनाह-**प्रकृतो मितामिति** । प्रकरणप्राप्तत्वं प्रकृतत्वम् । **न स्थानिवदिति** । "न पदान्त-" इति निषेधात् । आभीयासिद्धत्वमपि न, समानाश्रयत्वाभावात् ॥ ५ **ह्रस्वविकल्पासिद्धेरिति** । अनेन प्रथमस्य णेर्यो लोपस्तस्य स्थानिवद्भावे सति चिण्परणिपरत्वं नास्तीति दर्शयति ॥ ६ **भाष्ये त्विति**। 'न पदान्त' सूत्रे इत्यादिः । 'न पदान्त' सूत्रे दीर्घविधेः प्रतिदीव्न इत्युदाहरणदानेन त्रैपादिकदीर्घस्यैव ग्रहणात् तत्प्रत्याख्यानमुचितमिति प्राचीनाशयः ॥ ७ ननु भाष्यमते ण्यन्ताण्णौ दीर्घविकल्पानुपपत्तिर्व्यवधानादत आह-**णावितीति**। नवीनमते तु 'न पदान्त' सूत्रेऽस्यापि दीर्घस्य ग्रहणमावश्यकम्, अनेन ह्रस्वस्यैव विधाने घटादिपठितहेडेश्चिणि "अहिडि अहीडि" इति रूपासिद्धेः । एवं ण्यन्ताण्णौ रूपसिद्ध्यर्थं दीर्घग्रहणमावश्यकम्, आकृतिनिर्देशोऽपि युक्तिग्रह इति स्पष्टं नागेशीये ॥ ८ अयमपपाठः । अहिडि अहीडीति रूपार्थं तस्यावश्यकत्वात् ॥

यङ्लुगन्ताण्णिच्यप्येवम् । भाष्यमते तु यङन्ताच्चिण्वदिटि दीर्घो नास्तीति विशेषः ॥ ण्यन्तत्वाभावे शम्यते मुनिना ॥ **नोदात्तोपदेशस्य मान्तस्यानाचमेः । ७ । ३ । ३४ ॥** उपधाया वृद्धिर्न स्याच्चिणि ञिति णिति कृति च ॥ अशमि । अदमि ॥ उदात्तोपदेशस्येति किम् ? अगामि । मान्तस्य किम् ? अवादि ॥ अनाचमेः किम् ? आचामि ॥ **अनाचमिकमिवमीनामिति वक्तव्यम्** * ॥ चिणि 'आयादय' इति णिङभावे । अकामि । णिङ्णिचोरप्येवम्-अवामि ॥ वध हिंसायाम् । हलन्तः । जनिवध्योरिति न वृद्धिः । अवधि ॥ जागुरोऽविचिण्णल्ङित्स्विरत्युक्तेर्न गुणः । अजागारि ॥ **भञ्जेश्च चिणि । ६ । ४ । ३३ ॥** नलोपो वा स्यात् । अभाजि । अभञ्जि ॥ **विभाषा चिण्णमुलोः । ७ । १ । ६९ ॥** लभेर्नुमागमो वा स्यात् । अलम्भि । अलाभि । व्यवस्थितविकल्पत्वात्प्रादेर्नित्यं नुम् । प्रालम्भि ॥ द्विकर्मकाणां तु ।

'गौणे[2] कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ॥
बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया ॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ॥'

गौर्दुह्यते पयः । अजा ग्रामं नीयते । ह्रियते । कृष्यते । उह्यते । बोध्यते माणवकं धर्मः । माणवको धर्ममिति वा । देवदत्तो ग्रामं गम्यते ॥ अकर्मकाणां कालादिकर्मकाणां कर्मणि भावे च लकार इष्यते । मासो मासं वा आस्यते देवदत्तेन ॥ णिजन्तात्तु प्रयोज्ये प्रत्ययः । मासमास्यते माणवकः ॥

इति भावकर्मप्रकरणम् ।

---

१ अथ ये द्विकर्मकास्तेषु कृत्यक्तखलर्थाः किं मुख्ये कर्मणि उत गौणे, किं वोभयोरिति संदेहे व्यवस्थामाह-**द्विकर्मकाणान्त्विति** । द्वे कर्मणी येषामिति विग्रहः । कर्तृगतप्रकृतधात्वर्थव्यापारप्रयोज्यतदनधिकरणवृत्ति-प्रकृतधात्वर्थफलाश्रयत्वं कर्मत्वम् ॥ २ **गौणे कर्मणीति** । दुह्यादेर्द्वादशसंख्याकस्य धातोः गौणे कर्मणि लादयः प्रत्यया मता इष्टाः परम्परया धात्वर्थतावच्छेदकफलशालित्वमप्रधानकर्मत्वम् । यथा "गां पयो दोग्धि" इत्यादौ गवादेरप्रधानकर्मत्वम् । अत्र विभागावच्छिन्नक्षरणानुकूलो व्यापारो दुहधात्वर्थः । तथा च धात्वर्थव्यापारांशे साक्षाद्विशेषणस्य ( साक्षाद्धात्वर्थतावच्छेदकस्य ) क्षरणस्याश्रयः पय एव, गौस्तु तादृशक्षरणांशे विशेषणीभूतस्य ( परम्परया धात्वर्थतावच्छेदकस्य ) विभागस्याश्रय इति गोरप्रधानकर्मत्वम् । नीप्रभृतीनां चतुर्णां प्रधाने कर्मणि ( मुख्ये कर्मणि ) लादयो मताः । कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतव्यापारविशेषणफलाश्रयत्वं प्रधानकर्मत्वम् । यथा देवदत्तो ग्राममजां नयतीत्यादौ-गां दोग्धि पय इत्यादौ च अजायाः गोश्च प्रधानकर्मत्वम् ॥ नीहृकृष्वहां धातूनामुत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारार्थकानां द्विकर्मकत्वम् । संयोगस्य फलतावच्छेदकः सम्बन्धो ग्रामनिष्ठः तदनुकूलव्यापारश्चाजानिष्ठः । प्रधानव्यापारजन्यफलाश्रयत्वादजा प्रधानम् । तत्र लादयो भवन्ति-"प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इति भाष्योक्तेः ॥ दुहेश्चान्तःस्थितद्रवद्रव्यविभागानुकूलव्यापारानुकूलव्यापारार्थकत्वे गोपयसोरुभयोरपि "कर्तुरीप्सिततमं कर्म" इत्यनेन कर्मत्वम् । तत्र गोः कर्तृव्यापारजन्यफलाश्रयत्वात् प्रधानकर्मत्वम् । पयसः कर्तृव्यापारप्रयोज्यफलाश्रयत्वाद् गौणकर्मत्वम् । गवादौ च गौणकर्मणि लादयः "अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः" इति भाष्योक्तेः । बुद्धिभक्षार्थयोर्ण्यन्तयोः शब्दकर्मकाणां च ण्यन्तानां निजेच्छया गौणप्रधानयोरात्मेच्छया लादयो मताः । अन्येषां गत्यर्थाकर्मकहृकरोतीनां ण्यन्तानां प्रयोज्यकर्मणि लादयो मताः । "गतिबुद्धि-" इत्यनेन कर्तुर्यत्कर्मकारकं कृतं तत्प्रयोज्यं कर्म ज्ञातव्यम् । लादय इत्यत्रादिना कृत्यक्तखलर्था ग्राह्याः ॥ इति भावकर्मप्रक्रिया ॥

## अथ कर्मकर्तृप्रकरणम् ।

यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते । स्वव्यापारे स्वतन्त्रत्वात् । तेन पूर्वं करणत्वादिसत्त्वेऽपि संप्रति कर्तृत्वात्कर्तरि लकारः । साध्वसिश्छिनत्ति । काष्ठानि पचन्ति । स्थाली पचति । कर्मणस्तु कर्तृत्वविवक्षायां प्राक्सकर्मका अपि प्रायेणाकर्मकास्तेभ्यो भावे कर्तरि च लकाराः । भावे—पच्यते ओदनेन । भिद्यते काष्ठेन ॥ कर्तरि तु—॥ **कर्मवत्कर्मणा तुल्यक्रियः । ३ । १ । ८७ ॥** कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् ॥ कार्यातिदेशोऽयम् । तेन यगात्मनेपदचिण्चिण्वदिटः स्युः ॥ कर्तुरभिहितत्वात्प्रथमा । पच्यते ओदनः । भिद्यते काष्ठम् । अपाचि । अभेदि ॥ ननु भावे लकारे कर्तुर्द्वितीया स्यादस्मादतिदेशादिति चेन्न । लकारवाच्य एव कर्ता कर्मवत् 'व्यत्ययो बहुलल्ँलिङ्याशिष्यङिति द्विलकारकाल्ल इत्यनुवृत्तेः । भावे प्रत्यये च कर्तुर्लकारेणानुपस्थितेः । अत एव कृत्यक्तखलर्थाः कर्मकर्तरि न भवन्ति । किं तु भावे एव । भेत्तव्यं कुसूलेन ॥ ननु पचिभिद्योः कर्मस्था क्रिया विक्लत्तिर्द्विधाभवनं च । सैवेदानीं कर्तृस्था न तु तत्तुल्या ।

---

१ **यदा सौकर्येति ।** सुखेन कर्तुं योग्य इति सुकरस्तस्य भावः सौकर्यम् । **कर्तृव्यापार इति ।** "साधनान्तरनियोगव्यापारवान् कर्ता" इति केचित् । "धात्वर्थव्यापाराश्रयः कर्ता" इत्यन्ये ॥ २ **न विवक्ष्यते इति ।** सौकर्यबोधनार्थं तत्कारकव्यापारस्यैव प्रधानधात्वर्थत्वे विवक्षणात् कारकान्तराणामपि स्वीयव्यापाराश्रयत्वेन कर्तृत्वादिति भावः ॥ **कर्तृसंज्ञां लभन्त इति ।** "यदा यदीयो व्यापारो धातुनाऽभिधीयते तदा स कर्ता" इति नियमात् । एवं च कर्ता त्रिविधः । शुद्धः प्रयोजको हेतुः, कर्मकर्ता, चेति । तत्र शुद्धत्वं च हेतुत्व-कर्मकर्तृ-एतदनधिकरणत्वम् ! प्रेरणार्थकणिजप्रकृतिधातूपात्तव्यापाराश्रयत्वमिति यावत् । ( वै० सा० द० ) । प्रयोजकहेतुत्वं च णिजर्थप्रेरणाश्रयत्वम् । ( वै० सा० द० ) कर्मकर्तृत्वं च धातूपात्तव्यापाराश्रयत्वे सति णिजर्थव्यापारेणाऽऽप्यमानत्वेन विवक्षितत्वम् । ( वै० सा० द० ) तदुक्तम्--"क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति । सुकरैः स्वैर्गुणैः कर्तुः कर्मकर्तेति तद्विदुः" इति । ( मु० बो०·व्या० ) ॥ यद्यपि काष्ठादेरचेतनतया कुठारोद्यमननिपातनादिकरणासंभवेन भेदनादिकर्तृत्वमनुपपन्नं तथापि स्वधर्मैः प्रशिथिलावयवसंयोगनिःसरणादिभिः कर्मकर्तृत्वमिति ध्येयम् ॥ ३ **प्रायेणाकर्मका इति ।** व्यापारव्यधिकरणफलाश्रयस्याभावादकर्मकत्वम् । द्विकर्मकाणां कर्मणः कर्तृत्वविवक्षायामपि सकर्मकत्वात् "प्रायेण" इत्युक्तम ॥ ४ **तेन यगात्मनेपदेति** । ननु कार्यातिदेशेऽपि "अतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश" इति भाष्यसिद्धान्तेन परत्वात् परस्मैपदादयः स्युरिति चेन्न, "न दुहस्नुनमाम्" इत्यादिसामर्थ्येन परस्यापि बाधादिति दिक् ॥ ५ **द्वितीया स्यादिति ।** "कार्यातिदेशेऽतिदेशदेश एव देशः" इति परमप्राचीनमते द्वितीयायाः परत्वात् तन्मूलमिदम् । सिद्धान्तमते तु परत्वात तृतीयैवेति शङ्कालेशोऽपि नेति बोध्यम् । ननु कर्तरि लकारेऽस्मादतिदेशात् तृतीयां कुतो नेति चेन्न, "न दुहस्नुनमाम्" इत्यादिसामर्थ्येन परस्मैपदे विधीयमानानां शबादीनां परस्मैपदाना च बाधेऽपि प्रथमाबाधे मानाभावात् ॥ ६ **द्विलकारकादिति ।** "व्यत्ययो बहुलल्ँलिङ्याशिष्यङ्" इति संहितया पाठेऽनुस्वारपरसवर्णनिष्पन्नलशब्दो लुप्तषष्ठ्यन्त इति भावः ॥ ७ ननु तुल्यत्वव्यवहारस्य भिन्नव्यक्तावेव दृष्टतया प्रकृतप्रयोगे कथं कर्मवद्भाव इत्याशयेन शङ्कते--**ननु पचिभिद्योरिति॥**

सत्यम् । कर्मत्वकर्तृत्वावस्थाभेदोपाधिकं तत्समानाधिकरणक्रियाया भेदमाश्रित्य तुल्यत्वव्यवहारः । कर्मणेति किम् । करणाधिकरणाभ्यां तुल्यक्रिये पूर्वोक्ते साध्वसिरित्यादौ मा भूत् । किंच । कर्तृस्थक्रियेभ्यो मा भूत् । गच्छति ग्रामः । आरोहति हस्ती । 'अधिगच्छति शास्त्रार्थः स्मरति श्रद्दधाति च ' ॥ यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु यथा वा छिन्नेषु काष्ठेषु । तत्र कर्मस्था क्रिया नेतरत्र । न हि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु वैलक्षण्यमुपलभ्यते ॥ करोतिरुत्पादनार्थः । उत्पत्तिश्च कर्मस्था । तेन कारिष्यते घट इत्यादि । यत्नार्थत्वे तु नैतत्सिध्येत् । ज्ञानेच्छादिवद्यत्नस्य कर्तृस्थत्वात् ॥ एतेन ' अनुव्यवस्यमानेऽर्थे ' इति व्याख्यातम् । कर्तृस्थत्वेन यगभावाच्छ्यनि कृते ओलोपे च रूपसिद्धेः । ताच्छील्यादावयं चानश्, न त्वात्मनेपदम् ॥ **सकर्मकाणां प्रतिषेधो वक्तव्यः** * ॥ अन्योन्यं स्पृशतः । अजा ग्रामं नयति ॥ **दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्*** ॥ न दुहस्नुनमां

---

१ **भेदमाश्रित्येति** । " नीलघटाद् भिन्नः पीतघटः " इत्यत्रेव विशेषणभेदाद् भिन्नत्वम् । तेन कर्तृत्वसमानाधिकरणातः कर्मत्वसमानाधिकरणा क्रिया भिन्नैवेति भावः ॥ **तुल्यत्वव्यवहार इति** । ननु " पचत्योदनं देवदत्त " इत्यत्रौदनकर्मणो " राध्यत्योदन " इत्यत्र कर्तृत्वेन कर्मवद्भावः कुतो नेति चेदत्र प्रत्यासत्त्या समानधातौ कर्मस्थक्रियया तुल्यत्वक्रियत्वाश्रयणादिति दिक् ॥ २ **कर्मणेति किमिति** । अयं भावः–" कर्मणा " इति सत्त्वे सामर्थ्याद् दृश्यमानकर्मनिष्ठविशेषप्रयोजककर्मस्थक्रियाया ग्रहणात् " साध्वसिः " इत्यादौ न दोषः, तदभावे असिस्थाल्योर्व्यापारसत्त्वेन क्रियया तुल्यक्रियत्वमक्षतमेवेति ॥ ३ ननु " धातोरेकाच " इत्यतो " धातोः" इत्यनुवर्त्य " धातोर्वाच्यया क्रियया तुल्यक्रियः " इत्यर्थे करणत्वाद्यवस्थायामसिस्थाल्योर्व्यापारसत्त्वेऽपि धातुवाच्याभावान्न दोष इत्यत आह–**किञ्चेति** ॥ **गच्छति ग्राम इति** । गम्यमानग्रामादिकर्मनिष्ठविशेषप्रयोजककर्मस्थक्रियाया अभावात् कर्तृस्थक्रियत्वमितिभावः ॥ ४ **अधिगच्छतीत्यादि** । श्लोकस्योत्तरार्धं तु–"यत्कृपावशतस्तस्मै नमोऽस्तु गुरवे सदा" इति ॥ ५ ननु पच्यादीनां गम्यादीनां च फलाभिधायित्वे फलस्य च कर्मनिष्ठत्वे तुल्ये कथं कर्मवद्भावप्रवृत्त्यप्रवृत्तिव्यवस्था तत्राह–**यत्र कर्मणीति** । उक्तं च हरिणा–" विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता । क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता " इति ॥ ६ ज्ञानेच्छयोरिव यत्नस्यापि कर्तृस्थत्वात् तद्वाचिनः करोतेरपि कर्ता कर्मवत् न स्यादित्याशङ्क्य करोतेर्यत्नार्थत्वमेव नास्तीत्याह–**करोतिरिति** । **उत्पादनार्थ इति** । उत्पत्त्यनुकूलव्यापारार्थ इत्यर्थः ॥ ७ **एतेनेति** । ज्ञानस्य कर्तृस्थत्वेन ॥ ८ **नत्वात्मनेपदमिति** । शानजित्यर्थः । यगात्मनेपदयोस्तु " अनुव्यवसीयमाने " इति स्यादिति भावः ॥ ९ **सकर्मकाणां प्रतिषेध इति** । सौकर्यविवक्षाया अभावेऽपि प्राप्तकर्मवद्भावनिषेधार्थमिदम् । तेन " पच्यते ओदन " इत्यादौ न दोषः ॥ **अन्योन्यं स्पृशत इति** । शब्दभेदेन कर्तृत्वकर्मत्वसत्त्वादेकस्मिन् कर्तरि यैव संयोगानुकूलक्रिया सैवापरस्मिन् कर्तरीति कर्मस्थक्रियया तुल्यक्रियत्वमक्षतमेव । आश्रयभेदाद् भेदेन वा तुल्यत्वम् । नच स्पर्शस्य कर्तृस्थत्वात् कथमस्य प्रवृत्तिरिति वाच्यम्, अन्योऽन्यसंयोगप्रयुक्तहर्षादिजनितरोमाञ्चादेर्विशेषस्य कर्मनिष्ठत्वात् ॥ **अजामिति** । अत्र कर्मणि गमनानुकूलव्यापाररूपेणाजानिष्ठफलेन, नेतृव्यापारेण वा, विशेषादर्शनेन कर्मस्थक्रियत्वाभावादिदं चिन्त्यमिति केचित् ॥ ग्रामसंयोगस्तु न तथा, " ग्रामं गच्छति " इत्यादौ ग्रामेऽपि पुरुषसंयोगरूपविशेषदर्शनाद् गम्यर्थस्यापि कर्मस्थत्वापत्तेः ॥ १० **दुहिपच्योरिति** । अनयोर्द्विकर्मकतयैकस्य कर्मणः कर्तृत्वेऽप्यपरेण सकर्मकत्वादप्राप्ते वचनम् ॥ **गोः पय इति** । गौः पयस्त्यजतीत्यर्थः । अप्रधानगोरूपकर्मण एव तथा विवक्षा नान्यस्येति भावः ॥

**यक्चिणौ** । ३ । १ । ८९ ॥ एषां कर्मकर्तरि यक्चिणौ न स्तः । दुहेरनेन यक एव निषेधः, चिण् तु विकल्पेनेष्यते । शब्लुक् । गौः पयो दुग्धे ॥ **अचः कर्मकर्तरि** । ३ । १ । ६२ ॥ अजन्तात् च्लेश्चिण् वा स्यात्कर्मकर्तरि तशब्दे परे ॥ अकारि । अकृत ॥ **दुहश्च** । ३ । १ । ६३ ॥ अदोहि । पक्षे क्सः । लुग्वेति पक्षे लुक् । अदुग्ध । अधुक्षत ॥ उदुम्बरः फलं पच्यते ॥ **सृजियुज्योः श्यंस्तु** * ॥ अनयोः सकर्मकयोः कर्ता बहुलं कर्मवत् यगपवादश्च श्यन्वाच्य इत्यर्थः ॥ **सृजेः श्रद्धोपपन्ने कर्तर्येवेति वाच्यम्** *॥ सृज्यते स्रजं भक्तः । श्रद्धया निष्पादयतीत्यर्थः ॥ असर्जि ॥ युज्यते ब्रह्मचारी योगम् ॥ **भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्** * ॥ भूषावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ चिण्वदिट् च नेति वाच्यमित्यर्थः ॥ अलंकुरुते कन्या । अलमकृत । अवकिरते हस्ती । अवाकीष्ट । गिरते । अगीर्ष्ट । आद्रियते । आदृत । किरादिस्तुदाद्यन्तर्गणः ॥ चिकीर्षते कटः । अचिकीर्षिष्ट । इच्छायाः कर्तृस्थत्वेपि करोतिक्रियापेक्षमिह कर्मस्थक्रियत्वम् ॥ **न रुधः** । ३ । १ । ६४ ॥ अस्मात् च्लेश्चिण्न । अवारुद्ध गौः । कर्मकर्तरीत्येव । अवारोधि गौर्गोपेन ॥ **तपस्तपःकर्मकस्यैव** । ३ । १ । ८८ ॥ कर्ता कर्मवत्स्यात् ॥ विध्यर्थमिदम् । एवकारस्तु व्यर्थ एवेति

---

१ **विकल्पेनेष्यत इति** । दुहश्चेत्यनेन ॥ नत्रपूर्वेयमिष्टिः ॥ २ **अचः कर्मकर्तरीति** । "दुहश्च" इत्यस्य कर्मकर्तर्येव विकल्पेन विधायकत्वात् तत्राप्यस्मादेव सूत्रात् "कर्मकर्तरि" इत्यनुवर्तते इति ध्वनयितुं पूर्वमस्य पाठ इति बोध्यम् ॥ ३ **उदुम्बरः फलं पच्यते इति** । काल उदुम्बरे फलं पचति इति विग्रहे अधिकरणत्वाविवक्षया "अकथितं च" इति कर्मसंज्ञायां "कर्मणि द्वितीया" इति द्वितीयायां काल उदुम्बरं फलं पचति । ततः सौकर्यविवक्षया उदुम्बरः फलं पच्यत इति भवति । ये त्वत्र "उदुम्बरस्य" इति षष्ठ्यन्तस्य विदधति कर्मसंज्ञां ते त्वविकृतबुद्धय एव, षष्ठ्याः कारत्वाभावात् ॥ ४ **श्रद्धोपपन्ने इति** । आस्तिक्यबुद्धिः श्रद्धा, तया उपपन्नो युक्त इत्यर्थः । सृजेः श्रद्धोपपन्नः कर्ता च मुख्यकर्तैवेति तत्रात्यन्ताप्राप्तकर्मवद्भावार्थम्, युजेस्तु कर्मकर्तरि सकर्मकत्वेन प्रतिप्रसवविध्यर्थमिदं वार्तिकम् ॥ **सृज्यते स्रजं भक्त इति** । अत्र कर्मसंज्ञायाः फलाभावेऽपि "असर्जि" इत्यत्र तदस्त्येव । भक्तः स्रजं सृज्यते इत्येवात्र व्युत्पत्तिः, न तु पच्यते ओदन इत्यादिवदिति बोध्यम् ॥ **युज्यते ब्रह्मचारी योगमिति** । अत्र कर्मणः कर्तृत्वमित्थम्–"योगो ब्रह्मचारिणं युनक्ति सम्बध्नाति सम्बन्धानुकूलव्यापारवान् भवतीति पूर्वकक्षा । सम्बन्धश्च योगप्रतियोगिको ब्रह्मचार्यनुयोगिकः । अत्र प्रथमकक्षायामाश्रयतारूपो यः सम्बन्धस्तद्वत्त्वाद् ब्रह्मचारिणः कर्मत्वम् । ततो द्वितीयकक्षायां युजेः प्रतियोगित्वावच्छिन्नसम्बन्धार्थकत्वे ब्रह्मचारिणः कर्तृत्वम्, प्रतियोगिताश्रयत्वाच्च योगस्य कर्मत्वम्" इति । चित्तवृत्तिनिरोधो योगः । प्रतियोगी सम्बन्धाभाववान् । अनुयोगी सम्बन्धवान् ॥ ५ **भूषाकर्मेति** । कर्मशब्दः क्रियापरः । "अन्यत्रात्मनेपदात्" इत्युक्तत्रयाणामपि निषेध इत्याह–यगित्यादि ॥ **अलं कुरुते कन्येति** । कश्चित्कन्यामलङ्करोति भूषयतीति पूर्वकक्षा । **अवकिरते इति** । कश्चित् अङ्कुशादिना हस्तिनमवकिरति ताडयतीति पूर्वकक्षा । कॄ गॄ दृ धृ प्रच्छः किरादयः । तत्र कृग्रोः कर्मस्थक्रियतयात्मनेपदव्यतिरिक्तनिषेधार्थम्, अन्येषां कर्तृस्थक्रियत्वेनात्मनेपदविध्यर्थमिदं वार्तिकम् । उपादेयत्वादिप्रकारकज्ञानानुकूलव्यापारो दृधात्वर्थः । धारणानुकूलव्यापारो धृधात्वर्थः । ज्ञानेच्छानुकूलव्यापारः प्रच्छधात्वर्थः । कश्चित् पुष्पं गिरति आदत्ते इति पूर्वकक्षा । आद्रियते दानमिति पूर्वकक्षा ॥ ६ **अवारुद्ध गौरिति** । निर्गमप्रतिबन्धपूर्वकदेशविशेषाधिकरणचिरस्थित्यनुकूलव्यापारो रुधधात्वर्थः । चिरस्थितेः कर्मनिष्ठत्वादयं कर्मस्थक्रियकः ॥

वृत्त्यनुसारिणः । तप्यते तपस्तापसः । अर्जयतीत्यर्थः । तपोऽनुतापे चेति चिण्निषेधात्सिच् । अतप्त ॥ तपःकर्मकस्येति किम् ? उत्तपति सुवर्णं सुवर्णकारः ॥ 'न दुहस्नुनमां यक्चिणौ' ॥ प्रस्नुते । प्रास्नाविष्ट । प्रास्नोष्ट । नमते दण्डः । अनंस्त । अन्तर्भावितण्यर्थोऽत्र नमिः ॥ **यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम्** * ॥ कारयते । अचीकरत । उच्छ्रूयते दण्डः । उदशिश्रियत । चिण्वदिट् तु स्यादेव । कारिष्यते । उच्छ्रायिष्यते । ब्रूते कथा । अवोचत॥ भारद्वाजीयाः पठन्ति॥ **णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्***॥ पुच्छमुदस्यति । उत्पुच्छयते गौः ॥ अन्तर्भावितण्यर्थतायाम् । उत्पुच्छयते गाम् । पुनः कर्तृत्वविवक्षायाम् । उत्पुच्छयते गौः । उदपुपुच्छत । यक्चिणोः प्रतिषेधाच्छप्चङौ । श्रन्थिग्रन्थ्योराधृषीयत्वाण्णिजभावपक्षे ग्रहणम् । ग्रन्थति ग्रन्थम् । श्रन्थति मेखलां देवदत्तः । ग्रन्थते ग्रन्थः । अग्रन्थिष्ट । श्रन्थते । अश्रन्थिष्ट । क्रैयादिकयोस्तु । श्रथ्नीते । ग्रथ्नीते स्वयमेव । विकुर्वते सैन्धवाः । वल्गन्तीत्यर्थः । वेः शब्दकर्मणोऽकर्मकाच्चेति तङ् । अन्तर्भावितण्यर्थस्य पुनः प्रेषणत्यागे । विकुर्वते सैन्धवाः । व्यकारिष्ट । व्याकारिषाताम् । व्यकारिषत । व्यकृत । व्यकृषाताम् । व्यकृषत ॥ **कुषिरजोः प्राचां श्यन्परस्मैपदं च । १ । ३ । ९० ॥** अनयोः कर्मकर्तरि न यक् किंतु श्यन्परस्मैपदं च । आत्मनेपदापवादः ॥ कुष्यति कुष्यते पादः स्वयमेव । रज्यति रज्यते वस्त्रम् । यगविषये तु नास्य प्रवृत्तिः । कोषिषीष्ट । रंक्षीष्ट ॥

इति कर्मकर्तृप्रकरणम् ।

## अथ लकारार्थप्रकरणम् ।

**अभिज्ञावचने लृट् । ३ । २ । ११२ ॥** स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् स्यात् । लङोऽपवादः ॥ स्मरसि कृष्ण गोकुले वत्स्यामः । एवं बुध्यसे चेतयसे इत्यादियो-

---

१ **वृत्त्यनुसारिण इति** । अयमाशयः—उपवासादि तपस्तापसं तपति दुःखयतीत्यर्थे तापसस्य कर्मत्वम्, तापसस्य कर्मत्वे तपेर्दुःखजननमर्थः । तापसस्तपस्तप्यते अर्जयतीत्यर्थे तापसस्य कर्तृत्वम्, कर्तृत्वे तपेरर्जनमर्थः । एवञ्च क्रियाभेदात्सकर्मकत्वाच्चाप्राप्ते विधिरिति ॥ भाष्ये तु " सकर्मकाणां प्रतिषेधो वक्तव्यः " इत्यस्य प्रत्याख्यानाय एवकारसामर्थ्यात् "तपेरेव सकर्मकस्य नान्यस्य" इति नियमार्थत्वमिति दिक् ॥ २ **प्रस्नुत इति** । प्रस्रवनानुकूलोत्कण्ठोत्पादनं स्नौतेरर्थः । वत्सो गां प्रस्नौति उत्कण्ठयतीति पूर्वकक्षा ॥ ३ केवलनमतेरकर्मकत्वादाह–**अन्तर्भावितेति** ॥ **कारयते इति** । कारयति घटं यज्ञदत्तो देवदत्तेनेति पूर्वकक्षा । कारयते घटः स्वयमेवेति द्वितीया ॥ ४ **ब्रूते कथेति** । उच्चारणेन शब्दे प्राकट्यरूपविशेषदर्शनात्कर्मस्थक्रियत्वमस्येति बोध्यम् ॥ ५ " आत्मनेपदाकर्मकाणाम्" इत्यस्य "आत्मनेपदविधौ योऽकर्मकस्तस्य" इत्यर्थस्तदभिप्रायेणोदाहरति–**विकुर्वते सैन्धवा इति** ॥ ६ **कुष्यति कुष्यते पादः स्वयमेवेति** । यत्र यत्र " स्वयमेव " इति प्रयुज्यते तत्र "स्वयमेव" इत्यस्य "आत्मना" इत्यर्थः । तत्रात्मनः करणत्वं नतु कर्तृत्वमन्यथा **कर्मण्येव** लविधानं स्यात् ॥ इति कर्मकर्तृप्रक्रिया ॥ ७ लकाराणां कालविषये उत्सर्गापवादशास्त्राण्याह–**अभिज्ञेत्यादिना** । अभिज्ञा स्मृतिः सोच्यतेऽनेनेति विग्रहः ॥ **गोकुले वत्स्याम इति** । गोकुलाधिकरणकास्मत्कर्तृकभूतानद्यतनवासकर्मकं कृष्णसंबोध्यकं स्मरणमिति बोधः ॥

गेऽपि । तेषामपि प्रकरणादिवशेन स्मृतौ वृत्तिसंभवात् ॥ **न यदि । ३ । २ । ११३ ॥** यद्योगे उक्तं न ॥ अभिजानासि कृष्ण यद्वने[1] अभुञ्ज्महि ॥ **विभाषा साकाङ्क्षे । ३ । २ । ११४ ॥** उक्तविषये लृङ्वा स्यात् लक्ष्यलक्षणभावेन[2] साकाङ्क्षश्चेद्धात्वर्थः ॥ स्मरसि कृष्ण वने वत्स्यामस्तत्र गाश्चारयिष्यामः । वासो लक्षणं चारणं लक्ष्यम् । पक्षे लङ् । यच्छब्दयोगेऽपि न यदीति बाधित्वा परत्वाद्विकल्पः ॥ **परोक्षे[3] लिट् । ३ । २ । ११५ ॥** चकार । उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम् । 'सुप्तोऽहं किल विललाप' । 'बहु जगद पुरस्तात्तस्य मत्ता किलाहम्' ॥ **अत्यन्तापह्नवे[4] लिड्वक्तव्यः** * ॥ कलिङ्गेष्ववात्सीः । नाहं कलिङ्गान् जगाम ॥ **हशश्वतोर्लङ् च[5] । ३ । २ । ११६ ॥** अनयोरुपपदयोर्लिड्विषये लङ् स्यात् चालिट् ॥ इतिहाकरोच्चकार वा । शश्वदकरोच्चकार वा ॥ **प्रश्ने[6] चासन्नकाले । ३ । २ । ११७ ॥** प्रष्टव्यः प्रश्नः । आसन्नकाले पृच्छ्यमानेऽर्थे लिड्विषये लङ्लिटौ स्तः ॥ अगच्छत्किम् ? जगाम किम् ? अनासन्ने तु कंसं जघान किम् ? ॥ **लट् स्मे[7] । ३ । २ । ११८ ॥** लिटोऽपवादः ॥ यजति स्म युधिष्ठिरः ॥ **अपरोक्षे च । ३ । २ । ११९ ॥** भूतानद्यतने लट् स्यात् स्मयोगे ॥ एवं स्म पिता ब्रवीति ॥ **ननौ[8] पृष्टप्रतिवचने । ३ । २ । १२० ॥** अनद्यतनपरोक्ष इति निवृत्तम्[9] । भूते लट् स्यात् ॥ अकार्षीः किम् ? ननु करोमि भोः ॥ **नन्वोर्[10]विभाषा । ३ । २ । १२१ ॥** अकार्षीः किम् ? न करोमि नाकार्षम् । अहं नु करोमि । अहं न्वकार्षम् ॥ **पुरि लुङ् चास्मे । ३ । २ । १२२ ॥** अनद्यतनग्रहणं मण्डूकप्लुत्याऽनुवर्तते[11] । पुराशब्दयोगे भूतानद्यतने विभाषा लुङ् चाल्लट् नतु स्मयोगे ॥ पक्षे यथाप्राप्तम् । वसन्तीह पुरा छात्राः । अवात्सुः । अवसन् । ऊषुर्वा ॥ अस्मे किम् ? यजति स्म पुरा ॥ भविष्यतीत्यनुवर्तमाने[12]—॥

---

१ **यद्वन इति** । भूतानद्यतनवनाधिकरणकास्मत्कर्तृकभोजनकर्मकं स्मरणमिति बोधः ॥ २ **लक्ष्यलक्षणभावेनेति** । लक्षणं ज्ञापकं, लक्ष्यं ज्ञाप्यम्, । लक्ष्यतेऽनेनेति लक्षणम् । लक्षयितुं योग्यं लक्ष्यम् । "ज्ञानजनकज्ञानविषयत्वं लक्षणत्वम् ज्ञानजन्यज्ञानविषयत्वं लक्ष्यत्वम्" इति परमार्थः ॥ ३ **परोक्ष इति** । "साक्षात्करोमि" इत्येतादृशविषयताशालिज्ञानाविषयत्वं परोक्षत्वम् । "साक्षात्करोमि" इत्येतत्प्रतीतिसाक्षिकलौकिकविषयत्वाभाववत्त्वम्, इत्यर्थः । तेन "पपाच" इत्यादौ प्रत्यक्षविषयतासत्त्वेऽपि तादृशविलक्षणविषयत्वाभाववत्त्वमक्षुण्णम्, इति न तदनुपपत्तिरित्येतत्सर्वं हृदि निधायाह—**उत्तम पुरुष इति** ॥ ४ **अत्यन्तापह्नव इति** । अबाधितपरोक्षविपरीतबोधनाय तदुपपादकाभावप्रतिपादनमत्यन्तापह्नवः । अत्र कलिङ्गवासाद्युपपादकं कलिङ्गगमनादि तेन विना तदसंभवात् ॥ ५ **हशश्वतोरिति** । "ह" इति प्रसिद्धौ । शश्वदिति नैरन्तर्ये ॥ ६ **प्रश्न इति** । जिज्ञासाविषयार्थज्ञानानुकूलः "केन पथा गन्तव्यम्" इत्यभिलापादिरूपो व्यापारः प्रश्नः । पञ्चवर्षाभ्यन्तर आसन्नकालः ॥ ७ **लट् स्म इति** । स्मशब्दो भूतकालद्योतकः ॥ **एवं स्मेति** । एवंशब्दोऽपरोक्षत्वद्योतकः ॥ ८ **ननाविति** । ननु शब्दो वितर्के । पृष्टस्य प्रतिवचनमिति विग्रहः ॥ ९ **निवृत्तमिति** । "लट् स्मे" इति सूत्रभाष्ये "अपरोक्षानद्यतनौ ननौ च नन्वोश्च विनिवृत्तौ" इत्युक्तिरत्र प्रमाणम् ॥ १० **नन्वोरिति** । अत्र ननुशब्दौ पर्यायौ ॥ ११ **अनुवर्तत इति** । यदि भूत एव स्यात् लुङ्ग्रहणमनर्थकं स्यादिति भावः । "पुरा" इति पूर्वकाले ॥ १२ **अनुवर्तमान इति** । "भविष्यति गम्यादय" इति सूत्रात् ॥

**यावत्पुरानिपातयोर्लट् । ३ । ३ । ४ ॥** यावद्भुङ्क्ते । पुरा भुङ्क्ते । निपातावेतौ निश्चयं[१] द्योतयतः ॥ निपातयोः किम् ? यावद्दास्यते तावद्भोक्ष्यते । करणीभूतया पुरा यास्यति ॥ **विभाषा कदाकर्ह्योः । ३ । ३ । ५ ॥** भविष्यति लड् वा स्यात् । कदा कर्हि वा भुङ्क्ते । भोक्ष्यते । भोक्ता वा ॥ **किंवृत्ते[३] लिप्सायाम् । ३ । ३ । ६ ॥** भविष्यति लड्वा स्यात् ॥ कं कतरं कतमं वा भोजयसि । भोजयिष्यसि । भोजयितासि वा ॥ लिप्सायां किम् ? कः पाटलिपुत्रं गमिष्यति ॥ **लिप्स्यमानसिद्धौ च । ३ । ३ । ७ ॥** लिप्स्यमानेनान्नादिना स्वर्गादेः सिद्धौ गम्यमानायां भविष्यति लड्वा स्यात् ॥ योऽन्नं ददाति दास्यति दाता वा स स्वर्गं याति यास्यति याता वा ॥ **लोडर्थलक्षणे च । ३ । ३ । ८ ॥** लोडर्थः प्रैषादिर्लक्ष्यते येन तस्मिन्नर्थे वर्तमानाद्धातोर्भविष्यति लड्वा स्यात् ॥ कृष्णश्चेद्भुङ्क्ते त्वं गाश्चारय । पक्षे लृड्लटौ ॥ **लिङ् चोर्ध्वमौहूर्तिके । ३ । ३ । ९ ॥** ऊर्ध्वं मुहूर्ताद्भवः ऊर्ध्वमौहूर्तिकः । निपातनात्समासः उत्तरपदवृद्धिश्च । ऊर्ध्वमौहूर्तिके भविष्यति लोडर्थलक्षणे वर्तमानाद्धातोर्लिङ्लटौ वा स्तः ॥ मुहूर्तादुपरि उपाध्यायश्चेदागच्छेत् । आगच्छति । आगमिष्यति । आगन्ता वा ॥ अथ त्वं छन्दोऽधीष्व ॥ **वर्तमानसामीप्ये वर्तमानवद्वा । ३ । ३ । १३१ ॥** समीपमेव सामीप्यम् । स्वार्थे ष्यञ् । वर्तमाने लडित्यारभ्य उणादयो बहुलमिति यावत् येनोपाधिना प्रत्यया उक्तास्ते तथैव वर्तमानसमीपे भूते भविष्यति च वा स्युः ॥ कदा आगतोऽसि ? अयमागच्छामि । अयमागमम् । कदा गमिष्यसि ? एष गच्छामि गमिष्यामि वा ॥ **आशंसायां भूतवच्च । ३ । ३ । १३२ ॥** वर्तमानसामीप्य इति नानुवर्तते । भविष्यति काले भूतवद्वर्तमानवच्च प्रत्यया वा स्युराशंसायाम् ॥ देवश्चेदवर्षीत् वर्षति वर्षिष्यति वा । धान्यमवाप्स्म वपामो वप्स्यामो वा । 'सामान्यातिदेशे विशेषानतिदेशः' । तेन लङ्लिटौ न ॥ **क्षिप्रवचने लृट् ।३।३।१३३॥** क्षिप्रपर्याये उपपदे पूर्वविषये लृट् स्यात् ॥ वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा यास्यति । शीघ्रं

---

१ **निश्चयमिति** । "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इति कोशादिति भावः । अनेकप्रकारकेष्वर्थेषु निपतन्तीति निपाताः । "ज्वलिति कसन्तेभ्यो णः" इति कर्तरि णः ॥ २ **विभाषेति** । कदाकर्ही शब्दौ कस्मिन् काले इत्यर्थकौ ॥ ३ **किंवृत्त इति** । किमा किंशब्देन **वृत्त** निष्पन्नं किंवृत्तम् । ते च कः कतरः कतम इति त्रय एवेति वृत्तिः । लब्धुमिच्छा लिप्सा ॥ ४ **लोडर्थलक्षणे चेति** । लोडर्थप्रैषादिविषयधात्वर्थलक्षणे इत्यर्थः । कृष्णभोजनं प्रैषविषयगोचारणस्य लक्षणं बोध्यम् ॥ ५ "तद्धितार्थ–" इत्यत्र "दिक्संख्ये" इत्यनुवर्तनात्, समानाधिकरणाधिकाराच्चेह समासो दुर्लभोऽत आह–**निपातनादिति** ॥ ६ **वर्तमानसामीप्य इति** । प्रयोगोच्चारणाधिकरणत्वे सति प्रारब्धापरिसमाप्तिक्रियाश्रयत्वं वर्तमानत्वम् । ह्यस्तनीं प्रारब्धापरिसमाप्तिक्रियामादायातिव्याप्तिवारणाय सत्यन्तं विशेषणम् । विद्यमानध्वंसप्रतियोगित्वं भूतत्वम् । वर्तमानकालवृत्तिप्रागभावप्रतियोगित्वं भविष्यत्त्वम् । ७ वत्करणलभ्यमर्थमाह–**येनोपाधिनेति** ॥ ८ **आशंसायामिति** । अप्राप्तप्राप्तीच्छा आशंसा । **देवश्चेदिति** । वृष्टिवापयोरुभयोरप्याशंसाविषयत्वादुभयत्रापि लकारः ॥ ९ ननु "आशंसायां भूतवच्च" इत्यनेन लुङ इव लङ्लिटोरप्यतिदेशः स्यादत आह–**सामान्येति** । सामान्योपस्थितिकाले नियमेन विशेषोपस्थितिजनकसामग्र्यभावोऽस्यां वीजम् ॥

वत्स्यामः । नेति वक्तव्ये लङ्ग्रहणं लुटोऽपि विषये यथा स्यात् । श्वः शीघ्रं वत्स्यामः ॥ **आशंसावचने लिङ् । ३ । ३ । १३४ ॥** आशंसावाचिन्युपपदे भविष्यति लिङ् स्यान्न तु भूतवत् । गुरुश्चेदुपेयादाशंसेऽधीयीय । आशंसे क्षिप्रमधीयीय ॥ **नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः । ३ । ३ । १३५ ॥** क्रियायाः सातत्ये सामीप्ये च गम्ये लङ्लुटौ न ॥ यावज्जीवमन्नमदाद्दास्यति वा । सामीप्यं तुल्यजातीयेनाव्यवधानम् । येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनाधित । सोमेनायष्ट । येयमामावास्याऽऽगामिनी तस्यामग्नीनाधास्यते । सोमेन यक्ष्यते ॥ **भविष्यति मर्यादावचनेऽवरस्मिन् । ३ । ३ । १३६ ॥** भविष्यति काले मर्यादोक्ताववरस्मिन्प्रविभागेऽनद्यतनवन्न । योऽयमध्वा गन्तव्य आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तूनपास्यामः ॥ **कालविभागे चानहोरात्राणाम् । ३ । ३ । १३७ ॥** पूर्वसूत्रं सर्वमनुवर्तते । अहोरात्रसंबन्धिनि विभागे प्रतिषेधार्थमिदम् । योगविभाग उत्तरार्थः ॥ योऽयं वत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । अनहोरात्राणां किम् ? योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रः तत्राध्येतास्महे ॥ **परस्मिन्विभाषा । ३ । ३ । १३८ ॥** अवरस्मिन्वर्जं पूर्वसूत्रद्वयमनुवर्तते । अप्राप्तविभाषेयम् ॥ योऽयं संवत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्राध्येष्यामहे । अध्येतास्महे ॥ **लिङ्निमित्ते लङ् क्रियातिपत्तौ । ३ । ३ । १३९ ॥** भविष्यतीत्येव ॥ सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत् ॥ **भूते च । ३ । ३ । १४० ॥** पूर्वसूत्रं संपूर्णमनुवर्तते ॥ **वोताप्योः । ३ । ३ । १४१ ॥** वा आ उताप्योरिति छेदः । उताप्योरित्यतः प्राग्भूते लिङ्निमित्ते लङ् वेत्यधिक्रियते ।

---

१ **नानद्यतनवदिति** । अद्यतनभिन्नः कालोऽनद्यतनः । क्रियाणां प्रबन्धः सातत्येनानुष्ठानम् । २ **भविष्यति मर्यादेति** । अक्रियाप्रबन्धार्थमसामीप्यार्थञ्चेदम् । स्थित्यनतिक्रमो मर्यादा । सा द्विविधा कालरूपा, देशरूपा च । कालगतमर्यादात्वं च स्वस्वोत्तरकालोभयप्रागभावाधिकरणकालभवो यः समभिव्याहृतपदार्थः, तदनधिकरणत्वम् । देशगतमर्यादात्वं च स्वस्वोत्तरदेशयोः प्रयागतदाद्यन्तरालदेशवृत्तिसमभिव्याहृतपदार्थवृत्त्याद्यनधिकरणत्वम् । तत्राद्या ( कालरूपा ) यथा—"आ मुक्तेः संसारः" इत्यादावाङोऽर्थः । अत्र मुक्तिपदं तत्कालपरम्, मर्यादामर्यादिभावसम्बन्ध आङ्द्योत्यः पञ्चम्यर्थः । एवञ्च "मुक्तिमर्यादकः संसारः" इति बोधः । संसारे मुक्तिकालप्रागभावाधिकरणनिरूपिततद्भिन्नकालावृत्तित्वविशिष्टव्यापकताबोधस्त्वार्थः । ( ल० म० सुवर्थ० ) ॥ द्वितीया ( कालरूपा ) यथा—"प्रयागात् प्रभृत्या काश्या वृष्टो देवः" इत्यादौ देशे मर्यादा । अत्र "प्रयागादिकाशीमर्यादकवृष्टिकर्ता देवः" इति बोधः । वृष्टौ प्रयागादिकाशीपश्चिमदेशनिरूपितस्वभिन्नावृत्तित्वसमानाधिकरणव्यापकताबोधस्त्वार्थः । ( ल० म० सु० ) ॥ प्रकृतसूत्रे देशकृतमर्यादा गृह्यते । उत्तरसूत्रे च कालकृतेति विवेकः ॥ ३ **कालविभाग इति** । कालकृतमर्यादोक्ताववरस्मिन् प्रविभागे सतीत्यर्थः ॥ ४ **परस्मिन्निति** । कालमर्यादाविभागे सति भविष्यति काले परस्मिन् प्रविभागे विभाषाऽनद्यतनवन्न स्यात्, नचेदहोरात्रसम्बन्धी विभाग इत्यर्थः ॥ ५ **लिङ्निमित्त इति** । कुतश्चिद् वैगुण्यादनभिनिर्वृत्तिः क्रियायाः क्रियातिपत्तिः । **सुवृष्टिरिति** । 'सुवृष्ट्याश्रयात्मधारणानुकूला भविष्यन्ती या क्रिया तदभावप्रयुक्ता सुभिक्षाश्रयात्मधारणानुकूलायाः क्रियाया असिद्धिः ।

पूर्वसूत्रं तु उताप्योरित्यादौ प्रवर्तते इति विवेकः ॥ **गर्हायां लडपिजात्वोः । ३ । ३ । १४२ ॥** आभ्यां योगे लट् स्यात् कालत्रये गर्हायाम् । लुङादीन्परत्वादयं बाधते । अपि जायां त्यजसि जातु गणिकामाधत्से गर्हितमेतत् ॥ **विभाषा कथमि लिङ् च । ३ । ३ । १४३ ॥** गर्हायामित्येव । कालत्रये लिङ् चाल्लट् । कथं धर्मं त्यजेस्त्यजसि वा । पक्षे कालत्रये लकाराः । अत्र भविष्यति नित्यं लृङ् भूते वा । कथं नाम तत्र भवान् धर्ममत्यक्ष्यत् । अत्याक्षीद्वा ॥ **किंवृत्ते लिङ्लृटौ । ३ । ३ । १४४ ॥** गर्हायामित्येव । विभाषा तु नानुवर्तते । कः कतरः कतमो वा हरिं निन्देत् निन्दिष्यति वा । लृङ् प्राग्वत् ॥ **अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि । ३ । ३ । १४५ ॥** गर्हायामिति निवृत्तम् । अनवक्लृप्तिरसंभावना । अमर्षोऽक्षमा । न संभावयामि न मर्षये वा भवान् हरिं निन्देत् निन्दिष्यति वा । लृङ् प्राग्वत् ॥ **किङ्किलास्त्यर्थेषु लृट् । ३ । ३ । १४६ ॥** अनवक्लृप्त्यमर्षयोरित्येतद् गर्हायां चेति यावदनुवर्तते । किङ्किलेति समुदायः क्रोधद्योतक उपपदम् । अस्त्यर्थाः अस्तिभवतिविद्यत्यः । लिङोऽपवादः । न श्रद्दधे न मर्षये वा किङ्किल त्वं शूद्रान्नं भोक्ष्यसे । अस्ति भवति विद्यते वा शूद्रीं गमिष्यसि । अत्र लृङ् न ॥ **जातुयदोर्लिङ् । ३ । ३ । १४७ ॥ यदायद्योरुपसंख्यानम् *** ॥ लटोऽपवादः । जातु यद्यदा यदि वा त्वादृशो हरिं निन्देन्नावकल्पयामि न मर्षयामि । लृङ् प्राग्वत् ॥ **यच्चयत्रयोः । ३ । ३ । १४८ ॥** यच्च यत्र वा त्वमेवं कुर्याः न श्रद्दधे न मर्षयामि ॥ **गर्हायां च । ३ । ३ । १४९ ॥** अनवक्लृप्त्यमर्षयोरिति निवृत्तम् । यच्चयत्रयोर्योगे गर्हायां लिङेव स्यात् ॥ यच्च यत्र वा त्वं शूद्रं याजयेः । अन्याय्यं तत् ॥ **चित्रीकरणे च । ३ । ३ । १५० ॥** यच्च यत्र वा त्वं शूद्रं याजयेः । आश्चर्यमेतत् ॥ **शेषे लृडयदौ । ३ । ३ । १५१ ॥** यच्चयत्राभ्यामन्यस्मिन्नुपपदे चित्रीकरणे गम्ये धातोर्लृट् स्यात् ॥ आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति ॥ अयदौ किम् । आश्चर्यं यदि सोऽधीयीत ॥ **उताप्योः समर्थयोर्लिङ् । ३ । ३ । १५२ ॥** बाढमित्यर्थेऽनयोस्तुल्यार्थता । उत अपि वा हन्यादघं हरिः ॥ समर्थयोः किम् ? उत दण्डः पतिष्यति । अपिधास्यति द्वारम् । प्रश्नः प्रच्छादनं च गम्यते । इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो लृङ् ॥ **कामप्रवेदनेऽकच्चिति । ३ । ३ । १५३ ॥** स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यान्न तु कच्चिति । कामो

---

१ **गर्हायामिति** । जातु कदाचिदर्थे । "**गर्हा** कुत्सा" इत्यनर्थान्तरम् ॥ २ **परत्वादिति** । उत्कृष्टत्वादनवकाशत्वादित्यर्थः ॥ ३ **चित्रीकरणे चेति** । चित्रीकरणमाश्चर्यमद्भुतं विस्मयनीयम् ॥ ४ **आश्चर्यमन्धो नामेति** । नामेति संभावनायाम् ॥ ५ **बाढमित्यर्थ इति** । भृशप्रतिज्ञयोर्बाढमित्यमरः ॥ ६ **कामप्रवेदन इति** । काम इच्छा, तस्य प्रवेदनं प्रकाशनम् । "कच्चित्" इतीष्टप्रश्ने । "कच्चित् कामप्रवेदने" इत्यमरः ॥

मे भुञ्जीत भवान्। अकच्चितीति किम् ? कच्चिज्जीवति ॥ **संभावनेऽलमिति चेत्सिद्धाप्रयोगे । ३ । ३ । १५४ ॥** अलमर्थोऽत्र प्रौढिः[२]। संभावनमित्यलमिति च प्रथमया सप्तम्या च विपरिणम्यते। संभावनेऽर्थे लिङ् स्यात्तच्चेत्संभावनमलमिति अलमि सिद्धाप्रयोगे सति ॥ अपि गिरिं शिरसा भिन्द्यात् ॥ सिद्धाप्रयोगे किम्? अलं कृष्णो हस्तिनं हनिष्यति ॥ **विभाषा धातौ संभावनवचनेऽयदि । ३ । ३ । १५५ ॥** पूर्वसूत्रमनुवर्तते । संभावनेऽर्थे धातावुपपदे उक्तेऽर्थे लिङ् वा स्यात् न तु यच्छब्दे ॥ पूर्वेण नित्ये प्राप्ते वचनम् ॥ संभावयामि भुञ्जीत भोक्ष्यते वा भवान् ॥ अयदि किम्? संभावयामि यद्भुञ्जीथास्त्वम् ॥ **हेतुहेतुमतोर्लिङ् । ३ । ३ । १५६ ॥** वा स्यात् ॥ कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नंस्यति चेत्सुखं यास्यति ॥ भविष्यत्येवेष्यते[३] ॥ नेह–हन्तीति पलायते ॥ **इच्छार्थेषु लिङ्लोटौ । ३ । ३ । १५७ ॥** इच्छामि भुञ्जीत भुङ्क्तां वा भवान् । एवं कामये प्रार्थये इत्यादियोगे बोध्यम् ॥ **कामप्रवेदन इति वक्तव्यम्** * ॥ नेह–इच्छन् करोति ॥ **लिङ् च । ३ । ३ । १५९ ॥** समानकर्तृकेषु इच्छार्थेषूपपदेषु लिङ ॥ भुञ्जीयेतीच्छति ॥ **इच्छार्थेभ्यो विभाषा वर्तमाने । ३ । ३ । १६० ॥** लिङ् स्यात्पक्षे लट् ॥ इच्छेत् । इच्छति । कामयेत । कामयते । विधिनिमन्त्रणेति लिङ् । विधौ–यजेत् । निमन्त्रणे–इह भुञ्जीत भवान् । आमन्त्रणे–इहासीत । अधीष्टे–पुत्रमध्यापयेद्भवान् । संप्रश्ने–किं भो वेदमधीयीय उत तर्कम् ? प्रार्थने–भोजनं लभेय । एवं लोट् ॥ **प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च । ३ । ३ । १६३ ॥** प्रैषो विधिः । अतिसर्गः कामचारानुज्ञा । भवता यष्टव्यम् । भवान्यजताम् । चकारेण लोटोऽनुकर्षणं प्राप्तकालार्थम् ॥ **लिङ् चोर्ध्वमौहूर्तिके । ३ । ३ । १६४ ॥** प्रैषादयोऽनुवर्तन्ते ॥ मुहूर्तादूर्ध्वं यजेत यजतां वा । यष्टव्यम् ॥ **स्मे लोट् । ३ । ३ । १६५ ॥** पूर्वसूत्रस्य विषये ॥ लिङः कृत्यानां चापवादः । ऊर्ध्वं मुहूर्ताद् यजतां स्म ॥ **अधीष्टे च । ३ । ३ । १६६ ॥** स्म उपपदेऽधीष्टे लोट् स्यात् ॥ त्वं स्म अध्यापय ॥ **लिङ् यदि । ३ । ३ । १६८ ॥** यच्छब्दे उपपदे कालसमयवेलासु च लिङ् स्यात् ॥ कालः समयो वेला वा यद्भुञ्जीत भवान् ॥ **अर्हे कृत्यतृचश्च । ३ । ३ । १६९ ॥** चाल्लिङ् । त्वं कन्यां वहेः ॥ **शकि लिङ् च । ३ । ३ । १७२ ॥** शक्तौ[६] लिङ् स्यात् । चात्कृत्याः । त्वं भारं वहेः ॥ **माङि लुङ् । ३ । ३ । १७५ ॥** मा

---

**सम्भावन इति** । क्रियायोग्यताविषयोत्कटकोटिकं ज्ञानं सम्भावनम् ॥ २ **प्रौढिरिति** । क्रियायाः कृत्यसाध्यताविरहबोधनं प्रौढिः ॥ **विपरिणम्यत इति** । आवृत्त्येत्यादिः ॥ ३ **इष्यत इति** । लिङि वर्तमाने पुनर्लिङ्ग्रहणादेतद्विशेषलाभः ॥ ४ **कामप्रवेदन इति** । कामप्रवेदनं स्वाभिप्रायाविष्करणम् ॥ ५ **प्रैषेति** । तत्क्रियोचितकाललाभः प्राप्तकालः ॥ ६ शकनं शक् । भावे क्विप्, तदाह–शक्ताविति ॥

कार्षीः। [1]कथं मा भवतु मा भविष्यतीति? नायं माङ्, किंतु [2]माशब्दः॥ **धातुसंबन्धे प्रत्ययाः॥३।४।१॥** धात्वर्थानां संबन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः। [3]तिङ्वाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः॥ वसन् ददर्श। भूते लट्। अतीतवासककर्तृकं दर्शनमर्थः। सोमयाज्यस्य पुत्रो भविता। सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम्॥ **क्रियासमभिहारे लोड् लोटो हिस्वौ वा च तध्वमोः। ३।४।२॥** पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात्[4]तस्य च हिस्वौ स्तस्तिङामपवादः। [4]तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्तस्तिङ्संज्ञौ च। तध्वमोर्विषये तु हिस्वौ वा स्तः। पुरुषैकवचनसंज्ञे तु नानयोरतिदिश्यते। हिस्वविधानसामर्थ्यात्। तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्तरि। आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु॥ **समुच्चयेऽन्यतरस्याम्। ३।४।३॥** अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं वा स्यात्॥ **यथाविध्यनुप्रयोगः पूर्वस्मिन्। ३।४।४॥** आद्ये लोड्विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः॥ **समुच्चये सामान्यवचनस्य। ३।४।५॥** समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः स्यात्। अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च। ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः॥ **क्रियासमभिहारे द्वे वाच्ये *॥** याहियाहीति याति। पुनः पुनरतिशयेन वा यानं द्वन्तस्यार्थः। एककर्तृकं वर्तमानकालिकं यानं यातीत्यस्य। इति शब्दस्त्वभेदान्वये तात्पर्यं ग्राहयति। एवं यातः। यान्ति॥ यासि। याथः। याथ॥ यातयातेति यूयं याथ॥ याहियाहीत्ययासीत् यास्यति वा। अधीष्वाधीष्वेत्यधीते। ध्वंविषये पक्षेऽधीध्वमधीध्वमिति यूयमधीध्वे। समुच्चये तु सक्तूनपिब धानाः खादेत्यभ्यवहरति। अन्नं भुङ्क्ष्व दाधिकमास्वादयस्वेत्यभ्यवहरते। तध्वमोस्तु पिबत खादतेत्यभ्यवहरथ। भुङ्ग्ध्वमास्वादयध्वमित्यभ्यवहरध्वे। पक्षे हिस्वौ। अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वयः। पक्षे सक्तून्पिबति। धानाः खादति। अन्नं भुङ्क्ते। दधिकमास्वादयते। एतेन—

---

१ सर्वलापवादत्वाच्छङ्कते-**कथमिति**॥ २ **माशब्द इति**। ननु निरनुबन्धकमाशब्दप्रयोगे यदि सर्वे लकारास्तर्हि सूत्रवैयर्थ्यमिति चेन्न, सर्वलकारविषयेऽडाङ्रहितलुङन्तप्रयोगार्थं तस्यावश्यकत्वात्॥ ३ नन्वेवं "वसन् ददर्श" इत्यादौ भूते लडिव वर्तमाने लिडित्यपि स्यादत आह-**तिङ्वाच्येति**॥ ४ **तस्येति**। लोट इत्यर्थः॥ **तौ चेति**। "लोट्" इत्यनुवर्त्य "हिस्वौ लोडादेशहिस्ववत्" इत्यर्थ इति भावः॥ उक्तातिदेशबलादेवाह-**तिङ्संज्ञौ चेति**। तेन पदत्वसिद्धिः॥ ननु "वा च तध्वमोः" इति वाक्यशेषासङ्गतिस्तिङां हिस्वाभ्यां बाधेन तध्वमोरभावादत आह-**तध्वमोर्विषय इति**। विषयसप्तमीति भावः॥ ५ **समुच्चय इति**। अनुप्रविष्टसमुच्चितधात्वर्थकत्वं **सामान्यवचनत्वम्**॥

" पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥ "

इति व्याख्यातम् । अवस्कन्दनलवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्य-क्रियेत्यर्थात् । इह पुनःपुनश्चस्कन्देत्यादिरर्थ इति तु व्याख्यानं भ्रममूलकमेव । द्वितीयसूत्रे क्रियासमभिहार इत्यस्याननुवृत्तेः । लोडन्तस्य द्वित्वापत्तेश्च ॥ पुरीमवस्कन्देत्यादि मध्यमपुरुषै-कवचनमित्यपि केषांचिद्भ्रम एव । पुरुषवचनसंज्ञे इह नेत्युक्तत्वात् ॥

## इति लकारार्थप्रकरणम् ॥

इति भट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्धे तिङन्तं समाप्तम् ।

---

१ पुरीमिति । यो बली बलवान् रावणः, नमुचिद्विषा इन्द्रेण, विगृह्य कलहं कृत्वा, पुरीममरावतीम्, अवस्कन्द अवरुरोध । नन्दनमिन्द्रवनम्, लुनीहि चिच्छेद । रत्नानि श्रेष्ठवस्तूनि मणीन् वा, मुषाण मुमोष । अमराङ्गना देवस्त्रीः हर जहार । इत्थमनेन प्रकारेण, अहर्दिवमहन्यहनि, दिवः स्वर्गस्य, अस्वास्थ्यमुपद्रवम्, चक्रे कृतवान् । इति पदार्थः । पुरीकर्मकावस्कन्दनाभिन्न नन्दनवनकर्मकलवनाभिन्न बलिकर्तृकं दिवोऽस्वा-स्थ्यकरणमिति बोधः ॥ सामान्यतः शाब्दबोधश्च धात्वर्थमुख्यविशेष्यकः, प्रथमान्तार्थमुख्यविशेष्यको वा इति । तत्र " धात्वर्थमुख्यविशेष्यक एव भवति " इति वैयाकरणा आहुः । नैयायिकास्तु स च ( शाब्दबोधः ) प्रथमान्तार्थमुख्यविशेष्यक एव ज्यायानिति प्राहुः । तत्र वैयाकरणमते मुख्योदाहरणानि-चैत्रेण सुप्यते, पश्य मृगो धावति, पचति भवति, शृणु मेघो गर्जति, इत्यादीनि । चैत्रेण सुप्यते इत्यादौ " चैत्रकर्तृकः स्वापः " इति क्रियामुख्यविशेष्यको बोधः । " पश्य मृगो धावति " इत्यादौ " मृगाभिन्नकर्तृकधावनकर्मकं दर्शनम् " इति क्रियामुख्यविशेष्यको बोधः । " पचति भवति " इत्यादौ " पाकाभिन्नकर्तृकं भवनम् " इति क्रियामुख्य-विशेष्यको बोधः । " शृणु मेघो गर्जति " इत्यादौ तु " मेघाभिन्नकर्तृकगर्जनकर्मकं श्रवणम् " इति धात्वर्थ, मुख्यविशेष्यको बोधः । अत्र वैयाकरणानामयमाशयः-पश्य मृगो धावतीत्यत्र धावनक्रियायाः दृशिक्रियायां कर्मतयाऽन्वयेऽपि तस्याः प्रातिपदिकार्थत्वाभावान्न " धावति " पदोत्तरं द्वितीयापत्तिः । नैयायिकमते तु-मृगपदार्थस्य दृशिक्रियायामन्वयेन तस्य प्रातिपदिकार्थत्वेन च मृगपदोत्तरं द्वितीयापत्तिश्च " इति । नैयायिकमते मुख्योदाहरणानि तु " घटो न भवति पटः " " त्रयः कालाः " पश्य लक्ष्मण पम्पायां बकः परमधर्मिकः; अश्वो गच्छत्यानय, इत्यादीनि द्रष्टव्यानि । " घटो न भवति पटः " इति वाक्यात् " घटभेदवान् पटः " इति प्रथमान्तार्थमुख्यविशेष्यको बोधः । " त्रयः कालाः " इत्यत्र " त्रित्वविशिष्टाः कालाः " इति कालमुख्यविशे-ष्यक एव बोधः । " परमधार्मिको बकः पश्य " इत्यादौ " परमधार्मिकत्वविशिष्टबकं पश्य " इति बोधः । " अश्वो गच्छत्यानय " इत्यादौ च " गमनकर्त्रश्वमानय " इति प्रथमान्तार्थमुख्यविशेष्यक एव बोधः । अत्र नैयायिकानामयमाशयः-" त्रयः कालाः " इत्यत्र क्रियासमभिव्याहाराभावान्न क्रियामुख्यविशेष्यको बोधः । कालत्रयस्य जीवेन ज्ञातुमशक्यत्वेन " जीवेन ज्ञायन्ते " इत्यस्याध्याहारस्यासंभव एव । " ईश्वरेण ज्ञायन्ते " इत्यस्याध्याहारे क्रियमाणे तु मानाभावः । " अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति " इति भाष्यनियमस्य जीवपरत्वेन तत्रालाभाच्च । " सन्ति " इत्यस्य तु नाध्याहारः सम्भवति, इदानीं त्रयाणां कालानामविद्यमान-त्वादिति । युक्तायुक्तत्वं स्वयमूहनीयं विस्तरभिया नाधिकं प्रपञ्चितमिति दिक् ॥ इतिलकारार्थप्रक्रिया ॥

॥ श्रीगणेशाय नमः ॥

# अथ कृदन्तकृत्यप्रकरणम् ।

**धातोः । ३ । १ । ९१ ॥** आतृतीयसमाप्तेरधिकारोऽयम् ॥ **तत्रोपपदं सप्तमीस्थम् ॥ कृदतिङ् ॥ वा सरूपोऽस्त्रियाम् । ३ । १ । ९४ ॥** परिभाषेयम् । अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना ॥ **कृत्याः । ३ । १ । ९५ ॥** अधिकारोऽयं ण्वुलः प्राक् ॥ **कर्तरि कृत् । ३ । ४ । ६७ ॥** कृत्प्रत्ययः कर्तरि स्यादिति प्राप्ते ॥ **तयोरेव कृत्यक्तखलर्थाः । ३ । ४ । ७० ॥** एते भावकर्मणोरेव स्युः ॥ **तव्यत्तव्यानीयरः ॥ ३ । १ । ९६ ॥** धातोरेते प्रत्ययाः स्युः ॥ तकाररेफौ स्वरार्थौ । एधितव्यम्, एधनीयं त्वया । भावे औत्सर्गिकमेकवचनं क्लीबत्वं च । चेतव्यश्चयनीयो वा धर्मस्त्वया ॥ **वसेस्तव्यत्कर्तरि णिच्च * ॥** वसतीति वास्तव्यः ॥ **केलिमर उपसंख्यानम् * ॥** पचेलिमा माषाः । पक्तव्याः । भिदेलिमाः सरलाः । भेत्तव्याः । कर्मणि प्रत्ययः ॥ वृत्तिकारस्तु कर्मकर्तरि चायमिष्यत इत्याह, तद्भाष्यविरुद्धम् ॥ **कृत्यचः । ८ । ४ । २९ ॥** उपसर्गस्थान्निमित्तात्परस्याच उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यात् ॥ प्रयाणीयम् । अचः किम् ? प्रमग्नः ॥ **निर्विण्णस्योपसंख्यानम् * ॥** अचः परत्वाभावादप्राप्ते वचनम् । परस्य णत्वम् । पूर्वस्य ष्टुत्वम् । निर्विण्णः ॥ **णेर्विभाषा । ८ । ४ । ३० ॥** उपसर्गस्थान्निमित्तात्परस्य ण्यन्ताद्विहितो यः कृत्तत्स्थस्य नस्य णो वा स्यात् ॥ प्रयापणीयम् । प्रयापनीयम् ॥ विहितविशेषणं किम् ? यका व्यवधानेऽपि यथा स्यात् । प्रयाप्यमाणं पश्य । णत्वे दुर उपसर्गत्वं नेत्युक्तम् । दुर्यानम् । दुर्यापनम् ॥ **हलश्चेजुपधात् । ८ । ४ । ३१ ॥** हलादेरिजुपधात्कृत्स्थस्याचः परस्य नस्य णो वा स्यात् । प्रकोपणीयम् । प्रकोपनीयम् ॥ हलः किम् ? प्रोहणीयम् ॥ इजुपधात्किम् ? प्रवपणीयम् ॥ **इजादेः सनुमः**

१ **धातोरिति** । भूवादयो द्वाविंशतिशतसंख्याः ( २२०० ) धातवः । क्रियावाचको गणपठितशब्दविशेषो धातुः । सर्वनामाव्ययादीनामपि गणपठितत्वेन धातुत्वापत्तिः, तद्वारणाय क्रियावाचित्वविशेषणम् ॥ हिरुगाद्यव्ययानां क्रियावाचित्वेन धातुत्वापत्तिः, तद्वारणाय गणपठितत्वं विशेषणं दत्तम् ॥ २ **अधिकार इति** । स्वदेशे लक्ष्यसंस्कारकवाक्यार्थशून्यत्वे सति विधिसूत्रैकवाक्यतापन्नतया लक्ष्यसंस्कारकवाक्यार्थवत्त्वमधिकारत्वम् । "विध्येकवाक्यतामात्रेण बोधोपयोगित्वमधिकारत्वम्" इति वस्तुस्थितिः ॥ ३ **परिभाषेयमिति** । साक्षाच्छास्त्र ( विधिशास्त्र ) तात्पर्यग्राहकत्वं परिभाषात्वम् ॥ "तत्रोपपदम्" इति संज्ञासूत्रम् । विधेयशून्यत्वे सति शक्तिग्राहकशास्त्रत्वं संज्ञाशास्त्रत्वम् ॥ "तयोरेव" इति "रात्सस्य" इति नियमसूत्रम् । निर्दिष्टेतरस्थले प्रवृत्तिव्यावर्तकत्वं नियमपरिसंख्यात्वम् । एवं "साक्षात्साधुत्वे अत्यन्ताप्राप्तकार्यसम्पादकत्वं विधित्वम् ॥ "स्थानिवत्" "अञ्णिन्नङित्" इत्यतिदेशः साक्षात्स्वावृत्तिधर्मारोपग्राहकत्वं वत्यर्थघटितत्वं वाऽतिदेशत्वम् ॥ ४ **तकाररेफाविति** । तित्स्वरितम् । उपोत्तमं रिति ॥ ५ **वसेरिति** । "तयोरेव" इति वचनात् कर्तरि न प्राप्नोतीति वचनम् ॥ ६ **केलिमर इति** । ककारो गुणवृद्धिनिषेधार्थः । रेफः स्वरार्थः ॥ ७ **तद्भाष्येति** । तत्र "भिदेलिमा" इत्यस्य "भेतव्या" इति विवरणादिति भावः ॥ ८ **अचः परत्वाभावादिति** । "रदाभ्याम्" इति जातधातुनकारेण व्यवधानादिति भावः ॥

। ८ । ४ । ३२ ॥ सनुमश्चेद्भवति तर्हि इजादेर्हलन्ताद्विहितो यः कृत्तस्यैव ॥ प्रेङ्खणीयम् ॥ इजादेः किम् ? मगि सर्पणे । प्रमङ्गनीयम् ॥ नुम्ग्रहणमनुस्वारोपलक्षणार्थम् । अट्कुप्वाङिति सूत्रेऽप्येवम् । तेनेह न–प्रेन्वनम्[1] । इह तु स्यादेव–प्रोम्भणम्[2] ॥ **वा निंसनिक्षनिन्दाम्** । ८ । ४ । ३३ ॥ एषां नस्य णो वा स्यात् कृति परे । प्रणिंसितव्यम्, प्रनिंसितव्यम् ॥ **न भाभूपूकमिगमिप्यायीवेपाम्** । ८ । ४ । ३४ ॥ एभ्यः कृन्नस्य णो न ॥ प्रभानीयम् । प्रभवनीयम् । **पूञ[3] एवेह ग्रहणमिष्यते** * ॥ पूङस्तु प्रपवणीयः सोमः ॥ **ण्यन्तभादीनामुपसंख्यानम्[4]** * ॥ प्रभापनीयम् ॥ खशाञः शस्य यो वेत्युक्तम् । णत्वप्रकरणोपरि तद्बोध्यम् । यत्वस्यासिद्धत्वेन शकारव्यवधानान्न णत्वम् । प्रख्यापनीयम् ॥ **कृत्यल्युटो बहुलम्** । ३ । ४ । ११३ ॥ स्नान्त्यनेन स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः ॥ **अचो यत्** । ३ । १ । ९७ ॥ अजन्ताद्धातोर्यत्स्यात् ॥ चेयम् । जेयम् । अज्ग्रहणं शक्यमकर्तुम्[5] । योगविभागोऽप्येवम् । तव्यदादिष्वेव यतोऽपि सुपठत्वात् ॥ **ईद्यति** । ६ । ४ । ६५ ॥ यति परे आत ईत्स्यात् ॥ गुणः । देयम् । ग्लेयम् । **तकिशसिचतियतिजनिभ्यो यद्वाच्यः[6]** * ॥ तक्यम् । शस्यम् । चत्यम् । यत्यम् । जन्यम् । जनेर्यद्विधिः स्वरार्थः[7] । ण्यतापि रूपसिद्धेः । न च वृद्धिप्रसङ्गः । जनिवध्योश्चेति निषेधात् ॥ **हनो वा यद्वधश्च वक्तव्यः** * ॥ वध्यः । पक्षे वक्ष्यमाणो ण्यत् । घात्यः ॥ **पोरदुपधात्** । ३ । १ । ९८ ॥ पवर्गान्तादुपधाद्यत्स्यात् ॥ ण्यतोऽपवादः । शप्यम् । लभ्यम् ॥ **नानुबन्धकृतमसारूप्यम्[8]** । अतो न ण्यत् । तव्यदादयस्तु स्युरेव ॥ **आङो यि** । ७ । १ । ६५ ॥ आङः परस्य लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते ॥ नुमि कृतेऽदुपधत्वाभावात् ण्यदेव । आलम्भ्यो गौः ॥ **उपात्प्रशंसायाम्** । ७ । १ । ६६ ॥ उपलम्भ्यः साधुः । स्तुतौ । किम् ? उपलब्धुं शक्य उपलभ्यः ॥ **शकिसहोश्च** । ३ । १ । ९९ ॥ शक्यम् । सह्यम् ॥ **गदमदचरयमश्चानुपसर्गे** । ३ । १ । १०० ॥ गद्यम् । मद्यम् । चर्यम् ॥ **चरेराङि चागुरौ[9]** * ॥ आचर्यो देशः । गन्तव्य इत्यर्थः ॥ अगुरौ किम् ? आचार्यो गुरुः ॥ यमेर्नियमार्थम्[10] । सोपस-

---

१ **प्रेन्वनमिति** । झल्परत्वाभावेन नानुस्वारः नुम्ग्रहणसामर्थ्यात् 'चुटुतुलशर्ष्यवाये न' इत्यन्तरत्वं पनुम्व्यतिरिक्ततवर्गपरमेव स्यादिति नकारव्यवधानेपि णत्वं स्यात् । अतो नुम्ग्रहणम् अनुस्वारपरं सत् प्रत्याख्येयम्, अनुस्वारस्याट्त्वेन तद्व्यवधाने णत्वसिद्धेरिति भावः ॥ [illegible] **प्रोम्भणमिति** । नकारस्यानुस्वारं परसवर्णे तस्यासिद्धत्वादनुस्वारेणैव व्यवधानमिति भावः ॥ ३ **पूञ** [illegible] । "भादिषु पूञो ग्र[illegible] कर्तव्यम्" इति वार्तिकादिति भावः ॥ ४ **ण्यन्तभादीनामिति** । ण्यन्तस्य [illegible]त्ययन्तरत्वादप्राप्ते वचनम् ॥ ५ **शक्यमकर्तुमिति** । ऋवर्णान्तादिव हलन्तादपि ण्यता बाधादिति भावः ॥ ६ **तकिशसीति** । तके हसने । शसु हिंसायाम् । चते याचने । यती प्रयत्ने । जनी प्रादुर्भावे ॥ ७ **स्वरार्थ इति** । "यतोऽनावः" इति आद्युदात्तार्थः ॥ ८ ननु "पोरदुपधात्" इति सूत्रं वासरूपसूत्रेण 'ण्यतो' विकल्पेन बाधकं स्यादिति पक्षे ण्यदपि स्यादेवेति शङ्कामपाकर्तुमाह–**नानुबन्धेति** । अस्याश्च परिभाषायाः "ददातिदधात्योर्विभाषा" इति काऽपवादशप्रत्ययविधायकसूत्रे पक्षे काभ्यनुज्ञानाय क्रियमाणं विभाषाग्रहणं ज्ञापकम् । अनुबन्धकृतेऽसारूप्ये तु कशयोरसारूप्यात् "वासरूपोऽस्त्रियाम्" इत्यनेनैव विकल्पस्य सिद्धतया तदनर्थकं स्यात् ॥ ९ **चरेराङीति** । गोपरूगार्थं वार्तिकम् ॥ १० **नियमार्थमिति** । "पोरदुपधात्" इत्येव सिद्धेरिति भावः ॥

र्गन्मा भूदिति । प्रयाम्यम् । निपूर्वात्स्यादेव । तेन न तत्र भवेद्विनियम्यमिति वार्तिकप्रयोगात् । एतेन 'अनियम्यस्य नायुक्तिः' । 'त्वया नियम्या ननु दिव्यचक्षुषा' इत्यादि व्याख्यातम् । नियमे साधुरिति वा ॥ **अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु । ३ । १ । १०१ ॥** वदेर्नञि उपपदे वदः सुपीति यत्क्यपोः प्राप्तयोर्यदेव सोऽपि गर्ह्यायामेवेत्युभयार्थं निपातनम् ॥ अवद्यं पापम् ॥ गर्ह्ये किम् ? अनुद्यं गुरुनाम । तद्धि न गर्ह्यम्, वचनानर्हं च ॥ 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥' इति स्मृतेः । पण्या गौः । व्यवहर्तव्येत्यर्थः । पाण्यमन्यत् । स्तुत्यर्हमित्यर्थः ॥ अनिरोधोऽप्रतिबन्धस्तस्मिन्विषये वृङो यत् । शतेन वर्या कन्या । वृत्यान्या ॥ **वह्यं करणम् । ३ । १ । १०२ ॥** वहन्त्यनेनेति वह्यं शकटम् । करणं किम् ? वाह्यम् । वोढव्यम् ॥ **अर्यः स्वामिवैश्ययोः । ३ । १ । १०३ ॥** ऋ गतौ अस्माद्यत् । ण्यतोऽपवादः ॥ अर्यः स्वामी वैश्यो वा ॥ अनयोः किम् ? आर्यो ब्राह्मणः । प्राप्तव्य इत्यर्थः ॥ **उपसर्या काल्या प्रजने । ३ । १ । १०४ ॥** गर्भग्रहणे प्राप्तकाला चेदित्यर्थः । उपसर्या गौः । गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः । प्रजने काल्येति किम् ? उपसार्या काशी । प्राप्तव्येत्यर्थः ॥ **अजर्यं संगतम् । ३ । १ । १०५ ॥** नञ्पूर्वाज्जीर्यतेः कर्तरि यत् संगतं चेद्विशेष्यम् । न जीर्यतीत्यजर्यम् । तेन संगतमार्येण रामाजर्यं कुरुतमिति भट्टिः । मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्धेत्यत्र तु संगतमिति विशेष्यमध्याहार्यम् ॥ संगतं किम् ? अजरिता कम्बलः । भावे तु संगतकर्तृकेऽपि ण्यदेव । अजार्यं संगतेन ॥ **वदः सुपि क्यप् च । ३ । १ । १०६ ॥** उत्तरसूत्रादिह भाव इत्यपकृष्यते । वदेर्भावे क्यप् स्याच्चाद्यत् अनुपसर्गे सुप्युपपदे ॥ ब्रह्मोद्यम् । ब्रह्मवद्यम् । ब्रह्म वेदः तस्य वदनमित्यर्थः । कर्मणि प्रत्ययावित्येके । उपसर्गे तु ण्यदेव । अनुवाद्यम् । अपवाद्यम् ॥ **भुवो भावे । ३ । १ । १०७ ॥** क्यप्स्यात् ॥ ब्रह्मणो भावो ब्रह्मभूयम् । सुप्युपपदे इत्येव । भव्यम् ॥ अनुपसर्ग एव । प्रभव्यम् ॥ **हनस्त च । ३ । १ । १०८ ॥** अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप्स्यात्तकारश्चान्तादेशः । ब्रह्मणो हननं ब्रह्महत्या । स्त्रीत्वं लोकात् ॥ **एतिस्तुशास्वृदृजुषः क्यप् । ३ । १ । १०९ ॥** एभ्यः क्यप्स्यात् ॥ **ह्रस्वस्य पिति कृति तुक् । ६ । १ । ७१ ॥** इत्यः । स्तुत्यः । शास इदङ्हलोः । शिष्यः । वृ इति वृञो ग्रहणम् न वृङः । वृत्यः ।

---

१ **शतेन वर्येति** । शतशब्दोऽत्रानियतपरः । कन्याया वरणे वरयितॄणां नियमो नास्तीति भावः । **वृत्यान्येति** । नच "एतिस्तुशास्–" इति सूत्रे वृञो ग्रहणस्य वक्ष्यमाणत्वात् अत्र च वृङो ग्रहणमिति प्रत्युदाहरणमसङ्गतमिति वाच्यम्, सूत्रेऽनिरोधग्रहणसत्त्वे शब्दसामर्थ्यात संभक्तिरूपार्थकस्यैव वृङो ग्रहणं तदनुक्तौ तु विनिगमनाविरहादुभयोर्ग्रहणेन प्रत्युदाहरणसङ्गतेः । "एतिस्तुशास्" इति सूत्रे वृ ग्रहणं पुंसि चरितार्थम् । अत्र "अवद्य–" इत्याद्यविभक्तिकनिर्देशेन स्त्रियामेव विधानात् । अत एव पुंसि "वार्या ऋत्विजः" इत्युक्तम् । "सुग्रीवो मम वर्योऽसौ भवता चारुविक्रमः" इत्यादिकविप्रयोगस्तु सूत्रे द्वन्द्वनिर्देशाभिप्रायेणेति दिक् ॥ २ **न वृङ इति** । "वृञो ग्रहणं कर्तव्यम्" इतिवार्तिकमूलाद् व्याख्यानादिति भावः ॥

वृङस्तु वार्या[1] ऋत्विजः । आदृत्यः । जुष्यः । पुनः क्यबुक्तिः परस्यापि ण्यतो बाधनार्था । अवश्यस्तुत्यः ॥ **शंसिदुहिगुहिभ्यो वेति** काशिका ॥ शस्यम् । शंस्यम् । दुह्यम् । दोह्यम् । गुह्यम् । गोह्यम् । 'प्रशस्यस्य श्रः' 'ईडवन्दवृशंसदुहां ण्यतः' इति सूत्रद्वयबलाच्छंसेः सिद्धम् । इतरयोस्तु मूलं मृग्यम् ॥ **आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्** * ॥ अञ्जू व्यक्तिम्रक्षणादिषु । बाहुलकात्करणे क्यप् । अनिदितामिति नलोपः । आज्यम् ॥ **ऋदुपधाच्चाक्लृपिचृतेः । ३ । १ । ११० ॥** वृत्--वृत्यम् । वृध्--वृध्यम् । क्लृपिचृत्योस्तु । कल्प्यम् । चर्त्यम् । तपरकरणं किम् ? कॄत् । कीर्त्यम् । 'अनित्यण्यन्ताश्चुरादय' इति णिजभावे ण्यत् । णिजन्तात्तु यदेव ॥ **ई च खनः । ३ । १ । १११ ॥** चात् क्यप् ॥ आद्गुणः । खेयम् । इ चेति ह्रस्वः[2] सुपठः ॥ **भृञोऽसंज्ञायाम । ३ । १ । ११२ ॥** भृत्याः कर्मकराः । भर्तव्या इत्यर्थः । क्रियाशब्दोऽयं न तु संज्ञा ॥ **समश्च बहुलम्***॥ संभृत्याः संभार्याः । असंज्ञायामेव विकल्पार्थमिदं वार्तिकम् । असंज्ञायां किम् ? भार्या नाम क्षत्रियाः । अथ कथं भार्या वधूरिति ? इह हि संज्ञायां समजेति क्यपा भाव्यम् । संज्ञापर्युदासस्तु पुंसि चरितार्थः । सत्यम् । बिभर्तेर्भृ इति दीर्घान्तात् क्र्यादेर्वा ण्यत् । क्यप् तु भरतेरेव । 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषया ॥ **मृजेर्विभाषा । ३ । १ । ११३ ॥** मृजेः क्यब्वा स्यात्पक्षे ण्यत् ॥ मृज्यः ॥ **चजोः[3] कु घिण्ण्यतोः । ७ । ३ । ५२ ॥** चस्य जस्य च कुत्वं स्यात् घिति ण्यति च प्रत्यये परे ॥ 'मृजेर्वृद्धिः' । मार्ग्यः ॥ **न्यङ्क्वादीनां च । ७ । ३ । ५३ ॥** कुत्वं स्यात् । न्यङ्कुः । नावञ्चेरित्युप्रत्ययः ॥ **राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः । ३ । १ । ११४ ॥** एते सप्त क्यबन्ता निपात्यन्ते ॥ राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः । यद्वा । लतात्मकः सोमो राजा स सूयते कण्ड्यतेऽत्रेत्यधिकरणे क्यप् । निपातनाद्दीर्घः । राजसूयः । राजसूयम् । अर्धर्चादिः ॥ सरत्याकाशे सूर्यः । कर्तरि क्यप् । निपातनादुत्वम् । यद्वा षू प्रेरणे तुदादिः । सुवति कर्मणि लोकं प्रेरयति क्यपो रुट् ॥ मृषोपपदाद्वदेः कर्मणि नित्यं क्यप् । मृषोद्यम् । विशेष्यनिघ्नोऽयम् । 'उच्छ्रायसौन्दर्यगुणा मृषोद्याः' ॥ रोचते रुच्यः ॥ **गुपेरादेः कत्वं च संज्ञायाम्** । सुवर्णरजतभिन्नं धनं कुप्यम् । गोप्यमन्यत् । कृष्टे स्वय-

---

१ **वार्या इति** । अत्र निरोधस्य विवक्षणेन "अवद्य-" इत्यस्य न प्राप्तिरिति भावः ॥ २ **ह्रस्वः सुपठ इति** । सूत्रे "ये विभाषा" इत्यात्त्वबाधनार्थं प्रश्लेषेण इकारद्वयपाठः । अन्यथा "ये विभाषा" इत्यस्य "ये" इति विषयसप्तम्याऽन्तरङ्गत्वम्, ईत्वस्य क्यपा सह विधानेन बहिरङ्गत्वमित्यात्त्वं स्यात् । भाष्ये तु क्यपा सह विधानादस्यैवान्तरङ्गत्वम्, "ये" इति परसप्तमीत्याश्रित्य दीर्घं प्रत्याख्यातम्, । नच "षत्वतुकोरसिद्धः" इत्यनेनासिद्धत्वात तुगापत्तिरिति वाच्यम्, 'पदान्तपदाद्योरेकादेशोऽसिद्ध' इति सिद्धान्तात् । अन्यथा, "वृक्षे छत्रम्" इत्यत्र ह्रस्वाश्रयो नित्यस्तुक् स्यात् । इष्यते तु वैकल्पिकः इति मनोरमाकारः । वस्तुतस्तु विषयसप्तमीस्वीकारेऽपि जनादिसाहचर्येण यादिप्रत्ययोत्पत्तिपूर्वकाले नान्तस्यैवाऽऽत्त्वविधानेनात्र तदप्राप्त्या नस्येत्वे आद्गुणेन रूपसिद्धेः ॥ इत्येतत्क्लेशपरिहारायैव दीर्घोच्चारणमिति नागेशोक्तो रम्यो मार्गः ॥ ३ **चजोरिति** । स्थानिनिमित्तयोर्यथासंख्यं न, "रागात्" इत्यादिनिर्देशात् ॥

मेव पच्यन्ते कृष्टपच्याः। कर्मकर्तरि॥ शुद्धे तु कर्मणि कृष्टपाक्याः। न व्यथते अव्यथ्यः॥ **भिद्योद्ध्यौ नदे। ३। १। ११५॥** भिदेरुज्झेश्च क्यप्। उज्झेर्धत्वं च॥ भिनत्ति कूलं भिद्यः। उज्झत्युदकमुद्ध्यः॥ नदे किम्? भेत्ता। उज्झिता॥ **पुष्यसिध्यौ नक्षत्रे। ३। १। ११६॥** अधिकरणे क्यब्निपात्यते॥ पुष्यन्त्यस्मिन्नर्थाः पुष्यः। सिध्यन्त्यस्मिन्सिध्यः॥ **विपूयविनीयजित्या मुञ्जकल्कहलिषु। ३। १। ११७॥** पूङ्नीञ्जिभ्यः क्यप्॥ विपूयो मुञ्जः। रज्ज्वादिकरणाय शोधयितव्य इत्यर्थः। विनीयः कल्कः। "पिष्ट ओषधिविशेष इत्यर्थः। पापमिति वा। जित्यो हलिः। बलेन कृष्टव्य इत्यर्थः। कृष्टसमीकरणार्थं स्थूलकाष्ठम्। अन्यत्र तु विपव्यम्। विनेयम्। जेयम्॥ **प्रत्यपिभ्यां ग्रहेः। ३। १। ११८॥ छन्दसीति वक्तव्यम् *॥** प्रतिगृह्यम्। अपिगृह्यम्। लोके तु प्रतिग्राह्यम्। अपिग्राह्यम्॥ **पदास्वैरिबाह्यापक्ष्येषु च। ३। १। ११९॥** अवगृह्यम्। प्रगृह्यं पदम्। अस्वैरी परतन्त्रः। गृह्यकाः शुकाः। पञ्जरादिबन्धनेन परतन्त्रीकृता इत्यर्थः। बाह्यायाम्। ग्रामगृह्या सेना। ग्रामबहिर्भूतेत्यर्थः। स्त्रीलिङ्गनिर्देशात्पुन्नपुंसकयोर्न। पक्षे भवः पक्ष्यः। दिगादित्वाद्यत्। आर्यैर्गृह्यते आर्यगृह्यः। तत्पक्षाश्रित इत्यर्थः॥ **विभाषा कृवृषोः। ३। १। १२०॥** क्यप्स्यात्। कृत्यम्। वृष्यम्। पक्षे—॥ **ऋहलोर्ण्यत्। ३। १। १२४॥** ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत्स्यात्॥ कार्यम्। वर्ष्यम्॥ **युग्यं च पत्रे। ३। १। १२१॥** पत्रं वाहनम्। युग्यो गौः। अत्र क्यप् कुत्वं च निपात्यते॥ **अमावस्यदन्यतरस्याम्। ३। १। १२२॥** अमोपपदाद्वसेरधिकरणे ण्यत्। वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते॥ अमा सह वसतोऽस्यां चन्द्रार्कावमावस्या। अमावास्या॥ ऋहलोर्ण्यत्॥ चजोरिति कुत्वम्। पाक्यम्॥ **पाणौ सृजेर्ण्यद्वाच्यः *॥** ऋदुपधलक्षणस्य क्यपोऽपवादः॥ पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः॥ **समवपूर्वाच्च*॥** समवसर्ग्या॥ **न क्वादेः। ७। ३। ५९।** क्वादेर्धातोश्चजोः कुत्वं न॥ गर्ज्यम्। वार्तिककारस्तु चजोरिति सूत्रे निष्ठायामनिट इति पूरयित्वा न क्वादेरित्यादि प्रत्याचख्यौ। तेन अर्जितर्जिप्रभृतीनां न कुत्वम्। निष्ठायां सेट्त्वात्। ग्रुचुग्लुञ्चुप्रभृतीनां तु क्वादित्वेऽपि कुत्वं स्यादेव। सूत्रमते तु यद्यपि विपरीतं प्राप्तं तथापि [३]यथोत्तरं मुनीनां प्रामाण्यम्॥ **अजिव्रज्योश्च। ७। ३। ६०॥** न कुत्वम्॥ समाजः। परिव्राजः॥ **भुजन्युब्जौ पाण्युपतापयोः। ७। ३। ६१॥** एतयोरेतौ निपातौ। भुज्यतेऽनेनेति भुजः पाणिः। हलश्चेति घञ्। न्युब्जन्त्यस्मिन्निति[४] न्युब्जः। उपतापो रोगः॥ पाण्युपतापयोः किम्? भोगः। समुद्गः॥ **प्रयाजानुयाजौ यज्ञाङ्गे। ७। ३। ६२॥** एतौ निपातौ यज्ञाङ्गे॥ पञ्च

---

१ अयं पाठः शेखरस्थः॥ २ **पत्रं वाहनमिति।** पतन्त्यनेनेति व्युत्पत्तेः। "पत्रन्तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः" इति मेदिनी। **युग्य इति।** युज्यते शकटादिनेत्यर्थः॥ ३ **यथोत्तरं मुनीनामिति।** सूत्रदूषणाय वार्तिकस्य प्रवृत्तत्वात् भाष्यकृता च वार्तिकमते "शोक" इत्यस्यासिद्धिमाशङ्क्य सूत्रमतेऽपि ण्यति कुत्ववारणाय नियमार्थमावश्यकेन "शुचेर्घञि" इति वचनेन समाधानाद् वार्तिकमतस्यैवाभ्यनुज्ञानाच्चेति भावः॥ ४ **न्युब्जन्तीति।** चेष्टारहिता अवाङ्मुखाः शेरते इत्यर्थः॥

प्रयाजाः । त्रयोऽनुयाजाः । यज्ञाङ्गे किम् ? प्रयागः । अनुयागः ॥ **वञ्चेर्गतौ । ७ । ३ । ६३ ॥** कुत्वं न ॥ वञ्च्यम् ॥ गतौ किम् ? वङ्क्यं काष्ठम् । कुटिलीकृतमित्यर्थः ॥ **ओक उचः के । ७ । ३ । ६४ ॥** उचेर्गुणकुत्वे निपात्येते के परे ॥ 'ओकः शकुन्तवृषलौ' । इगुपधलक्षणः कः। घञा सिद्धेऽन्तोदात्तार्थमिदम् ॥ **ण्य आवश्यके । ७ । ३ । ६५ ॥** कुत्वं न ॥ अवश्यपाच्यम् ॥ **यजयाचरुचप्रवचर्चश्च । ७ । ३ । ६६ ॥** ण्ये कुत्वं न ॥ याज्यम् । याच्यम् । रोच्यम् । प्रवाच्यं ग्रन्थविशेषः । ऋच् । अर्च्यम् । ऋदुपधत्वेऽप्यत एव ज्ञापकात् ण्यत् ॥ **त्यजेश्च * ॥** [1]त्याज्यम् ॥ त्यजिपूज्योश्चेति काशिका ॥ तत्र पूजेर्ग्रहणं चिन्त्यम् ॥ भाष्यानुक्तत्वात् । ण्यत्प्रकरणे त्यजेरुपसंख्यानमिति हि भाष्यम् ॥ **वचोऽशब्दसंज्ञायाम् । ७ । ३ । ६७ ॥** वाच्यम् । शब्दाख्यायां तु वाक्यम् ॥ **प्रयोज्यनियोज्यौ शक्यार्थे । ७ । ३ । ६८ ॥** प्रयोक्तुं शक्यः प्रयोज्यः । नियोक्तुं शक्यो नियोज्यो भृत्यः ॥ **भोज्यं भक्ष्ये । ७ । ३ । ६९ ॥** भोग्यमन्यत् । **ण्यत्प्रकरणे लपिदभिभ्यां चेति वक्तव्यम् * ॥** लाप्यम् । दभिर्धातुष्वपठितोऽपि वार्तिकबलात्स्वीकार्यः ॥ दाभ्यः ॥ **ओरावश्यके । ३ । १ । १२५ ॥** उवर्णान्ताद्धातोर्ण्यत्स्यादवश्यंभावे द्योत्ये ॥ लाव्यम् । पाव्यम् ॥ **आसुयुवपिरपिलपित्रपिचमश्च । ३ । १ । १२६ ॥** षुञ् ॥ आसाव्यम् । यु मिश्रणे । याव्यम् । वाप्यम् । राप्यम् । त्राप्यम् । चाम्यम् ॥ **आनाय्योऽनित्ये । ३ । १ । १२७ ॥** आङ्पूर्वान्नयतेर्ण्यदायादेशश्च निपात्यते ॥ दक्षिणाग्निविशेष एवेदम् । स हि गार्हपत्यादानीयतेऽनित्यश्च सततमप्रज्वलनात् । आनेयोऽन्यो घटादिः । वैश्यकुलादेरानीतो दक्षिणाग्निश्च ॥ **प्रणाय्योऽसंमतौ । ३ । १ । १२८ ॥** संमतिः प्रीतिविषयीभवनं कर्मव्यापारः । तथा भोगेष्वादरोऽपि संमतिः । प्रणाय्यश्चोरः । प्रीत्यनर्ह इत्यर्थः । प्रणाय्योऽन्तेवासी । विरक्त इत्यर्थः । प्रणेयोऽन्यः ॥ **पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु । ३ । १ । १२९ ॥** मीयतेऽनेन पाय्यं मानम् । ण्यत् धात्वादेः पत्वं च । आतो युगिति युक् ॥ सम्यङ् नीयते होमार्थमग्निं प्रतीति सान्नाय्यं हविर्विशेषः । ण्यदायादेः समो दीर्घश्च निपात्यते ॥ निचीयतेऽस्मिन्धान्यादिकं निकाय्यो निवासः । अधिकरणे ण्यत् आय् धात्वादेः कुत्वं च निपात्यते ॥ धीयतेऽनया समिदिति धाय्या ऋक् ॥ **क्रतौ कुण्डपाय्यसंचाय्यौ । ३ । १ । १३० ॥**

---

१ **चिन्त्यमिति** । पूजेर्नित्यण्यन्तत्वेन तद्ग्रहे फलाभाव इति भावः । तदाह-**भाष्येति** । २ **स्वीकार्य इति** । तथा च श्रूयते-"न ता नशन्ति न दभाति तस्करः" इति । "विष्णुर्गोपा अदाभ्यः" इति च ॥ "पोरदुपधात्" इति यति प्राप्ते वचनम् ॥ ३ **आनाय्य इति** । आनीयते इत्यानाय्यः ॥ दक्षिणाग्नितः संस्कृताग्नेर्नाम तदाह-**दक्षिणाग्निविशेषेति** ॥ **गार्हपत्यादिति** । गृहपतिना संयुक्तो गार्हपत्यः । "गृहपतिना संयुक्ते ञ्यः" ( ४ । ४ । ९० । ) **वैश्यकुलादेरिति** । वित्तवद्वैश्यकुलादेरित्यर्थः । आदिना भ्राष्ट्रपरिग्रहः ॥ ४ **"सम्मतिः"** इत्यत्र सम्पूर्वकान्मनधातोः प्रीतिभवनानुकूलव्यापारार्थकात् कर्मणि बाहुलकात् क्तिन् । भावे क्तिन्प्रत्ययेनैवेष्टसिद्धौ तावत्पर्यन्तानुसरणं व्यर्थमित्याशयेनाऽऽह-भोगेष्वादरोऽपीति । **प्रणेयोऽन्य इति** । घटादिरिति शेषः । अत्र कर्मणि यत् ॥ ५ **धीयतेऽनयेति** । पुष्यते इत्यर्थः । **धाय्या ऋगिति** । "स्त्रीत्वं दर्शयितुमविवक्षितत्वात् सन्ध्यभावः । सामिधेनीनां मध्ये ऋग्विशेषः । समिधामाधानी सामिधेनी । "समिधामाधाने षेण्यण्" । षित्वाद् ङीष् । "हलस्तद्धितस्य" इति यलोपः ॥

कुण्डेन पीयतेऽस्मिन्सोमः कुण्डपाय्यः क्रतुः । संचीयतेऽसौ संचाय्यः ॥ **अग्नौ परिचाय्योपचाय्यसमूह्याः । ३ । १ । १३१ ॥** अग्निधारणार्थे स्थलविशेषे एते साधवः । अन्यत्र तु परिचेयम् । उपचेयम् । संवाह्यम् ॥ **चित्याग्निचित्ये च । ३ । १ । १३२ ॥** चीयतेऽसौ चित्योऽग्निः । अग्नेश्चयनमग्निचित्या ॥ **प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च । ३ । १ । १६३ ॥** त्वया गन्तव्यम् । गमनीयम् । गम्यम् । इह लोटा बाधा मा भूदिति पुनः कृत्यविधिः स्त्र्यधिकारादूर्ध्वं वासरूपविधिः क्वचिन्नेति ज्ञापयति । तेन क्तल्युट्तुमुन्खलर्थेषु नेति सिद्धम् ॥ **अर्हे कृत्यतृचश्च । ३ । ३ । १६९ ॥** स्तोतुमर्हः स्तुत्यः । स्तुतिकर्म । स्तोता । स्तुतिकर्ता। लिङा बाधा मा भूदिति कृत्यतृचोर्विधिः ॥ **भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा । ३ । ४ । ६८ ॥** एते कृत्यान्ताः कर्तरि वा निपात्यन्ते ॥ पक्षे तयोरेवेति सकर्मकात्कर्मणि अकर्मकात्तु भावे ज्ञेयाः । भवतीति भव्यः । भव्यमनेन वा । गायतीति गेयः साम्नामयम् । गेयं सामानेन वा इत्यादि ॥ **शकि लिङ् च । ३ । ३ । १७२ ॥** चात्कृत्याः ॥ वोढुं शक्यो वोढव्यः वहनीयो वाह्यः । लिङा बाधा मा भूदिति कृत्योक्तिः ॥ लाघवादनेनैव ज्ञापनसंभवे प्रैषादिसूत्रे कृत्याश्चेति सुत्यजम् । अर्हे कृत्यतृचोर्ग्रहणं च ॥

इति कृत्यप्रकरणम् ।

---

## अथ कृदन्तप्रकरणम् ।

**ण्वुल्तृचौ । ३ । १ । १३३ ॥** धातोरेतौ स्तः ॥ कर्तरि कृदिति कर्त्रर्थे । 'युवोरनाकौ' । कारकः । कर्ता । वोढुमर्हो वोढा । कारिका । कर्त्री । गाङ्कुटेति ङित्त्वम् । कुटिता ।

---

१ सर्वोपकारकत्वात् प्रकरणान्ते आह-**प्रैषातिसर्गेति** ॥ २ **लोटा बाधेति** । लोटस्तत्र विशिष्य विधानादिह प्राप्तो बाधो नेत्यर्थः ॥ ३ ननु वासरूपन्यायेन बाधाभावसिद्धौ पुनरपि कृत्यग्रहणवैयर्थ्यमत आह-**स्त्र्यधिकारादिति** । अत्र "स्त्र्यधिकारादूर्ध्वम्" इति "अस्त्रियाम्" इत्यस्यार्थकथनम् । ज्ञाप्यांशस्तु "वासरूपविधिः क्वचिन्न" इत्येव ॥ ४ **इति कृत्यप्रेति** । नच "कृत्याः प्राङ्ण्वुलः" इत्युपादानात् कृत्याधिकारस्य प्रागेव निवृत्तेः "भव्यगेय-" इति सूत्रस्य कृत्येषु व्युत्पादनमनुचितमिति वाच्यम्, "कर्तरि कृत्" इति सूत्रभाष्ये "कर्तरि" इति सूत्रस्य "अनिर्दिष्टार्थाः" इति न्यायेन प्राप्तस्य स्वार्थत्वस्य वारकतया सार्थकत्वमुक्त्वा घञ्विधायकेन "भावे" इति सूत्रेण ज्ञापकेन पुनः स्वार्थत्वाप्रसङ्गमाशङ्क्य-"उक्तो भावभेदो भाष्ये" इत्यनेन तस्य सूत्रस्य चारितार्थ्यं प्रदर्श्य कृतां स्वार्थिकत्वापत्तिवारकतया "कर्तरि" इत्यावश्यकमित्युक्तम् । ततः ल्युन्विधायके "आढ्य-" इति सूत्रे "करणे" इति पाठेन कृत्यविषये "तयोः-" इत्यनेन विशेषविहितेन बाधे सिद्धे "तयोरेव" इति सूत्रस्यैवकारकस्य "तच्च भव्याद्यर्थम्" इत्यनेन कृत्यसंज्ञया कृत्संज्ञायाः समावेशसूचनेन, "गेयो माणवकः साम्नाम्" "गेयानि माणवकेन सामानि" इत्युदाहरणप्रदर्शनेन च, भव्यादीनामपि कृत्यान्तत्वमनुमीयते इत्यभिप्रायेण "भव्य-" इति सूत्रस्य कृत्यप्रक्रियायां व्युत्पादनात् "भव्यादिघटका यदादयः-कृत्याः, कर्त्रर्थवाचककर्मार्थकत्वतात्पर्यकत्वात्" इति न्यायस्य ध्वननादिति ॥ इति भैरवमिश्राः ॥ इति कृत्यप्रक्रिया ॥ ५ **ण्वुल्तृचाविति** । इमौ वर्तमानकाल एव भवतः, अन्यत्रानभिधानात् । तथाच भाष्ये "तृजादिषु वर्तमानकालोपादानं कर्तव्यम्" न कर्तव्यम् "अन्येषां प्रत्ययानां कालमात्रे दर्शनात् चर्चोपरः" इत्युक्तम् ॥ "अन्येषाम्" इत्यस्य ण्वुल्तृज्व्यतिरिक्तानामित्यर्थः । एतेन यदि वर्तमानकालोपादानं क्रियते तदा तस्याधिकारत्वात् प्रत्ययान्तरेषु दोषः स्यादिति वर्तमानाधिकारो न कार्यः, अनयोः कालान्तरे अनभिधानमिति ध्वनितम् ॥

अञ्णिदित्युक्तेर्न ङित्त्वम् । कोटकः । 'विज इट्' । विजिता । 'हनस्तोऽचिण्णलोः' । घातकः । 'आतो युक्'—दायकः । नोदात्तोपदेशस्येति न वृद्धिः—शमकः । दमकः । अनिटस्तु नियामकः ॥ 'जनिवध्योश्च' । जनकः । 'वध हिंसायाम्' वधकः ॥ 'रधिजभोरचि' । रन्धकः । जम्भकः । 'नेट्यलिटि रधेः' । रधिता । रद्धा । मस्जिनशोरिति नुम् । मङ्क्ता । नंष्टा । नशिता । 'रभेरशब्लिटोः' । रम्भकः । रब्धा । 'लभेश्च' । लम्भकः । लब्धा । 'तीषसह' एषिता । एष्टा । सहिता । सोढा । दरिद्रातेरालोपः—दरिद्रिता । ण्वुलि न । दरिद्रायकः ॥ 'कृत्यल्युट' इत्येव सूत्रमस्तु । यत्र विहितास्ततोऽन्यत्रापि स्युरित्यर्थात् । एवं च बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभिचारार्थम् । पादाभ्यां ह्रियते पादहारकः । कर्मणि ण्वुल् ॥ **क्रमेः कर्तर्यात्मनेपदविषयात्कृत इण्निषेधो वाच्यः** * ॥ प्रक्रन्ता । कर्तरीति किम् ? प्रक्रमितव्यम् । आत्मनेपदेति किम् ? संक्रमिता ॥ अनन्यभावे विषयशब्दः । तेन अनुपसर्गाद्वेति विकल्पार्हस्य न निषेधः । क्रमिता । तदर्हत्वमेव तद्विषयत्वम् । तेन क्रन्तेत्यपीति केचित् ॥ गमेरिडित्यत्र परस्मैपदग्रहणं तङानयोरभावं लक्षयति । सञ्जिगमिषिता ॥ एवं 'न वृद्भ्यश्चतुर्भ्यः' । विवृत्सिता ॥ यङन्तात् ण्वुल् । अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । पापचकः । यङ्लुगन्तात्तु पापाचकः ॥ **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । ३ । १ । १३४ ॥** नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच् स्यात् ॥ नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । मधुसूदनः । विशेषण भीषयते इति विभीषणः । लवणः । नन्द्यादिगणे निपातनाण्णत्वम् ॥ ग्राही । स्थायी । मन्त्री ।

१ **वध हिंसायामिति** । अत एव "जनिवध्योः-" इत्यत्र वधिग्रहणं चरितार्थम्, वधादेशे त्वल्लोपस्य स्थानिवद्भावात्सिद्धम् । एतेनार्धधातुके प्रयोगो नेत्यपास्तम् । इदं सर्वं वृत्तौ स्पष्टम् ॥ परे तु- एवं सति "चक्षिङ्" इति सूत्रे "बहुलं तण्यन्नवधकगात्रविचक्षणाजिराद्यर्थम्" इति वार्तिके "वधक" ग्रहणवैयर्थ्यापत्तिः, अनेन धातुना सिद्धत्वात् । "घातकः" इति विध्यत एव, बाहुलकाद् वधकमित्युपादाय "ण्वुलि वधादेशः" इति कैयटः । तथा स्थानिवत्सूत्रे वार्तिकम्- "वध्यादेशो वृद्धितत्वयोः प्रतिषेधो वक्तव्यः" "वधकं पुष्करम्" इति । "अन्योऽयं क्रिदौणादिको वधकशब्दो रुचक इति यथा" इति भाष्यं चासङ्गतं स्यात् । तस्मादयं निर्मूलः । आर्धधातुके वा प्रयोगो निर्मूलः । "जनिवध्योश्च" इति सूत्रे वधिग्रहणं तु "आदेशो हलन्तः" इत्यभिप्रायेण । अत एव "हनो वध-" इति सूत्रे "किमयमदन्त आहोस्विद् व्यञ्जनान्तः, किञ्चातः यदि व्यञ्जनान्तः, वृद्धितत्वप्रतिषेध इड्विधिश्च, अथादन्तो न दोषः" इति भाष्यमुपादाय कैयट आह- "अवधीदित्यत्र हलन्तलक्षणा वृद्धिः प्राप्नोति तत्प्रतिषेधो वक्तव्यः, वधक इति ण्वुलि "बहुलं तणि" इति वधादेशे "अत उपधायाः" इति प्राप्ता वृद्धिः "जनिवध्योश्च" इति प्रतिषिध्यते, स्थानिवद्भावाद् "हनस्त-" इति तत्वं प्राप्तं तत्प्रतिषेधो वक्तव्यः, अवधीदित्यादावेकाच्त्वादिण्निषेधे प्राप्ते इड् विधेयः, अदन्तत्वे त्वल्लोपस्य स्थानिवद्भावाद् वृद्ध्याद्यभाव इड्भावश्च" इति । एवञ्चादन्तत्वपक्षे "वधिग्रहणं सूत्रे न कर्तव्यम्" इति स्पष्टमेवोक्तमिति वृत्तिश्चिन्त्येत्याहुः ॥ ( इति ल० श० ) ॥ २ **अनन्यभाव इति** । वर्तत इति शेषः । तदन्याविषयत्वे सति तद्विषयत्वमनन्यभावः ॥ ३ **तङानयोरभावमिति** । फलोपहिततङाननिमित्तत्वाभावं लक्षयतीत्यर्थः ॥ ४ **पापाचक इति** । यङ्लुकोऽत्रानैमित्तिकत्वात् "न धातु-" इति निषेधो न, इग्लक्षणत्वाभावाच्च ॥ ५ **जनमर्दयतीति** । 'अर्द' हिंसायाम् ॥ ६ **मधुसूदन इति** । मधुर्नामासुरस्तं सूदयतीति मधुसूदनः । "सात्पदाद्योः" इति षत्वनिषेधः ॥

विशयी । वृद्ध्यभावो निपातनात् ! विषयी । इह षत्वमपि[1] ॥ परिभावी । परिभवी । पाक्षिको वृद्ध्यभावो निपात्यते ॥ पचादिराकृतिगणः, 'शिवशमरिष्टस्य करे' 'कर्मणि घटोऽठच्' इति सूत्रयोः करोतेर्घटश्चाच्प्रयोगात् । अच्प्रत्यये परे यङ्लुग्विधानाच्च । केषांचित्पाठस्त्वनुबन्धासञ्जनार्थः । केषांचित्प्रपञ्चार्थः । केषांचिद्बाधकबाधनार्थः । पचतीति पचः । नदट्, चोरट्, देवट्, इत्यादयष्टितः । नदी । चोरी । देवी । दीव्यतेः इगुपधेति कः प्राप्तः । जारभरा । श्वपचा । अनयोः कर्मण्यण् प्राप्तः । न्यङ्क्वादिषु पाठात् श्वपाकोऽपि । यङोऽचि चेतिलुक्, 'न धातुलोपे' इति गुणवृद्धिनिषेधः । चेक्रियः । नेन्यः । लोलुवः । पोपुवः । मरीमृजः ॥ **चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्येति वक्तव्यम् *॥** आगमस्य[2] दीर्घत्वसामर्थ्यादभ्यासह्रस्वो हलादिःशेषश्च न । चराचरः । चलाचलः । पतापतः । वदावदः ॥ **हन्तेर्घत्वं च * ॥** घत्वमभ्यासस्य, उत्तरस्य तु अभ्यासाच्चेति कुत्वम् । घनाघनः ॥ **पाटेर्णिलुक्चोक्च दीर्घश्चाभ्यासस्य * ॥** पाटूपटः । पक्षे—चरः । चलः । पतः । वदः । हनः । पाटः । रात्रेः कृतीति वा मुम् । रात्रिंचरः । रात्रिचरः ॥ **इगुपधज्ञाप्रीकिरः कः । ३ । १ । १३५ ॥** एभ्यः कः स्यात् ॥ क्षिपः । लिखः । बुधः । कृशः । ज्ञः । प्रीणातीति प्रियः । किरतीति किरः । वासरूपविधिना ण्वुल्तृचावपि । क्षेपकः, क्षेप्ता ॥ **आतश्चोपसर्गे । ३ । १ । १३६ ॥** कः स्यात् ॥ श्याद्व्यधेति णस्यापवादः ॥ सुग्लः । प्रज्ञः ॥ **पाघ्राध्माधेड्दृशः शः ।३।१।१३७॥** पिबतीति पिबः । जिघ्रः । धमः । धयः । धया कन्या । धेटष्टित्त्वात् स्तनन्धयीति खशीव ङीप् प्राप्तः । खशोऽन्यत्र नेष्यत इति हरदत्तः[3] । पश्यतीति पश्यः ॥ घ्रः संज्ञायां न । व्याघ्रादिभिरिति निर्देशात् ॥ **अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । ३ । १ । १३८ ॥** शः स्यात् ॥ लिम्पः । विन्दः । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातिः सुखार्थः सौत्रो हेतुमण्ण्यन्तः । सातयः । वाऽसरूपन्यायेन क्विपि सात् परमात्मा । सात्वन्तो भक्ताः ॥ षह मर्षणे चुरादिः । हेतुमण्ण्यन्तो वा । साहयः ॥ अनुपसर्गात्किम् ? प्रलिपः ॥ **नौ लिम्पेर्वाच्यः * ॥** निलिम्पा देवाः ॥ **गवादिषु विन्देः संज्ञायाम् *॥** गोविन्दः । अरविन्दम् ॥ **ददातिदधात्योर्विभाषा । ३ । १ । १३९॥** शः स्यात् ॥ ददः । दधः । पक्षे वक्ष्यमाणो णः । अनुपसर्गादित्येव । प्रदः । प्रधः ॥ **ज्वलितिकसन्तेभ्यो णः । ३ । १ । १४०॥** इतिशब्द आद्यर्थः। ज्वलादिभ्यः कसन्तेभ्यो णः स्याद्वा । पक्षेऽच् ॥ ज्वालः । ज्वलः । चालः । चलः ॥ अनुपसर्गादित्येव । उज्ज्वलः ॥ **तनोतेरुपसंख्यानम् * ॥** इहानुपसर्गादिति विभाषेति च न संबध्यते । अवतनोतीत्यव-

---

१ षत्वमपीति । "निपातनात्" इत्यनुकृष्यते ॥ २ आगमस्येति । नच दीर्घागमोच्चारणं सवर्णदीर्घव्यावृत्तये भवत्विति वाच्यम्, "अनन्तरस्य" इति न्यायेन हलादिःशेषस्यैव बाधकत्वात् ॥ ३ हरदत्त इति । अत्रारुचिबीजं तु "टिड्ढ–" इति सूत्रे टिदादवयवाकारस्यैव ग्रहणं भाष्यप्रामाण्यात् । टित्त्वसामर्थ्यादिति चेत् "धया" इत्यत्राप्यापत्तेः । कथं तर्हि "स्तनन्धयी" इति चेत् गौरादित्वेनेति गृहाण । स्वरकृतविशेषोऽपि न, "अनुदात्तस्य च यत्रोदात्तलोपः" इत्युदात्तनिवृत्तिस्वरविधानादिति दिक् ॥

तानः ॥ **श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च । ३ । १ । १४१ ॥** श्यैङ्प्रभृतिभ्यो नित्यं णः स्यात् ॥ श्यैङोऽवस्यतेश्चादन्तत्वात्सिद्धे पृथग्ग्रहणमुपसर्गे कं बाधितुम् । अवश्यायः । प्रतिश्यायः ॥ आत् । दायः । धायः । व्याधः । स्रु गतौ । आङ्पूर्वः संपूर्वश्च । आस्रावः । संस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ॥ **दुन्योरनुपसर्गे । ३ । १ । १४२ ॥** णः स्यात् ॥ दुनोतीति दावः । नीसाहचर्यात्सानुबन्धकाद् दुनोतेरेव णः । दवतेस्तु पचाद्यच् । दवः । नयतीति नायः। उपसर्गे तु प्रदवः। प्रणयः॥ **विभाषा ग्रहः । ३ । १ । १४३ ॥** णो वा ॥ पक्षेऽच् ॥ व्यवस्थितविभाषेयम् । तेन जलचरे ग्राहः । ज्योतिषि ग्रहः ॥ भवतेश्चेति काशिका ॥ भवो देवः संसारश्च । भावाः पदार्थाः । भाष्यमते तु प्राप्त्यर्थाच्चुरादिण्यन्तादच् । भावः ॥ **गेहे कः । ३ । १ । १४४ ॥** गेहे कर्तरि ग्रहेः कः स्यात् ॥ गृह्णाति धान्यादिकमिति गृहम् । तात्स्थ्याद् गृहा दाराः ॥ **शिल्पिनि ष्वुन् । ३ । १ । १४५ ॥** क्रियाकौशलं शिल्पं तद्वत्कर्तरि ष्वुन् स्यात् ॥ **नृतिखनिरञ्जिभ्य एव * ॥** नर्तकः । नर्तकी । खनकः । खनकी ॥ **असि अकेऽने च रञ्जेर्नलोपो वाच्यः ॥** रजकः । रजकी ॥ भाष्यमते तु नृतिखनिभ्यामेव ष्वुन् । रञ्जेस्तु क्वुन् शिल्पिसंज्ञयोरिति क्वुन् । टाप् । रजिका । पुंयोगे तु रजकी ॥ **गस्थकन् । ३ । १ । १४६॥** गायतेस्थकन् स्यात् शिल्पिनि कर्तरि ॥ गाथकः ॥ **ण्युट् च । ३ । १ । १४७ ॥** गायनः । टित्त्वाद्गायनी ॥ **हश्च व्रीहिकालयोः । ३ । १ । १४८ ॥** हाको हाङश्च ण्युट् स्यात् व्रीहौ काले च कर्तरि ॥ जहात्युदकमिति हायनो व्रीहिः । जहाति भावानिति हायनो वर्षम् । जिहीते प्राप्नोति वा ॥ **प्रुसृल्वः समभिहारे वुन् । ३ । १ । १४९ ॥** समभिहारग्रहणेन साधुकारित्वं लक्ष्यते । प्रवकः । सरकः । लवकः ॥ **आशिषि च । ३ । १ । १५० ॥** आशीर्विषयार्थवृत्तेर्धातोर्वुन् स्यात्कर्तरि ॥ जीवतात् जीवकः । नन्दतात् नन्दकः । आशीः प्रयोक्तुर्धर्मः । आशासितुः पित्रादेरियमुक्तिः ॥ **कर्मण्यण् । ३ । २ । १ ॥** कर्मण्युपपदे धातोरण् प्रत्ययः स्यात् ॥ उपपदसमासः । कुम्भं करोतीति कुम्भकारः । आदित्यं पश्यतीत्यादावनभिधानान्न ॥ **शीलिकामिभक्ष्याचरिभ्यो णः * ॥** अणोऽपवादार्थं वार्तिकम् । मांसशीला । मांसकामा । मांसभक्षा । कल्याणाचारा ॥ **ईक्षिक्षमिभ्यां च * ॥** सुखप्रतीक्षा । बहुक्षामा । कथं तर्हि गङ्गाधरभूधरादयः ? कर्मणः शेषत्वविवक्षायां भविष्यन्ति ॥ **ह्वावामश्च । ३ । २ । २ ॥** अण्

---

१ ननु भाष्यमते " रजकी" इति न स्यादत आह–**पुंयोगे त्विति** । तत्रैवेत्यर्थः । " रजनी " इत्यत्र तु गौरादित्वान् ङीष् इति बोध्यम् ॥ २ **आदित्यं पश्यतीत्यादावनभिधानान्नेति** । अनभिधाने मानं तु प्रकृतसूत्रस्थभाष्यमेव । तत्र हि "कर्मणि निर्वर्त्यमानविक्रियमाण इति वक्तव्यम् " इह मा भूत् आदित्यं पश्यति, हिमवन्तं शृणोति, ग्रामं गच्छतीति । ततः—कर्मणि निर्वर्त्यमानविक्रियमाण इति चेद् "वेदाध्यायादीनामुपसंख्यानम्" वेदाध्यायः चर्चापारः । " ह्वग्रहिनीवहिभ्यश्चेति वक्तव्यम " भारहरः । कमण्डलुग्राहः । उष्ट्रप्रणायः । भारवाहः । " अपरिगणनं वा " नवार्थः परिगणनेन कस्मान्न भवति, आदित्यं पश्यति, हिमवन्तं शृणोति, ग्रामं गच्छतीति " अनभिधानात् " अनभिधानादेवात्र न भविष्यतीति ॥

स्यात् ॥ काण्डलावः । स्वर्गह्वायः । तन्तुवायः । धान्यमायः ॥ **आतोऽनुपसर्गे कः । ३ । २ । ३ ॥** आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यान्नाऽण् ॥ आतो लोपः । गोदः । पार्ष्णित्रम् । अनुपसर्गे किम् ? गोसन्दायः ॥ **कविधौ सर्वत्र संप्रसारणिभ्यो डः *** ॥ ब्रह्म जिनाति ब्रह्मज्यः । सर्वत्रग्रहणात् 'आतश्चोपसर्गे' । आह्वः । प्रह्वः ॥ **सुपि स्थः । ३ । २ । ४ ॥** सुपीति योगो विभज्यते । सुपि उपपदे आदन्तात्कः स्यात् ॥ द्वाभ्यां पिबतीति द्विपः । समस्थः । विषमस्थः ॥ ततः **स्थः** ॥ सुपि तिष्ठतेः कः स्यात् ॥ आरम्भसामर्थ्याद्भावे । आखूनामुत्थानमाखूत्थः ॥ **प्रष्ठोऽग्रगामिनि । ८ । ३ । ९२ ॥** प्रतिष्ठत इति प्रष्ठो गौः । अग्रतो गच्छतीत्यर्थः । अग्रेति किम् ? प्रस्थः ॥ **अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः । ८ । ३ । ९७ ॥** स्थ इति कप्रत्ययान्तस्यानुकरणम् । षष्ठ्यर्थे प्रथमा । एभ्यः स्थस्य सस्य षः स्यात् ॥ द्विष्ठः A । त्रिष्ठः । इत ऊर्ध्वं कर्मणि सुपीति द्वयमप्यनुवर्तते । तत्राकर्मकेषु सुपीत्यस्य संबन्धः ॥ **तुन्दशोकयोः परिमृजापनुदोः । ३ । २ । ५ ॥** तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः स्यात् ॥ **आलस्यसुखाहरणयोरिति वक्तव्यम् ***॥ तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः । शोकापनुदः सुखस्याहर्ता । अलसादन्यत्र तुन्दपरिमार्ज एव । यश्च संसारासारत्वोपदेशेन शोकमपनुदति स शोकापनोदः ॥ **कप्रकरणे B मूलविभुजादिभ्य उपसंख्यानम् *** ॥ मूलानि विभुजति मूलविभुजो रथः । आकृतिगणोऽयम् ॥ महीध्रः । कुध्रः । गिलतीति गिलः ॥ **प्रे दाज्ञः ३ । २ । ६ ॥** दारूपाज्ज्ञातेश्च प्रोपसृष्टा-

A द्वयोस्तिष्ठतीति विग्रहः । एवम्–अम्बष्ठः । आम्बष्ठः । गोष्ठः । भूमिष्ठः । सव्यष्ठः । अपष्ठः । कुष्ठः । शेकुष्ठः । शङ्कुष्ठः । अङ्गुष्ठः । मञ्जिष्ठः । पुञ्जिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठः । अग्निष्ठः ॥

B मूलविभुज, नखमुच, काकगुह, कुमुद, महीध्र, कुध्र, गिल । आकृतिगणोऽयम् ॥

१ **ब्रह्मज्य इति** । नच कप्रत्यये आकारलोपेनेदं सिद्धमिति वाच्यम्, तथा सति सम्प्रसरणे इयङादेशे च " जियः " इत्यापत्तेः । " एरनेकाच " इति यण् तु नाशङ्क्यः, अङ्गस्यैकाच्त्वात् । ज्याधातोरेव प्रत्ययविधानात् । नच कर्मण्यधिकारे अकर्मकाज् ज्याधातोः कथं विधानमिति वाच्यम्, वचनसामर्थ्यात् । किञ्च ब्रह्म प्राप्तुं जिनातीत्यर्थान्न दोषः । वस्तुतस्तु अकर्मकेषु " सुपि " इत्यस्यैव सम्बन्ध इति न शङ्कावसरोऽपि ॥ २ **योगो विभज्यते इति** । इदं च विभक्तसूत्रं केवलोपसर्गे न प्रवर्तते, " आतश्चोपसर्गे " इत्यनेनैव सिद्धत्वात् । नापि कर्मण्युपपदे, " आतोऽनुपसर्गे कः " इत्यारम्भसामर्थ्यात् ॥ ३ **आरम्भसामर्थ्यादिति** । " सुपि– " इत्यनेन सिद्धस्यारम्भसामर्थ्यादित्यर्थः । आरम्भसामर्थ्यात् पूर्वापेक्षया " स्थः " इति सूत्रविषये किञ्चिद् वैलक्षण्यमवश्यं वाच्यम्, एवं चार्थनियामकस्य "कर्तरि" इत्यस्यानुपस्थितिरेव कल्प्यते । एवंचानिर्दिष्टार्थत्वाद् "भावे" इति लब्धम् । अत एवैतद्विहितप्रत्ययान्तस्य नित्यैकवचनान्तत्वमेव । लिङ्गसिद्धिस्तु लोकाश्रयत्वात् । उपपदसमाससिद्धिफलकश्चायं योगः । तेन "घञर्थे कविधानम्" इत्यनेन सिद्धिर्न शङ्कनीया । " घञर्थे कविधानम् " इत्यस्य कर्तृकारकार्थत्वात् ॥ ४ **प्रस्थ इति** । प्रतिष्ठतेऽस्मिन् धान्यादिकमित्यर्थे प्रस्थशब्दसिद्धिः ॥ ५ **प्रे दाज्ञ इति** । जनेर्नायं निर्देशः, "खनो घ च" इत्यादौ धातुनिर्देशेऽल्लोपाकरणात् । व्याख्यानाच्च ॥

त्कर्मण्युपपदे कः स्यादणोऽपवादः ॥ सर्वप्रदः । प्रथिप्रज्ञः । अनुपसर्ग इत्युक्तेः प्रादन्यस्मिन्सति न कः । गोसंप्रदायः ॥ **समि ख्यः । ३ । २ । ७ ॥** गोसंख्यः ॥ **गापोष्टक् । ३ । २ । ८ ॥** अनुपसृष्टाभ्यामाभ्यां टक् स्यात्कर्मण्युपपदे ॥ सामगः । सामगी । उपसर्गे तु सामसङ्गायः ॥ **पिबतेः सुराशीध्वोरिति वाच्यम्* ॥** सुरापी । शीधुपी । अन्यत्र क्षीरपा ब्राह्मणी । सुरां पाति रक्षतीति सुरापा ॥ **हरतेरनुद्यमनेऽच् । ३ । २ । ९ ॥** अंशहरः । अनुद्यमने किम् ? भारहारः ॥ **शक्तिलाङ्गलाङ्कुशतोमरयाष्टिघटघटीधनुःषु ग्रहेरुपसंख्यानम्* ॥** शक्तिग्रहः । लाङ्गलग्रहः ॥ **सूत्रे च धार्येऽर्थे * ॥** सूत्रग्रहः । यस्तु सूत्रं केवलमुपादत्ते न तु धारयति तत्राणेव । सूत्रग्राहः ॥ **वयसि च । ३ । २ । १० ॥** उद्यमनार्थं सूत्रम् । कवचहरः कुमारः ॥ **आङि ताच्छील्ये । ३ । २ । ११ ॥** पुष्पाण्याहरति तच्छीलः पुष्पाहरः । ताच्छील्ये किम् ? भाराहारः ॥ **अर्हः । ३ । २ । १२ ॥** अर्हतेरच् स्यात्कर्मण्युपपदे ॥ अणोऽपवादः । पूजार्हा ब्राह्मणी ॥ **स्तम्बकर्णयो रमिजपोः । ३ । २ । १३ ॥ हस्तिसूचकयोरिति वक्तव्यम् * ॥** स्तम्बे रमते स्तम्बेरमो हस्ती । तत्पुरुषे कृतीति हलदन्तादिति वा ङेर्लुक् । कर्णेजपः सूचकः ॥ **शमि धातोः संज्ञायाम् । ३ । २ । १४ ॥** शम्भवः शम्वदः । पुनर्धातुग्रहणं बाधकविषयेऽपि प्रवृत्त्यर्थम् । कृञो हेत्वादिषु टो मा भूत् । शङ्करा नाम परिव्राजिका तच्छीला ॥ **अधिकरणे शेतेः । ३ । २ । १५ ॥** खे शेते खशयः ॥ **पार्श्वादिषूपसंख्यानम् *॥** पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरेण शेते उदरशयः ॥ **उत्तानादिषु कर्तृषु * ॥** उत्तानः शेते उत्तानशयः । अवमूर्धशयः । अवनतो मूर्धा यस्य स अवमूर्धा । अधोमुखः शेते इत्यर्थः ॥ **गिरौ डश्छन्दसि * ॥** गिरौ शेते गिरिशः ॥ कथं तर्हि गिरिशमुपचचार प्रत्यहं सा सुकेशीति ? गिरिरस्यास्तीति विग्रहे लोमादित्वाच्छः ॥ **चरेष्टः ।३।२।१६॥** अधिकरणे उपपदे ॥ कुरुचरः । कुरुचरी ॥ **भिक्षासेनादायेषु च । ३ । २ । १७ ॥** भिक्षां चरतीति भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः । कथं प्रेक्ष्य स्थितां सहचरीमिति ? पचादिषु चरडिति पाठात् ॥ **पुरोऽग्रतोऽग्रेषु सर्तेः । ३ । २ । १८ ॥** पुरस्सरः । अग्रतस्सरः । अग्रमग्रेणाग्रे वा सरतीत्यग्रेसरः । सूत्रेऽग्रे इति एदन्तत्वमपि निपात्यते । कथं तर्हि यूथं तदग्रसरगर्वितकृष्णसारमिति ? बाहुलकादिति हरदत्तः ॥ **पूर्वे कर्तरि । ३ । २ । १९ ॥** कर्तृवाचिनि पूर्वशब्दे उपपदे सर्तेष्टः स्यात् ॥ पूर्वः सरतीति पूर्वसरः । कर्तरि किम् ? पूर्वं देशं सरतीति पूर्वसारः ॥ **कृञो हेतुताच्छील्यानुलोम्येषु । ३ । २ । २० ॥** एषु द्योत्येषु

---

१ इत्युक्तेरिति । अनुवृत्तेरित्यर्थः ॥ २ शक्तिलाङ्गलेति । उद्यमनार्थं वचनम् ॥ ३ सूत्रे चेति । धार्येऽर्थे गम्यमाने सति सूत्रशब्द उपपदे इत्यर्थः ॥ ४ टो मा भूदिति । परत्वादिति भावः ॥ ५ उत्तानादिष्विति । कर्तृभूतेषु उत्तानादिषूपपदेष्वित्यर्थः ॥ ६ आदायचर इति । गृहीत्वा गच्छतीत्यर्थः । सेनाचर इत्यस्य सेनायां भ्रमतीत्यर्थः ॥ ७ हरदत्त इति । अत्रार्हाचः–" अग्रेसर " इत्यस्यालुका सिद्धया एदन्तत्वनिपातने न मानम् । पूर्वनिपातस्तु बहुशो व्यभिचारित इति ॥ ८ कृञो हेत्विति । हेतुः कारणमात्रम् । आनुलोम्यमाराध्यचित्तानुवर्तनम् ॥

करोतेष्टः स्यात्॥ अतः कृकमीति सः। यशस्करी विद्या॥ श्राद्धकरः। वचनकरः॥ **दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजंघाबाह्वहर्यत्तद्धनुररुष्षु । ३ । २ । २१ ॥** एषु कृञष्टः स्यात् अहेत्वादावपि॥

---

१ ताच्छील्य उदाहरणमाह-**श्राद्धकर इति** । अत्रायं निष्कर्षः—"श्राद्धमिति शब्दो वाचको यस्य तत्कर्म श्राद्धशब्दम्" इति मदनपारिजातः । मनुसम्मतमापस्तम्बीयवचनमपि पूर्वोक्तेऽर्थे मानम् । यथा—"अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच प्रजानिःश्रेयसार्थं तत्र पितरो देवता ब्राह्मणस्त्वाहवनीयार्थे मासि मासि कार्यमपरपक्षस्यापराह्णः श्रेयान्" इति । यद्यपि श्रद्धायुक्तस्य यावत्कर्मण एव श्राद्धशब्देन भवति बोधस्तथापि--"अकालमृत्यु-" रितिपदवत् श्राद्धशब्दं पारिभाषिकं मत्वा शास्त्रीयपितृकृत्यमेव श्राद्धशब्दवाच्यम् । यथा "अकालमृत्यु-" रितिपदस्य विना कालं मरणमिति नार्थः "**स जातो यावदायुषं जीवति**" इति श्रुतिमूलकेन "**नाकाले म्रियते जन्तुः प्राप्ते काले न जीवति**" इति वचनेन विरोधात्। किंतु पशु-पक्षि-मकर-मृग-शृङ्गि-दंष्ट्रि-नखि-पतन-अनशन-वज्र-अग्नि-विष-बन्धन-जल-शर प्रभृतिजन्यं यन्मरणं तदेव अकालमृत्युशब्दाभिधेयम्, तथैव श्रद्धायुक्तस्य कर्ममात्रस्य श्राद्धेति नाम नास्ति किं तु पितृकृत्यस्यैवेति तात्पर्यम् ॥ अत एव कोशकारेणापि—"श्राद्धं तत्कर्मशास्त्रतः" इति कथितम् । ब्रह्मपुराणेऽपि—"**देशे काले च पात्रे च श्रद्धया विधिना च यत् । पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम् ॥**" इति वाक्येन पितृकृत्यस्यैव श्राद्धाभिधेयत्वं कथितम् । "**कर्मणा पितृलोकः**" (बृहदारण्यक) "**दक्षिणाप्रवणो वै पितृलोकः**" इत्यादिश्रुतिभ्यः स्पष्टमेव स्वतन्त्रः पितृलोकः प्रतीयते । यस्य अर्यमप्रभृतयः सन्त्यधिष्ठातारः पितृदेवाः । अधिकमन्यत्र ॥ अधुना पुराणेषु श्राद्धविषयकशङ्कापरवाक्यानि लिख्यन्ते-यथा-"**कथं कव्यानि दत्तानि हव्यानि च जनैरिह । गच्छन्ति पितृलोकं वा प्रापकः कोऽत्र गद्यते॥**" (पाद्म मात्स्य) ॥ "**तृप्तये जायते पुंसो भुक्तमन्येन चेत्ततः । दद्यात् श्राद्धं श्रद्धयाऽन्नं न वहेयुः प्रवासिनः ॥**" (वि० पु०) ॥ "**मृतानामपि जन्तूनां श्राद्धमाप्यायते ततः। निर्वाणस्य प्रदीपस्य तैलं संवर्द्धयेच्छिखाम् ॥**" (स्कान्द) ॥ "**किमर्थं क्रियते श्राद्धममावास्यादिषु द्विजैः। मृताश्च पुरुषा विप्र स्वकर्मजनितां गतिम् । गच्छन्ति ते कथं तस्य सुतस्याश्रममाययुः ॥**" (स्कान्दनागरखण्ड) इति ॥ इदानीं पूर्वोक्ताक्षेपपरिहारपरवाक्यानि लिख्यन्ते यथा-"**नामगोत्रं तु पितॄणां प्रापकं हव्यकव्ययोः । श्राद्धस्य मन्त्रास्तद्वच्च उपलभ्यानि भक्तितः ॥**" (मात्स्य पाद्म) ॥ "**एते श्राद्धं सदा भुक्त्वा पितॄन् सन्तर्पयन्त्युत। यत्र क्वचन धर्मज्ञा वर्तमानान् हि योगतः ॥**" (विष्णुधर्मोत्तर) इति ॥ अत्रैकोत्पद्यते क्षुद्रा शङ्का, सा यथा-मृतपुरुषाणां पुण्यपापरूपकर्मवैचित्र्याद् भिन्नासु भिन्नासु योनिषु गमनेन पशुपक्ष्यादियोनिषु प्राप्ता मृतपुरुषा मनुष्यभोजनेन कथं नाम तृप्तिं लभेरन्, यतः-यो यस्यां जातावुत्पन्नः स तज्जातीयभोगेनैव लभते तृप्तिमिति प्रसिद्धेः। अस्याः समाधानमाह देवलो मुनिः-"**देवो यदि पिता जातः शुभकर्मानुयोगतः। तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति ॥ गान्धर्वे भोग्यरूपेण पशुत्वे च तृणं भवेत् । श्राद्धान्नं वायुरूपेण नागत्वेऽप्यनुगच्छति ॥ पानं भवति यक्षत्वे राक्षसत्वे तथाऽऽमिषम्। दानवत्वे तथा मांसं प्रेतत्वे रुधिरोदकम् । मनुष्यत्वेऽन्नपानादिनानाभोगरसो भवेत्॥**" इति ॥ अनेनैवाभिप्रायेण तृतीयाध्याये मनुनापि "**निमन्त्रितान् हि पितर उपतिष्ठन्ति तान् द्विजान् । वायुवच्चानुगच्छन्ति तथाऽऽसीनानुपासते ॥**" (श्लो० १८४) इति श्लोकेन निमन्त्रितब्राह्मणानां शरीरेऽदृश्यवायुरूपेण पितॄणां प्रवेशोऽभाणि ॥ अधुना ये कथयन्ति वेदेषु पितृनिमित्त श्राद्धविधानं नास्ति, अस्ति चेत् जीवत्पितृनिमित्तं तदिति मृतपितृनिमित्तत्वकल्पना वेदविरुद्धेति तन्मतोच्चासनाय वैदिकमन्त्रा मृतपितृश्राद्धसूचकाः प्रदर्श्यन्ते-यथा-"**इदं पितृभ्यो नमोऽस्त्वद्य ये पूर्वासो य उपरास ईयुः। ये पार्थिवे रजस्यानिषत्ता ये वा नूनं सुवृजनासु विक्षु ॥**" (शुक्लयजुर्वेद अध्याय १९ मन्त्र ६८),

दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्सः । भास्करः । बहुकरः । बहुशब्दस्य वैपुल्यार्थं संख्यापेक्षया पृथग्ग्रहणम् । लिपिलिबिशब्दौ पर्यायौ । संख्या—एककरः । द्विकरः । कस्कादित्वादहस्करः । नित्यं समासेऽनुत्तरपदस्थस्येति षत्वम् । धनुष्करः । अरुष्करः ॥

---

--मन्त्रार्थः-ये ( पूर्वासः ) पूर्वे, पितरः ( ईयुः ) स्वर्गं जग्मुः, ये च ( उपरासः ) उपरमन्ते विरमन्ति ते उपराः, उपरतव्यापाराः कृतकृत्याः सन्तः परं ब्रह्म प्रापुः । यद्वा--ये ( पूर्वासः ) यजमानोत्पत्तेः पूर्वमेवोत्पन्ना ज्येष्ठभ्रातृपितामहादयः, ये च ( उपरासः ) यजमानजन्मन उपर्य्युत्पन्नाः कनिष्ठभ्रातृस्वपुत्रादयः ( ईयुः ) पितृलोकं प्राप्ताः, येऽप्यन्ये ( पार्थिवे रजसि ) पृथिवीसम्बन्धिनि रजोगुणकार्येऽस्मिन् पितृयज्ञाख्ये कर्मणि ( आनिषत्ताः ) हविः स्वीकर्तुमागत्योपविष्टाः ये वा ( सुवृजनासु ) धनसमृद्धया श्राद्धादिकर्मपरासु ( "वृज्यते= परित्यज्यते दारिद्र्यमनेनेति वृजनम्=धनम्, तत् शोभनं यासां ताः सुवृजनाः, तादृशीषु" इति सायणः ) ( विक्षु ) बन्धुरूपासु प्रजासु ( नूनम् ) निश्चयेन ( आनिषत्ताः ) श्राद्धादिस्वीकारायागत्योपविष्टाः, तेभ्यः सर्वेभ्यः पितृभ्यः ( अद्य ) अस्मिन् पितृयज्ञाख्ये कर्मणि ( नमोऽस्तु ) अयमाहुतिप्रदानपूर्वको नमस्कारो भवतु ॥ इति ॥ **"आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥"** ( शु० य० सं० अ० १९ म० ५८ ) । मन्त्रार्थः– ( नः ) अस्माकम्, देवयानैः ( पथिभिः ) मार्गैः, ( आयन्तु ) आगच्छन्तु, देवैः सह यान्ति पितरो येषु ते देवयाना मार्गास्तैः । कीदृशाः पितरः । ( सोम्यासः ) सोम्याः सोमपानार्हाः, पुनः ( अग्निष्वात्ताः ) अग्निना स्वात्ताः स्वादिताः, अग्निर्यान् दहन् स्वादयति । श्रौतस्मार्तकर्मानुष्ठायिनः । येषां पुत्रादिभिस्तत्कर्मानुष्ठीयते । तदुक्तम्–"पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्" इति । किंच--पितर आगत्य अस्मिन् यज्ञे ( स्वधया ) अन्नेन, ( मदन्तः ) तृप्यन्तस्तुष्टाः सन्तः ( नः ) अस्मान्, ( अधिब्रुवन्तु ) अधिकान् वदन्तु । तद्वाक्यात् तथैव वयमधिकाः स्यामेत्यर्थः । ( ते ) पितरः, अस्मान्, ( अवन्तु ) पालयन्तु ॥ इति ॥ **"अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः । अत्ता हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं दधातन ॥"** ( ऋ० अष्ट० ७ अ० ६ व० १९० मं० १० अनु० १ सू० १५ ) ( शु० य० अ० १९ मं० ५९ ) ( कृ० य० कां० २ प्र० ६ अ० १२ मं० ५ ) मन्त्रार्थः--हे ( अग्निष्वात्ताः ) अग्निनाऽऽस्वादिता वा अग्निष्वात्तनामानः पितरः, यूयम्--( इह ) अस्मिन् पितृयज्ञाख्ये कर्मणि, आगच्छत । आगत्य च ( सदःसदः ) स्वस्वस्थानम्, ( सदत ) यथेष्टमुपविशत । "नित्यवीप्सयोः" ( पा० ८ । १ । ४ । ) इति द्वित्वम् । कीदृशा यूयम् ( सुप्रणीतयः ) शोभना प्रणीतिः प्रणयनं येषां ते । अभिपूजितप्रणयना इत्यर्थः । उपविश्य च हवींषि ( अत्ता ) अत्त भक्षयत । अत्तेर्लोट् संहितायां दीर्घः । कीदृशानि हवींषि । ( बर्हिषि ) दर्भे, ( प्रयतानि ) नियमपूर्वकं स्थापितानि, प्रकर्षेण यम्यन्ते नियम्यन्ते तानि प्रयतानि । ( अथा ) अथ अनन्तरम्, ( रयिम् ) धनम्, ( नः ) अस्मभ्यम्, ( दधातन ) स्थापयत दत्त । "निपातस्य च" ( पा० ६ । ३ । १३६ ) इति दीर्घोऽथशब्दस्य । 'दधातन' इत्यत्र "तप्तनप्" ( पा० ७ । १ । ४५ ) इति तनबादेशः । कीदृशं रयिम् । ( सर्ववीरम् ) सर्वे वीरा यत्र तादृशम् । सर्वैः वीरैः पुत्रैरुपेतम् ॥ **"आच्या जानु दक्षिणतो निषद्येमं यज्ञमभिगृणीत विश्वे । मा हिंसिष्ट पितरः केनचिन्नो यद्व आगः पुरुषता कराम ॥"** ( ऋ० अ० ७ अ० ६ व० १८ मं० १० अनु० १ सू० १५ ) ( शु० य० अ० १९ मं० ६२ ) मन्त्रार्थः--हे ( विश्वे ) सर्वे पितरः सोमवन्तो बर्हिषदोऽग्निष्वात्ताश्च, यूयम् इमं यज्ञम्, ( अभिगृणीत ) साधुरयं यज्ञ इत्येवमभिष्टुत । किं कृत्वा ( जानु आच्या ) वामजानु भूमौ पातयित्वा । पुनः किं कृत्वा ( दक्षिणतो निषद्य ) दक्षिणाभिमुखा उपविश्य । किं च हे पितरः ( वः ) युष्माकम्, यत्किंचित् ( आगः ) कर्मवैगुण्यजनितमपराधम्, ( पुरुषता ) पुरुषस्य भावः पुरुषता । विभक्तिलोपे डादेशो वा छान्दसः । पुरुषभावेन मनुष्यत्वेन हेतुना ( कराम ) वयं कृतवन्तः, हे पितरः तेन केनचिद्

**कियत्तद्बहुषु कृञोऽज्विधानमिति वार्तिकम्** * ॥ किंकरा । यत्करा । तत्करा । हेत्वादौ टं बाधित्वा परत्वादच् । पुंयोगे ङीष् । किंकरी ॥ **कर्मणि भृतौ । ३ । २ । २२ ॥** कर्मशब्दे उपपदे करोतेट: स्यात् ॥ कर्मकरो भृतकः । कर्मकारोऽन्यः ॥ **न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु । ३ । २ । २३ ॥** एषु कृञष्टो न । हेत्वादिषु प्राप्तः प्रतिषिध्यते। शब्दकार इत्यादि॥**स्तम्बशकृतोरिन् ।३।२।२४ ॥ व्रीहिवत्सयोरिति वक्तव्यम्***॥स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः ॥ व्रीहिवत्सयोः किम् ? स्तम्बकारः । शकृत्कारः ॥ **हरतेर्दृतिनाथयोः पशौ । ३ । २ । २५ ॥** दृतिनाथयोरुपपदयोर्हृञ इन् स्यात्पशौ कर्तरि ॥ दृतिं हरतीति दृतिहरिः । नाथं नासारज्जुं हरतीति नाथहरिः ॥ पशौ किम् ? दृतिहारः । नाथहारः ॥ **फलेग्रहिरात्मम्भरिश्च । ३ । २ । २६ ॥** फलानि गृह्णाति फलेग्रहिः । उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते । आत्मानं बिभर्तीति आत्मम्भरिः । आत्मनो मुमागमः । भृञ इन् । चात्कुक्षिम्भरिः । चान्द्रास्तु आत्मोदरकुक्षिष्विति पेठुः । 'ज्योत्स्नाकरम्भमुदरम्भरश्चकोराः' इति मुरारिः ॥ **एजेः खश् । ३ । २ । २८ ॥** ण्यन्तादेजेः खश् स्यात् ॥ **अरुर्द्विषदजन्तस्य मुम् । ६ । ३ । ६७ ॥** अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात् खिदन्ते उत्तरपदे न त्वव्ययस्य ॥ शित्वाच्छबादि । जनमेजयतीति जनमेजयः ॥ **वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश उपसंख्यानम्** * ॥ वातमजा मृगाः ॥ **खित्यनव्ययस्य । ६ । ३ । ६६ ॥** खिदन्ते परे

---

–पराधेन ( नः ) अस्मान, मा ( हिंसिष्ट ) वधिष्ट । यद्यप्यपराधिनो वयं तथापि मास्मान् वधिष्टेत्यर्थः । कराम इति करोतेः शपि लङि रूपम् । अडभाव आर्षः । लोटि वा ॥ "**येऽग्निदग्धा येऽनग्निदग्धा मध्ये दिवः स्वधया मादयन्ते । तेभ्यः स्वराडसुनीतिमेतां यथावशं तन्वं कल्पयाति** ॥" ( ऋ० अष्ट० ७ अ० ६ व० १९ मण्ड० १० अनु० १ सू० १५ ) ( य० ध० अ० १८ मं० ६० ) अन्वयार्थः–ये ( अग्निदग्धाः ) श्मशानं प्राप्ताः, अग्निना दग्धा विधिवदौर्ध्वदेहिकं प्राप्ता इति यावत् । ये च ( अनग्निदग्धाः ) श्मशानकर्म न प्राप्ताः, ये च ( दिवः ) स्वर्गस्य द्युलोकस्य मध्ये ( स्वधया ) स्वकर्मोपार्जितेनान्नेन ( मादन्ते ) तृप्तिमाश्नन्ति । हे ( स्वराट् ) स्वेनैवराजते स्वराट् दीप्यमान अग्ने ! ( तेभ्यः ) पितृभ्यः ( असुनीतिम् ) असून् प्राणान् नयति प्राप्नोति इत्यसुनीतिस्ताम्, प्राणयुक्ताम्, ( एताम् ) भक्षणयोग्याम्, ( तन्वम् ) मनुष्यसम्बन्धिनीं तन्व शरीरम्, ( यथावशम् ) वशोऽभिलाषः यथाकामम्, ( कल्पयाति ) कल्पयतु । कल्पयातीत्यत्र लेट् "लेटोऽडाटौ" ॥ "**ये निखाता ये परोप्ता ये दग्धा ये चोद्धिताः । सर्वांस्तानग्न आवह पितॄन् हविषे अत्तवे** ॥" ( अथर्व० काण्ड० १८ प्रपा० ३३ अनु० २ मं० ३७ ) मन्त्रार्थस्तु सुगम एवेति नेह तन्यते । ( ये निखाताः ) भूम्यामिति ज्ञेयम् । ( ये परोप्ताः ) नद्यामिति ज्ञेयम् । ( ये दग्धाः ) अग्नाविति ज्ञेयम् । ( ये च उद्धिताः ) पृथिव्या निष्कास्य पुनर्दग्धा इति ज्ञेयम् । हे ( अग्ने ) ( तान् पितॄन् ) ( हविषे अत्तवे ) हविर्भक्षणाय ( आवह ) त्वं प्रापय ॥ अथर्ववेदे–"**यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः । तास्ते सन्तु विभ्वीः प्रभ्वीस्तास्ते यमो राजानुमन्यताम्** ॥" इति मन्त्रत आरभ्य "**स्वधा पितृभ्यः पृथिविषद्भ्यः**" "**स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः**" "**स्वधा पितृभ्यो दिविषद्भ्यः**" इत्यादिप्रकारेण अष्टादशकाण्डस्य समाप्तिपर्यन्तं श्राद्धविषयनिरूपणं कृतमस्ति विस्तरभियाऽस्माभिः सर्वेषामुपन्यासो नैव व्यधायि ॥ सामवेदेऽपि–"**स्वाहा सोमाय पितृमते**" इत्यादि १९ एकोनविंशतिमन्त्रैः श्राद्धकर्मणो निरूपणं कृतमस्ति तत एव सन्देहास्पदचित्तैरवलोकनीयम् ॥

। ३ । २ । १६३ ॥ इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः ॥ गत्वरश्च । ३ । २ । १६४ ॥ गमेरनुनासिकलोपोऽपि निपात्यते ॥ गत्वरी ॥ जागरूकः । ३ । २ । १६५ ॥ जागर्तेरूकः स्यात् ॥ जागरूकः ॥ यजजपदशां यङः । ३ । २ । १६६ ॥ एभ्यो यङन्तेभ्य ऊकः स्यात्।[1] दशामिति भाविना नलोपेन निर्देशः । यायजूकः । जञ्जपूकः । दन्दशूकः ॥ नमिकम्पिस्म्यजसकमहिंसदीपो रः । ३ । २ । १६७ ॥ नम्रः । कम्प्रः । स्मेरः । जसिर्नञ्पूर्वः क्रियासातत्ये वर्तते । अजस्रम् । सन्ततमित्यर्थः । कम्रः । हिंस्रः । दीप्रः ॥ सनाशंसभिक्ष उः । ३ । २ । १६८ ॥ चिकीर्षुः । आशंसुः । भिक्षुः ॥ विन्दुरिच्छुः । ३ । २ । १६९ ॥ वेत्तेर्नुम् इषेश्छत्वं च निपात्यते ॥ वेत्ति तच्छीलो विन्दुः । इच्छति इच्छुः ॥ क्याच्छन्दसि । ३ । २ । १७० ॥ 'देवाञ्जिगाति सुम्नयुः' ॥ आदृगमहनजनः किकिनौ लिट् च । ३ । २ । १७१ ॥ आदन्तादृदन्ताद्गमादिभ्यश्च किकिनौ स्तश्छन्दसि तौ च लिड्वत् ॥ पपिः सोमम् । ददिर्गाः । बभ्रिर्वज्रम् । जग्मिर्युवा । जघ्निर्वृत्रममित्रियम् । जज्ञिः ॥ भाषायां धाञ्कृसृगमिजनिनमिभ्यः * ॥ दधिः । चक्रिः । सस्रिः । जग्मिः । जज्ञिः । नेमिः ॥ सासहिवावहिचाचलिपापतीनामुपसंख्यानम् * ॥ यङन्तेभ्यः सहेत्यादिभ्यः किकिनौ पतेर्नीगभावश्च निपात्यते ॥ स्वपितृषोर्नजिङ् । ३ । २ । १७२ ॥ स्वप्नक् । तृष्णक् । तृष्णजौ । तृष्णजः । धृषेश्चेति वाच्यमिति काशिकादौ। धृष्णक्॥ शॄवन्द्योरारुः । ३ । २ । १७३ ॥ शरारुः । वन्दारुः ॥ भियः क्रुक्लुकनौ । ३ । २ । १७४ ॥ भीरुः । भीलुकः ॥ क्रुकन्नपि वाच्यः * ॥ भीरुकः ॥ स्थेशभासपिसकसो वरच् । ३ । २ । १७५ ॥ स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ॥ यश्च यङः । ३ । २ । १७६ ॥ यातेर्यङन्ताद्वरच् स्यात् ॥ 'अतो लोपः' । तस्य यलोपं प्रति स्थानिवद्भावनिषेधाल्लोपो व्योरिति यलोपः । अल्लोपस्य स्थानिवत्त्वमाश्रित्य आतो लोपे प्राप्ते—। वरे लुप्तं न स्थानिवत् । यायावरः ॥ भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् । ३ । २ । १७७ ॥ विभ्राट् । भाः । भासौ । धूः । धुरौ । विद्युत् । ऊर्क् । पूः । पुरौ । दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः । जूः । जुवौ । जुवः ॥ ग्रावशब्दस्य धातुना समासः सूत्रे निपात्यते । ततः क्विप् । ग्रावस्तुत् ॥ अन्येभ्योऽपि दृश्यते । ३ । २ । १७८ ॥ क्विप् ॥ छिद् । भिद् । दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । क्वचिद्दीर्घः क्वचिदसंप्रारणं क्वचिद्द्वे क्वचिद्ध्रस्वः । तथा च वार्तिकम् ॥ क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च * ॥ क्विब्वचीत्यादिना उणादिसूत्रेण केषांचित्सिद्धे तच्छीलादौ तृना बाधा मा भूदिति वार्तिके ग्रहणम् ॥ वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिं सा श्रीः ॥ द्युतिगमिजुहोतीनां द्वे च * ॥ दृशिग्रहणादभ्याससंज्ञा ॥ दिद्युत् । जगत् ॥ जुहोतेर्दीर्घश्च ॥ जुहूः । दॄ भये । अस्य ह्रस्वश्च । दीर्यति दद्रत् ॥ ध्यायतेः संप्रसारणं च * ॥ धीः ॥ भुवः संज्ञान्तरयोः । ३ । २ । १७९ ॥

---

१ अत एव ज्ञापकाल्लुप्ताकारस्य कित्त्वम् । तेन यातिरित्यादौ यङन्तात् क्विनि आतो लोपसिद्धिः ॥

मित्रभूर्नाम कश्चित्। धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः ॥**विप्रसंभ्यो ड्वसंज्ञायाम्। ३। २। १८०॥** एभ्यो भुवो डुः स्यान्न तु संज्ञायाम्॥ विभुर्व्यापकः। प्रभुः स्वामी। संभुर्जनिता। संज्ञायां तु विभूर्नाम कश्चित्॥ **मितद्र्वादिभ्य उपसंख्यानम् *** ॥ मितं द्रवतीति मितद्रुः। शतद्रुः। शम्भुः। अन्तर्भावितण्यर्थोऽत्र भवतिः॥ **धः कर्मणि ष्ट्रन्। ३। २। १८१॥** धेटो धाञश्च कर्मण्यर्थे ष्ट्रन् स्यात्॥ 'धात्री जनन्यामलकीवसुमत्युपमातृषु' ॥ **[1]दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे। ३। २। १८२॥** दावादेः ष्ट्रन् स्यात्करणेऽर्थे॥ दान्त्यनेन दात्रम्। नेत्रम्॥ **तितुत्रतथसिसुसरकसेषु च। ७। २। ९॥** एषां दशानां कृत्प्रत्ययानामिण्न स्यात्॥ शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्रम्। दंष्ट्रा। [2]नद्ध्री॥ **हलसूकरयोः पुवः। ३। २। १८३॥** पूङ्पूञोः करणे ष्ट्रन् स्यात् तच्चेत्करणं हलसूकरयोरवयवः॥ हलस्य सूकरस्य वा पोत्रम्। मुखमित्यर्थः॥ **अर्तिलूधूसूखनसहचर इत्रः। ३। २। १८४॥** अरित्रम्। लवित्रम्। धवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्॥ **पुवः संज्ञायाम्। ३। २। १८५॥** पवित्रम्। येनाज्यमुत्पूयते यच्चानामिकावेष्टनम्॥ **कर्तरि चर्षिदेवतयोः। ३। २। १८६॥** पुव इत्रः स्यात् ऋषौ करणे देवतायां कर्तरि। ऋषिर्वेदमन्त्रः। तदुक्तमृषिणेति दर्शनात्। पूयतेऽनेनेति पवित्रम्। देवतायां तु—अग्निः पवित्रं स मा पुनातु॥

इति पूर्वकृदन्तप्रकरणम्।

---

## अथोणादिप्रकरणम्।

**[3]कृवापाजिमिस्वदिसाध्यशूभ्य उण्॥** करोतीति कारुः शिल्पी कारकश्च। आतो युक्। वातीति वायुः। पायुर्गुदम्। जयत्यभिभवति रोगान् जायुरौषधम्। मिनोति प्रक्षि-

१ दाम्नीशसेति। अत्र दशेति कृतनलोपस्य दंशधातोर्निर्देशेनाकृत्यपि क्वचिदस्य नकारो लुप्यते तेन दन्तेषु "दशना" इति प्रयोगः सिद्ध्यति। नच निपातनस्य बाधकत्वमेवेति सर्वत्रैवास्य नलोप इति "दंष्ट्रा" इत्यनुपपन्नमिति शङ्क्यम्, "शुनो दन्तदंष्ट्रा" इति सूत्रनिर्देशेन काचित्कत्वस्यैव कल्पनात्। दंष्ट्राशब्देऽजादित्वाट्टाबिति बोध्यम्॥ २ नद्ध्रीति। 'नहो धः' इति हस्य धकारे 'झषस्तथोर्धोऽधः' इति प्रत्ययतकारस्य धकारे 'झलां जश् झशि' इति पूर्वस्य जश्त्वम्॥ इति पूर्वकृदन्तम्॥ ॥ ३ प्राय उणादिप्रत्ययान्ता रूढिशब्दा अवयवार्थशून्या असन्तमप्यवयवार्थमाश्रित्य व्युत्पाद्यन्ते—"कृवापा" इत्यादिना। उणादयः प्रायः कर्तरि भवन्ति बाहुलकादन्यत्रापीति बोध्यम्॥ अत्र वदन्ति,—"कृवापा" इत्यादिसूत्राणि "सर्वं नाम धातुजमाह शकटस्य च तोकम्" इति महाभाष्योक्तनैरुक्तमतानुसारीणि शकटायनादिप्रणीतव्याकरणान्तरादभियुक्तैः संगृहीतानि। अत एव "उणादयः—" इति सूत्रे भाष्ये "बहुलवचनं किमर्थम्" इति भाष्यप्रतीकमुपादाय "उणादयः" इत्येवोणादीनां शास्त्रान्तरपठितानां साधुत्वाभ्यनुज्ञानार्थमस्त्विति भावः" इति कैयटेनोक्तम्। अन्यथोणादीनां पाणिनीयत्वे कैयटोक्तः शास्त्रान्तरप्रयोगो विरुद्ध्येत॥ पाणिनेस्त्वव्युत्पत्तिपक्ष एव। अत एव "शंख" इत्यादावादेशवारणाय "उणादीनां प्रतिषेधो वक्तव्यः" इति वार्तिकमुपक्रम्य "न वक्तव्यः" "प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धम्" इति आचार्यैरपि भाष्ये उक्तम्। एवं

पति देहे ऊष्माणमिति मायुः पित्तम् । स्वादुः । साध्नोति परकार्यं साधुः । अश्नुते आशु शीघ्रम् । आशुर्व्रीहिः पाटलः स्यात् ॥ छन्दसीणः ॥ 'मान आयौ' ॥ **दृसनिजनिचरिचटिभ्यो ञुण्** ॥ दीर्यत इति दारु । 'स्नुः प्रस्थः सानुरस्त्रियाम्' । जानु । जानुनी । इह जनिवध्योश्चेति न निषेधः । अनुबन्धद्वैयसामर्थ्यात् । चारु रम्यम् । चाटु प्रियं वाक्यम् ॥ मृगय्वादित्वात्कुप्रत्यये चटु इत्यपि ॥ **किञ्जरयोः श्रिणः** ॥ किं शृणातीति किंशारुः सस्यशूकं बाणश्च । जरामेति जरायुर्गर्भाशयः । 'गर्भाशयो जरायुः स्यात्' ॥ **त्रो रश्च लः** ॥ तरन्त्यनेन वर्णा इति तालु ॥ **कृके वचः कश्च** ॥ कृकेन गलेन वक्तीति कृकवाकुः । 'कृकवाकुर्मयूरे च सरटे चरणायुधे' इति विश्वः ॥ **भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः** ॥ भरति बिभर्ति वा भरुः स्वामी हरश्च । म्रियन्तेऽस्मिन् भूतानि मरुर्निर्जलदेशः । शेते शयुरजगरः । तरुर्वृक्षः । चरन्ति भक्षयन्ति देवता अमुमिति चरुः । त्सरुः खड्गादिमुष्टिः । तनु स्वल्पम् । 'स्त्रियां मूर्तिस्तनुस्तनूः' । धनुः शस्त्रविशेषः । 'धनुषा च धनुं विदुः' । 'धनुरिवाजनि वक्र' इति श्रीहर्षः । मयुः किन्नरः । मद्गुः पानीयकाकीकेति रभसः । न्यङ्क्वादित्वात्कुत्वम् । सस्य जश्त्वेन दः ॥ **अणश्च** ॥ 'लवलेशकणाणवः' । चात्कटिवटिभ्याम् । कटति रसनां कटुः । वटति वदतीति वटुः ॥ **धान्ये नित्** ॥ धान्ये वाच्येऽण उप्रत्ययः स्यात् स च नित् ॥ नित्त्वादाद्युदात्तः । 'प्रियङ्गवश्च मेऽणवश्च मे' । 'व्रीहिभेदस्त्वणुः

–च "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" इति सिद्धम् । "अव्युत्पन्नानि" इत्यस्य "उद्देश्यत्वेन विधेयत्वेन वा पाणिनितात्पर्यविषयाणि" इत्यर्थः । अन्यथा हि वदतो व्याघातः । "उणादयः" इत्यस्य हि "उणादिप्रत्ययान्तानि" इत्येवार्थः । नहि तानि अव्युत्पन्नानि भवितुमर्हन्ति । अथाव्युत्पन्नानि, नहि तर्ह्युणादिप्रत्ययान्तानि । "उद्देश्यत्वेन" इत्याद्युक्त्या निमित्तत्वेन पाणिनितात्पर्यविषयताभ्युपगमस्तेन "अयामन्ताल्वाय्येत्न्विष्णुषु" इति सूत्रं संगच्छते । तदेतच्छब्देन्दुशेखरे सुव्यक्तं द्रष्टव्यम् । केचित्तु जातिव्यक्तिपक्षयोरिव अनयोरपि पक्षयोर्द्वयोर्व्यवस्थया प्रकृतशास्त्रे आश्रयणं युक्तम् । "उणादयोऽव्युत्पन्नानि" इत्ययमतिदेशो नतु वस्तुस्थितिकथनम् । आतिदेशिकस्यानित्यत्वाच व्युत्पन्नत्वमप्यत्र शास्त्रे निर्बाधम् । "अयामन्त–" इति सूत्रमत्रैवार्थे प्रमाणमित्युच्यताम् । अत एव "प्रत्ययस्य लुक–" इति सूत्रे कैयटेन "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति भाष्यमुपादाय "कंसग्रहणादुणादिप्रत्ययान्तानि प्रातिपदिकानि क्वचिद्व्युत्पत्तिकार्यं लभन्ते" इत्यर्थ उक्तः । किंच सर्वथैव प्रकृतशास्त्रे व्युत्पत्तिपक्षमनङ्गीकुर्वतां "ण्वुल्तृचौ" "न धातुलोप आर्धधातुके" "वेरपृक्तस्य" इत्यादिषु बहुप्रदेशेषु व्युत्पत्तिपक्षाश्रयणं भगवतः पतञ्जलेरसम्बद्धं स्यात् । "रात्री शकटी" इत्यादौ "कृदिकारादक्तिनः" इति ङीष्प्रत्ययस्य, "सर्पिषा यजुषा" इत्यादौ प्रत्ययत्वनिबन्धनस्य षत्वस्य, "प्रतिदीव्ना" इत्यादौ धातुत्वनिबन्धनस्य दीर्घस्य च समर्थने क्लेशोऽपि । तस्मादार्मनेयीति सूत्रस्थं प्रागुक्तं भाष्यं पक्षान्तरेण परिहाराभिप्रायकं नत्वत्र शास्त्रे व्युत्पत्तिपक्षाभावपरमिति योजनीयम् । अत एव "इसुसोः सामर्थ्ये" इति सूत्रे श्लोकवार्तिककारैः– "अथ चेत्कृदन्तमेतत् ततोऽधिकेनैव मे प्राप्तिः । वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्पेत ॥ अथ चेत्संविज्ञानं नित्ये षत्वे ततो विभाषेयम् । सिद्धं च मे समासे प्रतिषेधार्थस्तु यत्नोऽयम्" इत्यनेन षत्वविधावुभयोरपि पक्षयोर्निर्वाह उपपादित इत्याहुः ॥

१ अनुबन्धद्वयेति । स्वरार्थं ञित्त्वमेवास्त्विति भावः ॥

पुमान्'। निग्रहणं फलिपाटीत्यादि सूत्रमभिव्याप्य संबध्यते ॥ **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ॥** शृणातीति शरुः। 'शरुरायुधकोपयोः'। स्वरुर्वज्रम्। स्नेहुर्व्याधिः। चन्द्र इत्यन्ये। त्रपु सीसम्। 'पुंसि भून्म्यसवः प्राणाः'। 'वसुर्हृदेऽग्नौ योक्त्रेऽशौ वसु तोये धने मणौ'। हनुर्वक्त्रैकदेशः। क्लेदुश्चन्द्रः। बन्धुः। मनुः॥ चात् बिदि अवयवे। बिन्दुः॥ **स्यन्देः संप्रसारणं धश्च ॥** देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियामित्यमरः॥ **उन्देरिच्चादेः ॥** उनत्ति इन्दुः॥ **ईषेः किच्च ॥** ईषेरुः स्यात्स च कित् आदेरिकारादेशश्च ॥ ईषते हिनस्ति इषुः शरः। इषुर्द्वयोः॥ **स्कन्देः सलोपश्च ॥** कन्दुः॥ **सृजेरसुम् च ॥** चात्सलोप उप्रत्ययश्च। रज्जुः॥ **कृतेराद्यन्तविपर्ययश्च ॥** ककारतकारयोर्विनिमयः। तर्कुः सूत्रवेष्टनम्॥ **नावञ्चेः ॥** न्यङ्क्वादित्वात्कुत्वम्। नियतमञ्चति न्यङ्कुर्मृगः॥ **फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च ॥** फलेर्गुक्। फल्गुः। पाटेः पटिः। पाटयतीति पटुः। नम्यतेऽनेन नाकुर्वल्मीकम्। मन्यते इति मधु। जायते इति जतु॥ **वलेर्गुक्च ॥** वल संवरणे। वल्गुः॥ **शः कित्सन्वच्च ॥** श्यतेरुः स्यात्स च कित्सन्वच्च॥ शिशुर्बालः॥ **यो द्वे च ॥** 'ययुरश्वोऽश्वमेधीयः'। सन्वदिति प्रकृते द्वेग्रहणमित्वनिवृत्त्यर्थम्॥ **कुर्भ्रश्च ॥** 'बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ'। चादन्यतोऽपि। चक्रुः कर्ता। जघ्नुर्हन्ता। पपुः पालकः॥ **पॄभिदिव्याधिगृधिधृषिभ्यः ॥** कुः स्यात्॥ पुरुः। भिनत्ति भिदुर्वज्रम्। ग्रहिज्येति संप्रसारणम्। विरहिणं विध्यति विधुः। 'विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे'। गृधुः कामः। धृषुर्दक्षः॥ **कृग्रोरुच्च ॥** करोतीति कुरुः। गृणातीति गुरुः॥ **अपदुस्सुषु स्थः ॥** सुषामादिषु चेति षत्वम्। अपष्ठु प्रतिकूलम्। दुष्ठु। सुष्ठु॥ **रपेरिच्चोपधायाः ॥** अनिष्टं रपतीति रिपुः॥ **अर्जिदृशिकम्यमिपंसिबाधामृजिपशितुक्धुक्दीर्घहकाराश्च ॥** अर्जयति गुणान् ऋजुः। सर्वानविशेषेण पश्यतीति पशुः। कन्तुः। अन्धुः कूपः। 'पांशुर्ना न द्वयो रजः'। 'तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः'॥ बाधते इति बाहुः। बाहुः स्त्रीपुंसयोर्भुजः॥ **प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च ॥** त्रयाणां कुः संप्रसारणं भ्रस्जेः सलोपश्च। पृथुः। मृदुः। न्यङ्क्वादित्वात्कुत्वम्। भृज्जति तपसा भृगुः॥ **लङ्घिबंह्योर्नलोपश्च ॥** लघुः॥ **बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते ॥** रघुर्नृपभेदः। बहुः॥ **ऊर्णोतेर्नुलोपश्च ॥** ऊरु सक्थि॥ **महति ह्रस्वश्च ॥** उरु महत्॥ **श्लिषेः कश्च ॥** श्लिष्यतीति श्लिकुर्भृत्यः। उद्यतो ज्योतिश्च॥ **आङ्परयोः खनिशॄभ्यां डिच्च ॥** आखनतीत्याखुः। परं शृणातीति परशुः। पृषोदरादित्वादकारलोपात्पर्शुरपि॥ **हरिमितयोर्द्रुवः ॥** द्रु गतौ अस्मात् हरिमितयोरुपपदयोः कुः स च डित्॥ हरिभिर्द्रूयते हरिद्रुर्वृक्षः। मितं द्रवति मितद्रुः समुद्रः॥ **शते च ।** शतधा द्रवति शतद्रुः। बाहुलकात्केवलादपि। **द्रवत्प्-**

---

१ वल्गुरिति। कण्ड्वादिपठितप्रातिपदिकेनैव सिद्धे इदं व्यर्थम्॥

र्ध्वमिति दुर्वृक्षः शाखा च । तद्वान् द्रुमः ॥ **खरु शङ्कु पीयु नीलङ्गु लिगु ॥** पञ्चैते कुप्रत्ययान्ता निपात्यन्ते ॥ खनते रेफश्चान्तादेशः । खरुः कामः क्रूरो मूर्खः अश्वश्च । शङ्कुर्ना कीलशल्ययोः ॥ पिबतेरीत्वं युगागमश्च । पीयुर्वायसः कालः सुवर्णं च । निपूर्वाल्लगि गतावित्यस्मात्कुत्वं नेर्दीर्घश्च । नीलङ्गुः क्रिमिविशेषः शृगालश्च । नीलाङ्गुरिति पाठान्तरम्। तत्र धातोरपि दीर्घः । लगे सङ्गे । अस्य अत इत्वं च । लगतीति लिगु चित्तम् । लिगुर्मूर्खः॥ **मृगय्वादयश्च ॥** एते कुप्रत्ययान्ता निपात्यन्ते ॥ मृगं यातीति मृगयुर्व्याधः । देवयुर्धार्मिकः । मित्रयुर्लोकयात्राभिज्ञः । आकृतिगणोऽयम् ॥ **मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ॥** मन्दुरा वाजिशाला । वाशुरा रात्रिः । मथुरा । चतुरः । चङ्कुरो रथः । अङ्कुरः । खर्जूरादित्वादङ्कूरोऽपि ॥ **व्यथेः सम्प्रसारणं किच्च ॥** विथुरश्चोररक्षसोः ॥ **मुकुरदर्दुरौ ॥** मुकुरो दर्पणः । बाहुलकान्मकुरोऽपि । दॄ विदारणे । धातोर्द्विर्वचनमभ्यासस्य रुक् टिलोपश्च । दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः । दर्दुरा चण्डिकायां स्याद्ग्रामजाले च दर्दुरमिति विश्वः ॥ **मद्गुरादयश्च ॥** उरजन्ता निपात्यन्ते ॥ माद्यतेर्गुक् । मद्गुरो मत्स्यभेदः ॥ कर्ब वर्णे । रुमागमः । 'कर्बुरः श्वेतरक्षसोः' । बध्नातेः खर्जूरादित्वादूरोऽपि । 'बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु' इति रन्तिदेवः ॥ **कोकतेर्वा कुक् ॥** कुक्कुरः । कुकुरः ॥ **असेरुरन् ॥** असुरः ॥ प्रज्ञाद्यण् । आसुरः ॥ **मसेश्च ॥** पञ्चमे पादे मसेरूरन्निति वक्ष्यते ॥ मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति ॥ मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः ॥ मसूरी पादरोगे स्यादुपधाने पुनः पुमान् ॥ मसूरमसुरौ च द्वाविति विश्वः ॥ **शावशेराप्तौ ॥** शु इति आश्चर्ये । श्वशुरः । पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोरित्यमरः ॥ **अविमह्योष्टिषच् ॥** अविषः । महिषः ॥ **अमेर्दीर्घश्च ॥** 'आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि' ॥ **रुहेर्वृद्धिश्च ॥** रङ्कुशम्बररौहिषाः । रौहिषो मृगभेदे स्याद्रौहिषं च तृणं मतमिति संसारावर्तः ॥ **तवेर्णिद्वा ॥** तवेति सौत्रो धातुः । तविषताविषावब्धौ स्वर्गे च । स्त्रियां तविषी ताविषी नदी देवकन्या भूमिश्च । तविषी बलमिति वेदभाष्यम् ॥ **नञि व्यथेः ॥** अव्यथिषोऽब्धिसूर्ययोः । अव्यथिषी धरारात्र्योः ॥ **किलेर्बुक् च ॥** किल्बिषम् ॥ **इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् ॥** इषिरोऽग्निः । मदिरा सुरा । मुदिरः कामुकाभ्रयोरिति विश्वमेदिन्यौ । खिदिरश्चन्द्रः । छिदिरोऽसिकुठारयोः । भिदिरं वज्रम् । मन्दिरं गृहम् । स्त्रियामपि । मन्दिरं मन्दिरापि स्यादिति विश्वः । चन्दिरौ चन्द्रहस्तिनौ । तिमिरं तमोऽक्षिरोगश्च । मिहिरः सूर्यः । मुहिरः काम्यसभ्ययोः । मुचिरो दाता । रुचिरम् । रुधिरम् । बधिरः । शुष शोषणे । शुषिरं छिद्रम् । शुष्कमित्यन्ये ॥ **अशेर्णित् ॥** आशिरो वह्निरक्षसोः ॥ **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ॥** अजेर्वीभावाभावः ।

---

१ तवेति सौत्र इति । "तु" इति सौत्रात् प्रत्ययो णिद्वा" इति युक्तं वक्तुम् ॥

अजिरमङ्गणम् । शशेरुपधाया इत्वम् । 'शिशिरं स्यादृतोर्भेदे तुषारे शीतलेऽन्यवत्' । श्रथ मोचने उपधाया इत्वं रेफलोपः । प्रत्ययरेफस्य लत्वम् । शिथिलम् । स्यास्फाय्योष्टिलोपः । स्थिरं निश्चलम् । स्फिरं प्रभूतम् । तिष्ठतेर्वुक् ह्रस्वत्वं च । स्थविरः । खदिरः । बाहुलकात् शीङो वुक् ह्रस्वत्वं च । शिबिरम् ॥ **सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डि-तुण्डिकुकिभूभ्य इलच्** ॥ सलति गच्छति निम्नमिति सलिलम् । कलिलम् । अनिलः । महिला । पृषोदरादित्वान्महेलापि । भड इति सौत्रो धातुः । भडिलौ शूरसेवकौ । भण्डिलो दूतः कल्याणं च । शण्डिलो मुनिः । पिण्डिलो गणकः । तुण्डिलो मुखरः । कोकिलः । भविलो भव्यः । बाहुलकात्कुटिलः ॥ **कमेः पश्च** ॥ कपिलः ॥ **गुपादिभ्यः कित्** ॥ गुपिलो राजा । तिजिलो निशाकरः । गुहिलं वनम् ॥ **मिथिलादयश्च** ॥ मथ्यन्तेऽत्र रिपवो मिथिला नगरी । पथिलः—पथिकः ॥ **पतिकठिकुठिगडिगुडिदंशिभ्य एरक्** ॥ पतेरः पक्षी गन्ता च । कठेरः कृच्छ्रजीवी । कुठेरः पर्णाशः । बाहुलकान्नुम् । गडेरो मेघः । गुडेरो गुडकः । दशेरो हिंस्रः ॥ **कुम्बेर्नलोपश्च** ॥ कुवेरः ॥ **शदेस्त च** ॥ शतेरः शत्रुः ॥ **मूलेरादयः** ॥ एरगन्ता निपात्यन्ते ॥ मूलेरो जटा । गुधेरो गोप्ता । गुहेरो लोहघातकः । मुहेरो मूर्खः ॥ **कवेरोतच् पश्च** ॥ कपोतः पक्षी ॥ **भातेर्डवतुः** ॥ भातीति भवान् ॥ **कठिचकिभ्यामोरन्** ॥ कठोरः । चकोरः ॥ **किशोरादयश्च** ॥ किम्पूर्वस्य शृणातेष्टिलोपः किमोऽन्त्यलोपश्च ॥ किशोरोऽश्वशावः । सहोरः साधुः ॥ **कपिगडिगण्डिकटिपटिभ्य ओलच्** ॥ कपीति निर्देशान्नलोपः ॥ कपोलः । गडोलगण्डोलौ गुडकपर्यायौ । कटोलः । कटुः । पटोलः ॥ **मीनातेरूरन्** ॥ मयूरः ॥ **स्यन्देः संप्रसारणं च** ॥ सिन्दूरम् ॥ **सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्** ॥ सिनोतीति सेतुः । तितुत्रेति नेट् । तन्तुः । गन्तुः । मस्तु दधिमण्डम् । सच्यत इति सक्तुः । अर्धर्चादिः । ज्वरत्वरेत्यूठ् । तत्र क्ङितीत्यनुवर्तत इति मते तु बाहुलकात् । ओतुर्बिडालः । धातुः क्रोष्टा ॥ **पः किच्च** ॥ पिबतीति पितुर्वह्नौ दिवाकरे ॥ **अर्तेश्च तुः** ॥ अर्तेस्तुः स्यात्स च कित् ॥ ऋतुः स्त्रीपुष्पकालयोः ॥ **कमिमनिजनिगाभायाहिभ्यश्च** ॥ एभ्यस्तुः स्यात् ॥ कन्तुः कन्दर्पचित्तयोः । मन्तुरपराधः । जन्तुः प्राणी । गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च । भातुरादित्यः । यातुरध्वगकालयोः । रक्षसि क्लीबे । हेतुः कारणम् ॥ **चायः किः** ॥ केतुर्ग्रहपताकयोः ॥ **आप्नोतेर्ह्रस्वश्च** ॥ अप्तुः शरीरम् ॥ **वसेस्तुन्** ॥ वस्तु ॥ **अगारे णिच्च** ॥ वेश्मभूर्वास्तुरस्त्रियाम् ॥ **कृञः क्तुः** ॥ क्रतुर्यज्ञः ॥ **एधिवह्योश्च तुः** ॥ एधतुः पुरुषः । वहतुरनड्वान् ॥ **जीवेरातुः** ॥ 'जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे' ॥ **आतृकन् वृद्धिश्च** ॥ जीवेरित्येव ॥ जैवातृकस्त्विन्दुभिषगायुष्मत्सु कृशीवले ॥ **कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः** ॥ 'कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता' । चमूः । तनूः । धनूः । शकम् । सर्ज सर्जने । सर्जूर्वणिक् । खर्ज व्यथने । खर्जूः पामा ॥ **मृजेर्गुणश्च** ॥ मर्जूः शुद्धिकृत् ॥ वहो

धश्च ॥ वधूर्जायास्नुषास्त्रीषु ॥ कषेश्छश्च ॥ कच्छूः पामा ॥ णित्कसिपद्यर्तेः ॥ कासूः शक्तिः । पादूश्चरणधारिणी । आरूः पिङ्गलः ॥ अणो डश्च ॥ आडूर्जलप्लवद्रव्यम् ॥ नञि लम्बेर्नलोपश्च ॥ 'तुम्ब्यलाबूरुभे समे' इत्यमरः ॥ के श्र एरङ् चास्य ॥ कशब्दे उपपदे शृणाते रूः स्यादेरङ् आदेशः ॥ कशेरूस्तृणकन्दे स्त्री । बाहुलकादुप्रत्यये कशेरुः क्लीबे पुंसि च ॥ त्रो दुट् च ॥ तरतेरूः स्यात्तस्य दुट् ॥ तर्दूः स्याद्दारुहस्तकः ॥ दरिद्रातेर्यालोपश्च ॥ इश्च आश्च यौ तयोर्लोपः । दर्द्रूः कुष्ठप्रभेदः ॥ नृतिशृध्योः कूः ॥ नृतूर्नर्तकः । शृधूरपानम्॥ ऋतेरम् च ॥ ऋतिः सौत्रो धातुः । ततः कूरमागमश्च । रन्तूर्देवनदी सत्यवाक् च ॥ अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः ॥ एते कूप्रत्ययान्ता निपात्यन्ते ॥ अन्दूर्बन्धनम् । दृभी ग्रन्थे । निपातनान्नुम् । दृम्भूः । अनुस्वाराभावोऽपि निपातनादित्येके । दृन्भूः ॥ जनेर्बुक् ॥ जम्बूः । जमु अदनेऽस्येत्येके । बाहुलकाद्ध्रस्वोऽपि । जम्बुः । कफं लाति कफेलूः श्लेष्मातकः । निपातनादेत्वम् । कर्कं दधाति कर्कन्धूर्बदरी । निपातनान्नुम् । दिधिं धैर्यं स्यति त्यजतीति दिधिषूः पुनर्भूः । केचित्तु अन्दूदृम्फूजम्बूकम्बू इति पठन्ति । दृम्फ उत्क्लेशे । दृम्फूः सर्पजातिः । कमेर्बुक् । कम्बूः परद्रव्यापहारी ॥ मृग्रोरुतिः ॥ मरुत् । गरुत् पक्षः ॥ ग्रो मुट् च ॥ गिरतेरुतिस्तस्य च मुट् ॥ गर्मुत्सुवर्णं तृणविशेषश्च ॥ हृषेरुलच् ॥ हृषुलो मृगकामिनोः । बाहुलकाच्चटतेः ॥ चटुलं शोभनम् ॥ हसृरुहियुषिभ्य इतिः ॥ 'हरित्ककुभि वर्णे च तृणवाजिविशेषयोः' । सरिन्नदी । रोहित् मृगविशेषस्य स्त्री । युष इति सौत्रो धातुः । 'मत्स्यस्य रोहित् पुरुषस्य योषित्' इति भाष्यम् ॥ ताडेर्णिलुक् च ॥ ताडयतीति तडित् ॥ शमेर्ढः ॥ बाहुलकादित्संज्ञा एयादेश इट् च न ॥ शण्ढः स्यात्पुंसि गोपतौ । शण्ढः क्लीबः ॥ कमेरठः ॥ कमठः । कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकमिति मेदिनी । बाहुलकाज्जरठः ॥ रमेर्वृद्धिश्च ॥ रामठं हिङ्गु । शमेः खः ॥ शङ्खः ॥ कणेष्ठः ॥ कण्ठः ॥ कलस्तृपश्च ॥ तृपतेः कलप्रत्ययः चात्तृफतेः ॥ तृपला लता । तृफला त्रिफलात्रिके ॥ शपेर्वश्च ॥ शबलः ॥ वृषादिभ्यश्चित् ॥ वृषलः । पललम् । बाहुलकाद्गुणः । सरलः । तरलः । कमेर्बुक् । कम्बलः । मुस खण्डने । मुसलम् ॥ लङ्गेर्वृद्धिश्च ॥ लाङ्गलम् ॥ कुटिकशिकौतिभ्यः प्रत्ययस्य मुट् ॥ कुट्मलः । कुडेरपि । कुड्मलः । कश्मलम् । बाहुलकाद्गुणः । कोमलम् ॥ मृजेष्टिलोपश्च ॥ मलम् ॥ चुपेरच्चोपधायाः ॥ चपलम् ॥ शकिशम्योर्नित् ॥ शकलम् । शमलम् ॥ छो गुक् ह्रस्वश्च ॥ छगलः । प्रज्ञादित्वाच्छागलः ॥ अमन्ताड्डः ॥ रण्डः । रण्डा । खण्डः । मण्डः । वण्डश्छिन्नहस्तः । अण्डः । बाहुलकात्सत्वाभावः । षण्डः संघातः । तालव्यादिरित्यपरे । शण्डः । गण्डः । चण्डः । पण्डः क्लीबः । पण्डा बुद्धिः ॥ कादिभ्यः कित् ॥ कवर्गादिभ्यो डः कित्स्यात् ॥ कुण्डम् । काण्डम् । गुड् । गुडः । घुण भ्रमणे । घुण्डो भ्रमरः॥ स्थाचतिमृजोरालज्वालञालीयचः ॥ तिष्ठतेरालच् । स्थालम् । स्थाली । चतेर्वा-

लच् । चात्वालः । मृजेरालीयच् । मार्जालीयो बिडालः ॥ **पतिचण्डिभ्यामालञ्** । पातालम् । चण्डालः । प्रज्ञादित्वादणि चाण्डालोऽपीत्येके ॥ **तमिविशिबिडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन्** ॥ तमालः । विशालः । बिडालः । मृणालम् । कुलालः । कपालम् । पलालम् । पञ्चालाः ॥ **पतेरङ्गच् पक्षिणि** ॥ पतङ्गः ॥ **तरत्यादिभ्यश्च** ॥ तरङ्गः । लवङ्गम् ॥ **बिडादिभ्यः कित्** ॥ बिडङ्गम् । मृदङ्गः । कुरङ्गः । बाहुलकादुत्वं च ॥ **सृवृञोर्वृद्धिश्च** ॥ सारङ्गः । वारङ्गः खड्गादिमुष्टिः ॥ **गन् गम्यद्योः** ॥ गङ्गा । अद्गः पुरोडाशः ॥ **छापूखडिभ्यः कित्** ॥ छागः । पूगः । खड्गः । बाहुलकात् षिट अनादरे गन्सत्वाभावश्च । षिड्गः तरलः । षिड्गैरगद्यत ससंभ्रममेवमेकेति माघः ॥ **भृञः किन्नुट् च** ॥ भृञो गन् कित्स्यात्तस्य नुट् च । 'भृङ्गाः षिड्गालिधूम्याटाः' ॥ **शृणातेर्ह्रस्वश्च** ॥ शृङ्गम् ॥ **गण् शकुनौ** ॥ नुट् चेत्यनुवर्तते । शार्ङ्गः ॥ **मुदिग्रोर्गग्गौ** ॥ मुद्गः । गर्गः ॥ **अण्डन् कृसृभृवृञः** ॥ करण्डः । सरण्डः पक्षी । भरण्डः स्वामी । वरण्डो मुखरोगः ॥ **शृद्भसोऽदिः** ॥ शरत् । दरद्धृदयकूलयोः । भसज्जघनम् ॥ **दृणातेः षुग् ह्रस्वश्च** ॥ दृषत् ॥ **त्यजितनियजिभ्यो डित्** ॥ त्यद् । तद् । यद् । सर्वादयः ॥ **एतेस्तुट् च** ॥ एतद् ॥ **सर्तेरटिः** ॥ 'सरट् स्याद्वातमेघयोः' । वेदभाष्ये तु याभिः कृशानुमिति मन्त्रे सरड्भ्यो मधुमक्षिकाभ्य इति व्याख्यातम् ॥ **लङ्घेर्नलोपश्च** ॥ लघट् वायुः ॥ **पारयतेरजिः** ॥ पारक् सुवर्णम् ॥ **प्रथेः कित्संप्रसारणं च** ॥ पृथक् । स्वरादिपाठादव्ययत्वम् ॥ **भियः षुग् ह्रस्वश्च** ॥ भिषक् ॥ **युष्यसिभ्यां मदिक्** ॥ युष् सौत्रो धातुः । युष्मद् । अस्मद् । त्वम् । अहम् ॥ **अर्तिस्तुसुहुसृधृक्षिक्षुभायावापादियक्षिनीभ्यो मन्** ॥ एभ्यश्चतुर्दशभ्यो मन् ॥ अर्मश्चक्षूरोगः । स्तोमः सङ्घातः । सोमः । होमः । सर्मो गमनम् । धर्मः । क्षेमं कुशलम् । क्षोमम् । प्रज्ञाद्यणि क्षौमं च । भाम आदित्यः । यामः । वामः शोभनदुष्टयोः । पद्मम् । यक्ष पूजायाम् । यक्ष्मो रोगराजः । नेमः ॥ **जहातेः सन्वदालोपश्च** ॥ जिह्मः कुटिलमन्दयोः ॥ **अवतेष्टिलोपश्च** ॥ मन्प्रत्ययस्यायं टिलोपो न प्रकृतेः । अन्यथा डिदित्येव ब्रूयात् । ज्वरत्वरेत्यूठौ । तयोर्दीर्घे कृते गुणः । चादिपाठादव्ययत्वमित्युज्ज्वलदत्तस्तन्न । तेषामसत्त्वार्थत्वात् । वस्तुतस्तु स्वरादिपाठादव्ययत्वम् । अवतीति ओम् । **ग्रसेरा च** ॥ ग्रामः ॥ **अविसिविसिशुषिभ्यः कित्** ॥ ऊमं नगरम् । स्यूमो रश्मिः । सिमः सर्वः । शुष्ममग्निसमीपयोः ॥ **इषियुधीन्धिदसिश्याधूसूभ्यो मक्** ॥ इष्मः कामवसन्तयोः । ईषीति पाठे दीर्घादिः । युध्मः शरो योद्धा च । इध्मः समित् । दस्मो यजमानः । श्यामः । धूमः । सूमोऽन्तरिक्षम् । बाहुलकादीर्मम् व्रणः ॥ **युजिरुचितिजां कुश्च** ॥ युग्मम् । रुक्मम् । तिग्मम् ॥ **हन्तेर्हि च** ॥ हिमम् ॥ **भियः षुग्वा** ॥ भीमः । भीष्मः ॥ **घर्मः** ॥ घृधातोर्मग्गुणश्च निपात्यते ॥ **ग्रीष्मः** ॥ ग्रसतेर्निपातोऽयम् ॥ **प्रथेः षिवन् संप्रसारणं**

च ॥ पृथिवी । पत्रन्तियेके । 'पृथवी पृथिवी पृथ्वी' इति शब्दार्णवः ॥ **अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्** ॥ अश्वः । प्रुष स्नेहनादौ । 'प्रुष्वः स्यादृतुसूर्ययोः' । प्रुष्वा जलकणिका । लट्वा पक्षिभिदः फलं च । कण्वं पापम् । बाहुलकादित्वे किण्वमपि । खट्वा । विश्वम् ॥ **इण्शीभ्यां वन्** ॥ एवो गन्ता । 'ये च एवा मरुतः' । असत्त्वे निपातोऽयम् । 'शेवं मित्राय वरुणाय' ॥ **सर्वनिघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अतन्त्रे** ॥ अकर्तर्येते निपात्यन्ते ॥ सृतमनेन विश्वमिति सर्वम् । निपूर्वाद्धृषेर्गुणाभावोऽपि । निघृष्यतेऽनेन निघृष्वः खुरः । रिष्वो हिंस्रः । लष्वो नर्तकः । लिष्व इत्यन्ये ; तत्रोपधाया इत्वमपि । शेतेऽस्मिन् सर्वमिति शिवः शम्भुः । शीङो ह्रस्वत्वम् । पट्वो रथो भूलोकश्च । प्रहूयते इति प्रह्वः । ह्वेञ आकारवकारलोपः । जहातेरालोपो वा ईषेर्वन् । ईष्व आचार्यः । इष्व इत्यन्ये । अतन्त्रे किम् ? सर्ता । सारकः । बाहुलकाद् ह्वसतेर्ह्रस्वः ॥ **शेवयह्वजिह्वाग्रीवाप्वामीवाः** ॥ शेवं इत्यन्तोदात्तार्थम्[1] । यान्त्यनेन यह्वः ॥ ह्रस्वो हुगागमश्च । लिहन्त्यनया जिह्वा । लकारस्य जः गुणाभावश्च । गिरन्त्यनया ग्रीवा । इडागमश्च । आप्नोतीत्याप्वा वायुः ॥ मीवा उदरकृमिः । वाशुरित्यन्ये ॥ **कॄगॄशॄदॄभ्यो वः** ॥ कर्वः काम आखुश्च । गर्वः । शर्वः । दर्वो राक्षसः ॥ **कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः** ॥ यौतीति युवा । वृषा इन्द्रः । तक्षा । राजा । धन्वा मरुः । धन्व शरासनम् । द्युवा सूर्यः । प्रतिदीव्यन्त्यस्मिन् प्रतिदिवा दिवसः ॥ **सप्यशूभ्यां तुट् च** ॥ सप्त । अष्ट ॥ **नञि जहातेः** ॥ अहः ॥ **श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति** ॥ एते त्रयोदश कनिन्प्रत्ययान्ता निपात्यन्ते ॥ श्वयतीति श्वा । उक्षा । पूषा । प्लिह गतौ । इकारस्य दीर्घत्वम् । प्लेहते इति प्लीहा कुक्षिव्याधिः ॥ क्लिदू आर्द्रीभावे । क्लिद्यति क्लेदा चन्द्रः । स्निह्यतेर्गुणः—स्निह्यतीति स्नेहा सुहृच्चन्द्रश्च । मुह्यन्त्यस्मिन्नाहते मूर्धा । मुहेरुपधाया दीर्घो धोऽन्तादेशो रमागमश्च । मज्जत्यस्थिषु मज्जा अस्थिसारः । अर्यपूर्वो माङ्—अर्यमा । विश्वं प्साति विश्वप्सा अग्निः । परिजायते परिज्मा चन्द्रोऽग्निश्च, जनेरुपधालोपो मश्चान्तादेशः । मातरि अन्तरिक्षे श्वयतीति मातरिश्वा धातोरिकारलोपः । मह पूजायाम्—हस्य घो वुगागमश्च । मघवा इन्द्रः ॥

इत्युणादिषु प्रथमः पादः ॥

---

## अथोणादिषु द्वितीयः पादः ।

**कृहृभ्यामेणुः** ॥ करेणुः । हरेणुर्गन्धद्रव्यम् ॥ **हनिकुषिनीरमिकाशिभ्यः क्थन्** ॥ हथो विषण्णः । कुष्ठः । नाथो नेता । रथः । काष्ठम् ॥ **अवे भृञः** ॥ अवभृथः ॥ **उषिकुषिगार्तिभ्यस्थन्** ॥ ओष्ठः । कोष्ठम् । गाथा । अर्थः । बाहुलकात् शोथः ॥ **सर्ते-**

---

१ "इण्शीभ्याम्" इत्येव सिद्धे "शेव" इति व्यर्थमत आह–अन्तोदात्तेति ॥ इति प्रथमपादः ॥

**णित्** ॥ सार्थः समूहः ॥ **जॄवृञ्भ्यामूथन्** ॥ जरूथं मांसम् । वरूथो रथगुप्तौ ना ॥ **पातॄतुदिवचिरिचिसिचिभ्यस्थक्** ॥ पीथो रविर्घृतं पीथम् । तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टाम्भः स्त्रीरजःसु च विश्रुतमिति विश्वः । तुत्थोऽग्निः । उक्थं सामभेदः । रिक्थम् । बाहुलकाद्वेचेरपि—'रिक्थमृक्थं धनं वसु' । सिक्थम् ॥ **अर्तेनिरि** ॥ निर्ऋथं साम ॥ **निशीथगोपीथावगथाः** ॥ निशीथोऽर्धरात्रः रात्रिमात्रं च । गोपीथं तीर्थम् । अवगथः प्रातः स्नातः ॥ **गश्चोदि** ॥उद्गीथः साम्नो भागविशेषः॥ **समीणः**॥ समिथो वह्निः संग्रामश्च ॥ **तिथपृष्ठगूथयूथप्रोथाः** ॥ तिजेर्जलोपः । तिथोऽनलः कामश्च । पृष्ठम् । गूथं विष्ठा । यूथं समूहः । 'प्रोथमस्त्री तुरङ्गास्ये प्रोथः प्रस्थित उच्यते' ॥ **स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्** ॥ द्वात्रिंशद्भ्यो रक् स्यात् ॥ वलि यलोपः । स्फारम् । न्यङ्क्वादित्वात्कुत्वम् । तक्रम् । वक्रम् । शक्रः । क्षिप्रम् । क्षुद्रः । सृप्रश्चन्द्रः । तृप्रः पुरोडाशः । दृप्रो बलवान् । वन्द्रः पूजकः । उन्दी—उन्द्रो जलचरः । श्वित्रं कुष्ठम् । 'वृत्रो रिपौ ध्वनो ध्वान्ते शैले चक्रे च दानवे' । अजेर्वी—वीरः । नीरम् । पद्रो ग्रामः । मद्रो हर्षः देशभेदश्च । मुद्रा प्रत्ययकारिणी । खिद्रो रोगो दरिद्रश्च । छिद्रम् । भिद्रं वज्रम् । मन्द्रः । चन्द्रः । पचाद्यचि चन्दोऽपि । 'हिमांशुश्चन्द्रमाश्चन्द्रः' । शशी चन्दो हिमद्युतिः । दह्रोऽग्निः । दस्रः स्वर्वैद्यः । दभ्रः समुद्रः स्वल्पं च । वसेः संप्रसारणे ॥ **न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् । ८ । ३ । ११० ॥** रेफपरस्य सकारस्य सृप्यादीनां सवनादीनां च मूर्धन्यो न स्यात् ॥ पूर्वपदादिति प्राप्तः प्रतिषिध्यत इति वृत्तिर्भूयोऽभिप्राया । तेन शासिवसीति प्राप्तमपि न । उस्रो रश्मिः । उस्रा गौः । वाश्रो दिवसः । वाश्रं मन्दिरम् । शीरोऽजगरः । हस्रो मूर्खः । सिध्रः साधुः । शुभ्रम् ॥ मुसेरक् बाहुलकात् । मुस्रमश्रु ॥ **चकिरम्योरुच्चोपधायाः** ॥ चुक्रमम्लद्रव्यम् । रुम्रोऽरुणः ॥ **वौ कसेः** ॥ विकुस्रश्चन्द्रः ॥ **अमितम्योर्दीर्घश्च** ॥ आम्रम् । ताम्रम् ॥ **निन्देर्नलोपश्च** ॥ निद्रा ॥ **अर्देर्दीर्घश्च** ॥ आर्द्रम् ॥ **शुचेर्दश्च** ॥ शूद्रः ॥ **दुरीणो लोपश्च** ॥ दुःखेनेयते प्राप्यते इति दूरम् ॥ **कृतेश्छः क्रू च** ॥ कृच्छ्रम् । क्रूरः ॥ **रोदेर्णिलुक् च** ॥ रोदयतीति रुद्रः ॥ **बहुलमन्यत्रापि संज्ञाच्छन्दसोः** ॥ णिलुगित्येव । 'वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे । ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति' ॥ **जोरी च** ॥ जीरोऽणुः । ज्यश्चेत्येके ॥ **सुसूधागृधिभ्यः क्रन्** ॥ सुरः । सूरः । धीरः । गृध्रः ॥ **शुसिचिमीनां दीर्घश्च** ॥ शुः सौत्रः । शूरः । सीरम् । चीरम् । मीरः । समुद्रः ॥ **वा विन्धेः** ॥ वीध्रं विमलम् ॥ **वृधिवपिभ्यां रन्** ॥ वर्ध्रं चर्म । वप्रः प्राकारः ॥ **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्र-**

क्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवत्रेरामालाः ॥ रन्नन्ता ऊनविंशतिः ॥ निपातनाद्गुणाभावः। ऋत्रो नायकः। इदि—इन्द्रः। अङ्गेर्नलोपः—अग्रम्। 'वज्रोऽस्त्री हीरके पवौ'। डुवप् उपधाया इत्वम्। विप्रः। कुम्बिचुम्बयोर्नलोपः। कुत्रमरण्यम्। चुत्रं मुखम्। क्षुर विलेखने। रेफलोपः अगुणः—क्षुरः। खुर छेदने। रलोपो गुणाभावश्च—खुरः। भन्देर्नलोपः—भद्रम्। उच समवाये। चस्य गः—उग्रः। ञिभी। भेरी। पक्षे लः—भेलो जलतरणद्रव्यम्। शुचेश्चस्य कः। शुक्रः। पक्षे लः—शुक्लः। गुङ्। वृद्धिः। गौरोऽरुणे सिते पीते। वन संभक्तौ। वन्द्रो विभागी। इणो गुणाभावः—इरा मद्ये च वारिणि। मा माने माला ॥ समि कस उकन् ॥ कस गतौ। सम्यक्कसन्ति पलायन्ते जना अस्मादिति सङ्कसुको दुर्जनः अस्थिरश्च॥ पचिनशोर्णुकन् कनुमौ च॥ पचेः कः। पाकुकः सूपकारः। नशेर्नुम्। नशुकः॥ भियः क्रुकन्॥भीरुकः॥ क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि॥ रजकः। इक्षुकुट्टकः। चरकः। चष भक्षणे। चषकः। शुनकः। भषकः॥ रमे रश्च लो वा॥ रमको विलासी। लमकः॥ जहातेर्द्वे च॥ जहकस्त्यागी कालश्च॥ ध्मो धम च॥ धमकः कर्मकारः॥ हनो वध च॥ वधकः। बहुलमन्यत्रापि। कुह विस्मापने। कुहकः। कृतकम्॥ कृषेर्वृद्धिश्चोदीचाम्॥ कार्षकः। कर्षकः॥ उदकं च॥ प्रपञ्चार्थम्॥ वृश्चिकृष्योः किकन्॥ वृश्चिकः। कृषिकः॥ प्राङि पणिकषः॥ प्रापणिकः पण्यविक्रयी। प्राकषिकः परदारोपजीवी॥ मुषेर्दीर्घश्च॥ मूषिकः आखुः॥ स्यमेः संप्रसारणं च॥ चाद्दीर्घः॥ सीमिको वृक्षभेदः॥ क्रिय इकन्॥ क्रयिकः, क्रेता॥ आङि पणिपनिपतिखनिभ्यः॥ आपणिकः। आपनिक इन्द्रनीलः किरातश्च। आपतिकः श्येनो दैवायत्तश्च। आखनिको मूषिको वराहश्च॥ श्यास्त्याहृञविभ्य इनच्॥ श्येनः। स्त्येनः। हरिणः। अविनोऽध्वर्युः॥ वृजेः किच्च॥ वृजिनम्॥ अजेरज च॥ वीभावबाधनार्थम्। अजिनम्॥ बहुलमन्यत्रापि॥ कठिनम्। नलिनम्। मलिनम्। कुण्डिनम्॥ द्यतेः॥ यत्यरुषि दिनम्। दिवसोऽपि दिनम्॥ द्रुदक्षिभ्यामिनन्॥ द्रविणम्। दक्षिणः। दक्षिणा॥ अर्तेः किदिच्च॥ इरिणं शून्यम्॥ वेपितुह्योर्ह्रस्वश्च॥ विपिनम्। तुहिनम्॥ तलिपुलिभ्यां च॥ तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु। पुलिनम्॥ गर्वेरत उच्च॥ गौरादित्वात् ङीष्। गुर्विणी गर्भिणी॥ रुहेश्च॥ रोहिणः॥ महेरिनण् च॥ चादिनन्। माहिनम् माहेनं राज्यम्॥ क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च॥ वाक्। प्राट्। श्रीः। स्रवत्यतो घृतादिकमिति स्रूर्यज्ञोपकरणम्। द्रूर्हिरण्यम्। कटप्रूः कामरूपी कीटश्च। जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम्॥ आप्नोतेर्ह्रस्वश्च॥ आपः। अपः। अद्भिः। अद्भ्यः॥ परौ व्रजेः षश्च पदान्ते॥ व्रजेः क्विब्दीर्घौ स्तः पदान्ते तु षश्च॥ परिव्राट्। परिव्राजौ॥ ह्रुवः श्लुवच्च॥ जुहूः॥ स्रुवः कः॥ स्रुवः॥ चिक् च॥ इकार उच्चारणार्थः। क इत्, कुत्वम्। स्रुक्। स्रुवं च स्रुचं च

संमृड्‌ढि ॥ **तनोतेरनश्च वः** ॥ तनोतेश्चिक्‌ प्रत्ययः अनो वशब्दादेशश्च ॥ त्वक्‌ । **ग्लानुदिभ्यां डौः** ॥ ग्लौः । नौः ॥ **च्विरव्ययम्** ॥ डौरित्येव । ग्लौकरोति 'कृन्मेजन्त' इति सिद्धे नियमार्थमिदम् । उणादिप्रत्ययान्तश्च्व्यन्त एवेति ॥ **रातेर्डैः** ॥ राः । रायौ । रायः ॥ **गमेर्डोः** ॥ 'गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु' । बाहुलकाद्‌ द्युतेरपि डोः । 'द्यौः स्त्री स्वर्गान्तरिक्षयोः' ॥ **भ्रमेश्च डूः** ॥ भ्रूः ॥ चाद्रुमेः । अग्रेगूः ॥ **दमेर्डोसिः** ॥ दोः । दोषौ ॥ **पणेरिज्यादेशश्च वः** ॥ वणिक्‌ । स्वार्थेऽण् । नैगमो वाणिजो वणिक्‌ ॥ **वशेः कित्** ॥ उशिगग्नौ घृतेऽपि च ॥ **भृञ ऊच्च** ॥ भूरिक्‌ भूमिः ॥ **जसिसहोरुरिन्** ॥ जसुरिर्वज्रम् । सहुरिरादित्यः पृथिवी च ॥ **सुयुरुवृञो युच्** ॥ सवनश्चन्द्रमाः । यवनः । रवणः कोकिलः । वरणः ॥ **अशे रश च** ॥ अश्नोतेर्युच् स्यात् रशादेशश्च ॥ रशना काञ्ची । जिह्वावाची तु दन्त्यसकारवान् ॥ **उन्देर्नलोपश्च** ॥ ओदनः ॥ **गमेर्गश्च** ॥ गमेर्युच् स्याद्गश्चादेशः ॥ गगनम् । **बहुलमन्यत्रापि** ॥ युच् स्यात् ॥ स्यन्दनः । रोचना ॥ **रञ्जेः क्युन्** ॥ रजनम् ॥ **भूसूधूभ्रस्जिभ्यश्छन्दसि** ॥ भुवनम् । सुवन आदित्यः । धुवनो वह्निः । निधुवनं सुरतम् । भृज्जनमम्बरीषम् ॥ **कॄपॄवृजिमन्दिनिधाञः क्युः** ॥ किरणः । पुरणः समुद्रः । वृजनमन्तरिक्षम् । मन्दनं स्तोत्रम् । निधनम् ॥ **धषेर्धिष च संज्ञायाम्** ॥ धिषणो गुरुः । धिषणा धीः ॥ **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** ॥ अतिप्रत्ययान्ता निपात्यन्ते ॥ पृषु सेचने गुणाभावः । पृषन्ति । बृहत् । महान् । गमेर्जगादेशः । जगत् ॥ **संश्चत्तृपद्वेहत्** ॥ एते निपात्यन्ते ॥ पृथक्करणं शतृवद्भावनिवृत्त्यर्थम् । संचिनोतेः सुट् इकारलोपः । संश्चत् कुहकः । तृपच्छत्रम् । विपूर्वाद्धन्तेष्टिलोपः इत ए च । वेहद्गर्भोपघातिनी ॥ **छन्दस्यसानच् शुजृभ्याम्** ॥ शवसानः पन्थाः । जरसानः पुरुषः ॥ **ऋञ्जिवृधिमन्दिसहिभ्यः कित्** ॥ ऋञ्जसानो मेघः । वृधसानः पुरुषः । मन्दसानोऽग्निर्जीवश्च । सहसानो यज्ञो मयूरश्च ॥ **अर्तेर्गुणः शुट् च** ॥ अर्शसानोऽग्निः ॥ **सम्यानच्स्तुवः** ॥ संस्तवानो वाग्मी ॥ **युधिबुधिदृशिभ्यः किच्च** ॥ युधानः । बुधानः । दृशानो लोकपालकः ॥ **हुरुछेः सनो लुक् छलोपश्च** ॥ जुहुराणश्चन्द्रमाः ॥ **श्वितेर्दश्च** ॥ 'शिश्विदानः पुण्यकर्मा' ॥ **तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ** ॥ शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः तौ चानिटौ ॥ शंस्ता स्तोता । शंस्तारौ । शंस्तारः । क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च । अनुदात्तेत् । वृक्ष्ये चक्षदानिति मन्त्रात् । उक्षाणं वा वेहतं वा क्षदन्ते इति ब्राह्मणाच्च । 'क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे' । बहुलमन्यत्रापि । मन् मन्ता । हन् हन्ता । इत्यादि ॥ **नप्तृ नेष्टृ त्वष्टृ होतृ पोतृ भ्रातृ जामातृ मातृ पितृ दुहितृ** । न पतन्त्यनेन नप्ता पौत्रो दौहित्रश्च । नयतेः षुग्गुणश्च । नेष्टा । त्विषेरितोऽत्वम् । त्वष्टा ।

होता । पोता ऋत्विग्भेदः । भ्राजतेर्जलोपः । भ्राता । जायां माति जामाता । मान पूजायाम् । नलोपः । माता । धात्वाकारस्य इत्वम् । पिता । दुहेस्तृच इट् गुणाभावश्च । दुहिता ॥ **सावसेर्ऋन्** ॥ स्वसा ॥ **यातेर्वृद्धिश्च** ॥ याता । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' ॥ **नञि च नन्देः** ॥ न मन्दति ननान्दा । इह वृद्धिर्नानुवर्तत इत्येके । ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सेति शब्दार्णवः ॥ **दिवेर्ऋः** ॥ देवा । देवरः । स्वामिनो देवृदेवरौ ॥ **नयतेर्डिच्च** ना । नरौ । नरः ॥ **सव्ये स्थश्छन्दसि** ॥ अम्बाम्बेत्यत्र स्थास्थिन्स्थूणामुपसंख्यानम् ॥ सव्येष्ठा सारथिः । सव्येष्ठरौ । सव्येष्ठरः ॥ **आर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः** ॥ अष्टभ्योऽनिप्रत्ययः स्यात् ॥ अरणिरग्नेर्योनिः । सरणिः । धरणिः । धमनिः । अमनिर्गतिः । अशनिः । अवनिः । तरणिः । बाहुलकात्—रजनिः ॥ **आङि शुषेः सनश्छन्दसि** ॥ आशुशुक्षणिरग्निर्वातश्च ॥ **कृषेरादेश्च चः** ॥ चर्षणिर्जनः ॥ **अदेर्मुट् च** ॥ अद्मनिरग्निः ॥ **वृतेश्च** ॥ वर्तनिः । गोवर्धनस्तु चकारान्मुट् वर्त्मनिरित्याह ॥ **क्षिपेः किच्च** ॥ क्षिपणिरायुधम् ॥ **अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः** ॥ अर्चिर्ज्वाला । इदन्तोऽप्ययम् । 'अग्नेर्भ्राजन्ते अर्चयः' । शोचिर्दीप्तिः । हविः । सर्पिः । इस्मन्निति ह्रस्वः । छदिः—पटलम् । छर्दिर्वमनव्याधिः । इन्नन्तोऽपि । छर्यतीसारशूलवान् ॥ **बृंहेर्नलोपश्च** ॥ बर्हिर्ना कुशशुष्मणोः ॥ **द्युतेरिसिन्नादेश्च जः** ॥ ज्योतिः ॥ **वसौ रुचेः संज्ञायाम्** ॥ वसुरोचिर्यज्ञः ॥ **भुवः कित्** ॥ भुविः समुद्रः ॥ **सहोधश्च** ॥ सधिरनड्वान् ॥ **पिबतेस्थुक्** ॥ पाथिश्चक्षुःसमुद्रयोः ॥ **जनेरुसिः** ॥ जनुर्जननम् ॥ **मनेर्धश्छन्दसि** ॥ मधुः ॥ **अर्तिपृवपियजितनिधनितपिभ्यो नित्** ॥ अरुः । परुर्ग्रन्थिः । वपुः । यजुः । तनुः । तनुषी । तनूंषि । धनुरस्त्रियाम् । 'धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति' । सान्तस्य उदन्तस्य वा रूपम् । 'तपुः सूर्याग्निशत्रुपु' ॥ **एतेर्णिच्च** ॥ आयुः । आयुषी । **चक्षेः शिच्च** ॥ शित्त्वात्सार्वधातुकत्वेत ख्याञ्बाधः । चक्षुः ॥ **मुहेः किच्च** ॥ मुहुरव्ययम् । बहुलमन्यत्रापि । आचक्षुः । परिचक्षुः ॥ **कृगॄशॄवृञ्चतिभ्यः ष्वरच्** ॥ कर्बरो व्याघ्ररक्षसोः । गर्वरोऽहंकारी । शर्वरी रात्रिः । वर्वरः प्राकृतो जनः । चत्वरम् ॥ **नौ सदेः** ॥ 'निषद्वरस्तु जम्बालः' । निषद्वरी रात्रिः ॥

॥ इत्युणादिषु द्वितीयः पादः ॥

---

## अथोणादिषु तृतीयः पादः ।

**छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्टरसंयद्वराः** ॥ एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते ॥ छिदिर् छद् अनयोस्तकारोऽन्तादेशः छिदेर्गुणाभावश्च । छित्वरो धूर्तः । छत्वरो गृहकुञ्जयोः । धीवरः कैवर्तः । पीवरः स्थूलः । मीवरो हिंसकः । चिनोतेर्दीर्घश्च । चीवरं भिक्षुकप्रावरणम् । तीवरो जातिविशेषः । नीवरः परिव्राट् । गाहते-

ह्रस्वत्वम् । गह्वरम् । कटे वर्षादौ । कट्वरं व्यञ्जनम् । यमेर्दकारः । संयद्वरो नृपः । पदेः संपद्वर इत्येके ॥ **इण्सिञ्जिदीङुष्यविभ्यो नक्** ॥ 'इनः सूर्ये नृपे पत्यौ' । सिनः काणः । जिनोऽर्हन् । दीनः । उष्णः । ऊनः ॥ **फेनमीनौ** ॥ एतौ निपात्येते ॥ स्फायतेः फेनः । मीनः ॥ **कृषेर्वर्णे** ॥ कृष्णः ॥ **बन्धेर्ब्रधिबुधी च** ॥ ब्रध्नः । बुध्नः ॥ **धापृवस्यज्यतिभ्यो नः** ॥ 'धाना भृष्टयवे स्त्रियः' । पर्णं पत्रम् । पर्णः किंशुकः । वस्नो मूल्ये वेतने च । अजेर्वी । वेनः । अत्न आदित्यः । बाहुलकात् शृणोतेः श्रोणः पङ्गुः ॥ **लक्षेरट् च** ॥ लक्षेश्चुरादिण्यन्तान्नः स्यात्तस्याडागमश्च । चान्मुडित्येके ॥ लक्षणं लक्ष्मणं नाम्नि चिह्ने च । लक्षणो लक्ष्मणश्च रामभ्राता । 'लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा' ॥ **वनेरिच्चोपधायाः** ॥ वेन्ना नदी ॥ **सिवेष्टेर्यू च** ॥ दीर्घोच्चारणसामर्थ्यान्न गुणः । स्यून आदित्यः । बाहुलकात् केवलो नः । ऊठ् । अन्तरङ्गत्वाद्यण् । गुणः । स्योनः ॥ **कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्** ॥ कर्णः । वर्णः । 'जर्णश्चन्द्रे च वृद्धे च' । सेना । द्रोणः । पन्नो नीचैर्गतिः । अन्नमोदनः । स्वप्नो निद्रा ॥ **धेट इच्च** ॥ धेनः सिन्धुः । नदी धेना । **तृषिशुषिरसिभ्यः कित्** ॥ तृष्णा । शुष्णः सूर्यो वह्निश्च । रस्नं द्रव्यम् । **सुञो दीर्घश्च** ॥ सूना वधस्थानम् ॥ **रमेस्त च** ॥ रमयतीति रत्नम् ॥ **रास्नासास्नास्थूणावीणाः** ॥ रास्ना गन्धद्रव्यम् । सास्ना गोगलकम्बलः । स्थूणा गृहस्तम्भः । वीणा वल्लकी ॥ **गादाभ्यामिष्णुच्** ॥ गेष्णुर्गायनः । देष्णुर्दाता ॥ **कृत्यशूभ्यां क्स्नः** ॥ कृत्स्नम् । अक्ष्णमखण्डम् ॥ **तिजेर्दीर्घश्च** ॥ तीक्ष्णम् ॥ **श्लिषेरच्चोपधायाः** ॥ श्लक्ष्णम् ॥ **यजिमनिशुन्धिदसिजनिभ्यो युच्** ॥ यज्युरध्वर्युः । 'मन्युर्दैन्ये क्रतौ क्रुधि' । शुन्ध्युरग्निः । दस्युस्तस्करः । जन्युः शरीरी ॥ **भुजिमृङ्भ्यां युक्त्युकौ** ॥ भुज्युर्भाजनम् । मृत्युः ॥ **सर्तेरयुः** ॥ सरयुर्नदी । अयूरिति पाठान्तरम् । सरयूः ॥ **पानीविषिभ्यः पः** ॥ पाति रक्षत्यस्मादात्मानमिति पापम् । तद्योगात्पापः । नेपः पुरोहितः । बाहुलकाद्गुणाभावे नीपो वृक्षविशेषः । वेष्पः पानीयम् ॥ **च्युवः किच्च** ॥ च्युपो वक्त्रम् ॥ **स्तुवो दीर्घश्च** ॥ स्तूपः समुच्छ्रायः ॥ **सुशृभ्यां निच्च** ॥ चात्कित् ॥ सूपः । बाहुलकादुत्वम् । शूर्पम् ॥ **कुयुभ्यां च** ॥ कुवन्ति मण्डूका अस्मिन् कूपः । युवन्ति बध्नन्त्यस्मिन्पशुमिति यूपो यज्ञस्तम्भः ॥ **खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः** ॥ सप्तैते पप्रत्ययान्ता निपात्यन्ते ॥ खनतेर्नकारस्य षत्वम् । 'खष्पौ क्रोधबलात्कारौ' । शीलतेर्ह्रस्वः । शिल्पं कौशलम् । शसु हिंसायाम् । निपातनात्षत्वम् । शष्पं बालतृणं प्रतिभाक्षयश्च । बाधतेः षः । 'बाष्पो नेत्रजलोष्मणोः' । बाष्पं च । रौतेर्दीर्घः । रूपं स्वभावे सौन्दर्ये । पृ—पर्पं गृहं बालतृणं पङ्गुपीठं च । तल प्रतिष्ठाकरणे चुरादिणिचो लुक् । 'तल्पं शय्याट्टदारेषु' ॥

---

१ सिवेष्टेरिति । ऊकारादेशेनैव निर्वाहे ऊग्रहणं व्यर्थम् ॥ २ स्योन इति । "वार्णादाङ्गम्–" इत्यस्या अनित्यत्वेनाप्रवृत्तेरुपधाया गुणाभावः ॥

स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् ॥ अयामन्तेति णेरयादेशः । स्तनयित्नुः । हर्षयित्नुः । पोषयित्नुः । गदयित्नुर्वावदूकः । मदयित्नुर्मदिरा ॥ कृहनिभ्यां क्नुः॥कृत्नुः शिल्पी । हत्नुर्व्याधिः शस्त्रं च ॥ गमेः सन्वच्च ॥ जिगत्नुः ॥ दाभाभ्यां नुः ॥ दानुर्दाता । भानुः ॥ वचेर्गश्च ॥ वग्नुः ॥ धेट इच्च ॥ धयति सुतानिति धेनुः ॥ सुवः कित् ॥ सूनुः पुत्रेऽनुजे रवौ ॥ जहातेर्द्वेऽन्तलोपश्च ॥ जह्नुः ॥ स्थाणुः ॥ स्थाणुः कीले स्थिरे हरे ॥ अजिवृरीभ्यो निच्च ॥ अजेर्वी । वेणुः ॥ वर्णुर्नददेशभेदयोः । रेणुर्द्वयोः स्त्रियां धूलिः ॥ विषेः किच्च ॥ विष्णुः ॥ कृदाधारार्चिकलिभ्यः कः ॥ बाहुलकान्न कस्येत्संज्ञा । कार्को धवलघोटकः । दाको दाता । धाकोऽनड्वानाधारश्च । राका पौर्णमासी । अर्कः । कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि ॥ सृवृभूशुषिमुषिभ्यः कक् ॥ सृक उत्पलवातयोः । वृकः श्वापदकाकयोः । भूकं छिद्रम् । शुष्कः । मुष्कोऽण्डम् ॥ शुकवल्कोल्काः ॥ शुभेरन्त्यलोपः । शुकः । वल्कं वल्कलमस्त्रियाम् ॥ उष दाहे । षस्य लः । उल्का ॥ इण्भीकापाशल्यतिमर्चिभ्यः कन् ॥ एके मुख्यान्यकेवलाः । भेको मण्डूकभेषयोरिति विश्वमेदिन्यौ । काकः । पाकः शिशुः । शल्कं शकलम् । अत्कः पथिकः शरीरावयवश्च । मर्कः शरीरवायुः ॥ नौ हः॥ जहातेः कन् स्यान्नौ ॥ निहाका गोधिका ॥ नौ सदेर्डिच्च ॥ निष्कोऽस्त्री हेम्नि तत्पले ॥ स्यमेरीट् च ॥ स्यमीको वल्मीकः वृक्षभेदश्च । इट् ह्रस्व इति केचित् । स्यमिकः ॥ अजियुधूनीभ्यो दीर्घश्च ॥ वीकः स्याद्वातपक्षिणोः । यूका । धूको वायुः । नीको वृक्षविशेषः ॥ ह्रियो रश्च लो वा ॥ ह्रीका ह्लीका त्रपा मता ॥ शकेरुनोन्तोन्त्युनयः ॥ उन उन्त उन्ति उनि एते चत्वारः स्युः ॥ शकुनः । शकुन्तः । शकुन्तिः । शकुनिः ॥ भुवो झिच् ॥ भवन्तिर्वर्तमानकालः । बाहुलकादवेश्च । अवन्तिः । वदेर्वदन्तिः । किंवदन्ती जनश्रुतिः ॥ कन्युच् क्षिपेश्च ॥ चाद्भुवः । क्षिपण्युर्वसन्त इत्युज्ज्वलदत्तः । भुवन्युः स्वामिसूर्ययोः ॥ अनुङ् नदेश्च ॥ चात्क्षिपेः । नदनुर्मेघः । क्षिपणुर्वातः ॥ कृवृदारिभ्य उनन् ॥ करुणो वृक्षभेदः स्यात्करुणा च कृपा मता । वरुणः । दारुणम् ॥ त्रो रश्च लो वा ॥ तरुणस्तलुनो युवा ॥ क्षुधिपिशिमिथिभ्यः कित् ॥ क्षुधुनो म्लेच्छजातिः । पिशुनः । मिथुनम् ॥ फलेर्गुक् च ॥ फल्गुनः पार्थः । प्रज्ञाद्यण् । फाल्गुनः ॥ अशेर्लश्च ॥ लशुनम् ॥ अर्तेर्णिलुक् च ॥ अर्जुनः ॥ तृणाख्यायां चित् ॥ चित्त्वादन्तोदात्तः । अर्जुनं तृणम् ॥ अर्तेश्च ॥ अरुणः ॥ अजियमिशीङ्भ्यश्च ॥ वयुनं देवमन्दिरम् । यमुना । शयुनोऽजगरः ॥ वृतॄवदिहनिकमिकषिभ्यः सः ॥ वर्षम् । तर्षः प्लवसमुद्रयोः । वत्सः । वत्सम् वक्षः । हंसः । कंसोऽस्त्री पानभाजनम् । कक्षं नक्षत्रम् ॥ प्लुषेरच्चोप-

---

१ दाकेत्यादौ "केऽण" इति ह्रस्वो न, "न कपि" इति साहचर्येण तद्धितस्यैव कस्य तत्र ग्रहणात् ॥

इति तृतीयपादः ॥

धायाः ॥ प्लक्षः । **मनेर्दीर्घश्च** ॥ मांसम् ॥ **अशेर्देवने** ॥ अक्षः ॥ **स्नुव्रश्चिकृत्यृषिभ्यः कित** ॥ स्नुषा । वृक्षः । कृत्समुदकम् । ऋक्षं नक्षत्रम् ॥ **ऋषेर्जातौ** ॥ ऋक्षोऽद्रिभेदे भल्लूके इति च ॥ **उन्दिगुधिकुषिभ्यश्च** ॥ उत्सः प्रस्रवणम् । गुत्सः स्तबकः । कुक्षो जठरम् ॥ **गृधिपण्योर्दकौ च** ॥ गृत्सः कामदेवः । पक्षः ॥ **अशेः सरः** ॥ अक्षरम् ॥ **वसेश्च** ॥ वत्सरः ॥ **संपूर्वाच्चित्** ॥ संवत्सरः ॥ **कृधूमदिभ्यः कित्** ॥ बाहुलकान्न षत्वम् । कृसरः स्यात्तिलौदनम् । धूसरः । मत्सरः । मत्सरा मक्षिका ज्ञेया भम्भराली च सा मता ॥ **पते रश्च लः** ॥ पत्सलः पन्थाः ॥ **तन्यृषिभ्यां क्सरन्** ॥ तसरः सूत्रवेष्टने । ऋक्षर ऋत्विक् ॥ **पीयुकणिभ्यां कालन् ह्रस्वः सम्प्रसारणं च** ॥ पीयुः सौत्रः । पियालो वृक्षभेदः ॥ कुणालो देशभेदः ॥ **काटकुषिभ्यां काकुः** ॥ कटाकुः पक्षी । कुषाकुरग्निः सूर्यश्च ॥ **सर्तेर्दुक् च** ॥ सृदाकुर्वातसरितोः ॥ **वृतेर्वृद्धिश्च** ॥ वार्ताकुः । बाहुलकादुकारस्य अत्वम् । वार्ताकम् ॥ **प्रदेर्नित्संप्रसारणमल्लोपश्च** ॥ पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे ॥ **सृयुवचिभ्योऽन्युजागूजक्नुचः** ॥ अन्युच् आगूच् अक्नुच् एते क्रमात्स्युः ॥ सरण्युर्मेघवातयोः । यवागूः । वचक्नुर्विप्रवाग्मिनोः ॥ **आनकः शीङ्भियः** ॥ शयालकोऽजगरः । भयानकः ॥ **आणको लूधूशिङ्घिधाञ्भ्यः** ॥ लवाणकं दात्रम् । धवाणको वातः । शिङ्घाणकः श्लेष्मा । पृषोदरादित्वापक्षे कलोपः । शिङ्घाणं नासिकामले । धाणको दीनारभागः ॥ **उल्मुकदर्विहोमिनः** ॥ उष दाहे । षस्य लः मुकप्रत्ययश्च ॥ उल्मुकं ज्वलदङ्गारम् । दृणातेर्विः दर्विः । जुहोतेर्मिनिः होमी ॥ **ह्रियः कुक् रश्च लो वा** ॥ ह्रीकुः । ह्रीकुर्लज्जावान् ॥ **हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्** ॥ दशभ्यस्तन् स्यात् ॥ तितुत्रेति नेट् । हस्तः । मर्तः । गर्तः । एतः कर्बुरः । वातः । अन्तः । दन्तः । लोतः स्यादश्रुचिह्नयोः । पोतो बालवहित्रयोः । धूर्तः । बाहुलकात्तुसेर्दीर्घश्च । तूस्तं पापं धूलिर्जटा च ॥ **नञ्याप इट् च** ॥ नापितः ॥ **तनिमृङ्भ्यां किच्च** ॥ ततम् । मृतम् ॥ **अञ्जिघृसिभ्यः क्तः** ॥ अक्तम् । घृतम् । सितम् ॥ **दुतनिभ्यां दीर्घश्च** ॥ दूतः । तातः ॥ **जेर्मुट् चोदात्तः** ॥ जीमूतः ॥ **लोष्टपलितौ** ॥ लुनातेः क्तः तस्य सुट् धातोर्गुणः । लोष्टम् । पलितम् ॥ **हृश्याभ्यामितन्** ॥ हरितश्येतौ वर्णभेदौ ॥ **रुहे रश्च लो वा** ॥ रोहितो मृगमत्स्ययोः । लोहितं रक्तम् ॥ **पिशेः किच्च** ॥ पिशितं मांसम् ॥ **श्रुदक्षिस्पृहिगृहिभ्य आय्यः** ॥ श्रवाय्यो यज्ञपशुः ॥ दक्षाय्यो गरुडो गृध्रश्च । स्पृहयाय्यः । गृहयाय्यो गृहस्वामी ॥ **दिधिषाय्यः** ॥ दधातेर्द्वित्वमित्वं षुक् च ॥ मित्र इव यो दिधिषाय्योऽभूत् ॥ **वृञ एण्यः** ॥ वरेण्यः ॥ **स्तुवः क्सेय्यश्छन्दसि** ॥ स्तुषेय्यं पुरुवर्पसम् ॥ **राजेरन्यः** ॥ राजन्यो वह्निः ॥ **शॄरम्योश्च** ॥ शरण्यम् । रमण्यम् ॥ **अर्तेर्निच्च** ॥ अरण्यम् ॥ **पर्जन्यः** ॥ पृषु सेचने । षस्य जः । पर्जन्यः शक्रमेघयोः ॥ **वदेरान्यः** ॥ वदान्यस्त्यागिवाग्मिनोः ॥ **अमिनक्षिय-**

**जिवधिपतिभ्योऽत्रन्** ॥ अमत्रं भाजनम् । नक्षत्रम् । यजत्रः । वधत्रमायुधम् । पतत्रं तनूरुहम् ॥ **गडेरादेश्च कः** ॥ कडत्रम् । डलयोरेकत्वस्मरणात् कलत्रम् ॥ **वृञश्चित्** ॥ वरत्रा चर्ममयी रज्जुः ॥ **सुविदेः कत्रन्** ॥ सुविदत्रं कुटुम्बकम् ॥ **कृतेर्नुम् च** ॥ कृन्तत्रं लाङ्गलम् ॥ **भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच्** ॥ दशभ्योऽतच् स्यात् ॥ भरतः । मरतो मृत्युः । 'दर्शतः सोमसूर्ययोः' । यजत ऋत्विक् । पर्वतः । पचतोऽग्निः । अमतो रोगः । तमतस्तृष्णापरः । नमतः प्रह्वः । हर्यतोऽश्वः ॥ **पृषिरञ्जिभ्यां कित्** ॥ पृषतो मृगो बिन्दुश्च । रजतम् ॥ **खलतिः** ॥ स्खलतेः सलोपः अतच्प्रत्ययान्तस्य इत्वं च ॥ खलतिर्निष्केशशिराः ॥ **शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः** ॥ सप्तभ्योऽथः स्यात् ॥ शयथोऽजगरः । शपथः । रवथः कोकिलः । गमथः पथिकः पन्थाश्च । वञ्चथो धूर्तः । वन्दीति पाठे वन्दते वन्द्यते वा वन्दथः स्तोता स्तुत्यश्च । जीवथ आयुष्मान् । प्राणथो बलवान् । बाहुलकाच्छमिदमिभ्याम् । 'शमथस्तु शमः शांतिर्दान्तिस्तु दमथो दमः' ॥ **भृञश्चित्** ॥ भरथो लोकपालः ॥ **रुदिविभ्यां ङित्** ॥ रोदितीति रुदथः शिशुः । वेत्तीति विदथः ॥ **उपसर्गे वसेः** ॥ आवसथो गृहम् । संवसथो ग्रामः ॥ **अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच्** ॥ त्रयोदशभ्योऽसच् स्यात् ॥ अततीत्यतसो वायुरात्मा च । अवतीत्यवसो राजा भानुश्च । चमत्यस्मिन् चमसः सोमपानपात्रम् । ताम्यत्यस्मिन् तमसोऽन्धकारः । नमसः अनुकूलः । 'रभसो वेगहर्षयोः' । लभसो धनं याचकश्च । नभति नभ्नाति वा नभसः । तपसः पक्षी चन्द्रश्च पतसः पक्षी । पनसः कण्टकिफलः । पणसः पण्यद्रव्यम् । महसं ज्ञानम् ॥ **वेञस्तुट् च** ॥ बाहुलकादात्वाभावः । वेतसः ॥ **वहियुभ्यां णित्** ॥ वाहसोऽजगरः । यावसस्तृणसंघातः ॥ **वयश्च** ॥ वय गतौ । वायसः काकः ॥ **दिवः कित्** ॥ दिवसम् । दिवसः ॥ **कृशृशलिकलिगर्दिभ्योऽभच्** ॥ करभः । शरभः । शलभः । कलभः । गर्दभः ॥ **ऋषिवृषिभ्यां कित्** ॥ ऋषभः । वृषभः ॥ **रुषेर्नित्लुष् च** ॥ रुष हिंसायाम् । अस्मादभच् नित्कित्स्यात् लुषादेशश्च ॥ लुषभो मत्तदन्तिनि ॥ **रासिवल्लिभ्यां च** ॥ रासभः । वल्लभः ॥ **जॄविशिभ्यां झच्** ॥ जरन्तो महिषः । वेशन्तः पल्वलम् ॥ **रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि** ॥ रोहन्तो वृक्षभेदः । नन्दन्तः पुत्रः । जीवन्त औषधम् । प्राणन्तो वायुः । षित्त्वान्ङीष् रोहन्ती ॥ **तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च** ॥ दशभ्यो झच् स्यात्स च षित् ॥ तरन्तः समुद्रः । तरन्ती नौका । भवन्तः कालः । वहन्तो वायुः । वसन्त ऋतुः । भासन्तः सूर्यः । साधन्तो भिक्षुः । गडेर्घटादित्वान्मित्त्वम् । ह्रस्वः । अयामन्तेति णेरयः ॥ गण्डयन्तो जलदः । मण्डयन्तो भूषणम् । जयन्तः शक्रपुत्रः । नन्दयन्तो नन्दकः ॥ **हन्तेर्मुट् हि च** ॥ हेमन्तः ॥ **भन्देर्नलोपश्च** ॥ भदन्तः प्रव्रजितः ॥ **ऋच्छेररः** ॥ ऋच्छरा वेश्या । बाहुलकाज्जर्जरझर्झरादयः ॥

**अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित्** ॥ षड्भ्योऽरश्चित् स्यात् ॥ अररं कपाटम् । कमरः कामुकः । भ्रमरः । चमरः । देवरः । वासरः ॥ **कुवः क्ररन्** ॥ कुररः पक्षिभेदः ॥ **अङ्गिमदिमन्दिभ्य आरन्** ॥ अङ्गारः । मदारो वराहः । मन्दारः ॥ **गडे कड च** ॥ कडारः ॥ **शृङ्गारभृङ्गारौ** ॥ शृभृञ्भ्यामारनुम् गुक् ह्रस्वश्च ॥ शृङ्गारो रसः । 'भृङ्गारः कनकालुका' ॥ **कञ्जिमृजिभ्यां चित्** ॥ कञ्जिः सौत्रो धातुः । कञ्जारो मयूरः । मार्जारः ॥ **कमेः किदुच्चोपधायाः** ॥ चिदित्यनुवृत्तेरन्तोदात्तः ॥ कुमारः ॥ **तुषारादयश्च** ॥ तुषारः । कासारः । सहार आम्रभेदः ॥ **दीङो नुट् च** ॥ दीनारः सुवर्णाभरणम् ॥ **सर्तेरपः पुक् च** ॥ सर्षपः ॥ **उषिकुटिदलिकचिखजिभ्यः कपन्** ॥ उषपो वह्निसूर्ययोः । कुटपो मानभाण्डम् । दलपः प्रहरणम् । कचपं शाकपत्रम् । खजपं घृतम् ॥ **क्वणेः संप्रसारणं च** ॥ कुणपम् ॥ **कपश्चाक्रवर्मणस्य** ॥ स्वरे भेदः ॥ **विटपपिष्टपविशिपोलपाः** ॥ चत्वारोऽमी कपन्प्रत्ययान्ताः ॥ विटशब्दे । विटपः । विशतेरादेः प्रत्ययस्य तुट् । षत्वम् । विष्टपं भुवनम् । विशतेः प्रत्ययादेरित्वम् । विशिपं मन्दिरम् । वलतेः संप्रसारणम् । उलपं कोमलं तृणम् ॥ **वृतेस्तिकन्** ॥ वर्तिका ॥ **कृतिभिदिलतिभ्यः कित्** ॥ कृत्तिका । भित्तिका भित्तिः । लत्तिका गोधा ॥ **इष्यशिभ्यां तकन्** ॥ इष्टका । अष्टका ॥ **इणस्तशन्तशसुनौ** ॥ एतशो ब्राह्मणः । स एव एतशाः ॥ **वीपतिभ्यां तनन्** ॥ वी गत्यादौ । वेतनम् । पत्तनम् ॥ **दृदलिभ्यां भः** ॥ दर्भः । 'दल्भः स्याद्दषिचक्रयोः' ॥ **अर्तिगृभ्यां भन्** ॥ अर्भः । गर्भः ॥ **इणः कित्** ॥ इभः ॥ **असिसञ्जिभ्यां क्थिन्** ॥ अस्थि । सक्थि ॥ **प्लुषिकुषिशुषिभ्यः क्सिः** ॥ प्लुक्षिर्वह्निः । कुक्षिः । शुक्षिर्वातः ॥ **अशेर्नित्** ॥ अक्षि ॥ **इषेः क्सुः** ॥ इक्षुः ॥ **अवितॄस्तृतन्त्रिभ्य ईः** ॥ अवीर्नारी रजस्वला । तरीर्नौः । स्तरीर्धूमः । तन्त्रीर्वीणादेर्गुणः ॥ **पः किद्वे च** ॥ पपीरश्वः । पपीः स्यात्सोमसूर्ययोः ॥ **लक्षमुट् च** ॥ लक्ष्मीः ॥

॥ इत्युणादिषु तृतीयः पादः ॥

---

## अथोणादिषु चतुर्थः पादः ।

**वातप्रमीः** ॥ वातशब्दे उपपदे प्रपूर्वान्माधातोरीप्रत्ययः स च कित् ॥ वातप्रमीः । अयं स्त्रीपुंसयोः ॥ **ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्ठुजिष्ठाजिसन्स्यनिथिनुल्यसासानुकः** ॥ द्वादशभ्यः क्रमात्स्युः ॥ अर्तेः कत्निच् यण् । 'बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः । तनोतेर्यतुच् । तन्यतुर्वायुः रात्रिश्च । अञ्जेरलिच् । अञ्जलिः । वनेरिष्ठुच् । वनिष्ठुः स्थविरान्त्रम् । अञ्जेरिष्ठच् । अञ्जिष्ठो भानुः । अर्पयतेरिसन् । आपसोऽप्रमांसम् । मदेः स्यन् । मत्स्यः । अतेरिथिन् । अतिथिः । अङ्गेरुलिः । अङ्गुलिः । कौतेरसः । कवसः । अच इत्येके । कवचम् । यौते-

रासः। यत्रासो दुरालभा। कृशेरानुक्। कृशानुः॥ **श्रः करन्॥** उत्तरसूत्रे किद्ग्रहणादिह ककारस्य नेत्त्वम्॥ शर्करा॥ **पुषः कित्॥** पुष्करम्॥ **कलश्च॥** पुष्कलम्॥ **गमेरिनिः॥** गमिष्यतीति गमी॥ **आङि णित्॥** आगामी॥ **भुवश्च॥** भावी॥ **प्रे स्थः॥** प्रस्थायी॥ **परमे कित्॥** परमेष्ठी॥ **मन्थः॥** मन्थतेरिनिः किस्यात्॥ कित्त्वान्नकारलोपः। मन्थाः। मन्थानौ। मन्थानः॥ **पतस्थच॥** पन्थाः। पन्थानौ॥ **खजेराकः॥** खजाकः पक्षी॥ **बलाकादयश्च॥** बलाका। शलाका। पताका॥ **पिनाकादयश्च॥** पातेरित्त्वं **नुम् च॥** क्लीबपुंसोः पिनाकः स्याच्छूलशङ्करधन्वनोः। तड आघाते। तडाकः॥ **कषिदूषिभ्यामीकन्॥** कषीका पक्षिजातिः। दूषिका नेत्रयोर्मलम्॥ **अनिहृषिभ्यां किच्च॥** अनीकम्। हृषीकम्॥ **चङ्कणः कङ्कणश्च॥** कण शब्दे, अस्माद्यङ्लुगन्तादीकन् धातोः कङ्कणादेशश्च॥ घण्टिकायां कङ्कणीका सैव प्रतिसराऽपि च॥ **शृपॄभ्रञ्जां द्वे रुक्चाभ्यासस्य॥** शर्शरीको हिंस्रः। पर्परीको दिवाकरः। बर्बरीकः कुटिलकेशः॥ **फर्फरीकादयश्च॥** स्फुर स्फुरणे। अस्मादीकन् धातोः फर्फरादेशः॥ फर्फरीकं किसलयम्। दर्दरीकं वादित्रम्। झर्झरीकं शरीरम्। चिञ्चिडीको वृक्षभेदः। चरेर्नुम् च—चञ्चरीको भ्रमरः। मर्मरीको हीनजनः। कर्करीका गलन्तिका। पुणतेः। पुण्डरीकं वादित्रम्। पुण्डरीको व्याघ्रोऽग्निर्दिग्गजश्च॥ **ईषेः किद्ध्रस्वश्च॥** इषीका शलाका॥ **ऋजेश्च॥** ऋजीकः उपहतः॥ **सर्तेर्नुम् च॥** सृणीका लाला॥ **मृडः कीकन्कङ्कणौ॥** मृडीको मृगः। मृडङ्कणः शिशुः॥ **अलीकादयश्च॥** कीकनन्ता निपात्यन्ते॥ अल भूषणादौ। अलीकं मिथ्या। विपूर्वाद्व्यलीकं विप्रियं खेदश्च। वलीकं पटलप्रान्ते इत्यादि॥ **कॄतॄभ्यामीषन्॥** करीषोऽस्त्री शुष्कगोमये। तरीषः तरीता॥ **शॄपॄभ्यां किच्च॥** शिरीषः। पुरीषम्॥ **अर्जेर्ऋज च॥** ऋजीषं पिष्टपचनम्॥ **अम्बरीषः॥** अयं निपात्यते॥ अवि शब्दे। अम्बरीषः पुमान् भ्राष्ट्रम्। अमरस्तु 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना'॥ **कॄशॄपॄकटिपटिशौटिभ्य ईरन्॥** करीरो वंशाङ्कुरः। शरीरम्। परीरं फलम्। कटीरः कन्दरो जघनप्रदेशश्च। पटीरश्चन्दनः कण्टकः कामश्च। शौटीरस्त्यागिवीरयोः। ब्राह्मणादित्वात् ष्यञ्। शौटीर्यम्॥ **वशेः कित्॥** उशीरम्॥ **कशेर्मुट् च॥** कश्मीरो देशः॥ **कृञ उच्च॥** कुरीरं मैथुनम्॥ **घसेः किच्च॥** क्षीरम्॥ **गभीरगम्भीरौ॥** गमेर्भः पक्षे नुम् च॥ **विषाविहा॥** स्यतेर्जहातेश्च विपूर्वाभ्यामाप्रत्ययः॥ विषा बुद्धिः। विहा स्वर्गः। अव्यये इमे॥ **पच एलिमच्॥** पचेलिमो वह्निरव्योः॥ **शीङो धुक्लक्वलञ्वालनः॥** चत्वारः प्रत्ययाः स्युः॥ शीधु मद्यम्। शीलं स्वभावः। शेवलः। शेवालम्। बाहुलकाद्ध्रस्य पोऽपि। शेवालं शैवलो न स्त्री शेपालो जलनीलिका॥ **मृकणिभ्यामूकोकणौ॥** मरूको मृगः। काणूकः काकः॥ **वलेरूकः॥** वलूकः पक्षी उत्पलमूलं च॥ **उलूकादयश्च॥** वलेः

संप्रसारणमूकश्च ॥ उलूकाविन्द्रपेचकौ । वावदूको वक्ता । भल्लूकः ॥ **शमेर्बुक्च** ॥ शम्बूको जलशुक्तिः ॥ **शलिमण्डिभ्यामूकण्** ॥ शालूकः कन्दविशेषः । मण्डूकः ॥ **नियो मिः** ॥ नेमिः ॥ **अर्तेरुच्च** ॥ ऊर्मिः ॥ **भुवः कित्** ॥ भूमिः ॥ **अश्नोते रश् च** ॥ रश्मिः किरणो रज्जुश्च ॥ **दाल्मिः** ॥ दल विशरणे । दल्मिरिन्द्रायुधम् ॥ **वीज्याज्वरिभ्यो निः** ॥ बाहुलकाण्णत्वम् ॥ वेणिः स्यात्केशविन्यासः प्रवेणी च स्त्रियामुभे । ज्यानिः । जूर्णिः ॥ **सृवृषिभ्यां कित्** ॥ सृणिरङ्कुशः । वृष्णिः क्षत्रियमेषयोः ॥ **अङ्गेर्नलोपश्च** ॥ अग्निः ॥ **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** ॥ वह्निः ॥ श्रेणिः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः । हानिः । तूर्णिः । बाहुलकान्म्लानिः ॥ **घृणिपृश्निपार्ष्णिचूर्णिभूर्णि** ॥ एते पञ्च निपात्यन्ते ॥ घृणिः किरणः । स्पृशतेः सलोपः । पृश्निरल्पशरीरः । पृषेर्वृद्धिश्च । पार्ष्णिः पादतलम् । चरेरुपधाया उत्वम् । चूर्णिः कपर्दकशतम् । बिभर्तेरुत्वम् । भूर्णिर्धरणी ॥ **वृदृभ्यां विन्** ॥ वर्विर्घस्मरः । दर्विः ॥ **जॄशॄस्तॄजागृभ्यः क्विन्** ॥ जीर्विः पशुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युः ॥ जागृविर्नृपः ॥ **दिवो द्वे दीर्घश्चाभ्यासस्य** ॥ दीदिविः स्वर्गमोक्षयोः ॥ **कृविघृष्विछविस्थविकिकीदिवि** ॥ कृविस्तन्तुवायद्रव्यम् । घृष्विर्वराहः । छास्योर्ह्रस्वत्वं च । छविर्दीप्तिः । स्थविस्तन्तुवायः । दीव्यतेः किकीपूर्वात् । किकीदिविश्चाषः । बाहुलकाद्ध्रस्वदीर्घयोर्विनिमयः । चाषेण किकिदीविना ॥ **पातेर्डतिः** ॥ पतिः ॥ **शकेर्ऋतिन्** ॥ शकृत् ॥ **अमेरतिः** ॥ अमतिः कालः ॥ **वहिवस्यर्तिभ्यश्चित्** ॥ वहति पवनः । वसतिर्गृहयामिन्योः ॥ अरतिः क्रोधः ॥ **अञ्चेः को वा** ॥ अङ्कतिः । अञ्चतिर्वातः ॥ **हन्तेरंह च** ॥ हन्तेरतिः स्यादंहादेशश्च धातोः ॥ हन्ति दुरितमनया अंहतिर्दानम् । प्रादेशनं निर्वपणमपवर्जनमंहतिः ॥ **रमेर्नित्** ॥ रमतिः कालकामयोः ॥ **सूङः क्रिः** ॥ सूरिः ॥ **अदिशदिभूशुभिभ्यः क्रिन्** ॥ अद्रिः । शद्रिः शर्करा । भूरि प्रचुरम् । शुभ्रिर्ब्रह्मा ॥ **वङ्क्र्यादयश्च** ॥ क्रिन्नन्ता निपात्यन्ते ॥ वङ्क्रिर्वाद्यभेदो गृहदारु पार्श्वास्थि च । वप्रिः क्षेत्रम् । अंह्रिरङ्घ्रिश्च चरणः । तन्द्रिः सौत्रो धातुः । तन्द्रिर्मोहः । बाहुलकाद्गुणः । भेरिः ॥ **राशदिभ्यां त्रिप्** ॥ रात्रिः । शत्रिः कुञ्जरः ॥ **अदेस्त्रिनिश्च** ॥ चात्त्रिप् ॥ अत्त्री । अत्त्रिणौ ? अत्त्रिणः ॥ अत्त्रिः । अत्त्री ? अत्त्रयः ॥ **पतेरत्रिन्** ॥ पतत्रिः पक्षी ॥ **मृकणिभ्यामीचिः** ॥ मरीचिः । कणीचिः पल्लवो निनादश्च ॥ **श्वयतेश्चित्** ॥ श्वयीचिर्व्याधिः ॥ **वेञो डिच्च** ॥ वीचिस्तरङ्गः । नञ्समासे अवीचिर्नरकभेदः ॥ **ऋहनिभ्यामूषन्** ॥ अरूषः सूर्यः । हनूषो राक्षसः ॥ **पुरः कुषन्** ॥ पुर अग्रगमने । पुरुषः । अन्येषामपीति दीर्घः । पूरुषः ॥ **पृनहिकलिभ्य उषच्** ॥ परुषम् । नहुषः ॥ कलुषम् । **पीयेरूषन्** ॥ पीय इति सौत्रो धातुः । पीयूषम् । बाहुलकाद्गुणे—पेयूषोऽभिनवं पयः ॥ **मस्जेर्नुम् च** ॥ मस्जेरन्त्यात्पूर्वो नुम् वाच्यः । मञ्जूषा ॥ **गडेश्च** ॥ गण्डूषः । गण्डूषा ॥ **अर्तेररुः** ॥ अररुः शत्रुः ।

अररू । अररवः ॥ **कुटः किच्च** ॥ कुटरुर्वस्त्रगृहम् । कित्त्वप्रयोजनं चिन्त्यम् ॥ **शकादिभ्योऽटन्** ॥ शकटोऽस्त्रियाम् । ककिर्गत्यर्थः । कङ्कटः सन्नाहः । देवटः शिल्पी । करट इत्यादि ॥ **कृकदिकडिकटिभ्योऽम्बच्** ॥ करम्बं व्यामिश्रम् । कदिकडी सौत्रौ । कदम्बो वृक्षभेदः । कडम्बोऽग्रभागः । कटम्बो वादित्रम् ॥ **कदेर्णित्पक्षिणि** ॥ कादम्बः कलहंसः ॥ **कलिकर्योरमः** ॥ कलमः । कर्दमः ॥ **कुणिपुल्योः किन्दच्** ॥ कुण शब्दोपकरणयोः । कुणिन्दः शब्दः । पुलिन्दो जातिविशेषः ॥ **कुपेर्वा वश्च** ॥ कुपिन्दकुविन्दौ तन्तुवाये ॥ **नौ षञ्जेर्घथिन्** ॥ निषङ्गथिरालिङ्गकः ॥ **उदि चेर्डथिन्** ॥ उदरथिः समुद्रः ॥ **सर्तेर्णिच्च** ॥ सारथिः ॥ **खर्जिपिञ्जादिभ्य ऊरोलचौ** ॥ खर्जूरः । कर्पूरः । वल्लूरं शुष्कमांसम् । पिञ्जूलं कुशवर्तिः ॥ **लङ्गेर्वृद्धिश्च** ॥ लाङ्गूलम् । कुसूलः ॥ **तमेर्बुग्वृद्धिश्च** ॥ ताम्बूलम् ॥ शृणातेर्दुग्वृद्धिश्च ॥ शार्दूलः ॥ **दुकोः कुक्च** ॥ दुकूलम् । कुकूलम् ॥ **कुवश्चट् दीर्घश्च** ॥ कूची चित्रलेखनिका ॥ **समीणः** ॥ समीचः समुद्रः । समीचो हरिणी ॥ **सिवेष्टेरू च** ॥ सूचो दर्भाङ्कुरः । सूचीः ॥ **शमेर्बन्** ॥ शम्बो मुसलम् ॥ **उल्वादयश्च** ॥ वन्नन्ता निपात्यन्ते ॥ उच समवाये । चस्य लत्वं गुणाभावश्च । उल्बो गर्भाशयः । शुल्बं ताम्रम् । बिल्वम् ॥ **स्थः स्तोऽम्बजवकौ** ॥ तिष्ठतेरम्बच् अवक एतौ स्तस्तादेशश्च ॥ स्तम्बो गुच्छस्तृणादिनः । स्तवकः । पुष्पगुच्छः ॥ **शाशपिभ्यां ददनौ** ॥ शादो जम्बालशष्पयोः ॥ शब्दः ॥ **अब्दादयश्च** ॥ अवतीत्यब्दः ॥ **कौतेर्नुम्** ॥ कुन्दः ॥ **वलिमलितनिभ्यः कयन्** ॥ वलयम् । मलयः । तनयः ॥ **वृहोः षुग्दुकौ च** ॥ वृषय आश्रयः । हृदयम् ॥ **मिपिभ्यां रुः** ॥ मेरुः । पेरुः सूर्यः । बाहुलकात् पिबतेरपि । संवत्सरवत्पारुः पेरुर्वासीर्दिनप्रणीः ॥ **जत्र्वादयश्च** ॥ जत्रु । जत्रुणी । अश्रु । अश्रुणी ॥ **रुशातिभ्यां क्रुन्** ॥ रुरुर्मृगभेदः । शातयतीति शत्रुः । प्रज्ञादौ पाठाद्धूस्वत्वम् ॥ **जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्त्नण्किन्शकूस्यटढडटाटचः** ॥ जनित्रौ मातापितरौ । दात्वो दाता । च्यौत्नो गन्ता अण्डजः क्षीणपुण्यश्च । सृणिरङ्कुशश्चन्द्रः सूर्यो वायुश्च । वृशः आर्द्रकं मूलकं च । मत्स्यः । षण्ढः । डित्त्वाट्टिलोपः । नमतीति नटः शैलूषः । बिभर्ति भरटः कुलालो भृतकश्च ॥ **अन्येभ्योऽपि दृश्यन्ते** ॥ पेत्वममृतं भृशम् ॥ **कुसेरुम्भोमेदेताः** ॥ कुसुम्भम् । कुसुमम् । कुसीदम् । कुसीतो जनपदः ॥ **सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः** ॥ सनोतेरसिप्रत्यय उपधावृद्धिः ॥ सानसिर्हिरण्यम् । वृञो नुक् च । वर्णसिर्जलम् । पॄ । पर्णसिर्जलगृहम् । तड आघाते । तण्डुलाः । अकि लक्षणे उशच् । अङ्कुशः । चषेरालच् । चषालो यूपकटकः । इल्वलो दैत्यभेदः । पल्वलम् । ञिधृषा ऋकारस्य इकारः । धिष्ण्यम् । शलेर्यः । शल्यम् । वा पुंसि शङ्कुर्ना ॥ **मूशक्यविभ्यः क्लः** ॥

---

१ कुवश्चडिति । दीर्घविधानसामर्थ्याद् गुणाभावः ॥

मूलम् । शक्वः प्रियंवदे । अल्लो रसः । बाहुलकादमेः । अम्लः ॥ **माछासासिभ्यो यः** ॥ माया । छाया । सस्यम् । बाहुलकात्सुनोतेः । सव्यं दक्षिणवामयोः ॥ **जनेर्यक्** ॥ ये विभाषा । जन्यं युद्धम् । जाया भार्या ॥ **अघ्न्यादयश्च** ॥ यगन्ता निपात्यन्ते ॥ हन्तेर्यक् अडागमः उपधालोपश्च । अघ्न्या माहेयी । अघ्न्यः प्रजापतिः । कनी दीप्तौ कन्या । बवयो रैक्यम् । वन्ध्या ॥ **स्नामदिपद्यर्तिपॄशकिभ्यो वनिप्** ॥ स्नावा रसिकः । मद्वा शिवः । पद्वा पन्थाः । अर्वा तुरङ्गगर्ह्ययोः । पर्वा ग्रन्थिः प्रस्तावश्च । शक्वा हस्ती । ङीब्रौ । शकरी अङ्गुलिः ॥ **शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप्** ॥ शीवा अजगरः । क्रुश्वा सृगालः । रुह्वा वृक्षः । जित्वा जेता । क्षित्वा वायुः । सृत्वा प्रजापतिः । धृत्वा विष्णुः ॥ **ध्याप्योः सम्प्रसारणं च** ॥ धीवा कर्मकरः । पीवा स्थूलः ॥ **अदेर्ध च** ॥ अध्वा ॥ **प्र ईरशदोस्तुट् च** ॥ प्रेत्वा प्रशत्त्वा च सागरः । प्रेत्वरी प्रशत्त्वरी च नदी ॥ **सर्वधातुभ्य इन्** ॥ पचिरग्निः । तुडिः । तुण्डिः । वलिः । वटिः । यजिः । देवयजिः । काशत इति काशिः । यतिः । मल्लिः । मल्ली । केलिः । मसी परिणामे । मसिः । बाहुलकाद् गुणः । कोटिः । होलिः । बोधिः । नन्दिः । कलिः ॥ **हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च** ॥ 'हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्तितः' । पेषिर्वज्रम् । रोहिर्व्रती । वर्तिः । वेदिः । छेदिश्छेत्ता । कीर्तिः ॥ **इगुपधात्कित्** ॥ कृषिः । ऋषिः । शुचिः । लिपिः । बाहुलकाद्वत्वे लिविः । तूल निष्कर्षे । तूलिः । तूली । कूर्चिका ॥ **भ्रमेः सम्प्रसारणं च** ॥ भृमिर्वातः । बाहुलकाद्भ्रमिः ॥ **क्रमितमिशतिस्तम्भामत इच्च** ॥ क्रिमिः । सम्प्रसारणानुवृत्तेः कृमिरपि । तिमिर्मत्स्यभेदः । शितिर्मेचकशुक्लयोः । स्तिम्भिः समुद्रः ॥ **मनेरुच्च** ॥ मुनिः ॥ **वर्णेर्वलिश्चाहिरण्ये** ॥ वर्णिः[1] सौत्रः । अस्य । वलिरादेशः । 'करोपहारयोः पुंसि वलिः प्राण्यङ्गके स्त्रियाम्' । हिरण्ये तु वर्णिः सुवर्णम् ॥ **वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ्** ॥ वासिश्छेदनवस्तुनि । वापिः वापी । याजिर्यष्टा । राजिः । राजी । व्राजिर्वातालिः । सादिः सारथिः । निघातिर्लोहघातिनी । वाशिरग्निः । वादिर्विद्वान् । वारिर्गजबन्धनी । जले तु क्लीबम् । बाहुलकाद्वारिः पथिकसंहतौ ॥ **नहो भश्च** ॥ नाभिः स्यात्क्षत्रिये पुंसि ॥ प्राण्यङ्गे तु स्त्रियां पुंस्यपीति केचित् ॥ **कृषेर्वृद्धिश्छन्दसि** ॥ कार्षिः ॥ **श्रः शकुनौ** ॥ शारिः शारिका ॥ **कृञ उदीचां कारुषु** ॥ कारिः शिल्पी ॥ **जनिघसिभ्यामिण्** ॥ जनिर्जननम् । घासिर्भक्ष्यमग्निश्च ॥ **अज्यतिभ्यां च** ॥ आजिः संग्रामः । आतिः पक्षी ॥ **पादे च** ॥ पदाजिः । पदातिः ॥ **अशिपणाय्यो रुडायलुकौ च** ॥ अशे रुट् ॥ राशिः पुञ्जः । पणायतेरायलुक् । पाणिः करः ॥ **वाते-**

---

१ वर्णिः सौत्र इति । "ण्यन्तस्य वर्णेरादेश" इति युक्तम् ॥ वल प्राणने इत्यस्य वलौ सिद्धे वर्णेरादेशविधानं व्यर्थमेव ॥ इति चतुर्थः पादः ॥

ङिच्च ॥ विः पक्षी । स्त्रियां वीत्यपि ॥ **प्रे हरतेः कूपे** ॥ प्रहिः कूपः ॥ **नौ व्यो यलोपः पूर्वस्य च दीर्घः** ॥ व्येञ् इण् स्याद् यलोपश्च नेर्दीर्घः ॥ नीविः । नीवी । वस्त्रग्रन्थौ मूलधने च ॥ **समाने ख्यः स चोदात्तः** ॥ समानशब्दे उपपदे ख्या इत्यस्मादिण् स्यात्स च डित् यलोपश्च । समानस्य तूदात्तः स इत्यादेशश्च ॥ समानं ख्यायते जनैरिति सखा ॥ **आङि श्रिहनिभ्यां ह्रस्वश्च** ॥ इण् स्यात्स च डित् आङो ह्रस्वश्च ॥ स्त्रियः पाल्यश्रिकोटयः । सर्पे वृत्रासुरेऽप्यहिः ॥ **अच इः** ॥ रविः । पविः । तरिः । कविः । अरिः । अलिः ॥ **खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च** ॥ खनिः । कषिर्हिंस्रः । अजिः । असिः । वसिर्वस्त्रम् । वनिरग्निः । सनिर्भक्तिर्दानं च । ध्वनिः । ग्रन्थिः । चलिः पशुः ॥ **वृतेश्छन्दसि** ॥ वर्तिः ॥ **भुजेः किच्च** ॥ भुजिः ॥ **कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च** ॥ इः कित्स्यात् ॥ किरिर्वराहः । गिरिर्गोत्राक्षिरोगयोः । गिरिणा काणः गिरिकाणः । शिरिः शलभो हन्ता च । पुरिर्नगरं राजा नदी च । कुटिः शाला शरीरं च । भिदिर्वज्रम् । छिदिः परशुः ॥ **कुडिकम्प्योर्नलोपश्च** ॥ कुडि दाहे । कुडिर्देहः कपिः ॥ **सर्वधातुभ्यो मनिन्** ॥ क्रियत इति कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम बलम् । इस्मन्निति ह्रस्वः । छद्म । सुत्रामा ॥ **बृंहेर्नोऽच्च** ॥ नकारस्याकारः ॥ ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः । **आशिशकिभ्यां छन्दसि** ॥ अश्मा । शक्मा ॥ **हृभृधृसृस्तृशॄभ्य इमनिच्** ॥ हरिमा कलिः । भरिमा कुटुम्बम् । धरिमा रूपम् । सरिमा वायुः । स्तरिमा तल्पम् । शरिमा प्रसवः ॥ **जनिमृङ्भ्यामिमनिन्** ॥ जनिमा जन्म । मरिमा मृत्युः ॥ **वेञः सर्वत्र** ॥ छन्दसि भाषायां चेत्यर्थः । वेमा तन्तुवायदण्डः । अर्धर्चादिः । सामनी वेमनी इति वृत्तिः ॥ **नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन्** ॥ सप्त अमी निपात्यन्ते ॥ म्नायतेऽनेनेति नाम । सिनोतेर्दीर्घः । सीमा । सीमानौ । सीमानः ॥ पक्षे डाप् । सीमे । सीमाः । व्येञोऽन्त्यस्योत्वं गुणः । व्योम । रौतेः रोम । लोम । पाप्मा पापम् । धाम परिमाणं तेजश्च ॥ **मिथुने मनिः** ॥ उपसर्गक्रियासंबन्धो मिथुनम् । स्वरार्थमिदम् । सुशर्मा ॥ **सातिभ्यां मनिन्मनिणौ** ॥ स्यति साम । सामनी । आत्मा ॥ **हनिमशिभ्यां सिकन्** ॥ हंसिका हंसयोषिति । मक्षिका ॥ **कोररन्** ॥ कबरः ॥ **गिर उडच्** ॥ गरुडः ॥ **इन्देः कमिन्नलोपश्च** ॥ इदम् ॥ **कायतेर्डिमिः** ॥ किम् ॥ **सर्वधातुभ्यष्ट्रन्** ॥ वस्त्रम् । अस्त्रम् । शस्त्रम् । इस्मन्निति ह्रस्वत्वम् । छादनाच्छत्रम् ॥ **भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च** ॥ भ्राष्ट्रः । गात्रं शटकम् । नान्त्रं स्तोत्रम् । हान्त्रं मरणम् । वैष्ट्रं विष्टपम् । आष्ट्रमाकाशम् ॥ **दिवेर्द्युच्च** ॥ द्यौत्रं ज्योतिः ॥ **उषिखनिभ्यां कित्** ॥ उष्ट्रः । खात्रं खनित्रं जलाधारश्च ॥ **सिविमुच्योष्टे रू च** ॥ सूत्रम् । मूत्रम् ॥ **अमिचिमिदिश-**

---

१ ध्यामन् इति क्वचित्पाठः ॥

**सिभ्यः क्त्रः** ॥ अन्त्रम् । चित्रम् । मित्रम् । शस्त्रम् ॥ **पुवो ह्रस्वश्च** ॥ पुत्रः ॥ **स्त्यायतेर्ड्रट्** ॥ स्त्री ॥ **गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः** ॥ गोत्रं स्यान्नामवंशयोः । गोत्रा पृथिवी । धत्रं गृहम् । वेत्रम् । पक्त्रम् । वक्त्रम् । यन्त्रम् । सत्त्रम् । क्षत्त्रम् । **हुयामाश्रुभसिभ्यस्त्रन्** ॥ होत्रम् । यात्रा । मात्रा । श्रोत्रम् । भस्त्रा ॥ **गमेरा च** ॥ गात्रम् ॥ **दादिभ्यश्छन्दसि** ॥ दात्रम् । पात्रम् ॥ **भूवादिगृभ्यो णित्रन्** ॥ भावित्रम् । वादित्रम् । गारित्रमोदम् ॥ **चरेर्वृत्ते** ॥ चारित्रम् ॥ **अशित्रादिभ्य इत्रोत्रौ** ॥ अशित्रम् । वहित्रम् । धरित्री मही । त्रैङ् एवमादिभ्यः । उत्रः । त्रोत्रं प्रहरणम् । वृञ् । वरुत्रं प्रावरणम् ॥ **अमेर्द्विषेति चित्** ॥ अमित्रः शत्रुः ॥ **आ समिणनिकषिभ्याम्** ॥ संपूर्वादिणो निपूर्वात्कषेश्च आ स्यात् ॥ स्वरादित्वादव्ययत्वम् । समया । निकषा ॥ **चितेः कणः कश्च** ॥ बाहुलकादगुणः । चिक्कणं मसृणं स्निग्धम् ॥ **सूचेः स्मन्** ॥ सूक्ष्मम् ॥ **पातेर्डुम्सुन्** ॥ पुमान् **रुचिभुजिभ्यां किष्यन्** ॥ रुचिष्यमिष्टम् ॥ भुजिष्यो दासः ॥ **वसेस्तिः** ॥ वस्तिर्नाभेरधो द्वयोः । वस्तयः स्युर्दशासूत्रे । बाहुलकात् शासः शास्तिः राजदण्डः । विन्ध्याख्यमगमस्यतीत्यगस्तिः । शकन्ध्वादिः ॥ **सावसेः** ॥ स्वस्ति । स्वरादिपाठादव्ययत्वम् ॥ **वौ तसेः** ॥ वितस्तिः ॥ **पादिप्रथिभ्यां तित्** ॥ पत्तिः । प्रथितिः । तितुत्रेष्वग्रहादीनामितीट् ॥ **दृणातेर्ह्रस्वश्च** ॥ दृतिः ॥ **कॄतॄकृपिभ्यः कीटन्** ॥ किरीटं शिरोवेष्टम् । तिरीटं सुवर्णम् । कृपीटं कुक्षिवारिणोः ॥ **रुचिवचिकुचिकुटिभ्यः कितच्** ॥ रुचितमिष्टम् । उचितम् । कुचितं परिमितम् । कुटितं कुटिलम् ॥ **कुडिकुषिभ्यां क्मलन्** ॥ कुड्मलम् । कुष्मलम् ॥ **कुषेर्लश्च** ॥ कुल्मलं पापम् ॥ **सर्वधातुभ्योऽसुन्** ॥ चेतः । सरः । पयः । सदः ॥ **रपेरत एच्च** ॥ रेपोऽवद्यम् ॥ **अशेर्देवने युट् च** ॥ देवने स्तुतौ । यशः ॥ **उब्जेर्बले बलोपश्च** ॥ ओजः ॥ **श्वेः संप्रसारणं च** ॥ शवः । शवसी । बलपर्यायोऽयम् ॥ **श्रयतेः स्वाङ्गे शिरः किच्च** ॥ श्रयतेः शिर आदेशोऽसुन् किच्च ॥ शिरः । शिरसी ॥ **अर्तेरुच्च** ॥ उरः ॥ **व्याधौ शुट् च** ॥ अर्शो गुदव्याधिः ॥ **उदके नुट् च** ॥ अर्तेरसुन् स्यात्तस्य च नुट् । अर्णः । अर्णसी ॥ **इण आगसि** ॥ एनः ॥ **रिचेर्धने घिच्च** ॥ चात्प्रत्ययस्य नुट् ॥ घित्त्वात्कुत्वम् । रेक्णः सुवर्णम् ॥ **चायतेरन्ने ह्रस्वश्च** ॥ चनो भक्तम् ॥ **वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च** ॥ वर्पो रूपम् । शेपो गुह्यम् ॥ **स्रुरीभ्यां तुट् च** । स्रोतः ॥ रेतः ॥ **पातेर्बले जुट् च** ॥ पाजः । पाजसी ॥ **उदके थुट् च** ॥ पाथः । **अन्ने च** ॥ पाथो भक्तम् ॥ **अदेर्नुम्धौ च** ॥ अदेर्भक्ते वाच्येऽसुन् नुमागमो धादेशश्च ॥ अन्धोऽन्नम् ॥ **स्कन्देश्च स्वाङ्गे** ॥ स्कन्दः । स्कन्दसी ॥ **आपः कर्माख्यायाम्** ॥ कर्माख्यायां ह्रस्वो नुट् च वा ॥ अप्नः । अपः । बाहुलकात् । आपः । आपसी ॥ **रूपे जुट् च** ॥ अब्जो रूपम् ॥ **उदके नुम्भौ च** ॥ अम्भः ॥ **नहेर्दिवि भश्च** ।

नभः ॥ **इण आगोऽपराधे च** ॥ 'आगः पापापराधयोः' ॥ **अमेर्हुक्च** ॥ अंहः ॥ **रमेश्च** ॥ रंहः ॥ **देशे ह च** ॥ रमन्तेऽस्मिन् रहः ॥ **अञ्च्याञ्जियुजिभृजिभ्यः कुश्च** ॥ एभ्योऽसुम् कवर्गश्चान्तादेशः ॥ 'अङ्कश्चिह्नशरीरयोः' । अङ्गः पक्षी । योगः समाधिः । भर्गस्तेजः ॥ **भूरञ्जिभ्यां कित्** ॥ भुवः । रजः ॥ **वसोर्णित्** ॥ वासो वस्त्रम् ॥ **चन्देरादेश्च छः** ॥ छन्दः ॥ **पचिवचिभ्यां सुट् च** ॥ पक्षसी तु स्मृतौ पक्षौ । वक्षो हृदयम् ॥ **वहिहाधाञ्भ्यश्छन्दसि** ॥ वक्षाः अनड्वान् । हासाश्चन्द्रः । धासाः पर्वत इति प्राञ्चः । वस्तुतस्तु णिदित्यनुवर्तते न तु सुट् । तेन वहेरुपधावृद्धिः । इतरयोरातो युगिति युक् । शोणा धृष्णू नृवाहसा । श्रोता हवं गृणतः स्तोमवाहाः । विश्वो विहायाः । वाजम्भरो विहायाः । देवो नयः पृथिवीं विश्वधायाः । अधारयत् पृथिवीं विश्वधायसम् । धर्णसि भूरिधायसमित्यादि ॥ **इण आसिः** ॥ अयाः वह्निः । स्वरादिपाठादव्ययत्वम् ॥ **मिथुनेऽसिः** ॥ **पूर्ववच्च सर्वम्** ॥ उपसर्गविशिष्टो धातुर्मिथुनं तत्रानुनोऽपवादोऽसिः स्वरार्थः ॥ **नञि हन एह च** ॥ अनेहाः । अनेहसौ ॥ **विधाञो वेध च** ॥ विदधातीति वेधाः ॥ **नुवो धुट् च** ॥ नोधाः ॥ **गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च** ॥ असिः स्यात् ॥ सुतपाः । जातवेदाः । गतिकारकोपपदात् कृदित्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते तदपवादार्थमिदम् ॥ **चन्द्रे मो डित्** ॥ चन्द्रोपपदान्माङोऽसिः स्यात्स च डित् ॥ चन्द्रमाः ॥ **वयसि धाञः** ॥ वयोधास्तरुणः ॥ **पयसि च** ॥ पयोधाः समुद्रो मेघश्च ॥ **पुरसि च** ॥ पुरोधाः ॥ **पुरूरवाः** ॥ पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते ॥ **चक्षेर्बहुलं शिच्च** ॥ नृचक्षाः ॥ **उषः कित्** ॥ उषः ॥ **दमेरुनसिः** ॥ सप्तार्चिर्दमुनाः ॥ **अङ्गतेरसिरिरुडागमश्च** ॥ अङ्गिराः ॥ **सर्तेरप्पूर्वादसिः** ॥ अप्सराः ॥ प्रायेणायं भूम्नि । अप्सरसः ॥ **विदिभुजिभ्यां विश्वे** ॥ विश्ववेदाः । विश्वभोजाः ॥ **वशेः कनसिः** ॥ संप्रसारणम् । उशनाः ॥

॥ इत्युणादिषु चतुर्थः पादः ॥

---

## अथोणादिषु पञ्चमः पादः ।

**अदि भुवो डुतच्** ॥ अद्भुतम् ॥ **गुधेरूमः** ॥ गोधूमः ॥ **मसेरूरन्** ॥ मसूरः । प्रथमे पादे असेरुरन्मसेश्चेत्यत्र व्याख्यातः ॥ **स्थः किच्च** ॥ स्थूरो मनुष्यः ॥ **पातेरातिः** ॥ पातिः स्वामी । संपातिः पक्षिराजः ॥ **वातेर्नित्** ॥ 'वातिरादित्यसोमयोः' ॥ **अर्तेश्च** ॥ अरतिरुद्वेगः ॥ **तृहेः क्नो हलोपश्च** ॥ तृणम् ॥ **मृञ्लुटितनिताडिभ्य उलच् तण्डश्च** ॥ म्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्त इति वा तण्डुलाः ॥ **दंसेष्टटनौ न आ च** ॥ दासः सेवकशूद्रयोः ॥ **दंशेश्च** ॥ दाशो धीवरः ॥ **उदि चेर्डैसिः** ॥ स्वरादिपाठादव्ययत्वम् ॥ उच्चैः ॥ **ना दीर्घश्च** ॥ नीचैः ॥ **सौ रमेः क्तो दमे पूर्व**-

**पदस्य च दीर्घः** ॥ रमेः सुपूर्वाद्रमे वाच्ये क्तः स्यात् ॥ कित्त्वादनुनासिकलोपः । सूरत उपशान्तो दयालुश्च । **पूञो यण्णुक् ह्रस्वश्च** ॥ यत्प्रत्ययः ॥ पुण्यम् ॥ **स्रंसेः शिः कुट् किच्च** ॥ स्रंसतेः शिरादेशः यत्प्रत्ययः कित्तस्य कुडागमश्च ॥ शिक्यम् ॥ **अर्तेः क्युरुच्च** ॥ उरणो मेषः ॥ **हिंसेरीरन्नीरचौ** ॥ हिंसीरो व्याघ्रदुष्टयोः ॥ **उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च** ॥ उदरम् ॥ **डित् खनेर्मुट् स चोदात्तः** ॥ अच् अल् च डित्स्याद्धातोर्मुट् स चोदात्तः ॥ मुखम् ॥ **अमेः सन्** ॥ **अंसः** ॥ **मुहेः खो मूर्च** ॥ मूर्खः ॥ **नहेर्हलोपश्च** ॥ नखः ॥ **शीङो ह्रस्वश्च** ॥ शिखा ॥ **माङ ऊखो मय च** ॥ मयूखः ॥ **कलिगलिभ्यां फगस्योच्च** ॥ कुल्फः शरीरावयवो रोगश्च । गुल्फः पादग्रन्थिः ॥ **स्पशेः श्वण्शुना पृ च** ॥ श्वण्शुनौ प्रत्ययौ पृ इत्यादेशः ॥ पार्श्वोऽस्त्री कक्षयोरधः । पर्शुरायुधम् ॥ **श्मनि श्रयतेर्डुन्** ॥ श्मन्शब्दो मुखवाची ॥ मुखमाश्रयत इति श्मश्रु ॥ **अश्वादयश्च** ॥ अश्रु नयनजलम् ॥ **जनेष्टन् लोपश्च** ॥ जटा ॥ **अच् तस्य जङ्घ च** ॥ तस्य जनेः जङ्घादेशः स्यादच् ॥ जङ्घा ॥ **हन्तेः शरीरावयवे द्वे च** ॥ जघनम् । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' ॥ **क्लिशेरन् लो लोपश्च** ॥ लकारस्य लोपः ॥ केशः ॥ **फलेरितजादेश्च पः** ॥ पलितम् ॥ **कृञादिभ्यः संज्ञायां वुन्** ॥ करकः । करका । कटकः । नरकम् । नरकः । 'नरको नारकोऽपि च' इति द्विरूपकोशः । सरकं गमनम् । कोरकः कोरकं च ॥ **चीकयतेराद्यन्तविपर्ययश्च** ॥ कीचको वंशभेदः ॥ **पचिमच्योरिच्चोपधायाः** ॥ पेचकः । मेचकः ॥ **जनेररष्ठ च** ॥ जठरम् ॥ **वचिमनिभ्यां चिच्च** ॥ वठरो मूर्खः । 'मठरो मुनिशौण्डयोः' । बिदादित्वान्माठरः । गर्गादित्वान्माठर्यः ॥ **ऊर्जि दृणातेरलचौ पूर्वपदान्त्यलोपश्च** ॥ 'ऊर्दरः शूररक्षसोः' ॥ **कृदरादयश्च** ॥ कृदरः कुसूलः । मृदरं विलसत् । सृदरः सर्पः ॥ **हन्तेर्युन्नाद्यन्तयोर्घत्वतत्वे** ॥ घातनो मारकः ॥ **क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च** ॥ क्रान्तुः पक्षी । गान्तुः पथिकः । क्षान्तुर्मशकः ॥ **हर्यतेः कन्यन् हिरच्** ॥ कन्यन् प्रत्ययः ॥ हिरण्यम् ॥ **कृञः पासः** ॥ कर्पासः । बिल्वादित्वात्कार्पासं वस्त्रम् ॥ **जनेस्तु रश्च** ॥ जर्तुर्हस्ती योनिश्च ॥ **र्णोतेर्डः** ॥ ऊर्णा ॥ **दधातेर्यत् नुट् च** ॥ धान्यम् ॥ **जेर्यतेः क्रिन् रश्च वः** ॥ जित्रिः स्यात्कलपक्षिणोः । बाहुलकाद्धलि चेति दीर्घो न ॥ **मव्यतेर्यलोपे मश्चापतुडालः** ॥ मव्यतेरालप्रत्ययः स्यात्तस्यापतुडागमो धातोर्यलोपो मकारश्चान्त्यस्य ॥ ममापतालो विषये ॥ **ऋजेः कीकन्** ॥ ऋजीक इन्द्रो धूमश्च ॥ **तनोतेर्डउः सन्वच्च** ॥ तितउः पुंसि क्लीबे च ॥ **अर्भकपृथुकपाका वयसि** ॥ ऋधु वृद्धौ । अतो वुन् । मकारश्चान्तादेशः । प्रथेः कुकन्संप्रसारणं च । पिबतेः कन् ॥ **अवद्यावमाधमार्वरेफाः** ॥ कुत्सिते वदेर्नञि यत् । अवद्यम् । अवतेरमः ।

---

१शीङो ह्रस्वश्चेति । ह्रस्वविधानसामर्थ्याद् गुणाभावः ॥ इति पञ्चमः पादः ॥

वस्य पक्षे धः । अवमः । अधमः । अर्तेर्वन् । अर्वा । रिफतेस्तौदादिकात् अः । **रेफः ॥ लीरीङो ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः** ॥ तरौ प्रत्ययौ क्रमात् स्तो धातोर्ह्रस्वः प्रत्ययस्य पुट् ॥ लिप्तं श्लिष्टम् । रिप्रं कुत्सितम् ॥ **क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च** ॥ क्लिशेः कन् स्यात् उपधाया ईत्वं लस्य लोपो नामागमश्च ॥ कीनाशो यमः । किस्वफलं चिन्त्यम् ॥ **अश्नोतेराशुकर्मणि वरट् च** ॥ चकारादुपधाय ईत्त्वम् ॥ ईश्वरः ॥ **चतेरुरन्** ॥ चत्वारः ॥ **प्राततेररन्** ॥ प्रातः ॥ **अमेस्तुट् च** ॥ अन्तर्मध्यम् ॥ **दहेर्गो लोपो दश्च नः** ॥ गप्रत्ययो धातोरन्त्यस्य लोपो दकारस्य नकारः ॥ नगः ॥ **सिचेः संज्ञायां हनुमौ कश्च** ॥ सिञ्चतेः कप्रत्ययो हकारादेशो नुम् च स्यात् ॥ सिंहः ॥ **व्याङि घ्रातेश्च जातौ** ॥ कप्रत्ययः स्यात् ॥ व्याघ्रः ॥ **हन्तेरच् घुर च** ॥ घोरम् ॥ **क्षमेरुपधालोपश्च** ॥ चादच् ॥ क्ष्मा ॥ **तरतेर्ड्रिः** ॥ त्रयः । त्रीन् ॥ **ग्रहेर्निः** ॥ ग्रहणिः । ङीप् । ग्रहणी व्याधिभेदः ॥ **प्रथेरमच्** ॥ प्रथमः ॥ **चरेश्च** ॥ चरमः ॥ **मङ्गेरलच्** ॥ मङ्गलम् ॥

॥ इत्युणादिषु पञ्चमः पादः ॥

---

## अथोत्तरकृदन्तप्रकरणम् ।

**उणादयो बहुलम्** । ३ । ३ । १ ॥ एते वर्तमाने संज्ञायां च बहुलं स्युः ॥ केचिदविहिता अप्यूह्याः । संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ॥ कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ **भूतेऽपि दृश्यन्ते** । ३ । ३ । २ ॥ **भविष्यति गम्यादयः** । ३ । ३ । ३ ॥ **दाशगोघ्नौ संप्रदाने** । ३ । ४ । ७३ ॥ एतौ संप्रदाने कारके निपात्येते ॥ दाशन्ति अस्मै दाशः । गां हन्ति अस्मै गोघ्नोऽतिथिः ॥ **भीमादयोऽपादाने** । ३ । ४ । ७४ ॥ भीमः । भीष्मः । प्रस्कन्दनः । प्ररक्षः । मूर्खः । खलतिः ॥ **ताभ्यामन्यत्रोणादयः** । ३ । ४ । ७५ ॥ संप्रदानपरामर्शार्थं ताभ्यामिति ॥ ततोऽसौ भवति तन्तुः । वृतं तदिति वर्म । चरितं तदिति चर्म ॥ **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** । ३ । ३ । १० ॥ क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः ॥ मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति । अत्र

---

१ **केचिदविहिता अप्यूह्या इति** । अनेन यथा "ऋलृक्" सूत्रभाष्ये लृकारोपदेशस्य प्रयोजनकथनावसरे "चतुष्टयी शब्दानां प्रवृत्तिः" इत्येतत्पक्षोपष्टम्भेन लृफिडलृफिड्डशब्दयोः परतो लृकारोपदेशे सति "यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थः" इत्यनेन यदृच्छाशब्दे प्रयोजनमभिधाय "त्रयी शब्दानां प्रवृत्तिर्न सन्ति यदृच्छाशब्दाः" इति कथनोत्तरम्–"अर्तिप्रवृत्तिश्चैव हि लोके दृश्यते तस्मात् फिडफिड्डावौणादिकौ प्रत्ययौ" इत्युक्तं सूचितं भवति ॥ २ बहुलग्रहणप्रपञ्चभूतानि सूत्राणि व्याचष्टे–**भूतेऽपीत्यादिना** ॥ ३ **कृष्णं द्रष्टुमिति** ।कृष्णकर्मकभविष्यद्दर्शनविशिष्टं यानमिति बोधः ॥ ४ **कृष्णं दर्शको यातीति** । कृष्णकर्मकभविष्यद्दर्शनकर्तृकर्तृकं तादृशदर्शनविशिष्टं यानमिति बोधः ॥

वासरूपन्यायेन तृजादयो न । पुनर्ण्वुलुक्तेः ॥ [1]**समानकर्तृकेषु तुमुन् । ३ । ३ । १५८ ।** अक्रियार्थोपपदार्थमेतत् । इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन् स्यात् ॥ इच्छति भोक्तुम् । वष्टि वाञ्छति वा ॥ [2]**शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् । ३ । ४ । ६५ ॥** एषूपपदेषु धातोस्तुमुन् स्यात् ॥ शक्नोति भोक्तुम् । एवं धृष्णोतीत्यादौ । अर्थ-ग्रहणमस्तिनैव संबध्यते । अनन्तरत्वात् । अस्ति भवति विद्यते वा भोक्तुम् ॥ **पर्याप्ति-वचनेष्वलमर्थेषु । ३ । ४ । ६६ ॥** पर्याप्तिः पूर्णता तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन् स्यात् ॥ पर्याप्तो भोक्तुं प्रवीणः कुशलः पटुरित्यादि । पर्याप्तिवचनेषु किम् ? अलं भुक्त्वा । अलमर्थेषु किम् ? पर्याप्तं भुङ्क्ते । प्रभूततेह गम्यते न तु भोक्तुः सामर्थ्यम् ॥ **कालसमय-वेलासु तुमुन् । ३ । ३ । १६७ ॥** पर्यायोपादानमर्थोपलक्षणार्थम् । कालार्थेषूपपदेषु तुमुन् स्यात् ॥ कालः समयो वेला अनेहा वा भोक्तुम् । प्रैषादिग्रहणमिहानुवर्तते । तेनेह न-भूतानि कालः पचतीति वार्ता ॥ [3]**भाववचनाश्च । ३ । ३ । ११ ॥** भाव इत्यधिकृत्य वक्ष्य-माणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः ॥ यागाय याति ॥ [4]**अण् कर्मणि च । ३ । ३ । १२ ॥** कर्मण्युपपदे क्रियार्थायां क्रियायां चाण् स्यात् ॥ ण्वुलोऽपवादः । काण्डलावो व्रजति । [5]परत्वादयं कादीन् बाधते । कम्बलदायो व्रजति ॥ **पदरुजविशस्पृशो घञ् । ३ । ३ । १६ ॥** भविष्यतीति निवृत्तम् ॥ पद्यतेऽसौ पादः । रुजतीति रोगः । विशतीति वेशः । स्पृशतीति [6]स्पर्शः ॥ **सृ स्थिरे । ३ । ३ । १७ ॥** सृ इति लुप्तविभक्तिकम् । सर्तेः स्थिरे कर्तरि घञ् स्यात् ॥ [7]सरति कालान्तरमिति सारः ॥ [8]**व्याधिमत्स्यबलेषु चेति वाच्यम् *** ॥ अतिसारो

---

१ तुमुनः प्रसङ्गात् तुमुन्विधायकसूत्रान्तरमुपन्यस्यति-**समानकर्तृकेष्विति** । " इच्छार्थेषु लिङ्लोटौ" इत्यतः " इच्छार्थेषु " इत्यनुवर्तते ॥ २ **शकधृषेति** । अयमप्यक्रियार्थोपपदार्थ एवारब्धो योगः ॥ **अन-न्तरत्वादिति** । "अस्ति" इत्यस्य घिसंज्ञकत्वेनैतस्य पूर्वनिपाते कर्तव्ये तदकरणमूलकव्याख्यानादिति भावः ॥ ३ **भाववचनाश्चेति** । " भविष्यति " इति, " क्रियार्थायां क्रियायाम् " इति चानुवर्तते । वक्ष्यमाणानां प्रत्ययानां घञादीनां विशेषविहितेन तुमुना बाधाभावाय सूत्रमिदम् । नच वासरूपविधिना घञादयोऽपि भवि-ष्यन्तीति किं सूत्रेणेति वाच्यम्, पूर्वसूत्रघटकण्वुल्ग्रहणेन " क्रियार्थायां क्रियायामुपपदे वासरूपन्यायेन तृजा-दयो न " इत्युक्तत्वेन घञपि न स्यादित्याशयात् । न चायं तुमुन् यद्यपि भावे विधीयते तथापि घञ्वाच्यो भावः सत्त्वभूतोऽयं त्वसत्त्वभूत इति कथमनेन घञो बाधस्य प्रसक्तिरिति वाच्यम्, तादृशविशेषस्य स्फुटप्रतिपत्त्यर्थमेवास्य सूत्रस्य करणात् । वा भाववचना इत्यत्र बाहुलकात् कर्मणि ल्युट् ॥ ४ **अण् कर्मणि चेति** । अनेन सूत्रेण विहितोऽण् कर्तरि भवति, " कर्तरि कृत् " इति सूत्रात् । एवञ्च क्रियार्थायां क्रियायां विशेषविहितो ण्वुल् प्रत्ययोऽणो बाधकः स्यादित्यारम्भः । नच वासरूपन्यायेन निर्वाहः पुनर्ण्वुल्विधानेनैतद्विषये न्यायाप्रवृत्तेः । **ण्वुलोऽपवाद इति** । प्रतिप्रसवविधिरयम् ॥ ५ नन्वेवं " कम्ब-लदायः " इत्यादावण् न स्यादनेन सूत्रेण ण्वुला प्राप्तबाधस्य प्रतिप्रसवेऽपि केन बाधस्य दुर्वार-त्वादत आह-**परत्वादिति** । आवृत्त्याऽस्य पुनरण्विधायकत्वेनाऽण उत्कृष्टत्वात् कस्यापि बाध इत्यर्थः । वचनसामर्थ्यादावृत्तिरिति भाष्ये स्पष्टम् । ल० श०• शे० ॥ ६ **स्पृशतीति स्पर्श इति** । रोग-विशेषस्य संज्ञेयम् ॥ ७ **सरति कालान्तरमिति** । सारांशस्य दृढत्वाच्चिरकालं स्थितिर्भवति ॥ ८ **व्याधिमत्स्येति** । अस्थिरार्थम् ॥

व्याधिः । अन्तर्भावितण्यर्थोऽत्र सरतिः । रुधिरादिकमतिशयेन सारयतीत्यर्थः । [1]**विसारो** मत्स्यः । 'सारो बले दृढांशे च' ॥ **भावे । ३ । ३ । १८ ॥** सिद्धावस्थापन्नो धात्वर्थो भावस्तत्र वाच्ये धातोर्घञ् स्यात् ॥ पाकः । पाकौ ॥ **स्फुरतिस्फुलत्योर्घञि । ६ । १ । ४७ ॥** अनयोरेच आत्त्वं स्याद्घञि ॥ स्फारः । स्फालः । 'उपसर्गस्य घञि' इति दीर्घः । परीहारः ॥ **इकः काशे । ६ । ३ । १२३ ॥** काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः ॥ [2]नीकाशः । अनूकाशः । इकः किम्? प्रकाशः । 'नोदात्तोपदेश-' इति न वृद्धिः । शमः । आचमादेस्तु । आचामः । कामः । वामः । विश्राम इति त्व[3]पाणिनीयम् ॥ **[4]स्यदो जवे । ६ । ४ । २८ ॥** स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते ॥ स्यदो वेगः । अन्यत्र स्यन्दः ॥ **[5]अवोदैधौद्मप्रश्रथहिमश्रथाः । ६ । ४ । २९ ॥** अवोदः अवक्लेदनम् । एध इन्धनम् । ओद्म उन्दनम् । श्रन्थेर्नलोपो वृद्ध्यभावश्च ॥ **अकर्तरि च कारके संज्ञायाम् । ३ । ३ । १९ ॥** कर्तृभिन्ने कारके घञ् स्यात् ॥ **घञि च भावकरणयोः । ६ । ४ । २७ ॥** रञ्जेर्नलोपः स्यात् ॥ रागः । अनयोः किम् ? रज्यत्यस्मिन् [6]रङ्गः । प्रास्यते इति प्रासः । संज्ञायामिति प्रायि[7]कम् । को भवता लाभो लब्धः । इत उत्तरं भावे अकर्तरि कारक इति द्वयमपि कृत्यल्युटो बहुलमिति यावदनुवर्तते ॥ **[8]परिमाणाख्यायां सर्वेभ्यः । ३ । ३ । २० ॥** घञ् ॥ अजपोर्बाधनार्थमिदम् । [9]एकस्तण्डुलनिचायः । [10]द्वौ शूर्पनिष्पावौ । [11]द्वौ कारौ ॥ **[12]दारजारौ कर्तरि णिलुक्च॥** दारयन्तीति दाराः । जारयन्तीति

---

१ विसारो मत्स्य इति । विविधं सरतीति व्युत्पत्तेः । **सारो बल इति** । सारयति चेष्टयतीति व्युत्पत्तेः बलस्यैव चेष्टासत्त्वात् ॥ २ **नीकाश इति** । नितरां काशते इति नीकाशः । "नीकाशो निश्चये तुल्ये" इति विश्वः ॥ ३ **अपाणिनीयमिति** । श्रमेः शुद्धाद् घञि वृद्धेर्दुर्लभत्वादिति भावः ॥ ४ **स्यदो जव इति** । जवो वेगः । स्यन्दतेऽनेनेति विग्रहः ॥ ५ **अवोदैधौद्मेति** । अवपूर्वादुन्देर्घञ् नलोपश्च निपात्यते । एध इत्यत्रेन्धेर्घञि नलोपगुणौ निपात्येते । "पुगन्त-" इत्यनेन गुणस्य प्राप्तावपि "न धातुलोप-" इति निषेधोऽन्यथा स्यात् । ओद्म इत्यत्रौणादिके उन्देर्मनिन् लोपगुणौ ॥ **श्रन्थेरिति** । प्रहिमान्यतरपूर्वस्येत्यादिः । ६ **रङ्ग इति** । नाट्यशालेत्यर्थः ॥ ७ "अकर्तरि च" इति चकारस्य "संज्ञायाम्" इत्युत्तरं योजना बोध्येत्याशयेनाह-**प्रायिकमिति** । ८ **परिमाणाख्यायामिति** । परिमाणं परिच्छित्तिः । इयत्ता । आख्यानमाख्या उक्तिः । षष्ठीतत्पुरुषः ॥ ९ **एकस्तण्डुलनिचाय इति** । निचीयते राशीक्रियते इति कर्मण्यत्र "एरच्" इत्यचं बाधित्वा घञ् । निःशेषतो राशीक्रियमाणस्तण्डुलसमुदायः ॥ १० **द्वौ शूर्पनिष्पावाविति** । निष्पूयते तुषाद्यपनयनेन यः शोध्यते तण्डुलादिः स निष्पावः ॥ ११ **द्वौ काराविति** । 'कॄ विक्षेपे' इति धातोः कर्मणि घञ् । विक्षिप्तो धान्यराशिः कारः । अचं बाधित्वा घञ् । अत्र "सर्वेभ्य" इत्युक्तेः प्रकृत्याश्रयो यः प्रत्ययः स भवत्येव । "एका तिलस्य उच्छित्तिः" इति यथा अत्र भावे क्तिन् प्रत्ययः ॥ १२ **दारजाराविति** । यद्यपि "दार" इति रूपं दारयतेः पचाद्यचा सिद्धम् "कर्षात्वत" इति घञ्यप्यन्तोदात्तत्वात्, तथापि "अचकावशक्तौ" इत्यस्य बाधनार्थमिदम् । णिलुग्विधानमत्र वृद्धेः श्रवणाय, अन्यथा णौ वृद्धावपि "मितां ह्रस्वः" इति ह्रस्वापत्तिः । "णेरनिटि" इति णिलोपे तु तस्य स्थानिवद्भावेन घञाश्रया वृद्धिर्न स्यात् । लुकि तु न लुकः स्थानिवत्त्वम्; अपरनिमित्तकत्वात् । लुका लुप्तत्वाच्च । त्र्यादेर्ण्यन्ताद् घञस्त्वनभिधानम् । णिलुग्विधानपरभाष्यप्रामाण्यात् । अत्र भाष्ये "करणे वा दारजारौ वक्तव्यौ" इत्यनेनाण्यन्ताद् दृणातेर्जरयतेर्वा "पुंसि संज्ञायाम्" इति घप्रत्यये प्राप्ते तदपवादो घञ् स्वीकृतस्तदा त्विदं वचनमनावश्यकम् । परंतु घञ् वचनेन साध्यो, नतु सामान्यसूत्रेण । अन्यथा घञ्ल्युटौ पर्यायेण स्यातामिति भैरवमिश्राः ॥ णिलुक् चेति चेन घञः संग्रहः ॥

जारः ॥ [1]**इङश्च । ३ । ३ । २१ ॥** घञ् ॥ अचोऽपवादः ॥ उपेत्य अस्मादधीयते उपाध्यायः ॥ [2]**अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्** *॥उपाध्याया । उपाध्यायी ॥ **शॄ वायुवर्णनिवृतेषु** * ॥ शॄ इत्यविभक्तिको निर्देशः ॥ शारो वायुः । करणे घञ् । शारो वर्णः । चित्रीकरणमिह धात्वर्थः । निव्रियते आव्रियतेऽनेनेति निवृतमावरणम् । बाहुलकात्करणे क्तः । 'गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः' । अकृतप्रावरण इत्यर्थः ॥ **उपसर्गे रुवः । ३ । ३ । २२ ॥** घञ् ॥ संरावः । उपसर्गे किम् ? रवः ॥ **अभिनिसः स्तनः शब्दसंज्ञायाम् । ८ । ३ । ८६ ॥** अस्मात् स्तनेः सस्य मूर्धन्यः ॥ अभिनिष्टानो वर्णः । शब्दसंज्ञायां किम् ? अभिनिस्तनति मृदङ्गः ॥ **समि युद्रुदुवः । ३ । ३ । २३ ॥** संयूयते मिश्रीक्रियते गुडादिभिरिति संयावः । पिष्टविकारोऽपूपविशेषः । संद्रावः । संदावः ॥ **श्रिणीभुवोऽनुपसर्गे । ३ । ३ । २४ ॥** श्रायः । नायः । भावः । अनुपसर्गे किम् ? प्रश्रयः । प्रणयः । प्रभवः । कथम् । 'प्रभावो राज्ञ' इति । प्रकृष्टो भाव इति प्रादिसमासः । कथं 'राज्ञो नय' इति । बाहुलकात् ॥ **वौ क्षुश्रुवः । ३ । ३ । २५ ॥** विक्षावः । विश्रावः । वौ किम् ? क्षवः । श्रवः ॥ **अवोदोर्नियः । ३ । ३ । २६ ॥** अवनायः अधोनयनम् । उन्नायः ऊर्ध्वनयनम् । कथमुन्नय * उत्प्रेक्षेति । बाहुलकात् ॥ **प्रे द्रुस्तुस्रुवः । ३ । ३ । २७ ॥** प्रद्रावः । प्रस्तावः । प्रस्रावः । प्रे इति किम् ? द्रवः । स्तवः । स्रवः । [3]**निरभ्योः पूल्वोः । ३ । ३ । २८ ॥** निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेषः । अभिलावः । निरभ्योः किम् ? पवः । लवः ॥ **उन्न्योर्ग्रः । ३ । ३ । २९ ॥** उद्गारः । निगारः । उन्न्योः किम् ? गरः ॥ **कॄ धान्ये । ३ । ३ । ३० ॥** कॄ इत्यस्माद्धान्यविषयकादुन्न्योर्घञ् स्यात् । उत्कारः । निकारः । धान्यस्य विक्षेप इत्यर्थः । धान्ये किम् ? भिक्षोत्करः । पुष्पनिकरः ॥ [4]**यज्ञे समि स्तुवः । ३ । ३ । ३१ ॥** समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः संस्तावः । यज्ञे किम् ? संस्तवः परिचयः ॥ **प्रे स्त्रोऽयज्ञे । ३ । ३ । ३२ ॥** अयज्ञे इति छेदः । यज्ञे इति प्रकृतत्वात् । प्रस्तारः[5] । अयज्ञे किम् ? बर्हिषः प्रस्तरो मुष्टिविशेषः ॥ **प्रथने[6] वावशब्दे । ३ । ३ । ३३ ॥** विपूर्वात् स्तृणातेर्घञ् स्यादशब्दविषये प्रथने । पटस्य विस्तारः । प्रथने किम् ? तृणविस्तरः[7] । अशब्दे किम् ? ग्रन्थविस्तरः ॥ [8]**छन्दोनाम्नि च । ३ । ३ । ३४ ॥** स्त्र इत्यनुवर्तते । विष्टारपङ्क्ति-

---

१ इङश्चेति । अकर्तरि कारके इङो घञ् । प्रकृत्याश्रयस्य "एरच्" इत्यच एव बाधकः ॥ उपेत्येति।गुरुसमीपं गत्वेत्यर्थः ॥ २ अपादान इति । ङीन्बाधनायेदम् ॥ * "उन्नय" इत्यस्य पर्याय उत्प्रेक्षेति ॥ ३ निरभ्योः पूल्वोरिति । अप्प्रत्ययस्यापवादोऽयं घञ् कर्मणि विधीयते ॥ ४ यज्ञे समीति । अधिकरणे ल्युडपवादोऽयं घञ् । यज्ञविषयकेऽर्थे वर्तमानात् स्तुव इत्यर्थः ॥ ५ प्रस्तार इति । शंक्रमण्यादेरिति शपः ॥ ६ प्रथन इति । प्रथनमिह विस्तीर्णता । सा चेह तिर्यगायतिरूपा ॥ ७ तृणविस्तर इति । आच्छादनमात्रमिह धात्वर्थः । ग्रन्थविस्तर इति । अत्र स्तृञ्धातुर्विस्तीर्णताया एव बोधकः ॥ ८ छन्दोनाम्नीति । समुदायेन छन्दोनाम्नि विवक्षिते स्तृणातेर्घञ् । वृत्तमिह छन्दःशब्दार्थः । शब्दविषयत्वात् पूर्वसूत्रस्येहाप्राप्तिः ॥

श्छन्दः । विस्तीर्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ् । ततः कर्मधारयः ॥ **छन्दोनाम्नि च ।८।३।९४॥** विपूर्वात् स्तृणातेर्घञन्तस्य सस्य षत्वं स्याच्छन्दोनाम्नि॥इति षत्वम् ॥**उदि ग्रहः ।३।३।३५॥** उद्ग्राहः ॥ **समि मुष्टौ ।३।३।३६॥** मल्लस्य संग्राहः।मुष्टौ किम्? द्रव्यस्य संग्रहः ॥ **परिन्योर्नीणोर्द्यूताभ्रेषयोः ।३।३।३७॥** परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ् स्यात् क्रमेण द्यूतेऽभ्रेषे च विषये ॥ परिणायेन शारान् हन्ति । समन्तान्नयनेनेत्यर्थः । एषोऽत्र न्यायः । उचितमित्यर्थः । द्यूताभ्रेषयोः किम्? परिणयो विवाहः । न्ययो नाशः ॥ **परावनुपात्यय इणः ।३।३।३८॥** क्रमप्राप्तस्य अनतिपातोऽनुपात्ययः । तव पर्यायः । अनुपात्यये किम्? कालस्य पर्ययः । अतिपात इत्यर्थः ॥ **व्युपयोः शेतेः पर्याये ।३।३।३९॥** तव विशायः । तव राजोपशायः । पर्याये किम्? विशयः संशयः । उपशयः समीपशयनम् ॥ **हस्तादाने चेरस्तेये ।३।३।४०॥** हस्तादान इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते । पुष्पप्रचायः । हस्तादाने किम्? वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति । अस्तेये किम्? पुष्पप्रचयश्चौर्येण ॥ **निवासचितिशरीरोपसमाधानेष्वादेश्च कः ।३।३।४१॥** एषु चिनोतेर्घञ् आदेश्च ककारः ॥ उपसमाधानं राशीकरणं तच्च धात्वर्थः । अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः । निवासे—काशीनिकायः । चितौ—आकायमग्निं चिन्वीत । शरीरे—चीयतेऽस्मिन्नस्थ्यादिकमिति कायः । समूहे—गोमयनिकायः । एषु किम्? चयः । चः क इति वक्तव्ये आदेरित्युक्तिर्यङ्लुक्यादेरेव यथा स्यादिति । गोमयानां निकेचायः । पुनःपुना राशीकरणमित्यर्थः ॥ **संघे चानौत्तराधर्ये ।३।३।४२॥** चेर्घञ् आदेश्च कः ॥ भिक्षुनिकायः । प्राणिनां समूहः सङ्घः । अनौत्तराधर्ये

---

१ उदि ग्रह इति । उत्पूर्वाद् ग्रहेर्घञ् । "ग्रहवृदृनिश्चि" इति विहितस्यापोऽपवादः ॥ २ समि मुष्टाविति । ग्रह इत्यनुवर्तते । मुष्टिविषयकार्थवृत्तेर्ग्रह इत्यर्थः । मुष्टिरङ्गुलिसंनिवेशः । अत्र ग्रहधात्वर्थोऽङ्गुलिसंनिवेशोऽत एव न "परिमाणाख्यायाम्" इत्यनेन गतार्थता ॥ ३ मल्लस्य संग्राह इति । कर्तरि षष्ठी ॥ ४ परिन्योरिति । द्यूताभ्रेषविषयकार्थाद्धातोरित्यर्थः । पदार्थानामनपचारो यथाप्राप्तस्य च करणमभ्रेषः । अनपचारोऽनतिक्रमः करणौचित्यमिति यावत् ॥ ५ राजोपशाय इति । राजसमीपशयनस्य पर्याय इत्यर्थः ॥ ६ हस्तादाने इति । हस्तादाने गम्यमाने चिनोतेर्घञ् स्तेयश्चौर्यञ्चेन्न विवक्षितं भवेत् ॥ ७ निवासचितीति । निवसन्त्यस्मिन्निति निवासः । चीयतेऽसौ चितिः । पाण्यादिसमुदायः शरीरम् ॥ काशीनिकाय इति । काशीनिवासदेश इत्यर्थः । अत्राधिकरणे घञ् ८ आचीयतेऽस्मिन्निष्टका इत्याकायम् । अधिकरणे घञ् । अग्निस्थलविशेषं चिन्वीत चयनेन निष्पादयेदिति श्रुत्यर्थः ॥ ९ गोमयनिकाय इति । प्रकीर्णानां गोमयानामेकत्र राशीकरणमित्यर्थः ॥ १० संघे चेति । उत्तरं चाधरं चोत्तराधरास्तेषां भाव औत्तराधर्यम् । भावे ष्यञ् । ततो नञ्समासः । औत्तराधर्यभिन्ने संघे चिनोतेर्घञ् । भिक्षुनिकाय इति । भिक्षवो हि कचित्तीर्थादौ ब्रह्मचिन्तनार्थं यदा पृथगेवतिष्ठन्ते तदा प्रत्ययः ॥ ११ प्राणिनां समूह इति । "संघोद्घौ गणप्रशंसयोः" इति गणमात्रे निपातितोऽपि संघशब्दः प्राणिनामेव समुदाये रूढ इति भावः ॥

किम् ? सूकरनिचयः[1] । सङ्घे किम् ? ज्ञानकर्मसमुच्चयः ॥ **कर्मव्यतिहारे[2] णच् स्त्रियाम्** । ३ । ३ । ४३ ॥ स्त्रीलिङ्गे भावे णच् ॥ **णचः स्त्रियामञ्** । ५ । ४ । १४ ॥ **न कर्मव्यतिहारे** । ७ । ३ । ६ ॥ अत्र ऐच् न स्यात् ॥ व्यावक्रोशी । व्यावहासी ॥ **अभिविधौ[3] भाव इनुण्** । ३ । ३ । ४४ ॥ **अणिनुणः** । ५ । ४ । १५ ॥ इनण्यनपत्ये ॥ सांराविणं[4] वर्तते ॥ **आक्रोशेऽवन्योर्ग्रहः** । ३ । ३ । ४५ ॥ अव नि एतयोर्ग्रहेर्घञ् स्यात् शापे[5] ॥ अवग्राहस्ते भूयात् । अभिभव इत्यर्थः । निग्राहस्ते भूयात् । बाध इत्यर्थः । आक्रोशे किम् ? अवग्रहः[6] पदस्य । निग्रहश्चोरस्य ॥ **प्रे[7] लिप्सायाम्** । ३ । ३ । ४६ ॥ पात्रप्रग्राहेण चरति भिक्षुः ॥ **परौ[8] यज्ञे** । ३ । ३ । ४७ ॥ उत्तरः परिग्राहः । स्फ्येन वेदेः स्वीकरणम् ॥ **नौ वृ[9] धान्ये** । ३ । ३ । ४८ ॥ वृ इति लुप्तपञ्चमीकम् । नीवाराः । धान्ये किम् ? निवरा कन्या । क्तिन्विषयेऽपि बाहुलकादप् । प्रवरा सेतिवत् ॥ **उदि[10] श्रयतियौतिपूद्रुवः** । ३ । ३ । ४९ ॥ उच्छ्रायः । उद्यावः । उत्पावः । उद्द्रावः । कथं 'पतनान्ताः समुच्छ्रयाः' इति । बाहुलकात् ॥ **विभाषाङि[11] रुप्लुवोः** । ३ । ३ । ५० ॥ आरावः । आरवः । आप्लावः । आप्लवः ॥ **अवे[12] ग्रहो वर्षप्रतिबन्धे** । ३ । ३ । ५१ ॥ विभाषेति वर्तते । अवग्राहः । अवग्रहः । वर्षप्रति-

---

१ **सूकरनिचय इति** । यदा स्तनपानार्थमुत्तराधरभावेन सूकराः शेरते तदा प्रत्युदाहरणम् ॥ यदा तु भिक्षुवत् पृथक् पृथगेव तिष्ठन्ति तदेदमुदाहरणमेव भवति ॥ २ **कर्मव्यतिहार इति** । कर्मव्यतिहारे वर्तमानाद्धातोरित्यर्थः । कर्मशब्दोऽत्र क्रियापरः । क्रियाव्यतिहारश्च परस्परकरणम् ॥ ३ **अभिविधावित्ति** । अभिविधिरभिव्याप्तिः क्रियागुणाभ्यां कार्त्स्न्येन सम्बन्धः । अभिविधौ गम्यमाने भावे इनुण् स्यात् । "नपुंसके भावे क्त" इति सूत्रानन्तरमस्य पाठेन भावे प्रत्यये सिद्धे पुन"र्भावे" इति क्तस्य बाधको यो भावे खल् तस्येवसांराविणमित्यत्र प्राप्तस्य बाधनार्थमिति भाष्ये स्पष्टमिति भैरवः ॥ ४ **सांराविणमिति**।समन्ताच्छब्द इत्यर्थः । संशब्दोऽभिविधेर्द्योतकः ॥ ५ आक्रोशः शपनमत आह-**शाप इति**। "ग्रहवृद-" इत्यपि प्राप्तेऽयमारम्भः ॥ ६ **अवग्रहः पदस्येति** । "ग्रहवृदनिश्चि-" इत्यप् । अत्रावग्रहो विलम्बेनोच्चारणम् । स्वाभाविकार्धमात्राधिककालेनोच्चारणात्मकम् ॥ **निग्रहश्चोरस्येति** । अत्र निग्रहो निरोधः । देशान्तरसंचारविरोधिव्यापारानुकूलव्यापारः ॥ ७ **प्रे लिप्सायामिति** । लिप्सायां गम्यमानायां प्रशब्द उपपदे ग्रहेर्घञ् स्यात् । लब्धुमिच्छा लिप्सा ॥ ८ **परौ यज्ञ इति** । परावुपपदे ग्रहेर्घञ् । "यज्ञे" इति वैषयिकाधारे सप्तमी । प्रत्ययान्तार्थो यज्ञविषयश्चेत् । "ग्रहवृद-" इत्यनेन बाध्यते ॥ परिग्राहशब्दार्थमाह-**स्फ्येनेति**। ९ **नौ वृ धान्ये इति** । वृ इति वृङ्वृञोः सामान्यग्रहणम् । धान्यविषये निशब्दे उपपदे वृ इत्यस्माद् घञ् । अपोऽपवादः "धान्यं तु व्रीहौ धान्याके" इति हैमः ॥ **नीवारा इति** । एतत्संज्ञका व्रीहिविशेषाः । "उपसर्गस्य-" इति दीर्घः ॥ **निवरा कन्येति** । कर्मणि "ग्रहवृद-" इत्यप् । "अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन" इत्युक्तेः स्त्रीत्वविवक्षायां क्तिन्प्रत्ययेन भवितव्यमिति शङ्कानिरासायाऽऽह-**क्तिन्विषयेऽपीति** । "कृत्यल्युटो बहुलम्" इति बहुलवचनादित्यर्थः ॥ १० **उदि श्रयतीति** । उच्छब्दे उपपदे श्रयत्यादिभ्यो घञ् स्यात् । अजपोरपवादः ॥ ११ **विभाषाङीति** । आङुपपदे आभ्यां घञ् प्रत्ययो वा स्यात् पक्षेऽप् ॥ १२ **अवे ग्रह इति** । वर्षप्रतिबन्धेऽभिधेयेऽवशब्द उपपदे ग्रहधातोर्वा घञ् । प्राप्तकालस्य वर्षस्य कुतश्चिन्निमित्तादभावो वर्षप्रतिबन्धः ॥

बन्धे किम् ? अवग्रहः पदस्य ॥ **प्रे[1] वणिजाम् ।३ ।३ ।५२॥** प्रे ग्रहेर्घञ् वणिजां संबन्धी चेत्प्रत्ययार्थः ॥ तुलासूत्रमिति यावत् ॥ तुलाप्रग्राहेण चरति तुलाप्रग्रहेण ॥ **रश्मौ[2] च ३।३।५३ ॥** प्रग्राहः । प्रग्रहः ॥ **वृणोतेराच्छादने[3] । ३ । ३ । ५४ ॥** विभाषा प्र इत्येव ॥ प्रवारः । प्रवरः ॥ **परौ[4] भुवोऽवज्ञाने । ३ । ३ । ५५ ॥** परिभावः । परिभवः ॥ अवज्ञाने किम् ? सर्वतो भवनं परिभवः ॥ **एरच्[5] ।३ ।३ ।५६ ॥** चयः । जयः ॥ **भयादीनामुपसंख्यानम् *** ॥ नपुंसके क्तादिनिवृत्त्यर्थम् । भयम् । वर्षम् ॥ **ऋदोरप्[6] ।३ ।३ ।५७॥** ऋवर्णान्तादुवर्णान्तादप् ॥ करः । गरः । शरः । यवः । लवः । स्तवः । पवः ॥ **वृक्षासनयोर्विष्टरः[7] ।८।३।९३ ॥** अनयोर्विपूर्वस्य स्तृः षत्वं निपात्यते ॥ विष्टरो वृक्ष आसनं च । वृक्षेत्यादि किम् ? वाक्यस्य विस्तरः ॥ **ग्रहवृदृनिश्चिगमश्च ।३।३।५८ ॥** अप् स्यात् ॥ घञचोरपवादः । ग्रहः । वरः । दरः । निश्चयः । गतः ॥ **वशिरण्योरुपसंख्यानम्[8]*** ॥ वशः । रणः ॥ **घञर्थे[9] कविधानम् *** ॥ प्रस्थः । विघ्नः ॥ **द्वित्वप्रकरणे के कृञादीनामिति**

---

१ प्रे वणिजामिति । पणन्ते व्यवहरन्तीति वणिजः । " पणेरिज्यादेश्च वः " पण व्यवहारे इत्यस्मादिजिप्रत्यय आदेश्च वकारः । प्रशब्दे उपपदे ग्रहधातोर्वा घञ्, प्रत्ययान्तार्थो वणिजां सम्बन्धी चेत् । अत्र " वणिजाम् " इति षष्ठी प्रधानप्रत्ययार्थानुरोधात् । प्रत्ययस्तु भावे ॥ २ रश्मौ चेति । प्रशब्दे उपपदे ग्रहधातोर्वा घञ् प्रत्ययान्तार्थो रश्मिश्चेत् । रथशकटादिसम्बद्धा रज्जू रश्मिः । या रथादियुक्ताश्वादेः संयमनार्था ॥ कर्मण्यत्र घञ् ॥ ३ वृणोतेरिति । प्रशब्द उपपदे वृधातोर्वा घञ् समुदायेनाच्छादने गम्ये ॥ ४ परौ भुव इति । अवज्ञाने गम्यमाने परिशब्दे उपपदे भूधातोर्वा घञ् । अवज्ञानमसत्कारः ॥ ५ एरजिति । " भावे " " अकर्तरि च कारके " इत्यनुवर्तते । यथायोगं व्यवस्था । इवर्णान्ताद्धातोर्भावे अकर्तरि च कारके संज्ञायामच् प्रत्ययः स्यात् । घञोऽपवादः ॥ " कल्प्यादिभ्य एरज् न" इति वार्तिकम् । कल्प्यते इति कल्पः । अर्थ्यते इत्यर्थः । मन्त्र्यते इति मन्त्रः । अचि प्रतिषिद्धे घञेव भवति । " एरजण्यन्तानाम् " इति त्वनार्षम्, भाष्येऽदर्शनात् ॥ ६ ऋदोरबिति । ऋच उश्चानयोः समाहार इति समाहारे सौत्रं पुंस्त्वम् । " निरभ्योः पूल्वोः " इत्यपवादतया घञ्विधानेन "ऋदोः " इत्यत्र दकार एवेत्याशयेनं दीर्घान्तादप्युदाहरति-लवः पव इति । ७ वृक्षासनयोरिति । विष्टर इति निपात्यते वृक्षासनयोर्वाच्ययोः । विस्तीर्यत इति विष्टरः । " ऋदोरप् " इत्यपि । षत्वं निपात्यते । ८ वशिरण्योरिति । घञि प्राप्ते वचनम् । वशनं वश इत्यत्र भावे घञ् प्राप्तः । रण इत्यत्रापि रणन्ति शब्दं कुर्वन्त्यस्मिन् पुरुषाः स रणः संग्राम इत्यर्थेन " अकर्तरि च कारके-" इत्यनेन प्राप्तस्य घञो बाधकोऽप् विधीयते ॥ ९ घञर्थ इति । भावः, कर्तृवर्जितं कारकं च घञर्थः । अत्र भाष्ये " स्था-स्ना-पा-व्यधि-हनि युध्यर्थम् " इति पठितं तच्चोदाहरणमात्रं बोध्यम् । प्रस्थ इति । अत्राधिकरणे कः । परिमाणविशेषस्य सानोश्च संज्ञेयम् । प्रतिष्ठन्त्यस्मिन् धान्यानीति, प्रतिष्ठन्ते जना अस्मिन्निति व्युत्पत्तेः । " प्रस्थे हिमवतः शृङ्गे " इति हिमवतं इति क्वाचित्कः प्रयोगो ननु तस्यैव संज्ञा, " स्नुः प्रस्थः सानुरस्त्रियाम् " इति कोशात् । प्रस्नान्ति जना अस्मिन्निति प्रस्नो ह्रदः । प्रपिबन्ति जना अस्यामिति प्रपा पानीयशालिका । आविध्यन्ति जना येन तद् आविधम्-आयुधम् । विघ्न इति । विघ्नन्ति मनांसि यस्मिन् इत्यधिकरणे के "गमहन-" इत्युपधालोपे च "हो हन्तेः-" इति कुत्वम् । आयुध्यतेऽनेनेति आयुधम् ॥ अस्योदाहरणमात्रत्वे प्रमाणं तु " द्वित्वप्रकरणे के कृञादीनाम् " इति वार्तिकमेव ॥

वक्तव्यम् * ॥ चक्रम् । चिक्लिदम् । चक्नसः ॥ उपसर्गेऽदः । ३ । ३ । ५९ ॥ अप् स्यात् ॥ घञपोश्च । २ । ४ । ३८ ॥ अदेर्घस्लृ स्यात् घञि अपि च ॥ प्रघसः । विघसः । उपसर्गे किम् ? घासः ॥ नौ ण च ।३।३।६०॥ नौ उपपदे अदेर्णः स्यादप् च ॥ न्यादः। निघसः ॥ व्यधजपोरनुपसर्गे । ३ । ३ । ६१ ॥ अप् स्यात् ॥ व्यधः । जपः । उपसर्गे तु आव्याधः । उपजापः ॥ स्वनहसोर्वा ।३।३।६२॥ अप् ॥ पक्षे घञ् । स्वनः । स्वानः । हसः । हासः । अनुपसर्गे इत्येव । प्रस्वानः । प्रहासः ॥ यमः समुपनिविषु च ।३।३।६३॥ एषु अनुपसर्गे च यमेरप् वा ॥ संयमः । संयामः । उपयमः । उपयामः । नियमः । नियामः । वियमः । वियामः । यमः । यामः ॥ नौ गदनदपठस्वनः । ३ । ३ । ६४ ॥ अप् वा स्यात् ॥ निगदः । निगादः । निनदः । निनादः । निपठः । निपाठः । निस्वनः । निस्वानः ॥ क्वणो वीणायां च । ३ । ३ । ६५ ॥ नावनुपसर्गे च वीणाविषयाच्च क्वणतेरप् वा स्यात् ॥ वीणाग्रहणं प्राद्यर्थम् । निक्वणः । निक्वाणः । क्वणः । क्वाणः । वीणायां तु—प्रक्वणः । प्रक्वाणः ॥ नित्यं पणः परिमाणे । ३।३।६६ ॥ अप् स्यात् ॥ मूलकपणः । शाकपणः । व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते सोऽस्य विषयः । परिमाणे किम् ? पाणः ॥ मदोऽनुपसर्गे । ३ । ३ । ६७ ॥ धनमदः । उपसर्गे तु—उन्मादः ॥ प्रमदसंमदौ हर्षे । ३ । ३ । ६८ ॥ हर्षे किम् ? प्रमादः । संमादः ॥ समुदोरजः पशुषु । ३ । ३ । ६९ ॥ सम्पूर्वोऽजिः समुदाये उत्पूर्वश्च प्रेरणे तस्मात्पशुविषयकादप् स्यात् ॥ अघञपोरित्युक्तेर्वीभावो न । समजः पशूनां संघः । उदजः पशूनां प्रेरणम् । पशुषु किम् ? समाजो ब्राह्मणानाम् । उदाजः क्षत्रियाणाम् ॥ अक्षेषु ग्लहः । ३ । ३ । ७० ॥ अक्षशब्देन देवनं लक्ष्यते । तत्र यत्पणरूपेण ग्राह्यं तत्र ग्लह इति निपात्यते । अक्षस्य ग्लहः । व्यात्युक्षीमभिसरणग्लहामदीव्यन् । अक्षेषु किम् ? पादस्य ग्रहः ॥ प्रजने सर्तेः । ३ । ३ । ७१ ॥ प्रजनं प्रथमगर्भग्रहणम् ॥ गवामुपसरः । कथमवसरः प्रसर इति ? अधिकरणे पुंसि संज्ञायामिति घः ॥ ह्वः संप्रसारणं च न्यभ्युप-

---

१ उपसर्गेऽद इति । उपसर्गे उपपदेऽद्धातोर्घञ् । दारूपाणां धातूनामयं निर्देशो न भवति, “ घञपोश्च ” इत्यपि परतोऽदेर्घस्लादेशविधानात् । इति पदमञ्जरी । २ विघस इति । विशेषेण अद्यते भक्ष्यते इति विघसः, वैश्वदेवविशिष्टमन्नम् । घासस्तु, चतुष्पदां भक्ष्यम् । घसिः प्रकृत्यन्तरमस्ति तस्मादेवाप् विधेयः, एवं त्वदेरपि घस्लृभावो न वक्तव्यो भवति । उत्तरार्थं त्वदेर्ग्रहणम्, “ नौ ण च ” अदेर्यथा स्यात्, घसेर्मा भूदिति । इति हरदत्तः ॥ ३ व्यधजपोरिति । “ व्यधजपोः ” इति पञ्चम्यर्थे षष्ठी । “अनुपसर्गे” इति प्रसज्यप्रतिषेधः' उपसर्गे सति न भवतीति, तेन केवलाभ्यामेव भवति, नतूपसर्गव्यतिरिक्तेऽन्यस्मिन्नुपपदे इत्याशयेनाह—व्यधो जप इति । उपजापो मन्त्रभेदः ॥ ४ अत्र वीणाग्रहणस्य “ अनुपसर्ग ” इत्येतद्बाधरूपं प्रयोजनमित्याशयेनाह—वीणाग्रहणमिति । “ वीणाग्रहणं सोपसर्गार्थम् ” इति वार्तिककारोक्तेः ॥ ५ मदोऽनुपसर्ग इति । उपसर्गभिन्ने उपपदे इत्यर्थः ॥ ६ समुदोरज इति । “ पशुषु ” इत्यस्य “ पशुषु कारकेषु विवक्षितेषु ” इत्यर्थः । प्रत्ययस्तु भावे ॥ ७ अक्षेषु ग्लह इति । ग्लह इति रूपं निपात्यते, अक्षेषु धात्वर्थसंबन्धित्वेन विवक्षितेषु । ग्रहेरप् सिद्ध एव लत्वार्थं निपातनम् । इति वृत्तिः । अप् प्रत्ययो लत्वं च निपात्यते इति वस्तुस्थितिः ॥ ८ ह्वः संप्रसारणं चेति । “ निहव ” इति रूपन्तु जुहोतेरेव सिद्धम्, अनेकार्थत्वाद्धातूनामर्थभेदोऽप्यकिंचित्करः । इदन्तु वचनं ह्वयतेर्घञि निह्वाय इति रूपं मा भूदिति । इति हरदत्तः ॥

विषु । ३ । ३ । ७२ ॥ निहवः । अभिहवः । उपहवः । विहवः । एषु किम् ? प्रह्वायः ॥ आङि युद्धे । ३ । ३ । ७३ ॥ आहूयन्तेऽस्मिन्नित्याहवः । युद्धे किम् ? आह्वायः ॥ निपानमाहावः । ३ । ३ । ७४ ॥ आङ्पूर्वस्य ह्वयतेः संप्रसारणमप् वृद्धिश्चोदकाधारश्चेद्वाच्यः ॥ 'आहावस्तु निपानं स्यादुपकूपजलाशये '॥ भावेऽनुपसर्गस्य । ३ । ३ । ७५ ॥ अनुपसर्गस्य ह्वयतेः संप्रसारणमप् च स्यात् भावे ॥ हवः ॥ हनश्च वधः । ३ । ३ । ७६ ॥ अनुपसर्गाद्धन्तेर्भावे अप् स्यात् वधादेशश्चान्तोदात्तः ॥ वधेन दस्युम् । चाद्धञ् । घातः ॥ मूर्तौ घनः । ३ । ३ । ७७ ॥ मूर्तिः काठिन्यं तस्मिन्नभिधेये हन्तेरप् स्यात् घनश्चादेशः ॥ अभ्रघनः । कथं सैन्धवघनमानयेति ? धर्मशब्देन धर्मी लक्ष्यते ॥ अन्तर्घनो देशे । ३ । ३ । ७८ ॥ वाहीकग्रामविशेषस्य संज्ञेयम् । अन्तर्घण इति पाठान्तरम् ॥ अगारैकदेशे प्रघणः प्रघाणश्च । ३ । ३ । ७९ ॥ द्वारदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरो बाह्यश्च, तत्र बाह्ये प्रकोष्ठे निपातनमिदम् ॥ प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते इति प्रघणः । प्रघाणः । कर्मण्यप् । पक्षे वृद्धिः ॥ उद्घनोऽत्याधानम् । ३ । ३ । ८० ॥ अत्याधानमुपरि स्थापनम् । यस्मिन् काष्ठे अन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तदुद्धनः । अधिकरणेऽप् ॥ अपघनोऽङ्गम् । ३ । ३। ८१ ॥ अङ्गं शरीरावयवः । स चेह न सर्वः किंतु पाणिः पादश्चेत्याहुः । करणेऽप् । अपघातोऽन्यः ॥ करणेऽयोविद्रुषु । ३ । ३ । ८२ ॥ एषु हन्तेः करणेऽप् स्याद्घनादेशश्च ॥ अयो हन्यतेऽनेनेत्ययोघनः । विघनः । द्रुघनः । द्रुघण इत्येके । पूर्वपदात्संज्ञायामिति णत्वम् । संज्ञैषा कुठारस्य । द्रुर्वृक्षः ॥ स्तम्बे क च । ३ । ३ । ८३ ॥ स्तम्बे उपपदे हन्तेः करणे कः स्यादप् च अप्पक्षे घनादेशश्च ॥ स्तम्बघ्नः । स्तम्बघनः । करण इत्येव । स्तम्बघातः ॥ परौ घः । ३ । ३ । ८४ ॥ परौ हन्तेरप् स्यात्करणे घशब्दश्चादेशः ॥ परिहन्यतेऽनेनेति परिघः॥ परेश्च घाङ्कयोः।८।२।२२॥ परे रेफस्य लो वा स्याद्घशब्दे अङ्कशब्दे च ॥ पलिघः । परिघः । पल्यङ्कः।

---

१ आङि युद्धइति । "ह्वः सम्प्रसारणं च" इत्यनुवर्तते । "युद्धे" इति प्रत्ययार्थस्य विशेषणम् । तेनाधिकरणे प्रत्यय इत्याशयेनाह आहूयन्तेऽस्मिन्निति ॥ २ निपानमिति । आहाव इति निपात्यते, निपानं वाच्यं चेत् । आहाव इति रूपं तु जुहोतेरेव सिद्धम्, अनेकार्थत्वाद्धातूनामर्थभेदोऽप्यकिंचित्करः इदं तु वचनं ह्वयतेर्घञि "आह्वाय" इति रूपं मा भूदिति । इति हरदत्तः ॥ ३ भावेऽनुपसर्गस्येति । अत्र "अनुपसर्गस्य" इति सम्प्रसारणापेक्षया षष्ठी । ह्व इत्यनुवर्तते ॥ ४ हनश्चेति । अत्र चकारो भिन्नक्रमः, "वध" इत्यनन्तरं द्रष्टव्यः । "हन" इत्यादेशापेक्षया षष्ठी । आदेशश्चादन्तोऽन्तोदात्तो निपात्यते । "धातोः" इत्यस्य "अप्" इत्यस्य च सम्बन्धः । एवं चातो लोपे उदात्तनिवृत्तिस्वरेणान्तोदात्तोऽयं भवति । उदात्तत्वे प्रमाणं तु "वधेन दस्युम्" इत्यत्रान्तोदात्तदर्शनम् । यद्यपि स्वतन्त्र "वध हिंसायाम्" इत्यस्मात् घञर्थे केन सिद्धे इदं व्यर्थं तथापि "अनुपसर्गात्" इति विशेषं वक्तुमिदम् । नव्यमते तु वधिः स्वतन्त्रो नास्त्येवेति न दोषः ॥ ५ अभ्रघन इति । अभ्रस्य काठिन्यमित्यर्थः ॥ ६ धर्मशब्देनेति । शुक्लादिवदिति भावः ॥ ७ उपरि स्थापनमिति । अतिशब्द उपरिभावे वर्तते । आदधातिः स्थापने । अधिकरणे ल्युट् ततं उक्तार्थलाभ इति भावः ॥ ८ पलिघ इति । "परौ घ" इत्यप् । पल्यङ्क इति । अकि लक्षणे । पचाद्यच् । "हलश्च" इति घञ्, चाद्धञेति वा ॥

पर्यङ्कः। इह 'तरसमपौ घ' इति कृत्रिमस्य न ग्रहणं व्याख्यानात्[1] ॥ **उपघ्न आश्रये। ३। ३। ८५** ॥ उपपूर्वाद्धन्तेरप् स्यादुपधालोपश्च ॥ आश्रयशब्देन सामीप्यं लक्ष्यते। पर्वतेनोपहन्यते सामीप्येन गम्यते इति पर्वतोपघ्नः ॥ **सङ्घोद्घौ गणप्रशंसयोः। ३। ३। ८६** ॥ संहननं सङ्घः। भावेऽप्। उद्धन्यते उत्कृष्टो ज्ञायत इत्युद्घः। कर्मण्यप्। गत्यर्थानां बुद्ध्यर्थत्वाद्धन्तिर्ज्ञाने ॥ **निघो निमितम्। ३। ३। ८७** ॥ समन्तान्मितं निमितम्। निर्विशेषं हन्यन्ते ज्ञायन्ते इति निघा वृक्षाः। समारोहपरिणाहा[2] इत्यर्थः ॥ **ड्वितः क्त्रिः। ३। ३। ८८** ॥ अयं भाव एव स्वभावात्। क्त्रेर्मम्नित्यम्। नित्यग्रहणात् क्त्रिमब्विषयः। अत एव क्त्रयन्तेन न विग्रहः। डुपचष्—पाकेन निर्वृत्तं पक्त्रिमम्। डुवप्—उप्त्रिमम् ॥ **ट्वितोऽथुच्। ३। ३। ८९** ॥ अयमपि स्वभावाद् भाव एव ॥ टुवेपृ—वेपथुः। श्वयथुः ॥ **यजयाचयतविच्छप्रच्छरक्षो नङ्। ३। ३। ९०** ॥ यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः[3]। 'प्रश्ने चासन्न' इति निपातनान्न संप्रसारणम्। ङित्त्वं तु विश्न इत्यत्र गुणनिषेधाय। रक्ष्णः ॥ **स्वपो नन्। ३। ३। ९१** ॥ स्वप्नः ॥ **उपसर्गे घोः किः[4]। ३। ३। ९२** ॥ प्रधिः। अन्तर्धिः। उपाधीयतेऽनेनेत्युपाधिः ॥ **कर्मण्यधिकरणे च[5]। ३। ३। ९३** ॥ कर्मण्युपपदे घोः किः स्यादधिकरणेऽर्थे ॥ जलानि धीयन्तेऽस्मिन्निति जलधिः ॥ **स्त्रियां क्तिन्। ३। ३। ९४** ॥ स्त्रीलिङ्गे भावादौ[6] क्तिन् स्यात् ॥ घञोऽपवादः। अजपौ तु परत्वाद्बाधते। कृतिः। चितिः। स्तुतिः ॥ स्फायी—स्फातिः। स्फीतिकाम इति तु प्रामादिकम्। क्तान्ताद्धात्वर्थे णिचि अच इरिति वा समाधेयम् ॥ **श्रुयजीषिस्तुभ्यः करणे[7] *** ॥ श्रूयतेऽनया श्रुतिः। यजेरिषेश्च इष्टिः। स्तुतिः ॥ **ऋल्वादिभ्यः[8] क्तिन्निष्ठावद्वाच्यः *** ॥ तेन नत्वम्। कीर्णिः। गीर्णिः।

---

१ व्याख्यानादिति। "उभयगतिरिह भवति" इति परिभाषाश्रयणरूपात् ॥ २ समारोहपरिणाहा इति। आरोह उच्छ्रायः। परिणाहो विस्तारः ॥ ३ प्रश्न इत्यत्र "ग्रहिज्या-" इति संप्रसारणं कस्मान्नेति शंकानिरासायाऽऽह—प्रश्ने चासन्नेतीति। ननु निपातनेन संप्रसारणाभावसाधने ङित्त्वं व्यर्थमित्याक्षेपं परिहरन्नाह—ङित्त्वं त्विति। अन्यथान्तरङ्गत्वात्तुकि "च्छ्वोः शूडनुनासिके च" इति। सतुक्कस्य छस्यादेशे कृते लघूपधत्वाद् गुणः स्यादिति भावः। ४ उपसर्गे घोः किरिति। उपसर्गे उपपदे घुसंज्ञकेभ्यो धातुभ्यः किप्रत्ययः स्यात्। यद्यपि भावेऽकर्तरि कारके इति प्रकृतन्तथापि बाहुलकादयं कर्तर्यपि, अत एव "उप समीपे स्वधर्ममादधाति" इति व्युत्पत्तिरपि क्वचिद्दर्शिता, परं तु सा करण एवोचितेत्याशयेनाह—उपाधीयतेऽनेनेति। ल्युट् तु बाहुलकान्न ॥ ५ कर्मण्यधिकरणे चेति। अत्र "कर्मणि" इति "अधिकरणे" इति च द्वयमप्युपपदं न, पृथक्पृथक् सप्तमीनिर्देशात्। नापि "अधिकरणे उपपदे कर्मणि प्रत्ययः" इत्यर्थः प्रकृतसूत्रे "अकर्तरि च कारके" इत्येतत्संबन्धेन कर्मणि प्रत्ययस्य सिद्धत्वात्। तस्मात् कर्मोपपदम्। अधिकरणमर्थ इति व्याचष्टे—कर्मण्युपपद इति। अधिकरणग्रहणं भावकरणादिनिरासार्थम् ॥ ६ भावादाविति। आदिना कारकपरिग्रहः ॥ अजपौ त्विति। "अव्भ्यां स्त्रीखलना--" इति वार्तिकोक्तेरिति भावः ॥ ७ श्रुयजीति। ल्युटि प्राप्ते वचनम्। श्रुतिः श्रोत्रम्। इज्यतेऽनया देवता इष्टिर्यागः। इषधातुप्रकृतिकस्तु क्त्यन्युक्तौ रूढः। स्तुतिशब्दविशेषे तथा इति भैरवः ॥ ८ ऋल्वादिभ्य इति। ऋकारान्तेभ्यो ल्वादिभ्यश्च परः क्तिन् निष्ठाकार्यं लभते। "रदाभ्यां निष्ठातो नः" "ल्वादिभ्य" इति च विधीयमानं नत्वं क्तिनोऽपि भवतीत्यर्थः ॥

